श्रीकृष्णः शरणं मम

महर्षिवेदव्यासप्रणीतं

# श्रीमद्भागवतमहापुराणम्

अनेकव्याख्यासमलङ्कृतम्

## द्वादशस्कन्धः

द्वादशं फलम्



संपादकः
कृष्णशंकरः शास्त्री
परिवेष्टा
( कर्दम ऋषिः )

वि० सं० २०५२

श्रीहरिः

## —समर्पणकुसुमोपायनम्—

श्रीमाधवबागे करुणावरुणवरणीयश्रीलक्ष्मीनारायणभगवच्चरणारविन्दातपत्रसुभगाश्रये संवर्धमानश्रीमद्भागवताष्टोत्तरशतद्वयसप्ताहसत्रमहत्प्रस्तावे—

समर्पणोत्सवाध्यक्षसुखासनमलङ्कुर्वत्सु तत्रभवत्सु वाचस्पतिषु वरणीयगुणेषु सदानुसरणीयचरितेषु १०८ श्रीश्याममनोहरजीगोस्वामिमहाराजेषु—

उत्सवस्वागताधिपतिपदात्स्वागतवचनसुमनसा सभाजनसुमनांसि समभिरञ्जयत्सु परमविचक्षणेषु पुष्कर्णाश्रीविष्णुभाई शास्त्रिषु—

मङ्गलप्रवचनवाक्सुधा वर्षणधारया परिषदमाप्लवयतीषु सुगृहीतनामधेयासु स्वाध्यायप्रवचनपर्यटनविधिना दृष्टया च सृष्टिं पुनानासु श्री इन्दिरा-टीजीपरमविदुषीषु—

निरंतरं सेवार्चनविद्यार्जनपरायणेषु परमपुनीतेषु श्रीगोपीनाथमहाराजानां चिरञ्जीविषु श्रीमद्भागवतस्य द्वादशस्कन्धं समर्पयत्सुश्रीरमेशबाबामहानुभावेषु—

शुभाशीर्वादवाक्कुसुमाञ्जलिना सदसिगतान् भागवतान् तोषयत्सु पंडितपञ्चाननेषु सकलनिगमागमपारावारपारदर्शिषु कविधौरेयेषु परमभागवतेषु श्रीबदरीनाथशास्त्रिपादेषु—

श्री मोहनभाई पटेलानामतिथिविशेषवचने प्रवर्तमाने सति :—

तत्र सरलचेतसां सुचरितानां प्राचेतसां सेवैकमनसां महामनसां नयकोविदां श्रीगुजरातराज्यमहामन्त्रिणां सारस्वतजनानां श्रीबाबुभाई जशभाई पटेलानां करकमलैर्विधीयमानेऽनावरणप्रस्तावे—

श्रीभागवतविद्यापीठेन समर्प्यते सादरं सप्रश्रयं सानुनयं सप्रणतिततिनतेन मस्तकेन भगवतः श्रीलक्ष्मीनारायणस्य संतुष्टये विविधाभिष्टीकाभिः समलंकृतः आश्रयाह्वयः श्रीनाथस्य भगवतो वामबाह्वभिधो द्वादशस्कन्धस्तदवसरे किञ्चित्—

यामाश्रित्यरतिः श्रुतं श्रुतिरसाः सारञ्च पारंगताः सा वीणा मुरलीधराधरसुधां पीत्वाऽभवत्पुष्टिदा ।
तं नाथं सकलाश्रयं मम पुनर्ग्रन्थाश्रयं ह्याश्रयस्कन्धानावरणे वृणे सुमनसा वाचा च केनार्थये ॥ १ ॥
कृष्णास्यञ्च तदन्वयं च यमुनां लक्ष्मीपतिं सद्गुरुं आचार्यान् विदुषः सभां मुनिजनान् व्यासान् कवीन् भूसुरान् ।
मुख्यान् श्रीगुजरातराज्यसचिवान् श्री बाबुभाईमुखान् स्नेहात्तान् बहुमानये च सुहृदं श्री विष्णशर्माभिधम् ॥२॥
श्रीमद्भागवताभिधो भगवतो नामात्मको विग्रहः टीकाभिर्विविधाभिरुद्विलसितस्तस्यान्तिमो मङ्गलः ।
स्कन्धःह्याश्रयसंज्ञको भगवतो लक्ष्मीपतेस्तुष्टये भूयाद्वै विनिवेदयामि मनसा वाचा पुनः कर्मणा ॥ ३ ॥

| | | |
|---|---|---|
| श्री भागवत विद्यापीठस्य प्रन्यासिनः | कृष्णराज ठाकरसी | श्री कृष्णशंकर शास्त्री |
| चतुर्भुजदास चिमनलाल | गिरधारिलाल महेता | वसंतकुमार विरला |
| इन्द्रकान्त शेठ | नन्ददास हरिदास | चंदाबेन भाईदास |
| महेन्द्रभाई शाह | कंचनलाल लीमडी | जशवंतराय उपाध्याय |
| नानालाल चोकसी | शांतिलाल शाह | देवेन्द्र विजय पण्डित |

स्थलम्:—श्रीमाधवबागः मुंबई कार्तिकशुक्ल ५ शनिवार : ता. ८-११-७५

श्रीकृष्णाय नमः

## महर्षिवेदव्यासप्रणीतं

# श्रीमद्भागवतमहापुराणम्

श्रीधरस्वामिविरचित–भावार्थदीपिका, श्रीवंशीधरकृत–भावार्थदीपिकाप्रकाशः, श्रीगङ्गासहायप्रणीत–अन्वितार्थप्रकाशिका, श्रीसुदर्शनसूरिकृतशुकपक्षीयम्, श्रीमद्वीरराघवाचार्यभावित–भागवतचन्द्रिका, श्रीमद्विजयध्वजतीर्थरचित–पदरत्नावली, श्रीमज्जीवगोस्वामिनिष्पादित–क्रमसन्दर्भः, श्रीमद्विश्वनाथचक्रवर्तिसाधित–सारार्थदर्शिनी, श्रीमच्छुकदेवनिर्वर्तित–सिद्धान्तप्रदीपः, गोस्वामिश्रीगिरिधरलालविहित–बालप्रबोधिनी, श्रीभगवत्प्रसादाचार्यविरचित–भक्तमनोरञ्जनी, कृष्णशङ्करशास्त्रिनिर्वर्तित–कृष्णप्रिया इत्येताभिः व्याख्याभिर्भाषानुवादेन च समलङ्कृतः।

## द्वादशस्कन्धः



सम्पादकः पुरस्कर्ता च –दलसुखरामात्मजः कृष्णशङ्करः शास्त्री

परिवेष्टा– कृष्णशङ्करात्मजः कर्दम ऋषिः

ई. सन १९७५ ]

[ वि. सं. २०३१

प्रकाशक :
श्रीभागवतविद्यापीठः, सोला: ता० दशक्रोई (अहमदावाद)





प्राप्तिस्थानानि

| | | | |
|---|---|---|---|
| श्री हंसराज द्वारकादास | श्री भागवत विद्यापीठः | श्री वीणाबेन मनहरलाल | श्री कृष्णशङ्कर शास्त्री |
| २२, वालकेश्वर रोड मुम्बई—६ | मुः सोला अहमदावाद | ५ आनंद, ५ प्लोट पार्ला पश्चिम | आतिथेयम् नडियाद |

मुद्रकः—नरेन्द्रकुमार प्राणलाल आचार्य, आचार्यमुद्रणालय, मछोदरी, वाराणसी ।

श्रीहरिः

# किञ्चित्-प्रासङ्गिकम्

वैशारद्याऽनवद्यया सत्त्वैकतानया परमर्षिवरसुमेधया महत्याऽपि तरण्याऽपारणीयस्य निर्व्याजभक्तिरससारस्य श्रीमद्भागवताभिधपीयूषपारावारस्य परं तीरं प्रयातुं लघुतमया मतिनौकया कुतः शक्नुयामिति जानन्नपि सम्प्राप्ते प्रसङ्गे विना वितर्कं विना विलम्बं प्रवृत्तोऽस्मि किञ्चिदालेखने।

भगवदिच्छया समुपलब्धाभिर्विविधाभिष्टीकाभिः प्राकाश्यमेति श्रीमद्भागवतकल्पतरुः। साम्प्रतं द्वादशस्कन्धः प्राकट्यं गच्छति। तदर्थं भगवदादेशानुबद्धेनोत्तमश्लोकपदसरोजैकरतपुण्यश्लोकानां गोस्वामिवरविद्वरेण्यश्रीमतां श्रीदीक्षित-जिदाचार्याणां स्नेहदामसुबद्धेनाऽबुधेन मया कर्तव्यमत्या वै प्रयत्यते न प्रतिष्ठा-प्रसिद्धि-पाण्डित्य-ख्यातिप्राप्तये।

जानामि मे कियानधिकारः श्रीमद्भागवततत्त्वविषयमभिलक्ष्य संलेखनप्रस्तावे। किन्तु यो हि कला-कृपा विद्यानिधि-श्रीकृष्णः प्रेरयति स एव जानातु किं मुधा चिन्तनेन। एतत्तु विश्वसिमि क्षीराब्धौ पतितो वारिबिन्दुः सुकरं क्षीरसिन्धुस्वरूपं याति तर्हि मे वाग्वारिबिन्दुरवश्यं लीलापीयूषसिन्धौ प्रमादान्निपतितोऽपि पीयूषतामेष्यत्येव। साम्प्रतं प्रकृतमनुसरामि स्मरामि श्रीकृष्णं श्रीकृष्णास्यं श्रीकृष्णास्यवंशजान् जननीं जनकं सद्गुरून् संतरामि चिन्तातारङ्गम्।

संविदितं संविदुषां श्रीमद्भागवतं भगवतः पुरुषोत्तमस्य श्रीकृष्णस्य नामस्वरूपम्। भगवतो वै अर्चाविग्रह-नामविग्रहसंज्ञकौ द्वौ विग्रहौ श्रुतिप्रसिद्धौ स्तः। तत्र तन्नामविग्रहस्तन्महिमानं तत् स्वरूपादि च सम्यग् बोधयति। निगमागम-वेद्यस्य पुरुषोत्तमस्य स्वरूपावबोधाय भगवती श्रुतिराह द्वादशाङ्गो वै पुरुषः। तदर्थमेव सम्यगवबोधयति द्वादशस्कन्धैः श्रीमद्भागवतम्। इत्थमर्चानामविग्रहयोरभेदः सिध्यति।

तद्यथा—प्रथमद्वितीयावधिकारसाधनज्ञानसञ्ज्ञकौ द्वौ स्कन्धौ भगवतो दक्षिणवामपादौ-तृतीयचतुर्थौ सर्गविसर्गाभिधौ द्वौ तदीयौ करौ—पञ्चमषष्ठौ स्कन्धौ स्थितिपोषणनामानौ पुरुषोत्तमस्य द्वावूरू—सप्तम ऊतिसंज्ञस्तस्य कटिदेशस्थो दक्षिणो हस्तः—अष्टमनवमौ मन्वन्तरेशानुकथाभिधेयौ द्वौ स्तनौ—दशमो निरोधाभिधानो देवस्य हृदयम्—एकादशो मुक्तिसमाह्वयः श्रीमतः श्रीमल्ललाटरूपः। द्वादशस्कन्धः किल "आश्रयाख्यः" श्रीकृष्णस्य वामहस्तः स खलूच्चैः स्थितः सन् भक्तानाकारयति कथयति च समागच्छन्तु मन्निकटे मा बिभ्यतु मायायास्तां निवर्तिष्येऽवश्यमाश्रयं दास्य इति। तदेवाह भगवद्गीतायां "सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज। अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।" कलौ भक्त्यादिमार्गा हि दुःसाध्या इति मे मतिः इति वचनानुसारं केवलं कलौ प्रपत्तिरेवावशिष्यत इति सा कस्येति प्रश्ने श्रीकृष्णस्येति तथा च "श्रीमद्भागवताख्योऽयं प्रत्यक्ष कृष्ण एव हि" इति श्रीबादरायणानां वचनात् श्रीमद्भागवतस्येति निश्चप्रचम्।

ननु श्रीमद्भागवते यदि दशविषया वर्णयिष्यन्ते तर्हि शास्त्रत्वं कुतः सेत्स्यति शास्त्रस्यैकविषयप्रतिपाद्यत्वं भवति। द्वितीयस्कन्धस्य नवमे तु "अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः" इति दश भेदा धर्मा लीला वा वर्ण्यन्ते।

नैवम् दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्। वर्णयन्ति महात्मानः श्रुतेनार्थेन चाञ्जसेत्यनुपदमेवोच्यते यन्नात्र शास्त्रे दशलीलाः प्राधान्येन कथ्यन्ते किन्तु "आश्रय" एव प्रतिपाद्यः। आश्रयस्य वास्तविकार्थावबोधाय तस्य वा तत्त्वज्ञानाय नवानां सर्गादिलीलानां वर्णनं विधीयते श्रुताभिस्ताभिर्लीलाभिः शुद्धो निरावरणः सारतरो ह्यपाश्रयः प्राप्यते।

इत्थमेकादशस्कन्धपर्यन्तं नवभिर्लीलाभिः श्रीकृष्णं निरूप्य द्वादशस्कन्धे स एव आश्रयितव्यः कलौ धर्माद्याश्रयस्या-संभवात्। योगज्ञानादीनामकिञ्चित्करत्वात्तथा धर्मस्य तदनुयायिनाञ्च क्षीयमाणदशावलोकनात् केवलं श्रीकृष्णाश्रय इत्यनेन भगवदाश्रय एवावशिष्टः। आश्रीयते सर्वैरात्मानन्दावाप्तय इत्याश्रयः कस्तावदाश्रयणीयश्चेद् भगवानेव यतो हि सर्वे वेदा यत्पदमामनन्तीति वाक्यात्। वेदैश्च सर्वैरहमेव वेद्य इति भगवद्वचनात्। शतं शुक्राणि यत्रैकं भवन्ति। सर्वे होतारो यत्रैकं भवन्तीति श्रुतेश्च। अनुग्राहक प्रमाण-प्रमेयानामेक पर्यवसान विधानाद्यत्र त्रयोऽप्येते पर्यवस्यन्ति स आश्रयः।

अस्याश्रयस्य सामान्यलक्षणं तु "व्यतिरेकान्वयौ यस्य जाग्रत्स्वप्नसुषुप्तिषु। मायामयेषु तद् ब्रह्म जीववृत्तिष्वपाश्रयः। पदार्थेषु यथा द्रव्यं तन्मात्रं रूपनामसु। बीजादिपञ्चतां तासु ह्यवस्थासु युतायुतम्"। अनयोः श्लोकयोर्मध्य एकेन लक्षणमाश्रयस्योक्त-मन्येन दृष्टान्तः प्रदर्शितः। तदर्थस्तु कैश्चिज्जीवसंसारतद्बाधयोरधिष्ठानावधिभूतं ब्रह्मापाश्रय इति कथितः। विशेषतो विचार्यमाणे "मायामयत्रिविधजीववृत्तिरूपसंसारे स्मृत्यान्वयात् तदधिष्ठानभूतं तद्बाधस्य चावधिभूतं साक्षिरूपं ब्रह्माश्रय इति सिध्यति। द्वितीये च पदार्थेषु यथा तन्मात्रं द्रव्यं युतमवस्थास्वयुतं तथेति सिध्यति। फलितं तेन जगतो विवर्त्तोपादानं परिणाम्युपादानं वा ब्रह्मापाश्रय इति।

किन्त्वस्मात्सामान्यलक्षणात्कश्चिद्विशेष इति वक्तुमत्र पञ्चप्रकरणानि द्वादशस्कन्धे निरूप्यन्ते। तत्र द्वादशस्कन्धस्य त्रयोऽदशाध्याया वर्तन्ते। द्वादशाङ्गो वै पुरुष इति श्रुतिवाक्यात्पुरुषोत्तमस्य द्वादशाङ्गभूता द्वादशाध्यायाधर्मी त्रयोदश इति हेतोस्त्रयोदशाध्यायाः।

तानि पञ्चप्रकरणानि त्रयोदशाध्यायेष्वित्थं विभिद्यन्ते—

| श्रीकृष्णाश्रयः | जगदाश्रयः | वेदाश्रयः | भक्तियोगाश्रयः | श्रीभागवताश्रयः |
|---|---|---|---|---|
| ३ | २।। | १।। | ३ | ३ |

इत्थं पञ्चप्रकरणानुसारं पञ्चप्रकाराः संभवन्ति तत्र प्रथमः प्रकारः। यद्यपि द्वितीयस्कन्धे त्रिविध आश्रयप्रकारो निरूपितः किन्तु द्वादशे वैशिष्ट्य पञ्चप्रकारः निर्दिष्टः। दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणमिति द्वितीयस्कन्धे दशमाध्यायस्य द्वितीयश्लोके प्रथमप्रकार आश्रयस्य प्रदिष्टः। दशमस्येत्यनेन दशम्या आश्रयलीलाया विशुद्ध्यर्थं यथार्थज्ञानार्थं विशेषतयास्पष्टावबोधार्थं पूर्वोक्तानां नवलीलानां लक्षणानि निरूपितानि। एवं नवलीलालक्षणैर्यो ज्ञायते स आश्रयः। नवलीलालक्षितो भगवान् श्रीकृष्णः ज्ञायते स एव सर्वेषामाश्रयः। अयं प्रथमः प्रकारः।

अथ द्वितीयः प्रकारः—

आभासश्च निरोधश्च यतश्चाध्यवसीयते। स आश्रयः परं ब्रह्म परमात्मेति शब्द्यते।।

अयमपरः प्रकारो द्वितीयस्कन्धस्य दशमाध्याये सप्तमे श्लोके निर्दिष्टः। अस्मिञ्श्लोके आभासश्च निरोधश्चेति वाक्ये द्विवारं चकारो गृहीतः। तेनाभासपदेनोत्पत्तिश्चकारात्स्थितिःपालनं द्वितीयचकारान्मोक्षोविरोधस्तु मूल एव शब्दतो गृहीत इत्थं चकारद्वयोपादानेन "उत्पत्ति-स्थिति-पालन-लय-मोक्षाः यतः संभवन्ति स आश्रयो भवितुमर्हति। एते पञ्च केवलं भगवत एव भवेयुस्तेन भगवानेवाश्रयणीय इति फलिष्यति। सन्त्यत्र श्रुतिवचांसि प्रमाणभूतानि बहूनि यथा" यतो वा इमानि भूतानि जातानि जीवन्तीत्यनुश्रववचः—जन्माद्यस्यत इति श्रीबादरायणीयसूत्रवचनम्—जन्माद्यस्य यतोऽन्वयादितरतश्चेति श्रीमद्भागवतवाक्यं च श्रूयते। किं बहूक्तेनोत्पत्यादिपञ्चानां विधाता भगवानेव भवेदिति द्वितीयलक्षणेनापि भगवानेवाश्रयो घटते।

अथ तृतीयः प्रकारः—

योऽध्यात्मिकोऽयं पुरुषः सोऽसावेवाधिदैविकः। यस्तत्रोभयविच्छेदः पुरुषो ह्याधिभौतिकः।।
एकमेकतराभावे यदा नोपलभामहे। त्रितयं तत्र यो वेद स आत्मा स्वाश्रयाश्रयः।।
२।१०।८–९,

अथ तृतीयं प्रकारं प्रदर्शयन्तो बादरायणाः इत्थं निर्दिशन्ति "योऽयमाध्यात्मिकः पुरुषः स एव पुरुष आधिदैविकः कथ्यते। योऽयमाध्यात्मिक इन्द्रियाभिमानी पुरुष आत्मा सोऽसौ स एव आधिदैविकः इन्द्रियदेवतानां नियामकपुरुषो वर्तते। यस्तत्रोभयविच्छेद इति पदस्यैदमैन्दंपर्यं "योऽहि आध्यात्मिकाधिदैविकयोर्भेदं दर्शयति स पुरुष आधिभौतिकः कथ्यते। तात्पर्यमिदं देहगतानीन्द्रियप्राणान्तःकरणान्यादाय यो व्यवहारं चालयति स आत्माऽऽध्यात्मिकः कथ्यते। अथ चेन्द्रियादीनां ये देवास्तान्नियामयति स आत्माऽऽधिदैविकः। अत्र खल्विन्द्रियप्राणान्तःकरणान्तानीन्द्रियाणि तथैव तेषां देवा अपि न नयनगोचरा-स्तथापि तयोराध्यात्मिकाधिदैविकाविति व्यवहारः क्रियते स व्यवहार आधिभौतिकमात्मानमवलम्ब्य विधीयते। अत एवाधि-भौतिको ह्यात्मा द्वयोर्भेदाधायको भवति।

"एकमेकतराभावे" इत्यस्यायमर्थः यदि तेषां त्रयाणां मध्ये यद्येकतरोऽपि न भवेत्तर्ह्यन्ययोर्द्वयोरेकस्यापि बोधो न भवेत्। देहे विद्यमाने सत्यनुमानादिनेन्द्रियादीनां देवानाञ्चास्तित्वं कल्प्येत। तथैवाधिदैविके पुरुषेऽविद्यमाने किलाध्यात्मिकेन्द्रियादीनामाधिभौतिक देहस्य चास्तित्वमेव कुतो भवेदतस्त्रिषु विद्यमानेषु सत्सु त्रयाणामुपलब्धिः सेत्स्यति। एतेषां त्रयाणां मध्ये कस्याप्येकतमस्याप्याश्रयो न घटते किन्त्वेतान् त्रीन् यो वेद स एव आश्रयो भविष्यति। तदेवाह—स आत्मा स्वाश्रयाश्रयः। अस्यायमर्थः स्वस्य पुरुषोत्तमस्य आश्रयोऽक्षरस्तस्याप्याश्रयः स आत्मा भगवान् स एवाश्रयणीय इति फलितम्। अत्रेदं रहस्यं जीवात्मानो ज्ञानवन्तः आध्यात्मिकादित्रिभेदज्ञानिष्वात्मसु ह्यन्तर्यामिणः सन्ति। अक्षरः स्वयमाध्यात्मिकादिभेदं जानाति तथा स्वयमात्माप्यस्ति। किन्त्वात्मानं स न वेत्ति तेनैव कारणेनाक्षरोऽपि नाश्रयो भवितुमर्हति किन्तु त्रीनक्षरं स्वञ्चापि यो वेद स भगवान् आश्रयो भवति।

इत्थमुपरोक्तरीत्या रूढ्यनुसारं श्रीमद्भिर्बादरायणैर्द्वितीये त्रीणि लक्षणान्याश्रयस्य निरूपितानि। साम्प्रतं लोकप्रसिद्धिमाश्रित्याश्रयस्य द्वौ प्रकारौ निर्दिशन्ति द्वैपायना द्वादशस्कन्धे। तत्र शब्दस्य रसस्य स्वरूपं समाश्रित्य तिष्ठन्ति केचनार्थस्य रसस्य स्वरूपमाश्रित्य वर्त्तन्ते। तेषु ये प्रथमे किल वेदाश्रयवन्तः सन्त्यपरे भगवदाश्रयवन्त इति वेदो भगवानित्युभावाश्रयौ लोकप्रसिद्धिमाश्रित्य कथितौ। लोके हि सहायत्वेन रक्षकत्वेन चोपनीत्याश्रयः इत्युच्यते। तामेव प्रथामुररीकृत्य द्वादशेत्तूपजीव्यस्याश्रयस्य द्विविधत्वमुपवर्णितम्। तत्रेयं स्पष्टतया कर्मनिष्ठा मीमांसकास्तेकिल वेदमेवाङ्गीकुर्वन्ति। तेषां मतमिदं यद्विहितनिषिद्धैर्वेदोक्तैः कर्मभिरेव शुभाशुभफलं प्राप्यते नेश्वरो नियामकः किं फलमीश्वरस्वीकारस्य। अपरे वेदानुरागिणो ज्ञाननिष्ठा भक्तास्ते वेदं श्रीहरिञ्च स्वीकुर्वन्ति ते वेदप्रतिपाद्यत्वेन हरिं मन्वते। तर्ह्यपरे पूर्णानुग्रहपूर्णास्तदीयास्ते केवलं वेदनिरपेक्षं हरिमेव समाश्रयन्ते। इत्थं वेदाङ्गीकारवादिनो भगवदाधारवादिन इति द्विविधाश्रयनिरूपकानवलम्ब्य द्वादशस्कन्धेऽद्विधाऽधिक आश्रयो दर्शितस्तेनाश्रयस्य पञ्चविधत्वं सम्पद्यते।

इत्थं कृष्णाश्रयस्त्रिभिर्जगदाश्रयः सार्धद्वाभ्यां वेदाश्रयः सार्धैकेन भक्तियोगाश्रयस्त्रिभिः श्रीभागवताश्रयस्त्रिभिरिति त्रयोदशाध्यायानां पञ्चप्रकरणविवेकः। द्वादशाध्यायाः श्रीपुरुषोत्तमस्य द्वादशाङ्गानि धर्मिणस्त्रयोदशाध्यायो धर्मीरूपः।

श्रीकृष्णाश्रयप्रकरणम्—दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणमित्याश्रयस्य स्वरूपमत्र प्रथमप्रकरणेऽध्यायत्रयेण निरूप्यते। तत्र प्रथमाध्यायेन प्रवाहाश्रयो निवारितः। प्रथमाध्यायस्य ४३ श्लोकाः सन्ति। अनेनाऽध्यायेन प्रवाहाश्रयो निवारितः। अस्मिन्नध्याये योन्त्यः पुरञ्जयो नामेति द्वितीयश्लोकादारभ्य, मागधानां तु भविता विश्वस्फूर्तिः पुरञ्जयः इति ३६ श्लोकपर्यन्तं नृपपरंपरां निरूप्याध्यायसमाप्तिपर्यन्तं तेषां धर्मवैमुख्यं शूद्रप्रापत्वञ्च दर्शितम्। एतेन ये लौकिकास्तेषामाश्रयो लोकः प्रवाहरूपः स साम्प्रतमुपजीव्यो न भविष्यति। एवञ्च प्राकृतानामपेक्षया ये किञ्चिदुत्तमा धर्माश्रयिणस्तेषां कृतेऽपि कलौ धर्मस्य सर्वथा ह्रासाद्धर्मस्याश्रयो नावशिष्यते। एतदेव 'ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया। कालेन बलिना राजन् नङ्क्ष्यत्यायुर्बलं स्मृतिः।" प्रथमश्लोकादारभ्याध्यायान्तं द्वितीयेन कथितम्। इत्थं द्वाभ्यां प्रवाहधर्मयोराश्रयाभावे कस्तावदाश्रयणीय इति समुपस्थिते प्रश्ने तृतीयाध्यायेनोत्तीर्यते—

कथा इमास्ते कथिता महीयसां वितायलोकेषु यशः परेयुषाम्।
विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम्॥ १२।३।१४॥

यस्तूत्तमश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममङ्गलघ्नः।
तमेव नित्यं श्रृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः॥ २२।३।२५॥

आभ्यां द्वाभ्यां श्लोकाभ्यां श्रीकृष्णाश्रय एव निरूप्यते। तत्र इमा कथास्त इति श्लोके सूष्टीकृतं यद्राजन् ते इमा याः सर्गादिलीलात आरभ्येशानुकथान्तं कथाः कथितास्तेषां तात्पर्यं भगवतो ज्ञानं भवेत्संसाराद् विरतिः स्यादेतदर्थं निरूपिताः सन्ति। एतासां निरूपणेनाश्रयोऽवश्यं संशुद्धो भविष्यति। नैता व्यर्था न वाग्विलासरूपाः किन्तु विभोर्विज्ञानवैराग्यविवक्षया कथिताः। तत्र कार्यस्य कारणात्मकत्वेन विशिष्टं ज्ञानं पुनश्च भेदस्य काल्पनिकत्वेन लौकिकानामवस्तुत्वेन तेभ्यो वैराग्यं भवेदिति ह्युभयविवक्षया ते वर्णिताः। तेनेशानुकथान्ताः कथाः विभोः पुरुषोत्तमस्य विभूतिविषयत्वेन भगवदनुवर्णनशेषभूता इति ते विशिष्टज्ञानं ततश्च वैराग्यं भवेदित्यभिप्रायः। अतः परं प्रश्नो भविष्यति कस्तावद्विभुरिति जिज्ञासायाम्—यस्तूत्तमश्लोकगुणानुवादः "इत्यनेन पद्येन पुरुषोत्तमः श्रीकृष्णो विभुर्निश्चीयते। तमेव भगवन्तं श्रीकृष्णं श्रृणुयाच्चेनामला भक्तिर्भविष्यति।

**द्वितीयं प्रकरणम् :—**

जगदाश्रयप्रकरणं सार्धद्वाभ्यां चर्च्यते। जगत आश्रय इति जगदाश्रयस्यार्थः। कस्तावद् जगत आश्रयो भविष्यतीति प्रश्नस्योत्तरार्थं द्वितीयप्रकरणारम्भः। यथा घटस्य पिंडः पिंडस्य पृथिवी तथा जगतः प्रकृतिः कालो वा प्रकृतिकालयोश्चाक्षरं तस्याक्षरस्य भगवानिति निरूपयितुं सार्द्धद्वावध्यायौ वर्तेते। अस्यैव स्पष्टतायै चतुर्थोऽध्यायः ४३ श्लोकैरारभ्यते। तत्र चतुर्विधाः प्रलया विचिंत्यन्ते नित्य-नैमित्तिक-प्राकृतिक-आत्यन्तिकभेदात्। तत्र द्वितीयश्लोकात् ४ श्लोकान्तं नैमित्तिकलयः ५ श्लोकात् २२ श्लोकान्तं प्राकृतिको लयः, २३ श्लोकात् ३४ श्लोकपर्यंन्तमात्यन्तिको लयः ३५ श्लोकादारभ्य ३७ श्लोकपर्यंन्त नित्यलयो निर्दिष्टः।

एताः कुरुश्रेष्ठ जगद्विधातुर्नारायणस्याखिलसत्त्वधाम्नः।
लीलाकथास्ते कथिताः समासतः कात्स्न्र्येन नाजोऽप्यभिधातुमीशः॥ २१।४।३९॥

संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य।
लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद् विविधदुःखदवार्दितस्य॥ २१।४।४०॥

आभ्यां पद्याभ्यां जगतोऽपि भगवान् पुरुषोत्तम एवाश्रयः स्पष्टीकृतः।

**तृतीयं प्रकरणं वेदाश्रयस्य—**

द्वितीयस्कन्धे दशमाध्यायेऽष्टमनवमश्लोकाभ्यां तृतीयप्रकारस्याश्रयो वर्णितः। अत्राध्यात्मिकादि त्रितयं यो वेद स भगवदाश्रयसिध्यर्थं साधनाय प्रयतेत। मुख्याधिकारी स्वयं ज्ञात्वा श्रवणादीनि गुणातीतानि साधनानि कुर्यादिति प्रयोजनमुद्दिश्य विभूतिरूपोऽयमाश्रयोऽत्र कथितः। यः खलु भगवदनुग्रहबलेन ज्ञानमाप्नोति तस्यैव ज्ञानमार्गसाधनवतः सर्वस्मिन् भगवान् वर्तते इति ज्ञानं भवेत्। तच्च ज्ञानं वेदैरेव भवेदिति सार्धैकेनाध्यायेन वेदानां तच्छाखानां वेदरूपत्वाच्च पुराणानां निरूपणं क्रियते। तेषां श्रवणेन "श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते" १२-६-६०, वाक्येनानेन पापनिवृत्तिफलमभिहितम्।

भक्तेराध्यात्मिकादिभेदात्त्रिभिरध्यायैर्भक्तिमार्गाश्रयप्रकरणं त्रिभिरध्यायैर्निरूप्यते। तत्राष्टमाध्याये कर्ममार्गमनुसरतोः मार्कण्डेयस्य महर्षेः स्थिरा भक्तिर्जातेति वर्णितम्। अत्र भगवता समादिष्टेन महर्षिणा भगवदाश्रयात्तपश्चरणं विहितं तेन तपसा प्रसन्नेन भगवता दर्शनं प्रदत्तं महर्षये मार्कण्डेयाय। ततो नवमाध्याये ज्ञानमार्गानुसारिणी दुःखसाध्या भक्तिर्निरूपिता। अस्मिन्नध्याये वराय चोदितेन महर्षिणा भगवतो मायावैभवदर्शनमभ्यर्थितं भगवता च वरः प्रदत्तः। अत्रानन्तशक्तिमन्तं भगवन्तं हरिं मन्दहास्यमयं मार्कण्डेयो मुनिः पश्यति तच्चालिङ्गयितुमिच्छति। किन्तु भक्तिमार्गेनाप्राप्तो भगवान् तिरोहतीति ज्ञानमार्गीया कष्टसाध्या भक्तिरत्र वर्णिता। दशमाध्याये भक्तिमार्गेऽधिकारवतां भक्तानामनुग्रहं लब्ध्वा यदि भक्तः सर्वस्य भगवतोऽनुकूलो भवति स तृतीयप्रकारको भक्तिमार्गः कथ्यतेऽत्र स वर्णितः। अत्र मर्यादामार्गीयभक्तिमार्गस्य स्थिरता भक्तिमार्गानुसारेण भवति। भगवतो माहात्म्यं शरणगमनं-सर्वकामनानां त्यागः-भक्तानां महिमानं ज्ञात्वा तान्प्रति भक्तिः-एकान्ते भगवद्भक्तिं कुर्वतां विचरणमित्यादि मर्यादामार्गीयस्य स्वरूपम्। आश्रयारूपा भक्तिस्तूपरोक्तत्रितयप्रकाराद्भिन्ना स्वतंत्ररूपा च। तादृशी भक्तिर्यस्य चेतसि-यस्मिन् भक्ते भवेत् स एव भक्तिमार्गस्य त्रीन् भेदान् ज्ञातुं प्रभवति। अयं चतुर्थप्रकारक आश्रयो वर्णितः श्रीमद्वल्लभैः।

**पञ्चमप्रकरणं श्रीभागवताश्रयः—**

भक्तिमार्गस्याध्यात्मिकादिभेदानिव श्रीमद्भागवतस्यापि त्रिविधभेदात्त्रिभिरध्यायैः पञ्चमप्रकार आश्रयो वर्णितः। तत्र तेषु त्रिषु त्रिषु रूपेषु श्रीभागवतवाक्येन सूर्यात्कालमपेक्ष्य पुरुषाराधनं विधीयते। तत्राराधनप्रस्तावे कथाञ्च योजयेदिति तस्याधिदैविकत्वमुच्यते। इदं सर्वमेकादशाऽध्यायस्य तात्पर्यमाश्रयनिरूपणे। द्वादशाध्याये श्रीमद्भागवताश्रयस्याधिभौतिकस्वरूपं कथ्यते। एतत् स्वरूपं कथात्मकं लोकाः परस्परं कथयेयुः शृणुयुश्चेति द्वितीये द्वादशाध्याय एतदेव स्फुटमुक्तम्।

त्रयोदशाध्याये भागवताश्रयस्याध्यात्मिकं स्वरूपं कथितम्। तन्नैकमेव श्रीमद्भागवतं कार्यद्वयकरणेन द्विविधं पुराणत्वादिकमुभयविच्छेदकमिति त्रिरूपता आश्रयरूपं सर्ववेदान्तसारत्वेन ज्ञातरि परमानन्दजनकम्। तदेवाह—"सर्ववेदान्तसारं हि श्रीभागवतमिष्यते। तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित्" एवञ्च श्रीमद्भागवतमेव केवलं समाश्रितं भवेत्तदा गङ्गावच्छुद्धिं कारयिष्यति श्रीहरिमिव सायुज्यमुक्तिं दापयिष्यति भगवन्तं पिनाकिनमिव भक्तिं दास्यतीति सिद्धो भागवताश्रयो भगवदभेदात्।

तदेवाहुर्देशिकवर्याः—

श्रीमद्भागवतं समस्तनिगमन्यायैकतत्त्वात्मकं
नाना भ्रान्तितमः कपाटपिहितं सन्तुष्टये सर्वथा ।
ना भूयादित्यवगत्य निश्चितपदैरुद्दीप्तदीपाकृतिं
श्रीमद्भागवतप्रदीपमधुना चक्रे मुदा वल्लभः ॥

एवमीशानुकम्पया किञ्चित्प्रासङ्गिकं द्वादशस्कन्धस्थविषयमुपलक्ष्य पल्लवितं किन्तु सारासारविवेकशालिनो विद्वांसस्ततोयदनवद्यं तदङ्गीकृत्यावद्याशं मयि स्थापयिष्यन्तीति तान्प्रति विश्वसिमि ।

एतादृशस्यानेकटीकासंवलितस्य श्रीमद्भागवतस्य प्रकाशनं विषमेऽसहायके च काले सुदुस्करमिति नाविदितं भवताम् । नवलक्षरूप्यकाधिकव्ययसाध्यमिदं कार्यं कथं पारयितव्यमिति कथनेन वा किं फलम् । यदीयं य एव विधत्ते येनाद्यपर्यन्तं विहितं स श्रीकृष्णः सर्वं जानाति तस्मै नमामि तदीयं कार्यं तस्मै भक्त्या निवेदयामि ।

साम्प्रतं दशमः स्कन्धोऽवशिष्यते मुद्रणाय । बह्वो विद्वांस एतदर्थं पृच्छन्ति किं तानहमुत्तरं ददामि । प्रसीदन्तु पुनश्चाशीर्वादव्यददतु दयानिधिरचिरेण कालेन दशमस्कन्धस्य मुद्रणारम्भं करिष्यतीति निवेदयति ।

चैत्रकृष्ण एकादशी । श्रीमद्वल्लभाचार्य जयन्ती
२०३१ सौम्यवासरः ७–५–७५

विदुषां वशंवदः
कृष्णशङ्करः शास्त्री ।

# श्रीमद्भागवतमहापुराणद्वादशस्कन्धस्य विषयानुक्रमः

## अथ द्वादशस्कन्धः

अत्राश्रयनिरूपणम् । तत्रैवं प्रकरणविभागः ।

कृष्णाश्रयः–जगदाश्रयः–वेदाश्रयः–भक्तिमार्गाश्रयः–भागवताश्रयश्चेति पञ्च प्रकरणानि ।


| अध्याये | विषयाः | पृष्ठाङ्काः |
|---|---|---|
| १ | कलियुगीयराजवंशवर्णनम् । | १ |
| २ | कलिधर्मनिरूपणं कल्क्यवतारस्य कृतयुगागमस्य च समयनिरूपणम् । | २४ |
| ३ | कलिदोषनिवारणोपायः युगधर्मनिरूपणं कलौ हरिनामकीर्तनमाहात्म्यञ्च । | ४७ |
| ४ | चतुर्विधप्रलयवर्णनम् । | ७५ |
| ५ | ब्रह्मोपदेशेन राज्ञो भीतिनिवारणम् । | १११ |
| ६ | परीक्षितो मोक्षः, सर्पसत्रं वेदशाखाविभागश्च । | १३० |
| ७ | अथर्ववेदविभागः पुराणलक्षणवर्णनञ्च । | १७६ |
| ८ | मार्कण्डेयस्य तपश्चर्या तत्कृतनरनारायणस्तुतिश्च । | १६८ |
| ९ | मार्कण्डेयकृतं भगवन्मायाजनितमहाप्रलयदर्शनम् । | २२८ |
| १० | मार्कण्डेयाय शंकरवरदानम् । | २४६ |
| ११ | साङ्गोपाङ्गायुधस्य भगवतः स्वरूपवर्णनं सूर्यव्यूहवर्णनञ्च । | २६९ |
| १२ | श्रीमद्भागवतोक्तविषयाणां संक्षेपतो वर्णनम् । | ३०१ |
| १३ | पुराणानां तेषां श्लोकसंख्या श्रीमद्भागवतमहत्त्वञ्च । | ३२३ |


इति द्वादशस्कन्धः ।

श्रीगणेशाय नमः

श्रीकृष्णः शरणं मम

# श्रीमद्भागवतमहापुराणम्

अनेकव्याख्यासमलङ्कृतम्

## द्वादशः स्कन्धः

### अथ प्रथमोऽध्यायः

ॐ नमो भगवते वासुदेवाय

राजोवाच

स्वधामानुगते कृष्णे यदुवंशविभूषणे । कस्य वंशोऽभवत् पृथ्व्यामेतदाचक्ष्व मे मुने ॥ १ ॥

श्रीशुक उवाच

योऽन्त्यः पुरञ्जयो नाम भाव्यो बार्हद्रथो नृप । तस्यामात्यस्तु शुनको हत्वा स्वामिनमात्मजम् ॥ २ ॥

प्रद्योतसंज्ञं राजानं कर्ता यत् [1]पालकः सुतः । विशाखयूपस्तत्पुत्रो भविता राजकस्ततः ॥ ३ ॥

नन्दिवर्धनस्तत्पुत्रः पञ्च प्रद्योतना इमे । अष्टत्रिंशोत्तरशतं भोक्ष्यन्ति पृथिवीं नृपाः ॥ ४ ॥

कृष्णप्रिया व्याख्या

अन्वयः—राजोवाच—मुने यदुवंशविभूषणे कृष्णे स्वधामानुगते (सति) पृथ्व्यां कस्य वंशः अभवत् तत् मे आचक्ष्व ॥ १ ॥ श्रीशुकः उवाच—नृप बार्हद्रथः अन्त्यः पुरञ्जयः नाम भाव्यः तस्य अमात्यः शुनकः तु स्वामिनं हत्वा आत्मजं प्रद्योतसंज्ञं राजानं कर्ता यत्पालकः सुतः तत्पुत्रः विशाखयूपः ततः राजकः ॥ २–३ ॥ तत्पुत्रः नन्दिवर्धनः इमे पञ्च प्रद्योतनाः (एते) नृपाः अष्टत्रिंशोत्तरशतं पृथिवीं भोक्ष्यन्ति ॥ ४ ॥

१. फ० ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ॐ नमो भगवते वासुदेवाय

जयंति श्रीपरानन्दकृपापांगलसद्दृशः । या नित्यमनुवर्तंते संपदो विगता दृशः ॥ १ ॥
उक्तस्त्रयोदशाध्यायैर्द्वादशे त्वाश्रयः सतः । अधिष्ठानावधित्वाभ्यामाश्रयश्चेश्वरः सतः ॥ २ ॥
उक्तो लयावधित्वेन प्राकृतात्यंतिके लये । अधिष्ठानतया चोक्तो महापुरुषवर्णने ॥ ३ ॥
तत्रादौ षड्भिरध्यायैः शुकः प्राह परीक्षिते । शेषैस्तत्राखिलान्याह सूतः पृष्टोऽथ सत्रिभिः॥ ४ ॥
स्वाश्रयश्रवणे कार्यो न विलंबो मनीषिणा । इत्येतत्कालवैषम्यं चतुर्भिस्तावदुच्यते ॥ ५ ॥
तत्र तु प्रथमे भाविमागधान्वयभूमिपान् । कलिप्रभावतः प्राह संकरादिमलीमसान् ॥ ६ ॥

एवंभूते सोमवंशे मुकुंदस्वैरक्रीडा वर्णितोऽथ स एव ।
वंशो भावी वर्ण्यते कृष्णभक्तिं मुक्त्वा मुक्त्यै वर्त्म नास्तीति वक्तुम् ॥ ७ ॥

तदेवं वैवस्वतमनुवंशे सोमवंशप्रस्तावेन श्रीकृष्णावतारचरितानि सप्रपंचमनुवर्णितानि । अथेदानीं भावी सोमवंशः कलौ विजातीयसंकरादिमलीमसो वैराग्यद्वारा श्रीकृष्णैकभक्तिनिगमनायानुवर्ण्यते । तत्र तु सोमवंशशाखासु चिरकालानुवर्तितया भार्गववंशोऽनुक्रम्यते । तत्र पूरोर्वंशे उपरिचरो वसुस्तस्य बृहद्रथस्तस्य जरासंधस्तस्य सहदेवः पुत्रोऽभूदित्युक्तं नवमस्कंधे । तत्रैव सहदेवान्मार्जारितः श्रुतश्रवा इत्यादयो रिपुंजयांता विंशतिर्भाविनो राजानो निरूपिताः ( तत्र राजा पृच्छति । स्वधामेति ॥ १ ॥ ) इदानीं तदुपरितनं वंशं संकरादिदोषैः प्रपंचयति । योंऽत्य इति । रिपुञ्जय एव पुरंजयः । स्वामिनं पुरंजय हत्वा स्वपुत्रं प्रद्योतसंज्ञं राजानं करिष्यति यस्य पालको नाम सुतो भविष्यति ॥ २–३ ॥ प्रद्योतनाः प्रद्योतसंज्ञाः ॥ ४–५–६–७–८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ॐ स्वस्ति श्रीगणेशाय नमः

वंदेऽहं गोपिकानाथं यशोदानंदनन्दनम् । वृन्दारकगणाधीशं वृन्दावननिकुञ्जगम् ॥ १ ॥
नमस्कृत्य गुरून्सर्वानखिलाभीप्सितप्रदान् । द्वादशस्कंधविवृतिं प्रारभे विदुषां मुदे ॥ २ ॥

श्रीगुरुं परमानंदं वन्द आनंदविग्रहम् । यस्य संनतिमात्रेण चिदानंदायते वपुः ॥ १ ॥ श्लोकोऽयमधिकः केषुचित्पुस्तकेषु दृश्यते मंगलरूपत्वान्मयाप्यत्रालेखीति । जयंति श्रीपरानंदेत्यादिपद्यमेकादशे व्याख्यातमपि पुनरपि किञ्चिद्व्याख्यास्यामः— श्रीः राधा तया सहितः परानंदः श्रीकृष्णः । यद्वा—श्रियां परस्तत्परः श्रीपरः 'श्रीः कैटभारीहृदयैककृताधिवासा' इति मार्कंडेयोक्तेः । स चासावानंदश्चेति श्रीपरानंदः । यद्वा—श्रीः परोत्कृष्टा यासु ताः श्रीपरा गोप्यस्ता आनंदयतीति श्रीपरानंदः । कृपया युक्ता अपांगा कटाक्षाः कृपापांगास्तैर्लसंत्यो देदीप्यमाना या दृशः दृक्पातास्ताः कृपापांगलसद्दृशः, श्रीपरानंदस्य कृपापांगलसद्दृशः श्रीपरानंद- कृपापांगलसद्दृशो जयंति सर्वोत्कर्षेण वर्तंते । या अनु नित्यं संपदो वर्तंते । किंभूता दृशः—विगताश्चक्षुरगोचरा इत्यर्थः । यद्वा— विगताऽदृगज्ञानं याभिस्ता इत्यर्थः । भक्त्यादिरूपा इत्यर्थः । यद्वा—यादृशोऽनुसंपदोऽविगताः सदा वर्तंत इत्यर्थः ( १ ) । सतः सद्रूपतया प्रतीयमानस्य प्रपंचस्याश्रयस्त्रयोदशाध्यायैरुक्त इत्यन्वयः । तमेवाह—सत ईश्वर आश्रयः । काभ्यामित्यत आह अधिष्ठानेति । ( २ ) प्राकृतः सर्वप्रकृतिलयात्मकः आत्यंतिको मोक्षः, एतल्लयद्वयेऽवधित्वेन सर्वावसानभूमित्वेनेश्वरः उक्तः । महापुरुषो विराट् तद्वर्णने चाधिष्ठानतया सर्वाधारतयोक्तश्च सर्वलोकानां तदवयवकल्पनया तदाधारोऽवयवी विराड्रूपीश उक्त इत्यर्थः ( ३ ) । तत्र त्रयोदशाध्यायेषु । शेषैः सप्तभिः । खिलान्याकांक्षितार्थपूरकाण्याख्यानानि । सत्रिभिः शौनकादिभिः ( ४ ) । इत्येतदिति कालविलंबपरित्यागार्थम् । कालवैषम्यं कालकृतबुद्धिवैषम्यम् । तावदादौ ( ५ ) । तत्र चतुर्ष्वपि । संकरो वर्णसंकरत्वम् , तदादिभिर- सत्यसंभाषणादिदोषैर्मलीमसान्मलिनान् ( ६ ) । एवंभूते पूर्वोक्तपावनत्वादिविशेषणविशिष्टे । 'वंशः सोमस्य पावनः' इत्यादिनव- नवमोक्तेः । बुद्धौ सन्निहितत्वादेवंभूत इत्युक्तम् । मुकुन्दस्य हरेः । स्वैरक्रीडा स्वेन वेदरूपेणात्मना वर्णिता पूतनादिवधरासादिरूपा क्रीडा । पूतनावधादिरूपा क्रीडापि वेदेनोक्ता, तत्र प्रमाणीभूताः काश्चिछ्रुतयोऽपि तत्रतत्र सभाष्या उक्ता एव । स्वैरक्रीडा वेदा- विहिता क्रीडेति व्याख्यानमत्र न शोभनम् 'यदायदा हि धर्मस्य' इत्यादिश्रीगीताविरोधात् । स एव चंद्रवंश एव । मुक्त्वा त्यक्त्वा । मुक्त्यै मोक्षाय । अन्यद्वर्त्मान्यो मार्गो नास्तीति कथयितुम् । कलौ नित्यनैमित्तिकादिकर्माऽकरणादंतःकरणशुद्ध्यनुदयाज्ज्ञानयोगाद्य- संभवाद्भक्तिरेव मुख्यो मुक्तिमार्गः 'कलौ भक्तिः कलौ भक्तिर्भक्त्या कृष्णः पुरःस्थितः' इत्यादिपाद्मोक्तेः ( ७ ) । स्वधामेत्यादिप्रश्न- श्लोकश्च न स्वामिसंमत इति भाति । तैश्च तदेवमित्यारभ्य रिपुंजयांता विंशतिर्भाविनो राजानो निरूपिता इत्यंतेन पूर्वसंबंधमनूद्य

तदुपरितनं वंशं संकरादिदोषैः प्रपंचयति—योन्त्य इति श्लोकावतरणं दत्तवद्भिः प्रश्नस्य काप्यनुल्लेखात्, वंशकथनप्रस्तावस्य नवमस्कंधतः प्रवृत्तत्वाद्भगवन्निर्याणानंतरं स्ववंशस्य मागधवंशस्य च विद्यमानत्वेन तादृशप्रश्नासंभवाच्च। अत एवायं प्रश्नश्लोको विजयध्वजविश्वनाथाभ्यां परित्यक्तः॥ १॥ अंत्यो वंशावसानभवः। भाव्यो वार्हद्रथो नृपः इति' प्रचुरः पाठः। वारहद्रथ इह रेफेऽकारागमस्त्वार्ष एव ध्येयः। तस्य पुरंजयस्य। अमात्यो मन्त्री 'अमात्यः सचिवो मंत्री' इत्यभिधानात्॥ २॥ तत्पुत्रः पालकपुत्रः। ततो विशाखयूपात्॥ ३॥ तत्पुत्रो राजकपुत्रः। इमे प्रद्योतनेन सह पंचसंख्याका अष्टात्रिंशदुत्तरवर्षशतकं १३८ पृथ्वीं भोक्ष्यंति पालयिष्यंति 'भुजोऽवने' इत्यतः परस्मैपदम्॥ ४॥



## अन्वितार्थप्रकाशिका

श्रीकृष्णाय नमः

आनन्दधामनि चिदेकरसेऽद्वितीये तस्मिन्पदेऽस्तु मम चित्तमगोचरेऽपि।
यत्सद्व्रजस्थितिजुषां सुहृदां कुमारादीनामधीनमिव गोचरतामुपैति॥ १॥
यावन्निरञ्जनमजं पुरुषं जरन्तं संचिन्तयामि निखिले जगति स्फुरन्तम्।
तावद्बलात्स्फुरति हन्त हृदन्तरे मे गोपस्य कोऽपि शिशुरञ्जनपुञ्जमञ्जुः॥ २॥
प्रेम्णा मुकुन्दपदकञ्जयुगं प्रणम्य मातुः पितुश्च चरणौ प्रणिपत्य भक्त्या।
गङ्गासहायजरठो हरितोषहेतोः स्कन्धेऽन्तिमे सुगममन्वयमातनोति॥ ३॥
प्रथमे भाविनः प्राह शुको मागधभूमिपान्। मलीमसान्कलेर्दोषैः श्लोकाः सार्द्धास्त्रिवार्द्धयः (४३॥)॥
उवाचेति वचोयुग्मं (२) श्लोकतुल्या (४३॥) अनुष्टुभः।

स्वधामेति। हे मुने! यदुवंशस्य विभूषणवच्छोभावहे श्रीकृष्णे स्वधामानुगते सति पृथ्व्यां कस्य वंशोऽभवत्। एतन्मे मह्यमाचक्ष्व॥ १॥ य इति युग्मम्। सोमवंशशाखासु पुरोर्वंशे उपरिचरो वसुस्तस्य बृहद्रथस्तस्य सहदेव इत्युक्तं नवमस्कन्धे तत्रैव सहदेवान्मार्जारिस्ततः श्रुतश्रवा इत्यादयो रिपुञ्जयान्ताः विंशतिर्भाविनो राजानो निरूपितास्तेषु वार्हद्रथो बृहद्रथवंशे भवोऽन्त्यो रिपुञ्जयाख्यो यः स एव पुरंजयाख्यो नृपः प्रोक्तः इति शेषः। तस्यामात्यः शुनकाख्यस्तु तं स्वामिनं पुरञ्जयं हत्वा आत्मजं स्वपुत्रं प्रद्योतसंज्ञं राजानं कर्त्ता करिष्यति। यस्य प्रद्योतस्य अलकः सुतो भविता। यत् पालक इति पाठान्तरम्। तत्पुत्रः अलकपुत्रः विशाखयूपः ततो राजकः पुत्रो भविता॥ २–३॥ नन्दीति। तत्पुत्रः राजकपुत्रः नन्दिवर्धनः इमे पंच प्रद्योतनाः प्रद्योतप्रभृतयो नृपाः प्रद्योतसंज्ञाः। ते च अष्टत्रिंशोत्तरशतं संवत्सरान्महीं भोक्ष्यन्ति पालयिष्यन्ति॥ ४॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

श्रीमते रामानुजाय नमः

॥ १–३॥ अष्टत्रिंशोत्तरं शतमिति कालावधिरुक्तः॥ ४–१८॥

## श्रीमद्वीरराघवव्याख्या

श्रीमते रामानुजाय नमः

तदेवं नवमस्कन्धेनोपक्रान्तसूर्यवंशावलिं तदनन्तरापतितसोमवंशावलिं च श्रीकृष्णावतारपर्यन्तां निरूप्य भगवतोवतारप्रभृतीनि स्वधामगमनान्तानि चरितानि दशमैकादशाभ्यां निरूपितानि अथ भाविसोमवंशपरम्परोत्तरावधि बुभुत्सया पृच्छति राजा—स्वधामानुगत इति। यदुवंशस्य भूषणवच्छोभावहे श्रीकृष्णे स्वधाम स्वस्थानमनुपगते सति ततः यदुवंशराजानां सोमवंश्यानाम् उक्तानां मध्ये कस्य वंशोऽभवद्वंशपरम्परा प्रावर्त्तत तदेतद्धे मुने! मह्यमाचक्ष्व॥ १॥ वार्हद्रथवंशोऽभवदित्यभिप्रेत्य भाविनं तम् अनुवर्णयितुमारभते, योन्त्यः पुरञ्जयो नामेत्यादिना। पुरोर्वंशे उपरिचरो वसुस्तस्य बृहद्रथः तत्सुतो जरासन्धः तस्य सहदेवस्तस्य मार्जारिः तस्य श्रुतश्रवःप्रभृतयः पुरञ्जयान्ताः सुताः विंशतिसङ्ख्याभाविनो नवमस्कन्ध एवोक्ताः योऽन्त्यः कनीयान् पुरञ्जयो नाम वार्हद्रथवंश्यो भविता तस्य पुरञ्जयस्यामात्यः यः शुनको नाम स स्वामिनं पुरञ्जयं हत्वा॥ २॥ तस्यात्मजं प्रद्योतनामानं राजानं कर्ता करिष्यति यस्य प्रद्योतनस्याऽलकः सुतः तं राजानं कर्तेति पूर्वेण सम्बन्धः तत्पुत्रः अलकपुत्रः विशाखयूपः ततोऽराजको भविष्यति॥ ३॥ तत्पुत्रो राजकपुत्रः नन्दिवर्द्धनः तस्य पुत्राः पञ्च प्रद्योतनाः प्रद्योतनसंज्ञिकाः त इमे नृपा अष्टत्रिंशोत्तरशतम् इत्यस्य समा इति शेषः। अयं कालावधिः एवमग्रेपि भोक्ष्यन्ति पालयिष्यन्ति॥ ४॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

श्रीहनुमते नमः

पद्मवासालयं नत्वा पद्मभूपूर्वस्वर्गीड्यम् । द्वादशस्कन्धं व्याकुर्वे द्वादशात्मप्रीत्यै नित्यम् ॥

श्रीनारायणक्लृप्तशिष्टवंशादिकथनेन तन्माहात्म्यमेव कथयत्यस्मिन् स्कन्धे; तत्र प्रथमेऽध्याये वंशशेषं कथयति—य इति अन्त्यः वंशावसानभवः कस्य वंशान्ते भव इत्यत उक्तं बार्हद्रथ इति स्वामिनं रिपुञ्जयमात्मजं स्वस्येति शेषः ॥२॥ यद्यस्य प्रद्योतस्य सुतः पालको नाम यत्तादत्यस्यान्वयत्वात्षष्ठी यद्वा, यः पालको यस्य यत्पालकः स तस्य सुत इति ॥ ३ ॥ प्रद्योतनेन साकं पञ्च तेषां राज्यावधि कालमाह—अष्टेति। भोक्ष्यन्ति पालयन्ति "भुजो अवने" (१।३।६६) इत्यतः परस्मैपदं पूर्ववंशवैलक्षण्यद्योतनार्थो वा व्यत्यासः ॥ ४–७ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

श्रीराधाकृष्णाभ्यां नमः

द्वादशक्रमसन्दर्भे सन्दर्भाणां समाहृतिः । क्रियते यन्निदेशेन स मेऽनन्यगतेर्गतिः ॥

तदेवमेकादशस्कन्धपर्य्यन्तग्रन्थेन निजाभीष्टं श्रीकृष्णलक्षणमाश्रयं यथावन्निरूप्य पुराणोपसंहाराय द्वादशस्कन्ध आरभ्यते यत्र तदन्तर्द्धाने लोकानां दुःखमेव स्यादिति दर्शयित्वा कथञ्चित्तं भजतां तु निस्तारः स्यादिति दर्शयिष्यते श्रीशुक उवाच योऽन्त्यो रिपुञ्जय इत्यादिना ॥ १–२४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

श्रीकृष्णचैतन्यचन्द्राय नमः

प्रणम्य श्रीगुरुं भूयः श्रीकृष्णं करुणार्णवम् । लोकनाथं जगच्चक्षुः श्रीशुकं तमुपाश्रये ॥
गोपरामाजनप्राणप्रेयसेऽतिप्रभूष्णवे । तदीयप्रियदास्याय मां मदीयमहं ददे ॥
त्रयोदशभिरध्यायैर्द्वादशे तु चतुर्विधः । निरोध उक्तः श्रीकृष्णकथाध्यत्रोपसंहृता ॥
त्रिभिरादौ कलेर्धर्मद्रोहिणः कथ्यते कथाः । एकेन प्रलयस्याथ द्वाभ्यां शुकपरीक्षितोः ॥
पुराणस्य तथैकेन मार्कण्डेयस्य च त्रिभिः । सूर्य्यस्याख्यानवृन्दस्य शास्त्रपूर्त्तः क्रमात्त्रिभिः ॥
तत्र तु प्रथमे भाविभूमिपानां कथाच्यते । मागधान्वयजातानां कलिकल्मषशालिनाम् ॥

तदेवं चन्द्रवंशावतंसस्य श्रीकृष्णचन्द्रस्य चरितामृतकथासिन्धुः स्कन्धद्वयेन वर्णितस्तत्रैव लोकान् निमज्ज्यानन्दयितुं इदानीं तेषां ततोऽन्यत्र वैराग्यमुत्पादयितुं तस्यैव चन्द्रवंशस्यान्तिमो भावो वर्ण्यते; तत्र चन्द्रवंशशाखायां पूरुवंशे उपरिचरो वसुः तस्य पुत्रो बृहद्रथः तस्य जरासन्धः तस्य सहदेवः पुत्रोऽभूदित्युक्तं नवमस्कन्धे, पुनश्च तत्रैव सहदेवस्य मार्जारिस्तस्य श्रुतश्रवा इत्येवं रिपुञ्जयान्ता विंशतिर्भाविनो राजानो निरूपिताः अत्र स्कन्धे तदुपरितनं वंशं सङ्करादिदोषैर्मलिनीभूतं वर्णयति, योऽन्त्य इति। रिपुञ्जय एव पुरञ्जयः बार्हद्रथः बृहद्रथवंश्यः स्वामिनं रिपुञ्जयं हत्वा स्वपुत्रं प्रद्योतं राजानं करिष्यति यत् यस्य प्रद्योतस्य सुतः पालकः पालकसंज्ञः प्रद्योतवंशत्वात् प्रद्योतनाः ॥ १–६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

श्रीनिम्बार्काय नमः

श्रीकृष्णं यदनुध्यानान्मुक्तबन्धः परं व्रजेत् । नत्वा तं द्वादशे स्कन्धे प्रदीपोऽयं विरच्यते ॥
अवशिष्टो निरोधोऽत्र वर्ण्यते विविधस्तथा । प्रासङ्गिकश्च बह्वर्थस्तत्तत्प्रश्नानुसारतः ॥

नवमस्कन्धे सूर्यवंशोद्भवे इलाद्वारा सोमवंशावलिः प्रोक्ता तत्र श्रीमत्पुरुषोत्तमप्रादुर्भावो वर्णितस्तच्छ्रवणजन्यप्रेमातिशयेन तत्स्वरूपगुणादिबुभुत्सुं राजानं प्रति तस्याश्रयभूतस्य भगवतः श्रीकृष्णस्य क्रममुल्लङ्घ्य स्वरूपगुणादिज्ञापिका लीला स्कन्धद्वयेन निरूपिता एकादशे मुक्तिश्च वर्णिताऽधुनास्मिन् स्कन्धे निरोध उच्यते, तत्र सर्वस्य प्राकृतपदार्थस्य कालतो निरोधविषयत्वात्सर्वतो विरक्तः सन् हरिभजनेन आत्यन्तिकसम्प्लवापरपर्यायं मुक्तिं सम्पादयेदिति निरूप्यते त्रिभिरध्यायैः तत्र तावत् भाविसोमवंशावलिं पृच्छति—स्वधामानुगते इति। यदुवंशस्य विभूषणे आभरणे भुक्तिमुक्तिप्रदत्वे विनोदप्रद इत्यर्थः। स्वधाम अप्राकृतं

लोकं गते सति यादवानां मध्ये कस्य वंशश्चिरकालस्थायित्वेनाऽभवत् एतन्मे आचक्ष्व ॥ १ ॥ उत्तरमाह—य इति। सोमवंशे यदुस्तत्पुत्रो पुरुस्तद्वंशे उपरिचरोवसुस्तस्य बृहद्रथस्तस्य जरासंधस्तत्सुतः सहदेवः इत्युक्तं नवमस्कन्धे, सहदेवान्मार्जारिस्ततः श्रुतश्रव आदयो रिपुञ्जयान्ता विंशतिसङ्ख्याकाः भविष्या राजानस्तत्रैवोक्ताः तत्र योऽन्त्यो रिपुञ्जय एव पुरञ्जयस्तस्यामात्यः शुनको नाम स्वामिनं पुरञ्जयं हत्वा आत्मजं स्वपुत्रम् ॥ २ ॥ प्रद्योतसंज्ञं राजानं कर्ता करिष्यति ॥ ३ ॥ प्रद्योतनाख्याः अष्टत्रिंशोत्तरशतं समा इति शेषः ॥ ४ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी



श्रीकृष्णाय नमः

आश्रयः सर्वभूतानां स्वयं यो वै निराश्रयः। द्वादशस्कन्धटीकायां स एवास्तु ममाश्रयः ॥ १ ॥
एकत्रिंशद्भिरध्यायैर्विमुक्तिर्विनिरूपिता । त्रयोदशभिरध्यायैराश्रयो विनिरूप्यते ॥ २ ॥
आश्रयो महदादीनां ब्रह्मादीनां स्वयं हरिः। नहि तेन विना भूतं जगत्तिष्ठेन्निराश्रयम् ॥ ३ ॥
तत्र तु प्रथमेऽध्याये भावी यो मागधान्वयः। कपिलप्रभावतो दुष्टो वैराग्यार्थं निरूप्यते ॥ ४ ॥

एवं नवमस्कन्धे श्रीकृष्णावतारपर्यन्तां सोमवंशावलिं निरूप्य दशमैकादशस्कन्धाभ्यां भगवतोऽवतारप्रभृति स्वधामगमनान्तानि चरितानि निरूपितानि श्रुत्वाऽथ भावि वंशपरम्परोत्तरावधि बुभुत्सया राजा पृच्छति—स्वधामानुगत इति। यदुवंशस्य भूषणवच्छोभावहे श्रीकृष्णे स्वधामानुगते सति पृथ्व्यां कस्य वंशोऽभवत् हे मुने सर्वज्ञ एतन्मे मह्यमाचक्ष्व कथय ॥ १ ॥ एवं पृष्टः शुक आह—य इति। बार्हद्रथो बृहद्रथवंशे भवोऽन्त्यो यः पुरञ्जयाख्यो नृपः प्रोक्त इति शेषः। अस्यैव रिपुञ्जय इति नामान्तरम् तस्यामात्यः शुनकाख्यस्तु तं स्वामिनं पुरुञ्जयंहत्वा आत्मजं स्वपुत्रं प्रद्योतसंज्ञं राजानं कर्ता करिष्यति। यस्य प्रद्योतस्य अलकः सुतो भविता। पालक इति पाठान्तरम्। तत्पुत्रः अलकपुत्रस्ततो राजकः ॥ २–३ ॥ इमे पञ्च प्रद्योतनप्रभृतयो नृपा अष्टत्रिंशोत्तरशतं संवत्सरान्महीं भोक्ष्यन्ति पालयिष्यन्ति ॥ ४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

श्रीमते श्रीनीलकण्ठाय नमो नमः

अखिलनिगमगीतपुण्यकीर्तिर्बहुलदयेक्षितभक्तवर्गईशः। हरिरखिलमुखाधुचिन्त्यमूर्तिर्मम हृदये वसतौ करोतु वासम् ॥ १ ॥
यो वै ज्ञानविरागधर्मसहितां भक्तिं निजां धर्मभूः संस्थाप्य स्वजनेष्वरक्षदथ तां वार्ताविधानादिभिः।
तं कारुण्यसुधारसार्द्रहृदयं भक्त्यात्मजं स्वामिनं नित्यं नौमि पितामहं हि सहजानन्दं हरिं सर्वदा ॥ २ ॥
परमात्मकृपापाङ्गयुग्दृशः स्वजनोपरि। निपतन्त्यो जयन्त्येव ज्ञानसंपद्युताः शिवाः ॥ ३ ॥
त्रयोदशभिरध्यायैर्द्वादशे प्रोक्त आश्रयः। श्रीहरिश्चिदचिद्देहः कार्यकारणताप्रभाक् ॥ ४ ॥
तत्रादौ श्रीशुकः प्राहाध्यायैः षड्भिः परीक्षिते। सूतः पृष्टोऽखिलान्याह शेषैस्तत्राथ सप्तभिः ॥ ५ ॥
स्वाश्रयश्रीहरेः कार्यो न विलम्बः कथाश्रुतौ। बुधैस्तत्कालवैषम्यं चतुर्भिः प्रागुदीर्यते ॥ ६ ॥
भाविमागधवंशीयभूपानाहादिमेऽत्र तु । कलिप्रभावसंभूतसंकरादिलकच्चरान् ॥ ७ ॥
इत्थंभूते चन्द्रवंशे मुकुन्दस्वेच्छाक्रीडा संस्तुता श्रीशुकेन।
भाव्यो वंशः कथ्यते कृष्णभक्तिं त्यक्त्वा नान्यन्मुक्तिवर्मेति वक्तुम् ॥ ८ ॥

तदेवं नवमस्कन्धेनोपक्रान्तसूर्यवंशश्रेणिं तदन्तरापतितचन्द्रवंशश्रेणिं च श्रीकृष्णावतारपर्यन्तां निरूप्य भगवतोऽवतारप्रभृतीनि स्वधामगमनान्तानि चरित्राणि दशमैकादशस्कन्धाभ्यां निरूपितानि, इदानीं तानि सोमवंशपरंपरोत्तरावधिबुभुत्सया पृच्छति राजा। स्वधामेति। यदुवंशस्य विभूषणं तस्मिन्, यदुवंशस्य भूषणवच्छोभाकरे इत्यर्थः। कृष्णे, स्वधाम स्वकीयस्थानं, अनुगते सति, नवमस्कन्धप्रोक्तं सोमवंशीययदुवंशराजानां राज्ञां मध्ये इति शेषः। पृथ्व्यां कस्य वंशः, अभवत् वंशपरंपरया प्रावर्त्तत। तदेतत्, हे मुने, मे मह्यं आचक्ष्व। केचित्त्वेतं श्लोकं क्षेपकं मत्वा तद्व्याख्यां न कुर्वन्ति ॥ १ ॥ बार्हद्रथवंशोऽभवदित्यप्रभाविनं तमनुवर्णयितुमारभते। योऽन्त्यः पुरंजयो नामेत्यादिना। य इति। प्रद्योतेति च तत्र पुरोवंशे उपरिचरो वसुस्तस्य बृहद्रथः तत्सुतो जरासंधस्तस्य सहदेवस्तस्य मार्जारिस्तस्य श्रुतश्रवास्तत्प्रभृतयो रिपुंजयापरसंज्ञपुरंजयान्ता विंशतिसंख्याका भाविनो नवमस्कन्ध एवोक्ताः। तत्र योऽन्त्यः पुरंजयो नाम पुरंजय इत्याख्यया प्रसिद्धः, बारहद्रथवंश्यः, भविष्यः भविता, तस्य तु शुनकः शुनकनामा अमात्यः, सः स्वामिनं पुरंजयनामानं स्वस्वामिनं हत्वा, प्रद्योतसंज्ञं आत्मजं स्वपुत्रं, राजानं कर्ता करिष्यति।

यद्यस्य प्रद्योतस्य, पालकः पालकनामा सुतः भविता, तत्पुत्रः पालकस्य पुत्रः, विशाखयूपः भविता, ततो विशाखयूपात्, अराजकः अराजकनामा पुत्रः, भविता। इति द्वयोरेकान्वयः नन्दिवर्द्धन इति। तत्पुत्रोऽराजकपुत्रः नन्दिवर्द्धनः, इमे पञ्च नृपाः, प्रद्योतनाः प्रद्योतनसंज्ञाः सन्तः, अष्टत्रिंशोत्तरशतं समा इति शेषः। पृथिवीं भोक्ष्यन्ति, अयं कालावधिः ॥ ४ ॥

### हिन्दी अनुवाद

## कलियुग के राजवंशों का वर्णन

राजा परीक्षित् ने पूछा—भगवन्! यदुवंशशिरोमणि भगवान् श्रीकृष्ण जब अपने परमधाम पधार गये, तब पृथ्वी पर किस वंश का राज्य हुआ? तथा अब किसका राज्य होगा? आप कृपा करके मुझे यह बतलाइये ॥ १ ॥ श्रीशुकदेवजी ने कहा—प्रिय परीक्षित्! मैंने तुम्हें नवें स्कन्ध में यह बात बतलायी थी कि जरासंघ के पिता बृहद्रथ के वंश में अन्तिम राजा होगा पुरञ्जय अथवा रिपुञ्जय। उसके मन्त्री का नाम होगा शुनक। वह अपने स्वामी को मार डालेगा और अपने पुत्र प्रद्योत को राजसिंहासन पर अभिषिक्त करेगा। प्रद्योत का पुत्र होगा पालक, पालक का विशाखयूप, विशाखयूप का राजक और राजक का पुत्र होगा नन्दिवर्धन। प्रद्योतवंश में यही पाँच नरपति होंगे। इनकी संज्ञा होगी 'प्रद्योतन'। ये एक सौ अड़तीस वर्ष तक पृथ्वी का उपभोग करेंगे ॥ २–४ ॥

शिशुनागस्ततो भा[1]व्यः काकवर्णस्तु तत्सुतः। क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः ॥ ५ ॥
विधिसारः सुतस्तस्याजातशत्रुर्भविष्यति। दर्भकस्तत्सुतो [2]भावी दर्भकस्याज[2]यः स्मृतः ॥ ६ ॥
नन्दिवर्धन आजेयो महानन्दिः[3] सुतस्ततः। शि[4]शुनागा दशैवैते षष्ट्युत्तरशतत्रयम् ॥ ७ ॥
समा भोक्ष्यन्ति पृथिवीं कुरुश्रेष्ठ कलौ नृपाः। महानन्दिसुतो राजन् [5]शूद्रीगर्भोद्भवो बली ॥ ८ ॥
महापद्मपतिः कश्चिन्नन्दः क्षत्रविनाशकृत्। ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्मिकाः ॥ ९ ॥
स एकच्छत्रां पृथिवीमनुल्लङ्घितशासनः। शासिष्यति महापद्मो द्वितीय इव भार्गवः ॥ १० ॥
तस्य चाष्टौ भविष्यन्ति सुमाल्यप्रमुखाः सुताः। य इमां भोक्ष्यन्ति महीं राजानः स्म शतं समाः ॥ ११ ॥
नव नन्दान् द्विजः कश्चित् प्रपन्नानुद्धरिष्यति। तेषामभावे जगतीं मौर्या भोक्ष्यन्ति वै कलौ ॥ १२ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—ततः शिशुनागः भाव्यः तत्सुतः काकवर्णः क्षेमधर्मा तस्य सुतः क्षेत्रज्ञः क्षेमधर्मजः ॥ ५ ॥ विधिसारः तस्य सुतः अजातशत्रुः भविष्यति तत्सुतः भावी दर्भकः दर्भकस्य अजयः स्मृतः ॥ ६ ॥ नन्दिवर्धनः आजेयः सुतः महानन्दिः ततः शिशुनागाः दश एव एते नृपाः षष्ट्युत्तरशतत्रयं समाः कुरुश्रेष्ठ कलौ पृथिवीं भोक्ष्यन्ति राजन् महानन्दिसुतः शूद्रीगर्भोद्भवः बली ॥ ८ ॥ महापद्मपतिः कश्चित् नन्दः क्षत्रविनाशकृत् ततः शूद्रप्रायाः अधार्मिकाः नृपाः भविष्यन्ति ॥ ९ ॥ द्वितीयः भार्गवः इव अनुल्लङ्घितशासनः महापद्मः सः एकच्छत्रां पृथिवीं शासिष्यति ॥ १० ॥ तस्य अष्टौ सुमाल्यप्रमुखाः सुताः भविष्यन्ति ये राजानः शतं समाः महीं भोक्ष्यन्ति स्म ॥ ११ ॥ कश्चित् द्विजः प्रपन्नान् नव नन्दान् उद्धरिष्यति तेषाम् अभावे कलौ मौर्याः जगतीं भोक्ष्यन्ति वै ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

नंदो नाम कश्चिन्महापद्मसंख्यायाः सेनाया धनस्य वा पतिर्भविष्यति अत एव महापद्म इत्यपि तस्य नाम ॥ ९ ॥ एकमेव छत्रं यस्यां तां पृथिवीं शासिष्यति पालयिष्यति। क्षत्रोत्सादने दृष्टांतः। भार्गवः परशुराम इव ॥ १० ॥ समाः संवत्सरान् ॥ ११ ॥ नव नन्दान्नन्दं तत्पुत्रांश्चेत्येवं नव। प्रपन्नान्विश्वस्तान्विख्यातान्वा। द्विजः कौटिल्यवात्स्यायनादिपर्यायश्चाणक्य उद्धरिष्यत्युन्मूलयिष्यति। मौर्याः मौर्यसंज्ञाः ॥ १२ ॥

---

१. भाव्यो। २. जयोऽभवत्। ३. न्दिस्तु तत्सुतः। ४. भौम०। ५. न्छूद्रागर्भो०।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततः प्रद्योतनेभ्यः पश्चात्। भाव्यो भविष्यति। तत्सुतः शिशुनागः सुतः। तस्य काकवर्णस्य ॥ ५ ॥ तस्य क्षेत्रज्ञस्य, तस्य अजातशत्रुः, तस्येत्युभयान्वयि। तत्सुतोऽजातशत्रुसुतः ॥ ६ ॥ आजेयोऽजत्रपुत्रः। अत्रैकारमध्यत्वमार्षम्। ततो नंदिवर्द्धनस्य। षष्ट्युत्तरशतत्रयं ३६० राज्यभोगवर्षसंख्येयम् ॥ ७ ॥ समा वर्षाणि 'हायनोऽस्त्री शरत्समाः' इत्यमरः। हे कुरुश्रेष्ठेति–त्वं त्वतीव पवित्रेऽपि कुरुवंशे श्रेष्ठोऽसि येन श्रीकृष्णलीलामृतमंते पीतमिति भावः। हे राजन्निति–त्वं तु धर्मेणैव राजसे न तु गणितनृपसदृशोऽसीति भावः अत एव महापद्मसेनादिपतित्वाद्वेच। मत्वर्थीयाजंताश्रयणे तस्यापि तन्नाम संभवति, महापद्माः सन्त्यस्येति निरुक्तेः। स्वेन सह भोजनसंबंधादिकमकुर्वतां क्षत्रियाणां विनाशकः, तत्त्रासभयाच्छुद्धाः क्षत्रियास्ततः पलायित्वा यवनादिदेशं गता वैश्यवृत्त्यादिजीविनो भविष्यंति, ततः प्रभृति नृपाः शूद्रप्राया भविष्यंति। प्रायःशब्देन शूद्रराज्यबाहुल्ये क्वचित्क्षत्रियावशेषो बोध्यते, क्षत्रवंशविरोधे च द्वितीयभार्गव इव। तथा च भार्गवेणैकविंशतिवारं पृथिव्यां क्षत्रहनने यत्कार्त्तवीर्यद्वेषेण हननं तस्यैव पञ्चपुत्रावशेषश्रवणात्, किमु वाच्यं क्षत्रियांतरवंश्यानाम्, तथापि बहवो हता बहवो देशांतरं गता इति ज्ञेयम् ॥ ९–१० ॥ तस्य महापद्माख्यनंदस्य ॥ ११ ॥ विश्वस्तहननस्य महापापत्वादाह–विख्यातान्वेति। विश्वस्तघातस्य महापापत्वे भोजियकपिसिंहकथानुसंधेया दृष्टांतत्वेन। तथाहि–कदाचिद्भोजनृपतये तदाज्ञया तद्भार्याया भानुमत्या मूर्तिं लिखित्वा कालिदासो दर्शयामास। स च तां जघनदेशे तिलकालकांकितां दृष्ट्वाऽनेन मद्भार्या रमितेति शंकितो भूत्वा तं देशान्निष्कासयामास। तदनु कदाचिन्मृगयां गतो नृपो विषमवने भयार्त्तः क्वचिदारूढवानरवृक्षमारुरोह, वानरोऽपि तेन मैत्रीं कृतवान्, स च तत्रैव विश्वस्य शिश्ये। तदा च कश्चित्कपिविरोधिसिंहस्तत्रागत्येमं मे देहीति वैरनिर्यातनार्थमुवाच। स च शरणापन्नत्यागे दोषं दृष्ट्वा न ददौ। ततश्च कपिरपि सिंहायाहं न प्रद्वेष्यस्त्वयेत्युक्त्वा शिश्ये। स एव सिंहः पुनरागत्य राजानमुवाच देहिं म इमं कपिन्नो चेत्त्वां भक्षयिष्यामीतोऽवतीर्णमिति, तच्छ्रुत्वा कपिं राजा प्रक्षिप्तवान्, स च पतन्कांचित्तद्वृक्षशाखामालंब्य तत्रैवागत्य राजानं कुष्ठी भवेति शशाप। पुना राज्ञा प्रसादितः 'वि–से–मे–रा' इति वर्णचतुष्कार्थश्रवणेनोल्लाघो भविष्यसीत्युवाच। ततो नृपो गृहमागत्य वन्यवृत्तं मंत्रिभ्य उक्त्वा विद्वत्समाजमक्षरचतुष्कार्थश्रवणार्थं चकार। तत्र च राजनिष्कासितः कालिदासः स्त्रीवेषेण कस्यचिद्द्विजपो गृहे धारानगर्यामेवासीत्। स ततस्तद्राजवृत्तमाकर्ण्य। पित्रीकृतं पंडितमित्थमुवाच–मदीया पुत्री त्वदभिलषितवर्णचतुष्कार्थं जानाति तामिहाहूय पृच्छेत नृपाय कथयेति। स च तथा कृत्वा स्त्रीवेषिणं तं नृपसदसि निनायास। स च स्त्रीवेषी कालिदासः पृथगर्थं प्रत्येकवर्णस्योक्तवान्। तथाहिं—'विश्वासप्रतिपन्नेषु ये च विश्वासघातकाः। ते यांति नरकं घोरं ताडितां यमकिंकरैः (१) सेतुबंधे समुद्रे च गंगासागरसंगमे। स्नात्वा पापविमुक्तः स्यान्मित्रद्रोहकरं विना (२) मेरुतुल्यान्महापापान्कृत्वा संगं सतां नरः। मुच्यते न हि संदेहो मित्रद्रोही न मुच्यते (३) राजन्भोः शृणु मद्वाक्यं यदि कल्याणमिच्छसि। देहि दानं सुविप्रेभ्यस्ततः श्रेयो भविष्यति (४)' इत्याकर्ण्य भोजः स्वस्थो भूत्वा तामुवाच–'गृहे वससि भो देवि वनं क्वापि न गच्छसि। पञ्चास्यकपिमद्वृत्तं कथं जानासि सुंदरि (५)।' स चोवाच–'देवद्विजप्रसादेन कंठे वसति शारदा। सर्वं जानामि भो राजन्भानुमत्यास्तिलं यथा (६)।' ततो नृपस्तं कालिदासं ज्ञात्वा प्रसाद्यानयामासेति बृहद्भोजप्रबंधे ॥ १२ ॥

## अन्वितार्थप्रकाशिका

शिशुनाग इति। ततो नन्दिवर्द्धनात् शिशुनागाख्यः सुतो भाव्यः। आवश्यके ण्यत्। तत्सुतः काकवर्णः तस्य सुतः क्षेमधर्मा क्षेमधर्मणो जातः सुतः क्षेत्रज्ञः ॥ ५ ॥ विधीति। विधिसारस्य अजातशत्रुः सुतो भविष्यति स्फुटमन्यत् ॥ ६ ॥ नन्दीति सार्द्धम्। हे कुरुश्रेष्ठ! आजेयः आजेयस्य सुतो नन्दिवर्धनः। एकारमध्यत्वमार्षम्। ततो महानन्दिः सुतः शिशुनागादय एते दश नृपाः कलौ कलियुगे षष्ट्युत्तर- शतत्रयं समाः संवत्सरान् पृथ्वीं भोक्ष्यन्तीत्यर्थः ॥ ७ ॥ महानन्दीति। हे राजन्! शूद्रीगर्भोद्भवो बली अधिकबलयुक्तः अतएव क्षत्रकुलविनाशकृत् महापद्मसङ्ख्यायाः सेनाया धनस्य वा पतिः नन्द इति ख्यातः प्रसिद्धो महानन्दिसुतो भविष्यति ॥ ८ ॥ तत इत्यर्द्धम्। ततः प्रभृति नृपाः शूद्रप्राया अधार्मिका भविष्यन्ति ॥ ९ ॥ स इति। महापद्म इति नामैकदेशग्रहणम्। महापद्मपतिः अनुल्लङ्घितशासनः स नन्दः द्वितीयो भार्गवः परशुराम इव इष्टमेव छत्रं तस्यैव राजचिह्नं यस्यां तथाभूतां पृथिवीं शासिष्यति। तत्र राज्यं करिष्यति ॥ १० ॥ तस्येति। समाः वर्षाणि। स्फुटमन्यत् ॥ ११ ॥ नवेति। नवसङ्ख्याकान्नन्दान् नन्दादीन्नन्दमेकम् अष्टौ तत्पुत्रांश्चेत्यर्थः। तान्नन्दादीन् प्रपन्नान् विश्वस्तान् कौटिल्यवात्स्यायनादिपर्यायश्चाणक्याख्यो द्विज उद्धरिष्यति उन्मूलयिष्यति विनाशयिष्यति। ततश्च तेषां सपितृकाणां सुमाल्यादीनामभावे सोमवंशे समाप्ते कलौ जगतीं पृथिवीं मौर्या मौर्यसंज्ञका भोक्ष्यन्ति ॥ १२ ॥

### श्रीमद्वीरराघवव्याख्या

ततः प्रद्योतनेभ्यः शिशुनागो भविता तत्सुतः शिशुनागसुतः काकवर्णः तस्य काकवर्णस्य सुतः क्षेमधर्मा तस्माज्जातस्तु क्षेत्रज्ञः ॥ ५ ॥ विधिसार इति तस्य क्षेत्रज्ञस्याजातशत्रुरित्यस्य विधिसारादित्यादिः तत्सुतः अजातशत्रुसुतः ॥ ६ ॥ नन्दिवर्द्धन इति आजेयः अज यस्यात्मजः तत्सुतः नन्दिवर्द्धनसुतः ॥ ७ ॥ कुरुश्रेष्ठेति सम्बोधनं महानन्दिसुत इति हे राजन् ! ॥ ८ ॥ महापद्म-पतिरिति अन्वर्थं नाम महापद्मसङ्ख्यायाः सेनाया धनस्य वा पतिरिति स च (शूद्रा) शूद्रीगर्भोद्भवः बली अधिकबलयुक्तश्च क्षत्रकुलविनाशकृच्च नन्द इति तस्यैव नामान्तरं यतोयं शूद्रीगर्भोद्भव अतएव तत आरभ्य नृपाः शूद्रपाया अधार्मिकाश्च भविष्यन्ति ॥ ९ ॥ स इति महापद्म इति नामैकदेशग्रहणं महापद्मपतिः अनुल्लङ्घितशासनः प्रजाभिरनुल्लङ्घितमात्मशासनं यस्य सः एकमेव छत्रं यस्यां तथाभूतां पृथ्वीं शासिष्यति पालयिष्यति द्वितीयो भार्गवः परशुराम इव ॥ १० ॥ तस्येति तस्य महापद्मपतेः सुतान्विशिनष्टि—य इति सहस्रं संवत्सरान् ॥ ११ ॥ नवनन्दानिति नन्दशब्दस्तत्सुतपरश्च "आत्मा वै पुत्रः" इति श्रुत्यनुरोधात् अतएव नन्दानिति बहुवचनेन चेति विशेषणं च तान् प्रपन्नान् विश्वस्तान् कश्चिद्विश्वस्तघातुकः कौटिल्यवात्स्यायनाख्यो द्विज उद्धरिष्यति उन्मूलयिष्यति नाशयिष्यति यावत् ततस्तेषां सपितृकाणां सुमाल्यप्रमुखानामभावे तेष्वतिक्रान्तेषु इत्यर्थः । एवं सोमवंशे समाप्ते मौर्यसञ्ज्ञा भोक्ष्यन्ति ॥ १२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

महानन्दिं विशिनष्टि—महानन्दिरिति ॥ ८ ॥ महानन्दिवंशभवः क इति । कश्चिदिति महापद्मसङ्ख्यया सङ्ख्याता सेना महापद्मा तस्याः पतिः कुलक्षत्रविनाशकृत् ततः कुलक्षत्राभावात् ॥ ९ ॥ स महापद्मो नाम्ना नन्दः ॥ १०–११ ॥ नन्देन सह नवसङ्ख्यान्नन्दान्नन्दवंशजानुद्धरिष्यत्यापद इति शेषः । मौर्या मुरवंशजाः हीनजातयः कैवर्त्ताः ॥ १२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

आजेयः अजस्य सुतः एकारमध्यत्वमार्षम् ॥ ७–९ ॥ स नन्दः महापद्मपतित्वान्महापद्मसङ्ख्यायाः सेनायाः धनस्य वा पतित्वान्महापद्मः क्षत्रविनाशकृत्त्वे दृष्टान्तः भार्गवः परशुराम इव ॥ १०–११ ॥ नवनन्दान् नन्दं च तत्पुत्रानष्टौ चेत्येवं नव प्रपन्नान् विश्वस्तान् द्विजश्चाणक्यः उद्धरिष्यति उन्मूलयिष्यति मौर्य्याः मौर्य्यसञ्ज्ञाः ॥ १२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

ततः प्रद्योतानन्तरम् ॥ ५ ॥ अजेयः अजेयस्य सुतः ॥ ७–८ ॥ महापद्मपतिः महापद्मसङ्ख्यायाः सेनायाः धनस्य वा पतिः कश्चिन्नन्दनामकः क्षत्रविनाशकृत् भविष्यति तत आरभ्य नृपाः शूद्रप्रायाः भविष्यन्ति ॥ ९ ॥ स नन्दः महापद्म इत्यपि तस्यैव नामान्तरम् न उल्लङ्घितं शासनमाज्ञा यस्य स एकमेव क्षत्रं यस्यां तां शासिष्यति पालयिष्यति द्वितीयो भार्गवः परशुराम इव ॥१०॥ तस्य नन्दस्य समाः सम्वत्सरान् ॥ ११ ॥ नन्दानिति एको नन्दः अष्टौ सुमाल्यप्रमुखास्तत्पुत्राः एवं नवसङ्ख्याकान् प्रजाः नन्दयन्तीति नन्दास्तान् प्रजापालनपरान् प्रपन्नान् विश्वस्तान् कश्चित् विश्वस्तघातकः कौटिल्यवात्स्यायननामकश्चाणक्यः उद्धरिष्यति उन्मूलयिष्यति मौर्या मौर्यनामकाः जगतीं भोक्ष्यन्ति ॥ १२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ततो नन्दिवर्द्धनात् शिशुनागाख्यसुतो भविता । तत्सुतः काकवर्णः तस्य सुतः क्षेमधर्मा तस्य क्षेत्रज्ञः ॥५॥ विधिसारस्य अजातशत्रुः सुतो भविष्यति ॥६॥ आजेयः अजयस्य सुतो नन्दिवर्द्धनः । हे कुरुश्रेष्ठ शिशुनागादय एते दश नृपाः कलौ कलियुगे षष्ट्युत्तर-शतत्रयं समाः संवत्सरान् पृथ्वीं भोक्ष्यन्तीत्यन्वयः ॥ ७ ॥ हे राजन् शूद्रीगर्भोद्भवो बली अधिकबलयुक्तः अतएव क्षत्रकुल-विनाशकृत् महापद्मसङ्ख्यायाः सेनाया धनस्य वा पतिः नन्द इति ख्यातः । प्रसिद्धो महानन्दिसुतो भविष्यतीत्यन्वयः ॥ ८ ॥ ततः प्रभृति नृपाः शूद्रप्राया अधार्मिका भविष्यन्ति ॥ ९ ॥ यः महापद्म इति नामैकदेशग्रहणम् । महापद्मपतिः अनुल्लङ्घितशासनः एकमेव च्छत्रं राजचिह्नं तस्यैव यस्यां तथाभूतां पृथिवीं शासिष्यति पालयिष्यति । क्षत्रोत्सादने दृष्टान्तमाह—द्वितीयो भार्गवः परशुराम इव ॥ १० ॥ ये सुताः शतं समाः समाः संवत्सरान् ॥ ११ ॥ नन्दान् इति नन्दशब्दः तत्परस्तत्सुतपरश्च 'आत्मा वै पुत्रनामाऽसि' इति श्रुत्यनुरोधात् । अत एव नन्दानिति बहुवचनं नवेति विशेषणं च । तान् नन्दादीन् प्रपन्नान् विश्वस्तान् कश्चिद्विश्वस्तघातुको दुष्टः कौटिल्यवात्स्यायनादिपर्यायश्चाणक्याख्यो द्विज उद्धरिष्यति उन्मूलयिष्यति विनाशयिष्यति । ततश्च तेषां सपितृकाणां सुमाल्यादीनामभावे सोमवंशे समाप्ते कलौ जगतीं पृथ्वीं मौर्या मौर्यसंज्ञका भोक्ष्यन्ति ॥ १२ ॥

भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

सिक्षितिः। ततः प्रद्योतनेभ्यः प्रद्योतनसंज्ञेष्वन्तिमान्नन्दिवर्द्धनादित्यर्थः। शिशुनागः शिशुनागनामा, भाव्यः। केचित्तु पञ्चसु प्रद्योतनेषूपरतेषु तदनन्तरं कश्चित् शिशुनागो भाव्य इत्याहुः। तत्सुतः शिशुनागसुतः, काकवर्णः तुरवधारणार्थः। तस्य काकवर्णस्य, सुतः क्षेमधर्मा, क्षेमधर्मपुत्रः क्षेत्रज्ञः भाव्यः॥ ५॥ विधिसार इति। तस्य क्षेत्रज्ञस्य, सुतः विधिसारः, तस्य विधिसारस्य सुतः अजातशत्रुः, भविष्यति। तत्सुतोऽजातशत्रुसुतः, दर्भकः दर्भकनामा, भावी भविता। दर्भकस्य सुतः, अजयः स्मृतः॥ ६॥ नन्दिवर्द्धन इति। समा इति च। आजेयोऽजयस्य सुतः नन्दिवर्द्धनः, ततो नन्दिवर्द्धनात्, महानन्दिः सुतः, भविता। हे कुरुश्रेष्ठ, एते दश शिशुनागाः शिशुनागादित्वाच्छिशुनागसंज्ञाः नृपाः, क्वचित्तु शिशुनागाद्यश्चैते इत्यपि पाठः। षष्ट्युत्तरशतत्रयं समाः, कलौ पृथिवीं भोक्ष्यन्ति एव। विष्णुपुराणे तु 'शैशुनागा दश भूमिपालास्त्रीणि वर्षशतानि द्विषष्ट्यधिकानि भविष्यन्ति' इत्युक्तमस्ति। हे राजन्, शूद्रीगर्भोद्भवः महानन्दिसुतः शैशुनागान्तिममहानन्दिपुत्रः, बल्यतिबलवान् भविता॥ ७–८॥ महापद्मपतिरिति। स महानन्दिसुतः, नन्दो नन्दनामा सन्नपि, महापद्मपतिः महापद्मसंख्यायाः सेनाया धनस्य वा पतिः, ततो महापद्मपतिरिति नाम्नापि ख्यातः सन्, क्षत्रविनाशकृत् क्षत्रकुलविनाशकर्त्ता, कश्चिदवाच्यदोषः भविता। क्वचित्तु कश्चिदित्यत्र राजन्निति पाठः। अतस्तत आरभ्य नृपाः शूद्रप्रायाः बाहुल्यतस्तु शूद्रसमानाः, तुश्चार्थे। अधार्मिकाश्च भविष्यन्ति॥ ९॥ स इति। सः महापद्मः, महापद्म इति नामैकदेशग्रहणम् महापद्मपतिरित्यर्थः। अनुल्लङ्घितशासनः प्रजाभिरनुल्लङ्घनीयशिक्षः सन्, एकस्य तस्यैव छत्रं यस्यां तामेकच्छत्रां पृथिवीं, द्वितीयः भार्गवः परशुरामः इव, शासिष्यति॥ १०॥ तस्य महापद्मपतेः सुतान्निर्दिश्य तत्कृतराज्यभोगकालमाह। तस्येति। तस्य महापद्मपतेः, सुमाल्यप्रमुखाः अष्टौ सुताश्च, भविष्यन्ति। ये सुमाल्यप्रमुखाः राजानः, शतं समाः, इमां महीं भोक्ष्यन्ति। अत्र प्रत्येकपदानुपादानाच्छतवर्षमध्ये पित्रा सह नवानां तेषां राज्यभोगकाल इति प्रतिभाति। अत्र केचित् सहस्रवत्सरानित्याहुस्तन्मूलं मृग्यं, पराशरेणापि महापद्मस्तत्पुत्राश्च एकं वर्षशतमवनीपतयो भविष्यन्तीत्युक्तत्वात्॥११॥ नव नन्दानिति। प्रपन्नान् विश्वासेन तच्छरणं प्राप्तान्, नव नन्दान् महापद्मपतिरेव नन्दनामा 'आत्मा वै पुत्रः' इति श्रुत्यनुरोधेन तत्सुता अपि नन्दाः अत एव, नन्दानिति बहुवचनं नवेति विशेषणम्। कश्चित् द्विजः विश्वस्तघातुकः कौटिल्यवात्स्यायनाद्यभिधः ब्राह्मणः उद्धरिष्यति उन्मूलयिष्यतीति यावत्। तेषां नवानां, अभावे तेष्वतिक्रान्तेष्वित्यर्थः। एवं चन्द्रवंशे समाप्ते, कलौ जगतीं भुवं, मौर्याः भोक्ष्यन्ति वै॥ १२॥

## हिन्दी अनुवाद

इसके पश्चात् शिशुनाग नाम का राजा होगा। शिशुनाग का काकवर्ण, उसका क्षेमधर्मा और क्षेमधर्मा का पुत्र होगा क्षेत्रज्ञ॥ ५॥ क्षेत्रज्ञ का विधिसार, उसका अजातशत्रु, फिर दर्भक और दर्भक का पुत्र अजय होगा॥ ६॥ अजय से नन्दिवर्द्धन और उससे महानन्दि का जन्म होगा। शिशुनाग वंश में ये दस राजा होंगे। ये सब मिलकर कलियुग में तीन सौ साठ वर्ष पृथ्वी पर राज्य करेंगे प्रिय परीक्षित्! महानन्दि की शूद्रा पत्नी के गर्भ से नन्द नाम का पुत्र होगा। वह बड़ा बलवान् होगा। महानन्दि 'महापद्म' नामक निधि का अधिपति होगा। इसलिये लोग उसे 'महापद्म' भी कहेंगे। वह क्षत्रिय राजाओं के विनाश का कारण बनेगा। तभी से राजा लोग प्रायः शूद्र और अधार्मिक हो जायँगे॥ ७–९॥ महापद्म पृथ्वी का एकछत्र शासक होगा। उसके शासन का उल्लङ्घन कोई भी नहीं कर सकेगा। क्षत्रियों के विनाश में हेतु होने की दृष्टि से तो उसे दूसरा परशुराम ही समझना चाहिये॥ १०॥ उसके सुमाल्य आदि आठ पुत्र होंगे। वे सभी राजा होंगे और सौ वर्ष तक इस पृथ्वी का उपभोग करेंगे॥ ११॥ कौटिल्य, वात्स्यायन तथा चाणक्य के नाम से प्रसिद्ध एक ब्राह्मण विश्वविख्यात नन्द और उनके सुमाल्य आदि आठ पुत्रों का नाश कर डालेगा। उनका नाश हो जाने पर कलियुग में मौर्यवंशी नरपति पृथ्वी का राज्य करेंगे॥ १२॥

स एव चन्द्रगुप्तं वै द्विजो राज्येऽभिषेक्ष्यति। तत्सुतो वारिसारस्तु ततश्चाशोकवर्धनः॥ १३॥
सुयशो भविता तस्य सङ्गतः[1] सुयशःसुतः। शालिशूकस्ततस्तस्य सोमशर्मा भविष्यति॥ १४॥
शतधन्वा[2] ततस्तस्य भविता तद् बृहद्रथः। मौर्या ह्येते दश नृपाः सप्तत्रिंशच्छतोत्तरम्॥ १५॥
समा भोक्ष्यन्ति पृथिवीं कलौ कुरुकुलोद्वह। ( हत्वा बृहद्रथं मौर्यं तस्य सेनापतिः कलौ॥
पुष्पमित्रस्तु शुङ्गाह्वः स्वयं राज्यं करिष्यति)। अग्निमित्रस्ततस्तस्मात् सुज्येष्ठोऽथ[3] भविष्यति॥ १६॥

१—तश्चापि तत्सुतः। २—सुत। ३—ऽथ भविता ततः।

### कृष्णप्रिया व्याख्या

अन्वयः—सः एव द्विजः चन्द्रगुप्तं राज्ये अभिषेक्ष्यति तत्सुतः वारिसारः ततः च अशोकवर्धनः ॥ १३ ॥ तस्य सुयशाः भविता सुयशःसुतः सङ्गतः ततः शालिशूकः तस्य सोमशर्मा भविष्यति ॥ १४ ॥ ततः शतधन्वा तस्य तद्बृहद्रथः भविता एते दश मौर्याः नृपाः सप्तत्रिंशच्छतोत्तरं समाः कुरुकुलोद्वह कलौ पृथिवीं भोक्ष्यन्ति ॥ १५ ॥ ( कलौ तस्य सेनापतिः शुङ्गाह्वः पुष्पमित्रः बृहद्रथं मौर्यं हत्वा स्वयं राज्यं करिष्यति ) ततः अग्निमित्रः तस्मात् अथ सुज्येष्ठः भविष्यति ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कथं भोक्ष्यंति तदाह । स एवेति । चंद्रगुप्तं मौर्यंप्रथमम् ॥ १३–१४ ॥ तेषां पंचमो दशरथः पराशरादिभिरुक्तोऽत्राप्यनुसंधेयः तेन सह मौर्या दश । सप्तत्रिंशदुत्तरं शतं समाः ॥ १५–१६–१७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स एव कुटिलो द्विज एव । तत्पुत्रश्चन्द्रगुप्तपुत्रः । ततो वारिसारात् ॥ १३ ॥ तस्याऽशोकवर्द्धनस्य । ततः सुयशसः । तस्य शालिशूकस्य ॥ १४ ॥ ततस्तदनंतरम् । तस्य सोमशर्मणः । तत्तस्मात् शतधन्वनः । मौर्या मुरवंशजाः हीनजातयः कैवर्त्ताः 'मुरो दैत्यविशेषे च कैवर्ते चौषधे स्त्रियाम्' इति कोशात् । सप्तत्रिंशच्छतोत्तरम् १३७ राज्याब्दाः ॥ १५ ॥ हे कुरुकुलमूद्र्ध्ववमाधिक्यं प्रापयतीति तथा, भवता तु कुरुकुलकीर्त्तिराधिक्यं नीतोऽतस्त्वादृशामेव राज्ञां भवनमुचितमिति भावः । अत्र टीकाऽनुसारेण 'हत्वा बृहद्रथं मौर्यं तस्य सेनापतिः कलौ । पुष्पमित्रस्तु शुंगाह्वः स्वयं राज्यं करिष्यति' इति श्लोकोपि क्वचित्पुस्तकेषु दृश्यते । तस्मादग्निमित्रात् । अथ सुज्येष्ठात् ॥ १६ ॥

### अन्वितार्थप्रकाशिका

मौर्या भोक्ष्यन्तीति स्फुटयति—स एवेति । स एव द्विजः चन्द्रगुप्तसंज्ञं प्रथमं मौर्यं राज्येऽभिषेक्ष्यति तत्सुतः तस्य चन्द्रगुप्तस्य सुतः । स्फुटमन्यत् ॥ १३ ॥ सुयशा इति । सुयशःसुतः संगतसंज्ञकः ॥ १४ ॥ शतधन्वेति । हे कुरुकुलोद्वह ! यद्यपि चन्द्रगुप्तादयो नवैव तथापि पराशरादिभिश्चन्द्रगुप्तात्प्रथमो दशरथ उक्तस्तत्साहित्येन एते दशेत्युक्तं ज्ञेयम् । सप्तत्रिंशदुत्तरं शतं समाः भोक्ष्यन्ति ॥ १५ ॥ अग्नीति द्वयम् । अग्निमित्र इति बृहद्रथस्य सेनानीः पुष्पमित्रो नाम स्वामिनं हत्वा स्वयं राज्यं करिष्यति स च न तद्वंश्यः किन्तु शुङ्गानां प्रथमस्तेन सहाग्निर्मित्रादयो दश ॥ १६–१७ ॥

### श्रीमद्वीरराघवव्याख्या

के पुनस्ते मौर्याः ? कथं च भोक्ष्यन्ति ? तदाह स एवेति त्रिभिः, यस्तेषां नवानामुद्धर्त्ता द्विजः स एव मौर्यसंज्ञं प्रथमं चन्द्रगुप्तसंज्ञं नाम स्वसुतम् राज्येऽभिषेक्ष्यति तत्सुतः चन्द्रगुप्तसुतः ततः वारिसारानन्तरं तत्सुतोऽशोकवर्द्धनसुतः ॥ १३ ॥ तस्याऽशोकवर्द्धनस्य ॥ १४ ॥ तत्ततः मौर्या इति यद्यपि चन्द्रगुप्तादयो नवैव तथापि पराशरादिभिश्चन्द्रगुप्तादिषु दशरथ एक उक्तः तदभिप्रायेण एते दशेत्युक्तम् । यद्वा, चन्द्रगुप्तस्य यः पिता तेन सह दशेत इत्यर्थः । कुरुकुलोद्वहेति सम्बोधनम् ॥ १५ ॥ अग्निमित्र इति । मौर्यसञ्ज्ञकस्य बृहद्रथस्य सेनानीः पुष्पमित्रो नाम स्वामिनं हत्वा राज्यं करिष्यति अग्निमित्रादयो नव तद्वंश्या शुङ्गसञ्ज्ञाः वर्षशताधिकं द्वादशाधिकं वर्षशतं भोक्ष्यन्ति इति सम्बन्धः ॥ १६—१८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कथं भोक्ष्यन्तीत्यत आह—स एवेति । स एव नवनन्दाचार्यः ॥ १३–१४ ॥ मौर्यसंज्ञा अपि मौर्याः ॥ १५–१६ ॥ वंशव्यत्यासं कथयति—हत्वेति । पुष्पमित्र इत्यादि जातिप्रयुक्तं नाम शुङ्ग इत्यादि विशेषनाम ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

कथं भोक्ष्यन्ति ? इत्यत आह—स एवेति । चन्द्रगुप्तं मौर्य्येषु प्रथमं ततश्चेति चकारात् विष्णुपुराणोक्तो दशरथो ज्ञेयः ॥ १३–१४ ॥ तत्तदनन्तरं राजा सप्तत्रिंशदुत्तरशतं समाः ॥ १५ ॥ बृहद्रथस्य सेनापतिः स्वामिनं हत्वा राज्यं करिष्यति स पुष्पमित्रो नाम शुङ्गानां प्रथमः ततोऽग्निमित्रादयो नव इत्येवं शुङ्गा दश द्वादशाधिकं वर्षशतम् ॥ १६–१८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

कथं भोक्ष्यन्ति ? के च ते मौर्याः ? तदाह, स इति सार्द्धैस्त्रिभिः । चन्द्रगुप्तं मौर्य्यम् ॥ १३–१४ ॥ चन्द्रगुप्तादयो द्विजेन सहिता दश मौर्य्याः सप्तत्रिंशच्छतोत्तरं शप्तत्रिंशदुत्तरं शतम् ॥ १५–१६–१७ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

कथं भोक्ष्यन्तीत्यपेक्षायामाह—स एवेति त्रिभिः। स एव द्विजश्चन्द्रगुप्तसंज्ञं प्रथमं मौर्यं राज्येऽभिषेक्ष्यति। तत्सुतः तस्य चन्द्रगुप्तस्य सुतः ॥ १३ ॥ सुयशःसुतः सङ्गतसंज्ञकः ॥ १४ ॥ यद्यपि चन्द्रगुप्तादमी नवैव तथापि पराशरादिभिश्चन्द्रगुप्तात्प्रथमो दशरथ उक्तस्तत्साहित्येन एते दशेत्युक्तं ज्ञेयम्। सप्तत्रिंशच्छतोत्तरं सप्तत्रिंशदुत्तरशतं समाः भोक्ष्यन्ति। कुरुकुलोद्वहेति सम्बोधनम् ॥ १५ ॥ बृहद्रथस्य सेनानीः पुष्पमित्रो नाम स्वामिनं हत्वा स्वयं राज्यं करिष्यति। स च न तद्वंश्यः किन्तु शुङ्गानां प्रथमस्तेन सहाग्निमित्रादयो दश। दशवर्षशताधिकं द्वादशाधिकं वर्षशतम् त्रयाणामन्वयः ॥ १६–१७–१८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

के ते मौर्याः कथं च भुवं ते भोक्ष्यन्ति तत्राह स एवेति त्रिभिः ॥ स एवेति ॥ यस्तेषां नवनन्दानामुद्धर्त्ता कौटिल्याभिधः द्विजः, स एव चन्द्रगुप्तं मौर्यसंज्ञावतां मध्ये प्रथमं चन्द्रगुप्तं नाम स्वसुतं, राज्ये अभिषेक्ष्यति वै। तत्पुत्रश्चन्द्रगुप्तसुतः तु, वारिसारः, ततो वारिसारात् चापि, अशोकवर्द्धनः भविता ॥ १३ ॥ सुयशा इति। तस्याशोकवर्द्धनस्य, सुयशाः सुयशोनाम राजा, भविता। सुयशःसुतः सुयशसः पुत्रः, संगतः संगतनामा भविता। ततः संगतात्, शालिशूकः, तस्य शालिशूकस्य सुतः, सोमशर्मा भविष्यति ॥ १४ ॥ शतधन्वेति ॥ समा इति च ॥ ततः सोमशर्मणः, शतधन्वा भविता। तत्तस्य शतधन्वनः, सुतः तु बृहद्रथः, भविता हि। एते दश अत्र सुयशःसंगतयोर्मध्ये दशरथः पराशरादिभिरुक्तस्तेन सह दशसंख्याकाः मौर्याः नृपाः हे कुरुकुलोद्वह, सप्तत्रिंशच्छतोत्तरं समाः सप्तत्रिंशदुत्तरशतवर्षपर्यन्तमित्यर्थः। कलौ पृथिवीं, भोक्ष्यन्ति। तथा च पराशरः। 'तस्याप्यशोकवर्द्धनः ततः संगतः' इति। केचित्तु मौर्याणां दशसंख्यापूरणाय चन्द्रगुप्तस्तत्पिता चैवं दशेति वदन्ति। अन्ये तु अस्मात्पद्यादग्रे 'हत्वा बृहद्रथं मौर्यं तस्य सेनापतिः कलौ ॥ पुष्पमित्रस्तु शुङ्गाह्वः स्वयं राज्यं करिष्यति' इति पुष्पमित्रं मौर्यान्तिमं शुङ्गनामाद्यं च वदन्ति। एतदपि विष्णुपुराणानुसार्येव। 'ततः पुष्पमित्रः सेनापतिः स्वामिनं हत्वा राज्यं करिष्यत्यस्यात्मजोऽग्निमित्रः' इति तत्रोक्तेः। ततस्तदनन्तरं, अग्निमित्रः अयं पुष्पमित्रसुतो बोध्यः, पुष्पमित्रः बृहद्रथसेनापतिः, स्वस्वामिनं हत्वा राज्यकरो ज्ञेयः। विष्णुपुराणे तथोक्तेः। तस्मादग्निमित्रात्, सुज्येष्ठः भविष्यति ॥ १५–१६ ॥

### हिन्दी अनुवाद

वही ब्राह्मण पहले-पहले चन्द्रगुप्त मौर्यको राजा के पद पर अभिषिक्त करेगा। चन्द्रगुप्त का पुत्र होगा वारिसार और वारिसार का अशोकवर्धन ॥ १३ ॥ अशोकवर्धन का पुत्र होगा सुयश। सुयश का सङ्गत, सङ्गत का शालिशूक और शालिशूक का सोमशर्मा ॥ १४ ॥ सोमशर्मा का शतधन्वा और शतधन्वा का पुत्र बृहद्रथ होगा। कुरुवंशविभूषण परीक्षित्! मौर्यवंश के ये दस नरपति कलियुग में एक सौ सैंतीस वर्ष तक पृथ्वी का उपभोग करेंगे। बृहद्रथ का सेनापति होगा पुष्पमित्र शुङ्ग। वह अपने स्वामी को मारकर स्वयं राजा बन बैठेगा। पुष्पमित्र का अग्निमित्र और अग्निमित्र का सुज्येष्ठ होगा ॥ १५–१६ ॥

**वसुमित्रो भद्रकश्च पुलिन्दो भविता ततः। ततो घोषः सुतस्तस्माद् वज्रमित्रो भविष्यति ॥ १७ ॥**
**ततो भागवतस्तस्माद् देवभूतिरिति श्रुतः। शुङ्गा दशैते भोक्ष्यन्ति भूमिं वर्षशताधिकम् ॥ १८ ॥**
**ततः कण्वानियं भूमिर्यास्यत्यल्पगुणान् नृप। शुङ्गं हत्वा देवभूतिं कण्वोऽमात्यस्तु कामिनम् ॥ १९ ॥**
**स्वयं करिष्यते राज्यं वसुदेवो महामतिः।**
**तस्य पुत्रस्तु भूमित्रस्तस्य नारायणः सुतः। नारायणस्य भविता सुशर्मा नाम विश्रुतः ॥ २० ॥**
**काण्वायना इमे भूमिं चत्वारिंशच्च पञ्च च। शतानि त्रीणि भोक्ष्यन्ति वर्षाणां च कलौ युगे ॥ २१ ॥**
**हत्वा काण्वं सुशर्माणं तद्भृत्यो वृषलो बली। गां भोक्ष्यत्यन्ध्रजातीयः कञ्चित् कालमसत्तमः ॥ २२ ॥**
**कृष्णनामाथ तद्भ्राता भविता पृथिवीपतिः। श्रीशान्तकर्णस्तत्पुत्रः पौर्णमासस्तु तत्सुतः ॥ २३ ॥**
**लम्बोदरस्तु तत्पुत्रस्तस्माच्चिबिलको नृपः। मेघस्वातिश्चिबिलकादटमानस्तु तस्य च ॥ २४ ॥**

१. तिः कुरूद्वह। २. महीपतिः। ३. स्ततो ना०। ४. भविष्यवनीपतिः।

## कृष्णप्रिया व्याख्या

अन्वयः—वसुमित्रः भद्रकः ततः पुलिन्दः भविता ततः घोषः सुतः तस्मात् वज्रमित्रः भविष्यति ततः भागवतः तस्मात् देवभूतिः इति श्रुतिः ॥ १७ ॥ एते दश शुङ्गाः वर्षशताधिकं भूमिं भोक्ष्यति ततः नृप अल्पगुणान् कण्वान् इयं भूमिः यास्यति ॥१८॥ कामिनं देवभूतिं शुङ्गं हत्वा कण्वः महामतिः वसुदेवः अमात्यः स्वयं राज्यं करिष्यते ॥ १९ ॥ तस्य सुतः नारायणः काण्वायनाः इमे वर्षाणां त्रीणि शतानि पञ्चचत्वारिंशत् च कलौ युगे भूमिं भोक्ष्यन्ति ॥ २० ॥ सुशर्माणं कण्वं हत्वा तद्भृत्यः बली वृषलः अन्ध्रजातीयः असत्तमः कञ्चित् कालं गां भोक्ष्यति ॥ २१ ॥ अथ तद्भ्राता कृष्णनामा पृथिवीपतिः भविता तत्पुत्रः श्रीशान्तकर्णः तत्सुतः पौर्णमासः तत्पुत्रः लम्बोदरः तस्मात् चिबिलकात् मेघस्वातिः तस्य तु अटमानः ॥ २२–२४ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

बृहद्रथस्य सेनापतिः पुष्पमित्रो नाम स्वामिनं बृहद्रथं हत्वा राज्यं करिष्यति स च शुंगानां प्रथमः । ततोऽग्निमित्रादयो नवेत्येवं शुंगा दशवर्षशताधिकं द्वादशाधिकं वर्षशतम् ॥ १८ ॥ कथं कण्वान्यास्यति तदाह । शुंगमिति । परस्त्रीकामिनं देवभूतिनामानं शुंगं हत्वा तदमात्यो वसुदेवनामा कण्वो राज्यं करिष्यति ॥ १९ ॥ कण्वानां चतुर्थः सुशर्मा ज्ञेयः ॥ २० ॥ इमे वसुदेवादयः काण्वायना वर्षाणां त्रीणि शतानि पंचचत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यंति ॥ २१ ॥ कण्वानामंतिमं सुशर्माणं हत्वा बली नामा तद्भृत्यो गां भोक्ष्यति ॥ २२–२३–२४–२५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

वसुमित्रस्ततो भद्रकस्ततः पुलिंदः । ततः पुलिंदात् । तस्माद्घोषात् ॥ १७ ॥ ततः पुष्पमित्रात् । ततो वज्रमित्रात् । एते शुंगा दशवर्षशतानि द्वादशाधिकानि १०,१२ भोक्ष्यंतीत्थमपि केचिद्व्याख्यांति ॥ १८–१९ ॥ तस्य वसुदेवस्य । तस्य भूमित्रस्य । अथ ततो नारायणादनन्तरम् ॥ २० ॥ पञ्चचत्वारिंशदुत्तरशतत्रयं ३४५ राज्याब्दाः ॥ २१–२२ ॥ तद्भ्राता बलिभ्राता । तत्पुत्रः कृष्णपुत्रः । तत्सुतः श्रीशांतकर्णसुतः ॥ २३ ॥ तत्पुत्रः पौर्णमासपुत्रः । तस्माल्लंबोदरात् । तस्य मेघस्वातेः ॥ २४ ॥

## अन्वितार्थप्रकाशिका

शुङ्गा इति । दशवर्षशतं द्वादशाधिकं विष्णुपुराणानुसारेण ॥ १८ ॥ कथं कण्वान् यास्यति तदाह—शुङ्गमिति । कामिनं परस्त्रीलम्पटं देवभूतिनामानं शुङ्गं हत्वा तदमात्यो महामतिः राजकार्ये निपुणबुद्धिः वसुदेवकण्वो राज्यं स्वयं करिष्यति ॥ १९ ॥ तस्येति सार्द्धम् । कण्वानामन्तिमः सुशर्मा ज्ञेयः । इमे वसुदेवादयः काण्वायना वर्षाणां शतानि पञ्चचत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यन्ति । अत्रान्येऽपि राजानो ज्ञेयाः । वर्षाणामाधिक्यात् ॥ २० ॥ हत्वेति । तद्भृत्यः सुशर्मणो भृत्योऽन्ध्रजातीयो वृषलः शूद्रः बली बलवान् असत्तमश्च बलीकनामा अन्तिमं काण्वं सुशर्माणं हत्वा कंचित्कालं गां भूमिं भोक्ष्यति ॥ २१ ॥ कृष्णेति श्लोकौ स्पष्टौ ॥ २२–२४ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

कण्वानिति बहुवचनं तत्सन्तानस्यापि विवक्षानिबन्धनम् ॥ १९ ॥ तस्य कण्वस्य ॥ २०–२७ ॥

## श्रीमद्वीरराघवव्याख्या

ततः काण्वानिति । हे नृप ! अल्पगुणान् गुणहीनान् काण्वसंज्ञान् यास्यति तदधीना भविष्यति तैः पालितः भविष्यतीति यावत् के पुनस्ते काण्वाः ? कथं च तान्यास्यतीत्यत्राह—शुङ्गमिति सार्द्धद्वयेन । यः शुङ्गसंज्ञो देवभूतिस्तं कामिनं स्त्रीलालसं हत्वा तदमात्यः काण्वः वसुदेवो नाम स्वयमेव करिष्यति महामत इति पाठे सम्बोधनं तस्येति इमे वसुदेवादयः काण्वायनसंज्ञाः पञ्चचत्वारिंशदधिकशतत्रयं समा भोक्ष्यन्तीत्यर्थः । अत्र नारायणस्य सुतः सुशर्मनामा द्रष्टव्यः "हत्वा काण्वं सुशर्माणम्" इत्युत्तरग्रन्थानुरोधात् ॥ १९–२१ ॥ तद्भृत्यः सुशर्मणो भृत्यः बली बलीकनामा गां पृथिवीं कञ्चित्कालमिति अत्यल्पत्वात्तद्भोगकालस्यानादरेण सङ्ख्या न कृता ॥ २२ ॥ कृष्णनामेति तद्भ्राता बलीकभ्राता ॥ २३–२४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

शुङ्गाः शुङ्गवंशजाः ॥ १८ ॥ कण्वाः शुङ्गवंशजाः तान्नृपान्यास्यति अल्पगुणा ओषध्यादिगुणसम्पत्तिरहिताः कथं कण्वान्यास्यतीत्यत आह—शुङ्गमिति । शुङ्गं शुङ्गाख्यं राजानं देवभूतिं हत्वा नाम्ना वसुदेवः कण्वः तस्यः शुङ्गस्यामात्यः कामिनं

ग्राम्यकर्मासक्तम् ॥ १९ ॥ काण्वायनाः कण्ववंशभवाः कण्वानां चतुर्थः सुशर्मा इमे च वसुदेवादयः काण्वायनाः वर्षाणां त्रीणि शतानि पञ्चचत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यन्ति तस्य सुशर्मणो भृत्यः ॥ २०–२२ ॥ तस्य वृषलस्य भ्राता ॥ २३–२४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

कथं काण्वान् यास्यति ? तत्राह शुङ्गमिति । परस्त्रीकामिनं देवभूतिनामानं शुङ्गं हत्वा ॥ १९–२० ॥ वसुदेवादयः काण्वायनाः ॥ २१–२५ ॥ सुशर्माणमिति काण्वानामन्तिमः सुशर्मा शेषः वली वलिसंज्ञः २२–२५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

दशैते इति बृहद्रथनामकस्य मौर्यस्य सेनापतिः पुत्रः मित्रसंज्ञः बृहद्रथं हत्वा राज्यं करिष्यति स शुङ्गानां प्रथमः तद्वश्या अग्निमित्रादयो नव एवं शुङ्गा दशसङ्ख्याकाः वर्षशताधिकं कतिपयवर्षाधिकं शतम् ॥ १७ ॥ अल्पगुणान् वीर्यशौर्यादिगुणलेशयुक्तान् कण्वसंज्ञान् यास्यति कथं यास्यति ? तदाह—शुङ्गमिति । वसुदेवसंज्ञः कण्वः ॥ १९–२१ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

कथं कण्वान्यास्यति तदाह—शुङ्गमिति । कामिनं परस्त्रीलम्पटं देवभूतिनामानं शुङ्गं हत्वा तदमात्यो वसुदेवनामा कण्वो राज्यं स्वयं करिष्यति । महामतिः राजकार्ये निपुणबुद्धिः ॥ १९ ॥ कण्वानां चतुर्थः सुशर्मा ज्ञेयः । इमे वसुदेवादयः कण्वायना वर्षाणां त्रीणि शतानि पञ्चचत्वारिंशद्वर्षाणि च भूमिं भोक्ष्यन्ति ॥ २० ॥ तद्भृत्यः सुशर्मणो भृत्योऽन्ध्रजातीयो वृषलः शूद्रः वली बलवान् । बलीकनामा अन्तिमं काण्वं सुशर्माणं हत्वा कञ्चित्कालं गां भूमिं भोक्ष्यति ॥ २१ ॥ तद्भ्राता वलीकभ्राता ॥ २२–२४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

वसुमित्र इति ॥ अथ सुज्येष्ठात्, अथेति पूर्वश्लोकीयम् । वसुमित्रः भाविता । ततः वसुमित्रात्, भद्रकश्च । ततः भद्रकात् पुलिन्दः सुतः भविता । ततः पुलिन्दात्, घोषः सुतः भविष्यति । तस्मात् घोषात्, वज्रमित्रः सुतः भविष्यति ॥ १७ ॥ तत इति ॥ ततो वज्रमित्रात्, भागवतः हे कुरूद्वह, तस्माद्भागवतात्, देवभूमिः भविता । देवभूतिरिति श्रुत इत्यपि पाठः । एते दश शुङ्गाः शुङ्गसंज्ञा नृपाः, वर्षशताधिकं द्वादशाधिकं वर्षशतमित्यर्थः । भूमिं भोक्ष्यन्ति । 'दश शुङ्गा द्वादशोत्तरवर्षशतं पृथिवीं भोक्ष्यन्ति' इति विष्णुपुराणोक्तेर्द्वादशाधिकत्वं बोध्यम् ॥ १८ ॥ तत इति ॥ ततः हे नृप, इयं भूमिः, अल्पगुणान् गुणहीनान्, कण्वान् कण्वसंज्ञान्, यास्यति तदधीना भविष्यति तत्पालिता भविष्यतीति यावत् । के पुनस्ते कण्वाः । कथं च तान् यास्यतीत्यत्राह शुङ्गमिति सार्द्धद्वयेन । अमात्यः देवभूत्यमात्यः कण्वः कण्वावटङ्कः महामतिः, वसुदेवः वसुदेवनामा तु शुङ्गं शुगावटङ्कं कामिनं देवभूतिं हत्वा, शुङ्गेष्वन्तिमो यो देवभूतिः स्त्रीसङ्गलालसस्तं निपात्येत्यर्थः ॥ १९ ॥ स्वयमिति ॥ स्वयमेव राज्यं करिष्यते, इति सार्द्धस्यैकान्वयः । तस्य पुत्रस्तु भूमित्रः । तस्य भूमित्रस्य सुतः नारायणः । अनुक्तोऽप्यत्र नारायणसुतः सुशर्मनामा ज्ञेयः, अन्यथा सुशर्माणम्' कण्वं हत्वा कण्वं इत्यस्यासंगतिः स्यात् । विष्णुपुराणे 'नारायणस्य सुशर्मा एते काण्वायनाश्चत्वारः पञ्चचत्वारिंशद्वर्षाणि भूपतयो भविष्यन्ति इत्युक्तेश्च ॥ २० ॥ काण्वायना इति । काण्वायनाः काण्वायनसंज्ञाः, इमे चत्वारः, कलौ युगे, वर्षाणां त्रीणि शतानि चत्वारिंशाच्च पञ्च च त्रिशताधिकपञ्चचत्वारिंशद्वर्षाणीत्यर्थः । भूमिं भोक्ष्यन्ति । चकारोऽवधारणार्थः ॥ २१ ॥ हत्वेति ॥ वली बलीकनामा, असत्तमः आन्ध्रजातीयः वृषलः शूद्रः तद्भृत्यः सुशर्मणो भृत्यः, काण्वं काण्वेषु चतुर्थे सुशर्माणं हत्वा, कंचित्कालं गां भोक्ष्यति । कंचिकालमित्यनेन तद्राज्यभोगकालस्यात्यल्पत्वादनादरेण तद्भोगकालस्य संख्या न कृता ॥ २२ ॥ कृष्णेति । अथाल्पकालं तत्कृतराज्यभोगान्तरं, तद्भ्राता वलीकभ्राता, कृष्णनामा पृथिवीपतिः भविता । तत्पुत्रः श्रीशान्तकर्णः, तत्सुतस्तस्य पुत्रः तु, पौर्णमासः ॥ २३ ॥ लम्बोदर इति । तत्पुत्रः पौर्णमासपुत्रः तु, लम्बोदरः, तस्माल्लम्बोदराच्च, चकारस्त्वर्थे । विकलः नृपः हि । केचिच्चिविलक इति पठन्ति । विकलात् मेघस्वातिः, तस्य मेघस्वातेः सुतस्तु, अटमानः चकारोऽवधारणार्थः ॥ २४ ॥

### हिन्दी अनुवाद

सुज्येष्ठका वसुमित्र, वसुमित्रका भद्रक, भद्रक का पुलिन्द, पुलिन्द का घोष और घोष का पुत्र होगा वज्रमित्र ॥ १७ ॥ वज्रमित्र का भागवत और भागवत का पुत्र होगा देवभूति शुङ्गवंश के दस नरपति एक सौ बारह वर्ष तक पृथ्वी का पालन करेंगे ॥ १८ ॥ परीक्षित् ! शुङ्गवंशी नरपतियों का राज्यकाल समाप्त होने पर यह पृथ्वी कण्ववंशी नरपतियों के हाथ में चली जायगी । कण्ववंशी नरपति अपने पूर्ववर्ती राजाओं की अपेक्षा कम गुण वाले होंगे । शुङ्गवंश का अन्तिम नरपति देवभूति बड़ा

ही लंपट होगा। उसे उसका मन्त्री कण्ववंशी वसुदेव मार डालेगा और अपने बुद्धिवल से स्वयं राज्य करेगा। वसुदेव का पुत्र होगा भूमित्र, भूमित्र का नारायण और नारायण का सुशर्मा। सुशर्मा बड़ा यशस्वी होगा॥ १९–२०॥ कण्ववंश के ये चार नरपति काण्वायन कहलायेंगे और कलियुग में तीन सौ पैंतालीस वर्ष तक पृथ्वी का उपभोग करेंगे॥ २१॥ प्रिय परीक्षित्! कण्ववंशी सुशर्मा का एक शूद्र सेवक होगा—बली। वह अन्ध्रजाति का एवं बड़ा दुष्ट होगा। वह सुशर्मा को मारकर कुछ समय तक स्वयं पृथ्वी का राज्य करेगा॥ २२॥ इसके बाद उसका भाई कृष्ण राजा होगा। कृष्ण का पुत्र श्री शान्तकर्ण और उसका पौर्णमास होगा॥ २३॥ पौर्णमास का लम्बोदर और लम्बोदर का पुत्र चिबिलक होगा। चिबिलक का मेघस्वाति, मेघस्वाति का अटमान॥ २४॥

अनिष्टकर्मा हालेयस्तलकस्तस्य चात्मजः। पुरीषभीरुस्तत्पुत्रस्ततो राजा सुनन्दनः॥ २५॥
चकोरो बहवो यत्र शिवस्वातिररिन्दमः। तस्यापि गोमतीपुत्रः पुरीमान् भविता ततः॥ २६॥
मेदःशिराः शिवस्कन्दो यज्ञश्रीस्तत्सुतस्ततः। विजयस्तत्सुतो भाव्यश्चन्द्रविज्ञः सलोमधिः॥ २७॥
एते त्रिंशन्नृपतयश्चत्वार्यब्दशतानि च। षट्पञ्चाशच्च पृथिवीं भोक्ष्यन्ति कुरुनन्दन॥ २८॥
सप्ताभीरा आवभृत्या दश गर्दभिनो नृपाः। कङ्काः षोडश भूपाला भविष्यन्त्यतिलोलुपाः॥ २९॥
ततोऽष्टौ यवना भाव्याश्चतुर्दश तुरुष्ककाः। भूयो दश गुरुण्डाश्च मौना एकादशैव तु॥ ३०॥
एते भोक्ष्यन्ति पृथिवीं दशवर्षशतानि च। नवाधिकां च नवतिं मौना एकादश क्षितिम्॥ ३१॥
भोक्ष्यन्त्यब्दशतान्यङ्ग त्रीणि तैः संस्थिते ततः। किलिकिलायां नृपतयो भूतनन्दोऽथ वङ्गिरिः॥ ३२॥

## कृष्णप्रिया व्याख्या

अन्वयः—अनिष्टकर्मा हालेयः तस्य आत्मजः तलकः तत्पुत्रः पुरीषभीरुः ततः सुनन्दनः राजा अरिन्दमः चकोरः यत्र शिवस्वातिः इति बहवः तस्य गोमतीपुत्रः पुरीमान् भविता ततः मेदःशिराः ततः शिवस्कन्दः तत्सुतः यज्ञश्रीः तत्सुतः विजयः भाव्यः (तस्य) सलोमधिः एते त्रिंशत् नृपतयः कुरुनन्दन चत्वार्यब्दशतानि षट्पञ्चाशत् च पृथिवीं भोक्ष्यन्ति आवभृत्याः आभीराः सप्त गर्दभिनः नृपाः दश कङ्काः षोडश अतिलोलुपाः भूपालाः भविष्यन्ति। ततः अष्टौ यवनाः भाव्याः चतुर्दश तुरुष्ककाः भूयः दश गुरुण्डा एकादश तु मौनाः एव एते दशवर्षशतानि नवाधिकां नवतिं भोक्ष्यन्ति एकादश मौनाः अङ्ग त्रीणि अब्दशतानि क्षितिं भोक्ष्यन्ति ततः तैः संस्थिते किलकिलायां भूतनन्दः अथ वङ्गिरिःशिशु नन्दिः तद्भ्राता यशोनन्दिः प्रवीरकः इति एते नृपतयः वर्षशतं षट् अधिकानि भविष्यन्ति॥ २५–३२॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

यत्र येषु बहुसंगेष्वष्टसु चरमः शिवस्वातिनामा भविता॥२६–२७–२८॥ आवभृत्या अवभृतिर्नगरी तद्राजानः॥२९–३० एते आभीरादयो मौनव्यतिरिक्ताः पञ्चषष्टिनृपा एकोनशताधिकं वर्षसहस्रं पृथिवीं भोक्ष्यंति। ततः पूर्वोक्ता एवैकादश मौनास्त्रीण्यब्द-शतानि भोक्ष्यंतीति॥ ३१॥ तैः संस्थिते तेषु मृतेषु किलकिलायां पुर्यां नृपतयो भविष्यंतीत्युत्तरेणान्वयः॥ ३२॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्य चेति चकारात्तस्याटमानस्यानिष्टकर्मा, तस्य च हालेयः, तस्य हालेयस्य। तत्पुत्रस्तलकपुत्रः। ततः पुरीषभीरोः॥२५॥ बहवो बहुसंज्ञाः। अष्टसु चरमोऽष्टम एव। तस्य शिवस्वातेः। ततो गोमतिनः॥ २६॥ ततः पुरीमतो मेदशिराः, ततः शिवस्कंध-सुतः ततो यज्ञश्रियः। तत्सुतो विजयसुतः। भाव्यो भविष्यति। ततश्चंद्रविज्ञात्स प्रसिद्धो लोमधिः, सकारसहितो वा नाम॥ २७॥ हे कुरुनंदनेति—त्वं तु भगवद्भक्तत्वात्कुरुकुलमेव नन्दयसि गणितनृपास्तु स्वात्मनंदका अपि नेति भावः। षट्पंचाशदुत्तरचतुश्शतं ४५६ राज्याब्दाः॥ २८॥ गर्दभिनो गर्दभिसंज्ञकाः। कंकाः कंकसंज्ञाः। लोलुपा लंपटाः॥ २९॥ ततः कंकेभ्यः पश्चात्। यवना म्लेच्छाः। पुष्कसा निषादाच्छूद्रयुद्भूताः गुरुण्डा गुरुंडसंज्ञाः, गुरुगुरुरित्येवं डुवंति भाषंत इति गुरुंडाः 'डु—भाषणे' तुदादिर्न्यो-

१—सिद्धस्वा०। २—वीर्यः।

करणांतरज्ञेय; तत औणादिका डवुप्रत्ययः औणादिको अपरिमिताः प्रयोगमनुसृत्य प्रयोक्तव्याः' इत्युक्तेः 'धातूनामप्यनंतत्वान्नानार्थत्वाच्च सर्वथा' इत्यनुभूत्युक्तडूरप्यूदंतो धातुः कल्पनीयः ॥ ३० ॥ किञ्च—दुर्योधनजन्मन्येव कलेरारंभः, तद्वर्षोत्तरं कृष्णाविर्भावः, ततो नवतिवर्षोत्तरं परीक्षिज्जन्म, ततो नंदाभिषेकावधि पंचदशशतं दश च, तन्मिलित्वैकाधिकषोडशशतम् । ततो नवनंदानां शतम्, मौर्याणां सप्तत्रिंश- दुत्तरशतं च, शुंगानां द्वादशाधिकं दशवर्षशतम्, काण्वायनानां त्रीणि शतानि पञ्चचत्वारिंशच्च, वल्यादित्रिंशद्राज्ञां चत्वारि शतानि,सप्ताभीरादीनां षट्पञ्चाशत्त्रीणि शतानि च ततो यवनादिगुरुंडांतानां सहस्रं नवनवत्यधिकं च, एवं पञ्चादशाधिकपञ्चसहस्र ५०५० वर्षाणि जातानि। तत्र तट्टीकाप्रणयनकालिकविक्रमार्कशरनिगमनंदेन्दु १९४५ः मिताब्दपर्यंतं कलेश्चतुःसहस्रनवशतैकोननवतिसंख्यानि वर्षाण्यतीतानीति टीकांतरानुरोधादनुसंधेयम् ॥ ३१ ॥ तत एतदुक्तराज्योत्तरम् । तैरिति सप्तम्यर्थे तृतीया, तेष्वित्यर्थः । संस्थिते इत्येकत्वमपि बहुत्वे, संस्थितेष्वित्यर्थः ॥ ३२ ॥

## अन्वितार्थप्रकाशिका

अनिष्टेति । अनिष्टकर्मा अटमानस्य सुतः तस्य सुतो हालेयस्तस्य हालेयस्य तस्य चात्मजस्तलकः स्फुटमन्यत् चकोर इति । हे अरिन्दम ! सुनन्दस्य चकोराख्यः सुतस्तस्य सुतः अनवमः यत्र यस्य शिवस्वातिः सुतः । यद्वा । यत्र येषु बहुसंज्ञेषु अष्टसु नवमः शिवस्वातिरिति । स्वामिपादादयः । तस्य अरिन्दमस्तस्य गोमत्याख्यः पुत्रः ततः पुरीमान् भविता ॥ २५ ॥ मेदेति । पुरीमतः सुतो मेदशिराः तस्य सुतः शिवस्कन्दः ततस्तस्मात् यज्ञश्रीः सुतो जातः । तस्य सुतो विजयो भाव्यः । तस्य चन्द्रविज्ञः तस्य सलोमधिः ॥ २६ ॥ एते इति । एते बलीकप्रभृतयः पञ्चविंशतिनृपतयः त्रिंशच्च चत्वार्यब्दशतानि च षट्पंचाशच्च । एवं षडशीत्युत्तरं चतुःशतं वर्षाणि पृथिवीं भोक्ष्यन्तीत्यर्थः ॥ २७ ॥ सप्तेति । अवभृतिर्नगरी तत्पतयः आवभृत्यसंज्ञकाः आभीरजातीयाः सप्तगर्दभिसंज्ञका नृपाः दशकङ्कसंज्ञकाः षोडश ते च सर्व एव लोलुपा विषयासक्ताः ॥ २८ ॥ तत इति । स्फुटम् ॥ २९ ॥ एत इति त्रिकम् । एते मौनव्यतिरिक्ताः आभीरादयः पञ्चषष्टिनृपाः दशसङ्ख्यानि वर्षशतानि नवाधिकां नवतिं च एकोनशताधिकं वर्षसहस्रमित्यर्थः । पृथिवीं भोक्ष्यन्ति । ततश्च पूर्वोक्ता एवैकादश मौनास्त्रीण्यब्दशतानि क्षितिं भोक्ष्यन्ति । ततश्च तैः संस्थिते तेषु मौनेषु मृतेषु सत्सु किलकिलायां पुर्यां भूतनन्दोऽथ वङ्गिरिः इत्यादय इत्येते वर्षशतम् । अधिकानि षड्वर्षाणि नृपतयो भविष्यन्ति ॥ ३०–३२ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

एत इति एतद्व्यतिरिक्तनृपतिपरः अनन्तमेव मौनानां पृथक् उक्तत्वात् इति ॥ २८–४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धव्याख्याने श्रीसुदर्शनसूरिकृतशुकपक्षीये प्रथमोऽध्यायः ॥ १ ॥

## श्रीमद्वीरराघवव्याख्या

अनिष्टकर्मेति । तस्याटमानस्यानिष्टकर्मा सुत इति पूर्वेण सम्बन्धः हालेयोऽनिष्टकर्मणः सुत इति ॥ २५ ॥ चकोर इति यत्र येषु बलीकसंज्ञेषु शिवस्वातिर्नाम चरणो भविता इत्यर्थः । अरिन्दमेति सम्बोधनं सविसर्गपाठे शिवस्वातेर्विशेषणम् ॥ २६–२७ ॥ एत इति । एते बलीकनामानः पञ्चविंशतिनृपतयः पृथिवीं भोक्ष्यन्तीति सम्बन्धः । वर्षसङ्ख्यामाह—त्रिंशच्चत्वार्यब्दशतानि षट्पञ्चाशच्चेति षडशीत्युत्तरचतुश्शतं वर्षाणीत्यर्थः ॥ २८ ॥ सप्तेति । ततः सप्ताभीरसञ्ज्ञा भाव्या इति उत्तरेणान्वयः । तान् विशिनष्टि—आवभृत्या अवभृतिर्नगरी तस्या राजानः आवभृत्यसञ्ज्ञा वा सप्त भाव्याः तान् विशिनष्टि, आभीराः आभीरजातीयाः ततो दशगर्दभिनः तत्सञ्ज्ञा एवमग्रेऽपि योज्यं लोलुपाः कामिनः ॥ २९–३० ॥ एते भोक्ष्यन्तीति । मौना एकादश क्षितिम् इति मौनानां कालावधेः पृथगेव वक्ष्यमाणत्वादेत इत्यनेन तेभ्योऽन्ये परामृश्यन्ते दशवर्षशतानि नवाधिकाञ्च नवतिम् इत्येकोनैकादशशतवर्षाणि इत्यर्थः ॥ ३१ ॥ अङ्ग हे राजन् ! संस्थिते इति भावेक्तः तैर्मौनैः संस्थायां तत्कर्तृके मरणे तेषु मृतेषु तेष्विति यावत् किलकिलाख्या पुरी तस्यां भूतनन्द इत्यादयो नृपतयः भूतनन्दाख्या षडुत्तरशतं वर्षाणि भोक्ष्यमाणा भविष्यन्ति ॥ ३२–३३ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हालेयः हलान्मेयः ॥ २५–३० ॥ एते आभीरादयो मौनव्यतिरिक्ताः पञ्चषष्टिनृपा एकोनशताधिकं वर्षसहस्रं पृथिवीं भोक्ष्यन्ति ततः पूर्वोक्ता एव एकादश मौनाः त्रीण्यब्दशतानि क्षितिं भोक्ष्यन्ति मौनाः मौनकुले जाताः एकादश त्राणि अब्दशतानि ॥ ३१ ॥ कुले मौनकुले संस्थिते नष्टे किलकिलायां नगर्यां तस्य शिशुनन्देर्भ्राता भूतवंशोपवङ्गैर्युक्ताः षट् षट् वर्षाण्यधिकानि ॥ ३२–३३ ॥

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

अनिष्टकर्मेति हालेयस्य विशेषणम् ॥ २५ ॥ यत्र येषु अष्टसु अनुक्तेषु नवमः शिवस्वातिरित्यर्थः । इति द्वाविंशतिः गौमती-पुत्रपुरीमन्तौ द्वौ ॥ २६ ॥ अन्ये वाल्यादिसलोमधिपर्य्यन्ताः पृथक् पृथग्गण्या इति त्रिंशत् ॥ २७–४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे प्रथमोऽध्यायः ॥ १ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

यत्र येषु वहुसंज्ञेषु अष्टसु नवमः शिवस्वातिनामा भवति ॥ २६–२८ ॥ आवभृत्या अवभृतिनगरी तत्र भवाः ॥२९–३०॥ एते मौनव्यतिरिक्ताः आभीरादयः पञ्चषष्टिनृपाः मौनास्त्वेकादश त्रीण्यब्दशतानि ॥ ३१ ॥ तैर्मौनैः संस्थिते मृते सति किलकिलायां पुर्य्याम् ॥ ३२ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

यत्र येषु चकोरः अनवमः कैश्चिद्गुणैः श्रेष्ठ इत्यर्थः ॥ २६–२७ ॥ एते बलिप्रभृतयो नृपतयः पृथिवीं त्रिंशच्चत्वार्यब्द-शतानि च षट् पञ्चाशच्च भोक्ष्यन्ति ॥२८॥ आवभृतिर्नगरी तद्राजानः आवभृत्याः ॥ २९–३० ॥ एते मौनव्यतिरिक्ताः आभीरादयः पञ्चषष्टिनृपाः शतवर्षशतानि नवाधिकां नवतिं च भोक्ष्यन्ति एकादश मौनास्तु ॥ ३१ ॥ त्रीणि अब्दशतानि भोक्ष्यन्ति तैर्मौनैः किलकिलायां पुर्यां नृपतयो भविष्यन्तीत्युत्तरेणान्वयः ॥ ३२ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अनिष्टकर्मा अटमानस्य सुतः । तस्य सुतो हालेयः । चात्मजस्तलकः सुनन्दनस्य चकोराख्यः सुतः तस्य सुतः अनवमः । तस्य शिवस्वातिः सुतः तस्य अरिन्दमस्तस्य गोमत्याख्यः पुत्रः ॥ २५ ॥ पुरीमतः सुतो मेदशिराः । तस्य सुतः शिवस्कन्दस्तस्मात् यज्ञश्रीः सुतो जातः तस्य सुतो विजयः । तस्य चन्द्रविज्ञः तस्य सलोमधिः ॥ २६ ॥ एते वलीकप्रभृतयः पञ्चविंशतिनृपतयः त्रिंशच्च चत्वार्यब्दशतानि च षट्पञ्चाशच्च एवं षडशीत्युत्तरचतुश्शतवर्षाणि पृथिवीं भोक्ष्यन्तीत्यन्वयः ॥ २७ ॥ आवभृत्यसंज्ञकाः आभीरजातीयाः सप्त । गर्दभिसंज्ञका दश । कङ्कसंज्ञकाः षोडश । ते च सर्व एव लोलुपा विषयासक्ताः ॥ २८–२९ ॥ एते मौनव्यतिरिक्ताः आभीरादयः पञ्चषष्टिनृपा एकोनशताधिकं वर्षसहस्रं पृथिवीं भोक्ष्यन्ति । ततश्च पूर्वोक्ता मौनाः त्रीण्यब्दशतानि क्षितिं भोक्ष्यन्ति । ततश्च तैः संस्थिते तेषु मौनेषु मृतेषु सत्सु किलकिलायां पुर्यां भूतनन्दादयो नृपतयो भविष्यन्तीत्युत्तरेणान्वयः ॥३०॥ इत्येते च षडधिकानि वर्षशतं महीं भोक्ष्यन्तीति शेषः ॥ ३१ ॥ तेषां भूतनन्दादीनां यथायथं वाह्लिकास्तन्नामानस्त्रयोदश सुता भविष्यन्ति । अथ च पुष्पमित्रो नामान्यो राजन्यो भविष्यति । अस्य च दुर्मित्रो नाम पुत्रो भविष्यति ॥ ३२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अनिष्टकर्मेति ॥ अनिष्टकर्मा अटमानसुत इति शेषः । हालेयः अनिष्टकर्मणो हालेयः सुत इत्यर्थः । तस्य हालेयस्य, आत्मजश्च तलकः, तत्पुत्रस्तलकस्य पुत्रः, पुरीषभीरुः, ततः पुरीषभीरोः सुनन्दनः राजा ॥ २५ ॥ चकोर इति ॥ चकोरः सुनन्दनस्य सुत इति शेषः । यत्र नवमः चकोरस्य नवमनामा पुत्र इत्यर्थः । हे अरिंदम, शिवस्वातिः नवमसुत इति शेषः । तस्यापि शिवस्वातेरपि, गोमती गोमतीनामा पुत्रः भविता । ततो गोमतीनृपात्, पुरीमान् भविता ॥ २६ ॥ मेदशिरा इति ॥ मेदशिराः पुरीमतः सुत इति शेषः । शिवस्कन्दः मेदशिरसः सुत इति शेषः । तत्सुतः शिवस्कन्दसुतः यज्ञश्रीः, ततः यज्ञश्रियः, विजयः, तत्सुतो विजयसुतः भाव्यः भाव्यनामा, चन्द्रविज्ञः, भाव्यस्य चन्द्रविज्ञनामा सुत इत्यर्थः । ततः सः प्रसिद्धः, लोमधिः चन्द्रविज्ञस्य लोमधिः पुत्र इत्यर्थः ॥ २७ ॥ एत इति ॥ एते नृपतयः, वल्याद्या लोमध्यन्ताः पञ्चविंशन्नृपतय इत्यर्थः । चत्वारि अब्दशतानि षट्पञ्चाशच्च त्रिंशत् च षडशीत्युत्तरचतुःशतवर्षाणीत्यर्थः । हे कुरुनन्दन, पृथिवीं भोक्ष्यन्ति ॥ २८ ॥ सप्तेति ॥ अवभृतिर्नगरी तद्राजाना आवभृत्याः, आभीरा आभीरजातीयाः सप्त नृपाः भाव्याः । ततः गर्दभिनः गर्दभसंज्ञाभाजः, दश नृपाः, कङ्काः कङ्कजातीयाः षोडश भूपालाः ये ते च, अतिलोलुपाः भविष्यन्ति । विष्णुपुराणे कङ्का इत्यत्र शाका इत्युक्तमस्ति ॥ २९ ॥ तत इति ॥ ततः अष्टौ यवना भाव्याः । ततः चतुर्दश पुष्कसाश्च भाव्याः । केचित्तु पुष्कसस्थाने तुरुष्कका इति पठन्ति । भूय इति तत इत्यर्थकं बोध्यम् । गरुण्डाश्च दश भाव्याः, एकादश तु मौनाः एव भाव्याः ॥ ३० ॥ एत इति ॥ एते मौनरहिता एवैते पञ्चषष्टिनृपाः, दशवर्षशतानि च नवाधिकां नवतिं च एकोनैकादशशतवर्षाणि इत्यर्थः । पृथिवीं भोक्ष्यन्ति । मौना एकादश क्षितिमित्यस्योत्तरेणान्वयः ॥ ३१ ॥ भोक्ष्यन्तीति ॥ शिष्विति च ॥ एकादश मौनास्तु, हे अङ्ग राजन्, त्रीणि अब्दशतानि शतत्रयवर्षाणीत्यर्थः । क्षितिं, भोक्ष्यन्ति । तैः संस्थिते भावेक्तः । तेषु मृतेष्वित्यर्थः । ततः किलकिलायां किलकिलाख्यपुर्यां, भूतनन्दः, अथ वङ्गिरिः तद्भ्राता शिशुनन्दिः,

यशोनन्दिः, प्रवीरकश्च, इत्येते पञ्च नृपाः, वरषशतं वर्षाणां शतं, रेफस्य सस्वरता छन्दोऽनुरोधाय। अधिकानि च पट्। षडधिकवर्षशतपर्यन्तमित्यर्थः। नृपतयः भविष्यन्ति। केचित्तु तद्भ्राता इति नृपाभिधां कृत्वा पट् राजान इति वदन्ति। इति द्वयोरेकसंवन्धः॥ ३२॥

## हिन्दी अनुवाद

अटमान का अनिष्टकर्मा, अनिष्टकर्मा का हालेय, हालेय का तलक, तलक का पुरीषभीरु और पुरीषभीरु का पुत्र होगा राजा सुनन्दन॥ २५॥ परीक्षित्! सुनन्दन का पुत्र होगा चकोर; चकोर के आठ पुत्र होंगे, जो सभी 'वहु' कहलायेंगे। इनमें सबसे छोटे का नाम होगा शिवस्वाति। वह बड़ा वीर होगा और शत्रुओं का दमन करेगा। शिवस्वाति का गोमतीपुत्र और उसका पुत्र होगा पुरीमान्॥२६॥ पुरीमान् का मेदःशिरा, मेदःशिरा का शिवस्कन्द, शिवस्कन्द का यज्ञश्री, यज्ञश्री का विजय और विजय के दो पुत्र होंगे—चन्द्रविज्ञ और लोमधि॥ २७॥ परीक्षित्! ये तीस राजा चार सौ छप्पन वर्षतक पृथ्वी का राज्य भोगेंगे॥ २८॥ परीक्षित्! इसके पश्चात् अवभृति-नगरी के सात आभीर, दस गर्दभी और सोलह कङ्क पृथ्वी का राज्य करेंगे। ये सब-के-सब वड़े लोभी होंगे॥ २९॥ इनके बाद आठ यवन और चौदह तुर्क राज्य करेंगे। इसके वाद दस गुरुण्ड और ग्यारह मौन नरपति होंगे॥ ३०॥ मौनों के अतिरिक्त ये सब एक हजार निंन्यानवे वर्षतक पृथ्वी का उपभोग करेंगे। तथा ग्यारह मौन नरपति तीन सौ वर्षतक पृथ्वी का शासन करेंगे। जब उनका राज्यकाल समाप्त हो जायगा, तब किलकिला नाम की नगरी में भूतनन्द नाम का राजा होगा। भूतनन्द का वङ्गिरि, वङ्गिरि का भाई शिशुनन्दि तथा यशोनन्दि और प्रवीरक–ये एक सौ छः वर्षतक राज्य करेंगे॥ ३१–३३॥

> शिशुनन्दिश्च[1] तद्भ्राता यशोनन्दिः प्रवीरकः[2]। इत्येते वै वर्षशतं भविष्यन्त्यधिकानि षट्॥ ३३॥
> तेषां त्रयोदश सुता भवितारश्च बाह्लिकाः। पुष्पमित्रोऽथ[3] राजन्यो दुर्मित्रोऽस्य तथैव च॥ ३४॥
> एककाला इमे भूपाः सप्तान्ध्राः सप्त कोसलाः। विदूरपतयो भाव्या निषधास्तत[4] एव हि॥ ३५॥
> मागधानां तु भविता विश्वस्फूर्जिः[5] पुरञ्जयः। करिष्यत्यपरो वर्णान् पुलिन्दयदुमद्रकान्॥ ३६॥
> प्रजाश्चाब्रह्मभूयिष्ठाः स्थापयिष्यति दुर्मतिः।
> वीर्यवान् क्षत्रमुत्साद्य पद्मवत्यां स वै पुरि। अनुगङ्गामाप्रयागं गुप्तां भोक्ष्यति मेदिनीम्॥ ३७॥
> सौराष्ट्रावन्त्याभीराश्च शूरा अर्बुदमालवाः। व्रात्या द्विजा भविष्यन्ति शूद्रप्राया जनाधिपाः॥ ३८॥
> सिन्धोस्तटं चन्द्रभागां कौन्तीं काश्मीरमण्डलम्। भोक्ष्यन्ति शूद्रा व्रात्याद्या म्लेच्छाश्चाब्रह्मवर्चसः॥ ३९॥
> तुल्यकाला इमे राजन् म्लेच्छप्रायाश्च भूभृतः। एतेऽधर्मानृतपराः फल्गुदास्तीव्रमन्यवः॥ ४०॥

## कृष्णप्रिया व्याख्या

अन्वयः—तद्भ्राता शिशुनन्दिः यशोनन्दिः प्रवीरकः इति एते वै षट् अधिकानि वर्षशतं भविष्यन्ति॥ ३३॥ तेषां त्रयोदश सुताः बाह्लिकाः भवितारः अथ पुष्पमित्रः तथा एव दुर्मित्रः राजन्यः॥ ३४॥ इमे सप्तान्ध्राः सप्त कोसलाः एककालाः विदूरपतयः भाव्याः ततः एव हि निषधाः॥ ३५॥ मागधानां विश्वस्फूर्जिः पुरञ्जयः भविता अपरः पुलिन्दयदुमद्रकान् वर्णान् करिष्यति॥ ३६॥ दुर्मतिः वीर्यवान् सः पद्मवत्यां पुरि क्षत्रम् उत्साद्य अब्रह्मभूयिष्ठाः प्रजाः स्थापयिष्यति आप्रयागम् अनुगङ्गां गुप्तां मेदिनीं भोक्ष्यति॥ ३७॥ सौराष्ट्रावन्त्याभीराः शूराः अर्बुदमालवाः द्विजाः व्रात्याः भविष्यन्ति जनाधिपाः शूद्रप्रायाः॥ ३८॥ शूद्राः व्रात्याद्याः म्लेच्छाः अब्रह्मवर्चसः सिन्धोः तटं चन्द्रभागां कौन्तीं काश्मीरमण्डलं भोक्ष्यन्ति॥ ३९॥ राजन् तुल्यकालाः इमे म्लेच्छप्रायाः भूभृतः एते अधर्मानृतपराः फल्गुदाः तीव्रमन्यवः (भविष्यन्ति)॥ ४०॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अधिकानि च षड्वर्षाणि॥ ३३॥ तेषां भूतनंदादीनां यथायथं बाह्लिकनामानस्त्रयोदश सुता भविष्यंति। अथ पुष्पमित्रो नामान्यो राजन्यः अस्य च दुर्मित्रो नाम पुत्रः॥ ३४॥ तथा अंध्राः कोशलाः विदूरपतयो निषधाश्च एते च तत्तद्देशनामभिः

[1]—नन्दश्च। [2]—प्रवर्तकः। [3]—पुष्पनिन्द्रो। [4]—नैषः०। [5]—विस्फूर्जितपु०।

प्रख्यातास्तुल्यकालाः। खंडमंडलेषु भूतास्तत एव तेभ्यो बाह्लिकेभ्य एव भाव्या भविष्यंति ॥ ३५ ॥ ततश्च मागधानां तु राजा विस्फूर्जिर्नाम भविता। स च पूर्वोक्तात्पुरंजयादपरः पुरंजय इति प्रसिद्धः सन्वर्णान्ब्राह्मणादीन्पुलिंदयदुमद्रसंज्ञान्म्लेच्छप्रायान्करिष्यंति। अपरानिति पाठे अन्यान्पुलिंदादिसंज्ञान्वर्णान्करिष्यंतीत्यर्थः ॥ ३६ ॥ किंचैवं कृत्वाऽब्रह्मभूयिष्ठा अत्रैवर्ण्यप्रचुराः सतीः प्रजाः स्थापयिष्यति पालयिष्यति। स च पद्मवत्यां पुरि वसन् अनुगंगां गंगाद्वारमारभ्य प्रयागपर्यंतं गुप्तां पालितां मेदिनीं भोक्ष्यति ॥ ३७ ॥ तदनंतरं च सौराष्ट्रादिदेशवर्तिनो द्विजा व्रात्या उपनयनरहिता भविष्यंति ॥ ३८ ॥ अब्रह्मवर्चसा वेदाचारशून्याः ॥ ३९ ॥ इमे च म्लेच्छप्राया भूभृतस्तुल्यकाला भविष्यंति। किंच एते सर्वेऽधर्मानृतपरा अधर्मेऽनृते च परिनिष्ठिताः फल्गुदा अल्पदातारः ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तद्भ्राता यशोनंदिभ्राता ॥ ३३ ॥ अथ बाह्लिकराज्यानंतरम् ॥ ३४–३५ ॥ इत्यर्थ इति–पुलिंदादीन्हीनजातीनेव ब्राह्मणादिस्थाने स्थापयिष्यति, ब्राह्मणादिकर्म तैः कारयिष्यतीति भावः ॥ ३६ ॥ स पुरंजयः। क्षत्रं क्षत्रियजातिमुत्साद्य नाशयित्वा यत्र कुत्र स्थितं गुप्तमपि क्षत्रं यथाकथंचिन्नाशयिष्यतीत्यर्थः ॥ ३७ ॥ 'व्रात्यः संस्कारहीनः स्यात्' इत्यमरः। प्रायपदेन क्वचित्क्षत्रपरा अपि भविष्यंतीत्यसूचि ॥ ३८ ॥ सिंधुनाम्नी नदी, समुद्रश्च। कौंतीपुरम्। अब्रह्मवर्चसः ब्राह्मणभक्तिहीनाः 'वर्चस्तेजसि सेवने' इति निरुक्तिः ॥ ३९ ॥ इमे आंध्राद्याः। म्लेच्छप्रायाः शास्त्राऽस्वीकारात् ॥ ४० ॥

## अन्वितार्थप्रकाशिका

तेषामिति। तेषां भूतनन्दादीनां यथायथं बाह्लिकादयस्तन्नामानस्त्रयोदश सुता भवितारः। अथ च पुष्पमित्रो नामान्यो राजन्यो भविष्यति। अस्य च दुर्मित्रो नाम पुत्रो भविष्यति ॥ ३३ ॥ एककाला इति। सप्त अन्ध्राः सप्त कौशलाः वैदूरपतयः निषधाश्चैते च तद्देशनामभिः प्रख्यातास्तुल्यकालाः खण्डमण्डलेषु भूपास्तत एव तेभ्यो बाह्लिकेभ्य एव भाव्या भविष्यन्ति ॥३४॥ मागधानामिति। मागधानां तु वंशे विश्वस्फूर्जिर्नाम पुत्रो भविता पुरञ्जयः पुराणां जेता स च परः प्राचीनः पुरञ्जयः। योऽन्यः पुंरजयो नामेत्युक्तस्ततो द्वितीय इव प्रतापेनातिप्रसिद्धः अन्यानेव वर्णान् ब्राह्मणादिस्थानीयान् पुलिन्दयदुमद्रकसंज्ञान् म्लेच्छप्रायान्करिष्यति। अपरानिति वा पाठः। तत्र अन्यान् पुलिन्दादिसंज्ञान् वर्णान्करिष्यति ॥ ३५ ॥ प्रजायेति सार्द्धम्। स च पद्मवत्यां पुरि स्थितः यतो वीर्यवान् क्षत्रमुत्साद्य अब्रह्मभूयिष्ठाः अत्रैवर्ण्यप्रचुराः प्रजाः स्थापयिष्यति। अनुगङ्गां गङ्गाद्वारमारभ्य आप्रयागं प्रयागपर्यन्तं गुप्ता पालितां मेदिनीं भोक्ष्यति ॥ ३६ ॥ सौराष्ट्रेति। तदनन्तरं च सौराष्ट्रावन्त्यादिदेशवर्त्तिनो द्विजाः व्रात्या उपनयनरहिताः अत एव शूद्रप्रायाः जनाधिपा राजानो भविष्यन्ति ॥ ३७ ॥ सिन्धोरिति। सिन्धोनदविशेषस्य तटं तत्स्थानदेशान् चन्द्रभागां नदीं तटदेशान् कौन्तीं पुरीं काश्मीरमण्डलं च शूद्रव्रात्याद्याः अब्रह्मवर्चसः वेदाचारशून्याः तथा म्लेच्छाश्च भोक्ष्यन्ति ॥ ३८ ॥ तुल्येति। इमे च म्लेच्छप्रायाः भूभृतस्तुल्यकालाः भविष्यन्ति। किंच एते सर्वे अधर्मानृतपराः अधर्मे अनृते च परिनिष्ठिताः फल्गुदाः अल्पदातारस्तीव्रमन्यवः अतिक्रोधिनश्च भविष्यन्ति ॥ ३९ ॥ स्त्रीबालेति। स्त्रीबालगोद्विजघातिनः परदारधनयोराद्दता आदरयुक्ताः तद्ग्रहणशीलाः उदितप्रायाः अस्तमितप्रायाश्च 'क्षणे तुष्टाः क्षणे रुष्टास्तुष्टा रुष्टाः क्षणे क्षणे'। अल्पसत्त्वा अल्पधैर्यबलादियुक्ताः अल्पकायुषश्च ॥ ४० ॥

## श्रीमद्वीरराघवव्याख्या

तेषां भूतनन्दादीनां बाह्लीकसञ्ज्ञास्त्रयोदश सुताः भवितारो भविष्यन्ति इति तथा पुष्पमित्रो नामाऽन्यो राजन्यः अस्य दुर्मित्रंनामा पुत्रः ॥ ३४ ॥ तथान्ध्राः कोसलाः वैदूरपतयः निषधाश्च तत्तद्देशनामभिः प्रख्याताः खण्डमण्डलेषु भूपास्तत एव बाह्लीकेभ्य एव भविष्यन्ति तेभ्यो जनिष्यन्त इत्यर्थः ॥३५ ॥ मागधानामिति ततस्तु मागधानां राजा विश्वस्फूर्जिर्नाम भविता स च पूर्वोक्तात्पुरञ्जयादतिप्रसिद्धः सन् वर्णान् ब्राह्मणादीन् पुलिन्दयदुमद्रकसञ्ज्ञान् म्लेच्छप्रायान् करिष्यति अपरानिति पाठे अन्यान् पुलिन्दसञ्ज्ञान् करिष्यतीत्यर्थः ॥ ३६ ॥ स चैवं कृत्वा प्रजाः अब्रह्मभूयिष्ठा अत्रैवर्ण्यप्रचुरान् स्थापयिष्यति पालयिष्यति। किञ्च, वीर्यवानिति स वै विश्वस्फूर्जिः क्षत्रमुत्साद्य निर्मूल्य पद्मवत्यां पुरि वसन्निति शेषः। अनुगङ्गां गङ्गाद्वारमारभ्य प्रयागपर्यन्तां गुप्तां मेदिनीं भोक्ष्यति तदनन्तरं च सौराष्ट्रादिदेशवर्तिनो द्विजा व्रात्याः उपनयनादिसंस्काररहिताः अत एव शूद्रप्राया भविष्यन्ति जनाधिपेति सम्बोधनं जनाधिपा इति पाठे ते शूद्रप्रायाः शूद्रप्रचुरां भविष्यन्तीत्यर्थः ॥ ३७–३८ ॥ सिन्धोरिति। व्रात्याद्या व्रात्या ब्राह्मणा येषां ते शूद्रा म्लेच्छाश्च अब्रह्मवर्चस इति असामर्थ्येऽप्युचितत्वाद्व्रात्याविशेषणं चन्द्रभागानदी तथा तत्तीरं लक्ष्यते कौन्तीन्। देशान् कौन्तीमिति पाठे कुन्तिदेशेषु भवां कौन्तीमिति चन्द्रभागाविशेषणम् ॥ ३९ ॥ तुल्यकाला इति। एते म्लेच्छप्रायाः भूभृतस्तुल्यकाला भविष्यन्तीत्यर्थः। किञ्च, एते इति अधर्मे अनृते च परिनिष्ठिताः फल्गुदाः अल्पदातारः तीव्रः उग्रो

मन्युर्येषां ते स्त्रीवालेति परदारधनयोरादृता आदरयुक्ताः तद्ग्रहणशीला इत्यर्थः। उदितास्तमितप्रायाः उदितप्रायाश्चास्तमितप्रायाः। क्षणे तुष्टाः क्षणे रुष्टाः चेत्यर्थः। अल्पसत्वा अल्पायुषश्च असंस्कृताः गर्भाधानादिसंस्काररहिताः प्रजा इति एवंविधाः ते प्रजाः भक्षयिष्यन्ति पीडयिष्यन्ति ४०–४२॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वाह्लीकाः वाह्लीकदेशपतयः॥ ३४॥ तथा आन्ध्रा अन्ध्रदेशपतयः कोसलाः कोसलविषयपतयः वैदूरयः वैदूराख्यनगरपतयो निषधाश्च एते तत्तद्देशनामभिः प्रख्याताः तुल्यकालाः खण्डमण्डलेषु भूपाः तत एव तेभ्यो वाह्लीकेभ्य एव भाव्या भविष्यन्ति॥ ३५॥ ततश्च नैषधानां विषयाणां राजा पुरञ्जयः शत्रूणामितिशेषः। स पुलिन्दयदुमद्रकानवरान्नीचान् वर्णान् करिष्यति किं वहुना सर्वाः प्रजाश्चापि विवक्षिताः॥ ३६॥ ब्रह्मभूयिष्ठाः बहुलवेदविदः स्थापयिष्यति स्थिरीकरिष्यति अनुगङ्गं गङ्गासमीपे आप्रयागं प्रयागाख्यक्षेत्रपर्यन्तं दीर्घां मेदिनीं पद्मवत्यां पुरि स्थितिं कृत्वा आप्रयागं गुप्तां पालिताम्॥ ३७॥ तदनन्तरं सौराष्ट्राश्च आवन्त्याश्च आभीराश्च शूद्राश्च अर्वुदाश्च मालवाश्च व्रात्याः संस्कारहीनाः द्विजाः शूद्रप्रायाः जनाधिपतयो भविष्यन्ति॥ ३८–३९॥ किञ्च, एते सर्वे अधर्मानृतपराः अधर्मे अनृते च परिनिष्ठिताः फल्गुदाः अल्पदातारः॥ ४०॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

षड्वर्षाणि अधिकानि भविष्यन्ति भावीनि व्याप्य भोक्ष्यन्ति पालयिष्यन्ति॥ ३३॥ तेषां भूतनन्दादीनां त्रयोदश बाह्लिकनामानो भविष्यन्ति अथेत्यन्य एव पुष्पमित्रः क्षत्रियोऽस्य दुर्मित्रो नाम पुत्रः॥ ३४॥ एककालाः खण्डमण्डलपतयः॥३५॥ ततश्च मागधानां मध्ये कश्चिद्विश्वस्फूर्जिर्नाम पुरञ्जयः। प्राचीनपुरञ्जयो द्वितीय इवेत्यर्थः। वर्णान् ब्राह्मणादीन् पुलिन्दयदुमद्रकसञ्ज्ञान् म्लेच्छप्रायान् करिष्यति॥ ३६॥ अब्रह्मभूयिष्ठाः वेदरहिताः क्षेत्रं पुण्यक्षेत्रम् उत्साद्य उत्सन्नं कृत्वा॥ ३७॥ ततश्च सौराष्ट्रादिदेशवर्तिनो द्विजा व्रात्याः संस्कारहीनाः भविष्यन्ति॥ ३८–४३॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। द्वादशे प्रथमोऽध्यायः सङ्गतः सङ्गतः सताम्॥ १॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एते भूतनन्दादयः॥ ३२॥ तेषां भूतनन्दादीनां बाह्लिकाः तन्नामानः अथोऽन्यो राजन्यः पुष्पमित्रो भविष्यति अस्य पुष्पमित्रस्य दुर्मित्रः पुत्रो भविष्यति॥ ३४॥ तत एव हि तेभ्यो बाह्लिकसञ्ज्ञेभ्य एवान्ध्रादयः तत्तद्देशनामभिः प्रख्याताः एककालाः भूपाः तत्तद्भूमिप्रदेशपालकाः भाव्याः भविष्यन्ति॥ ३५॥ ततश्च पुरञ्जयः पूर्वोक्तात्पुरञ्जयादितरः अर्थात्तद्वदतिप्रसिद्धः विश्वस्फूर्जिर्नाम मागधानां राजा भविता स तु वर्णान् ब्राह्मणादीन् पुलिंदयदुमद्रकान् म्लेच्छप्रायान् करिष्यति॥ ३६॥ एवं कृत्वा विश्वस्फूर्जिः पुरि वसन् अब्रह्मभूयिष्ठाः अत्रैवर्ण्यप्रचुराः प्रजाः स्थापयिष्यति यतो दुर्मतिः कलिविदूषितमतिः नन्वन्ये क्षत्रियास्तं कुतो न वारयिष्यन्तीत्यत आह, वीर्यवान् क्षत्रमुत्साद्येति॥ ३७॥ अनुगङ्गां गङ्गाद्वारमारभ्य आप्रयागां प्रयागपर्यन्तां गुप्तां पालितां मेदिनीं भोक्ष्यति तदनन्तरं सौराष्ट्रादिदेशवर्तिनो द्विजाः व्रात्याः उपनयनादिसंस्काररहिताः भविष्यन्तीत्यग्रिमेणान्वयः॥ ३८॥ द्विजा त्रैवर्णिका व्रात्याः असंस्कृताः सन्तः शूद्रप्रायाः भविष्यन्ति॥ ३९॥ अब्रह्मवर्चसः वेदोक्तक्रियाशून्यत्वात् इति च म्लेच्छप्रायाः भूभृतस्तुल्यकाला भविष्यन्ति॥ ४०–४१॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तथा आन्ध्राः कौशलाः वैदूरपतयः। निषधाश्चैते च तत्तद्देशनामभिः प्रख्यातास्तुल्यकालाः खण्डमण्डलेषु भूपास्तत एव तेभ्यो बाह्लिकेभ्य एव भाव्या भविष्यन्ति॥ ३३॥ ततश्च मागधानां तु वंशे विश्वस्फूर्जिर्नाम भविता। ततश्च पुरञ्जयः स च परः प्रतापेनातिप्रसिद्धः। अन्यानेव वर्णान् ब्राह्मणादिस्थानीयान् पुलिन्दयदुमद्रकसंज्ञान् म्लेच्छप्रायान् करिष्यति। अपरानिति वा पाठः॥ ३४॥ स च पद्मवत्यां पुरि स्थितः यतो वीर्यवान् अतः क्षत्रमुत्साद्य अब्रह्मभूयिष्ठाः अत्रैवर्ण्यप्रचुराः प्रजाः स्थापयिष्यति। अनुगङ्गां गङ्गाद्वारमारभ्य प्रयागपर्यन्तं गुप्तां पालितां मेदिनीं भोक्ष्यति॥ ३५॥ तदनन्तरं च सौराष्ट्रादिदेशवर्तिनो द्विजाः व्रात्या उपनयनरहिताः अतएव शूद्रप्राया जनाधिपा राजानो भविष्यन्ति॥ ३६॥ कौन्तीं पुरीम्। अब्रह्मवर्चसः वेदाचारशून्याः॥ ३७॥ इमे च म्लेच्छप्राया भूभृततुल्यकाला भविष्यन्ति। किञ्च एते सर्वे अधर्माऽनृतपराः अधर्मे अनृते च परिनिष्ठिताः फल्गुदाः अल्पदातारः। तीव्रमन्यवः अतिक्रोधिनः॥ ३८॥ स्त्र्यादिघातिनः परदारधनयोरादृता आदरयुक्ताः तद्ग्रहणशीलाः। उदितप्रायाः अस्तमितप्रायाश्च। 'क्षणे तुष्टाः क्षणे रुष्टास्तुष्टा रुष्टाः क्षणे क्षणे' अल्पसत्त्वाः अल्पधैर्यबलादियुक्ताः अल्पायुषश्च॥३९॥ असंस्कृताः गर्भाधानादिसंस्काररहिताः स्ववर्णाश्रमोचितक्रियाहीनाः। तत्र हेतुः—रजसा तमसा वृता इति। अतो म्लेच्छाः प्रजाः भक्षयिष्यन्ति धनाद्यपहारादिना पीडयिष्यन्ति॥ ४०॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तेषामिति। तेषां भूतनंदादीनां, त्रयोदश सुताः, बाह्लिका बाह्लिकनामानश्च भवितारः। अथ तदनन्तरं, पुष्पमित्रः पुष्पमित्रसंज्ञः। अन्यः राजन्यो नृपः भविष्यति। तथैव अस्य दुर्मित्रनामा पुत्रश्च राजा भविष्यति॥ ३४॥ एककाला इति। तथा सप्त आन्ध्राः अन्ध्रदेशराजानः, सप्त कौशलाः कोशलदेशराजानः, तथा वैदूरपतयः विदूरं नाम नगरं तद्देशस्य पतयः, विदूराद्रिपतयो वा। हि तदनन्तरमेव, नैषधाश्च, तत्तद्देशनामभिः प्रख्याताः। इमे भूपाः एककालाः खण्डमण्डलेषु, ततो बाह्लिकेभ्य एव भाव्याः भविष्यन्तीत्यर्थः॥ ३५॥ मागधानामिति। ततः मागधानां मगधदेशानां राजा तु, विश्वस्फूर्जिः नाम भविता। स च अपरः पुरंजयः पूर्वोक्तात्पुरंजयादपरपुरंजयनामा सन्, वर्णान् ब्राह्मणादीन्, पुलिन्दयदुमद्रसंज्ञकान् म्लेच्छप्रायान् करिष्यति, अपरानिति पाठे अन्यान् पुलिन्दादिसंज्ञान् वर्णान् करिष्यतीत्यर्थः॥ ३६॥ प्रजा इति। स चैवं कृत्वा प्रजाश्च अब्रह्मभूयिष्ठाः अत्रैवर्ण्यप्रचुराः, स्थापयिष्यति। दुर्मतिः वीर्यवान् सः वै, स त्वित्यर्थः। क्षत्त्रं क्षत्त्रकुलं, उत्साद्य पद्मवत्यां पुरि वसन्निति शेषः॥ ३७॥ अनुगङ्गामिति। अनुगङ्गां आप्रयागं गङ्गाद्वारमारभ्य प्रयागपर्यन्तामित्यर्थः। गुप्तां मेदिनीं भोक्ष्यति, तदनन्तरं च सौराष्ट्राश्च आवन्त्याश्च आभीराश्च ते, तथा अर्बुदाश्च मालवाश्च ते अर्बुददेशवासिनो मालवदेशवासिनश्चेत्यर्थः। शूद्राः द्विजास्त्रैवर्णिकाः व्रात्या उपनयनादिसंस्काररहिताः, अत एव शूद्रप्रायाः, भविष्यन्ति। जनाधिपाश्च शूद्रप्रायाः। पाठान्तरे जनाधिपेति संबोधनम्॥ ३८॥ सिन्धोरिति। तथा एते नृपाः इति शेषः। सिन्धोः तटं, कौन्तीं कुन्तीदेशभवां चन्द्रभागां नदीं, काश्मीरमण्डलं च भोक्ष्यन्ति, समकालमिति शेषः। तत्प्रजाश्च शूद्राः शूद्रप्रायाः। व्रात्याः संस्काररहिताः आद्या ब्राह्मणा या सुताः, म्लेच्छा म्लेच्छप्रायाः अब्रह्मवर्चसश्च भविष्यन्ति॥ ३९॥ तुल्येति। हे राजन्, इमे पूर्वोक्ताः तुल्यकालाः भूभृतो राजानः, म्लेच्छप्रायाश्च भविष्यन्ति एते सर्वेअधर्मश्च अनृतं च तत्र परास्तत्पराः, फल्गुदा अल्पदातारः, तीव्र उग्रो मन्युर्येषां ते तथाभूताः॥ ४०॥

## हिन्दी अनुवाद

इनके तेरह पुत्र होंगे और वे सब-के-सब बाह्लिक कहलायेंगे उनके पश्चात् पुष्पमित्र नामक क्षत्रिय और उसके पुत्र दुर्मित्र का राज्य होगा॥ ३४॥ परीक्षित्! बाह्लिकवंशी नरपति एक साथ ही विभिन्न प्रदेशों में राज्य करेंगे। उनमें से सात अन्ध्र देश के तथा सात ही कोसल देश के अधिपति होंगे, कुछ विदूर-भूमि के शासक और कुछ निषध देश के स्वामी होंगे॥ ३५॥ इनके बाद मगध देश का राजा होगा विश्वस्फूर्जि। यह पूर्वोक्त पुरञ्जय के अतिरिक्त द्वितीय पुरञ्जय कहलायेगा। यह ब्राह्मणादि उच्च वर्णों को पुलिन्द, यदु और मद्र आदि म्लेच्छप्राय जातियों के रूप में परिणत कर देगा॥ ३६॥ इसकी बुद्धि इतनी दुष्ट होगी कि यह ब्राह्मण, क्षत्रिय और वैश्यों का नाश करके शूद्रप्राय जनता की रक्षा करेगा। यह अपने बल-वीर्य से क्षत्रियों को उजाड़ देगा और पद्मवतीपुरी को राजधानी बनाकर हरिद्वार से लेकर प्रयागपर्यन्त सुरक्षित पृथ्वी का राज्य करेगा॥ ३७॥ परीक्षित्! ज्यों-ज्यों घोर कलियुग आता जायगा त्यों-त्यों सौराष्ट्र, अवन्ती, आभीर, शूर, अर्बुद और मालव देश के ब्राह्मणगण संस्कारशून्य हो जायँगे तथा राजा लोग भी शूद्रतुल्य हो जायँगे॥ ३८॥ सिन्धुतट, चन्द्रभागा का तटवर्ती प्रदेश, कौन्तीपुरी और काश्मीर-मण्डल पर प्रायः शूद्रों का, संस्कार एवं ब्रह्मतेज से हीन नाममात्र के द्विजों का और म्लेच्छों का राज्य होगा॥ ३९॥ परीक्षित् ये सब-के-सब राजा आचार-विचार में म्लेच्छप्राय होंगे। ये सब एक ही समय भिन्न-भिन्न प्रान्तों में राज्य करेंगे। ये सब-के-सब पहले सिरे के झूठे अधार्मिक और स्वल्प दान करने वाले होंगे। छोटी-छोटी बातों को लेकर ही ये क्रोध के मारे आगबबूला हो जाया करेंगे॥ ४०॥

**स्त्रीबालगोद्विजघ्नाश्च परदारधनादृताः। उदितास्तमितप्राया अल्पसत्त्वाल्पकायुषः॥ ४१॥**

**असंस्कृताः क्रियाहीना रजसा तमसाऽऽवृताः। प्रजास्ते भक्षयिष्यन्ति म्लेच्छा राजन्यरूपिणः॥ ४२॥**

**तन्नाथास्ते जनपदास्तच्छीलाचारवादिनः। अन्योन्यतो राजभिश्च क्षयं यास्यन्ति पीडिताः॥ ४३॥**

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे प्रथमोऽध्यायः॥ १॥**

## कृष्णप्रिया व्याख्या

अन्वयः—( एते ) स्त्रीबालगोद्विजघ्नाः परदारधनादृताः उदितास्तमितप्रायाः अल्पसत्त्वाल्पकायुषः असंस्कृताः क्रियाहीनाः रजसा तमसा आवृताः म्लेच्छाः ते राजन्यरूपिणः प्रजाः भविष्यन्ति॥ ४१-४२॥ तन्नाथाः ते जनपदाः तच्छीलाचारवादिनः राजभिः च अन्योन्यतः पीडिताः क्षयं यास्यन्ति॥ ४३॥

इति श्रीमद्भागवते द्वादशस्कन्धे प्रथमोऽध्यायः॥ १॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

उदिस्तास्तमितप्राया हर्षशोकादिबहुलाः ॥ ४१ ॥ असंस्कृता गर्भाधानादिसंस्काररहिताः । प्रजा भक्षयिष्यंति धनाद्यपहारादिना पीडयिष्यंति ॥ ४२ ॥ किंच तन्नाथाः ते नाथा येषां ते जनपदा देशवर्तिनो मनुष्यास्तच्छीलाचारवादिनस्तेषामिव शीलमाचारो वादश्च तद्वंतः ॥ ४३ ॥

इति श्रीमद्भागवते म० द्वादशस्कंधे भावार्थदीपिकायां टीकायां प्रथमोऽध्यायः ॥ १ ॥

## श्रीबंशीधरकृतो भावार्थदीपिकाप्रकाशः

उदितास्तमितप्राया अल्पकालस्थितिमंतः ॥ ४१ ॥ शास्त्राऽविहितकर्तृत्वे सति गोहिंसादिपरत्वं म्लेच्छत्वम्, तद्वंतो म्लेच्छाः ॥ ४२ ॥ अन्यत्तत्संगकृतानर्थमाह–तन्नाथा इति ( ४३ ) किञ्चिद्वैलक्षण्येनैदध्यायार्थो भविष्येऽपि ब्रह्मणा कार्त्तिकेयं प्रति वर्णितः । तथाहि–'कलौ के वै भविष्यंति नृपचिह्नयुता नराः । ज्ञातुमिच्छामि तेषां तु नामानीह जगद्गुरो ॥ १ ॥ ते वै राज्यं करिष्यंति कति वर्षाणि तत्र हि । ब्रह्मन्नेतत्समाचक्ष्व परं कौतूहलं हि मे ॥ २ ॥ ब्रह्मोवाच । सत्यादिकेषु बहुशः श्रुता भूपास्त्वया गुह । शृणु वक्ष्ये कलियुगे संक्षेपं पुरुषोत्तम ॥ ३ ॥ पांडवानां कुलोत्पन्ना विष्णुरातादिका नृपाः । इक्ष्वाकुवंशजा भूपास्ते मागधवंशजाः ॥ ४ ॥ कलौ राज्यं करिष्यंति वर्षाणां वै सहस्रकम् । कलिसंध्यां समारभ्य राज्यमेतत्त्रयं स्मृतम् ॥ ५ ॥ ततो नृपा भविष्यंति पञ्च प्रद्योतसंज्ञकाः । अष्टत्रिंशोत्तरशतं कलौ ते राज्यकारकाः ॥ ६ ॥ शिशुनागा दश नृपाः षष्ट्युत्तरशतत्रयम् । कलौ भोक्ष्यंति पृथिवीं राजानो धर्मतत्पराः ॥ ७ ॥ अतः परं नृपा लोके शूद्रप्रायास्त्वधार्मिकाः । शिशुनागत्परे राज्ये शूद्रीगर्भोद्भवो बली ॥ ८ ॥ महापद्मधरः कश्चिन्नंदो राज्यं करिष्यति । नंदस्य चाष्ट पुत्राश्च भविष्यंति च भूमिपाः । तेषां तु वशगा भूमिर्भविष्यति शतं समाः ॥ ९ ॥ अब्रह्मण्यान्द्विजः कश्चिद्दुष्टान्नंदसुतानथ । अयोग्यां इति मत्वा तु राज्यात्तानुद्धरिष्यंति ॥ १० ॥ अराजके तु जगतीं विप्रदत्तां कलौ युगे । भोक्ष्यंति दश मौर्याश्च सप्तत्रिंशोत्तरं शतम् ॥ ११ ॥ ततः शुंगा दश नृपा दशवर्षशताधिकम् । कलौ राज्यं करिष्यंति विख्याताः सर्वतो दिशि ॥ १२ ॥ कण्वो हत्वा नृपं शुंगं राज्यलोभेन स्वामिनम् । स्वयं करिष्यते राज्यं वसुदेवेति विश्रुतः ॥ १३ ॥ तत्पुत्रपौत्राः पृथिवीं चत्वारिंशच्च पंच च । शतानि त्रीणि वर्षाणां भोक्ष्यंति च कलौ युगे ॥ १४ ॥ तद्भृत्यस्त्वंध्रजातीयः कंचित्कालमुशत्तम । चकार राज्यं हत्वा वै काण्वं तु वृकलो बली ॥ १५ ॥ तस्य वंशोद्भवास्त्रिंशद्भविष्यंति कलौ नृपाः । भोक्ष्यंत्यांध्रास्तु पृथिवी चत्वार्यद्धशतानि च ॥ १६ ॥ षट्पंचाशोत्तरं कालं परं तस्मान्निबोध मे । सप्ताभीराश्च पृथिवीं भोक्ष्यंत्यद्धशतं कलौ ॥ १७ ॥ ततो नृपा भविष्यंति दश गर्दभिसंज्ञकाः । अष्टाधिकाञ्च नवतिं तेषां राज्यं भविष्यति ॥ १८ ॥ कंका षोडश भूपाला भवष्यंति कलौ गुह । पालयिष्यंति गां ते वै वर्षाणाञ्च शतद्वयम् ॥ १९ ॥ ततो वै विक्रमो नाम भवितोज्जयिनीपतिः । यो वै म्लेछान्सुसंपन्नान्कोटिशो निहनिष्यति ॥ २० ॥ तस्य राज्यं कलौ स्कन्ध पञ्चत्रिंशोत्तरं शतम् । भविष्यति परे काले शालिवाहस्ततो नृपः ॥ २१ ॥ शतं वर्षाणि पृथिवीं भोक्ष्यत्यवितथोद्यमः । ततोऽष्टौ यवना भाव्यास्तुरुष्का वै चतुर्दश । वर्षाणि चैव पृथिवीं भोक्ष्यंति शिवनंदन ॥ २२ ॥ भूयः कलौ भविष्यंति मौना एकादशैव तु । ते वै भोक्ष्यंति पृथिवीं वर्षाणां च शतत्रयम् ॥ २३ ॥ किलकिलायां ततो जाता भूतनंदादयो नृपाः । कलौ राज्यं करिष्यंति पंचाधिकशतं समाः ॥ २४ ॥ एते कलौ सार्वभौमाः खंडराज्यमतः परम् । तेषां त्रयोदश सुता भविष्यंति च वाह्लिकाः ॥ २५ ॥ ततः । परं सप्तसप्त कौशलांध्राश्च कीर्त्तिताः । वैदूरपतयो भाव्या नैषधास्तदनंतरम् ॥ २६ ॥ विश्वस्फूर्तिश्च भविता करिष्यत्यन्यथा जनान् । तीव्रमन्युः सर्ववर्णान्म्लेच्छप्रायान्करिष्यति ॥२७॥ तस्मिन्काले सिंधुतीरं कौंतीं काश्मीरमंडलम् । भोक्ष्यंति ब्राह्मणाः शूद्रा म्लेच्छाश्चाब्रह्मवर्चसः ॥ २८ ॥ म्लेच्छप्राया इमे भूपाः फल्गुदास्तीव्रमन्यवः । अल्पायुषोऽल्पसत्त्वाश्च भविष्यंति कलौ युगे ॥ २९ ॥ प्रजास्ते भक्षयिष्यंति म्लेच्छा राजन्यरूपिणः । अन्योन्यतो राजभिश्च क्षयं यास्यंति वै प्रजाः ॥ ३० ॥ एते भोक्ष्यंति पृथिवीं द्वादशोर्द्धचतुष्टयम् । एवं वै धर्मप्राधर्ष्यं भविष्यति कलौ यदा ॥ ३१ ॥ भविष्यति तदा स्कंद ब्रह्मज्ञानैकमानसः । तस्योपदिष्टं मार्गं वै ग्रहीष्यंति च ये जनाः ॥ ३२ ॥ ते वै राज्य करिष्यंति तस्य शिक्षानुसारतः । धर्मेण राज्यवृद्धिश्च कलौ तेषां भविष्यति ॥ ३३ ॥ यदा वेदे च विप्रे च वैष्णवे च पराङ्मुखाः । तदा तेषां क्षयः स्कंद भविष्यत्यचिरेण हि ॥ ३४ ॥ तेषां राज्यात्परे काले म्लेच्छा गौरमुखा नृपाः । प्रबलाः संभविष्यंति प्रजापालनतत्पराः ॥ ३५ ॥ अल्पकालेन तेषां वै राज्यवृद्धिर्भविष्यति । नृपा बलिं हरिष्यंति गौरवर्णानुगाखिलाः ॥ ३६ ॥ अशीतिशतवर्षं ते राज्यं नीत्यनुसारतः । कृत्वा पश्चिमदेशीयैर्नृपैर्यास्यंत्यदर्शनम् ॥ ३७ ॥ यदा वेदेषु विप्रेषु वैष्णवेषु च शुद्धधीः । तदा नृपा विजेष्यंति म्लेच्छान्धर्मपराङ्मुखान् ॥ ३८ ॥ तस्मिन्काले खंडनार्थे शतशश्च सहस्रशः । भविष्यंति कलौ स्कंद राज्यपालनतत्पराः ॥ ३९ ॥ धर्मश्चैव कलौ स्कंद ततः संस्थां गमिष्यति । किञ्चित्कालांतरे भूयो भविता विजयो नृपः ॥ ४० ॥ तेषां कुले समुत्पन्नो धर्मज्ञानैकतत्परः । तस्य वंशोद्भवा भूपाः कलौ पंचशतानि ते । वर्षाणि वै करिष्यंति राज्यं पंचाशदुत्तरम् ॥ ४१ ॥

अतः परं रोहितके पत्तने संभविष्यति। कलौ नागार्जुनो नाम नृपचिह्नयुतस्तदा ॥ ४२ ॥ तद्वंशे राज्यभोगस्तु वर्षाणां वै सहस्रकम्। तस्मात्परं बलिर्नाम नृपो वै संभविष्यति ॥ ४३ ॥ तस्य वंशोद्भवा भूपाः सहस्राणि शताधिकम्। वर्षाणि ते कलौ स्कंद नृपा राज्यकराः स्मृताः ॥ ४४ ॥ अतः परं कलियुगे नृपाः शूद्रादयः स्मृताः। म्लेच्छप्राया जनपदा भविष्यंति कलौ गुह ॥ ४५ ॥ एकीभूतं जगत्सर्वं म्लेच्छज्ञानैकसंस्थितम्। दृष्ट्वा चाधर्मबाहुल्यं विष्णुः कल्किर्भविष्यति ॥ ४६ ॥ आशुगं हयमारुह्य म्लेच्छान्वै स वधिष्यति। ततः कृतयुगं भूयो भविष्यति शिवात्मज ॥ ४७ ॥ एवं कलौ मया प्रोक्ता नृपचिह्नयुता नराः। समासेनैव ते स्कंद किं भूयः श्रोतुमिच्छसि ॥ ४८ ॥ इति भविष्ये चतुर्थकल्पे ॥ ४३ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे प्रथमोऽध्यायः ॥ १ ॥

## अन्वितार्थप्रकाशिका

असंस्कृता इति। असंस्कृता गर्भाधानादिसंस्काररहिताः स्ववर्णाश्रमोचितक्रियाहीनाः रजसा तमसा वृताः। अतो राजन्यरूपिणः म्लेच्छास्ते प्रजाः भक्षयिष्यन्ति धनाद्यपहरणादिना पीडयिष्यन्ति ॥ ४१ ॥ तदिति। तन्नाथास्ते उक्तविधा नाथा येषां ते जनपदादेशवर्त्तिनो मनुष्यास्तेषामिव शीलमाचारो वादश्च तद्वन्तः अन्योन्यतो राजतश्च पीडिताः क्षयं यास्यन्ति ॥ ४२ ॥

इति श्रीमद्भागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायां प्रथमोऽध्यायः ॥ १ ॥

## श्रीमद्वीरराघवव्याख्या

तन्नाथा इति ते म्लेच्छा नाथा येषां ते जनपदादेशवर्तिनः तेषामेवं शीलं स्वभावः आचारो वादश्च येषां सन्तीति तथाऽन्योन्यतः राजतः राजभिश्च पीडिताः नाशं यास्यन्ति ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां प्रथमोऽध्यायः ॥ १ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

उदितास्तमितप्रायाः बहुलं सूर्योदयमस्तङ्गतमेव जानन्ति नापरम् अल्पकालावस्थायिनो वा ॥ ४१ ॥ असंस्कृताः गर्भाधानादिसंस्कारहीनाः प्रजाः भक्षयिष्यन्ति धनाद्यपहारादिना पीडयिष्यन्ति ॥ ४२ ॥ किञ्च, एवंविधाः ये त एव नाथा येषां ते तन्नाथा जनपदा देशवर्तिनो मनुष्याः तच्छीलाचारवादिनः तेषां शीलम् आचारश्च वादश्च तद्वन्तः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां प्रथमोऽध्यायः ॥ १ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

उदितोऽस्तमितप्रायाः उत्पन्नविनष्टप्रायाः जन्ममरणबहुला इत्यर्थः ॥ ४२ ॥ भक्षयिष्यन्ति जीविकापहारादिना पीडयिष्यन्ति जनपदा देशवर्तिनो जना तच्छीलाचारवादिनः भयात् तेषामिव शीलाचारवादाः सन्ति येषां ते ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे प्रथमाऽध्यायार्थप्रकाशः ॥ १ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

किञ्च तन्नाथास्ते उक्तविधा नाथा येषां ते जनपदा देशवर्त्तिनो मनुष्यास्तेषामिव शीलमाचारो वादश्च तद्वन्तः अन्योऽन्यतो राजतश्च पीडिताः क्षयं यास्यन्ति ॥ ४१ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता द्वादशे तत्र विश्वाश्रयनिरूपणे। प्रथमो विवृतो भावी सोमवंशनिरूपकः ॥ ३ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स्त्रीति। पुनः कथंभूताः। स्त्रियश्च बालाश्च गावश्च द्विजाश्च तान् हन्तीति तथाभूताः, परेषां दारेषु धषु च आदृताने आदरयुक्ताः, उदितास्तमितप्रायाश्च उदयानन्तरमेवास्तं प्रायेणेतं प्राप्तं यैस्तथाभूता इत्यर्थः। अल्पं सत्त्वं येष तेऽल्पकमायुर्येषां ते, ते च ते 'क्षणे रुष्टाः क्षणे तुष्टा' इत्यपि प्रकरणाद्बोध्यम् ॥ ४१ ॥ असंस्कृता इति असंस्कृता गर्भाधानादिसंस्काररहिताः,

क्रियाहीनाः स्नानसंध्यादिक्रियारहिताश्च, रजसा रजोगुणेन च, वृताः। राजन्यानां रूपं वेषो येषां ते, वस्तुतो म्लेच्छाः ते राजानः प्रजाः भक्षयिष्यन्ति। धनापहारादिना पीडयिष्यन्तीत्यर्थः। सार्द्धद्वयस्यैकः संवन्धः ॥ ४२ ॥ तन्नाथा इति। ते म्लेच्छा नाथा येषां ते, जनपदाः तद्देशवासिनो जनाः इत्यर्थः। तेषामेव शीलमाचारो वादश्च ते विद्यन्ते एषां तथाभूताः सन्तः, अन्योन्यतः राजतो नृपतितश्च पीडिताः संजातपीडाः सन्तः क्षयं नाशं च यास्यन्ति ॥ ४३ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसाचार्यविरचितायामन्वयार्थवोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्वे प्रथमोऽध्यायः ॥ १ ॥

## हिन्दी अनुवाद

ये दुष्ट लोग स्त्री, बच्चों, गौओं, ब्राह्मणों को मारने से भी नहीं हिचकेंगे। दूसरे की स्त्री और धन हथिया लेने के लिये ये सर्वदा उत्सुक रहेंगे। न तो इन्हें वढ़ते देर लगेगी और न तो घटते। क्षण में रुष्ट तो क्षण में तुष्ट। इनकी शक्ति और आयु थोड़ी होगी ॥ ४१ ॥ इनमें परम्परागत संस्कार नहीं होंगे। ये अपने कर्तव्य कर्म का पालन नहीं करेंगे। रजोगुण और तमोगुण से अंधे बने रहेंगे। राजा के वेश में वे म्लेच्छ ही होंगे। वे लूट खसोट कर अपनी प्रजा का खून चूसेंगे ॥ ४२ ॥ जब ऐसे लोग का शासन होगा, तो देश की प्रजा में भी वैसे ही स्वभाव, आचरण और भाषण की वृद्धि हो जायेगी। राजा लोग तो उनका शोषण करेंगे ही, ये आपस में भी एक दूसरे को उत्पीड़ित करेंगे अन्ततः सब के सब नष्ट हो जायँगे ॥ ४३ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे प्रथमोध्यायः ॥ १ ॥



# अथ द्वितीयोऽध्यायः

### श्रीशुक उवाच

ततश्चानुदिनं धर्मः सत्यं शौचं क्षमा दया । कालेन बलिना राजन् नङ्क्ष्यत्यायुर्बलं स्मृतिः ॥ १ ॥
वित्तमेव कलौ नॄणां जन्माचारगुणोदयः । धर्मन्यायव्यवस्थायां कारणं बलमेव हि ॥ २ ॥
दाम्पत्येऽभिरुचिर्हेतुर्मायैव व्यावहारिके । स्त्रीत्वे पुंस्त्वे च हि रतिर्विप्रत्वे सूत्रमेव हि ॥ ३ ॥
लिङ्गमेवाश्रमख्यातावन्योन्यापत्तिकारणम् । अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः ॥ ४ ॥
अनाढ्यतैवासाधुत्वे साधुत्वे दम्भ एव तु । स्वीकार एव चोद्वाहे स्नानमेव प्रसाधनम् ॥ ५ ॥
दूरे वार्ययनं तीर्थं लावण्यं केशधारणम् । उदरम्भरता स्वार्थः सत्यत्वे धार्ष्ट्यमेव हि ॥ ६ ॥
दाक्ष्यं कुटुम्बभरणं यशोऽर्थे धर्मसेवनम् । एवं प्रजाभिर्दुष्टाभिराकीर्णे क्षितिमण्डले ॥ ७ ॥
ब्रह्मविट्क्षत्रशूद्राणां यो बली भविता नृपः । प्रजा हि लुब्धै राजन्यैर्निर्घृणैर्दस्युधर्मभिः ॥ ८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—श्रीशुकः उवाच—राजन् ततः च अनुदिनं धर्मः सत्यं शौचं क्षमा दया आयुः बलं स्मृतिः बलिना कालेन नङ्क्ष्यति ॥ १ ॥ कलौ नॄणां जन्माचारगुणोदयः वित्तम् एव धर्मन्यायव्यवस्थायां बलम् एव हि कारणम् ॥ २ ॥ दाम्पत्ये अभिरुचिः हेतुः व्यावहारिके माया एव स्त्रीत्वे पुंस्त्वे च रतिः विप्रत्वे सूत्रम् एव हि ॥ ३ ॥ आश्रमख्यातौ अन्योन्यापत्तिकारणं लिङ्गम् एव अवृत्त्या न्यायदौर्बल्यं पाण्डित्ये चापलं वचः ॥ ४ ॥ असाधुत्वे अनाढ्यता साधुत्वे दम्भः एव तु उद्वाहे स्वीकारः एव प्रसाधनम् स्नानम् एव ॥५॥ दूरे वार्ययनं तीर्थं केशधारणं लावण्यम् उदरम्भरता स्वार्थः सत्यत्वे धार्ष्ट्यम् एव हि ॥६॥ कुटुम्बभरणं दाक्ष्यं यशोऽर्थे धर्मसेवनम् एवं दुष्टाभिः प्रजाभिः आकीर्णे क्षितिमण्डले ब्रह्मविट्क्षत्रशूद्राणां यः बली नृपः भविता लुब्धैः निर्घृणैः दस्युधर्मभिः राजन्यैः प्रजाः ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः । अधार्मिष्ठे जने नष्टे पुनः कृतयुगागमः ॥ १ ॥

कलिधर्मान्प्रपंचयति ततश्चेत्यादिना ॥ १ ॥ धर्मन्याययोर्व्यवस्थायां बलमेव ॥ २ ॥ दांपत्ये भार्यापतिभावेऽभिरुचिरेव हेतुर्न कुलगोत्रादिः । व्यावहारिके क्रयविक्रयादौ । स्त्रीत्वे पुंस्त्वे च तयोः श्रेष्ठ्ये रतिकौशलमेव हेतुर्न कुलमाचारो वा ॥ ३ ॥ आश्रमाणां ख्यातौ ज्ञाने लिंगमेव दंडाजिनादिकं हेतुर्नत्वाचारविशेषः । अन्योन्यापत्तिकारणं चाश्रमादाश्रमांतरप्राप्तौ च कारणम् । यद्वा बहूदकहंसादीनामन्योन्यापत्तौ नमस्कारादिव्यवहारे कारणम् । अवृत्त्या मुद्रार्पणादिदानासामर्थ्येन न्याये दौर्बल्यं पराजयः । चापलं वचो बहुभाषणम् ॥ ४ ॥ असाधुत्वे चौर्याद्यभियोगे । प्रसाधनमलंकारः ॥ ५ ॥ दूरे वर्तमानं वार्ययनं जलाशयस्तीर्थं न तु गुर्वादि । स्वार्थः पुरुषार्थः ॥ ६–७–८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सत्ययुगागमः । कृतयुगागमः (१) । ततः कलिकृतप्रजाक्षयप्राप्तेः । अनुदिनं प्रत्यहम् । हे राजन्निति—'यथा राजा तथा प्रजा' इति न्यायेन यथा त्वदीयराज्ये धर्मादीनां वृद्धिस्तथा कलिराज्ये धर्मादिह्रासश्चेति भावः ॥ १ ॥ जन्माद्युत्कर्षहेतुर्न तु ब्राह्मणत्वादिरिति भावः । "यस्यास्ति वित्तं स नरः कुलीनः स पंडितः स श्रुतवान् गुणज्ञः । स एव वक्ता स च दर्शनीयः सर्वे

गुणाः कांचनमाश्रयंति।" इति भर्तृहर्युक्तेः। धर्मन्याययोर्व्यवस्थायामयं धर्मोऽयं न्याय इति निर्णये कर्तव्ये यो धनादिना बली तस्यैव वाक्यं धर्मो न्यायश्चेति लोका मंस्यंतीत्यर्थः॥ २॥ दंपतिभावे विवाहे, "कुशविप्रांवुपित्रग्निवेदभूकालदिक्सुराः। साक्ष्ये यत्र विवाहे तु तद्दांपत्यमुदीरितम्।" इति नारदीयोक्तम्। कुशविप्रादीन्विनैव विवाहा भविष्यंतीत्यर्थः। मायैव कपटमेव। सूत्रं तंतुमात्रमेव न तु नित्यनैमित्तिकानुष्ठानस्वाध्यायादि, ब्राह्मणोऽहं दृश्यतां मत्कंठे सूत्रमित्येवं स्वीयविप्रत्वं सूचयिष्यंति न तु वेदोच्चारणादिनेति भावः। यज्ञसूत्रमिति वक्तव्ये सूत्रमित्युक्त्या तस्य मंत्रनिर्मितत्वाद्यभावेन केवलं कर्त्तनयंत्रादिगतसूत्रतुल्यत्वैव ध्वनिता। तदुक्तम्—"अनध्यायकृतं यच्च तथा मंत्रविवर्जितम्। अविप्रपत्नीसूत्रोत्थमवीरासूत्रनिर्मितम्। ग्राममध्ये कृतं यच्च भुक्त्वा चैव कृतं तु यत्। अब्राह्मणकृतं यच्चाशुचिना निर्मितं तु यत्। तत्सूत्रं विबुधैर्ज्ञेयं पशुबंधनरज्जुवत्।" इति निर्णयसुधाकरे॥ ३॥ 'अन्योन्यं विप्रा नमंते' इत्याद्युक्त्या सजातीयेष्वेवान्योन्यादिप्रयोगदर्शनाद्विजातीयब्रह्मचर्यसंन्यासादौ तत्कथं प्रयुक्तं तत्राह—तद्वेति॥ ४॥ अभियोगः प्रापणम्, दुष्टत्व इत्यर्थः। त्वं मे भार्येति स्वीकारहेतुः। प्रसाधनं शरीरशुद्धिरलंकारो वेति तीर्थः। उद्वाहे विवाहस्थाने स्वीकारस्त्वं मे भार्येत्यंगीकरणमेव न तु पित्रादिकर्तृकार्पणम्। अलंकारस्थाने केवलं स्नानमेव न तु स्वर्णादि, घोरे कलौ स्वर्णाद्यप्राप्तेर्ग्रंथांतरोक्तेः॥ ५॥ "तीर्थे मुख्यं पिता माता गुरुः शास्त्रं तथा हरिः। गौणं तीर्थं त्वम्मयं स्यादित्युक्तं तीर्थवेदिभिः।" इति। लावण्ये शरीरसौंदर्यद्योतनाय केशानामितस्ततः प्रसाधनमात्रमेव भविष्यति वस्त्रभूषाद्यनाप्तेः। उदरभरणमेव पुरुषार्थं मंस्यंते न तु हरिस्मरणादिकमित्यर्थः। धाष्टर्यं वृथा हठः यो वृथा हठं करिष्यति तं सत्यवादिनं मंस्यंत इत्यर्थः॥ ६॥ दाक्ष्यं नैपुण्यम्। यशोर्थे इति—कल्याणबुद्ध्या न कोपि धर्मं करिष्यतीत्यर्थः॥ ७॥ निर्धूर्णैर्निर्दयैः॥ ८॥

## अन्वितार्थप्रकाशिका

द्वितीये तु कलेर्दोषा अथ कल्किप्रसादतः। तेषां क्षये कृतयुगं श्लोकाः सार्द्धाश्चतुःकृताः (४४॥)॥
अनुष्टुभोऽपि तावत्य (४४॥) उवाचेत्येकमेव तु॥ ततश्चेति॥

हे राजन्! बलिना कालेन ततोऽग्रेऽनुदिनं धर्मसत्यादिका दयान्ताः आयुर्बलं स्मृतिश्चैतानि नङ्क्ष्यन्ति॥ १॥ वित्तमिति। जन्मनिमित्तः सदाचारनिमित्तो वा यो गुणः लोके उत्कर्षस्तस्योदयो वित्तमेव वित्तवतो नीचस्याप्युत्कर्षः। नतु तद्धीनस्योत्तमकुलोत्पत्यादिमतोऽपीत्यर्थः। तथा धर्मन्याययोर्व्यवस्थायां बलमेव कारणं नतु यथार्थतेत्यर्थः॥ २॥ दाम्पत्य इति। दाम्पत्ये भार्यापतिभावे परस्पराभिरुचिरेव हेतुः नतु कुलगोत्रवृद्धेच्छादिः। व्यावहारिके क्रयविक्रयादिव्यवहारे मायावञ्चनमेव हेतुर्नतु निष्कपटतया वर्त्तनम्। स्त्रीत्वे पुंस्त्वे च तयोः श्रैष्ठ्ये रतिकौशलमेव हेतुः न कुलमाचारो वा। विप्रत्वे सूत्रधारणमेव न तु शौचसन्तोषादिविप्रलक्षणम्॥ ३॥ लिङ्गमिति। आश्रमाणां ख्यातौ ज्ञाने लिङ्गमेव दण्डाजिनादिकमेव हेतुर्न त्वाचारविशेषः। अन्योन्यापत्तौ परस्परनमस्कारादिव्यवहारे च कारणं लिङ्गमेवेत्यन्वयः। आवृत्या धनादिदानासामर्थ्येन न्याये दौर्बल्यं पराजयो भवति। पाण्डित्ये चापलं वचः बहुभाषणमेव कारणं न तु विद्याभ्यासः॥ ४॥ अनाढ्यतेति। असाधुत्वे नीचत्वे चौर्याद्यभियोगे च अनाढ्यता दरिद्रतैव हेतुः न जात्यादि। साधुत्वे उत्कृष्टत्वे च दम्भः व्याजेन वर्त्तनं हेतुर्न त्वाचारः। उद्वाहे विवाहे परस्परस्वीकार एव हेतुः नतु शास्त्रीयो विधिः। प्रसाधनं देहमलापनयनमेव स्नानं न तु शास्त्रीयं तीर्थावगाहनम्॥ ५॥ दूरे इति। दूरे वर्त्तमानं वार्ययनं जलाशय एव तीर्थं नतु गुर्वादि गङ्गादि वा। लावण्ये निमित्ते केशधारणमेव भूषणादेरविधानत्वात्। उदरभरणमेव स्वार्थः परमपुरुषार्थः नतु धर्मादिः। सत्यत्वे धाष्टर्यमेव हेतुः नतु यथार्थभाषणम्॥ ६॥ दाक्ष्यमित्यर्द्धम्। कुटुम्बभरणमेव न तु धर्मादिपुरुषार्थसंपादनम्। दाक्ष्यं निपुणत्वम्। यशोऽर्थे एव धर्मसेवनं नतु परलोकार्थे॥ ७॥ एवमिति। एवं दुष्टाभिः प्रजाभिः क्षितिमण्डले आकीर्णे व्याप्ते सति ब्राह्मणादीनां मध्ये यो बली स एव नृपो भवितेत्यन्वयः॥ ८॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

रुचिहेतुः नत्वाभिज्यात्यादि सा च व्यावहारिकी लोकव्यवहारसिद्धा मायैव विवेकप्रतिबन्धिनी स्त्रीत्वे चेति स्त्रीत्वपुंस्त्वयोर्हेतुर्नास्ति स्त्रीत्वपुंस्त्वैकान्तगुणवृत्तयोगो हेतुः किन्तु अभिरतिरेव सम्भोग एव इत्यर्थः॥ ३॥ अवृत्तिः दारिद्र्यम्॥ ४॥ स्वीकार एव न तु शास्त्रीयविधिनेत्यर्थः॥ ५॥ उदरमिति उदरपोषणमेव स्वार्थः स्वस्य पुरुषार्थः॥ ६—१९॥

## श्रीमद्वीरराघवव्याख्या

'तच्छीलाचारवादिनः' इत्येतदेव प्रपञ्चयन् कृतयुगप्रवृत्तिसमीपकालं लक्षयन् तत्प्रवृत्तिप्रकारं कलियुगं प्रादुर्भावलक्षणञ्च वदन् राजवंशानुकीर्तनमुपसंहरति द्वितीयेन—ततश्चेत्यादिना। हे राजन्! बलिना बलीयसा कालेन निमित्तेनानुदिनं धर्मादयो नङ्क्ष्यन्ति॥ १॥ वित्तमेवेति। जन्माभिजात्यं गुणः सद्गुणः तदावहं वित्तमेवेत्यर्थः। तथा धर्मन्याययोर्व्यवस्थायां बलं धनबलमेव

कारणं हेतुः ॥ २ ॥ दाम्पत्येति । दाम्पत्ये भर्तृभार्यात्वे अभिरुचिरेव कारणं नत्वभिजात्यादिः । व्यावहारिके क्रयविक्रयादिव्यापारे मायावञ्चनमेव नतु निष्कापट्य व्यावहारिकीति पाठे लोकव्यवहारसिद्धा मायैव विवेकप्रतिबन्धिनीत्यर्थः । स्त्रीत्वे पुंस्त्वे च तयोः प्राशस्त्ये रतिकौशल्यमेव हेतुर्नतु स्त्रीत्वपुंस्त्वैकान्तगुणवृत्तयः सूत्रमेव न तु उपनयनादि ॥ ३ ॥ लिङ्गमेवेति । आश्रमाणां ख्यातौ ज्ञाने लिङ्गमेव दण्डाजिनादिकमेव हेतुर्नत्वाचारविशेषः अन्योन्ययापत्तिकारणमाश्रमादाश्रमान्तरप्राप्तौ च कारणं वर्णान्तरात् वर्णान्तर-प्राप्तौ वा कारणमित्यर्थः । अवृत्तिः दरिद्रता तथा न्यायदौर्बल्यं पराजयः सप्तम्यन्तपाठे तस्यां सत्यां न्यायदौर्बल्यं सा न्यायदौर्बल्ये हेतुरित्यर्थः । पाण्डित्ये चापलं वचः बहुभाषणंहेतुः ॥ ४ ॥ अनाढ्यतैवेति । असाधुत्वे निकृष्टत्वे अनाढ्यतैव हेतुः नतु कुलहीनता साधुत्वे उत्कृष्टत्वे दम्भः देहालङ्कारः उद्वाहे विवाहे स्वीकरणमेव नतु शास्त्रीयविधिः । प्रसाधनं शरीरमलापनयनमेव स्नानं नतु विशुद्धतीर्थावगाहनम् ॥ ५ ॥ दूर इति । यद्दूरे वर्तमानं जलाशयस्तत् तीर्थं नतु गङ्गादिः नतु गुर्वादिर्वा । लावण्ये निमित्ते केशधारणं नतु शास्त्रविहिताङ्गक्षौरम् उदरभरमेव सर्वपुरुषार्थः सत्यत्वे सत्यवादित्वे धार्ष्ट्यं प्रसहिष्णुत्वं नतु अनृतवादित्वम् ॥ ६ ॥ दाक्ष्ये समर्थत्वे कुटुम्बभरणं नतु धर्मादिपुरुषार्थसम्पादनं यशोर्थे नतु पारलोकार्थे एवम् इत्थम्भूताभिः प्रजाभिराकीर्णे भूमण्डले ॥ ७ ॥ ये ब्राह्मणादयस्तेषां मध्ये यो बली स एव नृपो भविता प्रजा इति लुब्धैरर्थकामपरैरत एव निर्घृणैर्निष्कृपैः दस्युधर्मभिः चौरव्याघ्रप्रवृत्तिभिः राजन्यैः ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कल्क्यवतारं तच्चरितं च युगविभागलक्षणं च वक्त्यस्मिन्नध्याये, तत्रादौ कलिवैभवमाह—ततश्चेति । कालक्षयानन्तरं धर्मादयो नङ्क्ष्यन्तीत्यन्वयः । कारकाभावादिति शेषः ॥ १ ॥ यदि कलौ नृणां वित्तमस्ति तर्ह्येव तेषां जन्मादयः पूज्याः स्युरिति शेषः । अयं धर्मोऽयं न्याय इति व्यवस्थायां बलमेव कारणं धनमिति वा पाठः ॥ २ ॥ अभिरुचिरन्योन्यस्नेहलक्षणेच्छा हेतुः न कुलगोत्रादिशास्त्रीययोगः व्यावहारिके क्रयविक्रयादिव्यवहारविषये मायैव हेतुः अतिरतिः अतितरां मनोदर्शनीयताविशेषः सूत्रं तन्तुलक्षणम् ॥ ३ ॥ आश्रमाणां ख्यातौ ज्ञाने ब्रह्मचर्याद्याश्रम इति वक्तव्ये अन्योन्यापत्तिकारणम् आश्रमादाश्रमान्तरप्राप्तिकारणं लिङ्गमुपाध्यायादिलक्षणं लाञ्छनम् अन्यायदौर्बल्ये अन्यायाकरणे अवृत्तिर्वृत्तिराहित्यं वृत्त्यभाव एव हेतुः कृतो न्यायोन्याय इत्यर्थः । अचापलम् अचञ्चलतालक्षणं वचः कारणमित्यनुवर्तते ॥ ४ ॥ अनाढ्यता दरिद्रत्वम् असाधुत्वे त्वं मम जाया इति स्वीकारः हेतुः प्रसाधनं शरीरस्य शुद्धिरलङ्कारो वा ॥ ५ ॥ दूरेवार्ययनं दूरतरजलयात्रा यत्र क्रियते तत्तीर्थं नतु गुर्वादि केशधारणं धम्मिल्लधारणम् उदरम्भरता स्वोदरपूर्णता स्वार्थः स्वप्रयोजनम् ॥ ६–७ ॥ ब्रह्म ब्राह्मणः दस्यूनां धर्माणि चौर्यादीनि येषां ते तथा तैः ॥ ८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

लावण्ये निमित्ते केशधारणमेव करिष्यन्ति इति सप्तम्यन्तानामन्वयः ॥ ६–२८ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

द्वितीये तु कलेर्दोषस्तदन्ते कल्किसम्भवः । कलेर्वृद्धिपरिज्ञानं तदन्ते सत्यमुच्यते ॥

कलिदोषानाह—तत इति ॥१॥ वित्तमेवेति यस्य वित्तं वर्तते स एव सत्कुलजन्मा स एव सदाचारः स एव सद्गुणः इत्येव-मेवाग्रे अपि व्याख्येयम् ॥ २–३ ॥ अन्योन्यापत्तौ परस्परमुत्कर्षापकर्षप्राप्तौ लिङ्गमेव दण्डाजिनशिखात्यागादिकमेव कारणं न तु ज्ञानसदाचारादिकम् अवृत्त्या मुद्राद्यर्पणासामर्थ्येनैव हेतुना न्यायदौर्बल्यं न्याये पराजयः चापलं वचः चापल्ययुक्तं भाषणम् ॥४–५॥ वार्ययनं जलाशयः ॥ ६–१४ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

कलिदोषं पुनः कृतप्रवृत्त्यादिकं च द्वितीयेऽध्याये निरूपयति, तत्र यदुक्तं म्लेच्छप्रायाः भूभृतो भविष्यंतीत्यादितदनन्तरं किं भविष्यतीत्याकाङ्क्षायामाह—तत इति ॥ १ ॥ जन्माचारगुणानामुदयो यस्मात् स तथा जन्मादिविख्यातिः हेतुर्वित्तमेव यो वित्तवान् स एव श्रेष्ठजन्मादिमानित्यर्थः । तथा धर्मन्याययोर्व्यवस्थायां वित्तमेव कारणं हेतुः कलावित्यग्रेऽपि योज्यम् ॥ २ ॥ किञ्च दाम्पत्ये जायापतिभावे अभिरुचिरेव हेतुर्नतु कुलगोत्रादिः व्यावहारिके क्रयविक्रयादौ माया वञ्चनमेव हेतुः नतु सत्यभाषणं स्त्रीत्वे पुंस्त्वे च तयोः श्रेष्ठत्वे रतिः अत्यासक्तिरेव हेतुर्नतूभयधर्माचारः विप्रत्वे सूत्रमेव हेतुर्नतु सन्ध्योपासनसत्यशौचादिः ॥ ३ ॥ आश्रमाणां ख्यातौ ज्ञाने दण्डाजिनादिकं हेतुर्नतु गुरुशुश्रूषादि अन्योऽन्यतः दानदीक्षादिभिः अप्रातौ प्राप्तौ च लिङ्गमेव हेतुर्नतु पात्रत्वादिः न्याये सदोषत्वनिर्दोषत्वाभ्यां निग्रहानुग्रहनीतौ अवृत्त्या दौर्बल्यं निर्धनत्वादिना दुष्ट्यत्वं भवति नतु सदोषत्वेन, पाण्डित्ये चापलं वचः लोकरञ्जनार्थे बहुभाषणं न तु तत्त्वज्ञता असाधुत्वे उपेक्षणीयत्वे अनाढ्यता धनविद्यादिराहित्यमेव हेतुर्नतु

दुष्कृतित्वं साधुत्वे आदरणीयत्वे दम्भ एव नतु सुकृतित्वम्। उद्वाहे विवाहे स्वीकार एव नतु पाणिग्रहणमन्त्राः प्रसाधनमलङ्कारः ॥ ४–५ ॥ वार्ययनं जलाशयः दूरे स्थितं तीर्थं भवति यत्राविहारप्रदत्वान्नतु—

गङ्गां च यमुनां चैव प्लक्षजातां सरस्वतीम्। रथस्थां सरयूं चैव गण्डकीं गोमतीं तथा ॥
अपर्युषितपापास्ते नदीः सप्त पिबन्ति ये।

इति महाभारतादिप्रसिद्धानि तीर्थानि लावण्येति मित्रं केशधारणं नतु यथाशास्त्रं ब्रह्मचर्यादिनिमित्तम् उदरंभरता उदरम्भरत्वमौपस्थ्यजैह्वयकसुखसाधनाचरत्वं स्वार्थः पुरुषार्थः नतु तपोव्रताद्याचरणम् ॥ ६–८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

द्वितीये तु कलेर्दोषवृद्धौ कल्क्यवतारतः। अधर्मिष्ठे जने नष्टे कृतागमा निरूप्यते ॥ १ ॥

कुत एवं विपर्यय इत्यपेक्षायां कलिकालदोषादित्याह—ततश्चेति। हे राजन् बलिना कालेनाग्रे ततोऽनुदिनं धर्मादि नङ्क्ष्यतीत्यन्वयः। स्मृतिः कर्त्तव्याकर्त्तव्यानुसन्धानम् ॥ १ ॥ जन्मनिमित्तः सदाचारनिमित्तो वा यो गुणः लोके उत्कर्षस्तस्योदयो यस्मात्तथाभूतं वित्तमेव। वित्तवतो नीचस्याप्युत्कर्षः। न तु तद्धीनस्योत्तमकुलोत्पत्त्यादिमतोऽपीत्यर्थः। तथा धर्मन्याययोर्व्यवस्थायां धनाभिजनादिबलमेव कारणं न तु यथार्थतेत्यर्थः ॥ २ ॥ दाम्पत्ये भार्यापतिभावे परस्पराभिरुचिरेव हेतुः—न कुलगोत्रवृद्धेच्छादिः। व्यावहारिके क्रयविक्रयादिव्यापारे मायावञ्चनमेव हेतुर्न तु निष्कपटतया वर्त्तनम्। स्त्रीत्वे पुंस्त्वे च तयोः श्रैष्ठ्ये रतिकौशलमेव हेतुः न कुलमाचारो वा। विप्रत्वे सूत्रधारणमेव न तु शौचसन्तोषादिविप्रलक्षणम् ॥ ३ ॥ आश्रमाणां ख्यातौ ज्ञाने लिङ्गमेव दण्डाजिनादिकमेव हेतुर्न त्वाचारविशेषः। अन्योऽन्यापत्तौ परस्परनमस्कारादिव्यवहारे च कारणं लिङ्गमेवेत्यन्वयः। अवृत्त्या धनादिदानासामर्थ्येन न्याये दौर्बल्यं पराजयो भवति। पाण्डित्ये चापलं वचः बहुभाषणमेव कारणं न तु विद्याभ्यासः॥४॥ असाधुत्वे नीचत्वे अनाढ्यता दरिद्रतैव हेतुः न जात्यादि। साधुत्वे उत्कृष्टत्वे च दम्भः देहालङ्कारो हेतुर्न त्वाचारः। उद्वाहे विवाहे परस्परस्वीकार एव हेतुः न सुशास्त्रीयो विधिः। प्रसाधनं देहमलापनयनमेव स्नानं न तु शास्त्रीयं तीर्थावगाहनम् ॥ ५ ॥ दूरे वर्त्तमानं वार्ययनं जलाशय एव तीर्थं न तु गङ्गादि वा। लावण्ये निमित्ते केशधारणमेव भूषणादेरविद्यमानत्वात्। उदरभरणमेव स्वार्थः परमपुरुषार्थः न तु धर्मादिः। सत्यत्वे धाष्टर्यमेव हेतुः—न तु यथार्थभाषणम् ॥ ६ ॥ दाक्ष्यं निपुणतया सामर्थ्यं कुटुम्बभरणमेव न तु धर्मादिपुरुषार्थसम्पादनम्। यशोर्थे धर्मसेवनं न तु परलोकार्थे ॥ ७ ॥ एवं दुष्टाभिः प्रजाभिः क्षितिमण्डले आकीर्णे व्याप्ते सति ब्राह्मणादीनां मध्ये यो बली स एव नृपो भवितेत्यन्वयः ॥ ८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कलेर्दोषविवृद्धौ तु द्वितीये कल्किसंभवात्। अधर्मिजनसंनाशे स्यात्पुनश्च कृतागमः ॥ १ ॥

'तच्छीलाचारवादिनः' इत्येतदेव प्रपञ्चयन् कृतयुगप्रवृत्तिसमीपकालं लक्षयंस्तत्प्रवृत्तिप्रकारं कलियुगप्रादुर्भावलक्षणं च वदन् राजवंशानुकीर्त्तनमुपसंहरति ततश्चेत्यादिना। ततश्चेति। ततः हे राजन्, बलिना बलीयसा कालेन निमित्तेन, अनुदिनं धर्मः, सत्यं, शौचं, क्षमा, दया, आयुः बलं, स्मृतिश्च नङ्क्ष्यति ॥ १ ॥ वित्तमेवेति। कलौ जन्माभिजात्यं च आचारो वर्णाश्रमोचितः सदाचारश्च गुणाः क्षमादयादयः सद्गुणश्च उदया उदयकालश्च ते, एकवचनत्वे जन्मादीनामुदयः, जन्माद्यावहमित्यर्थः। वित्तमेव यस्य वित्तमस्ति स सत्कुलजन्मादिमानित्यर्थः। धर्मश्च न्यायश्च तयोर्व्यवस्था बलं धनबलमेव कारणं हि। यद्वा। बलं शरीरं कारणं, अयं धर्मोऽयं न्याय इति व्यवस्थायां बलमेव कारणमित्यर्थः ॥२॥ दांपत्य इति। दांपत्ये भार्याभर्तृत्वे भार्यापतिभावे इति यावत्। अभिरुचिः एव हेतुः कारणं, अन्योन्यस्नेहलक्षणेच्छैव निमित्तं, न तु कुलगोत्रादिशास्त्रीययोग इत्यर्थः। व्यावहारिके क्रयविक्रयादिव्यवहारविषये, माया वञ्चनमेव हेतुः, न तु निष्कापट्यं, स्त्रीत्वे पुंस्त्वे च तयोः प्राशस्त्ये च तयोः श्रेष्ठत्वे इति यावत्। रतिः रतिक्रियाकौशल्यमेव, हेतुः, न तु सत्कुलजत्वं सदाचारवत्त्वं वा क्वचित्तु अतिरुचिरितिपाठः। हिरवधारणार्थः। विप्रत्वे द्विजातिभावे सूत्रं वामस्कन्धे त्रिसरतन्तुधारणमात्रमेव हेतुः, न तु यथाविध्युपनयनादिः। अत्रापि हिः पूर्ववत् ॥ ३ ॥ लिङ्गमेवेति। आश्रमख्यातौ आश्रमाणां ज्ञाने, लिङ्गं दण्डाजिनादिकमेव हेतुः, न त्वाचारविशेषः। अन्योन्यापत्तिकारणमाश्रमादाश्रमान्तरप्राप्तौ च कारणं लिङ्गमेव। यद्वा। बहूदकहंसादीनामन्योन्यापत्तौ नमस्कारादिव्यवहारे तदेव कारणम्। अवृत्त्या मुद्रार्पणादिदानासामर्थ्येन, न्यायदौर्बल्यं पराजयः, सप्तम्यन्तपाठेऽपि, अवृत्तौ दरिद्रतायां सत्यां न्यायदौर्बल्यं, अवृत्तिरेव न्यायदौर्बल्ये हेतुरित्यर्थः। पाण्डित्ये पण्डिततायां च चापलं वचः बहुभाषणमेव हेतुः, न तु व्युत्पत्तिः ॥ ४ ॥ अनाढ्यतेति। असाधुत्वे नीचत्वे अनाढ्यतैव हेतुः, न तु कुलहीनता। साधुत्वे उत्कृष्टत्वे तु, दम्भः एव हेतुः, न तु स्वच्छान्तःकरणता, उद्वाहे विवाहे च स्वीकारः एव हेतु, न तु स्वगृह्योक्तो विधिविशेषः। प्रसाधनं शरीरमलापनयनमेव स्नानं, न तु विशुद्धतीर्थावगाहनम्। स्नानमेव प्रसाधनं प्रकृष्टं साधनं

न तु स्वधर्मादिरित्यन्ये । प्रसाधनमलंकारधारणं स्नानमित्यपरे ॥ ५ ॥ दूर इति । दूरे, वार्ययनं दूरे वर्त्तमानो जलाशयः तीर्थम्, न तु गङ्गादिर्गुर्वादिर्वा । लावण्ये सुन्दरत्वे, केशधारणं धमिल्लधारणं, न तु स्वधर्मः । उदरंभरता स्वोदरपूर्णता स्वार्थः, सत्यत्वे सत्यवादित्वे, धाष्ट्यं असहिष्णुत्वं, न तु सत्यवादित्वम् । एव हि, इत्यवधारणद्वयमुक्तार्थदार्ढ्याय ॥ ६ ॥ दाक्ष्ये इति । दाक्ष्ये समर्थत्वे कुटुम्बभरणं, न तु धर्मादिसंपादनम् । धर्मसेवनमुपरिष्टाद्धर्मसेवित्वख्यापनमपि यशोऽर्थे, न तु परलोकार्थम् । एवमित्थंभूताभिः दुष्टाभिः प्रजाभिः, क्षितिमण्डले आकीर्णे व्याप्ते सति, ब्राह्मणक्षत्रियवैश्यशूद्राणां मध्ये, यः बली बलवान्, स एव नृपः भविता, न तु क्षत्रिय एव ॥ ७ ॥ प्रजा हीति । लुब्धैरर्थकामपरैः, अत एव, निर्घृणैर्निष्कृपैः, दस्युधर्मभिः चौरव्याघ्रसदृशैः, राजन्यैर्नृपसदैः, अपहृता, दाराः स्त्रियो द्रविणानि च यासां ताः प्रजाः, गिरिकाननं यास्यन्तीत्यर्थः । यास्यन्ति हि ॥ ८ ॥

## हिन्दी अनुवाद

## कलियुग के धर्म

**श्रीशुकदेवजी कहते हैं**—परीक्षित्! समय बड़ा बलवान् है; ज्यों-ज्यों घोर कलियुग आता जायगा, त्यों-त्यों उत्तरोत्तर धर्म, सत्य, पवित्रता, क्षमा, दया, आयु, बल और स्मरणशक्तिका लोप होता जायगा ॥ १ ॥ कलियुग में जिसकेपास धन होगा, उसी को लोग कुलीन, सदाचारी और सद्गुणी मानेंगे । जिसके हाथमें शक्ति होगी वही धर्म और न्यायकी व्यवस्था अपने अनुकूल करा सकेगा ॥ २ ॥ विवाह-सम्बन्धके लिये कुल-शीलयोग्यता आदि की परख-निरख नहीं रहेगी, युवक-युवती की पारस्परिक रुचि से ही सम्बन्ध हो जायगा । व्यवहारकी निपुणता सचाई और ईमानदारीमें नहीं रहेगी; जो जितना छल-कपट कर सकेगा, वह उतना ही व्यवहारकुशल माना जायगा । स्त्री और पुरुषकी श्रेष्ठताका आधार उनका शील-संयम न होकर केवल रतिकौशल ही रहेगा । ब्राह्मणकी पहचान उसके गुण-स्वभाव से नहीं यज्ञोपवीत से हुआ करेगी ॥ ३ ॥ वस्त्र, दण्ड-कमण्डलु आदि से ही ब्रह्मचारी, संन्यासी आदि आश्रमियोंकी पहचान होगी और एक-दूसरे का चिह्न स्वीकार कर लेना ही एक से दूसरे आश्रममें प्रवेशका स्वरूप होगा । जो घूस देने या धन खर्च करने में असमर्थ होगा, उसे अदालतों से ठीक-ठीक न्याय न मिल सकेगा । जो बोलचालमें जितना चालाक होगा, उसे उतना ही बड़ा पण्डित माना जायगा ॥ ४ ॥ असाधुताकी—दोषी होने की एक ही पहचान रहेगी गरीब होना जो जितना अधिक दम्भ-पाखण्ड कर सकेगा, उसे उतना ही बड़ा साधु समझा जायगा । विवाह के लिये एक-दूसरेकी स्वीकृति ही पर्याप्त होगी, शास्त्रीय विधि-विधानकी—संस्कार आदि की कोई आवश्यकता न समझी जायगी । बाल आदि सँवारकर कपड़े लत्ते से लैस हो जाना ही स्नान समझा जायगा ॥ ५ ॥ लोग दूरके तालाब को तीर्थ मानेंगे और निकट के तीर्थ गङ्गा-गोमती, माता पिता आदिकी उपेक्षा करेंगे । सिरपर बड़े-बड़े बाल—काकुल रखाना ही शारीरिक सौन्दर्य का चिह्न समझा जायगा और जीवन का सबसे बड़ा पुरुषार्थ होगा—अपना पेट भर लेना । जो जितनी ढिठाई से बात कर सकेगा, उसे उतना ही सच्चा समझा जायगा ॥ ६ ॥ योग्यता-चतुराई का सबसे बड़ा लक्षण यह होगा कि मनुष्य अपने कुटुम्ब का पालन कर ले । धर्म का सेवन यश के लिये किया जायगा । इस प्रकार जब सारी पृथ्वी पर दुष्टों का बोलवाला हो जायगा, तब राजा होने का कोई नियम न रहेगा, ब्राह्मण, क्षत्रिय, वैश्य अथवा शूद्रों में जो बली होगा, वही राजा बन बैठेगा । उस समय के नीच राजा अत्यन्त निर्दय एवं क्रूर होंगे; लोभी तो इतने होंगे कि उनमें और लुटेरों में कोई अन्तर न किया जा सकेगा । वे प्रजा की पूँजी एवं पत्नियों तक को छीन लेंगे । उनसे डर कर प्रजा पहाड़ों और जंगलों में भाग जायगी । उस समय प्रजा तरह-तरह के शाक, कन्द-मूल, मांस, मधु, फल-फूल और बीज-गुठली आदि खा-खाकर अपना पेट भरेगी ॥ ७–९ ॥

**आच्छिन्नदारद्रविणा यास्यन्ति गिरिकाननम् । शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः ॥ ९ ॥**
**अनावृष्ट्या विनङ्क्ष्यन्ति दुर्भिक्षकरपीडिताः । शीतवातातपप्रावृड्हिमैरन्योन्यतः प्रजाः ॥ १० ॥**
**क्षुत्तृड्भ्यां व्याधिभिश्चैव सन्त‍प्स्यन्ते च चिन्तया । त्रिंशद्विंशतिवर्षाणि परमायुः कलौ नृणाम् ॥ ११ ॥**
**क्षीयमाणेषु देहेषु देहिनां कलिदोषतः । वर्णाश्रमवतां धर्मे नष्टे वेदपथे नृणाम् ॥ १२ ॥**
**पाखण्डप्रचुरे धर्मे दस्युप्रायेषु राजसु । चौर्यानृतवृथाहिंसानानावृत्तिषु वै नृषु ॥ १३ ॥**
**शूद्रप्रायेषु वर्णेषुच्छागप्रायासु धेनुषु । गृहप्रायेष्वाश्रमेषु यौनप्रायेषु बन्धुषु ॥ १४ ॥**
**अणुप्रायास्वोषधीषु शमीप्रायेषु स्थास्नुषु । विद्युत्प्रायेषु मेघेषु शून्यप्रायेषु सद्मसु ॥ १५ ॥**
**इत्थं कलौ गतप्राये जने तु खरधर्मिणि । धर्मत्राणाय सत्त्वेन भगवानवतरिष्यति ॥ १६ ॥**

---

१—सन्तप्स्यन्ते । २—नेषु स्वरधार्मिषु ।

## कृष्णप्रिया व्याख्या

अन्वयः—आच्छिन्नदारद्रविणाः गिरिकाननं यास्यन्ति शाकमूलामिषक्षौद्रफलपुष्पाष्टिभोजनाः अनावृष्ट्या दुर्भिक्षकरपीडिताः शीतवातातपप्रावृड्हिमैः अन्योन्यतः प्रजाः विनङ्क्ष्यन्ति ॥ ९–१० ॥ क्षुत्तृड्भ्यां व्याधिभिः चिन्तया च सन्तप्स्यन्ते कलौ नृणां परम् आयुः त्रिंशद्विंशतिवर्षाणि ॥ ११ ॥ कलिदोषतः देहिनां देहेषु क्षीणमाणेषु वर्णाश्रमवतां नृणां वेदपथे धर्मे नष्टे धर्मे पाखण्डप्रचुरे राजसु दस्युप्रायेषु नृषु चौर्यानृतवृथाहिंसानानावृत्तिषु वर्णेषु शूद्रप्रायेषु धेनुषु छागप्रायासु आश्रमेषु गृहप्रायेषु बन्धुषु यौनप्रायेषु ओषधीषु अणुप्रायासु स्थास्नुषु शमीप्रायेषु मेघेषु विद्युत्प्रायेषु सद्मसु शून्याप्रायेषु इत्थं कलौ गतप्राये खरधर्मिणि जने ( सति ) धर्मत्राणाय भगवान् सत्वेन अवतरिष्यति ॥ १२–१६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

आच्छिन्ना अपहृता दारा द्रविणानि च यासां ताः । अष्टिर्बीजम् ॥ ९–१०–११ ॥ क्षीयमाणेष्वित्यादीनामित्थं कलौ गतप्राय इति पंचमेनान्वयः । क्षीयमाणेष्वल्पप्राणेषु ॥ १२ ॥ दस्युप्रायेषु चोरतुल्येषु चौर्यानृतवृथा हिंसाद्या नानावृत्तयो येषां तेषु ॥ १३ ॥ छागप्रायासु प्रमाणतः क्षीरतश्चाजातुल्यासु ॥ १४ ॥ अणुप्रायासु श्यामाकतुल्यासु । स्थास्नुषु ताडद्वहुलेषु । शून्यप्रायेषु धर्मादिरहितेषु सद्मसु गृहेषु ॥ १५ ॥ जने तु खरधर्मिणि दुःसहचेष्टिते कलौ गतप्राये ॥ १६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

आमिषं मांसम्, क्षौद्रं मधु ॥ ९–१० ॥ क्षुधादिभिश्च नंक्ष्यति । यद्वा—त्रिंशता सहिता विंशतिस्त्रिंशद्विंशतिः, पंचाशदित्यर्थः । परमायुः अहोपुण्यवानयमनेन बहु जीवनं प्राप्तमित्यर्थः ॥ ११ ॥ कलेर्दोषा असत्यसंभाषणादयस्तेभ्य इत्यर्थः ॥ १२ ॥ प्रायशब्दार्थस्त्वत्र तुल्यतैव । वृथा हिंसा पित्राद्यनुद्दिश्य पशुहननम् ॥ १३ ॥ आश्रमेषु संन्यासादिषु परिग्रहादिना गृहस्थतुल्येषु । योनिसंबंधेन संबंधिनो यौनाः श्वशुरश्यालादयस्तत्प्रायेषु, प्रायशब्दोऽत्र प्रधाने श्वसुरादिप्रधानेषु कर्तव्याथानुसंधानाथ श्यालश्यालीपत्यादीनाश्रयिष्यंतीति भावः ॥ १४ ॥ ओषध्यो यवगोधूमव्रीह्याद्याः । अणुप्रायासु श्यामाकतुल्यासु । यद्वा—ओषधीषु हरीतक्यादिषु, अणुप्रायासु निष्फलासु तृणप्रायासु "ओषध्यो यवव्रीह्याद्याः शिवाद्या अपि कीर्तिताः । अणुर्व्रीहिविशेषे ना तृणसूक्ष्माफलेषु च तुच्छे मानविशेषे च" इति कोशात् । शमीसक्तुफला, सा चाल्पवृक्षजातिः, यत्काष्ठे यज्ञेऽग्निमथनं क्रियते याज्ञिकैः । वृक्षेषु वटा- श्वत्थादिषु छायाद्यभावेन शमीतुल्येष्वित्यर्थः ॥ १५ ॥ क्वचित् 'जने तु' इति पाठस्तत्र खरधर्मिणीति तद्विशेषणम् । खरो रासभस्तद्वद्धर्मो निर्जलमैथुनकश्मलाशनादिलक्षणस्तद्वति सतीत्यर्थः । क्वचित् तेषु खरधर्मिषु इति पाठः ॥ १६ ॥

## अन्वितार्थप्रकाशिका

प्रजा इति । लुब्धैरर्थकामपरैरत एव निर्घृणैर्निष्कृतैर्दस्युधर्मभिर्लम्पकैः राजन्यैराच्छिन्ना अपहृता दारा द्रविणानि च यासां ताः प्रजा गिरिकाननमेव यास्यन्ति ॥ ९ ॥ शाकेति । शाकमूलामिषाणि क्षौद्रं मधु फलपुष्पे च अष्टिर्बीजं च तान्येव भोजनं यासां ताः । तत्राप्यनावृष्ट्या यो दुर्भिक्षः आहारालाभः करश्च स्वामिग्राह्यो भागस्ताभ्यां पीडिताः प्रजाः विनंक्ष्यन्ति ॥ १० ॥ शीतेति । तथा शीतवातादिभिः अन्योऽन्यतश्च क्षुत्तृड्भ्यां व्याधिभिः चिन्तया च प्रजाः सन्तप्स्यन्ते । सन्तापेनेति पाठे विनङ्क्ष्यन्तीति पूर्वस्यानुषङ्गः ॥ ११ ॥ त्रिंशदित्यर्द्धम् । कलौ त्रिंशद्विंशतिवर्षाणि नृणां परमायुर्भविष्यतीति शेषः । यद्वा शीतवातेत्यर्द्धं स्वपूर्वश्लोकेऽन्वेति । ततः क्षुत्तृडादिनिमित्तैः त्रिंशदादिवर्षाणि परमायुरिति ॥ १२ ॥ क्षीयमाणेष्विति पञ्चकम् । देहिनां कलिदोषतः देहेषु क्षीयमाणेषु ह्रस्वप्रमाणेषु दुर्बलेषु च वर्णाश्रमवतां नृणां धर्मपथे वेदमार्गे च नष्टे सति तथा अन्यधर्मेऽपि पाखण्डप्रचुरे राजसु च दस्युप्रायेषु चौरतुल्येषु । "प्रायो बाहुल्यतुल्ययोः" । येन केनापि प्रकारेण धनादिग्रहणतात्पर्येषु च नृषु चौर्यानृतवृथाहिंसाद्या नानावृत्तयो येषां तेषु तथाभूतेषु सत्सु ब्राह्मणादिवर्णेषु शूद्रप्रायेषु स्वस्वाचारभ्रष्टेषु धेनुषु छागप्रायासु प्रमाणतः क्षीरतः हिंस्यत्वतश्च अजतुल्यासु संन्यासाद्याश्रमेषु गृहप्रायेषु गृहिवन्मैथुनादिविषयभोगपरायणेषु बन्धुषु यौनप्रायेषु योनिसंबन्धो यौनस्तत्प्रायेषु ओषधीषु अणुप्रायासु अतिस्वल्पगुणासु स्थास्नुषु महावृक्षेषु शमीप्रायेषु परिमाणतः छायातः फलतश्च शमीवद्ध्रस्वेषु मेघेषु विद्युत्प्रायेषु तडिद्बहुलेषु स्वल्पजलेषु सद्मसु गृहेषुशून्यप्रायेषु अतिथिभोजनादिधर्मरहितेषु सत्सु इत्थं जनेषु खरधर्मिणि दुःसहचेष्टिते कलौ गतप्राये समाप्तप्राये सति भगवान्धर्मत्राणाय सत्त्वेन शुद्धसत्त्वमयेन वपुषाऽवतरिष्यति ॥ १३–१६ ॥

## श्रीमद्वीरराघवव्याख्या

आच्छिन्नाः अपहृता दाराः द्रविणनिचया यासां ताः प्रजाः गिरिकाननं यास्यन्ति तत्र शाकादिभोजनाः तत्र क्षौद्रं मधु अष्टिर्बीजम् ॥ ९ ॥ तत्राप्यनावृष्ट्या यः दुर्भिक्षकरः शाकाद्यभावकरः कालस्तेन यद्वा दुर्भिक्षे यः करः स्वामिग्राह्यो भागः तेन

पीडिताः शीतादिभिरन्योन्यतश्च पीडिताः नङ्क्ष्यन्ति प्रावृषि हिममेव केवलं नतु वृष्टिरित्यभिप्रायेण प्रावृडित्युक्तं तृतीयान्तानामसामर्थ्यात्पीडिता इत्यनेन सम्बन्धः। तत्र सन्तापस्त्रिविधः तापः इत्थं पीडितानां नृणां परमायुर्विंशतिस्त्रिंशद्वर्षाणि ॥ १०–११ ॥ क्षीयमाणेष्विति–सप्तम्यन्तानाम् इत्थं कलौ गतप्राये सतीति पञ्चमेन सम्बन्धः। वर्णाश्रमाचाराहीणामपि वेदपथे वेदमार्गे तदुक्ते धर्मे च नष्टे सति ॥ १२ ॥ राजसु दस्युप्रायेषु सत्सु तदेव विवृणोति—चौर्येति। चौर्यादिना वृत्तयो येषां तेषु ॥ १३ ॥ धेनुषु छागप्रायासु प्रमाणतः क्षीरतश्चाजातुल्यासु आश्रमेषु गृहप्रायेषु तद्वन्मैथुन्यधर्मपदेषु सत्सु बन्धुषु यौनप्रायेषु योनिसम्बन्धमात्रप्रधानेषु ॥ १४ ॥ ओषधीषु धान्येष्वणुप्रायासु अतिसूक्ष्मासु स्थास्नुषु वृक्षेषु शमीप्रायेषु परिमाणतः छायातः फलतश्च तुल्येषु इत्यर्थः। मेघेषु विद्युत्प्रायेषु तडिद्बहुलेषु। सद्मसु शून्यप्रायेष्वतिथिभोजनादिधर्मरहितेषु सत्सु ॥ १५ ॥ इतीत्थं खरधर्मिणि दुःसहचेष्टिते कलौ सत्त्वेन शुद्धसत्त्वमयेन देहेन ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आच्छिन्नदारद्रविणाः वलादाकृष्टभार्यावित्ताः क्षौद्रं मधु "मधु मद्यं मधु क्षौद्रं मधुपुष्परसं विदुः" इत्यभिधानं शाकादिभोजनं येषां ते तथा ॥ ९ ॥ दुर्भिक्षकरनिमित्तपीडिताः हिमं नीहारः ॥ १० ॥ तृषया तृष्णया व्याधिभिः कुष्ठादिभिः ॥ ११–१२ ॥ चौर्याद्यर्थे नानावृत्तयो येषां ते तथा ॥ १३ ॥ छाग अत्र तुगभावो लिङ्गव्यत्यासं प्रति गृहभावना एव बन्धुत्वं योनिसम्बन्धमात्रम् ॥ १४ ॥ अणुप्रायेषु कक्षमाषप्रचुरासु जनशून्यप्रायेषु ॥ १५–१६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

स्थास्नुषु वृक्षेषु ॥ १५–१६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

आष्टिर्बीजम् ॥ ९–११ ॥ क्षीयमाणेष्वित्यादिसप्तम्यन्तानामित्थं कलौ गतप्राये इति पञ्चमेन सम्बन्धः ॥ १२–१४ ॥ स्थास्नुषु वृक्षेषु ॥ १५ ॥ खरधर्मिणि सद्धर्मघातके गतप्राये समाप्तप्राये सत्त्वेन नियम्यभूतेन सत्त्वगुणेनोपलक्षित अवतरिष्यति आविर्भविष्यति ॥ १६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

लुब्धैरर्थकामपरैरत एव निर्घृणैर्निष्कृपैर्दस्युधर्माभिर्लुम्पकैः राजन्यैराच्छिन्ना अपहृता दाराद्र विणानि यासां ताः प्रजा गिरिकाननमेव यास्यन्ति ॥९॥तत्र शाकादिभोजनाः। तत्र क्षौद्रं मधु। आष्टिर्बीजम्। तत्राप्यनावृष्ट्या यो दुर्भिक्षः आहारालाभः करश्च स्वामिग्राह्यो भागस्ताभ्यां पीडिताः। तथा शीतादिभिरन्योन्यतश्च पीडिताः प्रजा नङ्क्ष्यन्तीत्यन्वयः ॥ १० ॥ तथा क्षुधादिभिर्निमित्तैः कलौ त्रिंशद्विंशतिवर्षाणि नृणां परमायुर्भविष्यतीति शेषः। व्याधिभिः रोगैः। सन्तापेन आध्यात्मिकादित्रिविधदुःखेन। चिन्तया शोकेन ॥ ११ ॥ क्षीयमाणेष्वित्यादिसप्तम्यन्तानां इत्थं कलौ गतप्राय इति पञ्चमेनान्वयः। क्षीयमाणेषु ह्रस्वप्रमाणेषु दुर्बलेषु। धर्मे वेदमार्गे च नष्टे सति ॥ १२ ॥ पाखण्डप्रचुरेषु स्वस्वमतकल्पितवेदविरुद्धधर्मनिश्चितेषु धर्मेषु। वेदविरुद्धस्यैव पाखण्डत्वात्। दस्युप्रायेषु येन केनादि प्रकारेण धनादिग्रहणतात्पर्येषु चौर्यानृतवृथाहिंसाद्या नाना वृत्तयो येषां ते तथाभूतेषु सत्सु नृषु ॥ १३ ॥ शूद्रप्रायेषु स्वस्वाचारभ्रष्टेषु ब्राह्मणादिवर्णेषु। छागप्रायासु प्रमाणतः क्षीरतश्च अजातुल्यासु। सन्न्यासाद्याश्रमेषु गृहप्रायेषु गृहिवन्मैथुनादविषयभोगपरायणेषु। बन्धुषु योनप्रायेषु योनिसम्बन्धो यौनस्तत्प्रायेषु ॥ १४ ॥ अणुप्रायासु अतिसूक्ष्मासु स्थास्नुषु महावृक्षेषु शमीप्रायेषु परिमाणतः चछायातः फलतश्च शमीवद्ध्रस्वेषु। मेघेषु विद्युत्प्रायेषु तडिद्बहुलेषु। स्वल्पजलेषु सद्मसु गृहेषु शून्यप्रायेषु अतिथिभोजनादिधर्मरहितेषु सत्सु ॥ १५ ॥ इत्थं जनेषु खरधर्मिणि दुस्सहचेष्टिते कलौ गतप्राये समाप्तप्राये सति। भगवान्धर्मत्राणाय शुद्धसत्त्वमयेन वपुषाऽवतरिष्यति ॥ १६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

शाकेति। शाकं च मूलं च आमिषं च क्षौद्रं मधु च पुष्पं चाष्टिर्बीजं च ताः भोजनं यासां ताः सत्यः, दुर्भिक्षं च करश्च तैः पीडिताः अनावृष्ट्या पीडिताः सत्यश्च, प्रजाः, नङ्क्ष्यन्ति नाशं प्राप्स्यन्ति ॥ ९ ॥ शीतेति। शीतं च वातश्च आतपश्च प्रावृट् च हिमानि हिमपतनानि च तैः, अन्योन्यतश्च, क्षुच्च तृट् च ताभ्यां, व्याधिभिः रोगादिशारीरोपद्रवैश्च, संतापेन त्रिविधतापेन, चिन्तया संतापेन जातया, वृथा चिन्तया च, पीडिताः प्रजाः, नङ्क्ष्यन्तीति योजनीयम्। इत्थंभूतपीडासमूहभाजामिति शेषः। नृणां, कलौ परमायुः परम आयुष्कालः, त्रिंशद्विंशतिवर्षाणि एव त्रिंशद्वर्षपर्यन्तं विंशतिवर्षपर्यन्तं वा, जीवनं परमायुर्भोगकाल

इत्यर्थः ॥ १० ॥ क्षीयमाणेष्विति । क्षीयमाणेष्वित्यादिसम्प्रन्यन्तानां 'इत्थं कलौ गतप्राये' इति पञ्चमेनाऽन्वयः । कालदोषतः, देहिनां देहेषु क्षीयमाणेष्वल्पप्रायेषु, वर्णाश्रमवतां नृणां, धर्मे वेदपथे च नष्टे सति ॥ ११ ॥ पाखण्डेति । धर्मे पाखण्डप्रचुरे सति, राजसु नृपेषु, दस्युप्रायेषु चौरतुल्येषु. नृपु, चौर्यं च अनृतं च वृथाहिंसा च तदाद्या नानावृत्तयो येषां तेषु सत्सु, वं ॥ १२ ॥ शूद्रप्रायेष्विति । वर्णेषु शूद्रसदृशेषु धेनुषु छागप्रायासु प्रमाणतः क्षीरतश्चाजातुल्यासु, आश्रमेषु गृहप्रायेषु, गृहिवन्मैथुनपरेषु, बन्धुषु यौनप्रायेषु, योनिसंबन्धमात्रप्रधानेषु ॥ १३ ॥ अण्विति । औषधीषु धान्येषु, अणुप्रायासु अतिसूक्ष्मासु, स्थास्नुषु वृक्षेषु शमीप्रायेषु परिमाणतः छायातः फलतश्च शमीसमानेषु, मेघेषुविद्युत्प्रायेषु तडिद्बहुलेषु, सद्मसु गृहेषु, शून्यप्रायेषु अतिथिभोजनादि-धर्मरहितेषु सत्सु ॥ १४ ॥ इत्थमिति । इत्थंभूतेषु जनेषु सत्सु, खरधर्मिणि दुःसहचेष्टिते कलौ, गतप्राये समाप्तप्राये सति, धर्मत्राणाय, भगवान् सत्त्वेन शुद्धसत्त्वमयदेहेन, अवतरिष्यति ॥ १५ ॥ धर्मत्राणायेत्यनेन धर्मत्राणमेवावतारप्रयोजनमित्युक्त तदेव सहेतुक-मुपपादयति । चराचरगुरोरिति । चराचरगुरोः चराचरहितप्रवर्त्तकस्य, परावरगुरोरित्यपि क्वचित् पाठः । ईश्वरस्य, अखिलात्मनः विष्णोः, जन्मेह प्रादुर्भावः, साधूनां धर्मत्राणाय, कर्मापनुत्तये निःश्रेयसप्रतिबन्धककर्मनिवर्त्तनाय स्यादिति शेषः । विष्णोर्विशेषण-त्रयेण सर्वहितप्रवर्तकत्वसर्वप्रशास्तृत्वान्तःस्थितिधारकत्वान्युक्तानि ॥ १६ ॥

## हिन्दी अनुवाद

कभी वर्षा न होगी—सूखा पड़ जायगा; तो कभी कर-पर-कर लगाये जायँगे । कभी कड़ाके की सर्दी पड़ेगी तो कभी पाला पड़ेगा, कभी आँधी चलेगी, कभी गरमी पड़ेगी, तो कभी बाढ़ आ जायगी । इन उत्पातों से तथा आपस के संघर्ष से प्रजा अत्यन्त पीड़ित होगी, नष्ट हो जायगी ॥ १० ॥ लोग भूख-प्यास तथा नाना प्रकार की चिन्ताओं से दुःखी रहेंगे । रोगों से तो उन्हें छुटकारा ही न मिलेगा । कलियुग में मनुष्यों की परमायु केवल बीस या तीस वर्ष की होगी ॥ ११ ॥ परीक्षित् ! कलि काल के दोष से प्राणियों के शरीर छोटे-छोटे, क्षीण और रोगग्रस्त होने लगेंगे । वर्ण और आश्रमों का धर्म बतलाने वाला वेदमार्ग नष्टप्राय हो जायगा ॥ १२ ॥ धर्म में पाखण्ड की प्रधानता हो जायगी । राजे-महाराजे डाकू-लुटेरों के समान हो जायँगे । मनुष्य चोरी, झूठ तथा हिंसा आदि नाना प्रकार के कुकर्मों से जीविका चलाने लगेंगे ॥१३॥ चारों वर्णों के लोग शूद्रों के समान हो जायँगे । गौएँ बकरियों की तरह छोटी-छोटी और कम दूध देने वाली हो जायँगी । वानप्रस्थी और संन्यासी आदि विरक्त आश्रम वाले भी घर-गृहस्थी जुटाकर गृहस्थों का-सा व्यापार करने लगेंगे । जिनसे वैवाहिक सम्बन्ध है, उन्हीं को अपना सम्बन्धी माना जायगा ॥ १४ ॥ धान, जौ, गेहूँ आदि धान्यों के पौधे छोटे-छोटे होने लगेंगे । वृक्षों में अधिकांश शमी के समान छोटे और कँटीले वृक्ष ही रह जायँगे । बादलों में बिजली तो बहुत चमकेगी, परन्तु वर्षा कम होगी । गृहस्थों के घर अतिथि-सत्कार या वेदध्वनि से रहित होने के कारण अथवा जनसंख्या घट जाने के कारण सूने-सूने हो जायँगे ॥ १५ ॥ परीक्षित् ! अधिक क्या कहें—कलियुग का अन्त होते-होते मनुष्यों का स्वभाव गधों-जैसा दुःसह बन जायगा, लोग प्रायः गृहस्थी का भार ढोने वाले और विषयी हो जायँगे । ऐसी स्थिति में धर्म की रक्षा करने के लिये सत्त्वगुण स्वीकार करके स्वयं भगवान् अवतार ग्रहण करेंगे ॥ १६ ॥

चराचरगुरोर्विष्णोरीश्वरस्याखिलात्मनः । धर्मत्राणाय साधूनां जन्म कर्मापनुत्तये ॥ १७ ॥

शम्भलग्राममुख्यस्य ब्राह्मणस्य महात्मनः । भवने विष्णुयशसः कल्किः प्रादुर्भविष्यति ॥ १८ ॥

अश्वमाशुगमारुह्य देवदत्तं जगत्पतिः । असिनासाधुदमनमष्टैश्वर्यगुणान्वितः ॥ १९ ॥

विचरन्नाशुना[1] क्षोण्यां हयेनाप्रतिमद्युतिः । नृपलिङ्गच्छदो दस्यून् कोटिशो निहनिष्यति ॥ २० ॥

अथ तेषां भविष्यन्ति मनांसि विशदानि वै ।

वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशाम् । पौरजानपदानां वै हतेष्वखिलदस्युषु ॥ २१ ॥

तेषां प्रजाविसर्गश्च स्थविष्ठः सम्भविष्यति । वासुदेवे भगवति सत्त्वमूर्तौ हृदि स्थिते ॥ २२ ॥

यदावतीर्णो भगवान् कल्किर्धर्मपतिर्हरिः । कृतं भविष्यति तदा प्रजासूतिश्च सात्त्विकी ॥ २३ ॥

यदा चन्द्रश्च सूर्यश्च तथा तिष्यबृहस्पती । एकराशौ समेष्यन्ति तदा भवति तत् कृतम् ॥ २४ ॥

१—ऽसिना ।

### कृष्णप्रिया व्याख्या

अन्वयः—चराचरगुरोः अखिलात्मनः ईश्वरस्य विष्णोः साधूनां धर्मत्राणाय कर्मापनुत्तये जन्म ॥ १७ ॥ शम्भलग्राम-मुख्यस्य महात्मनः ब्राह्मणस्य विष्णुयशसः भवने कल्किः प्रादुर्भविष्यति ॥ १८ ॥ अष्टैश्वर्यगुणान्वितः जगत्पतिः आशुगं देवदत्तम् अश्वम् आरुह्य अप्रतिमद्युतिः आशुना हयेन क्षोण्यां विचरन् नृपलिङ्गच्छदः कोटिशः दस्यून् निहनिष्यति ॥ १९–२० ॥ अखिलदस्युषु हतेषु अथ वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशां पौरजानपदानां तेषां मनांसि विशदानि भविष्यन्ति ॥२१॥ वासुदेवे भगवति सत्त्व-मूर्तौ हृदि स्थिते तेषां प्रजाविसर्गः स्थविष्ठः सम्भविष्यति ॥ २२ ॥ हरिः धर्मपतिः भगवान् यदा अवतीर्णः ( तदा ) कृतं भविष्यति प्रजासूतिः च सात्त्विकी ॥ २३ ॥ यदा चन्द्रः सूर्यः तिष्य बृहस्पती एकराशौ समेष्यंति तदा तत्कृतं भवति ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एतत्प्रपंचयति चतुर्भिः । चराचरगुरोरीश्वरस्येति च धर्मत्राणे हेतुः गुरुत्वेश्वरत्वयोरुपपादनमखिलस्य विश्वस्यात्मनः कारणस्येति । एवंभूतस्य विष्णोर्जन्म साधूनां धर्मत्राणाय धर्मत्राणप्रयोजनमाह कर्मापनुत्तये मोक्षाय ॥ १७ ॥ शंभलग्रामे मुख्यस्य प्रधानस्य नाम्ना विष्णुयशसो ब्राह्मणस्य भवने गृहे ॥ १८ ॥ धर्मत्राणप्रकारमाह अश्वमिति । असाधवो दम्यन्ते येन तमश्व-मारुह्यासिना दस्यूनकोटिशो निहनिष्यतीत्युत्तरेणान्वयः । असाधुदमन इति पाठे कल्किविशेषणम् । अणिमाद्यष्टैश्वर्याणि गुणाश्च सत्यसंकल्पत्वादयः ॥ १९ ॥ तत्प्रपंचः आशुना शीघ्रगामिना तेन हयेनाश्वेन क्षोण्यां पृथिव्यां विचरन् । नृपलिंगच्छदो राज-वेषच्छन्नान् ॥ २० ॥ ततश्च पुनः कृतयुगप्रवृत्तिं वक्तुमाह । अथेति सार्द्धद्वाभ्याम् । तेषां पौरजानपदानां मनांसि विशदानि भविष्यंति । तत्र हेतुः । वासुदेवस्यांगरागेण चंदनादिनाऽतिपुण्यगंधो योऽनिलस्तं स्पृशंतीति तथा तेषाम् ॥ २१ ॥ स्थविष्ठः स्थूलः ॥ २२ ॥ कृतयुगप्रवृत्तिमाह । यदावतीर्ण इति । प्रजानां सूतिः प्रसूतिः ॥ २३ ॥ तदवतारकालोपलक्षणमाह । यदा चंद्रश्चेति । तिष्यः पुष्यः । अयमर्थः । चंद्रसूर्यबृहस्पतीनां यदा पुष्यनक्षत्रे योगस्तदा तत्कृतयुगं भविष्यति । यद्यपि च प्रतिद्वादशाब्दं कर्कराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावस्यासु तेषां त्रयाणामपि पुष्ययोगः संभवति तथाऽपि तेषां सहप्रवेशोऽत्र विवक्षितः । समेष्यंतीति वचनात् । अतो नातिप्रसंगः ॥ २४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

साधूनां वेदानुगामिनाम् । धर्मो यज्ञादिरूपस्तस्य रक्षणाय । धर्म एवानुष्ठितोंतःकरणशुद्धिद्वारा मोक्षहेतुरित्यत उक्तं मोक्षायेति ॥ १७ ॥ कलिं कृषति विलिखति भिनत्तीति कल्किः । पृषोदरादिरयम् । कृषतेर्डिप्रत्यये टिलोपे कलेरिकारलोपे च रूपसिद्धिः । यद्वा—कं सुखं लाति ददातीति कलो धर्मः, तं कायत्युपदिशतीति कल्किः 'वासुदेवानुशिक्षया' इत्युक्तेः ॥ १८ ॥ देवैरिंद्रादिभिर्दत्तमानीतम् ॥ १९ ॥ अप्रतिमद्युतिः सर्वोत्कृष्टदीप्तियुतः ॥ २० ॥ ततो दस्युहननोत्तरम् । अयमेव मूलोक्तार्थशब्दार्थः । तेषां कलियुगसमाप्त्युत्तरकालिकानां पौरजानपदानां तत्तत्पुरदेशवासिनां जनानाम् । तत्र मनेविशदत्वे ॥ २१ ॥ तेषामेव स्थूलोऽधिकः ॥ २२–२३ ॥ अत्राशयमाह—अयमर्थ इति । अतस्समकालिकतत्त्रयपुष्यप्रवेशविवक्षणात् ॥ २४ ॥

### अन्वितार्थप्रकाशिका

चराचरेति । चराचरगुरोरीश्वरस्याखिलात्मनः विष्णोर्जन्मकर्तृ साधूनां धर्मत्राणाय कर्मणः अपनुत्तये नाशाय मोक्षाय भवति । शम्भलेति । शम्भलग्रामे मुख्यस्य श्रेष्ठस्य महात्मनो नाम्ना विष्णुयशसो ब्राह्मणस्य भवने कल्किर्नाम भगवान्प्रादु-र्भविष्यति ॥१९॥ अश्वमिति युग्मम् । आशु शीघ्रं गच्छतीति तथा तम् असाधवो दम्यन्ते येन तं देवदत्तनामानमश्वमारुह्य अष्टैश्वर्याणि अणिमादीनि गुणाश्च सत्यसंकल्पशौर्यादयस्तैरन्वितः अप्रतिमद्युतिः जगत्पतिः कल्किः आशुना शीघ्रगामिना तेन हयेन क्षोण्यां विचरन् नृपलिङ्गच्छदः राजवेषेण छन्नान् कर्मणा तु दस्यून् कोटिशोऽसिना निहनिष्यति ॥ २०–२१ ॥ अथेति सार्द्धम् । एवमखिलेषु दस्युषु उपद्रवकारिषु अधर्मिषु हतेषु सत्सु अथानन्तरं वासुदेवस्य भगवतः कल्केरङ्गरागेण चन्दनादिना योऽतिपुण्यगन्धोऽनिलस्तं स्पृशन्तीति तथा तेषां पौरजानपदानां जनानां मनांसि विशदानि विवेकयोग्यानि निर्मलानि भविष्यन्ति ॥ २२ ॥ तेषामिति । वासुदेवे भगवति सत्त्वमूर्तौ हृदि स्थिते सति तेषां जनानां प्रजाविसर्गः पुत्राद्युत्पत्तिरूपः स्थविष्ठः स्थूलो विस्तृतः संभविष्यति ॥२३॥ यदेति । हरिर्धर्मपतिः धर्मपालको भगवान्कल्किर्यदाऽवतीर्णो भविष्यति तदा कृतयुगं भविष्यति । प्रजानां प्रसूतिश्च सात्त्विकी भविष्यति ॥ २४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

आशुना आशुगतिना ॥ २०–२७ ॥

### श्रीमद्वीरराघवव्याख्या

धर्मत्राणायेत्यनेन धर्मपरित्राणमेवावतारप्रयोजनम् इत्युक्तं तदेव सहेतुकमुपपादयति—परावरगुरोरिति। विशेषणानि हेतुगर्भविशेषणानि गुरुशब्देन हितप्रवर्तकत्वाभिप्रेतं तस्य सर्वविषयकत्वस्फोरणायाखिलात्मन इत्युक्तम् आत्मत्वं न केवलमन्तः प्रविश्य धारकत्वमेवापितु तत्प्रशासनगर्भमिति द्योतनायेश्वरस्येत्युक्तम् एवम्भूतस्य विष्णोर्जन्मावतारः साधूनां धर्मत्राणाय तत्प्रयोजनमाह—कर्मापनुत्तय इति। निःश्रेयसप्रतिबन्धिकर्मनिवर्त्तनाय यद्वा दुष्कर्मनिवर्तनाय वा "विनाशाय च दुष्कृताम्" इत्युक्तेः ॥१७॥ क्वावतरिष्यति ? किन्तस्य नाम ? इत्यत आह—शम्भलेति। शम्भलाख्यग्रामे मुख्यस्य श्रेष्ठस्य विष्णुयशसः भवने गृहे कल्किस्तन्नामावतरिष्यति ॥ १८ ॥ तस्य चेष्टितमनुवर्णयति द्वाभ्याम्—अश्वमिति। देवदत्तनामानम् आशु गच्छतीति तथा तमश्वमारुह्यासिनाऽसाधून् दमयतीति तथा दस्यून् कोटिशो निहनिष्यतीति उत्तरेण सम्बन्धः। अष्टैश्वर्याण्यणिमादीनि गुणाः शौर्यवीर्यादयः तैरन्वितः आशुना आशुगतिनाऽश्वेन क्षोण्यां पृथिव्यां विचरन् नृपलिङ्गच्छदः राजवेषच्छन्नान् ॥ १९–२० ॥ अथेति। अखिलेषु दस्युषु हतेषु सत्सु अथ तेषां पौरजानपदानां वसुदेवस्य कल्केः योङ्गरागः तस्य योऽतिशयितः पुण्यो गन्धवायुः तं स्पृशन्तीति तथा तेषां हेतुगर्भमिदम् अतः मनांसि विशदानि निर्मलानि भविष्यन्ति ॥ २१ ॥ तेषां विशदमानसानां प्रजाविसर्गः पुत्रादिरूपः प्रपञ्चः स्थविष्ठः स्थूलः सम्भविष्यति वासुदेव इति हृदि स्थित इत्यस्य मानश्च सात्त्विकं भविष्यतीति शेषः ॥ २२ ॥ तदा पुनः कृतयुगप्रवृत्तिमाह—यदेति। धर्मपतिर्धर्मगोप्ता कल्किर्यदाऽवतीर्णः तदा कृतयुगं भविष्यति तदा प्रजानां सूतिः प्रसूतिः सात्त्विकी सत्त्वगुणप्रधाना ॥ २३ ॥ कृतयुगप्रवृत्तिकालोपलक्षणमाह—यदेति। तिष्यः पुष्यः यदा सूर्योदयश्चत्वारः एकराशौ सङ्गता भवन्ति तदा तत्तातः कृतयुगं प्रवर्त्तत इत्यर्थः। यद्यपि प्रतिद्वादशाब्दं कर्कटराशौ बृहस्पतौ वर्त्तमाने द्वित्रास्वमावास्यासु तेषां त्रयाणामपि पुष्ययोगस्सम्भवति तथापि तेषां सह प्रवेशोऽत्र विवक्षितः "समेष्यन्ति" इति वचनात् अतो नातिप्रसङ्गः ॥ २४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

विष्णोर्जन्म कर्म च साधूनां धर्मत्राणाय दुष्कर्मापनुत्तये च स्यादिति शेषः ॥ १७ ॥ शम्भलग्रामे मुख्यस्य प्रधानस्य नाम्ना विष्णुयशसः ब्राह्मणस्य भवने गृहे ॥ १८ ॥ आशुगं शीघ्रगामिनम् ॥ १९ ॥ नृपलिङ्गच्छदः राजलक्षणाच्छन्नान् ॥ २० ॥ वसुदेवस्याङ्गरागस्य चन्दनाद्यनुलेपनस्य प्रशस्तपुण्यगन्धेन युक्तं वायुं स्पृशन्तीति वासुदेवाङ्गरागातिपुण्यगन्धानिलस्पृशः तेषाम् ॥२१॥ प्रजाविसर्गः सन्ततीनामुत्पत्तिः स्थविष्ठः बहुलः ॥ २२ ॥ प्रजासूतिः सन्तानोत्पत्तिः ॥ २३ ॥ कृतप्रारम्भे लक्षणान्तरमाह—यदेति। तिष्यः पुष्यः चन्द्रसूर्यबृहस्पतिना यदा पुष्यनक्षत्रयोगः तदा कृतयुगं भविष्यति यद्यपि प्रतिद्वादशाब्देऽर्कराशौ बृहस्पतौ वर्तमाने द्वित्रास्वमावास्यासु तेषां त्रयाणामपि पुष्ये योगः सम्भवति तथापि तेषां सह प्रयोगोऽत्र विवक्षितः "समेष्यन्ति" इति वचनात् ॥२४॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

विष्णोर्जन्म भविष्यति साधूनां कर्मापनुत्तये मोक्षाय ॥ १७–१८ ॥ देवैः प्रस्थापितत्वाद्देवदत्तम् ॥ १९ ॥ आशुना शीघ्रगामिना असाधवो दम्यन्ते येन तमसाधुदमनं नृपलिङ्गच्छदः राजवेशाच्छन्नान् ॥ २०–२१ ॥ स्थविष्ठः धर्मनिष्ठतया स्थूलतरः ॥ २२ ॥ सूतिः प्रसूतिः ॥ २३ ॥ सत्ययुगारम्भकालं लक्षयति—यदेति। तिष्यः पुष्यः अयमर्थः चन्द्रसूर्यबृहस्पतीनां यदा पुष्यनक्षत्रे योगस्तदा कृतयुगं भविष्यतीति यद्यपि प्रतिद्वादशाब्दं कर्कटराशौ बृहस्पतौ वर्तमाने द्वित्रासु अमावास्यासु तेषां त्रयाणामपि पुष्ययोगः सम्भवति तथापि तेषां सह प्रवेशोऽत्र विवक्षितः "समेष्यन्ति" इति वचनात् अतो नातिप्रसङ्गः ॥ २४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एतत्प्रपञ्चयति—चराचरगुरोरिति चतुर्भिः। साधूनां बुभुक्षूणां मुमुक्षूणां च धर्मत्राणाय स्वर्गादिसाधनरक्षणाय कर्मापनुत्तये मोक्षाय च विष्णोर्जन्म ॥ १७–१८ ॥ देवदत्तसञ्ज्ञम् असाधवो दम्यन्ते येन तमाशुगं शीघ्रगम् अश्वमारुह्य दस्यून् निहनिष्यतीत्युत्तरेण सम्बन्धः। अष्टैश्वर्यैः अणिमादिभिः गुणैः सत्यसङ्कल्पादिभिश्च अन्वितः ॥ १९ ॥ आशुना शीघ्रगामिना नृपलिङ्गच्छदः नरपालवेषच्छन्नान् ॥ २० ॥ तदनन्तरं पुनः कृतयुगप्रवृत्तिं वक्तुमाह—अथेति, सार्द्धद्वाभ्याम्। अखिलेषु दस्युषु हतेषु वासुदेवे हृदि स्थिते च मतिः तेषां वासुदेवस्य योङ्गरागस्तस्यातिपुण्यगन्धवायुं स्पृशन्तीति तथा तेषां पौरजानपदानां मनांसि विशदानि निर्मलानि भविष्यन्ति प्रजानां पुत्रपौत्रादीनां विसर्गश्च स्थविष्ठः स्थूलो भविष्यतीति सार्द्धद्वयोरन्वयः ॥ २१–२२ ॥ कृतयुगप्रवृत्तिमाह—यदेति। प्रजानां सूतिं प्रसूतिं सात्विकी सत्त्वगुणप्रधाना ॥ २३ ॥ कृतयुगप्रवृत्तिकालोपलक्षणमाह—यदेति। तिष्यः पुष्यः समेष्यन्ति युगपत्प्रवेशं करिष्यन्ति ॥ २४ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

धर्मरक्षायां सामर्थ्यमाह—चराचरगुरोः पूज्यस्येति। तत्र हेतुः—ईश्वरस्येति। तत्र हेतुः—अखिलात्मनः सर्वकारणस्येति। एवम्भूतस्य विष्णोर्जन्म साधूनां धर्मत्राणप्रयोजनमाह—कर्मापनुत्तय इति, धर्मादिपुरुषार्थचतुष्टयप्रतिबन्धनसंसारदुःखहेतुदुरितविनाशायेत्यर्थः॥ १७॥ किं नामा क्वावतरिष्यतीत्यपेक्षायामाह—शम्भलग्रामे मुख्यस्य श्रेष्ठस्य तत्र हेतुः—महात्मनो भक्तस्य नाम्ना विष्णुयशसो ब्राह्मणस्य भवने कल्किर्नाम भगवान्प्रादुर्भविष्यति॥ १८॥ धर्मत्राणप्रकारमाह—अश्वमिति द्वयेन। आशु शीघ्रं गच्छतीति तथा तमसाधवो दम्यन्ते येन तं देवदत्तनामानमश्वमारुह्य जगत्पतिः कल्किः आशुना शीघ्रगामिना तेन हयेन क्षोण्यां विचरन् नृपलिङ्गच्छदः राजवेषेण छन्नान् कर्मणा तु दस्यून् कोटिशोऽसिना निहनिष्यतीति द्वयोरन्वयः। तत्र सामर्थ्यमाह—अप्रतिमद्युतिरिति। तत्र हेतुमाह—अष्टैश्वर्याणि अणिमादीनि। गुणाश्च सत्यसङ्कल्पशौर्यादयस्तैरन्वित एवमखिलेषु दस्युषु उपद्रवकारिषु अधर्मिषु हतेषु सत्सु अथानन्तरं तेषां पौरजानपदानां जनानां मनांसि विशदानि विवेकयोग्यानि निर्मलानि भविष्यन्ति। तत्र हेतुमाह—वासुदेवस्य भगवतः कल्केरङ्गरागेण चन्दनादिना योऽतिपुण्यगन्धोऽनिलस्तं स्पृशन्तीति तथा तेषामिति॥ २१॥ तेषां जनानां प्रजाविसर्गः पुत्राद्युत्पत्तिरूपः स्थविष्ठः स्थूलो विस्तृतः सम्भविष्यति। तत्र हेतुमाह—वासुदेव इति॥ २२॥ तदा पुनः कृतयुगप्रवृत्तिमाह—यदेति। हरिः साधुदुःखहर्त्ता धर्मपतिः धर्मपालको भगवान् कल्किर्यदावतीर्णो भविष्यति तदा कृतयुगं भविष्यति प्रजाना प्रसूतिश्च सात्विकी भविष्यति॥ २३॥ कृतयुगप्रवृत्तिकालोपलक्षणमाह—यदेति तिष्यः पुष्यः। यदा सूर्योदयश्चत्वारः एकराशौ तत्रापि पुष्यनक्षत्रे समेष्यन्ति सहैव प्रवेक्ष्यन्ति तदा तत्कृतयुगं भविष्यतीत्यन्वयः॥ २४॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स भगवान् क्वावतरिष्यति किं तस्य नामेत्यत आह। शम्भलग्रामे मुख्यस्तस्य, शंभलग्राममुख्यस्येत्यपि पाठः। महात्मनः नाम्ना, विष्णुयशसः ब्राह्मणस्य; भवने गृहे, कल्किः कल्किनामा सन्, प्रादुर्भविष्यति॥ १७॥ तस्य चेष्टितमनुवर्णयति द्वाभ्याम्। अश्वमिति। विचरन्निति च। देवदत्तं देवदत्तनामानं, देवैर्दत्तं वा, आशुगं शीघ्रगामिनं, असाधवो दम्यन्ते येन सः तं, अश्वम् आरुह्य, आशुना शीघ्रगामिना हयेन तेनाश्वेन, क्षोण्यां भूमौ, विचरन्, अष्टैश्वर्यसमन्वितः, अप्रतिमद्युतिः, जगत्पतिः कल्किर्भगवान्, नृपलिङ्गच्छदः राजवेषच्छन्नान्, दम्यान् दमितुं योग्यान्, दस्यूनिति पाठे, केवलं चौरान्, कोटिशः कोटिरुपलक्षणम्, उक्तविधासंख्यपापिनस्तान् असिना खड्गेन, निहनिष्यति॥ १८–१९॥ अथेति। अथैवमखिलदस्युविनशनानन्तरं, वासुदेवस्य कल्केर्योऽङ्गरागस्तस्य, योऽत्यतिशयितः पुण्यगन्धानिलस्तं स्पृशन्तीति तेषां, हेतुगर्भमिदं, तेषां पौरजानपदजनानां मनांसि, विशदानि निर्मलानि भविष्यन्ति वै॥ २०॥ पौरेति। एवं अखिलदस्युषु हतेषु, कलिनेति शेषः। सत्त्वमूर्त्तौ वासुदेवे भगवति, हृदि स्थिते सति च, तेषां भगवदङ्गरागवायुस्पर्शविशदान्तःकरणानां पौरजानपदानां, प्रजाविसर्गश्चापि, स्थविष्ठः स्थूलः, संभविष्यति॥ २१॥ तदा पुनः कृतयुगप्रवृत्तिकालमाह। यदेति। धर्मपतिर्धर्मगोप्ता कल्किः, हरिः भगवान्, यदा अवतीर्णः भविता, तदा कृतं कृतयुगं, भविष्यति। तदैव प्रजानां, सूतिः च प्रजाप्रसूतिरपि, सात्त्विकी सत्त्वगुणप्रधानता, भविष्यति॥ २२॥ कृतयुगप्रवृत्तिलक्षणमाह। यदेति। यदा चन्द्रश्च, सूर्यश्च तथा तिष्यः पुष्यश्च, बृहस्पतिश्च ते, पुष्यश्चन्द्रसूर्यबृहस्पतयश्चेत्यर्थः। एकराशौ समेष्यन्ति। तदा तत् कृतं कृतयुगं भवति भविष्यतीत्यर्थः। अयमर्थः। यद्यपि प्रतिद्वादशाब्दं, कर्कराशौ, बृहस्पतौ वर्त्तमाने द्वित्रास्वमावास्यासु तेषां त्रयाणामपि पुष्ययोगः संभवति, तथाप्यत्र त्वेतेषामेककाले सह प्रवेशो विवक्षितः, समेष्यन्तीति वचनात्। अत उक्तार्थस्यात्र नातिप्रसङ्गः॥२३॥ एवं नवमस्कन्धमारभ्यानुक्रान्तं वैवस्वतमनोर्वंशद्वयं निगमयति। येऽतीता इति। सोमसूर्ययोः, वंशीयाः वंशप्रभवाः ये पार्थिवाः, अतीताः त्वज्जन्मकालात्प्रागभूवन्, ये वर्तमानाः सांप्रतं वर्त्तन्ते, ये भविष्यन्ति त्वत्तिरोधानानन्तरमुत्पत्स्यन्ति च ते पार्थिवाः, ते तुभ्यं, उद्देशतः नामसंकीर्त्तनतः, उत्पत्तिक्रमतः, संक्षेपतो वा प्रोक्ताः॥ २४॥

## हिन्दी अनुवाद

प्रिय परीक्षित्! सर्वव्यापक भगवान् विष्णु सर्वशक्तिमान् हैं। वे सर्वस्वरूप होनेपर भी चराचर जगत्के सच्चे शिक्षक सद्गुरु हैं। वे साधु—सज्जन पुरुषों के धर्म की रक्षा के लिये, उनके कर्म का बन्धन काटकर उन्हें जन्म-मृत्यु के चक्रसे छुड़ाने के लिये अवतार ग्रहण करते हैं॥ १७॥ उन दिनों शम्भल-ग्राम में विष्णुयश नाम के एक श्रेष्ठ ब्राह्मण होंगे। हृदय बड़ा उदार एवं भगवद्भक्ति से पूर्ण होगा। उन्हीं के घर कल्कि भगवान् अवतार ग्रहण करेंगे॥ १८॥ श्रीभगवान् ही अष्टसिद्धियों के और समस्त सद्गुणों के एकमात्र आश्रय हैं। समस्त चराचर जगत् के वे ही रक्षक और स्वामी हैं। वे देवदत्त नामक शीघ्रगामी घोड़ेपर सवार होकर दुष्टों को तलवार के घाट उतारकर ठीक करेंगे॥ १९॥ इनके रोम-रोमसे अतुलनीय तेजकी किरणें छिटकती होंगी। वे अपने शीघ्रगामी घोड़े से पृथ्वी पर सर्वत्र विचरण करेंगे और राजा के वेषमें छिपकर रहने वाले कोटि-कोटि डाकुओं का संहार

करेंगे ॥२०॥ प्रिय परीक्षित् ! जब सब डाकुओं का संहार हो चुकेगा, तब नगरी की और देशकी सारी प्रजा का हृदय पवित्रता से भर जायगा; क्योंकि भगवान् कल्कि के शरीर में लगे हुए अङ्गराग का स्पर्श पाकर अत्यन्त पवित्र हुई वायु उनका स्पर्श करेगी और इस प्रकार वे भगवान् के श्रीविग्रह की दिव्य गन्ध प्राप्त कर सकेंगे ॥ २१ ॥ उनके पवित्र हृदयों में सत्त्वमूर्ति भगवान् वासुदेव विराजमान होंगे और फिर उनकी सन्तान पहलेकी भाँति हृष्ट-पुष्ट और बलवान् होने लगेगी ॥२२ ॥ प्रजाके नयन-मनोहारी हरि ही धर्मके रक्षक और स्वामी हैं। वे ही भगवान् जब कल्कि के रूप में अवतार ग्रहण करेंगे, उसी समय सत्ययुग का प्रारम्भ हो जायगा और प्रजा की सन्तान-परम्परा स्वयं ही सत्त्वगुण से युक्त हो जायगी ॥ २३ ॥ जिस समय चन्द्रमा, सूर्य और बृहस्पति एक ही समय एक ही साथ पुष्य नक्षत्र के प्रथम पल में प्रवेश करते हैं, एक राशिपर आते हैं, उसी समय सत्ययुग का प्रारम्भ होता है ॥ २४ ॥

ये'ऽतीता वर्तमाना ये भविष्यन्ति च पार्थिवाः। ते त उद्देशतः प्रोक्ता वंशीयाः सो'मसूर्ययोः ॥ २५ ॥
आरभ्य भवतो जन्म यावन्नन्दाभिषेचनम्। एतद् वर्षसहस्रं तु शतं पञ्चदशोत्तरम् ॥ २६ ॥
सप्तर्षीणां तु यौ' पूर्वौ दृश्येते उदितौ दिवि। तयोस्तु मध्ये नक्षत्रं दृश्यते यत् समं निशि ॥ २७ ॥
तेनैत ऋषयो युक्तास्तिष्ठन्त्यब्दशतं नृणाम्। ते त्वदीये द्विजाः काले अधुना चाश्रिता मघाः ॥ २८ ॥
विष्णोर्भगवतो भानुः कृष्णाख्योऽसौ दिवं गतः। तदाविशत् कलिर्लोकं पापे यद् रमते जनः ॥ २९ ॥
यावत् स पादपद्माभ्यां स्पृशन्नास्ते रमापतिः। तावत् कलिर्वै पृथिवीं पराक्रान्तुं न चाशकत् ॥ ३० ॥
यदा देवर्षयः सप्त मघासु विचरन्ति हि। तदा प्रवृत्तस्तु कलिर्द्वादशाब्दशतात्मकः ॥ ३१ ॥
यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः। तदा नन्दात् प्रभृत्येष कलिर्वृद्धिं गमिष्यति ॥ ३२ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—ये अतीताः ये वर्तमानाः ये च पार्थिवाः भविष्यन्ति ते ते सोमसूर्ययोः वंशीयाः उद्देशतः प्रोक्ताः भवतः जन्म आरभ्य यावत् नन्दाभिसेचनं एतत् वर्षसहस्रं पञ्चदशोत्तरं शतम् ॥ २५–२६ ॥ सप्तर्षीणां तु यौ पूर्वौ दिवि उदितौ दृश्येते तयोः मध्ये यत् समं नक्षत्रं निशि दृश्यते। तेन युक्ताः एते ऋषयः नृणाम अब्दशतं तिष्ठन्ति ते द्विजाः त्वदीये काले अधुना मघाः आश्रिताः ॥ भगवतः विष्णोः कृष्णाख्यः असौ भानुः दिवं गतः तदा कलिः लोकम् अविशत् यत् जनः पापे रमते ॥ २९ ॥ यावत् सः रमापतिः पादपद्माभ्यां पृथिवीं स्पृशन् आस्ते तावत् कलिः पराक्रान्तुं न च अशकत् ॥ ३० ॥ यदा देवर्षयः सप्त मघासु विचरन्ति तदा द्वादशाब्दशतात्मकः कलिः प्रवृत्तः ॥ ३१ ॥ यदा महर्षयः मघाभ्यः पूर्वाषाढां यास्यन्ति तदा नन्दात् प्रभृति एषः कलिः वृद्धिं गमिष्यति ॥ ३२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

एवं नवमस्कंधमारभ्यानुक्रांतं वैवस्वतमनोर्वंशद्वयं निगमयति। येऽतीता इति उद्देशतः संक्षेपतः ॥ २५ ॥ कलियुगावांतरविशेषं वक्तुमाह आरभ्येत्यादिना। वर्षसहस्रं पंचदशोत्तरं शतं चेति कयापि विवक्षयाऽवांतरसंख्येयम्। वस्तुतस्तु परीक्षिन्नंदयोरंतरं द्वाभ्यां न्यूनं वर्षाणां सार्धसहस्रं भवति। यतः परीक्षित्समकालं मागधं मार्जारिमारभ्य रिपुंजयाता विंशतिराजानः सहस्रसंवत्सरं भोक्ष्यंतीत्युक्तं नवमस्कंधे "ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरम्" इति। ततः परं पंचप्रद्योतना अष्टत्रिंशोत्तरं शतम्। शिशुनागाश्च षष्ट्युत्तरशतत्रयं भोक्ष्यंति पृथिवीमित्यत्रैवोक्तत्वात् ॥ २६ ॥ कलेः प्रवृत्तिं वृद्धिं च निरूपयितुं कालज्ञानोपलक्षणमाह। सप्तर्षीणां त्विति। अयमर्थः। प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमंडलम्। तत्र किंचिदुन्नतेषाऽग्रस्थानीयो मरीचिः। ततः पश्चादानम्रयुगकंधराकारो वसिष्ठः सभार्यः। ततः पश्चादीषदुन्नतेषामूलस्थानीयोंगिराः। ततः पश्चाच्चतुरस्रताराचतुष्के ईशान्यामत्रिः ततो दक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहस्तत उत्तरतः क्रतुः। एवंस्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ दृश्येते पुलहक्रतुसंज्ञौ तयोस्तु मध्ये पूर्वयोस्तु मध्ये यत्समं दक्षिणोत्तररेखायां समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं

१—अतीता। २—सूर्यसोमयोः ३—पूर्वौ यौ

दृश्यते तेन तथैव युक्तं नृणामशब्दशतं तिष्ठंति ते च द्विजास्त्वदीये कालेऽधुना मघा आश्रिता वर्तन्ते ॥ २७–२८ ॥ तेषु मघासु वर्तमानेषु सत्सु यदा विष्णोर्भानुः भातीति भानुः शुद्धसत्त्वात्मको देहो दिवं वैकुंठं गतस्तदा कलियुगमविशत्। यद्यस्मिन्युगे जनः पापे रमत इति कलियुगस्य लक्षणम् ॥ २९ ॥ ननु कृष्णे पृथिव्यां वर्तमानेऽपि संध्यारूपेण कलिः प्रविष्ट एवासीत्। सत्यम्। तथापि तावत्तस्य पराक्रमो नाभवदित्याह। यावदिति। पराक्रांतुमभिभवितुम् ॥ ३० ॥ अतो यथोक्त एव कलिप्रवेशकाल इत्याह। यदा देवर्षय इति द्वादशाब्दशतात्मक इति। दिव्येन मानेन संध्यासंध्यांशाभ्यां सह यो द्वादशाब्दशतात्मकः स कलिस्तदा संध्यामतिक्रम्य प्रविष्ट इत्यर्थः ॥ ३१ ॥ कलेः प्रवेशकालमुक्त्वा तस्य वृद्धिकालमाह। यदेति। तदा प्रद्योतनात्प्रभृति वृद्धिं गच्छन्नंदात्प्रभृत्यतिवृद्धिं गमिष्यतीत्यर्थः ॥ ३२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

"समासोद्देशसंक्षेपास्त्रय एकार्थवाचकाः" इति शब्दरत्नसंग्रहोक्तेः ॥ २५ ॥ अत्र स्वामिचरणैरेव सुव्याख्यातत्वाद्स्माभिरुपन्यस्यते ॥ २६ ॥ अत्राशयमाह—अयमर्थ इति। तत्र शकटाकारे। ईषा रेखा सीरदंडः शकटांगविशेषश्च तदग्रस्थानीयस्तत्स्थानापन्नः। युगः शकटाग्रबद्धः वृषयोजनार्थकः शकटांगभेद एव, तद्ग्रीवा च तन्मध्यभाग उच्चाकार एव बोध्यः ॥ २७ ॥ तेन पुलहक्रतुमध्यगतनक्षत्रेण ॥ २८–२९ ॥ अत्राक्षिपति—नन्विति। अभिभवितुं स्वसामर्थ्यं दर्शयितुम् ॥ ३० ॥ अतः पराक्रमाभावात्। इत्यर्थ इति—श्रीकृष्णकाले स्वसंध्यां विहाय स्वेन रूपेणैव प्रविष्ट इति भावः ॥ ३१ ॥ इत्यर्थ इति—परीक्षित्कालिकसप्तर्षिमंडलगतमघानक्षत्रतः पूर्वाषाढर्क्षं दशममस्ति, तत्रैकैकर्क्षस्य शतवर्षं तत्र स्थायित्वान्नदकाले कलेर्वर्षसहस्रभुक्तिरायाति। अत एवोक्तम्—"आरभ्य भवतो जन्म यावन्नंदाभिषेचनम्। एतद्वर्षसहस्रम्" इति तच्च पूर्वं पराक्रांतमेवेति भावः ॥ ३२ ॥

## अन्वितार्थप्रकाशिका

यदेति। यदा चन्द्रः सूर्यः तिष्यः पुष्यः बृहस्पतिश्चेति एकराशौ तत्रापि पुष्यनक्षत्रे समेष्यन्ति योगमेष्यन्ति। तदा तत्कृतयुगं भविष्यति। अत्र स्वामिपादाः। यद्यपि प्रतिद्वादशाब्दं कर्कराशौ बृहस्पतौ वर्त्तमाने द्वित्रास्वमावास्यासु तेषां पुष्ययोगः संभवति तथापि तेषां सहप्रवेशोऽत्र विवक्षितः समेष्यन्तीति वचनात् इति प्राहुः। यद्यपि सहप्रवेशोऽपि कलौ बहून् वारान् भवति तथापि उपलक्षणमात्रमेतदिति स्वामिपादाभिप्रायोऽतो न दोषः ॥ २५ ॥ येऽतीता इति। उद्देशतः क्रमेण संक्षेपतः। स्फुटमन्यत् ॥ २६ ॥ आरभ्येति। भवस्तव जन्म आरभ्य यावन्नन्दाभिषेचनं तावत्समयान्तरे वर्षाणां सहस्रं पञ्चदशवर्षोत्तरं शतं चेति पञ्चदशाधिकानि एकादशशतानि भवन्ति इति। अत्र श्रीस्वामिपादाः कयाऽपि विवक्षयाऽवान्तरसङ्ख्येयम्। वस्तुतः परीक्षिन्नन्दयोरन्तरं तु द्वाभ्यामूनं वर्षाणां सार्द्धसहस्रं भवति। यतः परीक्षित्समकालं मागधं मार्जारिमारभ्य रिपुञ्जयान्ता विंशती राजानः सहस्रसंवत्सरं भोक्ष्यन्तीति नवमस्कन्ध उक्तं ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरमिति ततः परं च प्रद्योतना अष्टत्रिंशोत्तरशतं शिशुनागाश्च षष्ट्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तत्वात् इति प्राहुः। विवक्षा चात्र शुद्धक्षत्रवंशावधेरिति स्वामिपादा एव विष्णुपुराणटीकायामाहुः। केचित्तु "आरभ्य भवतो जन्म" इति श्लोके शतमित्यत्र छान्दसमेकत्वं पञ्चशतानीत्यर्थः। तथा च वर्षसहस्रं दशोत्तराणि पञ्चशतानि चेत्यर्थः। एतच्च स्कान्दैकवाक्यत्वाल्लब्धम्। तथाहि सप्तर्षीणां प्रतिनक्षत्रं शतवर्षात्मको भोगः परीक्षित्समये मघायां सप्तर्षीणां स्थितिः तेषां मघास्थितिकाले कलेः प्रवृत्तिरिति भागवते स्पष्टमेव। तेन कलेः शतवर्षमध्ये परीक्षितो जन्मेति निश्चीयते। ततश्च कलेः प्रायेणाशीतिवर्षेषु गतेषु परीक्षितो जन्म ततः दशाधिकसार्द्धसहस्र १५१० मितेषु वर्षेषु गतेषु नन्दाभिषेचनम्। पुत्रसहितनवनन्दानां राज्यकालश्च शतवर्षात्मकः। एवं च कलेः नवत्यधिकषोडशशती १६९० मितवर्षपर्यन्तो नन्दराज्यपरमावधिरित्यनुमीयते। स एव कालः स्कान्दे विशिष्योक्तेः। यथा—"ततोऽपि द्विसहस्रेषु दशाधिकशतत्रये। भविष्यं नन्दराज्यं च चाणक्यो यान् हनिष्यति" इति। अस्यार्थः द्विसहस्रेषु द्विसहस्रवर्षमध्ये। निर्धारणे सप्तमी। दशाधिकशतत्रये स्थिते सतीति शेषस्तथा च नवत्यधिकषोडशशतवर्षेषु कलेर्गतेष्वित्यर्थलाभः। नन्दराज्यमित्यस्य नन्दानां राज्यमित्यर्थः। उत्तरवाक्ये यानीति बहुवचननिर्देशात् इति कल्पयन्ति। परं त्वेतदपि "यदा मघाभ्यो यास्यन्ति पूर्वाषाढां महर्षयः" इति भागवतश्लोकेन विरुद्ध्यते। यतः परीक्षिज्जन्म नन्दाभिषेकान्तरबोधकसप्तर्ष्यधिष्ठितनक्षत्रमघापूर्वाषाढाकालः एकादशशतासन्न एव नाधिकः किंच विष्णुपुराणे प्रकृतश्लोके शतं पञ्चदशोत्तरमित्यत्र शतस्थाने ज्ञेयमिति पाठ उपलभ्यते। तत्र पञ्चशतानीत्यपि वक्तुं न शक्यते। परे तु "आरम्भ भवतो जन्म" इत्यत्रत्यां सङ्ख्यां पञ्चदशोत्तरैकादशशतमितामेव यथाश्रुतं मन्यन्ते। परन्तु तत्संवादाय मागधराजानां मार्जारिप्रभृतिरिपुञ्जयान्तानां राज्यकालसङ्ख्याबोधके ये बार्हद्रथभूपाला भाव्याः। साहस्रवत्सरमिति श्लोके साहस्रपदं बहुत्वमात्रपरतया सहस्रार्द्धासन्नपरं व्याख्याय पञ्चप्रद्योतनदशशुङ्गराज्यकालवर्षाणि। तत्र संयोज्य पञ्चदशोत्तरामेकादशशतीं वर्षाणामदर्शनम्। अन्ये तु एकादशशतानि पञ्चदशोत्तराणीत्येषैव सङ्ख्या प्रमाणीकर्त्तव्या या तु द्व्यूनं सार्द्धसहस्रं वर्षाणां परीक्षिन्नन्दान्तरसङ्ख्या नवमद्वादशस्कन्धवचनानुसारिणी प्रतीयते सा तु मार्जारिप्रभृतीनां शुङ्गान्तानां

खण्डमण्डलपतीनां विनाऽप्यानन्तर्यं सङ्ख्यातत्वादित्याहुः। अत्र यद्यपि ज्योतिः शास्त्ररीत्या शास्त्रान्तरैश्च भूयान्विरोधः प्रतीयते। तथाऽपि तत्परिहारे ग्रन्थबाहुल्यभयादुपरम्यते टीकाशेषभागे च पर्यङ्काख्ये लेखिष्यते॥ २७॥ सप्तर्षीणां त्विति। अत्रायमर्थः। उत्तरध्रुवतारानिकटे प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलं तत्र किंचिदुन्नतरेखाग्रस्थानीयो मरीचिस्ततः पश्चादानग्रयुगकन्धराकारो वसिष्ठः सभार्यः ततः पश्चादीषदुन्नतरेखामूलस्थानीयोऽङ्गिरास्ततः पश्चाच्चतुरस्रताराचतुष्के ऐशान्याम् अत्रिस्तता दक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहस्तत उत्तरत क्रतुः। एवं स्थिते तेषां सप्तर्षीणां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ पुलहक्रतुसंज्ञौ तयोस्तु मध्ये यत्सर्वं दक्षिणतः समदेशावस्थितमश्विन्यादिष्वन्यतमं नक्षत्रं निशि दृश्यते॥२८॥ तेनेति। तेन नक्षत्रेण युक्ता एत ऋषयो नृणामशब्दशतं तिष्ठन्ति ते च द्विजास्त्वदीये काले अधुना मघाः आश्रिता वर्तन्ते। तथा च पूर्वयोः क्रतुपुलहयोर्मघानां च साम्यावस्थित्युपक्रमकाल एव कलिप्रवेशकाल इति सूचितम्। तेनाश्लेषायां कृष्णप्रादुर्भावः मघाश्रितेषु तेषु श्रीकृष्णान्तर्द्धानं कलिप्रवेशश्च। ततः पूर्वाषाढां प्राप्तेषु कलेर्वृद्धिरित्युत्तरग्रन्थाऽज्ञेयम्॥ २९॥ विष्णोरिति। यदा असौ विष्णोर्भगवतो भानुरवतारः श्रीकृष्णाख्यः दिवं वैकुण्ठं गतस्तदा कलिर्लोकमविशत्। यत् यस्मात् कलिप्रवेशाज्जनः पापे रमते॥ ३०॥ यावदिति। यावत्स रमापतिः पादपद्माभ्यां पृथिवीं स्पृशन्नास्ते स्म तावत्स पृथिवीं पराक्रान्तुमभिभवितुं नाशकत् न समर्थोऽभूत्॥ ३१॥ यदेति। यदैव सप्तदेवर्षयो मघासु विचरन्ति स्म तदा तु दिव्येन मानेन सन्ध्यांशाभ्यां सह द्वादशाब्दशतात्मकः कलिः सन्ध्यामतिक्रम्य लोकं प्रविष्टः॥ ३२॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

ते द्विजाः सप्तर्षयः॥ २८॥ तेषु मघासु वर्तमानेषु सत्सु यदा विष्णोर्भानुः शुद्धसत्त्वात्मको देहः दिवं वैकुण्ठं गतः यदा कलियुगोऽविशत् यत् यस्मिन् युगे जनः पापे रमते इति कलियुगस्य लक्षणम्॥ २९–४४॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धव्याख्याने श्रीसुदर्शनसूरिकृतशुकपक्षीये द्वितीयोऽध्यायः॥ २॥

## श्रीमद्वीरराघवव्याख्या

स्कन्धत्रयार्थमुपसंहरति—येऽतीता इति। सोमसूर्ययोर्वंशीया वंशप्रभवाः ते तुभ्यम् उद्देशतः उत्पत्तिक्रमतः संक्षेपतो वा प्रोक्ता॥ २५॥ मज्जन्मप्रभृतियावत्सोमवंशसमाप्तिं कियान् कालो भविष्यति इत्यभिप्रायमालक्ष्याह—आरभ्येति। नन्दाभिषेचनपर्यन्तैव सोमवंशस्यानुवृत्तिरतो यावन्नन्दाभिषेचनमित्युक्तम् एतदनन्तरं वर्षाणां पञ्चदशोत्तरशतं सहस्रञ्चेत्यर्थः। वर्षसहस्रं पञ्चदशोत्तरं शतंचेति कयापि विवक्षयाऽवान्तरसङ्ख्येयं वस्तुतः परीक्षिन्नन्दयोरन्तरं द्वाभ्यां न्यूनं वर्षाणां सार्द्धसहस्रं भवति यतः परीक्षित्समकालं मागधं मार्जारिमारभ्य रिपुञ्जयान्ता विंशतिराजानः सहस्रसंवत्सरान् भोक्ष्यन्तीत्युक्तं नवस्कन्धे 'ये बार्हद्रथभूपाला भाव्यास्साहस्रवत्सरम्' इति, ततः परं च प्रद्योतना अष्टत्रिंशोत्तरं शतं शिशुनागाश्च षष्ठ्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तत्वात्॥ २६॥ कदा तर्हि कलियुगारम्भ इत्यभिप्रायमालक्ष्य तद्वृद्धिकालं च विवक्षुस्तावदारम्भकालमुपलक्षणेनाह—सप्तर्षीणामितिद्वाभ्याम्। अयमर्थः। प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलं तत्र किञ्चिदुन्नतेषाग्रस्थानीयो मरीचिस्ततः पश्चादानम्रयुगकन्धराकारो वसिष्ठः सभार्यस्ततः पश्चादीषदुन्नतेषामूलस्थानीयोऽङ्गिराः ततः पश्चाच्चतुरश्रतारास्चतुष्के ईशान्येऽत्रिः ततो दक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहः तत उत्तरतः क्रतुः एवंस्थिते तेषां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ पुलहक्रतुसंज्ञौ तयोस्तु मध्ये तयोः पूर्वयोस्तु मध्ये यत्समं दक्षिणतः समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते तेन तथैव युक्ता ऋषयः नृणामब्दशतं तिष्ठन्ति ते च द्विजा ऋषयः त्वदीये काले अधुना मघामाश्रित्य वर्त्तन्ते पूर्वयोर्मघानां च साम्यावस्थित्युपक्रमकालः कलियुगारम्भकाल इति सूचितं तदग्रे स्पष्टमेव वदिष्यति॥ २७–२८॥ कदा तर्हि युगाभिमानिपुरुषप्रवेश इत्यतस्तमुपलक्षणेनाह—विष्णोरिति। भानुः भातीति भानुः प्रकाशबहुलः कृष्णाख्यो भगवतो देहः यदा दिवं वैकुण्ठ गतस्तदा कलिरिमं लोकम् अविशत् यद्यस्माद्युगाभिमानिपुरुषाद्धेतोः जनः पापे रमते युगसन्धौ हि भगवदवतारः प्रवृत्तेपि कलौ युगे भगवतः स्वधामानुगमनात् पूर्वं कलिपुरुषो न प्रबभूवेत्यनेन सूच्यते॥ २९॥ तत् स्पष्टमेवाह—यावदिति। सः श्रीकृष्णः कलिपुरुषः पृथिवीं पराक्रान्तुमभिभवितुं नाशकन्नस्वकार्य्यक्षमो बभूवेत्यर्थः॥३०॥ सूचितमर्थं स्पष्टमाह—यदा देवर्षय इति। मघासु विचरन्ति तासां समजवे चरितुमारब्धवन्त इत्यर्थः। तदा कलियुगं तस्य परिमाणं द्वादशाब्दशतात्मक इति दिव्येन मानेन सन्ध्यासन्ध्यांशाभ्यां सह यो द्वादशाब्दशतात्मकः स कलिः प्रवृत्त इति सम्बन्धः॥ ३१॥ कदा तर्हि कलिधर्माभिवृद्धिरित्यतस्तामुपलक्षणेनाह—यदा मघाभ्य इति, मघाभ्य इति पञ्चमी तत्समन्देशं विहाय पूर्वाषाढानां ( पूर्वफल्गुन्योः ) समदेशं यास्यन्ति तदा॥ ३२॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवं नवमस्कन्धमारभ्यानुक्रान्त वैवस्वतमनोर्वंशद्वयमुपसंहरति—येऽतीता इति। उद्देशतः सङ्क्षेपतः॥ २५॥ कलियुगावान्तरविशेषमाह—आरभ्येति। वर्षसहस्रं पञ्चदशोत्तरशतं चेति कयापि विवक्षयाऽवान्तरसङ्ख्येयं वस्तुतः परीक्षिन्नन्दयोरन्तरं

द्वाभ्यामूनं वर्षाणां सार्द्धसहस्रं भवति यतः परीक्षित्समकालं मागधमार्जारिमारभ्य रिपुञ्जयान्ता विंशतिराजानः सहस्रवत्सरं भोक्ष्यन्तीत्युक्तं नवमस्कन्धे 'ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरम्' इति ततः परं च प्रद्योतना अष्टत्रिंशच्छतं शिशुनागाश्च षष्ठ्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तम् ॥ २६ ॥ कलेः प्रवृत्तिं वृद्धिं च निरूपयितुं कालज्ञानोपलक्षणमाह, सप्तर्षीणामिति । अयमर्थः प्रागग्रं शकटाकारं तारासप्तकं सप्तर्षिमण्डलं तत्र किञ्चिदुन्नतरेखाया अग्रस्थानीयो मरीचिः ततः पश्चादानम्रयुगकन्धराकारो वसिष्ठः सभार्यः ततः पश्चादीषदुन्नतस्तेषां मूलस्थानीयोऽङ्गिराः ततः पश्चाच्चतुरस्रताराचतुष्के ईशान्येऽत्रिः ततो दक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहः तत उत्तरतः क्रतुः एवं स्थिते तेषा मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ पुलहक्रतुसञ्ज्ञौ तयोस्तु मध्य तयोः पूर्वयोश्च मध्ये यत्समं दक्षिणतः समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते ॥ २७ ॥ यत्तेन तथैव युक्ताः नृणामद्भ-शतं तिष्ठन्ति ते च द्विजास्त्वदीये काले अधुना ( म ) घाम् आश्रिता वर्त्तन्ते ॥ २८ ॥ तेषु ऋषिषु मघासु वर्त्तमानेषु. सत्सु ॥ २९ ॥ पराक्रान्तुं स्वसामर्थ्यं दर्शयितुम् ॥ ३० ॥ कियन्तं कालं विवरणमित्यतः उक्तं द्वादशेति ॥ ३१ ॥ अस्तु कलेः परं कञ्चित्कालं हित्वा पश्चाद्वृत्तिः सा कदेति तत्राह—यदेति ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

विष्णोरिति यदा गुणावतारस्य विष्णोस्तदंशत्वाद्रश्मिस्थानीयस्य कृष्णाख्यो भानुः सूर्य्यमण्डलस्थानीयः दिवं प्रापञ्चिक-लोकागोचरं मथुरादीनामेव प्रकाशविशेषरूपं वैकुण्ठलोकं गतः तदा कलिर्लोकमविशत् एषां च प्रकाशः पृथिवीस्थोऽयं तदन्तर्द्धान-शक्त्या तामस्पृशन्नेव विराजते अतस्तया न स्पृश्यते पृथिव्यादिभूतमयैरस्माभिर्वाराहोक्तमहाकदम्बादिरिव यस्तु प्रापञ्चिकलोक-गोचरो मथुरादिप्रकाशः सोऽयं कृपया पृथिवींस्पृशन्नेवावतीर्णः अतस्तया स्पृश्यते तादृशैरस्माभिर्दृश्यमानकदम्बादिरिव अस्मिंश्च प्रकाशे यदावतीर्णो भगवांस्तदा तत्स्पर्शेनापि तत्स्पर्शाच्चांस्पृशन्नेवास्ते स्म सम्प्रति तदस्पृष्टप्रकाशे विहरमाणः पुनरस्पृशन्नेव भवति यद्यप्येवं तथापि द्वयोर्भेदेन क्वचिदभेदेन विवक्षा तत्रतत्रावगन्तव्या ॥ २९ ॥ तदेतदभिप्रेत्याह—यावदिति । पराक्रान्तुमित्यनेन तत्पूर्वमपि कञ्चित्कालं व्याप्य प्रविष्टोऽसाविति ज्ञापितम् ॥ ३०—४४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे द्वितीयोऽध्यायः ॥ २ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

नवममारभ्योपक्रान्तां कथामुपसंहरति—येऽतीता इति ॥ २५ ॥ एतद्वर्षसहस्रमित्येवैव सङ्ख्या प्रमाणीकर्त्तव्या परीक्षित्स-मकालवर्त्तिमार्जारिप्रभृतीनामानन्दात् भोगकालसंङ्ख्या तु किञ्चिन्न्यूनं सार्द्धसाहस्रं यद्वर्षाणि भवन्ति तत्तेषां खण्डमण्डलपतीनां विनाप्यानन्तर्य्येण सङ्ख्यानीति ज्ञेयम् ॥२६॥ अथ कलेरुत्पत्तिकाल वृद्धिकालं च निरूपयितुं कालज्ञानविशेषमाह—सप्तर्षीणान्विति । प्रागग्रं शकटाकारतारासप्तकं सप्तर्षिमण्डलं तत्रोदयसमपूर्वौ प्रथममुदितौ पुलहक्रतुसञ्ज्ञौ यौ निशि दृश्येते तयोर्मध्यगतमश्विन्याद्यन्य-तममेकैकं नक्षत्रं तिष्ठति एकैकं शतवर्षं व्याप्य तेन तेनैव युक्ता ऋषयस्तिष्ठन्तीति नियमः अधुना तु ते मघाश्रिता वर्त्तन्ते इति तेनाश्लेषाश्रितेषु तेषु श्रीकृष्णप्रादुर्भावः मघाश्रितेषु तेषु तदन्तर्द्धानं कलिप्रवेशश्च पूर्वाषाढाम्प्राप्तेषु कलेर्वृद्धिरित्युत्तरग्रन्थदृष्ट्या ज्ञेयम् ॥ २७—२८ ॥ तत्रापि मघास्वेव यदा भगवतो भानुः श्रीकृष्णस्य किरणरूपो वैकुण्ठनाथः दिवं वैकुण्ठं गतः कृष्णाख्यः कृष्णत्वेन आसम्यक्ख्यातिर्यस्य सः भातीति भानुः शुद्धसत्त्वात्मको देह इति स्वामिचरणाः ॥ २९ ॥ ननु, द्वापरस्य सन्ध्यांशशेषे भगवदवतारमध्य एव यदा दुर्य्योधनो द्यूतं प्रवर्त्तयामास ततो द्रौपदीवस्त्राकर्षणसमयमेव भगवदादिष्टः कलिः पृथिव्यामधिकर्त्तुं प्रथमशुभमुहूर्त्तञ्चकारेति श्रुतं सत्यं तदपि स तदाऽकिञ्चित्कर एवासीदित्याह—यावदिति । कृष्णावतारमध्ये किल "चतुर्भिर्वर्त्तसे येन पादैर्लोकसुखावहैः" इति पृथिव्युक्तेस्त्रेतायुगतोऽपि धर्मस्य प्राबल्यात् कुतः कलेस्तदा पराक्रम इति भावः ॥ ३० ॥ अतो मघास्वेषु ऋषिषु कृष्णान्तर्द्धानक्षणसमनन्तरक्षण एव कलिः प्रविष्ट इत्याह—यदेति । द्वादशाब्दशतात्मक इति दिव्येन मानेन सन्ध्यासन्ध्यांशाभ्यां सहेत्यर्थः ॥ ३१ ॥ कलेर्वृद्धिकालमाह—यदेति ॥ ३२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

नवमस्कन्धमारभ्य मनोर्वंशम्—

"श्रूयतां मानवो वंशः प्राचुर्येण परन्तप ! । न शक्यते विस्तरतो वक्तुं वर्षशतैरपि" ॥

इत्यादिनोपक्रान्तं वंशद्वयमुपसंहरति—ये इति । उद्देशतः सङ्क्षेपतः ॥ २५ ॥ प्रथमाध्याये नन्दाभिषेचनानन्तरं यदुक्तं "ततो नृपा भविष्यन्ति शूद्रप्रायास्त्वधार्मिकाः" इति तत्र नन्दाभिषेचनात् पूर्वस्मिन् काले नृपा शुद्धाः एव स कालो मज्जन्मारभ्य नन्दाभिषेचनपर्यन्तः कतिसम्वत्सरात्मक इत्येवम्विवित्सुमालक्ष्याह आरभ्येति । वर्षाणां सहस्रं दशोत्तरं पञ्चगुणं शतञ्च एतत् दशाधिकं सार्द्धसहस्रं वर्षाणां भवतीत्यर्थः । अभिमन्युसमकालो जरासन्धसुतः सहदेवः परीक्षित्समकालः सहदेवसुतो मार्ज्जारिस्त-मारभ्य रिपुञ्जयान्ताः विंशतिराजानः सहस्रसन्वत्सरं भोक्ष्यन्तीत्युक्तं नवस्कन्धे "ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरम्" इति

ततः पञ्चप्रद्योतनाः अष्टत्रिंशोत्तरशतं दश शिशुनागाश्च षष्ठ्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तत्वात् द्वादशसम्वत्सराणां शिशुनागराज्यभ्रंशनन्दाभिषेचनयोरन्तरालिकत्वाद्योक्तं सम्वत्सरसङ्ख्या सम्यक् सङ्गच्छते पञ्चशब्दस्य पञ्चगुणे लक्षणां विनोक्तसङ्ख्याविरोधः स्यात् ॥ २६ ॥ कदा कलेः प्रवृत्तिः वृद्धिश्चेत्याकाङ्क्षायां तत्प्रवृत्तिं वृद्धिं च वक्तुं कालज्ञानोपलक्षणमाह—सप्तर्षीणान्त्विति द्वाभ्याम्। अत्रेदं बोध्यम् प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलं तत्र किञ्चिदुन्नतरेखाग्रस्थानीयो मरीचिस्ततः पश्चादानम्रयुगकन्धराकारो वसिष्ठः सभार्यस्ततः पश्चादीषदुन्नतरेखामूलस्थानीयोऽङ्गिराः ततः पश्चाच्चतुरस्रताराचतुष्के ईशानेऽत्रिस्ततो दक्षिणतः पुलस्त्यस्ततः पश्चिमतः पुलहस्तत उत्तरतः क्रतुः इत्थं संस्थितानां सप्तर्षीणां तु मध्ये यौ पूर्वौ उदितौ पुलहक्रतुसंज्ञौ दृश्येते तयोस्तु मध्ये यत्समं दक्षिणतः समदेशावस्थितमश्विन्यादिषु यदन्यतमं नक्षत्रं दृश्यते ॥ २७ ॥ तेन तयैव युक्ता ऋषयो नृणामब्दशतं तिष्ठन्ति ते च द्विजास्त्वदीये कालेऽधुना मघामाश्रिताः सन्ति ॥ २८ ॥ यदा मघामाश्रित्य मुनयः संस्थितास्तदा असौ शास्त्रविषयभूतः मम हृद्गोचरः सर्वत्र सर्वोत्तमत्वेन भातीति कृष्णाख्यो भानुः दिवं निजलोकं गतः तदैव च लोकं कलिराविशत् यत् येन हेतुभूतेन यस्मिन्वा जनः पापे रमते ननु कलिस्वातन्त्र्येण किं लोकं माविशदित्यत आह यत् यः कलिर्भगवतो विष्णोरेव तदधीनस्थितिप्रवृत्तिमानित्यर्थः ॥ २९ ॥ कृष्णाधीनत्वमेव कलेर्दर्शयति—यावदिति। अयमर्थः श्रीकृष्णाग्रे तदाज्ञाया सन्ध्यारूपेण शनैः प्रविष्टोपि पराक्रान्तुमभिभवितुं तु नाशकदतस्तत्रान्त्र इत्यर्थः ॥ ३० ॥ तस्माद्यथोक्त एव कलिप्रवृत्तिकाल इत्याह—यदेति ॥ ३१ ॥ कलेः प्रवृत्तिकालमुक्त्वा वृद्धिकालमाह—यदेति ॥ ३२ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं नवमस्कन्धमारभ्यानुक्रान्तवैवस्वतमनोर्वंशद्वयं निगमयति येऽतीता इति। उद्देशतः क्रमेण सङ्क्षेपतः ॥ २५ ॥ मज्जन्मप्रभृति यावत्सोमवंशसमाप्ति कियान्कालो भविष्यतीत्यभिप्रायमालक्ष्याह—आरभ्येति। नन्दाभिषेचनपर्यन्तैव सोमवंशानुवृत्तिरतो यावन्नन्दाभिषेचनमित्युक्तम्। वर्षसहस्रं पञ्चदशोत्तरं शतं चेति कयापि विवक्षयाऽवान्तरसङ्ख्येयम्। वस्तुतस्तु परीक्षिन्नन्दयोरन्तरं द्वाभ्यामूनं वर्षाणां सार्द्धसहस्रं भवति। यतः परीक्षित्समकालं मागधं मार्जारिमारभ्य रिपुञ्जयान्ता विंशती राजानः सहस्रसंवत्सरं भोक्ष्यन्तीति नवमस्कन्धे उक्तम्। ये बार्हद्रथभूपाला भाव्या साहस्रवत्सरमिति। ततः परं च प्रद्योतना अष्टत्रिंशोत्तरशतम्। शिशुनागाश्च षष्ट्युत्तरशतत्रयं भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तत्वात् ॥ २६ ॥ कलेः प्रवेशो वृद्धिश्च कदेत्यपेक्षायामाह—सप्तर्षीणां त्विति। अत्रायमर्थः। प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलं तत्र किञ्चिदुन्नतरेखाग्रस्थानीयो मरीचिस्ततः पश्चादानम्रयुगकन्धराकारो वसिष्ठः सभार्यः ततः पश्चादीषदुन्नतरेखामूलस्थानीयोऽङ्गिरास्ततः पश्चाच्चतुरस्रताराचतुष्के ईशान्ये अत्रिस्ततो दक्षिणतः पुलस्त्यः पुलस्त्यात्पश्चिमतः पुलहः तत उत्तरतः क्रतुः एवं स्थिते तेषां सप्तर्षीणां मध्ये यौ पूर्वौ उदयसमये प्रथममुदितौ पुलहक्रतुसंज्ञौ तयोस्तु मध्ये यत्समं दक्षिणतः समदेशावस्थितमश्विन्यादिष्वन्यतमं नक्षत्रं निशि दृश्यते ॥ २७ ॥ तेन युक्ता एत ऋषयो नृणामब्दशतं तिष्ठन्ति। ते च द्विजास्त्वदीये काले अधुना मघाः आश्रिता वर्तन्ते। तथा पूर्वयोः क्रतुपुलहयोर्मघानां च साम्यावस्थित्युपक्रमकाल एव कलिप्रवेशकाल इति सूचितम् ॥ २८ ॥ एवं पूर्वतः प्रविष्टोऽपि कलिर्यावद्भगवतो विष्णोर्भातीति भानुरवतारः कृष्णाख्यः पादपद्माभ्यां पृथिवीं स्पृशन्नास्ते स्म तावत्स पृथिवीं पराक्रान्तुमभवितुं नाशकत् न समर्थोऽभूत्। यदा तु सोऽसौ रमापतिर्दिवं वैकुण्ठं गतस्तदा कलिर्लोकमविशत् यत् यस्मात् कलिप्रवेशाज्जनः पापे रमत इति द्वयोरन्वयः। वै निश्चये ॥ २९–३० ॥ अतो यथोक्त एक कलिप्रवेशकाल इत्याह—यदेति। हिशब्दोऽवधारणे। यदैव सप्त देवर्षयो मघासु विचरन्ति स्म तदा तु दिव्येन मानेन सन्ध्यांशाभ्यां सह द्वादशाब्दशतात्मकः कलिः सन्ध्यामतिक्रम्य लोकं प्रविष्ट इत्यन्वयः ॥ ३१ ॥ एवं कलेः प्रवेशकालमुक्त्वा तस्य वृद्धिकालमाह—यदेति। तदा प्रद्योतनात्प्रभृति वृद्धिं गच्छन्नन्दात्प्रभृत्यतिवृद्धिं गमिष्यतीत्यर्थः ॥ ३२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

मज्जन्मप्रभृति यावत्सोमवंशसमाप्ति कियान् कालो गत इति नृपाभिप्रायमालक्ष्य तद्वक्तुं कलियुगावान्तरविशेषं वक्तुं चाहारभ्येत्यादिना। आरभ्येति। भवतः, जन्म आरभ्य, यावत् नन्दाभिषेचनं, एतत्तु, वर्षसहस्रं पञ्चदशोत्तरं शतं च, इत्येषा कयापि विवक्षयाऽवान्तरसंख्या, वस्तुतस्तु परीक्षिन्नन्दयोरन्तरं द्वाभ्यामूनं वर्षाणां सार्द्धसहस्रं भवति। यतः नवमस्कन्धे 'ये बार्हद्रथभूपाला भाव्याः साहस्रवत्सरम्' इत्यनेन परीक्षित्समकालं मार्जारिमारभ्य रिपुंजयान्ता विंशतिराजानः सहस्रसंवत्सरं भोक्ष्यन्तीत्युक्तत्वात्। ततः परं च, पञ्च प्रद्योतनाः, अष्टत्रिंशोत्तरशतं शिशुनागाश्च, षष्ट्युत्तरशतत्रयं, भोक्ष्यन्ति पृथिवीमित्यत्रैवोक्तत्वाच्च ॥ कदा तर्हि कलियुगारम्भ इति तदभिप्रायमालक्ष्य कलेः प्रवृत्तिकालं वृद्धिकालं च निरूपयितुं तत्कालज्ञानोपलक्षणमाह। सप्तर्षीणां त्विति द्वाभ्याम्। सप्तर्षीणामिति। सप्तर्षीणां सप्तर्षितारकाणां, मध्ये तु, पूर्वौ यौ, दिवि उदितौ दृश्येते, तयोः मध्ये तु यत् तत्समं नक्षत्रं, निशि दृश्यते, तेनेत्युत्तरेणान्वयः। असमर्थः। प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलं, तत्र किंचिदुन्नतेषाग्रस्थानीयः मरीचिः, ततः पश्चादानम्रयुगकन्धराकारो वसिष्ठः सभार्यः, ततः पश्चादीषदुन्नतेषामूलस्थानीयोऽङ्गिराः, ततः पश्चाच्चतुरस्रताराचतुष्के, ईशानेऽत्रिः,

ततो दक्षिणतः पुलस्त्यः, पुलस्त्यात्पश्चिमतः पुलहः, तत उत्तरतः क्रतुः, एवं स्थिते, तेषां मध्ये यौ पूर्वौ, उदयसमये प्रथममुदितौ पुलहक्रतुसंज्ञौ तयोस्तु मध्ये, यत् समं दक्षिणतः समरेखावस्थितमश्विन्यादिष्वन्यतमं नक्षत्रं दृश्यते तेनेति ॥ २६ ॥ तेनेति। तेन युक्ताः ऋषयः, नृणां अब्दशतमेव तिष्ठन्ति। ते च द्विजाः ऋषयः, त्वदीये काले, अधुना मघां आश्रिताः, मघानक्षत्रमाश्रित्य वर्त्तन्ते। पूर्वयोर्मघानां च साम्यावस्थित्युपक्रमकालः, कलियुगारम्भकाल इति सूचितं, तदग्रे स्पष्टमेव वदिष्यति ॥ २७ ॥ कदा तर्हि युगाभिमानिपुरुषप्रवेश इत्यतस्तमुपलक्षणेनाह। विष्णोरिति। भातीति भानुः, प्रकाशबहुलः, विष्णोः सर्वान्तरात्मनः भगवतः, असौ कृष्णाख्यः देहः, दिवं द्योतमानं स्वधाम, गतः, तदा कलिः इमं लोकं, अविशत्। यद्यस्माद्युगाभिमानिपुरुषप्रवेशनाद्धेतोः, जनः पापे रमते, युगसंधावेव भगवदवतारोऽतः प्रवृत्तेऽपि कलौ युगे कल्यभिमानिपुरुषो भगवतः स्वधामानुगमनात्पूर्वं किमपि स्वकर्म कर्त्तुं न प्रबभूवेत्यनेन सूच्यते ॥ २८ ॥ एतदेव स्पष्टमाह। यावदिति। रमापतिः स श्रीकृष्णः, यावत् पादपद्माभ्यां स्पृशन् भुवमिति शेषः। आस्ते, तावत् कलिः कल्यभिमानिपुरुषः, चापि पृथिवीं पराक्रान्तुमभिभवितुं न अशकत् वै। स्वकार्यविधानक्षमो न बभूवेत्यर्थः ॥ २९ ॥ सूचितमप्यर्थं स्फुटबोधाय स्पष्टमाह। यदेति। यदा यं कालमारभ्य, सप्त देवर्षयः, मघासु विचरन्ति, मघानां समजवेन चरितुमारब्धवन्त इत्यर्थः। हि तदा तु, तं कालमारभ्यैवेत्यर्थः। द्वादशाब्दशतात्मकः दिव्येन मानेन संध्यंशाभ्यां सह द्वादशाब्दशतात्मकः कलिः प्रवृत्तः संध्यामतिक्रम्य प्रविष्टः ॥ ३० ॥ एवं कलेः प्रवेशकालमुक्त्वा तस्य वृद्धिकालमाह यदेति। यदा महर्षयः, मघाभ्यः पूर्वाषाढां यास्यन्ति, मघासमदेशं विहाय पूर्वाफाल्गुन्योः समदेशं यास्यन्ति, तदा प्रद्योतनात् प्रभृति, वृद्धिं गच्छन्निति शेषः। एषः कलिः, नन्दात् प्रभृति वृद्धिं गमिष्यति ॥ ३१ ॥ ननु यदा कलेर्लिङ्गमुपलब्धं तदैव प्रविष्ट इति वक्तुं युक्तं, ततः पूर्वं प्रवेशः ततः परं च वृद्धिरित्युक्तौ किं प्रमाणं तत्राभिजनोक्तिं प्रमाणयति। यस्मिन्निति। यस्मिन् अहनि, कृष्णः दिवं स्वधाम यातः, तस्मिन् अहनि, तदा तत्क्षणमेव, कलियुगं प्रतिपन्नं, प्रविष्टमिति ज्ञातं, इति पुराविदः युगप्रवेशकालाभिज्ञाः, प्राहुः। तथा च विष्णुपुराणे। 'यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि। प्रतिपन्नं कलियुगं तस्य संख्यां निबोध मे' इति ॥ ३२ ॥

## हिन्दी अनुवाद

परीक्षित्! चन्द्रवंश में और सूर्यवंश में जितने राजा हो गये हैं या होंगे, उन सब का मैंने संक्षेप से वर्णन कर दिया ॥ २५ ॥ तुम्हारे जन्म से लेकर राजा नन्द के अभिषेक तक एक हजार, एक सौ पंद्रह वर्ष का समय लगेगा ॥ २६ ॥ जिस समय आकाश में सप्तर्षियों का उदय होता है, उस समय पहले उनमें से दो ही तारे दिखायी पड़ते हैं। उनके बीच में दक्षिणोत्तर रेखा पर समभाग में अश्विनी आदि नक्षत्रों में से एक नक्षत्र दिखायी पड़ता है ॥ २७ ॥ उस नक्षत्र के साथ सप्तर्षिगण मनुष्यों की गणना से सौ वर्ष तक रहते हैं। वे तुम्हारे जन्म के समय और इस समय भी मघा नक्षत्र पर स्थित हैं ॥ २८ ॥ स्वयं सर्वव्यापक सर्वशक्तिमान् भगवान् ही शुद्ध सत्त्वमय विग्रह के साथ श्रीकृष्ण के रूप में प्रकट हुए थे। वे जिस समय अपनी लीला संवरण करके परम धाम को पधार गये, उसी समय कलियुग ने संसार में प्रवेश किया। उसी के कारण मनुष्यों की मति-गति पाप की ओर ढुलक गयी ॥ २९ ॥ जब तक लक्ष्मीपति भगवान् श्रीकृष्ण अपने चरणकमलों से पृथ्वी का स्पर्श करते रहे, तब तक कलियुग पृथ्वी पर अपना पैर न जमा सका ॥ ३० ॥ परीक्षित्! जिस समय सप्तर्षि मघा नक्षत्र पर विचरण करते रहते हैं, उसी समय कलियुग का प्रारम्भ होता है। कलियुग की आयु देवताओं की वर्ष गणना से बारह सौ वर्षों की अर्थात् मनुष्यों की गणना के अनुसार चार लाख, बत्तीस हजार वर्ष की है ॥ ३१ ॥ जिस समय सप्तर्षि मघा से चलकर पूर्वाषाढ़ा नक्षत्र में जा चुके होंगे, उस समय राजा नन्द का राज्य रहेगा। तभी से कलियुग की वृद्धि शुरू होगी ॥ ३२ ॥

यस्मिन् कृष्णो दिवं यातस्तस्मिन्नेव तदाहनि। प्रतिपन्नं कलियुगमिति प्राहुः पुराविदः ॥ ३३ ॥
दिव्याब्दानां सहस्रान्ते चतुर्थे तु पुनः कृतम्। भविष्यति यदा नृणां मन आत्मप्रकाशकम् ॥ ३४ ॥
इत्येष मानवो वंशो यथा संख्यायते भुवि। तथा विट्शूद्रविप्राणां तास्ता ज्ञेया युगे युगे ॥ ३५ ॥
एतेषां नामलिङ्गानां पुरुषाणां महात्मनाम्। कथामात्रावशिष्टानां कीर्तिरेव स्थिता भुवि ॥ ३६ ॥
देवापिः शन्तनोर्भ्राता मरुश्चेक्ष्वाकुवंशजः। कलापग्राम आसाते महायोगबलान्वितौ ॥ ३७ ॥
ताविहैत्य कलेरन्ते वासुदेवानुशि[७]क्षितौ। वर्णाश्रमयुतं धर्मं पूर्ववत् प्रथयिष्यतः ॥ ३८ ॥
कृतं त्रेता द्वापरं च कलिश्चेति चतुर्युगम्। अनेन क्रमयोगेन भुवि प्राणिषु वर्तते ॥ ३९ ॥
राजन्नेते मया प्रोक्ता नरदेवास्तथापरे। भूमौ ममत्वं कृत्वान्ते हित्वेमां निधनं गताः ॥ ४० ॥

---

७—शासितौ।

## कृष्णप्रिया व्याख्या

अन्वयः—यस्मिन् अहनि कृष्णः दिवं यातः तस्मिन् एव कलियुगं प्रतिपन्नम् इति पुराविदः प्राहुः ॥ ३३ ॥ दिव्याब्दानां चतुर्थे सहस्रान्ते तु पुनः कृतं भविष्यति यदा नृणां मनः आत्मप्रकाशकं (भविष्यति) इति एव भुवि यथा मानवः वंशः संख्यायते तथा युगे युगे ॥ ३४ ॥ विट्शूद्रविप्राणां ताः ताः (अवस्थाः) ज्ञेयाः ॥ ३५ ॥ नामलिङ्गानां महात्मनां कथामात्राव-शिष्टानां एतेषां पुरुषाणां कीर्तिः एव भुवि स्थिता ॥ ३६ ॥ शन्तनोः भ्राता देवापिः ईक्ष्वाकुवंशजः मरुः च महायोगबलान्वितौ कलापग्रामे आसाते ॥ ३७ ॥ कलेः अन्ते वासुदेवानुशिक्षितौ तौ इह एत्य पूर्ववत् वर्णाश्रमयुतं धर्मं प्रथयिष्यतः ॥ ३८ ॥ कृतं त्रेता द्वापरं कलिः च इति चतुर्युगं अनेन क्रमयोगेन प्राणिषु वर्तते ॥ ३९ ॥ राजन् एते मया प्रोक्ताः नरदेवाः तथा अपरे भूमौ ममत्वं कृत्वा अन्ते इमां (पृथ्वीं) हित्वा निधनं गताः ॥ ४० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु यदा कलेर्लिंगमुपलब्धं तदैव प्रविष्ट इति युक्तं ततः पूर्वमेव प्रवेशस्ततः परं वृद्धिरित्यत्र किं प्रमाणं तत्राह। यस्मिन्निति। प्रतिपन्नं प्रविष्टमिति ज्ञातम्। पुराविदः पूर्वज्ञातारः ॥ ३३ ॥ कलेरनंतरं कृतयुगप्रवेशमाह। दिव्याब्दानामिति। चतुर्थे कलौ प्रवेशनाब्दपरिमितेनांशेनाऽपि सहातीते सतीत्यर्थः। कृतयुगप्रवेशचिह्नमाह। यदा नृणां मन आत्मप्रकाशकं भविष्यति तदेति ॥ ३४ ॥ राजवंशोक्तां स्थितिं ब्राह्मणादिवंशेष्वप्यतिदिशति। इत्येष इति। यथा याभिरुच्चनीचावस्थाभिः। तास्ता अवस्थाः। वंश इति वा पाठः ॥ ३५ ॥ एतत्कीर्तनस्य वैराग्योपयोगितामाह। एतेषामिति। नामैव लिंगं ज्ञापकं येषां तेषां कथामात्रेणै-वावशिष्टानां कीर्तिरेव स्थिता न तु राज्यं पुत्रादयो वा ॥ ३६ ॥ कलावुत्सन्नानां राजवंशानां पुनः प्रवृत्तिप्रकारमाह। देवापिः सोम-वंशजः। मरुस्तु सूर्यवंशजः। कलापग्रामो नाम योगिनामावासः प्रसिद्धः ॥ ३७-३८ ॥ इममेव प्रकारं प्रतिचतुर्युगं दर्शयति। कृतमिति ॥ ३९ ॥ "एतेषां नामलिंगानाम्" इत्यादि यदुक्तं तत्प्रपंचयति राजन्निति पंचभिः ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुनराक्षिपति—नन्विति। तस्मिन्नेवाहनि। तदा तस्मिन्नेव क्षणे ॥ ३३ ॥ इत्यर्थ इति—दिव्याब्दानां सहस्रस्यांतः-स्थितिर्यस्मिन्संध्यांशे स सहस्रांतस्तस्मिंस्तथा तद्गुणसंविज्ञानबहुव्रीहित्वाद्द्वादशशताब्दात्मके संध्यांशसहिते कृतयुगापेक्षया चतुर्थे कलाविति शेषेणायं भावः। दिव्याब्दानां सहस्रांत इत्यलुक्समासः 'अंतो नाशे स्थितावपि' इत्यभिधानात्। यद्वा—दिव्या-ब्दानां सहस्रेणांतो नाशो यस्य तस्मिंश्चतुर्थेऽतीते सति सहस्रपदं संध्यांशरूपशतद्वयस्याप्युपलक्षणम् ॥ ३४ ॥ तास्ता इत्यस्य स्थाने वंशा इति वा पाठः ॥ ३५-३६ ॥ बदरिकाश्रमे कलापग्रामोऽस्ति। महायोगबलान्वितावणिमाद्यैश्वर्ययुक्तौ ॥ ३७ ॥ तौ मरुदेवापि-संज्ञौ। इहार्यावर्ते। एत्य प्राप्य। वसुदेवेन कल्किरूपेण हरिणा अनुशिक्षितौ बोधितौ। पूर्ववद्गतकृतयुगवत् ॥३८-३९॥ हे राजन्निति—राजमात्राणामियमेव दशेति भावः। अंते देहान्ते। इमां भुवम् ॥ ४० ॥

## अन्वितार्थप्रकाशिका

यदेति। यदा महर्षयः मघाभ्यः पूर्वाषाढां यास्यन्ति तदा प्रद्योतनात्प्रभृति वृद्धिं गच्छन्नन्दात्प्रभृत्यतिवृद्धिं गमिष्य-तीत्यर्थः ॥ ३३ ननु कलेः प्रथमसन्ध्यायां कृष्णोऽवतीर्ण इति नव्या वदन्ति तन्नेत्याह—यस्मिन्निति। श्रीकृष्णो यस्मिन्नेवाहनि दिवं यातस्तस्मिन्नेवाहनि तत्रापि तस्मिन्नेव क्षणे कलियुगं प्रतिपन्नं प्रजाभिभवे योग्यं जातमिति पूर्ववृत्तान्तज्ञाः प्राहुः ॥ ३४ ॥ दिव्येति। दिव्यानां देवमानववर्षाणां सहस्रस्यान्ते चतुर्थे कलियुगे व्यतिक्रान्ते सति पुनः कृतयुगं भविष्यति। यदा नृणां मनः आत्मनः स्वरूपस्य प्रकाशकं भविष्यति तदा कृतं भविष्यतीत्यर्थः ॥ ३५ ॥ राजवंशोक्तां स्थितिं ब्राह्मणादिवंशेष्वप्यतिदिशति—इतीति। इत्येवंभूत एष मानवो वैवस्वतमनोर्वंशो यथा संख्यायते याभिरुच्चनीचावस्थाभिः सम्यक् कथ्यते तथा विट्शूद्रविप्राणामपि तास्ता अवस्था युगे युगे बोध्या इत्यर्थः। तास्ता इत्यत्र वंशा इति पाठान्तरम् ॥ ३६ ॥ एतेषामिति। नामैव लिङ्गं ज्ञापकं येषां तेषां महात्मनां कथामात्रमेवावशिष्टं येषां तेषाम् एतेषां पुरुषाणां भुवि कीर्तिरेव स्थिता न तु राज्यं पुत्रादयो वा अतो नात्र रागः कार्यः ॥ ३७ ॥ कलावुत्सन्नानां राजवंशानां पुनः प्रवृत्तिप्रकारमाह—देवापिरिति। शन्तनोर्भ्राता देवापिः सोमवंशजः इक्ष्वाकुवंशजो मरुश्च सूर्य-वंशजः एतौ महायोगबलेनान्वितौ कलापग्रामे बदर्याश्रमस्थे योगिनामावासे प्रसिद्धे आसाते ॥ ३८ ॥ ताविति। तौ च कलेरन्ते कृतयुगादौ वासुदेवेन भगवताऽनुशिक्षितौ उपदिष्टवर्णाश्रमधर्मौ इह लोके एत्य आगत्य वर्णाश्रमधर्मं पूर्ववत्प्रथयिष्यतः ॥ ३९ ॥ प्रतिचतुर्युगमयमेव प्रकार इत्याह—कृतमिति। स्फुटम् ॥ ४० ॥

## श्रीमद्वीरराघवव्याख्या

पराक्रान्तुं न चाशकदित्यनेन प्रविष्टस्यापि कलिपुरुषस्य भगवत्पादपद्मस्पर्शप्रभावात्स्वकार्याक्षमत्वमुक्तं तत्राभिज्ञान्सम्वादयति यस्मिन्निति। यस्मिन्नहनि जातः तस्मिन्नेवाहनि तत्रापि तस्मिन्नेव क्षणे कलियुगे प्रतिपन्ने स्वकार्यकरणे प्राप्तं प्राहुः पुराविदः कालाभिज्ञाः ॥ ३३ ॥ कलेरनन्तरं कृतयुगप्रवेशमाह—दिव्याब्दानामिति। चतुर्थे कलौ युगे दिव्यानामब्दानां यत्सहस्रं तस्यान्ते दिव्येन मानेन सहस्राब्दपरिमिते चतुर्थे युगेऽतिक्रान्ते सति इत्यर्थः। द्वादशाब्दशतात्मक इति सन्धिभ्यां सङ्कलय्योक्तम् अत्र तु तौ विना मध्यकालपरिमाणमुक्तम् इत्यतो न विरोधः कृतयुगारम्भकालमुपलक्षणेनाह—यदा नृणां मन आत्मप्रकाशकमित्यात्मस्वरूपगोचरक्षमं भविष्यति तदा कृतयुगं भविष्यतीत्यर्थः ॥ ३४ ॥ तत्र प्रजाः कीदृश्यः इत्यभिप्रायमालक्ष्याह—इत्येष इति। इत्थम्भूत एष मानवः वैवस्वतमनुवंशः यथासङ्ख्यायते याभिरुच्चनीचाऽवस्थाभिः सम्यक् ख्यायते कथ्यते तदा विट्शूद्रविप्राणां तास्ता अवस्था युगे युगे बोध्या इत्यर्थः ॥ ३५ ॥ किं बहुना वंशानुकीर्त्तनेनेति तटस्थशङ्कां वारयति—एतेषामिति। नामलिङ्गशब्दो मत्वर्थीयाऽर्शआद्यजन्तः एवंविधनामरूपवताम् इत्यर्थः। महात्मनाम् इत्यनेन तत्र केषाञ्चिद्भागवतत्वं तत एव तच्चरित्रस्यावश्यश्रोतव्यत्वादिकञ्च सूच्यते कथामात्रेणैवावशिष्टानां ननु नामरूपाभ्यामनेन ततोरनित्यत्वं सूच्यते तेन च तात्पर्य्यालोचनतया वैराग्यहेतुत्वं फलितं कीर्त्तिरेव स्थिता भुवीत्यनेनावश्यम् राजभिः कीर्त्तिमद्भिर्भवितव्यम् इति व्यज्यते ॥ ३६ ॥ ननु, कलावुत्सन्नराजवंशतद्धर्माणां कुतः पुनः कृते प्रवृत्तिरित्यभिप्रायमालक्ष्याह—देवापिरिति। शन्तनोर्भ्राता देवापिर्नाम सोमवंश्यः मरुर्नामेक्ष्वांकुवंशजः सूर्य्यवंश्य इत्यर्थः। तावुभावधुना कलापग्रामे आसाते कलापग्रामो बदर्य्याश्रमस्थो योगिनामावासः प्रसिद्धः कथम्भूतौ महतां योगबलेनान्वितौ ॥ ३७ ॥ ततः किमत आह—ताविति। कलेरन्तः कृतयुगादिः तदा भगवता अनुशिक्षितौ उपदिष्टवर्णाश्रमधर्मौ आदिष्टौ चेह लोके एत्यागत्य वर्णाश्रमधर्मं पूर्ववत्प्रथयिष्यतः प्रकटीकरिष्यतः ॥ ३८ ॥ प्रतिचतुर्युगरीतिः कीदृशीत्यभिप्रायमालक्ष्याह—कृतमिति। अनेन क्रमयोगेन निरूपितचतुर्युगक्रमयोगरीत्यैव प्रतिचतुर्युगं प्राणिषु वर्त्तते निमित्ततया प्रवर्त्तत इत्यर्थः। इयमेव रीतिः प्रतिचतुर्युगमिति भावः यद्यप्यत्र त्रेताद्वापरयोः प्रकारो नोक्त इत्यनेन क्रमयोगेनेत्यसङ्गतं तथाप्याद्यन्तयुगरीतिनिरूपणे मध्ययोरपि युगयोर्निरूपितप्रायत्वैवेत्यभिप्रायेण तथोक्तम् ॥ ३९ ॥ कथामात्रावशिष्टानाम् इत्यनेन सूचितं विवृणोति—राजन्निति। हे राजन्! एते मयाऽधुना निरूपिता वैवस्वतमन्वन्तराऽवस्थाश्च राजानस्तावद्भूमौ ममत्वं ममताबुद्धिं कृत्वाऽन्ते तद्भोगनिमित्तपुण्यावसाने निधनं नाशङ्गताः तेनैव ममत्वेन युता निरयं प्राप्ता इति भावः ॥ ४० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कृष्णस्वर्गारोहणानन्तरं कञ्चित्कालं हित्वा पश्चादाविष्टः किं कलिरुत तस्मिन्नेवाहनीति सन्देहं व्यवच्छिनत्ति—यस्मिन्निति ॥ ३३ ॥ ततः कियान् कालः कृतप्रारम्भायेति तत्राह—दिव्येति। यदा यस्मिन् कृतयुगे आत्मप्रकाशकं परमात्मप्रकाशकं भवतीति शेषः ॥ ३४ ॥ इति शब्दः समाप्तिपर्यन्तं कथितः एष मानवो वंशः वैवस्वतमनुसम्बन्धी भुवि यथा सङ्ख्यायते तथा विट्शूद्रविप्राणां वंशा अपि युगे युगे ज्ञेयाः बोद्धव्याः इत्यतिदेशोयम् ॥ ३५ ॥ एतेषां सत्त्वे किं ज्ञापकमत्राह—एतेषामिति। नामलिङ्गयुक्तानां अनेनैतिह्यं प्रमाणमुक्तं भवति ॥ ३६ ॥ कृते धर्मप्रतिष्ठापकः क इति तत्राह—देवापिरिति। महायोगबलान्वितौ महाज्ञानबलयुक्तौ अणिमाद्यैश्वर्ययुक्तौ वा ॥ ३७–३८ ॥ कति युगानीत्यत्राह—कृतमिति ॥ ३९ ॥ एषामज्ञानमाह—राजन्निति ॥ ४० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ननु, कलेः प्रथमसन्ध्यायां कृष्णोऽवतीर्ण इति नवीना वदन्ति तन्नेत्याह—यस्मिन्निति। अतो युगानां पूर्वयुगसन्ध्यांशशेष एव आरम्भसमय इति यो नियमः सोऽपि कलेर्भगवत्प्रभावव्यर्थ एवाभूदितिभावः ॥ ३३ ॥ कृतयुगप्रवेशकालमाह—दिव्येति। चतुर्थे कलौ तदीयसन्ध्यांशशेषसमय इत्यर्थः ॥ ३४ ॥ मानवो वंशो यथासङ्ख्यायते मनुवंश्यानां यावत्यः सङ्ख्या यथोक्ता इत्यर्थः। तथैव तत्र तत्रत्यानां वैश्यादीनां वैश्यादिवंश्यानामपि तावत्यः सङ्ख्या अनुक्ता अपि ज्ञेयाः ॥३५॥ नामैव लिङ्गं ज्ञापकं येषाम् ॥३६॥ कलावुत्सन्नानां राजवंशानां पुनः प्रवृत्तिप्रकारमाह—देवापिः सोमवंशजः ॥ ३७–३८ ॥ इममेव प्रकारं प्रतिचतुर्युगं दर्शयति—कृतमिति ॥ ३९–४० ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

यदुक्तं कृष्णाख्योऽसौ दिवङ्गतः तदाविशत्कलिर्लोकमिति तत्रापि कस्मिन्दिने कलिः प्रवृत्त इत्यत्राह—यस्मिन्निति। यस्मिन्नहनि कृष्णो दिवं यातः तस्मिन्नेवाहनि तत्रापि तदैव तस्मिन् क्षण एव प्रतिपन्नं प्रवृत्तं कलियुगं भवतीति पुराविदः पूर्वज्ञातारः प्राहुः ॥ ३३ ॥ कलेरनन्तरं कृतयुगप्रवृत्तिं दर्शयति—दिव्याब्दानामिति चतुर्थे कलौ दिव्यानामब्दानां यत्सहस्रं तदन्ते पुनः कृतं भविष्यति सहस्रमिति मुख्यकलियुगाभिप्रायं तच्च सन्ध्यासन्ध्यांशलक्षणस्य सम्वत्सरशतद्वयस्याप्युपलक्षणम् द्वादशाब्दशतात्मक इत्युक्तत्वात् तत्प्रवृत्तिचिह्नमाह—यदा नृणां मनः आत्मप्रकाशकं भविष्यति तदा ॥ ३४ ॥ राजवंशोक्तां स्थितिं वर्णान्तरेष्वप्यतिदिति

इत्येष इति। मानवो वैवस्वतमनुवंशः इक्ष्वाकुप्रभृतिद्वारा ऐलप्रभृतिद्वारा च यथा उत्तममध्यमाधमाभिरवस्थाभिः सम्यक् ख्यायते कथ्यते तथा विट्शूद्रविप्राणां युगे युगे वंशाः ज्ञेयाः॥ ३५॥ प्राकृतदेहगेहादीनामनित्यतां वैराग्योत्पादनायाह-एतेषामिति। एतेषां पूर्वोक्तानां महात्मनां स्वधर्मनिष्ठानां श्रोतव्यकीर्तीनां नामलिङ्गानां नामरूपवतां मत्वर्थीयार्शं आद्यजन्तो नामलिङ्गशब्दः कथामात्रेणैवावशिष्टानां कीर्तिरेव भुवि स्थिता नतु देहगेहादिकम्॥ ३६-३७॥ ननु, कलावुत्सन्नानां राजवंशादीनां कृते पुनः प्रवृत्तिः कुत इत्यत्राह देवापिरिति॥ ३८॥ अयमेव युगप्रतिप्रकारः आगतानागतेषु सर्वेषु युगेषु बोध्य इत्याह-कृतमिति॥ ३९॥ एतेषां नामलिङ्गानामिति श्लोकार्थं प्रपञ्चयति-राजन्निति पञ्चभिः। अपरे विट्शूद्रविप्राः॥ ४०॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ननु यदा कलेर्लिङ्गमुपलब्धं तदैव प्रविष्टः स इति मन्तव्यं ततः पूर्वमेव प्रवेशस्ततः परं वृद्धिरित्यत्र किं प्रमाणं तत्राह—यस्मिन्निति। श्रीकृष्णो यस्मिन्नेवाहनि दिवं यातस्तस्मिन्नेवाहनि तत्रापि तस्मिन्नेव क्षणे कलियुगं प्रतिपन्नं प्रजाभिभवे योग्यं जातमिति पूर्ववृत्तान्तज्ञाः प्राहुः॥ ३३॥ कलेरनन्तरं कृतयुगप्रवेशमाह—दिव्यानां देवमानवर्षाणां सहस्रस्यान्ते चतुर्थे कलियुगे व्यतिक्रान्ते सति पुनः कृतयुगं भविष्यति। पूर्वं तु सन्ध्यांशसाहित्यविवक्षया द्वादशाब्दशतात्मक इत्युक्तम्। अत्र तु तद्विहाय सहस्राब्दोक्तिरिति न विरोधः। कृतयुगप्रवेशचिह्नमाह—यदा नृणां मन आत्मनः स्वरूपस्य प्रकाशकं भविष्यति तदा कृतं भविष्यतीत्यर्थः॥ ३४॥ राजवंशोक्तां व्यवस्थां ब्राह्मणादिवंशेष्वप्यतिदिशति—इतीति। इत्येवम्भूत एष मानवो वैवस्वतमनोर्वंशो यथा सङ्ख्यायते याभिरुच्चनीचावस्थाभिः सम्यक् कथ्यते तथा विट्शूद्रविप्राणामपि तास्ता अवस्था युगे-युगे बोध्या इत्यर्थः। वंशा इति पाठान्तरम्॥ ३५॥ एतच्छ्रवणकीर्त्तनादेर्वैराग्यफलकत्वं सूचयन्नाह—एतेषामिति। एतेषामपि पुरुषाणां भुवि कीर्त्तिरेव स्थिता। अतो विवेकिभिः सत्कीर्त्त्यर्थं प्रयत्नो विधेय इति भावः। कीर्त्तिमात्रस्थितौ हेतुमाह—नामलिङ्गानामिति। नामैव लिङ्गं ज्ञापकं येषां तेषाम्। तत्रापि हेतुमाह—कथामात्रमेवावशिष्टं येषां न तु शरीरं राज्यं पुत्रादयो वा तेषामिति। कथाऽवशेषेऽपि तेषां सदाचारौदार्यादिगुणवत्त्वं हेतुं सूचयन्नाह—महात्मनामिति॥३६॥ ननु कलावुत्सन्नानां राजवंशतद्धर्माणां कथं पुनः प्रवृत्तिरित्यपेक्षायामाह—देवापिरिति। देवापिः सोमवंश्यः। मरुः सूर्यवंश्यः। कलापग्रामो बदर्याश्रमस्थो योगिनामावासः प्रसिद्धः तत्रासाते। तत्र सामर्थ्यमाह—महायोगबलेनान्विताविति॥ ३७॥ तौ च कलेरन्ते कृतयुगादौ वासुदेवेन भगवताऽनुशिक्षितौ उपदिष्टवर्णाश्रमधर्मौ इह लोके एत्य आगत्य वर्णाश्रमधर्मं पूर्ववत्प्रथयिष्यतः॥ ३८॥ अयमेव प्रकारः प्रतिचतुर्युगमित्याह—कृतमिति॥ ३९॥ एतेषां नामलिङ्गानामित्यादि यदुक्तं तत्प्रपञ्चयति-राजन्निति पञ्चभिः॥ ४०॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कलेरनन्तरं कृतयुगप्रवेशमाह। दिव्याब्दानामिति। चतुर्थे तु, चतुर्थे कलौ युगे इत्यर्थः। युगेषु तस्य चतुर्थत्वात्, दिव्याब्दानां सहस्रान्ते प्रवेशनाब्दपरिमिते सांशयुगकालेवऽतीते सति, पुनः, कृतं सत्ययुगं भविष्यति। तच्चिह्नमाह। यदा नृणां मनः, आत्मप्रकाशकमात्मस्वरूपगोचरं भविष्यति, तदा कृतयुगं भविष्यति, तदा कृतयुगं प्रविष्टमिति ज्ञेयमित्यर्थः॥३३॥ राजवंशोक्तां स्थितिं ब्राह्मणादिवंशेष्वप्यतिदिशति। इत्येष इति। इत्यमुना प्रकारेण, एषः मानवः वंशः याभिरुच्चनीचावस्थाभिः, भुवि, यथा संख्यायते कथ्यते, तथा विट्शूद्रविप्राणामपि युगे युगे तास्ता अवस्थाः, ज्ञेयाः, 'यथा राजा तथा प्रजा' इति भावः॥३४॥ एतत्कीर्त्तनस्य वैराग्योपयोगितामाह। एतेषामिति। नामलिङ्गानां नामरूपवतां, नामलिङ्गवति नामलिङ्गशब्दो मत्वर्थीयार्शआद्यजन्तः। एतेषां महात्मनां, कथामात्रमवशिष्टानां कथामात्रेणैवावशेषतां प्राप्तानां पुरुषाणां, भुवि कीर्त्तिः एव स्थिता, न तु राज्यं, पुत्रादयो वा। अत्र महात्मनामित्यनेन केषांचिद्भागवतत्वत एव तच्चरितस्यावश्यश्रोतव्यत्वादिकं सूचितम्। कथामात्रेणैवावशिष्टानां, न तु नामरूपाभ्यामित्यनेन तयोरनित्यत्वं सूचितम्। तेन च, तत्पर्यालोचनया वैराग्यहेतुत्वं फलितम्। कीर्त्तिरेव भुवि स्थितेत्यनेन, राजभिरवश्यं कीर्त्तिमद्भिर्भवितव्यमिति च व्यज्यते॥ ३५॥ ननु कलावुत्सन्नराजवंशतद्धर्माणां कुतः पुनः कृतयुगे प्रवृत्तिरित्यभिप्रायमालक्ष्याह। देवापिरिति। शंतनोः भ्राता देवापिः, सोमवंशज इति शेषः। इक्ष्वाकुवंशजः मरुश्च, सूर्यवंशज इति शेषः। तावुभौ महायोगबलान्वितौ, अधुना कलापग्रामे आसाते। कलापग्रामो बदर्याश्रमान्तिके योगिनामावासतया प्रसिद्धः॥ ३६॥ ततः किमत आह। ताविति तौ, कलेः अन्ते, कृतयुगादावित्यर्थः। इह लोके एत्य, वासुदेवानुशिक्षितौ कल्किना भगवतोपदिष्टौ सन्तावित्यर्थः। वर्णाश्रमयुतं धर्मं, पूर्ववत्, प्रथयिष्यतः॥ ३७॥ प्रतिचतुर्युगं रीतिः कीदृशीत्यभिप्रायमालक्ष्याह। कृतमिति। कृतं, त्रेता, द्वापरं च, कलिश्च, इत्येतत् चतुर्युगं, अनेन क्रमयोगेन, निरूपितचतुर्युगक्रमरीत्यैव, भुवि प्राणिषु वर्त्तते। इयमेव रीतिः प्रतिचतुर्युगमिति भावः। यद्यप्यत्र त्रेताद्वापरयोः प्रकारो नोक्त इत्यनेन क्रमयोगेनेत्यसंगतं, तथाप्याद्यन्त्ययुगयोरितरत्रानिरूपितप्रायत्वाच्चयोः क्वचित्कचिन्निरूपितप्रायत्वादेवात्रानिरूपणमिति प्रतिभाति॥ ३८॥ कथामात्रावशिष्टानामित्यनेन सूचितं विवृणोति। राजन्निति। हे राजन्, एते नरदेवाः, मया प्रोक्ताः, ते तथा अपरे च, भूमौ ममत्वं कृत्वा, अन्ते च इमां हित्वा, निधनं गताः। तेनैव ममत्वेन

युता निरयं प्राप्ता इति भावः ॥ ३९ ॥ ममत्वं कृत्वेत्यनेन सूचितां भूतद्रोहप्रवृत्तिं निन्दति। कृमीति। राजेति नाम यस्य तस्य, अमुकदेशाधिपतिरमुकनामायं राजेति लोकविख्यातस्य, यस्य देहस्य, अन्ते प्राणवियोगानन्तरमित्यर्थः। कृमिविट्भस्म इति संज्ञा भविष्यति। तत्कृते तदर्थं, भूतध्रुक् यो भूतानि द्रुह्यति, सः किं स्वार्थं स्वहितं, वेद इति काकुः, न वेदैवेत्यर्थः। तत्र हेतुत्वेन भूतद्रोहं विशिनष्टि। यतो भूतद्रोहात् निरयो भवति ॥ ४० ॥

## हिन्दी अनुवाद

पुरातत्ववेत्ता ऐतिहासिक विद्वानों का कहना है कि जिस दिन भगवान् श्रीकृष्ण ने अपने परम धाम को प्रयाण किया, उसी दिन, उसी समय कलियुग का प्रारम्भ हो गया ॥ ३३ ॥ परीक्षित्! जब देवताओं की वर्षगणना के अनुसार एक हजार वर्ष बीत चुकेंगे, तब कलियुग के अन्तिम दिनों में फिर से कल्कि भगवान् की कृपा से मनुष्यों के मन में सात्त्विकता का सञ्चार होगा, लोग अपने वास्तविक स्वरूप को जान सकेंगे और तभी से सत्ययुग का प्रारम्भ भी होगा ॥ ३४ ॥ परीक्षित्! मैंने तो तुमसे केवल मनुवंश का, सो भी संक्षेप से वर्णन किया है। जैसे मनुवंश की गणना होती है, वैसे ही प्रत्येक युग में ब्राह्मण, वैश्य और शूद्रों की भी वंशपरम्परा समझनी चाहिये ॥ ३५ ॥ राजन्! जिन पुरुषों और महात्माओं का वर्णन मैंने तुमसे किया है, अब केवल नाम से ही उनकी पहचान होती है। अब वे नहीं हैं, केवल उनकी कथा रह गयी है। अब उनकी कीर्ति ही पृथ्वी पर जहाँ-तहाँ सुनने को मिलती है ॥ ३६ ॥ भीष्मपितामह के पिता राजा शन्तनु के भाई देवापि और इक्ष्वाकुवंशी मरु इस समय कलापग्राम में स्थित हैं। वे बहुत बड़े योगबल से युक्त हैं ॥ ३७ ॥ कलियुग के अन्त में कल्कि भगवान् की आज्ञा से फिर यहाँ आयेंगे और पहले की भाँति ही वर्णाश्रम धर्म का विस्तार करेंगे ॥ ३८ ॥ सत्ययुग, त्रेता, द्वापर और कलियुग—ये ही चार युग हैं, ये पूर्वोक्त क्रम के अनुसार अपने-अपने समय में पृथ्वी के प्राणियों पर अपना प्रभाव दिखाते रहते हैं ॥ ३९ ॥ परीक्षित्! मैंने तुमसे जिन राजाओं का वर्णन किया है, ये सब और उनके अतिरिक्त दूसरे राजा भी इस पृथ्वी को 'मेरी-मेरी' कहते थे, परन्तु अन्त में मरकर धूल में मिल गये ॥ ४० ॥

**कृमिविड्भस्मसंज्ञान्ते राजनाम्नोऽपि यस्य च। भूतध्रुक् तत्कृते स्वार्थं किं वेद निरयो यतः ॥ ४१ ॥**
**कथं सेयमखण्डा भूः पूर्वैर्मे पुरुषैर्धृता। मत्पुत्रस्य च पौत्रस्य मत्पूर्वा वंशजस्य वा ॥ ४२ ॥**
**तेजोऽबन्नमयं कायं गृहीत्वाऽऽत्मतयाबुधाः। महीं ममतया चोभौ हित्वान्तेऽदर्शनं गताः ॥ ४३ ॥**
**ये ये भूपतयो राजन् भुञ्जन्ति भुवमोजसा। कालेन ते कृताः सर्वे कथामात्राः कथासु च ॥ ४४ ॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—राजन् राजनाम्नः अपि यस्य अन्ते कृमिविड्भस्मसंज्ञा तत्कृते भूतध्रुक् स्वार्थं किं वेद यतः निरयः (भवति) ॥४१॥ सा इयम् अखण्डा भूः मे पूर्वैः पुरुषैः धृता मत्पूर्वा (सा) मत्पुत्रस्य पौत्रस्य वंशजस्य वा ॥४२॥ अबुधाः तेजोऽबन्नमयं कायं गृहीत्वा महीं ममतया च उभौ हित्वा अन्ते अदर्शनं गताः ॥ ४३ ॥ राजन् ये-ये भूपतयः ओजसा भुवं भुञ्जन्ति ते सर्वे कालेन कथासु कथामात्राः कृताः ॥ ४४ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ममत्वं कृत्वेत्यनेन सूचितां भूतद्रोहप्रवृत्तिं निंदति। कृमीति। राजनाम्नो राजेति नाम यस्य तस्यापि देहस्यांते कृमयो विष्ठा भस्मेति वा संज्ञा भविष्यति। तत्कृते तदर्थं यो भूतध्रुक् भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद किंतु न वेदैव। कुत इत्यपेक्षायां हेतुत्वेन भूतद्रोहं विशिनष्टि। यतो भूतद्रोहान्निरयो भवति ॥ ४१ ॥ ममत्वप्रकारं प्रपंचयति। कथमिति। सेयमखंडा भूर्मे पूर्वजैर्धृता सती इदानीं मत्पूर्वा च सति मत्पुत्रादेः कथं स्यादित्येवम् ॥ ४२ ॥ उभौ महीं कायं च अदर्शनं मृत्युम् ॥ ४३ ॥ उपसंहरति। ये ये इति। ते सर्वे च कथासु क्रियमाणासु। कथामात्राः कालेन कृताः ॥ ४४ ॥

इति श्रीमद्भागवते म० द्वादशस्कंधे भावार्थदीपिकायां टीकायां द्वितीयोऽध्यायः ॥ २ ॥

---

१—राजन्यास्त्राधिपस्य।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वार्थं स्वकर्त्तव्यं किं वेद किन्तु न वेदेत्यर्थः ॥ ४१–४२ ॥ तेजोवन्नमयमिति त्रिवृत्करणश्रुत्यभिप्रायेणोक्तम् ॥ ४३ ॥ कथामात्रा इति–कथैव तेषामवशिष्टा न स्वरूपमिति भावः । (४४) । यदि कल्क्यवतारान्तराजकथाविशेषजिज्ञासा चेत्तर्हि भविष्यसंहितादिग्रन्था मत्संगृहीतचतुर्युगीयराजचरित्रग्रन्थश्चावलोकनीयः ॥ ४४ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे द्वितीयोऽध्यायः ॥ २ ॥

## अन्वितार्थप्रकाशिका

राजन्निति स्फुटम् ॥ ४१ ॥ कृमीति तस्य च राजनाम्नो राजेति नाम यस्य तस्यापि देहस्यान्ते मरणे सति कृमयो विष्ठाभस्मेति वा संज्ञा भविष्यति । तत्कृते तदर्थं यो भूतध्रुक् भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद नैव वेद । महामूर्खः स एव यतो भूतद्रोहात् द्रोग्धुर्निरयो भवति ॥ ४२ ॥ ममत्वप्रकारमाह–कथमिति । सेयमखण्डा भूर्मे पूर्वजैः पुरुषैर्धृता सेदानीं मत्पूर्वा च सती मत्पुत्रस्य पौत्रस्य वंशजस्य च कथं स्यादित्येवम् ॥ ४३ ॥ तेज इति । अबुधाः तेजोऽवन्नमयम् उपलक्षणतया पञ्चभूतपरिणामरूपं कायमेवात्मतया गृहीत्वा अभिमत्य महीं च ममतया गृहीत्वा उभौ महीकायौ हित्वाऽन्ते प्रारब्धावसाने अदर्शनं गताः मरणं प्राप्ताः । यद्वा । कथमित्यादिद्वयम् एकान्वयम् ॥ ४४ ॥ ये इति । हे राजन् ! ये ये राजानः ओजसा बलेन भुवं भुञ्जन्ति स्म । ते सर्व एव कथासु क्रियमाणासु कथामात्ररूपाः कालेन कृताः तथा च ततो लोकद्वयफलभ्रंशात् ततो निवृत्तिमार्ग एव श्रेयानिति भावः ॥ ४५ ॥

इति श्रीमद्भागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायां द्वितीयोऽध्यायः ॥ २ ॥

## श्रीमद्वीरराघवव्याख्या

एतदेव विशदयति–कृमीति । यस्य राजनाम्नोऽपि शरीरस्यान्ते कृमयो विष्ठा भस्मेति वा संज्ञा भविष्यति तत्कृते तदर्थं भूतेभ्यो द्रुह्यतीति तथा स किं स्वार्थं स्वहितं वेद ? तत्र हेतुत्वेन भूतद्रोहं विशिनष्टि–यतो भूतद्रोहान्निरयो भवति ॥ ४१ ॥ ममत्वं कृत्वेत्युक्तं ममताप्रकारं प्रपञ्चयति–कथमिति । सेयमखण्डा भूमिर्मम पूर्वजैर्धृता सती मदनन्तरं मत्पूर्वमहमेव पूर्वो धर्त्ता यस्यास्तथाभूता सती मत्पुत्रादेः कथं स्यादित्येवम् ॥ ४२ ॥ किञ्च, तेज इति । अबुधाः देहातिरिक्तात्मज्ञानविधुरा अत एव तेजोऽवन्नपरिणामरूपं कायम् शरीरमात्मतया गृहीत्वाऽभिमत्य महीं तु ममतया गृहीत्वा उभौ पृथ्वीकायौ हित्वाऽन्ते प्रारब्धान्तेऽदर्शनम् लयङ्गताः प्राप्ताः ॥ ४३ ॥ कथामात्रावशिष्टानाम् इत्यस्य प्रपञ्चमुपसंहरति–ये ये इति । हे राजन् ! ये ये राजानो भुवमोजसा पौरुषेण भुञ्जन्ति ते सर्वे कालेन कृताः समाप्ताः कथासु क्रियमाणासु कथामात्ररूपाः कृताश्च ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां द्वितीयोऽध्यायः ॥ २ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

राजन्नाम्नोपि यस्य शरीरस्यान्ते नाशे कृमिविड्भस्मसंज्ञा तादृशं शरीरं प्राप्य भूतध्रुक् स्वार्थं मनुते न परप्रयोजनं यतो भूतद्रोहान्निरयो भवति तं वेद किन्न वेदैव यस्य पुरुषशरीरस्यान्त इति वा ॥ ४१ ॥ स्वार्थमननप्रकारमाह–कथमिति । भवन्त्यस्यां सत्त्वानीति भूः येयं मत्पूर्वैः पुरुषैः धृता सेयं भूर्ममाखण्डा राजान्तरानधिकृता कथं स्यान्मत्पुत्रस्य मत्पौत्रस्य च मद्वंशस्य अहं पूर्वो यस्यां सा मत्पूर्वा च कथं स्यादिति मत्वा ॥ ४२ ॥ तेजोऽवन्नमिदं कायमात्मतया नित्यत्वेन मुधा गृहीत्वा अमी राजानो ममत्वेन गृहीत्वा उभौ महीं च देहं च हित्वा अदर्शनं मरणं गता भवन्तीत्यन्वयः ॥ ४३ ॥ साम्प्रतं तेष्वेकोऽपि नास्तीत्याशयेनाह–य इति । पुराणादिगतकथासु कथामात्राः सर्वात्मना कथैव येषां ते तथाकृताः स्वरूपतो न सन्तीति शेषः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां द्वितीयोऽध्यायः ॥ २ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

राजन्नाम्नोऽपि देहस्य अन्ते मरणे सति कृम्यादिकमेव नाम भवेत् तस्य देहस्य कृते ॥ ४१ ॥ ममत्वप्रकारमभिनयने दर्शयति–कथमिति । मत्पूर्वा च सती मत्पुत्रादेः कथं स्यादित्येवम् ॥ ४२ ॥ कायम् आत्मतया महीं च ममतया गृहीत्वा उभौ महीकायौ अदर्शनं मृत्युम् ॥ ४३–४४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । द्वादशस्य द्वितीयोऽयं सङ्गतः सङ्गतः सताम् ॥ २ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एवं निधनार्हदेहादिमतो देहाद्यर्थमकृत्यकारिणो मूर्खत्वं नरकार्हत्वञ्चाह–कृमीति । राजेति नाम यस्य तस्यापि देहस्यान्ते कृम्यादिसञ्ज्ञा भविष्यति तत्तस्य देहस्य कृते यो भूतधृक् प्राणिभ्यो द्रुह्यति स भूतद्रोहे किं स्वार्थं वेद न किमपि तत्र स्वार्थः परार्थो

वास्ति अपितु यतो भूतद्रोहान्निरय एव ॥ ४१ ॥ भूमौ ममत्वं कृत्वेति यदुक्तं तत्प्रपञ्चयति—कथमिति। या मे मम पूर्वजैर्धृता सेयमखण्डा सकला मत्पूर्वा अहं पुत्रादेरपेक्षया पूर्वः धर्ता यस्यास्तथाभूता सती मत्पुत्रादेः कथं स्यादिति ॥४०॥ किञ्च कायमात्मतया महीं ममतया च गृहीत्वा अन्ते जीवनान्ते उभयं हित्वा अदर्शनं लयं गताः यतोऽबुधाः ॥ ४३ ॥ उक्तां देहगेहाद्यनित्यतामुपसंहरति—ये इति। ये ये भुवम् ओजसा पौरुषेण भुञ्जन्ति ते सर्वे कथासु क्रियमाणासु कथामात्राः कालेन कृताः अतः सर्वं प्राकृतं देहादिकं निरोधविषयमतस्तत्र विरक्तः सन् हरिं भजेदिति फलितोऽर्थः ॥ ४४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे द्वितीयोऽध्यायार्थप्रकाशः ॥ २ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ममत्वं कृत्वेत्यनेन सूचितां भूतद्रोहप्रवृत्तिं निन्दति—कृमीति। यस्य च राजनाम्नो राजेति नाम यस्य तस्यापि देहस्यान्ते कृमयो विष्ठा भस्मेति वा सञ्ज्ञा भविष्यति। तत्कृते तदर्थे यो भूतध्रुक् भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद नैव वेद महामूर्ख एव सः। कुत इत्यपेक्षायां हेतुत्वेन भूतद्रोहे दोषमाह—यतो भूतद्रोहात्कर्त्तुर्निरयो भवतीति ॥ ४१ ॥ ममताप्रकारं प्रपञ्चयति—कथमिति। सेयमखण्डा भूमे पूर्वजैः पुरुषैर्धृता सेदानीं मत्पूर्वा च सती मत्पुत्रादेः कथं स्यादित्येवम् ॥ ४२ ॥ अबुधा देहातिरिक्तात्मज्ञानविधुराः। अतएव तेजोऽबन्नपरिणामरूपं कायमेवात्मरूपं कायमेवात्मतया गृहीत्वा अभिमत्य महीं च ममतया गृहीत्वा उभौ महीकायौ हत्वाऽन्ते प्रारब्धावसाने अदर्शनं गता मरणं प्राप्ताः ॥ ४३ ॥ एतेषामित्यस्य प्रपञ्चमुपसंहरति—ये य इति। हे राजन् ये ये राजानः ओजसा बलेन भुवं भुञ्जन्ति स्म ते सर्वे एव कथासु क्रियमाणासु कथामात्ररूपाः कालेन कृताः। तथाच ततो लोकद्वयफलभ्रंशात् ततो निवृत्तिमार्ग एव श्रेयानिति भावः ॥ ४४ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता द्वादशे तत्र विश्वाश्रयनिरूपणे। द्वितीयो विवृतो ऽध्यायः कलिदोषादिबोधकः ॥ ३ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ममतां कृत्वेत्युक्तममताप्रकारं प्रपञ्चयति। कथमिति। सा इयं अखण्डा भूर्भूमिः, मे मम, पूर्वैः पूर्वजैः पुरुषैः धृता सती, इदानीं अहं पूर्वो धर्ता यस्यास्तथाभूता सती, मत्पुत्रस्य पौत्रस्य च, वंशजस्य च कथं स्यात्, मत्पुत्राद्यैर्धृता कथं स्यादित्यर्थः ॥४१॥ तेज इति। अबुधाः देहातिरिक्तात्मज्ञानविधुराः, अत एव तेजोऽबन्नमयं तेजोऽबन्नपरिणामरूपं कायं शरीरं, आत्मतया गृहीत्वाऽभिमत्य, महीं च पृथिवीं तु, ममतया गृहीत्वा, अन्ते उभौ महीकायौ हित्वा, अदर्शनं गताः, मृत्युं प्राप्ता इत्यर्थः। कथामात्रावशिष्टानामित्यस्य प्रपञ्चमुपसंहरति। ये इति। हे राजन् ये ये भूपतयो राजानः ओजसा भुवं भुञ्जन्ति, स्मेत्यध्याहार्यं, ते सर्वे, कालेन कथासु क्रियमाणासु, कथामात्राः कथामात्रावशेषाश्च, कृताः। तेषामहन्ताममतास्पदं किंचिन्नेह विद्यते, 'विरज्य सर्वतस्तस्मात्सेव्यो ब्रह्मात्मना हरिः' ॥ ४३ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसाचार्यविरचिताया-
मन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

## हिन्दी अनुवाद

इस शरीर को भले ही कोई राजा कह ले; परन्तु अन्त में यह कीड़ा, विष्ठा अथवा राख के रूप में ही परिणत होगा, राख ही होकर रहेगा। इसी शरीर के या इसके सम्बन्धियों के लिये जो किसी भी प्राणी को सताता है, वह न तो अपना स्वार्थ जानता है और न तो परमार्थ। क्योंकि प्राणियों को सताना तो नरक का द्वार है ॥ ४१ ॥ वे लोग यही सोचा करते हैं कि मेरे दादा-परदादा इस अखण्ड भूमण्डल का शासन करते थे; अब यह मेरे अधीन किस प्रकार रहे और मेरे बाद मेरे बेटे-पोते, मेरे वंशज किस प्रकार इसका उपभोग करें ॥ ४२ ॥ वे मूर्ख इस आग, पानी और मिट्टी के शरीर को अपना आपा मान बैठते हैं और बड़े अभिमान के साथ डींग हाँकते हैं कि यह पृथ्वी मेरी है। अन्त में वे शरीर और पृथ्वी दोनों को छोड़कर स्वयं ही अदृश्य हो जाते हैं ॥ ४३ ॥ प्रिय परीक्षित्! जो-जो नरपति बड़े उत्साह और बल-पौरुष से इस पृथ्वी के उपभोग में लगे रहे, उन सबको काल ने अपने विकराल गाल में धर दबाया। अब केवल इतिहास में उसकी कहानी ही शेष रह गयी है ॥ ४४ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥

# अथ तृतीयोऽध्यायः

## श्रीशुक उवाच

दृष्ट्वाऽऽत्मनि जये[1] व्यग्रान् नृपान् हसति भूरियम् । अहो मा विजिगीषन्ति मृत्योः क्रीडनका नृपाः ॥ १ ॥
काम एष नरेन्द्राणां मोघः स्याद् विदुषामपि । येन फेनोपमे पिण्डे येऽतिविश्रम्भिता नृपाः ॥ २ ॥
पूर्वं निर्जित्य षड्वर्गं जेष्यामो राजमन्त्रिणः । ततः सचिवपौराप्तकरीन्द्रानस्य कण्टकान् ॥ ३ ॥
एवं क्रमेण जेष्यामः पृथ्वीं सागरमेखलाम् । इत्याशाबद्धहृदया न पश्यन्त्यन्तिकेऽन्तकम् ॥ ४ ॥
समुद्रावरणां जित्वा मां विशन्त्यब्धिमोजसा । कियदात्मजयस्यैतन्मुक्तिरात्मजये फलम् ॥ ५ ॥
यां विसृज्यैव मनवस्तत्सुताश्च कुरूद्वह । गता यथागतं युद्धे तां मां जेष्यन्त्यबुद्धयः ॥ ६ ॥
मत्कृते पितृपुत्राणां भ्रातॄणां चापि विग्रहः । जायते ह्यसतां राज्ये ममताबद्धचेतसाम् ॥ ७ ॥
ममैवेयं मही कृत्स्ना न ते मूढेति वादिनः । स्पर्धमाना मिथो घ्नन्ति म्रियन्ते मत्कृते नृपाः ॥ ८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—श्रीशुकः उवाच—आत्मनि जये व्यग्रान् नृपान् दृष्ट्वा इयं भूः हसति अहो मृत्योः क्रीडनकाः नृपाः मा ( मां ) विजिगीषन्ति ॥ १ ॥ विदुषाम् अपि नरेन्द्राणाम् एषः कामः मोघः स्यात् येन फेनोपमे पिण्डे ये नृपाः अतिविश्रम्भिताः ॥ २ ॥ पूर्वं षड्वर्गं निर्जित्य राजमन्त्रिणः ततः सचिवपौराप्तकरीन्द्रान् अस्य कण्टकान् जेष्यामः ॥ ३ ॥ एवं क्रमेण सागरमेखलां पृथ्वीं जेष्यामः इति आशाबद्धहृदयाः अन्तिके अन्तकं न पश्यन्ति ॥ ४ ॥ समुद्रावरणां मां जित्वा ओजसा अब्धिं विशन्ति आत्मजयस्य एतत् कियत् आत्मजये मुक्तिः फलम् ॥ ५ ॥ कुरूद्वह मनवः तत्सुताः च यां ( मां ) विसृज्य एव यथागतं गताः अबुद्धयः तां मां युद्धे जेष्यन्ति ॥ ६ ॥ मत्कृते राज्ये ममताबद्धचेतसां असतां पितृपुत्राणां भ्रातॄणां च अपि विग्रहः जायते ॥७॥ मम इयं कृत्स्ना मही मूढ न ते इति वादिनः नृपाः मिथः स्पर्धमानाः मत्कृते घ्नन्ति म्रियन्ते च ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तृतीये भूमिगीतैश्च राज्यदोषादि वर्ण्यते । कलौ च दोषभूयिष्ठे दोषहंत्री हरेर्नतिः ॥ १ ॥

देहेऽहंतां भूमौ च ममतां कुर्वंत्यतोऽबुधा इत्युक्तं तदेव भूमिगीतैः प्रपंचयति दृष्ट्वेत्यादिना । आत्मनि पृथिव्यां जये व्यग्रानुद्युक्तान् । हासप्रकारमेवाह । अहो इति । मा माम् ॥ १ ॥ येन कामेन फेनोपमे पिंडे देहेऽतिविश्रंभिता विश्वासं नीता ये तेषां नरेंद्राणामेष कामो मोघ एव स्यात् ॥ २ ॥ काममेव दर्शयति द्वाभ्याम् । पूर्वमिति । इंद्रियार्थलंपटस्य न राज्यप्राप्तिः स्यादिति प्रथममिंद्रियषड्वर्गं निर्जित्य राजमंत्रिणो जेष्यामो वशीकरिष्यामः । सचिवा अमात्याः करींद्रा हस्तिपास्ताश्च जेष्यामः । कंटकान् प्रतिपक्षान् । अस्य अपास्य । अथ कंटकानिति वा पाठः ॥ ३–४ ॥ एवं केचिदाशाबद्धा एव केचिन्मां पुनर्जित्वाऽप्यतितृष्णयाऽब्धिं विशंति तदेवमिंद्रियजयेन ये राज्यं साधयितुमिच्छंति तेऽतिमंदा इत्याह । कियदिति ॥ ५ ॥ अन्तकं न पश्यंतीत्युक्तं तदेवाह । यामिति । कुरूद्वहेति भूमिगीतं कथयन् शुकः संबोधयति । कुलोद्वहा इति तु पाठः सुगमः ॥ ६ ॥ अबुद्धय इत्युक्तं तत्प्रपंचयति । मत्कृत इति ॥ ७—८ ॥

---

१. यव्यग्रा०॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

नतिर्नमस्कारः। 'कृष्णप्रणामी न पुनर्भवाय' इत्युक्तेः ( १ ) आत्मनि स्वस्यां पृथिव्यामित्यर्थः ॥ १ ॥ विदुषां नीतिविदाम्। फेनोपमे डिंडीरपिण्डतुल्ये नश्वरे ॥ २ ॥ करींद्रानित्युपलक्षणं सेनामात्रस्य। अमात्याः कर्मसचिवाः। 'मंत्री बुद्धिसहायः स्यात्' इत्यमरः। आप्ता विश्वस्ताः। कंटकाः क्षुद्रशत्रवः ॥ ३ ॥ एवंक्रमेण पूर्वोक्तक्रमेण ॥ ४ ॥ अब्धिं विशंतीत्युक्त्या द्वीपजयो ध्वनितः भूजयादिना किमपि न प्रयोजनमपित्वनर्थ एवावशिष्यते मनोजयापेक्षयेत्यभिप्रायेणाह–कियदिति। मनोजये किं स्यात्तत्राह–मुक्तिरिति 'बंध इंद्रियविक्षेपो मोक्ष एषाञ्च संयमः' इत्येकादशोनविंशाध्याये भगवदुक्तेर्न्यायनये मनसोऽप्यन्तरिन्द्रियत्वे सिद्धेपीह तु षड्वर्गपदोक्तेरेव तद्गृह्यत इति ध्येयं सुज्ञैः ॥ ५ ॥ हे कुरूद्वहेति–त्वमपि यत्कुरुवंशं वहसि स वंशोऽप्यधुना भवच्छेष एवेति भावः। यथागतमिति आगतमनतिक्रम्य यथा तेत्रागता निरुपस्करास्तथैव गता इत्यर्थः ॥६॥ न केवलमितरेषामेव मदर्थे विरोधो भवत्यपि तु पित्रादिदेहसंबंधिनामपीत्याह–मत्कृत इति। मत्कृते मदर्थे विग्रहः संयुगः " विग्रहस्तु समासार्थवाक्ये भागे रणांगके " इत्यभिधानात् अयमपि प्रायिक इत्याह–असतामप्रशस्तकर्मणाम् ॥ ७ ॥ किंप्रकारो विग्रहस्तत्राह ममैवेति ॥ ८ ॥

## अन्वितार्थप्रकाशिका

तृतीये भूमिगीतैश्च राज्यदोषादि वर्ण्यते। दोषनाशो हरेर्नत्या तत्र श्लोका द्विमार्गणाः ( ५२ ) ॥
उवाचत्रितयं ( ३ ) साङ्घ्रिवेदबाणा ( ५४ ) अनुष्टुभः ॥ ३ ॥

दृष्ट्वेति। आत्मनि भूमौ निमित्तभूतायां यो विजयः तस्मिन् व्यग्रानुद्युक्तान् दृष्ट्वा भूर्हसति। अहो मृत्योः क्रीडनकाः क्रीडनकवदधीनाः इमे नृपा मां विजिगीषन्ति विजयेन वशीकृत्य भोक्तुमिच्छन्तीत्यर्थः। तङभावः आर्षः ॥ १ ॥ काम इति। येन कामेन फेनोपमे जलबुद्बुदतुल्ये विनश्वरे पिण्डे शरीरे ये नृपाः अतीव विश्रम्भिताः विश्वास नीतास्तेषां विदुषामपि पित्रादिदृष्टान्तेनात्मनो मृत्युवश्यतां पश्यतामपीत्यर्थः। नरेन्द्राणां स एष कामः मद्भोगाभिलाषात्मकः मोघो व्यर्थ एव स्यात् ॥ २ ॥ काममेव दर्शयति–पूर्वमिति। इन्द्रियैर्विषयलम्पटस्य न राज्यप्राप्तिः स्यादिति तावत् षड्वर्गं इन्द्रियषट्कं विजित्य ततो राजमन्त्रिणः जेष्यामः। ततः सचिवान् कर्मसु अमात्यान् पौरान् पुरवासिनः आप्तान् राजगुर्वादीन् करीन्द्रान् हस्तिपान् तदुपलक्षिताः सर्वाः अन्ये चास्य भूमण्डलस्य अस्य मत्प्रतिपक्षनृपस्य कण्टकान् कण्टकतुल्यान् दुःखप्रदांश्चौरादीन् जेष्यामः। अस्येत्यत्र अथेति वा पाठः ॥३॥ एवमिति। एवं क्रमेण सागरो मेखलावदावरणं यस्यास्तां पृथ्वीं जेष्यामः स्वाधीनां करिष्याम इत्येवंभूतया आशया बद्धं हृदयं येषां तेऽन्तिके समीपे वर्त्तमानमन्तकं मृत्युं न पश्यन्ति ॥४॥ समुद्रेति समुद्रावरणां मां जित्वाऽपि ओजसा बलेन अब्धिं विशन्ति द्वीपान्तराणि विजिगीषन्त इत्यर्थः। अत इन्द्रियजयेन राज्यं साधयितुमिच्छवो मन्दभाग्या इत्याह। आत्मजयस्य इन्द्रियजयस्य एतत्कृत्स्नस्य भूमण्डलस्यात्माधीनतासंपादनं कियत्फलम् अतितुच्छमित्यर्थः। नश्वरत्वादित्याशयः। यत आत्मजये सति संसारदुःखान्मुक्तिरेव योग्यं फलमिति ॥ ५ ॥ यामिति हे कुरूद्वहेति भूमिगीतं कथयन् शुकः संबोधयति। मनवस्तत्सुताश्च यां मां विसृज्यैव यथा आगतं तथा गताः मृताः। यद्वा। यथागतं यथाज्ञानं स्वस्वज्ञानमनतिक्रम्य विरक्ता भूत्वा वनं गता इत्यर्थः। तां मामेते अबुद्धयो युद्धे जेष्यन्ति ॥ ६ ॥ अबुद्धित्वं प्रपञ्चयति–मदिति। मत्कृते मदर्थं राज्ये ममताबद्धचेतसामसतां पितृपुत्राणां भ्रातॄणां चापि विग्रहो जायते ॥ ७ ॥ ममेति। विग्रहकथनं स्पष्टम् ॥ ८ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

पिण्डे शरीरे ॥ १–२ ॥ अब्धिं विशन्ति द्वीपान्तरानभिजयन्ति ॥ ३–१३ ॥

## श्रीमद्वीरराघवव्याख्या

प्रपञ्चितां ममतां महीहासेन सम्वादयन् वैराग्यमुत्पादयन् कलिदोषान्प्रपञ्चयंश्च तन्निरसनोपायमुपदिशति तृतीयेन–दृष्ट्वात्मविजय इत्यादिना। आत्मनि भूमौ निमित्ते यो विजयः तस्मिन् व्यग्रानुद्युक्तान् दृष्ट्वा इयं भूर्हसति, हासमेव प्रपञ्चयति–महो इत्यादिभिः सार्द्धद्वादशभिः मृत्योः क्रीडनकास्तदधीना इमे नृपाः मां विजिगीषन्ति विजयेन मां भोक्तुमिच्छन्तीत्यर्थः ॥ १ ॥ काम इति विदुषामपि। पित्रादिदृष्टान्तेन मृत्युवश्यतां दृश्यतामपि अयं कामः विजिगीषात्मकेच्छाविशेषः मोघः व्यर्थः मोघत्वे हेतुत्वाकामं विशिनष्टि––येन कामेन फनोपमे जलबुद्बुदतुल्ये पिण्डे शरीरे ये नृपाः अतीव विस्रम्भिताः विश्वासं नीताः तेषां नरेद्राणामिति पूर्वेण सम्बन्धः ॥ २ ॥ विजिगीषुतां प्रपञ्चयति––सार्द्धद्वाभ्यां पूर्वमिति। इन्द्रियलम्पटस्य न राज्यप्राप्तिः स्यादिति तावत् षड्वर्गम् इन्द्रियषट्कं जित्वा तद्द्वारा देवताप्रसादमधिगत्येति भावः। क्रमेण राजमन्त्रिप्रभृतीनस्य भूमण्डलस्य कण्टकतुल्यान्

जेष्यामः तत्र सचिवा अमात्या अवान्तरव्यापारिणः पौराः पुरे भवाः तेषामाप्ताः करीन्द्रा हस्तिपाश्च तान् ॥ ३ ॥ ततः सागरः मेखला यस्यास्तां मेखलयेव सागरेण परिवृताम् इत्यर्थः । पृथ्वीं जेष्यामः स्वाधीनां करिष्यामः इतीत्थंभूताशया बद्धम् हृदयम् येषां ते अन्तिके समीपे वर्त्तमानमन्तकं मृत्युं, न पश्यन्ति नावलोकयन्ति किन्तु मां समुद्रावरणां जित्वा ततोऽधि विशन्ति द्वीपान्तराणि प्रविशन्ति ताम् विजिगीषन्ति इत्यर्थः । तावत्कृतस्येन्द्रियजयस्य नेदं फलमित्याह–कियदिति । एतत् कृत्स्नभूमण्डलस्य सप्तद्वीपस्यात्माधीनताप्रापणमित्येतत् किंयत्फलं न किञ्चिदेतदित्यर्थः । सत्फलस्य नश्वरत्वादिति भावः । किं तर्हि फलमित्यत आह–मुक्तिरात्मजये तावत् फलमिति ॥ ४–५ ॥ एतदेवोपपादयति–यामिति । कुरूद्वहेति सम्बोधनं भूमिगीतिं कथयन् शुकः सम्बोधयति कुलोद्वहेत्यपि पाठः सुगमः तत् सुता मनुपुत्राश्च यां मां विसृज्यैव गताः मृताः तथा तां विजित्य विसृष्टामपि अबुद्धयो बुद्धिरहिताः युद्धे जेष्यन्ति युद्धेन वशीकरिष्यन्तीत्यर्थः । गतमित्यस्य तैरिति शेषः । तेप्येवमेव गमिष्यन्तीत्यर्थः । अत्यन्तसादृश्येनाभेदमारोप्य गतमिति भूतनिर्देशः ॥ ६ ॥ अबुद्धितां प्रपञ्चयति मत्कृते इति । मत्कृते मदर्थं विग्रहः विरोधः जायते तत्र हेतुत्वेन तान् विशिनष्टि राज्ये ममताभिमानेन बद्धं चेतो येषां तेषामत एव चासतां दुरात्मनाम् ॥ ७ ॥ ममताबद्धचेतस्त्वमेवाभिनयेन दर्शयन्ती तत्प्रत्युक्तमसत्कर्मदर्शयति–ममैवेति । हे मूढ ते तवेयं भूमिर्न भवति किन्तु ममैवेति । वादान् कुर्वन्तः मिथः घ्नन्ति ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

चतुर्युगधर्मविभागः कलिदोषपरिहारश्चेत्येतदस्मिन् अध्यायेभिधीयते, तत्रादौ राज्ञां मौढ्यदर्शनेन भूमेः परिहासप्रकारमाह दृष्ट्वेति । आत्मनो नितरां जये व्यग्रांस्तदेकपरायणान् ॥ १ ॥ मौढ्यत्वमुपपादयति, येनेति ॥ २ ॥ कीदृशस्तेषां कामः ? इति तत्राह–पूर्वमिति । षड्वर्गं सन्ध्यादिलक्षणं निर्जयो नामोत्कर्षः षडिन्द्रियविषयं वा अनेन भूम्येकसाधनाग्रहं सूचयति–राजमन्त्रिणः राजा च मन्त्रिणश्च राजमन्त्रिणः मन्त्री बुद्धिसहायः स्यादिति ततो मन्त्रिजयानन्तरं सचिवः कर्मसहायः 'अमात्याः कर्मसचिवाः' इत्यमरः । आप्ताः विश्वस्ताः अथ पश्चात्कण्टकान् क्षुद्रशत्रून् ॥ ३ ॥ एवं क्रमेण राज्ञो जित्वा पृथिवीं जेष्यामः वशीकरिष्यामः इत्याशयातितृष्णया अन्तकं मृत्युम् ॥ ४ ॥ एवं केचित्पुनः मां जित्वाप्यतितृष्णयाऽधि विशन्तीत्यनेन द्वितीयादिजयाद्यं सूचयति–भूजयादिना न किमपि प्रयोजनमपि त्वन्ततोऽनर्थं एवावशिष्यते मनोजयफलापेक्षयेत्याह–कियदिति । आत्मजयस्य मनोजयस्य फलापेक्षयैतद् भूजयादिकं कियत् फलम् आत्मजये किं फलं येनायमेव साध्यः स्यादिति तत्राह मुक्तिरिति मुक्तिरिति आत्मजये मुक्तिरेव फलं यस्मात्तस्मादिति शेषः ॥ ५ ॥ इतोपि मज्जयकामा अज्ञा एवेत्याह–यामिति । मनवस्तत्सुताश्च यां मां विसृज्य यथा गता याताः अबुद्धयः तां मां जेष्यन्तीत्यन्वयः । आत्मजयवतां त्यागशक्तिरन्येषामन्यथेति सूचयति ॥ ६ ॥ न केवलमितरेषां मत्कृते विग्रहोऽपि तु शरीरसम्बन्धिनामपि स्यादित्याह–मत्कृत इति, अपिशब्दः पुत्रादीनामित्यनेन सम्बन्धयितव्यः अयमपि प्रायिक इत्याह–असतामिति । असतामप्रशस्तकर्मणाम् ॥ ७ ॥ किंप्रकारो विग्रह इति तत्राह–ममेति ॥ ८ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तृतीये तु भुवो हास्यं धर्मपादव्यवस्थितिः । कलेर्दोषो दोषहारि हरिस्मरणमुच्यते ॥

कथं सेयमखण्डा भूरित्यबुधानां मनोरथ उक्तस्तमेव पृथिव्या वर्णनेन प्रपञ्चयति–दृष्ट्वेति । मा माम् ॥ १ ॥ येन कामेन पिण्डे देहे ॥ २ ॥ काममेव दशायति–पूर्वमिति द्वाभ्याम् । तत्रेन्द्रियार्थलम्पटस्य राज्यप्राप्तिर्न स्यादतः प्रथममिन्द्रियषड्वर्गं जित्वा अस्य मत्प्रतिपक्षनृपस्य ॥ ३–४ ॥ मां पृथ्वीं जित्वा अतितृष्णया अधि विशन्ति तदीयरत्नान्याहर्त्तुमिति भावः । एवमिन्द्रियजयेन ये साधयितुमिच्छन्ति ते मन्दा इत्याह–कियदिति, ॥ ५ ॥ यथागतं यथाज्ञानं स्वस्वज्ञानमनतिक्रम्य विरक्ता भूत्वा वनं गता इत्यर्थः । तां मामेते मन्दा युद्धे जेष्यन्ति ॥ ६–८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

'तेजोऽबन्नमयं देहं गृहीत्वाऽऽत्मतयाऽबुधाः' इत्यत्रोक्तमबुधत्वं प्रपञ्चयन् कलिदोषान् तन्निवृत्युपायञ्चाह–तृतीयेनाध्यायेन दृष्ट्वेति । आत्मनि भुवि यो जयः तत्र व्यग्रान् व्याकुलान् दृष्ट्वा इयं भूर्हसति हासप्रकारमाह–अहो इति सार्द्धैर्द्वादशभिः ॥१॥ येन कामेन पिण्डे देहे अतिविश्रम्भिताः अतिविश्वासं नीताः स एष नरेन्द्राणां विदुषामपि किमुत मूर्खाणां कामः विजिगीषालक्षणः मोघो व्यर्थः एव स्यात् ॥ २ ॥ काममेव दर्शयति–द्वाभ्यां पूर्वमिति । 'नचानिर्जितषड्वर्गो राजा वै राज्यमर्हति'' इत्यतः पूर्वं षड्वर्गमिन्द्रियषट्कं निर्जित्य ततः क्रमेण राजमन्त्र्यादीन् अस्य भूविजयस्य कण्टकतुल्यान् जेष्यामः वशीकरिष्यामः तत्र सचिवाः अमात्याः पौराः पुरे भवाः राजहितैषिणो धनिनः आप्ताः राजपूज्याः करीन्द्राः हस्तिपाः ॥ ३–४ ॥ दैवात्केचिन्मां जित्वापि संतोषं न कुर्वन्तीत्याह–अर्द्धेन समुद्रावरणामिति । षड्वर्गजयस्य नेदं फलं किन्तु मुक्तिरिति दर्शयति–कियदिति । एतत् भूविजयादिकम्

आत्मजयस्य सेन्द्रियमनोजयस्य कियत्फलं न कियदपि ॥ ५ ॥ हे कुरूद्वह ! युधिष्ठिर ! रूपेण कुरूनुद्वहतीति स तथा हे धर्म अनेन धर्मं प्रति भूमिगीतं भूम्योपदिष्टमिति गम्यते ॥ ६–१२ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तृतीये कलिदोषाणां निवृत्त्युपायसंशये । हरिसङ्कीर्त्तनादेव तन्निवृत्तिर्निरूप्यते ॥ १ ॥

उक्तामेवाहन्तां ममतां च कुर्वतामज्ञत्वं प्रपञ्चयति—दृष्ट्वेत्यादिना । आत्मनि भूमौ निमित्तभूतायां यो विजयस्तस्मिन् व्यग्रान् उद्युक्तान्नृपान् दृष्ट्वा इयं भूर्हसति । तद्धासमेव प्रपञ्चयति—अहो इत्यादिभिः सार्द्धैर्द्वादशभिः । मृत्योः क्रीडनकाः क्रीडनकवदधीनाः इमे नृपा मां विजिगीषन्ति विजयेन वशीकृत्य भोक्तुमिच्छन्तीत्यर्थः ॥ १ ॥ येन कामेन फेनोपमे जलबुद्बुदतुल्ये विनश्वरे पिण्डे शरीरे ये नृपाः अतीव विश्रम्भिताः विश्वासं नीतास्तेषां नरेन्द्राणां स एष कामः मद्भोगाभिलाषात्मकः मोघो व्यर्थं एव स्यादित्यन्वयः । तेषां मूढत्वं हेतुं सूचयन्नाह—विदुषामपीति । पित्रादिदृष्टान्तेनात्मनो मृत्युवश्यतां पश्यतामपीत्यर्थः ॥२॥ काममेव दर्शयति—पूर्वमिति । इन्द्रियैर्विषयलम्पटस्य न राज्यप्राप्तिः स्यादिति तावत् षड्वर्गं पञ्चज्ञानेन्द्रियाणि एकं मन इतीन्द्रियषट्कं जित्वा तद्द्वारा देवताप्रसादमधिगम्य ततो राजमन्त्रिणः सचिवादींश्च जेष्याम इत्यन्वयः । सचिवाः अमात्याः । पौरा पुरवासिनः । आप्ताः राजगुर्वादयः । करीन्द्रा हस्तिपाः । तदुपलक्षिताः सर्वाः सेनाः अन्ये चास्य भूमण्डलस्य कण्टकाः कण्टकतुल्या दुःखप्रदाश्चोरादयः ॥ ३ ॥ एवं क्रमेण सागरो मेखलावदावरणं यस्यास्तां पृथ्वीं जेष्यामः । स्वाधीनां करिष्याम इत्येवम्भूतया आशया बद्धं हृदयं येषां तेऽन्तिके समीपे वर्त्तमानमन्तकं मृत्युं न पश्यन्ति नालोचयन्ति ॥ ४ ॥ किन्तु समुद्रावरणां मां जित्वाऽपि ओजसा बलेन अब्धिं विशन्ति द्वीपान्तराणि विजिगीषन्त इत्यर्थः । एवमिच्छन्तोऽतिमन्दा इत्याह—कियदिति । एतत् सप्तद्वीपवतः कृत्स्नस्य भूमण्डलस्यात्माधीनतासम्पादनं कियत्फलम्, अतितुच्छमित्यर्थः । नश्वरत्वादित्याशयः । तर्हि किं तस्य मुख्यं फलमित्यपेक्षायामाह—आत्मजये सति संसारदुःखान्मुक्तिरेव योग्यं फलमिति ॥ ५ ॥ अन्तिकेऽन्तकं न पश्यन्तीत्युक्तमेव स्पष्टयति—यामिति । हे कुरुद्वहेति भूमिगीतं कथयन् शुको राजानं सम्बोधयति—कुलोद्वहा इति पाठस्तु सुगमः । मन्वादयो यां मां विसृज्यैव यथा आगतं तथा गताः मृता। । तां मामेते अबुद्धयो युद्धे जेष्यन्ति । विजय एव तावद्दुर्लभः कथञ्चिन्महता प्रयासेन जित्वाऽपि मरण स्वभावत्त्वात्त्यक्त्वा मृतानां किं फलं स्यादित्याशयः॥ ६ ॥ बुद्धिहीनत्वमेव प्रपञ्चयति—मत्कृत इति । मदर्थे पितृपुत्रादीनां परस्परकलहो जायते । तत्र हेतुमाह—राज्ये ममतेति । तत्र हेतुः—असतामिति ॥ ७ ॥ ममताबद्धचेतस्त्वमेवाभिनयेनाह—ममैवेयमिति ॥ ८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

भूमिगीतैस्तृतीयेऽत्र राज्यदोषादि वर्ण्यते । भूरिदोषे कलावेका नतिर्दोषहरा हरेः ॥ १ ॥

प्रपञ्चितां ममतां भूमिहासेन संकथयन् वैराग्यमुत्पादयन् कलिदोषान् प्रपञ्चयंश्च तन्निरसनोपायमुपदिशति 'दृष्ट्वात्मविजये व्यग्रान्' इत्यादिना । दृष्ट्वात्मविजय इति । आत्मनि पृथिव्यां निमित्ते यो विजयस्तस्मिन्, व्यग्रान् व्युक्तान्, नृपान् दृष्ट्वा इयं भूः, हसति । हासमेव प्रपञ्चयति अहो इत्यादिभिः सार्द्धैर्दशभिः । मृत्योः क्रीडनकाः केवलं मृत्योरेवाधीनाः, इमे नृपाः, मां भूमिं, विजिगीषन्ति, विजयेन मां भोक्तुमिच्छन्तीत्यर्थः । अहो अत्याश्चर्यमिदम् ॥ १ ॥ काम इति । विदुषामपि पित्रादिदृष्टान्तेन मृत्युवश्यतां पश्यतामपि नरेन्द्राणाम्, एषः कामः मद्विजिगीषात्मकेच्छाविशेषः, मोघः व्यर्थः स्यात् । मोघत्वे हेतुतया कामं विशिनष्टि । येन कामेन, फेनोपमे जलबुद्बुदतुल्ये, पिण्डे शरीरे, ये नृपाः, अतिविश्रम्भिताः विश्वासं नीताः, तेषां नरेन्द्राणामेष कामो व्यर्थः स्यादित्यन्वयः ॥ २ ॥ विजिगीषुतां प्रपञ्चयति सार्द्धद्वाभ्याम् । पूर्वमिति । पूर्वं षड्वर्गं निर्जित्य, मनः सहितं ज्ञानेन्द्रियपञ्चकं वशीकृत्येत्यर्थः । इन्द्रियलम्पटस्य राज्यप्राप्त्यसंभवात् षडिन्द्रियविजयद्वारा देवताप्रसादमधिगम्येति भावः । ततः कण्टकान् कण्टकतुल्यान्, राजमन्त्रिणः राजा च मन्त्रिणश्च तानित्यर्थः । मन्त्रीबुद्धिसहायः, यद्वा, राज्ञां मन्त्रिणस्तान्, नेष्यामः । अथ मन्त्रिजयानन्तरं सचिवाः कर्मसहायाश्च, पौराः पुरभवा जनाश्च, आप्ता विश्वस्ताश्च, करीन्द्रा हस्तिपाश्च तान्, विजेष्यामः ॥ ३ ॥ एवमिति । एवं क्रमेण, सागरः मेखला यस्यास्तां, मेखलयेव सागरेण परिवृतामित्यर्थः । पृथ्वीं जेष्यामः, स्वाधीनां करिष्यामः । इतीत्थंभूतया आशया बद्धं हृदयं येषा ते, ते अन्तिके समीपे, वर्त्तमानम् अन्तकं मृत्युं, न पश्यन्ति नावलोकयन्ति ॥ ४ ॥ समुद्रेति । किं चैवं समुद्रावरणां मां, जित्वापि, अतितृष्णया ओजसा बलेन, अब्धिं विशन्ति, विजिगीषया द्वीपान्तराणि प्रविशन्तीत्यर्थः । तावत्कृतस्येन्द्रियविजयस्य नेदं फलमित्याह । कियदिति । एतत् सप्तद्वीपात्मककृत्स्नभूमण्डलस्यात्माधीनताप्रापणं यत्तदेतदित्यर्थः । आत्मजयस्येन्द्रियजयस्य फलं कियत्, नैतदिन्द्रियजयफलमित्यर्थः । एतत्फलस्य नश्वरत्वादिति भावः । किं तर्ह्यात्मजयफलमित्यत आह । आत्मजये कृते सति तु, फलं मुक्तिः, दुर्विधेयेन्द्रियजयेन मुक्तिमसंपाद्य, राज्यं सिसाधयिषवोऽतीव मन्दा इति भावः ॥ ५ ॥ एतदेवोपपादयति । यामिति । हे कुरू द्वह, मनवः स्वायंभुवादयः, तत्सुताः प्रियव्रतोत्तानपादादयो मनुपुत्राश्च, यां, मां, विसृज्यैव यथा आगतं तथा गता मृताः, तां माम्, अबुद्धयः, युद्धे जेष्यन्ति, मां जेतुमिच्छन्तीत्यर्थः ॥ ६ ॥ तदबुद्धितां प्रपञ्चयति । मत्कृत इति । राज्ये

ममताबद्धचेतसां ममतया आबद्धमनसाम्, अत एव असतां दुरात्मनां, पितृपुत्राणां भ्रातृणां चापि, मत्कृते पृथिव्यर्थं, विग्रहो विरोधः, जायते हि ॥ ७ ॥ ममताबद्धचेतस्त्वमेवाभिनयेन दर्शयंस्तत्प्रयुक्तमसत्कं दर्शयति। ममैवेति। हे मूढ, इयं कृत्स्ना मही, मम एव, ते तव न, इति वादिनः वादान् कुर्वन्तः सन्तः इत्यर्थः। स्पर्द्धमानाः सन्तश्च, मत्कृते ते नृपाः, मिथं घ्नन्ति म्रियन्ते च ॥ ८ ॥

## हिन्दी अनुवाद

## राज्य, युगधर्म और कलियुग के दोषों से बचने का उपाय—नामसङ्कीर्तन

श्रीशुकदेवजी कहते हैं—परीक्षित्! जब पृथ्वी देखती है कि राजा लोग मुझ पर विजय प्राप्त करने के लिये उतावले हो रहे हैं, तब वह हँसने लगती है और कहती है—'कितने आश्चर्य की बात है कि ये राजा लोग, जो स्वयं मौत के खिलौने हैं, मुझे जीतना चाहते हैं॥ १ ॥ राजाओं से यह बात छिपी नहीं है कि वे एक-न-एक दिन मर जायँगे, फिर भी वे व्यर्थ में ही मुझे जीतने की कामना करते हैं। सचमुच इस कामना से अन्धे होने के कारण ही वे पानी के बुल्बुले के समान क्षणभङ्गुर शरीर पर विश्वास कर बैठते हैं और धोखा खाते हैं॥ २ ॥ वे सोचते हैं कि 'हम पहले मन के सहित अपनी पाँचों इन्द्रियों पर विजय प्राप्त करेंगे—अपने भीतरी शत्रुओं को वश में करेंगे; क्योंकि इनको जीते बिना बाहरी शत्रुओं को जीतना कठिन है। उसके बाद अपने शत्रु के मन्त्रियों, अमात्यों, नागरिकों, नेताओं और समस्त सेना को भी वश में कर लेंगे। जो भी हमारे विजय-मार्ग में काँटे बोयेगा, उसे हम अवश्य जीत लेंगे॥ ३ ॥ इस प्रकार हम धीरे-धीरे क्रम से सारी पृथ्वी हमारे अधीन हो जायगी और फिर तो समुद्र ही हमारे राज्य की खाई का काम करेगा।' इस प्रकार वे अपने मन में अनेकों आशायें बाँध लेते हैं और उन्हें यह बात बिल्कुल नहीं सूझती कि उनके सिर पर काल सवार है॥ ४ ॥ यहीं तक नहीं, जब एक द्वीप उनके वश में हो जाता है, तब दूसरे द्वीप पर विजय करने के लिये बड़ी शक्ति और उत्साह के साथ समुद्र यात्रा करते हैं। अपने मनको, इन्द्रियों को वश में करके लोग मुक्ति प्राप्त करते हैं, परन्तु ये लोग उनको वश में करके भी थोड़ा-सा भूभाग ही प्राप्त करते हैं। इतने परिश्रम और आत्मसंयम का यह कितना तुच्छ फल है!" ॥ ५ ॥ परीक्षित्! पृथ्वी कहती है कि 'बड़े-बड़े मनु और उनके वीर पुत्र मुझे ज्यों-की-त्यों छोड़कर जहाँ से आये थे, वहीं खाली हाथ लौट गये, मुझे अपने साथ न ले जा सके। अब ये मूर्ख राजा मुझे युद्ध में जीतकर वश में करना चाहते हैं!॥ ६ ॥ जिनके चित्त में यह बात दृढ़मूल हो गई है कि यह पृथ्वी मेरी है, उन दुष्टों के राज्य में मेरे लिये पिता पुत्र और भाई-भाई भी आपस में लड़ बैठते हैं॥ ७ ॥ वे परस्पर इस प्रकार कहते हैं कि 'ओ मूढ़! यह सारी पृथ्वी मेरी ही है, तेरी नहीं', इस प्रकार राजा लोग एक दूसरे को कहते सुनते हैं, एक-दूसरे से स्पर्द्धा करते हैं, मेरे लिये एक-दूसरे को मारते हैं और स्वयं मर मिटते हैं॥ ८ ॥

पृथुः पुरूरवा गाधिर्नहुषो भरतोऽर्जुनः। मान्धाता सगरो रामः खट्वाङ्गो धुन्धुहा रघुः ॥ ९ ॥
तृणबिन्दुर्ययातिश्च शर्यातिः शन्तनुर्गयः। भगीरथः कुवलयाश्वः ककुत्स्थो नैषधो नृगः ॥ १० ॥
हिरण्यकशिपुर्वृत्रो रावणो लोकरावणः। नमुचिः शम्बरो भौमो हिरण्याक्षोऽथ तारकः ॥ ११ ॥
अन्ये च बहवो दैत्या राजानो ये [1]महेश्वराः। सर्वे सर्वविदः शूराः सर्वे सर्वजितोऽजिताः ॥ १२ ॥
ममतां मय्यवर्तन्त कृत्वोच्चैर्मर्त्यधर्मिणः। कथावशेषाः कालेन ह्यकृतार्थाः कृता विभो ॥ १३ ॥

कथा इमास्ते कथिता महीयसां विताय लोकेषु यशः परेयुषाम्।
विज्ञानवैराग्यविवक्षया विभो वचोविभूतीर्न तु पारमार्थ्यम् ॥ १४ ॥
यस्तूत्तमश्लोकगुणानुवादः संगीयतेऽभीक्ष्णममङ्गलघ्नः।
तमेव नित्यं शृणुयादभीक्ष्णं कृष्णेऽमलां भक्तिमभीप्समानः ॥ १५ ॥

### राजोवाच

केनोपायेन भगवन् कलेर्दोषान् कलौ जनाः। विधमिष्यन्त्युपचितांस्तन्मे ब्रूहि यथा मुने ॥ १६ ॥

---

१. धिर्भरतो नहुषो। २. नरेश्वराः।

## कृष्णप्रिया व्याख्या

अन्वयः—पृथुः पुरूरवाः गाधिः नहुषः भरतः अर्जुनः मान्धाता सगरः रामः खट्वाङ्गः धुन्धुहा रघुः तृणबिन्दुः ययातिः शर्यातिः शन्तनुः गयः भगीरथः कुवलयाश्वः ककुत्स्थः नैषधः नृगः हिरण्यकशिपुः वृत्रः रावणः लोकरावणः नमुचिः शम्बरः भौमः हिरण्याक्षः अथ तारकः अन्ये च बहवः दैत्याः राजानः ये महेश्वराः सर्वे सर्वविदः शूराः सर्वे सर्वजिताः अजिताः मयि उच्चैः ममतां कृत्वा मर्त्यधर्मिणः अकृतार्थाः विभो कालेन कथाऽवशेषाः कृताः ॥ ९–१३ ॥ विभो लोकेषु यशः परेयुषां महीयसाम् इमाः कथाः विज्ञानवैराग्यविवक्षया कथिताः तु वचोविभूतीः न तु पारमार्थ्यम् ॥ १४ ॥ यः तु अमङ्गलघ्नः उत्तमश्लोकगुणानुवादः अभीक्ष्णं सङ्गीयते तम् एव कृष्णे अमलां भक्तिम् अभीप्समानः अभीक्ष्णं नित्यं शृणुयात् ॥ १५ ॥ राजा उवाच भगवन् मुने कलौ जनाः उपचितान् कलेः दोषान् केन उपायेन यथा विधमिष्यन्ति (तथा) तत् मे ब्रूहि ॥ १६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

रामो नाम कश्चिद्राजा । यद्वा लोकदृष्ट्या दाशरथिरेव निर्दिष्टः ॥ ९–१० ॥ लोकं रावयति रोदयतीति लोकरावणः ॥ ११–१२ ॥ मयि उच्चैर्ममतां कृत्वा येऽवर्तंते ते कालेन कथावशेषाः कृताः । विभो इति संबोधनं कुरूद्वहेतिवत् ॥ १३ ॥ राजवंशानुकथनस्य तात्पर्यमाह । कथा इमा इति । विज्ञानं विषयासारताज्ञानं ततो वैराग्यं तयोर्विवक्षया परेयुषां मृतानां वचोविभूतीर्वाग्विलासमात्ररूपा न तु पारमार्थ्यं परमार्थे युक्तं कथनं न भवतीत्यर्थः ॥ १४ ॥ कस्तर्हि पुरुषाणामुपादेयः परमार्थस्तमाह । यस्त्विति । नित्यं प्रत्यहम् । तत्राप्यभीक्ष्णम् ॥ १५ ॥ कलिदोषोपचये सति भक्तेरसंभवं मन्यमानः पृच्छति । केनोपायेनेति । विधमिष्यंति नाशयिष्यंति । यथा यथावत् ॥ १६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

काचिन्नामतोऽप्याह—पृथुरिति । श्रीरामचन्द्रस्यापि मायया तथात्वांगीकारे न दोष इत्याह—यद्वेति ॥ ९ ॥ अक्षराधिक्यं तृतीयपाद आर्षम् । नैषधो नलः ॥ १० ॥ मनुष्योक्तन्यायं दैत्यादिष्वप्यतिदिशति—हिरण्यकशिपुरिति ॥ ११ ॥ अजिता अन्यैः स्वयमजिता इत्यर्थः ॥ १२ ॥ विभो इति श्रीशुकस्यैव राजानं प्रति संबुद्धिरित्याह–कुरूद्वहेति । यदिति—विशेषेण बुद्धिवैभवेन भातीति तथा, त्वं तु बुद्धिबलेन सर्वं जानास्येवेति भावः । अत्र चक्रवर्तिकारः—किंतु तेन अकृतार्था अपि तु कृतार्था एव प्राप्तस्वामीष्टा एव कृताः पर्याप्ताः पूर्णा एव गुणरूपादिभिस्तदपि कथावशेषा एवाभूवन्, अर्वाचीनास्तु—अकृतार्थं धनादिभिरप्यपूर्णा इति भावः ॥ १३ ॥ इत्यर्थ इति—तेषां नष्टत्वादधुना कथामात्रत्वमेवावशिष्टं न तु तेऽपीति भावः । महतां प्रियव्रतादीनाम् । परं श्रीहरिमीयुषां प्राप्तानाम् । किमर्थम्—विज्ञानं भगवदनुभवः । श्रोतृजनान्प्रत्यपि तादृशाः स्युरिति भावः । तदुक्तम् "पूर्वं गृहीतं गुणकर्मचित्रमज्ञानमात्मन्यविविक्तमग । निवर्त्तते तत्पुनरीक्षयैव न गृह्यते नापि विसृज्य आत्मा । यथा हि भानोरुदयो नृचक्षुषां तमो निहन्यान्न तु सद्विधत्ते । एवं समीक्षा निपुणा सती मे हन्यात्तमिस्रं पुरुषस्य बुद्धेः ।" इत्युद्धवं प्रति श्रीकृष्णेन । वितायेत्यार्षः । यद्वा—किमर्थं कथिता इति तत्राह—विज्ञानेति । वचोविभूतीर्वचसा विभूतयो विविधभवनविषयाः विज्ञानवैराग्यविवक्षया योग्यस्य पुंसो विज्ञानवैराग्ये स्यातामित्यभिप्रेत्य विवृता न तु पारमार्थ्ये परमार्थ उत्तमार्थो वेदमुख्यार्थो भगवांस्तमुद्दिश्य तस्य स्वरूपभूतत्वेन विधिनिषेधाविषयत्वात् । यद्वा—किंभूताः कथाः वचसां भक्तिज्ञानक्रियात्मकानां विभूतिर्विशेषेण प्रतिपादनं यासु ताः । पारमार्थ्यमुद्दिश्योपदेशो तु केवलं भक्तिमात्रमेवापदेष्टव्या स्यात्तस्या एवांतकाल उचितत्वात् "जन्मलाभः परं पुंसामंते नारायणस्मृतिः" इत्युक्तेः । यद्वा—ते कथिता इमाः कथाः पारमार्थ्यमेव परमार्थफलका एव न तु वचोविभूतयः पुरुषार्थायोगिन्य इति मंतव्यम् । द्वितीया प्रथमार्थे । 'श्रुतयः प्रमाणम्' इतिवत्संबंधः । यद्वा—इमाः बुद्धिसन्निहितत्वाद्देवासुरसंग्रामादिरूपाः कथा वचोविभूतयः । पारमार्थ्यं परमात्मलीलावर्णनं न तु वचोविभूतयस्तस्य तत्प्रापकत्वात् । "पिबंति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु संभृतम् । पुनंति ते विषयविदूषिताशयं व्रजंति तच्चरणसरोरुहांतिकम् ।" इत्युक्तेः । यद्वा—इमाः कथा वचोविभूतयो न तु किंतु पारामार्थ्यमेव सर्वासां परमार्थे भगवति तात्पर्यकत्वादित्यर्थः ॥ १४ ॥ पारमार्थमेव पृच्छति–कस्तर्हीति । तत्रापि प्रत्यहमपि । तमेवोत्तमश्लोकगुणानुवादमेव हरिभक्त्युत्पादकत्वात् "अन्या वाचो विमुंचथ" इति श्रुतेः ॥ १५ ॥ ज्ञातकलिदोषपरिहारोऽपि लोकहिताय पृच्छति–केनेति वाऽवतरणिका । भगवन्मुने इति संबुद्धिर्येन सर्वकथनसामर्थ्यं द्योतयतीति भावः ॥ १६ ॥

## अन्वितार्थप्रकाशिका

पृथुरिति पञ्चकम् । विभो इति मध्ये शुकोक्तिः । संबुद्धिः पृथुरित्यादयः इतरैः स्वयम् अजिताः । एवं मे मयि उच्चैः अधिकां ममतां कृत्वा अवर्त्तन्त तेऽपि मर्त्यधर्मिणः मरणस्वभावाः अकृतार्थाः अपूर्णमनोरथा एव कालेन कथावशेषाः कृताः संहृताः ।

रामो नाम कश्चिदन्यो नृपः लोकदृष्ट्या दाशरथिर्वा ॥ ९–१३ ॥ कथा इति। हे विभो ! लोकेषु यशः सत्कीर्त्तिं विताय विस्तार्य परेयुषां परलोकं गतानां महीयसां माहात्म्ययुक्तानां राज्ञामिमाः कथास्ते तुभ्यं विज्ञानं विषयाणामसारताज्ञानं ततो वैराग्यं च तयोर्विवक्षया मया कथिताः। परंतु एताः कथाः वाचो विभूतीः विभूतयः वाग्विलासमात्ररूपाः। पूर्वसवर्णदीर्घ आर्षः। न तु पारमार्थ्यम्। परमार्थपरमेतत्कथनं न भवत्यत एतच्छ्रवण एवाग्रहो न कर्त्तव्य इत्यर्थः। अन्ये तु महीयसां प्रियव्रतादीनां परं भगवन्तमीयुषां विज्ञानं तेषां भगवदनुभवः वैराग्यं च तयोर्विवक्षया तदाचरणमन्ये शिक्षन्तामिति भावः। इमाः कथा वचोविभूतय एव न भवन्ति किन्तु पारमार्थ्यम्। कथानां परमार्थतयैवेत्यर्थः। इति व्याचख्युः ॥१४॥ कस्तर्हि अवश्यश्राव्यो विषय इत्याशङ्क्याह–य इति। यस्तु अमङ्गलघ्नः उत्तमश्लोकस्य भगवतो गुणानामनुवादः कथनं सङ्गीयते सद्भिः सम्यक् गीयते कृष्णेऽमला शुद्धां भक्तिमभीप्समानः इच्छन् जनः। चानशन्तोऽयम्। नित्यं तत्राप्यभीक्ष्णं पुनः पुनस्तमेव शृणुयात् ॥ १५ ॥ केनेति। हे भगवन् ! हे मुने ! कलौ उपचितान् कलेर्दोषान् जनाः केनोपायेन विधमिष्यन्ति नाशयिष्यन्ति। धमादेश आर्षः धमधातुर्वा। तत् उपायस्वरूपं मे मह्यं यथा यथावद्ब्रूहि ॥ १६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

न तु पारमार्थ्यात् न तु पुरुषार्थभूयस्त्वादित्यर्थः ॥ १४ ॥ वहित्वति तथा विशेष्यम् ॥ १५–१९ ॥

### श्रीमद्वीरराघवव्याख्या

इतरैरजिताश्च के पुनस्ते नृपा इत्यतस्तान् कांश्चिद्दर्शयति, पृथुरिति। अर्जुनः कार्त्तवीर्यः रामो नाम कश्चिद्राजा नतु दाशरथिः धुन्धुहा धुन्धुमारः ॥ ९–१० ॥ लोकं रावयति मारयतीति लोकरावणो रावणः भौमो नरकासुरः ॥ ११ ॥ उक्तेभ्योऽन्ये दैत्या राजानश्च महीश्वराः पृथिवीपतयः ते सर्व एव यद्यपि सर्वतः इतरैरजिताश्च ॥ १२ ॥ मय्यप्युच्चैरधिका ममतां कृत्वाऽवर्त्तन्त कश्चित्कालमिति शेषः मर्त्यधर्मिण इति हेतुगर्भम् अतः कालेनाकृतार्थाः असमापितभोगाभिलाषाः कृताः विभो इति सम्बोधनं कुरुद्वहेतिबुद्ध्याख्येयम् ( योऽयम् ) ॥ १३ ॥ राजवंशानुकीर्त्तनस्य तात्पर्यफलमाह—कथा इति। लोकेषु यशोविताय विस्तार्य परेयुषां परलोकं प्राप्तानां महीयसां माहात्म्ययुक्तानाम् इमाः कथाः ते तुभ्यं कथिताः विज्ञानवैराग्यविवक्षया विज्ञानं विषयाणामसारत्वज्ञानं ततो वैराग्यं तयोर्विवक्षया कथिता इति सम्बन्धः तत्र हेतुत्वेन कथा विशिनष्टि—वचोविभूतीः व्यत्ययेन प्रथमार्थे द्वितीया वाग्वैभवविषयाः अनेन विशेषणेनाभिप्रेत विशदयति, नतु पारमार्थ्यमिति परमोऽर्थः पुरुषार्थः तस्य भावः पारमार्थ्यं तन्नतु नहीत्यर्थः। न ह्यभिर्मुक्तेषु भोग्येषु पारमार्थ्यमिति भावः ॥ १४ ॥ कस्तर्हि परमार्थोपाय इत्यत आह—यस्त्विति। सङ्गीयते इत्यस्य सद्भिरित्यादिः उत्तमश्लोकस्य भगवतो गुणानामनुवादः स च अमङ्गलं संसृत्यापादकमशुभं कर्म हन्तीति तथा तमेवमन्वहं तत्राप्यभीक्ष्णं शृणुयात् श्रवणप्रयोजनं दर्शयन्नधिकरणं विशिनष्टि कृष्णोऽमलां भक्तिमभीप्समानः अमलामनन्यप्रयोजनां भक्तिमभीप्समानः कामयमानः श्रवणपरम्परया भगवति दृढा भक्तिर्भविष्यतीति भावः ॥ १५ ॥ तदा नन्दात्प्रभृति एव कलिर्वृद्धिं गमिष्यतीत्युक्तं तत्रावसरनिरूपणानन्तरं के पुनस्ते कलिवृद्धिप्रयुक्तदोषाः ? कश्च निरसरणोपायः ? के पुनस्तद्युगासाधारणगुणाः ? यावदेतच्चतुर्युगप्रवृत्तिस्ततः कथं वा प्रलयः ? स च कतिविधः ? इति पृच्छति राजा-केनेति द्वाभ्याम्। हे भगवन् ! कलौ युगे उपचितान् कलेर्दोषान् केनोपायेन साधनेन विधमिष्यन्ति नाशयिष्यन्ति तत्साधनं मे मह्यं यथावत् ब्रूहि ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तत्र कांश्चिन्नृपान् निर्दिशति–पृथुरित्यादिना ॥ ९–१२ ॥ एते मर्त्यशरीरधर्मिणः सर्वेऽप्यमर्त्यायां नित्यायां मयि विषये ममतां कृत्वा अकृतार्थाः असाधितपुरुषार्थाः कालेन बलिना कथावशेषाः कृताः हि यस्मात्तस्मादमीषाम् अज्ञानमहो अत आत्मजयेन भाव्यमित्यर्थः ॥ १३ ॥ निगमयति—कथा इति। लोकेषु यशो विताय विस्तृत्य परेयुषां लोकं प्राप्तानां महोयसां मन्वादीनाम् उत्तमानां पुरुषाणामिमाः कथास्ते कथिता मयेतिशेषः। किमर्थे कथिता इति तत्राह—विज्ञानेति। वचोविभूतिः वचसां विभूतयो विविधभवनविषया वा विज्ञानवैराग्यविवक्षया योग्यस्य पुंसो विज्ञानवैराग्ये स्यातामित्यभिप्रेत्य विवृताः नतु पारमार्थ्ये परमार्थे उत्तमार्थो वेद मुख्यार्थो भगवांस्तत्सम्बन्धविवक्षया नैव तस्य विधिनिषेधाविषयत्वात् विज्ञानविवक्षया अपि मदुक्त एव ग्राह्यो नान्योक्त इत्याह—वचोविभूतीरिति। अन्यवाचो विभूतयो वचसां बहुत्वान्न पारमार्थ्यमुत्तमपुरुषार्थसाधनज्ञानमुद्दिश्य न भवन्तीत्यर्थः। "वाचो विग्लापनं हि तत्" इति श्रुतेः ॥ १४ ॥ कुत इतरा वाचो विभूतयः पुरुषार्थोपयोगिन्यो न स्युरित्यत आह—यत्रेति। यत्र यस्यां वाचि उत्तमश्लोकगुणानुवादः सङ्गीयते पुरुषस्तामेव वाचं शृणुयात् शृणोत्वित्यर्थः। श्रीहरि-

भक्त्यनुत्पादकत्वादितरा वाचो हेया इत्यर्थः "अन्या वाचो विमुञ्चथ" इति श्रुतेः ॥ १५ ॥ ज्ञातकलिदोषपरिहारोऽपि राजा लोकोपकाराय पृच्छति—केनेति। कलेरुत्पन्नान्दोषान् विधमिष्यन्ति परिहरिष्यन्ति उपचितान् सवृद्धान् तदुपायस्वरूपं यथा यथावत् ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

पृथुरिति पञ्चकम् ॥ ९-११ ॥ अन्ये चेति चकारादन्ते च मयि ममतां कृत्वा मय्यवर्त्तन्त तत्र ये ममेश्वरा भगवदवतारा भागवता वा ते सर्वे सर्वविदः शूराश्च ज्ञानक्रियाशक्तिभ्यां परमपर्य्याप्ता इत्यर्थः। अत एव सर्वजितः स्वयमजिताश्च सर्वशब्दावृत्तिरतिहर्षेणातिदार्ढ्यविवक्षया च ॥ १२ ॥ ये तु तत्र मर्त्यधर्मिणो मर्त्यस्वभावासक्तास्ते कालेनाकृतार्थाः कथामात्रावशेषिताश्च कृता इत्यर्थः ॥ १३ ॥ तदेव व्यनक्ति—कथा इमा इति द्वाभ्याम्। महीयसां भगवदवतारभागवतेभ्य इतरेषां महाराजानाम् ॥ १४ ॥ उत्तमश्लोकानां भगवदवताराणां भागवतानां च गुणाऽनुवादो यस्तमेव नित्यं शृणुयात् तच्च त्वतिशयेनाग्रहं कुर्य्यादित्यर्थः। सर्वस्य तस्यापि परमं फलमाह—कृष्ण इति। कृष्णो "कृष्णस्तु भगवान् स्वयम्" इत्यादिना प्रसिद्धे श्रीगोपाल इत्यर्थः ॥ १५-१६ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

रामो नाम कश्चिदन्यो राजा नतु दाशरथिरिति स्वामिचरणाः ॥ ९-१२ ॥ मयि उच्चैर्ममतां कृत्वा येऽवर्त्तन्त ते काले कथावशेषा अभूवन् किन्तु तेन ह्यकृतार्थाः अपितु कृतार्थाः एव प्राप्तस्वस्वाभीष्टा एव कृताः पर्य्याप्ताः पूर्णा एव रूपगुणादिभिस्तदपि ते कथावशेषा अभूवन् अर्वाचीनास्त अकृतार्था धनादिभिरप्यपूर्णाः किमुतेति भावः। युगपर्य्याप्तयोः कृतं "पर्य्याप्तिः परिपूर्णता" इत्यमरः ॥ १३ ॥ राजवंशकथनस्य तात्पर्य्यमाह—कथा इति। महीयसां प्रियव्रतादीनां परेयुषां परं श्रीभगवन्तमीयुषां प्राप्तानां किमर्थं कथितास्तत्राह—विज्ञानं तेषां भगवदनुभवः वैराग्यं च तयोर्विवक्षया तेषां तथाचरणं श्रोतृजना अपि शिक्षन्त्विति भावः। हे विभो! इति त्वमपि तादृश एको भवसीति भावः किञ्च इमाः कथा वचोविभूतीर्वचसां विभूतयो न भवन्ति किन्तु पारमार्थ्यम् यासां कथानां परमार्थे तैव ज्ञेयेत्यर्थः ॥ १४ ॥ तस्मान्महीयसां तेषां कथां नित्यम् शृणुयादेव कृष्णगुणाऽनुवादे तु तेभ्यो महिष्ठेभ्योऽप्यधिकतमानां कृष्णलीलापरिकराणां महतां कथाभिर्विचित्रे विशेषं शृण्वित्याह—य इति। उत्तमश्लोकस्य भगवतो गुणानुवादस्तेषु तेषु स्कन्धेषु कचित् कचिद्दशमे तु सर्वत्रैव ते नित्यमेव अभीक्ष्णमेव भक्तिमभीप्समान एव शृणुयादेवेत्यवधारणचतुष्टयम् ॥ १५ ॥ विधमिष्यन्ति नाशयिष्यन्ति यथा यथावत् ॥ १६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

मयि ममतां कृत्वा उच्चैरधिपतित्वेनाऽवर्तन्त हे विभो! विष्णुमूर्त्ते धर्म! ॥ १३ ॥ यावद्विषयाणामनित्यताज्ञानं ततो वैराग्यं च न स्यात्तावत्तत्साधनभूताः राजवंशकथाः श्रोतव्याः तयोः सिद्धौ तु विशेषतो नित्यं श्रीकृष्णभक्तिसिद्धये तच्चरितं श्रोतव्यमित्याह, कथा इति द्वाभ्याम्। लोकेषु परशिक्षार्थं यशोविताय विस्तार्य परेयुषां परलोकं गतानां महीयसां महानुभावानाम् इमाः कथाः हे विभो! राज्यादिवासनात्यागे समर्थ! ते तुभ्यं विज्ञानं वैराग्यविवक्षया विज्ञानं विविधानां विषयाणामनित्यताज्ञानं विषयेभ्यो वैराग्यं च तयोर्विवक्षया कथिता कथानां सत्यतामाह, महामुनीनां व्यासादीनां वचोविभूतीः वाग्वैभवविषयाः जानीहि। ननु, आप्ततमवाणीविभूतिभूतानां हरिभक्तिसाधनत्वमप्यस्तु नेत्याह, न तु पारमार्थ्यमिति। परमार्थः मुक्त्युपायरूपश्रीकृष्णभक्तिसाधनं तस्य भावस्तत्त्वम् राजकथाना विज्ञानवैराग्यसाधनत्वं न तु मुक्तिप्रदभक्तिसाधनत्वमित्यर्थः। सामान्यत इदमुक्तमम्बरीषादिकथाश्रवणस्य हरिभक्तिजनकत्वात् ॥ १४ ॥ तर्हि कृष्णभक्तिसाधनं किं तदाह—यस्त्विति। अमङ्गलं हन्तीति अमङ्गलघ्नः य अभीक्ष्णं पुनः पुनः सम्यक् गीयते वेदेषु निभिश्च तमेव नित्यमनिशं तत्राप्यभीक्ष्णम् ॥ १५ ॥ श्रीकृष्णभक्तिरेव परमपुरुषार्थं इति निर्णीतमतस्तदनुष्ठानसिद्ध्यर्थं कलिदोषजयोपायं युगादिकं च पृच्छति केनेति द्वाभ्याम् ॥ १६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

के ते नृपा इत्यपेक्षायां तान्दर्शयति—पृथुरित्यादि त्रिभिः। अर्जुनः कार्त्तवीर्यः। रामो नाम कश्चिद्राजा न तु दाशरथिः। यद्वा लोकदृष्ट्या तस्यैव ग्रहणम् ॥ ९-१० ॥ लोकं रावयति रोदयतीति लोकरावणः ॥ ११ ॥ इतरैः स्वयमजिताः ॥ १२ ॥ एवं ये मय्युच्चैः अधिकां ममतां कृत्वा अवर्त्तन्त ते अकृतार्था अपूर्णमनोरथा एव कालेन कथावशेषाः कृताः संहृताः। यतो मर्त्यधर्मिणः मरणस्वभावा इति। विभो इति सम्बोधनं तु कुरुवृद्धहेतिवत् ॥ १३ ॥ राजवंशानुकीर्त्तनस्य तात्पर्यमाह—कथा इति। विज्ञानं विषयाणामसारत्वज्ञानं तच्च वैराग्यं च तयोर्विवक्षया हे विभो लोकेषु यशः सत्कीर्तिं विस्तार्य परेयुषां परलोकंगतानां महीयसां

माहात्म्ययुक्तानां राज्ञामिमाः कथास्ते तुभ्यं मया कथिताः परन्तु एता कथा वाचो विभूतीः द्वितीया प्रथमार्थे। वाग्विलासमात्ररूपाः न तु पारमार्थ्यं परमार्थपरमेतत्कथनं न भवत्यत एतच्छ्रवण एवाग्रहो न कर्त्तव्य इत्यर्थः ॥ १४ ॥ कस्तर्हि पुरुषाणामुपादेयः परमार्थ इत्यपेक्षायामाह—यस्त्विति। यस्तु अमङ्गलघ्नः सर्वदोषनिवर्त्तकः उत्तमश्लोकस्य अविद्यादिदोषनिवर्त्तकयशसो भगवतो गुणानामनुवादः कथनं सङ्गीयते सद्भिः सम्यक् क्रियते। कृष्णेऽमलां परमपुरुषार्थरूपां संसारमलवर्जितां भक्तिमभीप्समानः इच्छन् नित्यं तत्राप्यभीक्ष्णं पुनःपुनस्तमेव शृणुयादित्यन्वयः ॥ १५ ॥ कलिदोषोपचये सति भक्तेरसम्भवं मन्यमानः पृच्छति—केनेति। विधमिष्यन्ति नाशयिष्यन्ति—यथा यथावत् ब्रूहि ॥ १६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत्र कांश्चिन्नृपान् निर्दिशति। पृथुरिति। पृथुः, पुरूरवाः, गाधिः, नहुषः, भरतः, अर्जुनः, कार्त्तवीर्यः, मांधाता, सगरः, रामो नाम कश्चिद्राजा, न तु दाशरथिः, खट्वाङ्गः, धुन्धुहा, रघुः ॥ ९ ॥ तृणबिन्दुरिति। तृणबिन्दुः, ययातिः, शंतनुः, गयश्च, भगीरथः, कुवलयाश्वः, ककुत्स्थः, नैषधः, नृगः ॥ १० ॥ हिरण्येति। हिरण्यकशिपुः, वृत्रः, लोकरावणः रावणः, नमुचिः, शम्बरः भौमः, हिरण्याक्षः, अथ तारकः ॥ ११ ॥ अन्ये चेति। अन्ये च ये, बहवः दैत्याः महीश्वराः सार्वभौमा ये राजानः, ते सर्वे, सर्वविदः शूराः, सर्वेऽपि सर्वजितः, स्वयं अजिताश्च ॥ १२ ॥ ममतामिति। मर्त्त्यधर्मिणः, एते सर्वेऽपि, मयि, उच्चैरधिकां ममतां कृत्वा अवर्त्तन्त, कंचित्कालमिति शेषः। मर्त्त्यधर्मिण इति हेतुगर्भं विशेषणं, हे विभो हे देव, अत एतेषां, मर्त्त्यधर्मवत्त्वाद्धेतोः, कालेन अकृतार्थाः असमापितभौमाभिलाषाः कथावशेषाः कृताः, हि ॥ १३ ॥ राजवंशानुकीर्त्तनस्य तात्पर्यमाह। कथा इति। हे विभो परीक्षित्, लोकेषु यशः, विताय विस्तार्य, परेयुषां परलोकं प्राप्तानां, महीयसां माहात्म्ययुक्तानां, इमाः कथाः, ते तुभ्यं, विज्ञानं विषयाणामसारत्वज्ञानं च ततो वैराग्यं च तयोर्विवक्षा तया कथिताः। तत्र हेतुत्वेन विशिनष्टि। एताः वचोविभूतीः वाग्विलासमात्ररूपाः, व्यत्ययेन प्रथमार्थे द्वितीया। न तु पारमार्थ्यं, परमार्थयुक्तं कथनं न भवतीत्यर्थः। न ह्येभिर्भुक्तेषु भोग्येषु किंचन पारमार्थ्यमस्तीति भावः ॥ १४ ॥ कस्तर्हि पुरुषाणामुपादेयः परमार्थस्तमाह। यस्त्विति। यस्तु, अमङ्गलघ्नः उत्तमश्लोकगुणानुवादः, अभीक्ष्णं संगीयते, स परमार्थः, अतः कृष्णे, अमलां भक्तिं, अभीप्समानः एवंविधपरमार्थप्राप्तीच्छुरित्यर्थः। नित्यं अभीक्ष्णं, तं भगवद्गुणानुवादमेव, शृणुयात्। एकाग्रमनसाऽभीक्ष्णं भगवद्गुणानुवर्णनश्रवणसंलग्नतैव परमार्थ इति भावः ॥ १५ ॥ तदा 'नन्दात् प्रभृत्येष कलिर्वृद्धिं गमिष्यति' इत्युक्तं तत्रावसरप्राप्तनिरूपणान्तरं के पुनस्ते कलिवृद्धिप्रयुक्तदोषाः कश्च तन्निस्तरणोपायः, के पुनस्तद्युगासाधारणगुणाः, यावदेतच्चतुर्युगप्रवृत्तिस्ततः कथं वा प्रलयः, स च कतिविध इति पृच्छति राजा केनेति द्वाभ्याम्। केनोपायेनेति। हे भगवन्, कलौ कलियुगे, उपचितान् कलेः दोषान्, जनाः केन उपायेन साधनेन, विधमिष्यन्ति, तत् साधनं, हे मुने, मे मह्यं, यथा यथावत्, ब्रूहि ॥ १६ ॥

## हिन्दी अनुवाद

पृथु, पुरूरवा, गाधि, नहुष, भरत, सहस्रबाहु, अर्जुन, मान्धाता, सगर, राम, खट्वाङ्ग, धुन्धुमार, रघु, तृणबिन्दु, ययाति, शर्याति, शन्तनु, गय, भगीरथ, कुवलयाश्व, ककुत्स्थ, नल, नृग, हिरण्यकशिपु, वृत्रासुर लोकद्रोही रावण, नमुचि, शम्बर, भौमासुर, हिरण्याक्ष और तारकासुर तथा और बहुत-से दैत्य एवं शक्तिशाली नरपति हो गये। ये सब लोग सब कुछ समझते थे, सभी ने दिग्विजय में दूसरों को हरा दिया किन्तु दूसरे लोग इन्हें न जीत सके परन्तु सब-के-सब मृत्यु के ग्रास बन गये। राजन्! उन्होंने अपने पूरे अन्तःकरण से मुझसे ममता की और समझा कि 'यह पृथ्वी मेरी है'। परन्तु विकराल काल ने उनकी लालसा पूरी न होने दी। अब उनके बल-पौरुष और शरीर आदि का कुछ पता ही नहीं है। केवल उनकी कहानी-मात्र शेष रह गयी है ॥ ९–१३ ॥ परीक्षित्! संसार में बहुत-से महान् पुरुष हो गये हैं, जो सम्पूर्ण लोकों में अपने यश का विस्तार करके यहाँ से चल बसे। उनकी ये कथाएँ तुम्हें ज्ञान और वैराग्य का उपदेश करने के लिये कही गयी हैं। इन्हें वाणी का वैभवमात्र न समझो, इनमें परमार्थ-तत्त्व भरा हुआ है ॥ १४ ॥ भगवान् श्रीकृष्ण का गुणानुवाद समस्त अमङ्गलों का नाश करने वाला है, बड़े-बड़े महात्मा उसी का गान करते रहते हैं। जो भगवान् श्रीकृष्ण के चरणों में अनन्य प्रेममयी भक्ति की लालसा रखता हो, उसे नित्य-निरन्तर भगवान् के दिव्य गुणानुवाद का ही श्रवण करते रहना चाहिये ॥ १५ ॥ राजा परीक्षित् ने पूछा—भगवन्! मुझे तो कलियुग में राशि-राशि दोष ही दिखलायी दे रहे हैं। उस समय लोग किस उपाय से उन दोषों का नाश करेंगे। इसके अतिरिक्त युगों का स्वरूप, उनके धर्म, कल्प की स्थिति और प्रलय काल के मान एवं सर्वव्यापक सर्वशक्तिमान् भगवान् के काल रूप का भी यथावत् वर्णन कीजिये ॥ १६–१७ ॥

युगानि युगधर्मांश्च मानं प्रलयकल्पयोः । कालस्येश्वररूपस्य गतिं विष्णोर्महात्मनः ॥ १७ ॥

श्रीशुक उवाच

कृते प्रवर्तते धर्मश्चतुष्पात्तज्जनैर्धृतः । सत्यं दया तपो दानमिति पादा विभोर्नृप ॥ १८ ॥

सन्तुष्टाः करुणा मैत्राः शान्ता दान्तास्तितिक्षवः । आत्मारामाः समदृशः प्रायशः श्रमणा जनाः ॥ १९ ॥

त्रेतायां धर्मपादानां तुर्यांशो हीयते शनैः । अधर्मपादैरनृतहिंसासन्तोषविग्रहैः ॥ २० ॥

तदा क्रियातपोनिष्ठा नातिहिंस्रा न लम्पटाः । त्रैवर्गिकास्त्रयीवृद्धा वर्णा ब्रह्मोत्तरा नृप ॥ २१ ॥

तपःसत्यदयादानेष्वर्धं ह्रसति द्वापरे । हिंसातुष्ट्यनृतद्वेषैर्धर्मस्याधर्मलक्षणैः ॥ २२ ॥

यशस्विनो महाशालाः स्वाध्यायाध्ययने रताः । आढ्याः कुटुम्बिनो हृष्टा वर्णाः क्षत्रद्विजोत्तराः ॥ २३ ॥

कलौ तु धर्महेतूनां तुर्यांशोऽधर्महेतुभिः । एधमानैः क्षीयमाणो ह्यन्ते सोऽपि विनङ्क्ष्यति ॥ २४ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—युगानि युगधर्मान् च प्रलयकल्पयोः मानं महात्मनः विष्णोः ईश्वररूपस्य कालस्य गतिं मे (ब्रूहि) ॥ १७ ॥ श्रीशुकः उवाच-कृते प्रवर्तते चतुष्पाद् धर्मः जनैः धृतः नृप सत्यं दया तपः दानम् इति विभोः पादाः ॥ १८ ॥ सन्तुष्टाः करुणाः मैत्राः शान्ताः दान्ताः तितिक्षवः आत्मारामाः समदृशः प्रायशः श्रमणाः जना ॥ १९ ॥ त्रेतायां धर्मपादानां तुर्यांशः अनृतहिंसा-सन्तोषविग्रहैः अधर्मपादैः हीयते ॥ २० ॥ नृप तदा वर्णाः क्रियातपोनिष्ठाः न अतिहिंस्राः न लम्पटाः त्रैवर्गिकाः त्रयीवृद्धाः ब्रह्मोत्तराः ॥ २१ ॥ द्वापरे धर्मस्य तपः सत्यदयादानेषु अर्धम् अधर्मलक्षणैः हिंसातुष्ट्यनृतद्वेषैः ह्रसति ॥ २२ ॥ वर्णाः यशस्विनः महाशीलाः स्वाध्यायाध्ययने रताः आढ्याः कुटुम्बिनः हृष्टाः क्षत्रद्विजोत्तराः ॥ २३ ॥ कलौ तु धर्महेतूनां तुर्यांशः एधमानैः अधर्महेतुभिः क्षीयमाणः सः अपि अन्ते विनङ्क्ष्यति ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कलियुगे कः परो धर्म इति बुभुत्सया पृच्छति । युगानीति । ब्रूहित्यनुषंगः आत्यंतिकप्रलयजिज्ञासया पुनः पृच्छति । प्रलयकल्पयोः संहारस्थितिकालयोः । न चायं बहिर्मुखः प्रश्न इत्याह । कालस्येति ॥१७॥ तत्र युगधर्मांस्तावदाह । कृत इति । तज्जनैस्तत्कालीनैर्जनैः । दानमरागद्वेषतयाऽभयदानम् । तदेव प्रथमस्कन्धे शौचशब्देनोक्तम् । विभोः संपूर्णस्य धर्मस्य ॥ १८ ॥ तदानींतनजनानाह । संतुष्टा इति । मैत्रा भूतमैत्रीयुक्ताः । श्रवणा आत्माभ्यासवंतः ॥ १९ ॥ अनृतेन सत्यं हिंसया दया असंतोषेण तपः विग्रहेण दानमिति यथासंख्यं योज्यम् ॥ २० ॥ ब्रह्मोत्तरा ब्राह्मणादिकाः ॥२१॥ हिंसाऽतुष्ट्यनृतद्वेषैरित्ययं क्रमो न विवक्षितः । धर्मस्यार्धं ह्रसति क्षीयते । अधर्मस्य लक्षणैश्चिह्नैः पादैरित्यर्थः ॥ २२ ॥ यशस्विनः कीर्तिप्रियाः । क्षत्रद्विजोत्तराः क्षत्रियब्राह्मण-प्रधानाः ॥ २३ ॥ कलौ धर्मपादानां तुर्यांशश्चतुर्थांशोऽवशिष्यते ॥ २४ ॥

### श्रीबंशीधरकृतो भावार्थदीपिकाप्रकाशः

गतिं गमनप्रकारम् ॥१७॥ तत्र पृष्टार्थेषु मध्ये । तावदादौ । नृपेति–धर्मज्ञानं विना नृपालनं दुर्घटमिति भावः ॥१७–१९॥ तुर्यांशो दानलक्षणः पादो हीयते ह्रसति । पादहानौ प्रतिपक्षमाह–अधर्मेति ॥ २० ॥ तदा त्रेतायाम् । क्रिया यज्ञादिरूपा । लंपटा विषयरागिणः । त्रैवर्गिकास्त्रिवर्गप्रधानाः । 'त्रिवर्गो धर्मकामार्थैः' इत्यमरः । त्रयीवृद्धा वेदविद्याविशारदाः ॥ २१–२२ ॥ महाशाला यज्ञादिकर्त्तारः । आढ्या धनिनः ॥ २३ ॥ तुर्यांशः सत्यलक्षणः ॥ २४ ॥

### अन्वितार्थप्रकाशिका

युगानीति । ईश्वररूपस्य महात्मनः कालरूपस्य विष्णोः गतिं गतिरूपाणि युगानि । युगधर्मांश्च प्रलयकल्पयोः सहार-स्थितिकालयोर्मानं च ब्रूहि । अतो भगवद्रूपत्वात्कालप्रश्नो न बहिर्मुखः ॥ १७ ॥ कृत इति । चत्वारः पादा यस्य स चतुष्पाद्धर्मः

१. ष्पादो जनै० । २. सुमहाजनाः । ३. सा । ४. त्तमाः । ५. नश्यति ।

तज्जनैः कृतयुगवर्तिजनैः धृतः कृते युगे प्रवर्त्तते। हे नृप! विभोः पूर्णस्य धर्मस्य सत्यदयादयः पादाः दानं "दैप् शोधने" शौचमित्याहुः ॥ १८ ॥ सन्तुष्टा इति। तदा च प्रायशः सर्वे जनाः सन्तुष्टाः करुणाः परदुःखनिराचिकीर्षवः मैत्राः प्राणिमैत्रीयुक्ताः तितिक्षवो द्वन्द्वसहिष्णवः समदृशः श्रमणाः भगवद्ध्यानादिश्रमपरा न तु विषयासक्ताः ॥ १९ ॥ त्रेतायामिति। त्रेतायां तु अधर्मपादैरनृतादिभिः क्रमेण धर्मपादानां तुर्यांशः शनैर्हीयते। प्रतिपादं चतुर्थोंऽशः क्षीयते। असन्तोष इति च्छेदः। विग्रहो भूतविरोधः ॥ २० ॥ तदेति। हे नृप! तदा च जनाः क्रिया यज्ञादिः तपः उपवासादि तन्निष्ठाः नातिहिंस्राः गृहस्थस्य पञ्चसूनात्यागस्याशक्यत्वादितिशब्दः। न लम्पटाः विषयेष्वनासक्ताः त्रैवर्गिकाः धर्मार्थकामपराः त्रयीवृद्धाः वैदिककर्मसु निपुणाः वर्णा ब्राह्मणोत्तराः ब्राह्मणाधिकाः ॥२१॥ तप इति। द्वापरे युगे तु अधर्मस्य लक्षणैश्चिह्नैः पादैर्हिंसादिभिः धर्मपादेषु तप आदिषु अर्द्धं ह्रसति। अनृतेन सत्यं हिंसया दया असन्तोषेण तपः निग्रहेण दानमिति यथायोग्यं योज्यम्। हिंसातुष्ट्यनृतद्वेषैरिति क्रमस्तु न विवक्षितः। अत्र च दानशब्देन रागद्वेषराहित्येन भूताभयप्रदानं विवक्षितं तदेव प्रथमस्कन्धे शौचशब्देनोक्तमतो न विरोधः इति स्वामिचरणाः ॥२२॥ यशस्विन इति। तदा जनाः प्रायः यशस्विनः कीर्तिप्रियाः महाशीला महायज्ञाद्यनुष्ठानशीलाः धनाढ्याः कुटुम्बिनः तत्पोषणपरास्तित्र हृष्टाश्च वर्णाः क्षत्रद्विजोत्तमाः क्षत्रियब्राह्मणप्रधानाः ॥ २३ ॥ कलाविति। कलौ तु धर्महेतूनां धर्मपादानां तुर्यांशः चतुर्थांशोऽवशिष्यते। सोऽप्येधमानैर्वर्धमानैरधर्महेतुभिः अधर्मपादैरहरहः क्षीयमाणोऽन्ते सोप्यशेषं विनङ्क्ष्यति ॥ २४ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अधर्मपादैरिति असन्तोषो नाम लोभकार्यो दानप्रतिभटः क्रोधकार्यो विग्रहः, तत्प्रतिभटः कामविकाराणामप्युपलक्षणार्थो विग्रहः कामस्यापि तपः प्रतिभटत्वात् ॥ २०–२१ ॥ हिंसातुष्ट्यनृतद्वेषैरिति अतुष्टिरभिसन्धिः द्वैधं विग्रहमूलमन्तर्भेदम् ॥ २२ ॥ महाशाला महागृहाः ॥ २३–४३ ॥

## श्रीमद्वीरराघवव्याख्या

प्रलयस्य मानं वैविध्यं मानं विशिनष्टि—कालस्येति। ईश्वरस्य रूपं शरीरं तस्य कालस्य गतिं प्रवृत्तिं त्र हीति सम्बन्धः महात्मन इति विशेषणसामर्थ्यादीश्वरस्यैव विशेषणम् ॥ १७ ॥ तत्र तावद्युगधर्मानाह—कृत इत्यादिना यन्नामधेयमित्यतः प्राक्तनेन। चत्वारः पादा यस्य स चतुष्पाद्धर्मः तज्जनैः कृतयुगजनैर्धृतः प्रवर्त्तते के पुनस्ते पादाः इत्यत आह—सत्यमिति। हे नृप विभोः पूर्णस्य धर्मस्य ॥ १८ ॥ कार्त्तयुगान् जनान् वर्णयति—सन्तुष्टा इति। अस्य दैवाल्लब्धेनेत्यादिः करुणाः परदुःखनिराचिकीर्षवः भूतमैत्रीयुक्ताः तितिक्षवः द्वन्द्वसहिष्णवः समदृशः जातिगुणादितारतम्यानादरेण सर्वस्य श्रीभगवदात्मकत्वदर्शनाः श्रमणाः तपश्चर्यादिप्रयुक्तकायक्लेशयुक्ताः ननु सर्वेप्येवंविधाश्चेन्मुक्ता एव स्युरिति न युगान्तरप्रवृत्तिरित्याशङ्क्य व्यावृत्तये प्रायश इत्युक्तम् एवंविधा इत्यर्थः ॥ १९ ॥ त्रेतायामिति अधर्मस्य पादैरनृतादिभिर्द्धर्मस्य पादानां तुर्यांशः शनैर्हीयते प्रतिपादं चतुर्थांशः क्षीयते असन्तोषेति छेदः विग्रहः भूतविरोधः क्रमेणैतैः सत्यादीनां तुरीयांशा हीयन्त इत्यर्थः ॥ २० ॥ तात्कालिकान् जनान् आह—तदेति। न लम्पटाः नातीव विषयलोलुपाः ब्रह्मोत्तरा ब्राह्मणाधिकाः त्रयीवृद्धाः वैदिककर्मवृद्धाः ॥ २१ ॥ द्वापरे युगे अधर्मस्य लक्षणैश्चिन्हैः पादैरिति यावत् हिंसादिभिश्चतुर्भिर्धर्मस्य पादेषु पादादिष्वर्द्धम् अर्द्धं ह्रसति हिंसा तुष्ट्यनृतद्वेषैरिति क्रमो न विवक्षितः अनृतेन सत्यं हिंसया दया असन्तोषेण तपः विग्रहेण दानम् इत यथार्हं योज्यम् ॥ २२ ॥ तादात्मिकजनानाह—यशस्विन इति। महाशीलाः महायज्ञानुष्ठानशीलाः महाश्रोत्रियाः क्षत्त्रद्विजोत्तमाः क्षत्रियब्राह्मणप्रधानाः ॥ २३ ॥ कलाविति। एवमग्रेप्युक्तमप्यवगन्तव्यं धर्महेतूनां धर्मपादानां तुर्यांशः कलाववशिष्यते सोप्येधमानैर्वर्द्धमानैरधर्मस्य हेतुभिः पादैरहरहः क्षीयमाणोऽन्ते सावशेषं विनङ्क्ष्यति ॥ २४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कालस्य विष्णोर्गतिं गमनप्रकारं च ॥१७॥ सूचीकटाहन्यायेन युगधर्मस्वरूपमादौ वाक्त—कृत इति। तज्जनैः कृतयुगजनैः के चत्वारः पादाः ? इत्यत्राह—सत्यमिति। ।वभोर्धर्मस्य ते पादाः ॥ १८ ॥ तत्राश्रमिणां स्वभावमाह—सन्तुष्टा इति। समदृशः वस्तुयाथार्थ्यज्ञानिनः करुणयन्तीति करुणाः आश्रमिण इत्यनेन भार्याद्यवियोगमाह—नित्यगृहस्था इत्यर्थः ॥ १९ ॥ तुर्यांशश्चतुर्थांशो दानलक्षणः पादो हीयते ह्रसति पादहानौ प्रतिपक्षमाह—अधर्मेति ॥ २० ॥ तदा त्रेतायां यज्ञादिक्रिया तपोनिष्ठा भवन्ति न लम्पटाः विषयरागिणो न भवन्ति त्रैवर्गिकाः त्रिवर्गसहिताः त्रयीवृद्धाः वेदविद्यायां विशारदा त्रैविद्या इत्यर्थः ब्रह्मोत्तराः ब्राह्मणाधिकाः ॥२१॥ अधर्मलक्षणैः अधर्मस्वरूपपादैः हिंसातुष्ट्यनृतद्वैधैः हिंसातुष्ट्यनृतलक्षणद्वैधं द्वित्वं येषां ते तथा तैः अतुष्ट्युतमतुतमतुष्ट्यनृतं धर्मस्य तपःसत्यदयादानेषु पादेष्वर्धं ह्रसति अनेन द्वापरशब्दो निरुक्तः ॥ २२ ॥ महाशाला इत्यनेन यज्ञकर्तारः ॥ २३ ॥ पर्यासो निरासः सोऽपि सत्यलक्षणोऽपि धर्मो वा ॥ २४ ॥

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

त्रेतायामित्यादिकं प्रथमस्कन्धसन्दर्भाऽनुसारेण सम्यक् ज्ञेयम् ॥ २०–३१ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

युगानीति ब्रूहीत्यनुषङ्गः प्रलयकल्पयोः संहारस्थितकालयोः न चायं बहिर्मुखः प्रश्न इत्याह—कालस्येति ॥ १७ ॥ प्रथमयुगधर्मानाह—कृत इति। तज्जनैस्तत्कालभवैर्लोकैः भृतो धृतः दानमिति "दैप् शोधने" इत्यस्मात् शौचमित्यर्थः। तथैव प्रथमस्कन्धोक्तेः ॥ १८ ॥ श्रमणाः आत्माभ्यासवन्तः ॥१९॥ अनृतेन सत्यम् हिंसया दया असन्तोषेण तपः विग्रहेण शौचम् ॥२०॥ ब्रह्मोत्तराः ब्राह्मणाधीकाः ॥२१॥ हिंसेत्यत्र क्रमो न विवक्षितः ॥२२–२३॥ धर्महेतूनां सत्यादीनाम् अधर्महेतुभिरनृतादिभिः ॥२४॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

युगानि मानतः ब्रूहीत्यनुषङ्गः महात्मनः परमात्मनः ईश्वरान् ब्रह्मादीन् तत्तत्काले तत्तदधिकारे रूपयति निरूपयति तस्य विष्णोः यः शक्तिभूतः कालस्तस्य च गतिं ब्रूहीत्यन्वयः। यद्वा, चेतनेन रूपेण भिन्नोऽपि भगवच्छक्तित्वात्तदभिन्नोऽतस्त्रीणि विशेषणानि कालस्यैव ॥ १७ ॥ तत्र युगधर्मान् तत्तद्युगजनांश्चाह—कृत इत्यादिना। चतुष्पात् चत्वारः पादा यस्य स तथा तज्जनैः कृतजनैः विभोः सम्पूर्णस्य धर्मस्य सत्यादयः पादाः श्रमणाः तत्त्वज्ञाने कृतश्रमाः ॥ १८–२० ॥ ब्रह्मोत्तरा ब्राह्मणाधिकाः ॥ २१ ॥ अधर्मस्य तप आदिषु पादेषु अर्द्धं ह्रसति क्षीयते तत्र असन्तुष्ट्या असन्तोषेण तप अनृतेन सत्यम् हिंसया दया द्वेषशब्देन तत्कार्यभूतो विग्रहो गृह्यते कार्यकारणयोरभेदात् तेन दानमित्यर्थः ॥ २२ ॥ क्षत्रद्विजाः उत्तमाः प्रधानाः येषु ते ॥ २३ ॥ कलौ तु धर्मस्य हेतूनां पादानां तुर्यांश एव ज्ञेयः। सोऽपि अधर्मस्य हेतुभिः पादैः प्रत्यहम् एधमानैः क्षीयमाणैः अन्ते विनङ्क्ष्यति ॥ २४ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

प्रलयकल्पयोः संहारस्थितिकालयोर्मानं च ब्रूहि न च कृतादिकालधर्मादिप्रश्नो बहिर्मुख इति शङ्कनीयः कालस्य भगवद्रूपत्वादित्याशयेनाह—कृत इति। चत्वारः पादा यस्य स चतुष्पाद्धर्मः तज्जनैः कृतयुगवर्तिजनैः धृतः कृते युगे प्रवर्त्तते। यस्य पादान् दर्शयति—सत्यमिति। विभोः पूर्णस्य धर्मस्य हे नृप ॥ १८ ॥ तदा च सर्वे जनाः दैवाद्वेलब्धेनान्नादिना सन्तुष्टाः करुणाः परदुःखनिराचिकीर्षवः मैत्राः प्राणिमैत्रीयुक्ताः। तितिक्षवो द्वन्द्वसहिष्णवः समदृशः जातिगुणादितारतम्यानादरेण सर्वत्रात्मदर्शिनः श्रमणाः भगवद्ध्यानादिश्रमपरा न तु विषयासक्ताः सर्वेः एवंविधाश्चेत्तर्हि मुक्ता एव स्युरिति न ततो युगान्तरप्रवृत्तिः स्यादिति शङ्कां वारयन्नाह—प्रायशः एवंविधा इति ॥ १९ ॥ त्रेतायां तु अधर्मपादैरनृतादिभिः क्रमेण धर्मपादानां तुर्यांशः शनैर्हीयते प्रतिपादचतुर्थांशः क्षीयते। असन्तोष इतिच्छेदः। विग्रहो भूतविरोधः ॥ २० ॥ तदा च जनाः क्रियादिनिष्ठाः क्रिया यज्ञादिः। तपः उपवासादि। न लम्पटाः विषयेष्वनासक्ताः। त्रैवर्णिकाः धर्मार्थकामपराः। त्रयीवृद्धा वैदिककर्मसु निपुणाः। वर्णाः ब्रह्मोत्तराः ब्राह्मणाधिकाः ॥ २१ ॥ द्वापरे युगे तु अधर्मस्य लक्षणैश्चिह्नैः पादैर्हिंसादिभिः धर्मपादेषु तपआदिषु अर्द्धं ह्रसति, अनृतेन सत्यं, हिंसया दया। असन्तोषेण तपः। विग्रहेण दानमिति यथायोग्यं योज्यम्। हिंसातुष्ट्यनृतद्वेषैरिति क्रमस्तु न विवक्षितः। अत्र च दानशब्देन रागद्वेषराहित्येन भूताभयप्रदानं विवक्षितं तदेव प्रथमस्कन्धे शौचशब्देनोक्तमतो न विरोधः ॥ २२ ॥ यशस्विनः कीर्तिप्रियाः महाशीला महायज्ञाद्यनुष्ठानशीलाः धनाढ्याः वर्णाः क्षत्रद्विजोत्तमाः क्षत्रियब्राह्मणप्रधानाः ॥ २३ ॥ कलौ तु धर्महेतूनां धर्मपादानां तुर्यांशः चतुर्थांशोऽवशिष्यते सोऽप्येधमानैरहेतुभिः अधर्मपादैरहरहः क्षीयमाणोऽन्ते सावशेषं विनङ्क्ष्यति ॥ २४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

युगानीति। युगानि युगधर्मान्, युगमानमिति पाठान्तरम्। प्रलयश्च कल्पश्च तयोः मानं, ईश्वरशरीरकस्य, कालस्य गतिं महात्मनः विष्णोः गतिं च, ब्रूहि ॥ १७ ॥ तत्र तावद्युगधर्मानाह। कृत इति। चत्वारः पादा यस्य स चतुष्पात् धर्मः, तज्जनैः कृतयुगीयजनैः, धृतः सन्, कृते कृतयुगे, प्रवर्त्तते। के पुनस्ते तत्पादा इत्यत आह। सत्यं, दया, तपः, दानं इत्येते हे नृप, विभोः, पूर्णस्य धर्मस्य, पादाः। तत्र दानमरागद्वेषतया दानमभयदानं वा, एतदेव प्रथमस्कन्धे शौचशब्देनोक्तमस्ति ॥ १८ ॥ कार्त्तयुगीयान् जनानाह। संतुष्टा इति। संतुष्टाः दैवाल्लब्धेनेति शेषः। करुणाः परदुःखनिराचिकीर्षवः, मैत्राः भूतमैत्र्युक्ताः शान्ताः अन्तःकरणशमोपेताः, दान्ता बाह्येन्द्रियदमनयुक्ताः, तितिक्षवः द्वन्द्वसहिष्णवः, क्षमाशीला वा, आत्मारामाः, समदृशः जातिगुणादितारतम्यानादरेण सर्वस्य भगवदात्मदर्शनाः, प्रायशः श्रमणाः तपश्चर्यादिप्रयुक्तकायक्लेशयुक्ताः जनाः, कृतयुगेऽभवन्निति शेषः। ननु सर्वेऽप्येवंविधाश्चेन्मुक्ता एव स्युस्तथा सति न युगान्तरप्रवृत्तिरित्याशङ्कानिवृत्तये प्रायशः पदं प्रयुक्तम्। तेन बहुधात्वेवंविधा

एवेत्यर्थः ॥ १९ ॥ त्रेतायामिति । त्रेतायां युगे तु धर्मपादानां मध्ये, तुर्यांशश्चतुर्थांऽशः, अनृतं च हिंसा च असंतोषश्च विग्रहश्च तैः, अधर्मपादैः शनैः ह्रीयते प्रतिपादं चतुर्थांऽशः क्षीयते इत्यर्थः । अयं भावः । धर्मसंबन्धिषु सत्यादिषु चतुर्षु पादेषु एकैको गुणो मुख्योऽन्ये गौणाः । एवं सति कृतयुगनिवृत्तौ, चतुर्भ्योऽपि पादेभ्यः, सत्यभागनिवृत्तिः । एवं त्रेतोपरतौ चतुर्भ्योऽपि दयानिवृत्तिः । एवं तपोदानयोरपि रीतिर्बोध्या इति ॥ २० ॥ तात्कालिकान् जनानाह । तदेति । तदा त्रेतायुगे, जनाः क्रियातपोनिष्ठाः, न लम्पटाः नातीव विषयलोलुपाः, त्रैवर्गिका धर्मार्थकामकामुकाः, त्रयीवृद्धाः वैदिकक्रियासमृद्धा इत्यर्थः । हे नृप, वर्णाः ब्रह्मोत्तरा ब्राह्मणाधिकाः ॥ २१ ॥ तप इति द्वापरे तु अधर्मलक्षणैः अधर्मचिह्नभूतैः पादैः हिंसाः च अतुष्टिश्च अनृतं च द्वेषश्च तैः, धर्मस्य तपः सत्यदयादानेषु अर्द्धं ह्रसति क्षीयते । हिंसातुष्टयनृतद्वेषैरिति क्रमो न विवक्षितः । तत्रानृतेन सत्यं, हिंसया दया, असंतुष्टयाऽसंतोषेण तपः, द्वेषेण विग्रहेण दानमिति यथार्ह योजनायोग्यत्वात् ॥ २२ ॥ तादात्विकजनानाह । यशस्विन इति । द्वापरे जनाश्च, यशस्विनः कीर्त्तिप्रियाः, महाशालाः महायज्ञानुष्ठानशीलाः, महाश्रोत्रिया इति यावत् । केचित्तु महती शाला गुरुपरंपरा येषामित्याहुः । स्वाध्यायाध्ययने वेदस्याध्ययने रताः, आढ्याः संपन्नाः कुटुम्बिनः हृष्टाः तदा वर्णाश्च क्षत्रद्विजोत्तमाः क्षत्रियब्राह्मणप्रधानाः ॥ २३ ॥ कलौ त्विति । कलौ युगे तु, एधमानैः अधर्महेतुभिः अधर्मपादैः, धर्महेतूनां धर्मपादानां, तुर्यांशः क्षीयमाणः, अहरहः क्षयमुपगच्छन् सन्, कथंचिदवशिष्यते । अन्ते तु सोऽपि, विनङ्क्ष्यति हि ॥ २४ ॥

## हिन्दी अनुवाद

श्रीशुकदेवजी कहते हैं—परीक्षित्! सत्ययुग में धर्मके चार चरण होते हैं; वे चरण हैं—सत्य, दया, तप और दान। उस समय के लोग पूरी निष्ठा के साथ अपने-अपने धर्म का पालन करते हैं। धर्म स्वयं भगवान् का स्वरूप है ॥ १८ ॥ सत्ययुग के लोग बड़े सन्तोषी और दयालु होते हैं। वे सबसे मित्रता का व्यवहार करते और शान्त रहते हैं। इन्द्रियाँ और मन उनके वश में रहते हैं और सुख-दुःख आदि द्वन्द्वों को वे समान भाव से सहन करते हैं। अधिकांश लोग तो समदर्शी और आत्माराम होते हैं और बाकी लोग स्वरूपस्थिति के लिये अभ्यास में तत्पर रहते हैं ॥ १९ ॥ परीक्षित्! धर्म के समान अधर्म के भी चार चरण हैं—असत्य, हिंसा, असन्तोष ओर कलह। त्रेतायुग में इन के प्रभाव से धीरे-धीरे धर्म के सत्य आदि चरणों का चतुर्थांश क्षीण हो जाता है ॥ २० ॥ राजन्! उस समय वर्णो में ब्राह्मणों की प्रधानता अक्षुण्ण रहती है। लोगों में अत्यन्त हिंसा और लम्पटता का अभाव रहता है। सभी लोग कर्मकाण्ड और तपस्या में निष्ठा रखते हैं और अर्थ, धर्म एवं कामरूप त्रिवर्ग का सेवन करते हैं। अधिकांश लोग कर्म प्रतिपादक वेदों के पारदर्शी विद्वान् होते हैं ॥ २१ ॥ द्वापरयुग में हिंसा, असन्तोष, झूठ और द्वेष—अधर्म के इन चरणों की वृद्धि हो जाती है एवं इन के कारण धर्म के चारों चरण—तपस्या, सत्य, दया और दान आधे-आधे क्षीण हो जाते हैं ॥ २२ ॥ उस समय के लोग बड़े यशस्वी, कर्मकाण्डी और वेदों के अध्ययन-अध्यापन में बड़े तत्पर होते हैं। लोगों के कुटुम्ब बड़े-बड़े होते हैं, प्राय: लोग धनाढ्य एवं सुखी होते हैं। उस समय वर्णों में क्षत्रिय और ब्राह्मण दो वर्णों की प्रधानता रहती है ॥ २३ ॥ कलियुग में तो अधर्म के चारों चरण अत्यन्त बढ़ जाते हैं। उन के कारण धर्म के चारों चरण क्षीण होने लगते हैं और उनका चतुर्थांश ही बच रहता है। अन्त में तो उस चतुर्थांश का भी लोप हो जाता है ॥ २४ ॥

तस्मिँल्लुब्धा दुराचारा निर्दयाः शुष्कवैरिणः। दुर्भगा भूरितर्षाश्च शूद्र[1]दाशोत्तराः प्रजाः ॥ २५ ॥

सत्त्वं रजस्तम इति दृश्यन्ते पुरुषे गुणाः। कालस[2]ञ्चोदितास्ते वै परिवर्तन्त आत्मनि ॥ २६ ॥

प्रभवन्ति यदा सत्त्वे मनोबुद्धीन्द्रियाणि च। तदा कृतयुगं विद्याज्ज्ञाने तपसि यद् रुचिः ॥ २७ ॥

य[3]दा धर्मार्थकामेषु भक्तिर्भवति देहिनाम्। तदा त्रेता रजोवृत्तिरिति जानी[4]हि बुद्धिमन् ॥ २८ ॥

यदा लोभस्त्वसन्तोषो मानो दम्भोऽथ मत्सरः। कर्मणां चापि काम्यानां द्वापरं तद् रजस्तमः ॥ २९ ॥

यदा मायानृतं तन्द्रा निद्रा हिंसा विषादनम्। शोको मोहो भयं दैन्यं स कलिस्तामसः स्मृतः ॥ ३० ॥

यस्मात् क्षुद्रदृशो मर्त्याः क्षुद्रभाग्या महाशनाः। कामिनो वित्तहीनाश्च स्वैरिण्यश्च स्त्रियोऽसतीः ॥ ३१ ॥

दस्यूत्कृष्टा जनपदा वेदाः पाखण्डदूषिताः। राजानश्च प्रजाभक्षाः शिश्नोदर[5]परा द्विजाः ॥ ३२ ॥

१. ब्रा दा०। २. संयोजि०। ३. यदा कर्मसु काम्येषु भक्तिर्यशसि देहिनाम्। ४. नीहै बुद्धिमान्। ५. रपरायणाः।

### कृष्णप्रिया व्याख्या

अन्वयः—तस्मिन् प्रजाः लुब्धाः दुराचाराः निर्दयाः शुष्कवैरिणः दुर्भगाः भूरितर्षाः शूद्रदाशोत्तराः च ॥ २५ ॥ सत्त्वं रजः तमः इति गुणाः पुरुषे दृश्यन्ते ते कालसञ्चोदिताः आत्मनि परिवर्तन्ते ॥ २६ ॥ यदा मनोबुद्धीन्द्रियाणि सत्त्वे प्रभवन्ति यत् ज्ञाने तपसि रुचिः तदा कृतयुगं विद्यात् ॥ २७ ॥ यदा काम्येषु कर्मसु देहिनां भक्तिः भवति तदा बुद्धिमन् रजोवृत्तिः त्रेता इति जानीहि ॥ २८ ॥ यदा लोभः असन्तोषः मानः दम्भः मत्सरः काम्यानां कर्मणां ( रुचिः ) तत् रजस्तमः द्वापरं (जानीहि) ॥ २९ ॥ यदा माया अनृतं तन्द्रा निन्द्रा हिंसा विषादनं शोकः मोहः भयं दैन्यं सः तामसः कलिः स्मृतः ॥ ३० ॥ यस्मात् क्षुद्रदृशः मर्त्याः क्षुद्रभाग्याः महाशनाः कामिनः वित्तहीनाः स्वैरिण्यः असतीः स्त्रियः ॥ ३१ ॥ जनपदाः दस्यूत्कृष्टाः वेदाः पाखण्डदूषिताः राजानः प्रजाभक्षाः द्विजाः शिश्नोदरपराः ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

शूद्रदासोत्तराः शूद्रकैवर्तादिप्रधानाः ॥ २५ ॥ युगानामेवंभूतवैषम्ये कारणमाह सत्त्वमिति पंचभिः ॥ २६ ॥ मनश्च बुद्धिश्चेंद्रियाणि च सत्त्वे यदा प्रभवंत्यतिशयेन वर्तंते ॥ २७ ॥ यदा कर्मादिषु भक्तिः प्रीतिस्तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि ॥ २८ ॥ काम्यानां कर्मणां विषये यदा प्रीतिस्तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि ॥ २८ ॥ काम्यानां कर्मणां विषये यदा प्रीतिस्तत्तदा रजस्तमःप्रधानं द्वापरं जानीहीति पूर्वेणानुषंगः ॥ २९ ॥ विषादं दुःखम् ॥ ३० ॥ कलिदोषान्प्रपंचयति यस्मादित्यादिना । यस्मात्कलेर्हेतोः क्षुद्रदृशो मंदमतयः । क्षुद्रभाग्या अल्पभाग्याः । महाशना बह्वाहाराः वित्तहीनः अपि कामिनश्च । स्वैरिण्यः पुंश्चल्यः असतीरसत्यः ॥ ३१ ॥ दस्यव उत्कृष्टाः प्रचुरा येषु ते ॥ ३२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तस्मिन्कलौ । शुष्कवैरिणो निर्निमित्तवैरिणः । दुराचारा मांसाशनाद्याचारपरायणाः ॥ २५ ॥ एवंभूतवैषम्ये । परिवर्तंते यथैकस्यापि ग्रहमहादशायामंतर्दशा वर्तंते तथा कलावपि चत्वारो युगा इति भावः । आत्मनि मनसि ॥ २६–२७ ॥ पर्यायेण वर्तंते हे बुद्धिमन्निति–बुद्ध्यैवैतन्निश्चेयमिति भावः ॥ २८–२९ ॥ तामसः केवलतमोगुणप्रधानः ॥ ३०–३४ ॥

### अन्वितार्थप्रकाशिका

तस्मिन्निति । तस्मिन् कलौ जलाः लुब्धाः दुराचाराः निर्दयाः शुष्कवैरिणः निर्हेतुकवैरिणः भाग्यहीना भूरितर्षा अर्थकाम-तृष्णाकुलाः शूद्राः दासाः कैवर्त्तादयश्च उत्तराः प्रधाना येषा तथाभूता जनाः । प्रजां इति पाठान्तरम् ॥ २५ ॥ युगानां विषमस्वभावे हेतुमाह—सत्त्वमिति । सत्त्वादयो गुणाः पुरुषे दृश्यन्ते । ते च कालेन संचोदिता आत्मनि मनसि परिवर्त्तन्ते ह्रासोल्लासाभ्यां स्वकार्यं कुर्वन्तीत्यर्थः । किंच यथा एकस्यापि सूर्यादेर्ग्रहस्य दशायां ग्रहाणामन्तर्दशा भवन्ति तथैवैकयुगमध्ये चत्वारि युगानि तिष्ठन्ति । अतः कलिमध्येऽपि कदाचिन्न धर्मह्रासस्तत्राप्येकैकस्मिन् पुंसि एवं द्रष्टव्यमित्याशयः ॥ २६ ॥ प्रभवन्तीति । तत्र मनश्चेन्द्रियाणि च सदा सत्त्वे निष्कामधर्मे प्रभवन्ति अतिशयेन वर्त्तन्ते । यत् यदा च ज्ञाने तपसि च रुचिर्भवति तदा कृतयुगं विद्यात् जानीयात् ॥ २७ ॥ यदेति । हे बुद्धिमन् ! यदा देहिनां काम्येषु कर्मसु । धर्मेषु इत्यपि पाठः । भक्तिः रुचिर्भवति चकारादधर्मेष्वपि तदा तु रजोवृत्ति प्रधानं त्रेतायुगमिति जानीहि ॥ २८ ॥ यदेति । यदा च लोभादयो भवन्ति काम्यानां कर्मणां च विषये रुचिर्भवति तदा रजस्तमःप्रधानं द्वापरं जानीहि । मानो गर्वः पराभिभवहेतुश्चित्तविकारः दम्भः परप्रतारणानुकूलवेष-धारणम् ॥ २९ ॥ यदेति । यदा मायादयो भवन्ति तदा तामसः केवलतमोगुणवृत्तिप्रधानः कलिः स्मृतः । माया कपटं तन्द्रा आलस्यं हिंसा पीडा विषादनं दुःखं शोको रोदनम् ॥ ३० ॥ यस्मादिति । यस्मान्मर्त्या वक्ष्यमाणविधाः स कलिरिति पूर्वेण सम्बन्धः । क्षुद्रदृशो मन्दमतयः क्षुद्रभाग्याः महाशनाः बह्वाहाराः वित्तहीनाः अपि कामिनः विषयासक्ताः वैरिण्यः पुंश्चल्यः असतीः असत्यः स्त्रियः पूर्वसवर्णदीर्घ आर्षः ॥ ३१ ॥ दस्यूत्कृष्टा इति । जनपदा देशाः दस्यवः चोराः उत्कृष्टाः प्रधाना येषु तादृशाः वेदाश्च पाखण्डैः कल्पितविरुद्धनानामतैः दूषिता राजानश्च प्रजाभक्षाः प्रजापीडनपराः ॥ ३२ ॥

### श्रीमद्वीरराघवव्याख्या

जनानाह—तस्मिन्नित्यादिना । शुष्कवैरिणः निर्हेतुकवैरिणः दुर्भगा भाग्यहीनाः भूरि तेषां अर्थकामतृष्णा येषां ते शूद्रदाशोत्तरा राजानः शूद्रा दाशाः कैवर्तादयश्च ते उत्तराः प्रधाना येषां ते प्रजा इत्यपि पाठः यद्वा शुष्कवैरिण इति लिङ्गव्यत्यय

आर्षः ॥ २५ ॥ किं तर्हि युगेष्वेवंविधवैषम्ये कारणमित्यपेक्षायां "कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे । यस्य चेतसि गोविन्दो हृदि यस्य न केशवः । इत्युक्तरीत्या कालानुगुणसत्त्वादिगुणोल्लासह्रासप्रयुक्तकार्यवैविध्यमेवेत्याह—सत्त्वमिति पञ्चभिः । दृश्यन्तां ततः किमत आह—कालसञ्चोदिता इति । ते वै सत्त्वादयो गुणाः कालेन सञ्चोदिता आत्मनि परिवर्तन्ते ह्रासोल्लासाभ्यां मनसि स्वस्वकार्य्यकराः प्रवर्तन्त इत्यर्थः ॥ २६ ॥ तत्र मनश्च तद्वश्यानि बुद्धीन्द्रियाणि च यदा सत्त्वे प्रभवन्त्यतिशयेन वर्तन्ते उद्रिक्त-सत्त्वप्रधाना भवन्तीत्यर्थः । तदा कृतयुगं विद्याज्जानीयात् यद्यतः सत्त्वोल्लासकार्ये ज्ञाने तपसि च कार्तयुगधर्मे रुचिः कार्य्यविशेषेणैव कालविशेषानुमानमिति भावः ॥ २७ ॥ यदा कर्मस्वतिभक्तिरभिरुचिः तदा रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि बुद्धिमन्निति सम्बोधनम् ॥ २८ ॥ यदा लोभ इति मानो गर्वः स चोत्तमेष्ववमतिहेतुश्चित्तविकारः कर्मणामिति विषयविषयिभावसम्बन्धे षष्ठी अनुषक्तेन भक्तिपदेन सम्बन्धः काम्यकर्मस्वभिरुचिरित्यर्थः । तत्तदा रजस्तमोवृत्तिप्रधानं द्वापरयुगं जानीहि इति पूर्वेण सम्बन्धः ।२९। यदेति । माया कापट्यं विषादनमान्तरं दुःखं शोको बाह्यमश्रुविमोचनादिरूपं दैन्यं कार्पण्यं तदा तामसः केवलतमोगुणवृत्तिप्रधानः कलिः स्मृतः ॥ ३० ॥ अथ कलि विषिषंस्तद्दोषान्प्रपञ्चयति—यस्मादित्यादिना । यस्मात् मर्त्याः वक्ष्यमाणविधाः स कलिरिति पूर्वेण सम्बन्धः क्षुद्रदृशः मन्दमतयः क्षुद्रभाग्या अल्पभाग्याः असतीरसत्यः "दुःशीला कर्कशाचण्डी नित्यं कलहकारिणी" इत्युक्तविधाः ॥ ३१ ॥ जनपदाः देशवासिनः दस्युभिश्चोरादिभिरुत्कृष्टाः उपद्रुताः प्रजाभक्षाः प्रजापीडनपराः द्विजास्तु शिश्नोदरपोषणपराः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

शुष्कवैरिणः निष्प्रयोजनवैरिणः शूद्रदाशोत्तराः प्राधान्येन शूद्राणां दासाः ॥ २५ ॥ सत्त्वादयो गुणा आत्मनि मनसि परिवर्तन्ते पर्यायेण वर्तन्ते ॥ २६ ॥ कथं तत्राह—प्रसीदतीति । यदा सत्त्वं प्रसीदति तदा मन आदीनि प्रसन्नानि भवन्ति लक्षणान्तरमाह—ज्ञान इति । यद्यदाज्ञानादिरुचिस्तदा कुत एतत्कल्प्यत इत्यत्राह—यदिति । मन आदिप्रसादेन ज्ञानाद्यभिरुचिर्ज्ञायत इति यद्यस्मात्तत्तस्मात् इति ॥ २७ ॥ देहिनां यदा काम्यन्त इति कामास्तेषु कर्मसु यशसि चापादनीयमिति स्नेहविशेषो भवति तदा बुद्धिमान् रजोवृत्तिस्त्रेतेति जानीत जानातु ॥ २८ ॥ यदा आत्मनि लोभादयो दृश्यन्ते तदा रजस्तमः रजस्तमोगुणवृत्तियुतं द्वापरं जानातु ॥ २९ ॥ यदा मायादयो दृश्यन्ते यत्र स कलिस्तामसस्तमोगुणवृत्तिभानित्युपलक्ष्यते विषादनं विषण्णता ॥ ३० ॥ यस्मात् कलिदोषात् क्षुद्रदृश अल्पज्ञानाः लोकोपद्रवकर्मज्ञाना वा वृत्तिहीना जीवनोपायरहिताः असतीरसत्यः ॥ ३१ ॥ दस्यूत्कृष्टाः दस्युपद्रुताः "कृष हिंसायाम्" इति धातुः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

दस्यूत्कृष्टा दस्यव एव उत्कृष्टाः प्रधाना येषु ते ॥ ३२–४३ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

शूद्रदाशोत्तरा शूद्रकैवर्त्तप्रधानाः ॥ २५ ॥ यथा एकस्यापि ग्रहस्य सूर्य्यादेर्दशायां सर्वेषां ग्रहाणामन्तर्दशा भवन्ति तथैकैकस्यापि युगस्य मध्ये चत्वारि युगानि तिष्ठन्त्यतः कलिमध्येऽपि कदाचित् कदाचिन्न धर्मह्रासस्तत्राप्येकैकस्मिन् पुंस्यप्येवं द्रष्टव्यमित्याह—सत्त्वमिति । आत्मन्यन्तःकरणे परिवर्त्तन्ते यातायातं कुर्वन्ति ॥ २६ ॥ एतद्विवृणोति—प्रभवन्तीति । सत्त्वे निष्काम-धर्मे ॥ २७ ॥ काम्येषु सकामधर्मेषु भक्तिः प्रीतिः ॥ २८ ॥ यदा काम्यानां कर्मणां काम्येषु कर्मस्वित्यर्थः । चकारादधर्मेष्वपि प्रीतिस्तदा रजस्तमःप्रधानं द्वापरं जानीहि तत्र लोभादयो भवन्तीत्यन्वयः ॥२९॥ यदा केवलेष्वधर्मेष्वेव प्रीतिस्तदा तामसः प्रसिद्धः कलिरेव तदा मायाऽनृतादयः विषादनं विषादः ॥ ३० ॥ अथ कलेर्दोषान् प्रपञ्चयति—यस्मादिति । यस्मात्कलेर्हेतोः ॥ ३१–३२ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

शूद्राः दाशाः कैवर्तादयश्च उत्तराः प्रधानाः यासु ताः शूद्रदासा इतिपाठे तु शूद्राः दासाः भृत्यभूताः भार्यापुत्रादय एव प्रधाना यासु न तु गुर्वादयस्ताः ॥ २५ ॥ युगानामुक्तवैषम्ये कारणमाह—सत्त्वमिति । आत्मनि मनसि परिवर्तन्ते अतः पुरुषेऽपि दृश्यन्ते ॥ २६ ॥ प्रभवन्ति प्रवर्तन्ते ॥ २७ ॥ भक्तिरुचिः ॥ २८ ॥ काम्यानां कर्मणां यदा रुचिः ॥ २९ ॥ माया वञ्चनाः तन्द्राऽन-वहिततता विवादनमन्तर्दुःखितत्वम् ॥ ३० ॥ अथ कलेर्दोषान् विस्तरेणाह—यस्मादित्यादि चतुर्दशभिः । यस्मात् कलेर्हेतोः मर्त्याद्याः वक्ष्यमाणप्रकाराः भविष्यन्ति स कलिः स्मृत इति पूर्वेण सम्बन्धः । क्षुद्राः अधमैकविषया दृक् दृष्टिर्येषां ते क्षुद्रमल्पं भाग्यं येषां ते महदशनं भोजनं येषां ते असतीधर्मबाह्याः स्त्रीः समाश्रित्य सत्योऽपि स्वैरिण्यः स्वेच्छाचारिण्यो भविष्यन्ति ॥ ३१ ॥ दस्यवः उत्कृष्टाः बलोत्कटाः येषु ते पाषण्डैः स्वच्छकधर्माभासैः दूषिताः अभिभूताः ॥ ३२ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तस्मिन् कलौ शुष्कवैरिणः निर्हेतुकवैरिणः दुर्भगा भाग्यहीनाः भूरितर्षा अर्थकामतृष्णाकुलाः शूद्रा दाशा कैवर्त्तादयश्च उत्तराः प्रधाना येषां तथाभूता जनाः। प्रजा इति पाठान्तरम्॥ २५॥ एवं युगानां वैषम्ये कारणमाह—सत्त्वमिति पञ्चभिः। सत्वादयो गुणाः पुरुषे दृश्यन्ते ते च कालेन सञ्चोदिता आत्मनि मनसि परिवर्त्तन्ते, ह्रासोल्लासाभ्यां स्वकार्यं कुर्वन्तीत्यर्थः॥ २६॥ तत्र मनश्चेन्द्रियाणि च यदा सत्त्वे प्रभवन्ति अतिशयेन वर्त्तन्ते तदा कृतयुगं विद्यात् जानीयात्। सत्त्ववृत्तित्वे ज्ञापकमाह—यत् यदा ज्ञाने तपसि च रुचिर्भवति॥ २७॥ हे बुद्धिमन् यदा कर्मसु भक्तिः रुचिर्भवति तदा तु रजोवृत्तिप्रधानं त्रेतायुगमिति जानीहि॥ २८॥ यदा च लोभादयो भवन्ति काम्यानां कर्मणां च विषये रुचिर्भवति तदा रजस्तमः प्रधानं द्वापरं जानीहि। मानो गर्वः पराभिभवहेतुश्चित्तविकारः। दम्भः परप्रतारणानुकूलवेषधारणम्॥ २९॥ यदा मायादयो भवन्ति तदा तामसः केवलतमोगुणवृत्तिप्रधानः कलिः स्मृतः। माया कापट्यम्। तन्द्रा आलस्यम्। हिंसा पीडा। विषादनं दुःखं। शोको रोदनम्॥ ३०॥ कलिदोषान्प्रपञ्चयति—यस्मादित्यादिना। यस्मान्मर्त्या वक्ष्यमाणविधाः स कलिरिति पूर्वेण सम्बन्धः। क्षुद्रदृशो मन्दमतयः, क्षुद्रभाग्या अल्पभाग्याः, महाशनाः बह्वाहाराः, वित्तहीना अपि कामिनः विषयासक्ता स्वैरिण्यः पुंश्चल्यः असतीः असत्य 'दुश्शीला कर्कशा चण्डी नित्यं कलहकारिणी' इत्युक्तविधाः स्त्रियः॥ ३१॥ दस्यवः चोरा उत्कृष्टाः प्रधाना येषु ते जनपदा देशाः। पाषण्डैः कल्पितविरुद्धनानामतैर्दूषिता वेदाः। प्रजाभक्षाः प्रजापीडनपराः॥ ३२॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कलियुगीयजनानाह। तस्मिन्निति। तस्मिन् कलियुगे तु, जनाः लुब्धाः, दुराचाराः, निर्दयाः, शुष्कवैरिणः फलहीनवैरवन्तः, दुर्भगाः दुर्भाग्याः भाग्यहीना इति यावत्। भूरिरतिशयिता तर्षाऽर्थकामतृष्णा येषां ते तथोक्ताः, शूद्रदाशोत्तराः शूद्रकैवर्त्तादिप्रधानाः, शूद्रदाशोत्तराः प्रजाः इत्यपि पाठः। तत्र शुष्कवैरिण्य इति वक्तव्ये लिङ्गव्यत्यय आर्षः॥ २५॥ किं तर्हि युगेष्वेवंविधवैषम्ये कारणमित्यपेक्षायां कालानुगुणसत्त्वादिगुणोल्लासह्रासकार्यवैविध्यमेवेत्याह। सत्त्वमिति। सत्त्वं, रजः, तमः, इत्येते गुणाः, कालसंचोदिताः, कालैधितयुगाभिमानिपुरुषसमीरिताः सन्तः, पुरुषे तत्तत्कालवर्तिजने दृश्यन्ते, तेषु तेषु युगेषु वर्त्तमानेषु जनेषु लक्ष्यन्ते इत्यर्थः। एकवचनं सामान्यं, न केवलं बहिरेव कालगुणाः प्रवर्त्तन्तेऽपि, तु आत्मन्यपि प्रवर्त्तन्ते इत्याह। कालसंचोदिताः, ते युगधर्मगमका गुणाः आत्मनि वै आत्मन्यपीत्यर्थः। परिवर्त्तन्ते। एवमन्तर्बहिर्भेदेन द्विधा युगप्रवृत्तिः, ततः बहिः कृतयुगेऽप्यन्तः कलियुगप्रवृत्तौ न बाह्ययुगधर्मसुखादिकम्, अन्तः कृतयुगप्रवृत्तौ न बाह्यकलियुगकृतदुःखादिकम्। एतमर्थं 'कलौ कृतयुगं तस्य कलिस्तस्य कृते युगे। यस्य चेतसि गोविन्दो हृदि यस्य न केशवः' इति वाक्यं स्फुटतया दर्शयति॥ २६॥ नन्वतः प्रवृत्ता युगधर्माः कथं बोद्धव्यास्तत्राह। प्रभवन्तीति। यदा मनः, बुद्धीन्द्रियाणि च, सत्त्वे सत्त्वगुणे, प्रभवन्ति अतिशयेन प्रवर्त्तन्ते। उद्रिक्तसत्त्वप्रधानानि भवन्तीत्यर्थः। तदा अन्तः कृतयुगं विद्यात् जानीयात्। यद्यतः कृतयुगप्रवृत्तेः, ज्ञाने सत्त्वोल्लासकार्येऽवबोधे, तपसि च रुचिः कार्त्तयुगधर्मरुचिः जायते। कार्यविशेषेणैव कालविशेषानुमानमिति भावः। ज्ञानतपसी शमदमादीनामुपलक्षणे। तेनान्येषामपि सत्त्वगुणकार्याणां ग्रहणम्। अनेन सत्त्वप्रधानं कृतयुगमित्यपि दर्शितम्॥ २७॥ यदेति। हे बुद्धिमन्, यदा देहिनां शरीरिणां, काम्येषु कर्मसु, फलानुसंधानपूर्वकं विहितेषु यज्ञादिकर्मस्वित्यर्थः। भक्तिः अभिरुचिः भवति, तदा, रजोवृत्तिप्रधानं, त्रेता त्रेतायुगं इति जानीहि। अनेन रजःप्रधानं त्रेतायुगमित्यपि सूचितम्॥ २८॥ यदा लोभ इति। यदा तु, लोभः, असंतोषः, मानः गर्वः, उत्तमेषु अवमतिहेतुश्चित्तविकार इत्यर्थः। अथ दम्भः अन्यजनप्रतारणाय धर्मानुष्ठानं मत्सरः परोत्कर्षासहनं काम्यानां कर्मणां, विषये चापि, विषयविषयिभावसंबन्धे षष्ठी। भक्तिः काम्यकर्मस्वभिरुचिरित्यर्थः। तत्तदा रजस्तमः रजोगुणतमोगुणवृत्तिप्रधानमित्यर्थः। द्वापरं युगं जानीहि। इति पूर्वश्लोकीयक्रियासंबन्धः। दम्भादिरुचिस्तमोधर्मः काम्यकर्मरुची रजोधर्मस्तदुभयधर्मात्मकं द्वापरं युगमित्यर्थः॥ २९॥ यदा मायेति। यदा माया कापट्यम्, अनृतं स्वपररक्षणप्रयोजनमृतेऽपि पुनः पुनरसत्यभाषणाचरणम्, तन्द्रा आलस्यं, निद्रा अविहितकालेऽपि प्रस्वापाभिरुचिः, हिंसा कायवाङ्मनोभिः प्राणिद्रोहाभिरुचिः, विषादनमान्तरं दुःखं शोको बाह्यमश्रुविमोचनादिरूपं दुःखं, मोहोऽज्ञानं विपरीतज्ञानं वा, भयं भयहेतावनुपस्थितेऽपि भयशङ्का, दैन्यं कार्पण्यं, एतान्यन्तः भवन्ति। तदा तामसः केवलतमोगुणवृत्तिप्रधानः, स प्रसिद्धः कलिः, स्मृतः। एतत्प्रपञ्चः सत्सङ्गिजीवनीयचतुर्थप्रकरणीयषट्त्रिंशाध्यायाद्धरिदिग्विजयस्य द्विचत्वारिंशोल्लासाच्च संबोध्यः॥३०॥ एवं बाह्याभ्यन्तरभेदेन द्विधा युगप्रवृत्तिस्वरूपं निरूप्याथ कलिं विशिंषंस्तद्दोषान् प्रपञ्चयति यस्मादित्यादिना। यस्मादिति। यस्मात् कलेर्हेतोः, मर्त्याः क्षुद्रदृशः मन्दमतयः, क्षुद्रभाग्या अल्पभाग्याः महाशना बह्वाहाराः, वित्तहीनाः अपि कामिनश्च भविष्यन्ति चोऽप्यर्थे। स्त्रियोऽङ्गना असतीरसत्यः, स्वैरिण्यः, भविष्यन्ति। 'दुःशीला कर्कशा चण्डी नित्यं कलहकारिणी' इति विष्णुपुराणे तद्गुणाधिक्योक्तिः॥ ३१॥

स्युत्कृष्टा इति। जनपदा देशवासिनः, दस्युभिश्चौरादिभिरुत्कृष्टा उपद्रुताः, दस्यव उत्कृष्टाः प्रचुरा येषु ते इति वा। वेदाः पाषण्डदूषिताः, राजानश्च प्रजाभक्षाः प्रजापीडनपराः, द्विजास्तु शिश्नोदरपराः शिश्नोदरपोषणतत्पराः ॥ ३२ ॥

## हिन्दी अनुवाद

कलियुग में लोग लोभी दुराचारी और कठोरहृदय होते हैं। वे झूठ-मूठ एक-दूसरे से वैर मोल ले लेते हैं, एवं लालसा-तृष्णा की तरङ्गों में बहते रहते हैं। उस समय के अभागे लोगों में शूद्र, केवट आदि की ही प्रधानता रहती है ॥ २५ ॥ सभी प्राणियों में तीन गुण होते हैं—सत्त्व, रज और तम। काल की प्रेरणा से समय-समयपर शरीर, प्राण और मन में उनका ह्रास और विकास भी हुआ करता है ॥ २६ ॥ जिस समय मन, बुद्धि और इन्द्रियाँ सत्त्वगुण में स्थित होकर अपना-अपना काम करने लगती हैं, उस समय सत्ययुग समझना चाहिये। सत्त्वगुण की प्रधानता के समय मनुष्य ज्ञान और तपस्या से अधिक प्रेम करने लगता है ॥ २७ ॥ जिस समय मनुष्यों की प्रवृत्ति और रुचि धर्म, अर्थ और लौकिक-पारलौकिक सुख-भोगों की ओर होती है तथा शरीर, मन एवं इन्द्रियाँ रजोगुण में स्थित होकर काम करने लगती हैं—बुद्धिमान् परीक्षित्! समझना चाहिये कि उस समय त्रेतायुग अपना काम कर रहा है ॥ २८ ॥ जिस समय लोभ, असन्तोष, अभिमान दम्भ और मत्सर आदि दोषों का बोल बाला हो और मनुष्य बड़े उत्साह तथा रुचि के साथ सकाम कर्मों में लगना चाहे, उस समय द्वापरयुग समझना चाहिये। अवश्य ही रजोगुण और तमोगुण की मिश्रित प्रधानता का नाम ही द्वापरयुग है ॥ २९ ॥ जिस समय झूठ-कपट, तन्द्रा-निद्रा, हिंसा-विषाद, शोक-मोह, भय और दीनता की प्रधानता हो, उसे तमोगुणप्रधान कलियुग समझना चाहिये ॥ ३० ॥ जब कलियुग का राज्य होता है, तब लोगों की दृष्टि क्षुद्र हो जाती है; अधिकांश लोग होते तो हैं अत्यन्त निर्धन, परन्तु खाते हैं बहुत अधिक। उनका भाग्य तो होता है बहुत ही मन्द और चित्त में कामनाएँ होती हैं बहुत बड़ी-बड़ी। स्त्रियों में दुष्टता और कुलटापन की वृद्धि हो जाती है ॥ ३१ ॥ सारे देश में, गाँव-गाँव में लुटेरों की प्रधानता एवं प्रचुरता हो जाती है। पाखण्डी लोग अपने नये-नये मत चलाकर मनमाने ढंग से वेदों का तात्पर्य निकालने लगते हैं और इस प्रकार उन्हें कलंकित करते हैं। राजा कहलाने वाले लोग प्रजा की सारी कमाई हड़पकर उन्हें चूसने लगते हैं। ब्राह्मणनामधारी जीव पेट भरने और जननेन्द्रिय को तृप्त करने में ही लग जाते हैं ॥ ३२ ॥

अव्रता बटवोऽशौचा भिक्षवश्च कुटुम्बिनः। तपस्विनो ग्रामवासा न्यासिनोऽत्यर्थलोलुपाः ॥ ३३ ॥
ह्रस्वकाया महाहारा भूर्यपत्या गतह्रियः। शश्वत्कटुकभाषिण्यश्चौर्यमायोरुसाहसाः ॥ ३४ ॥
पणयिष्यन्ति वै क्षुद्राः किराटाः[1] कूटकारिणः। अनापद्यपि मंस्यन्ते वार्तां साधुजुगुप्सिताम् ॥ ३५ ॥
पतिं त्यक्ष्यन्ति निर्द्रव्यं भृत्या अप्यखिलोत्तमम्। भृत्यं विपन्नं पतयः कौलं गाश्चापयस्विनीः ॥ ३६ ॥
पितृभ्रातृसुहृज्ज्ञातीन्[2] हित्वा सौरतसौहृदाः। ननान्दृश्यालसंवादा दीनाः स्त्रैणाः कलौ नराः ॥ ३७ ॥
शूद्राः प्रतिग्रहीष्यन्ति तपोवेषोपजीविनः। धर्मं वक्ष्यन्त्यधर्मज्ञा अधिरुह्योत्तमासनम् ॥ ३८ ॥
नित्यमुद्विग्नमनसो दुर्भिक्षकरकर्शिताः। निरन्ने भूतले राजन्ननावृष्टिभयातुराः ॥ ३९ ॥
वासोऽन्नपानशयनव्यवायस्नानभूषणैः। हीनाः पिशाचसन्दर्शा भविष्यन्ति कलौ प्रजाः ॥ ४० ॥

## कृष्णप्रिया व्याख्या

अन्वयः—बटवः अशौचाः अव्रताः कुटुम्बिनः भिक्षवः तपस्विनः ग्रामवासाः न्यासिनः अर्थलोलुपाः ही ॥ ३३ ॥ (स्त्रियः) ह्रस्वकायाः महाहाराः भूर्यपत्याः गतह्रियः शश्वत्कटुभाषिण्यः चौर्यमायोरुसाहसाः ॥ ३४ ॥ क्षुद्राः कूटकारिणः किराटाः पणयिष्यन्ति अनापदि अपि जुगुप्सितां वार्तां साधु मंस्यन्ते ॥ ३५ ॥ अखिलोत्तमम् अपि निर्द्रव्यं पतिं भृत्याः त्यक्ष्यन्ति पतयः कौलं विपन्नं भृत्यं अपयस्विनीः गाः (त्यक्ष्यन्ति) ॥ ३६ ॥ सौरतसौहृदाः पितृभ्रातृसुहृज्ज्ञातीन् हित्वा ननान्दृश्यालसंवादाः दीनाः स्त्रैणाः कलौ नराः (भविष्यन्ति) ॥ ३७ ॥ तपोवेशोपजीविनः शूद्राः प्रतिग्रहीष्यन्ति अधर्मज्ञाः उत्तमासनम् अधिरुह्य

१. राताः कूट०। २. पितृन् भ्रातृन् सु०।

धर्मं वक्ष्यन्ति ॥ ३८ ॥ नित्यम् उद्विग्नमनसः दुर्भिक्षकरपीडिताः राजन् निरन्ने भूतले अनावृष्टिभयातुराः ( भविष्यन्ति ) ॥ ३९ ॥ वासोन्नपानशयनव्यवायस्नानभूषणैः हीनाः पिशाचसन्दर्शाः कलौ प्रजाः भविष्यन्ति ॥ ४० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अव्रता विहिताचारशून्याः अशौचाः शौचशून्याश्च बटवो ब्रह्मचारिणो भविष्यंति। कुटुंबिनश्च गृहस्थाः स्वयं भिक्षाटनपरा भविष्यंति न तु भिक्षां दास्यंति। तपस्विनो वनस्था वनं हित्वा ग्रामवासा भविष्यंति। न्यासिनो यतयोऽतीवार्थलोलुपा भविष्यंति ॥ ३३ ॥ पुनरपि स्त्रीणां स्वभावमाह। ह्रस्वकाया इति। कटुकभाषिण्योऽप्रियवादिन्यः। चौर्यं च माया कपटमुरु च साहसं यासां ताः ॥ ३४ ॥ किंच किराटा वणिजः। पणयिष्यंति क्रयविक्रयादिव्यवहारं प्रवर्तयिष्यंति। किंच सर्वे जना अनापद्यपि जुगुप्सितां निंदितां वार्तां वृत्तिं साधु मंस्यंते ॥ ३५ ॥ सर्वोत्तममपि पतिं द्रव्यहीनं भृत्यास्त्यक्ष्यंति। पतयश्च विपन्नं रोगादिभिर्व्यापाराक्षमं कौलं कुलपरंपरायातं त्यक्ष्यंति। अपयस्विनीर्दुग्धदोहाः ॥ ३६ ॥ सौरतं सुरतनिमित्तं सौहृदं येषां ते। त एव ननान्दरोऽत्र भार्याभगिन्यः श्यालाः भार्याभ्रातरस्तैः संवादो मन्त्रालोचनं येषां ते। ननन्द इति वा पाठः ॥ ३७–३९ ॥ पिशाचसंदर्शाः पिशाचसदृशाः ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अन्यदाह—किञ्चेति। 'किराटो हिंसके वैश्ये' इति निरुक्तिः। कूटं मानकूटं तुलाकूटं लिपिकूटं च कर्तुं शीलं येषां ते तथा "कूटं पूर्द्वारयन्त्रयोः। मायादम्भाद्रिशृंगेषु सीराङ्गेऽनृततुच्छयोः।" इति हेमचन्द्रकोशात् ॥ ३५–३६ ॥ अत एव सौरत-सौहृदत्वादेव। स्त्रैणाः स्त्रीवशाः ॥ ३७ ॥ शूद्रलक्षणं तु "द्विजेतरोऽमंत्रयागी म्लेच्छभिन्नो विवाहवान्। द्विजभक्तो भवेच्छूद्रस्त-दन्यस्त्वंत्यजादिकः।" इति संहितायाम्। तेन त्रिवर्णेतरे सर्वे शूद्रा एव। यत्तु कैश्चित् "न शूद्रा भगवद्भक्ता विप्रा भागवता मताः। चतुर्वर्णेषु ते शूद्रा ये न भक्ता जनार्दने।" इति सर्वपुराणादृष्टं पुराणीयत्वेनोक्तं तस्य चायमर्थः—हरिभक्तेषु शूद्रेष्वपि जातिबुद्ध्या तदवमानो न कार्यः किन्तु ब्राह्मणवत्सत्कारः कार्य इति, तेषां वस्तुतो विप्रत्वे विदुरधर्मव्याधादीनां भारतादौ शूद्रत्वेन व्यपदेशोऽनर्थकः स्यादिति वस्तुतस्तु श्लोकोऽयं वैष्णवाभासकल्पित एव। तपोवेषेण ब्रह्मचारिवनस्थयतिवेषेणोपजीवनं वृत्तिर्येषां ते तथा। तपःशब्दोऽत्र तपस्विपरतया नेयः, क्वचिद्वृत्तिविषये तद्धितप्रत्ययानां लोपस्वीकारात्। कलौ शूद्रा एव ब्रह्मचारिणः संन्यासिनश्च भविष्यंति ते चान्याधिकारप्रवृत्तत्वान्नरके पतिष्यंति "हीनो भूत्वोत्तमाद्वर्णात्कृत्वा वेषं तपस्विनाम्। आत्मानं पूजयेद्यस्तु स पतेन्नरके ध्रुवम्।" इति संहितोक्तेः। उत्तमासनं व्यासासनम्। वक्ष्यंत्युपदेक्ष्यंति। अधर्मज्ञास्संतः तेऽपि शास्त्रानुगामिनो राज्ञां दंड्या एव "ये शूद्रमुखतः शास्त्रं शृण्वंतीह नराधमाः। तेषां कर्णे त्रपु सिक्त्वा वक्तुर्जिह्वां प्रकर्त्तयेत्। अन्यथा क्ष्मापातेर्यांति नरकान्भृशदारुणान्।" इत्याद्युक्तेः। प्रतिग्रहीष्यंति दानं स्वीकरिष्यंति तेपि नारका भविष्यंति "दानं गृह्णाति यः शूद्रो महत्यामपि चापदि। यश्च तस्मै संप्रदद्यात्तावुभौ नारकौ ध्रुवम्।" इति संहितोक्तेः ॥ ३८ ॥ उद्विग्नमनसस्त्रस्तमनसः। दुर्भिक्षमन्नाल्पत्वम्, करो राजभागस्ताभ्यां कर्शिताः दुर्बलाः ॥ ३९ ॥ पिशाचो विकृतो भूतविशेषः ॥ ४० ॥

## अन्वितार्थप्रकाशिका

अव्रता इति। बटवो ब्रह्मचारिणः अव्रताः स्वाश्रमोचिताचारशून्याः अशौचाः शौचशून्याः भविष्यन्ति। कुटुम्बिनो गृहस्थाश्च स्वयमेव भिक्षाटनपरा भविष्यन्ति नतु भिक्षां दास्यन्ति। तपस्विनो वनस्था वनं हित्वा ग्रामवासा भविष्यन्ति। संन्यासिनश्चार्थ-लोलुपा धनाद्यासक्ता भविष्यन्ति ॥ ३३ ॥ ह्रस्वेति। पुनश्च स्त्रियः ह्रस्वकायाः अल्पपरिमाणदेहाः गतह्रियस्त्यक्तलज्जाः शश्वत् नित्यं कटुकभाषिण्यः अप्रियवादिन्यः चौर्यं च माया कपटं चेति उरु साहसम् उद्यमो यासां तास्तथाभूता भविष्यंति ॥ ३४ ॥ पणयिष्यन्तीति। क्षुद्रा नीचा धर्मविचाररहिताः अत एव कूटकारिणो वञ्चकाः किराटा वणिजः सन्त पणं क्रयविक्रयादिव्यवहारं प्रवर्त्तयिष्यन्ति। पणशब्दात्तत्करोतीति णिच्। किं च सर्वे जनाः अनापद्यपि जुगुप्सितां निन्दितां वार्तां वृत्तिं साधु मंस्यन्ते ॥ ३५ ॥ पतिमिति। अखिलोत्तमं सर्वोत्तममपि निर्द्रव्यं धनहीनं पतिं स्वामिनं भृत्यास्त्यक्ष्यन्ति। पतयः स्वामिनश्च कौलं कुलपरम्पराप्राप्तं परमोपकारिणमपि विपन्नं रोगादिभिः व्यापाराक्षमं भृत्यं त्यक्ष्यन्ति। अपयस्विनीः दुग्धदोहा वृद्धा गाश्च त्यक्ष्यन्ति ॥ ३६ ॥ पित्रिति। सौरतं सुरतनिमित्तं सौहृदं स्नेहो येषां ते अत एव पित्रादीन् हित्वा ननान्दरोऽत्र भार्याभगिन्यः। ननन्दुरिति वा पाठः। श्यालाः भार्याभ्रातरस्तैः संवादो मन्त्रालोचनं येषां ते स्त्रैणाः स्त्रीवश्याः अत एव लोके दीनाः कलौ नरा भविष्यन्ति ॥ ३७ ॥ शूद्रा इति। तपोवेषधारणेनोपजीवन्तीति तथाभूताः शूद्राः प्रतिग्रहीष्यन्ति दानग्रहणं करिष्यन्ति। तथा अधर्ममेव जानन्ति न धर्मं तथाभूता अपि उत्तमासनमधिरुह्य धर्मं वक्ष्यन्ति। धर्मोपदेशमिषेण धनादित ग्रहीष्यन्तीत्यर्थः ॥३८॥ नित्यमिति युग्मम्। हे राजन्!

कलौ भूतले निरन्ने सति उद्विग्नमनसः। भीतचित्ताः दुर्भिक्षेण करेण स्वामिभागदानेन च पीडिताः अनावृष्टिभयेन चातुराः वासोऽन्नादिभिर्हीनाः अत एव पिशाचसंदर्शाः पिशाचसदृशा भविष्यन्ति ॥ ३९–४० ॥

### श्रीमद्वीरराघवव्याख्या

वटवो ब्रह्मचर्याश्रमिणः अव्रताः साश्रमोचितव्रतहीनाः अशौचाः। शौचहीनाश्च भविष्यन्ति कुटुम्बिनो गृहस्थाः भिक्षवः भिक्षाटनपरा तपस्विनो वानप्रस्थाः ग्रामो वासो येषां ते वासशब्दोऽधिकरणघजन्त न्यासिनः तुर्याश्रमिणः अर्थलोलुपाः वित्ताभिलाषिण इत्यर्थः ॥ ३३ ॥ पुनरपि स्त्रीणां स्वभावमाह–ह्रस्वकायाः अल्पपरिमाणाः भूरीण्यपत्यानि यासां ताः त्यक्तलज्जाः कटुकभाषिण्यः अप्रियवादिन्यः चौर्य्यं च माया कापट्यं च उरु साहसञ्चेति द्वन्द्वः ततो मत्वर्थीयोच् ॥ ३४ ॥ किराटाः वणिजः संहत्य व्यापारिणः पणयिष्यन्ति क्रयविक्रयादिव्यापारं प्रवर्तयिष्यन्ति क्षुद्राः सति व्यत्यासे क्षुद्रचेष्टा भवन्ति किञ्च अनापद्यपि जुगुप्सितां निन्दितां वृत्तिं साधु मन्यन्ते ॥ ३५ ॥ अखिलोत्तमं सर्वोत्तममपि पतिं स्वामिनं भृत्यास्त्यक्ष्यन्ति तथा पतयोपि भृत्यं विपन्नं रोगादिभिर्व्यापाराक्षमं त्यक्ष्यन्ति कौलं कुलपरंपरागतं महाभागवतं धर्मं गाश्चापयास्विनीः दुग्धदोहाः त्यक्ष्यन्ति इति सम्बन्धः ॥ ३६ ॥ पित्रेति। सौरतं सुरतनिमित्तं सौहृदं येषां ते अत एव ननान्दरोऽत्र भार्याभगिन्यः श्याला भार्याभ्रातरश्च तैः सम्वादो मन्त्रालोचनं येषां ते कुतः स्त्रैणाः स्त्रीवश्याः ॥ ३७ ॥ शूद्रा इति। तपोवेषेणोपजीवन्तीति तथा प्रतिग्रहिष्यन्ति तथा स्वयमधर्मज्ञा अप्युत्तमासनमधिरुह्य धर्मं वक्ष्यन्त्युपदेक्ष्यन्तीत्यर्थः। अत्राव्रता वटव इत्यनेनाश्रमिणां कलिकृतदोषसंकीर्तनं सिंहावलोकनन्यायेन ह्रस्वकाया इति तत्कृतस्त्रीदोषकथनं तत एकेन तत्कृतवणिग्दोषकीर्तनं ततो द्वाभ्यां चातुर्वर्ण्यतद्दोषकथनं तत एकेन शूद्रदोषकीर्तनम् इति विभागः ॥ ३८ ॥ अथ चातुर्वर्ण्यासाधारणान् तत्कृतदोषानाह–नित्यमिति षड्भिः। उद्विग्नमनसश्चञ्चलमानसाः भीतमानसा वा निरन्नेऽन्नरहिते दुर्भिक्षेण करेण स्वामिग्राह्यभागेन च कर्शिताः पीडिताः अनावृष्टिभयेनाप्यातुराः दुःखिताः ॥ ३९ ॥ वास इति व्यवायो मैथुनं वास आदिभिर्हीना पिशाचसन्दर्शाः पिशाचसदृश्यः ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वटवो ब्रह्मचारिणः अव्रताः महाव्रतादिव्रतहीनाः आग्रकार्यादिव्रतहीना वा ॥ ३३ ॥ भूर्यपत्याः बहुसन्तानाः ॥ ३४ ॥ क्षुद्राः दरिद्राः किराटाः परिणतफलानि पणयिष्यन्ति विक्रेष्यन्ति कूटकारिणः धातुर्वादकरणशीलाः वार्तां कुसीदादिवैश्यवृत्तिम् ॥३५॥ अखिलोत्तमं कुलादिनेति शेषः कौलं कुले विद्यमानं विपन्नम् आपदं प्राप्तं भृत्यं पतयस्त्यक्ष्यन्ति अपयस्विनीः क्षीररहिता गाश्च त्यक्ष्यन्तीति शेषः ॥ ३६ ॥ सौरते सुरतमन्त्रविषये सौहृदं प्रेम येषा ते तथा श्वशुरश्यालाभ्यां सह सम्यक् वादो येषान्ते तथा ॥ पिशाचवत्सन्दर्शो दर्शनं येषां तथा ॥ ४० ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

वटवो ब्रह्मचारिणः अव्रताः व्रतहीनाः शौचहीनाश्च भविष्यन्ति कुटुम्बिनो गृहस्था भिक्षवः भिक्षाटनपराः न तु भिक्षां दास्यन्ति तपस्विनो वानप्रस्थाः वनं हित्वा ग्रामवासाः ग्रामे गृहस्थानेव स्वतपो दर्शयिष्यन्तीत्यर्थः। न्यासिनो यतयः अत्यर्थलोलुपाः वित्तसङ्ग्रहे प्रयतिष्यन्ते ॥ ३३ ॥ पुनरपि स्त्रियो वर्णयति–ह्रस्वेति ॥ ३४ ॥ किराटा वणिजः कूटकारिणः अधर्मेण कपटं कृत्वा पणयिष्यन्ति व्यवहारं प्रवर्त्तयिष्यन्ते किञ्च सर्वे एव वर्णाः अनापद्यपि जुगुप्सितां वार्त्तां साधु मंस्यन्ते ॥ ३५ ॥ अखिलोत्तममपि पतिं निर्द्रव्यं भार्य्यास्तथा भृत्या अपि त्यक्ष्यन्ति पतयश्च विपन्नं रोगादिग्रस्तं भृत्यं कौलं कुलपरम्परागतमपि त्यक्ष्यन्ति गाश्च वृद्धत्वादपयस्विनीस्त्यक्ष्यन्ति ॥ ३६ ॥ ननान्दरोऽत्र भार्य्याभगिन्यः ॥ ३७–४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

वटवो ब्रह्मचारिणः अव्रता विहितव्रतहीनाः तत्र नैष्ठिकानालक्ष्याह–अशौचाः बाह्याभ्यन्तरशौचहीनाः कुटुम्बिनो गृहस्थाश्च भिक्षवः तपस्विनो वानप्रस्था ग्रामे वासो येषां ते तथा न्यासिनः संन्यासिनः अर्थेष्विन्द्रियार्थेषु लोलुपाः लम्पटाः भविष्यन्ति ॥ ३३ ॥ पुनस्त्रीस्वभावमाह–ह्रस्वकाया इति ॥ ३४ ॥ किराटाः वणिजः क्रयविक्रयादिव्यवहारं प्रवर्तयिष्यन्ति अनापद्यतिजुगुप्सितां वार्तां वृत्तिं साधु मंस्यन्ते ॥ ३५ ॥ भृत्याः निर्द्रव्यम् अखिलोत्तममपि तत्रापि कौलं परम्पराप्राप्तं पतिं पतयोपि विपन्नं वृद्धत्वादिना कार्यानर्हं भृत्यं च त्यक्ष्यन्ति अपयस्विनीः दुग्धदोहाः त्यक्ष्यन्ति ॥ २६ ॥ सौरतं सुरतहेतुकं सौहृदं येषां ते ननान्दरोऽत्र भार्याभगिन्यस्ताभिः श्यालैश्च सम्बादो मन्त्रालोचनं येषां ते ॥ ३।–३९ ॥ पिशाचानामिव सम्यक् दर्शः दर्शनं यासां ताः ॥ ४० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

बटवो ब्रह्मचारिणः अव्रताः स्वाश्रमोचिताचारशून्याः। अशौचाः शौचशून्याः भविष्यन्ति। कुटुम्बिनो गृहस्थाश्च स्वयमेव भिक्षाटनपरा भविष्यन्ति न तु भिक्षां दास्यन्ति। तपस्विनो वनस्था वनं हित्वा ग्रामवासा भविष्यन्ति। संन्यासिनश्चार्थ-लोलुपा धनाद्यासक्ता भविष्यन्ति॥ ३३॥ पुनरपि स्त्रीणां स्वभावमाह—ह्रस्वकाया अल्पपरिमाणदेहाः गतह्रियः त्यक्तलज्जाः। शश्वत् नित्यं कटुकभाषिण्यः अप्रियवादिन्यः। चौर्यं च माया कापट्यं च उरु साहसं च यासां तास्तथाभूता भविष्यन्ति॥ ३४॥ किञ्च क्षुद्रा नीचा धर्मविचाररहिताः अत एव कूटकारिणो वञ्चकाः किराटा वणिजः सन्तः पणयिष्यन्ति क्रयविक्रयादिव्यवहारं प्रवर्त्तयिष्यन्ति। किञ्च सर्वे जना अनापद्यपि जुगुप्सितां निन्दितां वार्त्तां वृत्तिं साधु मंस्यन्ते॥ ३५॥ अखिलोत्तमं सर्वोत्तममपि निर्द्रव्यं धनहीनं पतिं स्वामिनं भृत्यास्त्यक्ष्यन्ति। पतयः स्वामिनश्च कौलं कुलपरम्पराप्राप्तं परमोपकारिणमपि विपन्नं रोगादिभिर्व्या-पाराक्षमं त्यक्ष्यन्ति। अपयस्विनीः दुग्धदोहा गाश्च त्यक्ष्यन्ति॥ ३६॥ सौरतं सुरतनिमित्तं सौहृदं स्नेह एषां ते अत एव पित्रादीन् हित्वा ननान्दरोऽत्र भार्याभगिन्यः, श्याला भार्याभ्रातरस्तैः संवादो मन्त्रालोचनं येषां ते, स्त्रैणाः स्त्रीवश्याः अत एव लोके दीनाः कलौ नरा भविष्यन्ति॥ ३७॥ तपोवेषेण धारणेनोपजीवन्तीति तथाभूताः शूद्राः प्रतिग्रहीष्यन्ति दानग्रहणं करिष्यन्ति। तथा अधर्ममेव जानन्ति न धर्मं तथाभूता अपि उत्तममासनमधिरुह्य धर्मं वक्ष्यन्ति धर्मोपदेशमिषेण धनादि ग्रहीष्यन्तीत्यर्थः॥ ३८॥ उद्विग्नमनसः स्वभावतो भीतमानसाः। हे राजन् भूतले निरन्ने निमित्ते सति दुर्भिक्षेण करेण स्वामिभागदानेन च पीडिताः अनावृष्टि-भयेन चातुराः॥ ३९॥ वासआदिभिर्हीना अत एव पिशाचसन्दर्शनाः पिशाचसदृशा भविष्यन्ति॥ ४०॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अव्रता इति। बटवो ब्रह्मचर्याश्रमिणः, अव्रताः स्वाश्रमोचिताचारशून्याः, अशौचाः शौचहीनाः, कुटुम्बिनो गृहस्थाः, भिक्षवो भिक्षाटनपराः तपस्विनो वानप्रस्थाः, ग्रामे वासो येषां ते, वासशब्दोऽधिकरणघञन्तः। न्यासिनः, संन्यासिनः तुर्याश्रमिण इत्यर्थः। अर्थलोलुपाः वित्ताभिलाषिणः भविष्यन्तीति शेषः॥ ३३॥ पुनरपि स्त्रीणां स्वभावमाह। ह्रस्वकायाः इति ह्रस्वकायाः खर्वशरीराः, महाहाराः बह्वन्नभुजः, भूर्यपत्या बहुसंतानाः, गतह्रियस्त्यक्तलज्जाः, शश्वत् कटुकभाषिण्यः अप्रियवादिन्यः चौर्यं स्तैन्यं च माया कापट्यं च ऊरु साहसं चेति द्वन्द्वः। ततो मत्वर्थीयोऽच्। केचित्तु चौर्यादिसाहसान्तं यासां ता इत्याहुः। भविष्यन्ति॥ ३४॥ पणयिष्यन्तीति। किरीटा वणिजः, क्षुद्राः सन्तः पणयिष्यन्ति क्रयविक्रयादिव्यवहारं प्रवर्त्तयिष्यन्ति। तत्रापि कूटकारिणः न्यूनं दत्त्वाधिकं ग्रहीष्यन्तीत्यर्थः। 'पणयिष्यन्ति वै क्षुद्राः किरीटान् कूटकारिणः' इति पाठे, क्षुद्रा दरिद्राः, किरीटान् फरिणतफलानि, पणयिष्यन्ति विक्रेष्यन्ति, कूटकारिणः धातुवादकरणशीलाश्च भविष्यन्तीति। किं च सर्वे जनाः, अनापद्यपि जुगुप्सितां निन्दितां, वार्तां वृत्तिं, साधु मंस्यन्ते॥ ३५॥ पतिमिति। अखिलोत्तमं सर्वोत्तममपि, पतिं स्वामिनं, निर्द्रव्यं सन्तं, भृत्याः त्यक्ष्यन्ति। तथा पतयोऽपि, कौलं कुलपरंपरागतमपि भृत्यं, विपन्नं रोगादिभिर्व्यापाराक्षमं सन्तं, त्यक्ष्यन्ति। अपयस्विनीर्दुग्धदोहाः, गाश्च त्यक्ष्यन्ति॥ ३६॥ पित्रिति। किंच पिता च भ्रातरश्च सुहृदश्च ज्ञातयश्च तान् हित्वा, सौरतं सुरतनिमित्तं सौहृदं येषां ते, अत एव भार्याभगिन्यः ननान्दरो श्यालाः भार्याभ्रातरश्च तैः संवादो मैत्र्यालोचनं येषां ते, कुतो यतः स्त्रैणाः स्त्रीवश्याः, अत एव दीनाः वराकाः, इत्थंभूताः नराः कलौ, भविष्यन्ति॥ ३७॥ शूद्राः, तपोवेषेण तपस्विनामिव वेषधारणेनोपजीवन्तीति तथाभूताः सन्तः, प्रतिग्रहीष्यन्ति। तथा स्वयं, अधर्मज्ञाः सन्तोऽपि, उत्तममासनं अधिरुह्य, धर्मं वक्ष्यन्ति उपदेक्ष्यन्तीत्यर्थः। अत्राव्रता बटव इत्यनेनाश्रमिणां कलिकृतदोषकीर्त्तनं सिंहावलोकनन्यायेन ह्रस्वकाया इति कलिकृतस्त्रीदोषकथनं तत एकेन तत्कृतवणिग्दोषकीर्त्तनं ततो द्वाभ्यां चातुर्वर्ण्यदोषकथनं तत एकेन शूद्रदोषकीर्त्तनमिति विभागः॥ ३८॥ अथ चातुर्वर्ण्यानां साधारणान् कलिकृत-दोषानाह नित्यमिति षड्भिः। नित्यमिति। कलौ जनाः, नित्यं उद्विग्नमनसश्चञ्चलमानसाः, भीतमानसा वा। हे राजन्, निरन्ने भूतले अन्नरहितायां भूमावित्यर्थः। दुर्भिक्षं महर्घता, करः स्वामिग्राह्यो भागस्ताभ्यां कर्शिताः पीडिताः, अनावृष्टिभयेनाप्यातुरा दुःखिताः भविष्यन्ति॥ ३९॥ वास इति। वासांसि परिधानीयप्रावरणीयवस्त्राणि च अन्नमद्यं च पानं जलं च, शयनं खट्वा च व्यवायो मैथुनं च स्नानं च भूपणानि च तैः हीनाः, कलौ वर्त्तमानाः प्रजाः, पिशाचसंदर्शाः पिशाचसदृश्यः भविष्यन्ति॥ ४०॥

## हिन्दी अनुवाद

ब्रह्मचारी लोग ब्रह्मचर्य व्रत से रहित और अपवित्र रहने लगते हैं। गृहस्थ दूसरों को भिक्षा देने के बदले स्वयं भीख माँगने लगते हैं, वानप्रस्थी गाँवों में बसने लगते हैं और संन्यासी धन के अत्यन्त लोभी—अर्थपिशाच हो जाते हैं॥ ३३॥ स्त्रियों का आकार तो छोटा हो जाता है, पर भूख बढ़ जाता है। उन्हें सन्तान बहुत अधिक होती है और वे अपनी कुलमर्यादा का उल्लङ्घन करके लाज-हया—जो उनका भूषण है—छोड़ बैठती हैं। वे सदा-सर्वदा कड़वी बात कहती रहती हैं और चोरी तथा

कपट में बड़ी निपुण हो जाती हैं। उनमें साहस भी बहुत बढ़ जाता है ॥ ३४ ॥ व्यापारियों के हृदय अत्यन्त क्षुद्र हो जाते हैं। वे कौड़ी-कौड़ी से लिपटे रहते और छदाम-छदाम के लिये धोखाधड़ी करने लगते हैं। और तो क्या—आपत्तिकाल न होने पर तथा धनी होने पर भी वे निम्नश्रेणी के व्यापारों को, जिनकी सत्पुरुष निन्दा करते हैं, ठीक समझने और अपनाने लगते हैं स्वामी चाहे सर्वश्रेष्ठ ही क्यों न हो—जब सेवकलोग देखते हैं कि इसके पास धन-दौलत नहीं रही, तब उसे छोड़कर भाग जाते हैं। सेवक चाहे कितना ही पुराना क्यों न हो—परन्तु जब वह किसी विपत्ति में पड़ जाता है, तब स्वामी उसे छोड़ देते हैं। और तो क्या, जब गौयें बकेन हो जाती हैं—दूध देना बंद कर देती हैं, तब लोग उनका भी परित्याग कर देते हैं ॥ ३५–३६ ॥ प्रिय परीक्षित्! कलियुग के मनुष्य बड़े ही लम्पट हो जाते हैं, वे अपनी कामवासना को तृप्त करने के लिये ही किसी से प्रेम करते हैं। वे विषयवासना के वशीभूत होकर इतने दीन हो जाते हैं कि माता-पिता, भाई-बन्धु और मित्रों को भी छोड़कर केवल अपनी साली और सालों से सलाह लेने लगते हैं ॥ ३७ ॥ शूद्र तपस्वियों का वेष बनाकर अपना पेट भरते और दान लेने लगते हैं। जिन्हें धर्म का रत्तीभर भी ज्ञान नहीं है, वे ऊँचे सिंहासन पर विराजमान होकर धर्म का उपदेश करने लगते हैं ॥ ३८ ॥ प्रिय परीक्षित्! कलियुग की प्रजा सूखा पड़ने के कारण अत्यन्त भयभीत और आतुर हो जाती है। एक तो दुर्भिक्ष और दूसरे शासकों की कर-वृद्धि! प्रजा के शरीर में केवल अस्थिपञ्जर और मन में केवल उद्वेग शेष रह जाता है। प्राण रक्षा के लिये रोटी का टुकड़ा मिलना भी कठिन हो जाता है ॥ ३९ ॥ कलियुग में प्रजा शरीर ढकने के लिये वस्त्र और पेट की ज्वाला शान्त करने के लिये रोटी, पीने के लिये पानी और सोने के लिये दो हाथ जमीन से भी वञ्चित हो जाती है। उसे दाम्पत्य-जीवन, स्नान और आभूषण पहनने तक की सुविधा नहीं रहती। लोगों की आकृति, प्रकृति और चेष्टायें पिशाचों की सी हो जाती हैं ॥ ४० ॥

कलौ काकिणिकेऽप्यर्थे विगृह्य त्यक्तसौहृदाः। त्यक्ष्यन्ति च[1] प्रियान् प्राणान् हनिष्यन्ति स्वकानपि ॥ ४१ ॥

न रक्षिष्यन्ति मनुजाः स्थविरौ पितरावपि। पुत्रान् [2]सर्वार्थकुशलान् क्षुद्राः शिश्नोदरम्भराः ॥ ४२ ॥

कलौ न राजञ्जगतां परं गुरुं त्रिलोकनाथानतपादपङ्कजम्।
प्रायेण मर्त्या[3] भगवन्तमच्युतं यक्ष्यन्ति पाखण्डविभिन्नचेतसः ॥ ४३ ॥
यन्नामधेयं म्रियमाण आतुरः पतन् स्खलन् वा विवशो गृणन् पुमान्।
विमुक्तकर्मार्गल उत्तमां गतिं प्राप्नोति यक्ष्यन्ति न तं कलौ जनाः ॥ ४४ ॥

पुंसां कलिकृतान् दोषान् द्रव्यदेशात्मसम्भवान्। सर्वान् हरति चित्तस्थो भगवान् पुरुषोत्तमः ॥ ४५ ॥

श्रुतः सङ्कीर्तितो ध्यातः पूजितश्चादृतोऽपि वा। नृणां धुनोति भगवान् हृत्स्थो जन्मायुताशुभम् ॥ ४६ ॥

यथा हेम्नि स्थितो वह्निर्दुर्वर्णं हन्ति धातुजम्। एवमात्मगतो विष्णुर्योगिनामशुभाशयम् ॥ ४७ ॥

विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः।
नात्यन्तशुद्धिं लभतेऽन्तरात्मा यथा हृदिस्थे भगवत्यनन्ते ॥ ४८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—कलौ काकिणिके अपि अर्थे त्यक्तसौहृदाः विगृह्य प्रियान् प्राणान् त्यक्ष्यन्ति स्वकान् अपि हनिष्यन्ति ॥ ४१ ॥ मनुजाः स्थविरौ अपि पितरौ न रक्षिष्यन्ति शिश्नोदरम्भराः क्षुद्राः सर्वार्थकुशलान् पुत्रान् (न रक्षिष्यन्ति) ॥ ४२ ॥ राजन् कलौ जगतां परं गुरुं त्रिलोकनाथानतपादपंकजम् अच्युतं भगवन्तं पाखण्डविभिन्नचेतसः मर्त्याः न यक्ष्यन्ति ॥ ४३ ॥ म्रियमाणः आतुरः पतन् स्खलन् विवशः पुमान् यन्नामधेयं गृणन् विमुक्तकर्मार्गलः (सन्) उत्तमां गतिं प्राप्नोति तं कलौ जनाः न यक्ष्यन्ति ॥ ४४ ॥ चित्तस्थः भगवान् पुरुषोत्तमः पुंसां कलिकृतान् द्रव्यदेशात्मसंभवान् सर्वान् दोषान् हरति ॥ ४५ ॥ श्रुतः सङ्कीर्तितः ध्यातः पूजितः आदृतः अपि वा हृत्स्थः भगवान् नृणां जन्मायुताशुभं धुनोति ॥ ४६ ॥ यथा हेम्नि स्थितः वह्निः धातुजं

१. हि। २. भार्या च कुलजां क्षुद्राः। ३. नराः।

दुर्वर्णं हन्ति एवम् आत्मगतः विष्णुः योगिनाम् अशुभाशयं ( हन्ति ) ॥ ४७ ॥ यथा अनन्ते भगवति हृदिस्थे ( सति ) अन्तरात्मा अत्यन्तशुद्धिं लभते ( तथा ) विद्यातपःप्राणनिरोधमैत्रीतीर्थाभिषेकव्रतदानजप्यैः न ॥ ४८ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

काकिणिके विंशतिवराटिकामात्रेऽप्यर्थे विषयभूते । विगृह्य वैरं कृत्वा ॥ ४१–४२ ॥ महांतमनर्थमाह द्वाभ्याम् । कलाविति । त्रिलोकनाथैरानतं नमस्कृतं पादपंकजं यस्य तम् । न यक्ष्यंति न पूजयिष्यंति । पाखंडैर्विभिन्नमन्यथाकृतं चेतो येषां ते ॥ ४३ ॥ विवशो गृणन्सन् । विमुक्ताः कर्मरूपा अर्गलाः प्रतिबंधा यस्य सः ॥ ४४ ॥ तदेवं कलिदोषान्प्रपंच्य प्रस्तुतं तन्निस्तारोपायमाह पुंसामिति षड्भिः । द्रव्यदेशात्मभिः संभवो येषां तान् । चित्तस्थश्चित्ते स्फुरितः ॥ ४५–४६ ॥ अयमेवोपायो नान्य इति सदृष्टांतमाह । यथेति । धातुजं ताम्रादिसंश्लेषजातं हेम्नो दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हन्ति हरति न तु तोयादि एवं योगिनामपि विष्णुरेव न तु योगादिकमित्यर्थः ॥ ४७ ॥ एतदेव विवृणोति । विद्येति विद्या देवतोपासना ॥ ४८–४९ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वकान् स्वीयान्भ्रातृपुत्रादीन् । अपिना किं परकीयानित्यसूचि ॥ ४१ ॥ क्वचित् 'पुत्रान्भार्यां च कुलजाम्' इति वा पाठः । क्षुद्राः क्रूराः "क्षुद्रः स्यादधमे क्रूरकृपणाल्पेषु वाच्यवत्" इति मेदिनी ॥ ४२ ॥ हे राजन्निति–त्वं तु धर्मेणैव राजसि त्वद्राज्यतः परमेवेदं भविष्यतीति भावः । प्रायेणेति पाठात् "क्वचित्क्वचिन्महाराज द्राविडेषु च भूरिशः । कलौ खलु भविष्यंति नारायणपरायणाः" । इत्यादि ज्ञेयम् ॥ ४३ ॥ "कपाटमररं तुल्ये तद्विष्कंभेऽर्गलं न ना" इत्यमरः । 'यन्नामधेयं म्रियमाणः' इति, "गुणकर्मविडंबनानि, नामानि येऽसुविगमे विवशा गृणंति । तेऽनेकजन्मशमलं सहसैव हित्वा संयांत्यपावृतमृतं तमजं प्रपद्ये" । इति तृतीये ब्रह्मस्तुत्युक्तेः ॥ ४४ ॥ द्रव्यमन्नादि, देशः कीकटादिः, आत्मान इंद्रियाणि तैः ॥४५–४६॥ मंदाधिकारिणां क्षिप्रप्रवृत्त्यर्थं सदृष्टांतमाह । दुर्वर्णमित्यनेन रत्नशास्त्रोक्ता अष्टादश दोषा उक्तास्ते च धात्वंतरसंगकृताः संति तान्हंतीत्यर्थः । यद्वा—धातुजं गैरिकसमुद्भूतमित्यर्थः । 'विशेषाद्गैरिकेऽस्थ्नि च' इति मेदिन्यां धातुर्गैरिकमुक्तम् । आत्मा मनः ॥ ४७–४८ ॥

## अन्वितार्थप्रकाशिका

कलाविति । काकिणिके विंशतिवराटिकामात्रेऽप्यर्थे विषये विगृह्य विरोधं कृत्वा त्यक्तसौहृदाश्च सन्तः स्वकानपि हनिष्यन्ति तत्रासमर्थाश्चेत्प्राणानपि त्यक्ष्यन्ति ॥ ४१ ॥ नेति । शिश्नोदरम्भराः । मुमार्षः । क्षुद्राश्च मनुजाः स्थविरौ वृद्धौ पितरावपि न रक्षिष्यन्ति । तथा पितरः सर्वार्थकुशलान् अपि पुत्रान्न रक्षिष्यन्ति ॥ ४२ ॥ महान्तमनर्थमाह—कलाविति । हे राजन् ! कलौ पाखण्डैर्विभिन्नचेतसः मर्त्याः प्रायेण जगतां परं गुरुं पूज्यमत एव त्रैलोक्यनाथैर्ब्रह्मादिभिरानतं पाकपङ्कजं यस्य तमच्युतं भगवन्तं न यक्ष्यन्ति नाराधयिष्यन्ति ॥ ४३ ॥ यदिति । म्रियमाणः आतुरो रोगी पतन् स्खलन् वा अत एव विवशोऽपि पुमान् यस्य भगवतो नामधेयं नाममात्रं गृणन् कीर्त्तयन् विमुक्ताः कर्मरूपाः अर्गलाः प्रतिबन्धा यस्य तथाभूतः सन् उत्तमां गतिं वैकुण्ठलोकादिकं प्राप्नोति तं भगवन्तं कलौ दोषवशाज्जना न यक्ष्यन्ति ॥ ४४ ॥ कलिदोषनिस्तारोपायमाह—पुंसामिति । द्रव्यदेशात्मभिः संभवो येषां तान् सर्वान् कलिकृतान् दोषान् पुंसां चित्तस्थः चिरो ध्यातः भगवान् पुरुषोत्तमः हरति ॥ ४५ ॥ श्रुत इति । श्रवणादीनां कर्मीकृतोऽतो हृत्स्थो भगवान्नृणां जन्मनामयुतस्याशुभं धुनोति ॥ ४६ ॥ यथेति । यथा धातुजं ताम्रादिधातुसंश्लेषेण जातं हेम्नो दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हरति न तोयादि एवं योगिनामात्मनि मनसि स्थितो विष्णुरेवाशुभाशयं दुर्वासनां हरति नतु योगादिकमित्यर्थः ॥ ४७ ॥ विद्येति । अन्तरात्माऽन्तःकरणं यथा अनन्ते त्रिविधपरिच्छेदरहितेऽपि भगवति भक्तानुग्रहार्थं तद्धृदिस्थे सति अत्यन्तशुद्धिं लभते तथा विद्यादिभिर्न लभते । तत्र विद्या देवतोपासनादिः प्राणनिरोधो योगः मैत्री अहिंसादिः ॥ ४८ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

विमुक्तकर्माशयः विमुक्तकर्मवासनः ॥ ४४–४६ ॥ दुर्वर्णं रजतम् ॥ ४७–४९ ॥

## श्रीमद्वीरराघवव्याख्या

कलाविति । काकिणिके वराटिकामात्रेऽप्यर्थे विषये विगृह्य विरोधं कृत्वाऽतः त्यक्तं सौहृदं यैः ते ॥ ४१ ॥ नेति । स्थविरौ वृद्धौ अनेन 'वृद्धौ च मातापितरौ' इत्यादिशास्त्रोल्लङ्घनं सूचितं सर्वार्थेषु कुशलानपि पुत्रान्न रक्षिष्यन्त्यपि तु तेभ्यो विभज्य वर्तिष्यन्त इति भावः ॥ ४२ ॥ महान्तमनर्थमाह—कलौ नेति द्वाभ्यां । हे राजन् ! त्रैलोक्यनाथेन ब्रह्मणा आनतं नमस्कृतं पादपद्म

यस्य तम् अच्युतं न यक्ष्यन्ति नाराधयिष्यन्ति तत्र हेतुः पाषण्डैर्विभिन्नमन्यथा कृतं चेतो येषां ते ॥ ४३ ॥ यन्नामधेयमिति। म्रियमाणाद्यन्यतमः पुमान् यस्य भगवतो नामधेयं गृणन् कीर्तयन्विमुक्ताः कर्मरूपा अर्गलाः प्रतिबन्धाः यस्य सः उत्तमां गतिं मुक्तिं प्राप्नोति तं भगवन्तं न यक्ष्यन्ति अत्रातुरो रोगादिपीडितः पतच्छब्देन पतितो विवक्षितः स्खलच्छब्देन स्ववर्णाश्रमाचारविधुरः तत्र म्रियमाणो मरणादुत्तरमेवोत्तमां गतिं प्राप्नुवन्ति इतरेत्वाप्रयाणानुवृत्तेः कीर्तनेनेति भावः। यद्वा, आतुराद्यन्यतमोपि म्रियमाणो गृणन् प्राप्नोतीति सम्बन्धः ॥ ४४ ॥ तदेवं कलिदोषान् प्रपञ्च्य तन्निस्तारोपायमाह–पुंसामिति षड्भिः। द्रव्यदेशात्मभिः सम्भवो येषां तान् तत्र द्रव्यदेशौ निषिद्धौ आत्मा विषयप्रवणं मनः चित्तस्थः ध्यानेन चित्ते स्थिरीकृतः हरति क्षपयति ॥ ४५ ॥ कथं चित्तस्थो भवतीत्यत आह–श्रुत इति। श्रवणादिविषयः सन् हृत्स्थो भवति ततो जन्मायुतस्यापि अशुभं जन्मायुतार्जितमपि पापमित्यर्थः। धुनोति नाशयति ॥ ४६ ॥ तदेव दृष्टान्तेनोपपादयति-यथेति। धातुस्ताम्रादिः तत्संश्लेषजातं हेम्नो दुर्वर्णं तत्र स्थितो वह्निर्हरति, एवं योगिनामात्मस्थितो मनसि स्थितो विष्णुरशुभाशयं हन्ति आशयो मनस्तत्स्थं मालिन्यं हन्तीत्यर्थः ॥ ४७ ॥ इतोन्य उपायो नास्ति इत्याह विद्येति। यथा त्रिविधपरिच्छेदरहितेष्वुपासकानुग्रहार्थं हृदिस्थे सत्यन्तरात्मा मनोत्यन्तशुद्धिं लभते तथा विद्यादिभिर्न लभते तत्र विद्या शास्त्राध्ययनं तपोऽनशनादि वर्णाश्रमधर्मो वा प्राणनिरोधः प्राणजयः मैत्री अहिंसा व्रतम् एकादशीव्रतादि जप्यं मन्त्रजपः॥४८॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

विगृह्य विग्रहं वैरं कृत्वा काकिणिकेऽर्थे अत्यल्पधनविषये ॥ ४१–४२ ॥ पाषण्डशास्त्रेणाद्वैतविषयेण विभिन्नचेतसः व्यामोहितचित्ताः ॥ ४३ ॥ किं माहात्म्योऽयं भगवान् येन तद्यजनं सप्रयोजनं स्यादिति तत्राह–यन्नामधेयमिति। विमुक्तं कर्मलक्षणमर्गलं तालकीलं यस्य स तथा विध्वस्तकर्मबन्धन इत्यर्थः ॥ ४४ ॥ केनोपायेनेत्यादिना पृष्टं परिहर्तुमाह–पुंसामित्यादिना। द्रव्यदेशात्मसम्भवान् द्रव्यदेशस्वभावोद्भूतान् किमपि नावशिष्यतेऽतः सर्वमित्युक्तम् ॥ ४५ ॥ चित्तस्थितिभावे नानासाधनमाह–श्रुत इत्यादिना। अशुभम् इत्युपलक्षणं प्रथमकर्मभोगायतनप्रारम्भप्रभृतिसम्पादिताशुभमित्यर्थः ॥ ४६ ॥ मन्दाधिकारिणः क्षिप्रप्रवृत्त्यर्थं सदृष्टान्तमाह–यथेति। शास्त्रोक्ता अष्टादशदोषा दुर्वर्णमित्यनेन गृह्यन्ते धातुजं गैरिकसमुद्भवं वा आत्मगतः चित्तगतः अशुभाशयं पापराशिं पापसंपृक्तजडमनो वा ॥ ४७ ॥ विद्यादिनान्तःकरणशुद्ध्या श्रेयः स्यात्किञ्चित्तत्स्थेन हरिणेति तत्राह–विद्येत्यादिना। प्राणनिरोधः प्राणायामः अन्तरात्मा अन्तःकरणं हृदिस्थे सति ॥ ४८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदानीं पाषण्डविभिन्नचेतस्त्वेन तद्याजनवैमुख्यं तु तन्नामविमुखानामेव स्यादित्यभिप्रेत्य प्रायेणेत्येव व्यनक्ति–यन्नामेति। नामान्येवोपसंहरिष्यते–कलेरित्यादिद्वाभ्याम् ॥ ४४ ॥ यदेव नाम भगवद्रूपेण स्फुरन् तद्विदधातीत्याह–पुंसामिति ॥ ४५ ॥ भगवतः स्वभाव एव तादृश इत्याह–श्रुत इति त्रिभिः ॥ ४६ ॥ तत्स्वभावस्त्वयं नान्यत्र सम्भवतीत्याह–यथेति द्वाभ्याम् ॥ ४७–४८ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

काकिणिके विंशतिवराटिकामात्रेऽपि अर्थविषये विगृह्य कलहं कृत्वा ॥ ४१–४२ ॥ किञ्च, कलेः सन्ध्यानन्तरं तु महान्तमनर्थमाह—कलाविति। द्वाभ्याम् ॥ ४३–४४ ॥ यदुक्तं केनोपायेन कलिदोषान् नाशयिष्यन्ति तत्रोत्तरमाह—पुंसामिति। द्रव्यदेशमनःशुद्ध्यभावेन सम्भवो येषां तान् चित्तस्थः स्मृतः सन् न केवलमेतानेव दोषान् हरति अपितु प्राचीनार्वाचीनं सर्वमपि पापमित्याह—श्रुत इति ॥ ४५–४६ ॥ किञ्चान्तःकरणशुद्धौ भगवत्स्मरणादिरेवोपायो नान्य इति सदृष्टान्तमाह—यथेति। धातुजं ताम्रादिसंश्लेषजातं हेम्नो दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हरति नतु तोयादि एवं योगिनामपि विष्णुरेव नतु यमनियमादिकम् ॥ ४७ ॥ एतद्विवृणोति—विद्येति ॥ ४८ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

काकिणिके विंशतिवराटिकामात्रेऽप्यर्थे विगृह्य विरोधं कृत्वा ॥ ४१–४२ ॥ प्रायेणेत्यनेन भगवदनुगृहीताः केचित्तमाराधयिष्यन्त्यपीति सूचितम् ॥ ४३ ॥ विमुक्तो निवृत्तः कर्मार्गलः कर्मरूपः अर्गलो यस्य सः ॥ ४४ ॥ अथ कलिदोषनिस्तारोपायं दर्शयति–पुंसामिति षड्भिः। द्रव्यैः अयुक्तान्नादिभिः देशैरयुक्तस्थलैः आत्मना मलिनेन मनसा सम्भवो येषां तान् ॥ ४५–४६ ॥ आत्मगतः मनोगतः अशुभाशयमशुभयुक्तं मनः शोधयतीति शेषः ॥ ४७ ॥ विद्या शास्त्राध्ययनम् तपः वर्णाश्रमधर्मः प्राणनिरोधः प्राणजयः मैत्री सर्वेषु दया अन्तरात्मा मनः ॥ ४८–४९ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

काकिणिके विंशतिवराटिकामात्रेऽप्यर्थे विषये विगृह्य विरोधं कृत्वा त्यक्तस्नेहाश्च सन्तः स्वकानपि हनिष्यन्ति तत्रासमर्थाश्चेत्प्राणानपि त्यक्ष्यन्ति ॥ ४१ ॥ स्थविरौ वृद्धौ। सर्वार्थे कुशलान् निपुणानपि न रक्षिष्यन्ति। उभयत्रैकमेव हेतुमाह— शिश्नोदरम्भरा इति। तत्र हेतुः—क्षुद्रा इति ॥ ४२ ॥ महान्तमनर्थमाह—कलाविति द्वयेन। तत्रापि भगवदाराधनं सम्मतमेवेत्याशयेन सम्बोधयति—राजन्निति। कलौ मर्त्त्याः प्रायेण जगतां परं गुरुं पूज्यमत एव त्रैलोक्यनाथैर्ब्रह्मादिभिरानतं नमस्कृतं पादपङ्कजं यस्य तम् अच्युतं सर्वतो भक्तानां रक्षकं यत्र भगवन्तं न यक्ष्यन्ति नाराधयिष्यन्ति। तत्र हेतुमाह—पाषण्डैर्वेदविरुद्धमार्गैर्भिन्नचेतस इति ॥ ४३ ॥ म्रियमाणाद्यन्यतमः अतएव विवशोऽपि पुमान् यस्य भगवतो नामधेयं नाममात्रं गृणन् कीर्त्तयन् विमुक्ताः कर्मरूपा अर्गलाः प्रतिबन्धा यस्य तथाभूतः सन् उत्तमां गतिं वैकुण्ठलोकादिकं प्राप्नोति। तं भगवन्तं कलौ दोषवशाज्जना न यक्ष्यन्तीत्यन्वयः। आतुरो ज्वरादिभिः पीडितः ॥ ४४ ॥ तदेवं कलिदोषान् प्रपञ्च्य प्रस्तुतं तन्निस्तारोपायमाह—पुंसामिति षड्भिः। द्रव्यादिभिः सम्भवो येषां तान्। तत्र द्रव्यदेशौ निषिद्धौ आत्मा च विषयासक्तं मनः। एवं निषिद्धप्रवृत्तिनिमित्तं कलिरेवेत्याशयेनाह— कलिकृतानिति। चित्तस्थश्चित्ते स्फुरितः पुरुषोत्तमो हरति क्षपयति। पुरुषोत्तमत्वे हेतुः—भगवानिति ॥ ४५ ॥ कथं भगवांश्चित्तस्थो भवतीत्यपेक्षायां श्रवणादिभिरित्याह—श्रुत इति ॥ ४६ ॥ अयमेव कलिदोषनिवृत्त्युपायो नान्य इति सदृष्टान्तमाह—यथेति। यथा धातुजं ताम्रादिधातुसंश्लेषेण जातं हेम्नो दुर्वर्णं मालिन्यं तत्र स्थितो वह्निरेव हरति—न तोयादि। एवं योगिनामात्मनि मनसि स्थितो विष्णुरेवाशुभवासनां हरति, न तु योगादिकमित्यर्थः ॥ ४७ ॥ इतोऽन्योपायस्याकिञ्चित्करत्वं स्पष्टयति—विद्येति। अन्तरात्माऽन्तःकरणं यथा अनन्ते त्रिविधपरिच्छेदरहितेऽपि भगवति भक्तानुग्रहार्थं तद्धृदिस्थे सति अत्यन्तशुद्धिं लभते तथा विद्यादिभिर्न लभत इत्यन्वयः। तत्र विद्याध्ययनादि। तपः शास्त्रीथसन्तापसहनम्। मैत्री अहिंसा ॥ ४८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कलाविति कलौ, काकिणिके वराटिकामात्रे अपि, अर्थे विषये विगृह्य विरोधं कृत्वा, त्यक्तं सौहृदं यैस्तथाभूता इति जनविशेष्यत्वे याभिस्ता इति प्रजाविशेष्यत्वे वा। प्रियान् प्राणान् त्यक्ष्यन्ति, हि स्वकानपि हनिष्यन्ति ॥ ४१ ॥ नेति। कलौ क्षुद्राः शिश्नोदरभराः मनुजाः, स्थविरौ वृद्धौ, पितरौ मातापितरौ न रक्षिष्यन्ति, सर्वार्थकुशलान् पुत्रान् अपि न रक्षिष्यन्ति ॥४२॥ तत्र महान्तमनर्थमाह। कलौ नेति द्वाभ्याम्। कलाविति। हे राजन्, कलौ मर्त्त्या मरणधर्मवन्तः सन्तोऽपि जनाः, जगतां परं गुरुं, त्रैलोक्यनाथैर्ब्रह्मादिभिरानतं नमस्कृतं पादपङ्कजं पादपद्मं यस्य तं, भगवन्तं अच्युतं पाषण्डेन अद्वैतविषयकशास्त्रेण विभिन्नं चेतो येषां तथाभूताः सन्तः, प्रायेण प्राधान्येन न यक्ष्यन्ति न याजयिष्यन्ति च। अद्वैतस्य पाषण्डत्वं पाद्मोत्तरखण्डीयद्विशताधिकाष्टाविंशकोनत्रिंशत्त्रिशाध्यायेभ्य एव ज्ञातव्यम् ॥ ४३ ॥ यन्नामधेयमिति। म्रियमाणः संगतासन्नप्राणवियोगकालः, आतुरो रोगादिपीडितः, पतन् पतच्छब्देन पतितो विवक्षितः, स्खलन् स्खलच्छब्देन स्ववर्णाश्रमाचारविधुरः, विवशः वा अस्वाधीनः सन्नपि, यस्य भगवतः नामधेयं, गृणन्नुच्चरन् कीर्त्तयन्निति यावत्। पुमान् विमुक्ताः कर्मरूपाः अर्गलाः प्रतिबन्धा यस्य तथाविधः सन्, अन्ते इति शेषः। उत्तमां गतिं प्राप्नोति, तं भगवन्तं, जनाः कलौ न यक्ष्यन्ति ॥ ४४ ॥ तदेवं कलिदोषान् प्रपञ्च्य तन्निस्तरणोपायमाह पुंसामितिषड्भिः। पुंसामिति। पुंसां द्रव्यदेशात्मभिः संभवो येषां तान् कलिकृतान् सर्वान् दोषान् चित्तस्थः ध्यानेन चित्ते स्थिरीकृतः, भगवान् पुरुषोत्तमः हरति। तत्र द्रव्यं निषिद्धान्नपानादिकम्, देशो म्लेच्छबहुलादिः, आत्मा विषयप्रवणं मनः ॥ ४५ ॥ कथं चित्तस्थो भगवान् भवतीत्यत आह। श्रुत इति। भगवान् श्रुतः श्रवणेन चित्ते स्थिरीकृतः, संकीर्त्तितस्तद्गतचित्ततया सम्यक् कीर्त्तितः, ध्यात एकाग्रमनस्तया साङ्गोपाङ्गं चिन्तितः, पूजितः श्रद्धापूर्वं शास्त्रोक्तविधिमनतिक्रम्यार्चितः, चः किंचार्थे। आदृतोऽपि वा, सम्यक् कृतादरः सन्नपीत्यर्थः। हृत्स्थः श्रवणादिकर्तृहृत्कृतावासः सन्, नृणां पुंसां जन्मायुताजिंतमपि पापमित्यर्थः। धुनोति नाशयति ॥४६॥ एतदेव दृष्टान्तेनोपपादयति। यथेति। यथा हेम्नि, धातुजं ताम्रादिसंश्लेषजातं, दुर्वर्णं हेमस्थं मालिन्यं, स्थितः हेम्न्यावस्थितः, वह्निः हन्ति हरति। एवं, योगिनां आत्मगतः मनसि स्थितः, विष्णुः अशुभाशयं मनोगतं मालिन्यमित्यर्थः। हन्ति न तु योगादिकमित्यर्थः ॥४७॥ इतोऽन्य उपायो नास्तीति वक्तुमेतदेव विवृणोति। विद्यातप इति। यथा भगवति अनन्ते श्रीहरौ, हृदिस्थे हृदयावस्थिते सति, अन्तरात्मा मनः, अत्यन्तशुद्धिं लभते, तथा विद्या शास्त्राध्ययनं च तपोऽनशनादिकं च प्राणनिरोधः प्राणजयश्च मैत्री भूतमैत्र्यं च तीर्थाभिषेको गङ्गादितीर्थेष्वाप्लवनं च व्रतमेकादश्यादि च दानानि सत्पात्रेषु धनविश्राणनादीनि च जप्यं मन्त्रजपश्च तैः, अत्यन्तशुद्धिं, न लभते ॥ ४८ ॥

## हिन्दी अनुवाद

कलियुग में लोग, अधिक धनकी तो बात ही क्या, कुछ कौड़ियों के लिये आपस में वैर-विरोध करने लगते और बहुत दिनो के सद्भाव तथा मित्रता को तिलाञ्जलि दे देते हैं। इतना ही नहीं, वे दमड़ी-दमड़ी के लिये अपने सगे सम्बन्धियों तक की

हत्या कर बैठते और अपने प्रिय प्राणों से भी हाथ धो बैठते हैं ॥ ४१ ॥ परीक्षित् ! कलियुग के क्षुद्र प्राणी केवल कामवासना की पूर्ति और पेट भरने की धुन में ही लगे रहते हैं। पुत्र अपने बूढ़े मा-बाप की भी रक्षा—पालन-पोषण नहीं करते, उनकी उपेक्षा कर देते हैं और पिता अपने निपुण-से-निपुण, सब कामों में योग्य पुत्रों की भी परवा नहीं करते, उन्हें अलग कर देते हैं ॥ ४२ ॥ परीक्षित् ! श्रीभगवान् ही चराचर जगत् के परम पिता और परम गुरु हैं। इन्द्र-ब्रह्मा आदि त्रिलोकाधिपति उनके चरणकमलों में अपना सिर झुका कर सर्वस्व समर्पण करते रहते हैं। उनका ऐश्वर्य अनन्त है और वे एकरस अपने स्वरूप में स्थित हैं। परन्तु कलियुग में लोगों में इतनी मूढ़ता फैल जाती है, पाखण्डियों के कारण लोगों का चित्त इतना भटक जाता है कि प्रायः लोग अपने कर्म और भावनाओं के द्वारा भगवान् की पूजा से भी विमुख हो जाते हैं ॥ ४३ ॥ मनुष्य मरने के समय आतुरता की स्थिति में अथवा गिरते या फिसलते समय विवश होकर भी यदि भगवान् के किसी एक नाम का उच्चारण कर ले, तो उसके सारे कर्मबन्धन छिन्न-भिन्न हो जाते हैं और उसे उत्तम-से-उत्तम गति प्राप्त होती है। परन्तु हाय रे कलियुग ! कलियुग से प्रभावित होकर लोग उन भगवान् की आराधना से भी विमुख हो जाते हैं ॥ ४४ ॥ परीक्षित् ! कलियुग के अनेकों दोष हैं। कुल वस्तुयें दूषित हो जाती हैं, स्थानों में भी दोष की प्रधानता हो जाती है। सब दोषों का मूलस्रोत तो अन्तःकरण है ही, परन्तु जब पुरुषोत्तम भगवान् हृदय में आ विराजते हैं, तब उनकी सन्निधिमात्र से ही सब-के-सब दोष नष्ट हो जाते हैं ॥ ४५ ॥ भगवान् के रूप, गुण, लीला, धाम और नाम के श्रवण, सङ्कीर्तन, ध्यान, पूजन और आदर से वे मनुष्य के हृदय में आकर विराजमान हो जाते हैं। और एक-दो जन्म के पापों की तो बात ही क्या, हजारों जन्मों के पाप के ढेर-के-ढेर भी क्षणभर में भस्म कर देते हैं जैसे सोने के साथ संयुक्त होकर अग्नि उसके धातु सम्बन्धी मलिनता आदि दोषों को नष्ट कर देती है, वैसे ही साधकों के हृदय में स्थित होकर भगवान् विष्णु उनके अशुभ संस्कारों को सदा के लिये मिटा देते हैं ॥ ४६–४७ ॥ परीक्षित् ! विद्या, तपस्या, प्राणायाम, समस्त प्राणियों के प्रति मित्रभाव, तीर्थ स्नान, व्रत, दान और जप आदि किसी की भी साधनों से मनुष्य के अन्तःकरण की वैसी वास्तविक शुद्धि नहीं होती, जैसी शुद्धि भगवान् पुरुषोत्तम के हृदय में विराजमान हो जाने पर होती है ॥ ४८ ॥

तस्मात् सर्वात्मना राजन् हृदिस्थं कुरु केशवम् । म्रि[1]यमाणो ह्यवहितस्ततो या[2]सि परां गतिम् ॥ ४९ ॥
म्रियमाणैरभिध्येयो भगवान् परमेश्वरः । आत्मभावं नयत्यङ्ग सर्वात्मा सर्व[3]संश्रयः ॥ ५० ॥
कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः । कीर्तनादेव कृष्णस्य मुक्तसङ्गः परं व्रजेत् ॥ ५१ ॥
कृते यद् ध्यायतो विष्णुं त्रेतायां यजतो मखैः । द्वापरे परिचर्यायां कलौ तद्धरिकीर्तनात् ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे[4] तृतीयोऽध्यायः ॥ ३ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—राजन् तस्मात् सर्वात्मना केशवं हृदिस्थं कुरु म्रियमाणः अवहितः ततः परां गतिं यासि ॥ ४९ ॥ म्रियमाणैः अभिध्येयः भगवान् परमेश्वरः सर्वात्मा सर्वसंश्रयः अङ्ग आत्मभावं नयति ॥ ५० ॥ राजन् दोषनिधेः कलेः एकः महान् गुणः कृष्णस्य कीर्तनात् एव मुक्तसङ्गः ( सन् ) परं व्रजेत् ॥ ५१ ॥ कृते यत् विष्णुं ध्यायतः त्रेतायां मखैः यजतः द्वापरे परिचर्यायां कलौ तत् हरिकीर्तनात् ॥ ५२ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

आत्मभावं स्वस्वरूपम् ॥ ५० ॥ इदानीं कलिं स्तौति द्वाभ्याम् । कलेर्दोषनिधे राजन्निति ॥ ५१ ॥ तत्सर्वं हरिकीर्तनादेव कलौ भवति नान्यस्मिन्युगे। उक्तं च। 'ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम्' इति ॥ ५२ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे तृतीयोऽध्यायः ॥ ३ ॥

---

१. ध्रिय० । २. याति । ३. सर्वसम्भवः । ४. न्धे युगानुवर्णनं तृती० ।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यतो विद्यादिभ्यो हरेर्हृदि करणं श्रेष्ठं तस्मादित्यर्थः। अवहितः सावधानः। ततो हृदि केशवकरणात्। परां तद्रूपावाप्तिरूपाम्॥ ४९॥ तामेवाह—आत्मभावमिति। तत्र हेतुः—सर्वमादत्त इति सर्वात्मा। तत्रापि हेतुः—सर्वसंश्रयः सर्वाधारः॥ ५०॥ कलिः केवलं दोषाकर एव न किन्तु गुणापादकोऽप्यौषधोपचितद्रव्यवदित्याह—कलेरिति। दोषनिधेर्दोषसमुद्रस्य गुणमाह—कीर्तनादेवेति, यथैको नृपोऽसंख्यान् दंड्यान्हंति तथैको गुणः सर्वान् दोषानिति भावः॥ ५१॥ तत्सर्वं कृतादियुगप्राप्यम्। कलावेव नान्यस्मिन्युगे। तदुक्तम्—'ध्यायन्कृते' इति पुराणांतरे॥ ५२॥

इति श्रीमद्भागवते म० द्वादशस्कंधे भावार्थदीपिकायां टीकायां तृतीयोऽध्यायः॥ ३॥

## अन्वितार्थप्रकाशिका

तस्मादिति। हि यस्मात् अवहितः सावधानतया तद्ध्यानपरो म्रियमाणः ततः तस्माद्भगवतो हृदि स्थापनाद्धेतोः परां गतिं याति। तस्मात् हे राजन्! केशवं सर्वात्मना एकाग्रचित्तेन त्वं हृदि कुरु॥ ४९॥ म्रियमाण इति। अङ्ग हे राजन्! परमेश्वरः सर्वात्मा सर्वसंश्रयः भगवान् सर्वदाऽभिध्येयः यतो निरन्तरध्यानाभ्यासात् म्रियमाणैर्मरणावस्थापन्नैर्ध्यातः संस्तमात्मभावं स्वस्वरूपं प्रति नयति॥ ५०॥ कलेरिति। स्फुटम्॥ ५१॥ कृत इति। कृते विष्णुं ध्यायतो नरस्य यत्फलं भवति यच्च त्रेतायां मखैर्यजतः पुंसः फलं द्वापरे परिचर्यायां पूजायां यत्फलं भवति तत्सर्वं कलियुगे हरिकीर्तनादेव भवति। अतोऽयमेव सर्वसाधकः सुगम उपायः॥ ५२॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकां गङ्गासहायस्तृतीये द्वादशस्य व्यधादिमाम्।

इति श्रीमद्भागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायां तृतीयोऽध्यायः॥ ३॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

आत्मभावम् आत्मस्वभावं साम्यापत्तिरित्यर्थः। "तद्भावभावमापन्नाः" इत्यादिशास्त्रैकार्थ्यात् तत्र हि भावशब्दः स्वभाववाची अन्यथा द्वितीयभावशब्दानन्वयात्॥ ५०–५२॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धव्याख्याने श्रीसुदर्शनसूरिकृतशुकपक्षीये तृतीयोऽध्यायः॥ ३॥

## श्रीमद्वीरराघवव्याख्या

उपायोपदेशमुपसंहरति—तस्मादिति। हि यस्मात्ततो हृद्यवस्थापनादवहितचित्तो म्रियमाणः परां गतिं याति तस्मात्त्वं हृदिस्थं केशवं कुरु इत्यर्थः॥ ४९॥ इममेवार्थं दृढीकर्तुं पुनरप्याह—म्रियमाणैरिति। आत्मभावमात्मस्वभावं साम्यापत्तिमित्यर्थः। "तद्भावभावमापन्नः" इत्यादिशास्त्रैकार्थ्यात् तत्र हि प्रथमभावशब्दः स्वभाववाचो अन्यथा द्वितीयभावशब्दानन्वयात् अङ्गेति सम्बोधनद्योतकं ब्रह्मभावं नयतीत्यत्र हेतुत्वेन तं विशिनष्टि—सर्वात्मा सर्वेषामात्मनामात्मा आत्मनो हि शरीरं निरतिशयप्रियमतस्तद्गतमनर्थं दूरीकरोतीति भावः। अनेन प्राप्यत्वोपयुक्तनिरतिशयपुरुषार्थरूपत्वञ्चोक्तम् आत्मा हि निरतिशयप्रीतिविषयः प्रापकत्वोपयुक्तं सौलभ्यमाह—सर्वसंश्रय इति। आत्मत्वादेव सर्वैः संश्रीयते इति संश्रयः स्वात्मा हि स्वस्मिन्नेव सुलभ इति भावः॥५०॥ अथ बहुदोषाकरोयं कलिः सर्वथा भगवत्प्राप्तिं निरुन्ध्यादित्यभिप्रायमालक्ष्याह—कलेरिति। दोषनिधेरपि कलेः कश्चिदनितरसाधारणो महान् गुणोऽस्ति, कोऽसौ ? भगवतः कीर्तनादेव मुक्तबन्धः निरस्तप्राप्तिप्रतिबन्धकः परं परमपुरुषं व्रजेदित्यर्थः॥ ५१॥ कृतादिषु ध्यानयागार्चनानां यत्फलं तत्सर्वं कलौ हरिकीर्तनादेव भवति कीर्तनं त्वत्राप्रायाणांतुवृत्तमित्यवगन्तव्यम्॥ ५२॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाँ तृतीयोऽध्यायः॥ ३॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

उपसंहरति—तस्मादिति॥ ४९॥ आत्मभावम् आत्मनि भक्तिं नयति प्रापयति सर्वमादत्त इति सर्वात्मा सर्वस्य सम्भवो यस्मात्स सर्वसम्भवः॥ ५०॥ कलिः केवलं न दोषाकर एवापितु गुणापादकोपि भवति औषधोपचितद्रव्यवदित्याह—कलेरिति॥५१॥ ध्यानादिप्रधानसाधनमन्तरेण कीर्तनमात्रेण संसारबन्धनिर्मोकः कथमित्याशङ्क्य तत्तद्युगेषु भगवत्क्लृप्तत्वेन युक्तमित्यभिप्रेत्याह—कृत इति। कृते यत्तत्स्यादित्यर्थः॥ ५२॥

इतिश्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां तृतीयोऽध्यायः॥ ३॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तदेवं तत्प्रष्टार्थान् सर्वान् समापयिष्यंस्तत्कर्त्तव्यमुपदिशति—तस्मादिति। सर्वात्मना सर्वेणैव प्रयत्नेन तत्रैव कैमुत्येन हेतुमाह—म्रियेति। हि यस्मादन्योऽपि यः कश्चित् म्रियमाणोऽप्यवहितः तस्मिन् कृतावधानश्चेत्ततस्तन्मात्रादेव परां सर्वोत्कृष्टां गतिं याति त्वं पुनस्तस्य परमान्तरङ्गः किमुतेत्यर्थः ॥४९–५०॥ अत एव चान्यैरपि म्रियमाणैरभिध्येयः आत्मभावं परमप्रेम्णा आत्मतुल्यतां कलिदोषप्रशमनत्वेन नामकीर्त्तनस्मरणमाहात्म्यमुक्त्वोपसंहरति—कलेरिति। स च श्रेयोऽतिक्रमहेतूनां दोषाणां निधेरपि कलेरेको गुणः कीर्त्तनादररूपो महानेवास्ति कंसादेः श्रीनारदादर इव अतस्तस्य विघ्नोद्यमाभावात् सिद्धयत्येव नामकीर्त्तयितेत्याह—कीर्त्तनादेवेति, ॥ ५१ ॥ कीर्त्तनं हि कलावपि सर्वगुणवारिधिरित्याह—कृत इति। यद्यच्च कृतादिषु तेन तेन साधनेन स्यात् तच्च तदित्येकशेषात्तत्सर्वं प्राप्नोतीत्यर्थः। अत एवोक्तमन्यत्र—

"ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्चयन्। यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशवम्" ॥ इति ॥ ५२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे तृतीयोऽध्यायः ॥ ३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यतो म्रियमाणोह्यजामिलादिसदृशोपि जनः अवहितः न विद्यतेऽवहितम् अवहितं अवधानं यस्य तथाभूतोपि ततः केशवात् यथाकथञ्चिदपि स्मृतात् अभिध्येयः ध्यातुं शक्यश्चेत्तदा आत्मभावम् आत्मनि प्रेमाणं नयतीति तान् प्रापयति ननु तत्समये भगवद्ध्यानं तेषां कथं ज्ञेयं स्यात्तत्राह—सर्वात्मा लोकान् जानेतु नाम सतु जानाति एवेत्यर्थः। ननु कथं सकृद्ध्यानमात्रादेव प्रेमाणं ददाति तत्राह सर्वेषां माध्यानां च सम्भवो यस्मात सः महोदारस्य तस्य किमेतच्चित्रमिति भावः ॥ ४९–५० ॥ इदानीं कलेः सर्वेभ्योपि युगेभ्यः श्रैष्ठ्यमाह —कलेरिति द्वाभ्याम्। दोषाणां निधेरपि कलेरेको गुणो राजन्नस्ति विराजमानो राजेवास्ति यथा एक एव राजा असङ्ख्यानपि दस्यून् हन्ति तथैवैक एव गुणः सर्वानप्युक्तलक्षणदोषान् हन्तीति भावः स एव कः? तत्राह—कीर्तनादेवेति। नात्र ध्यानादेरप्यपेक्षेत्यर्थः। यद्वा कीर्त्तनादेव किमुत कीर्त्तनसहितध्यानादिभ्यः परं सर्वोत्कृष्टपुरुषार्थं प्रेमाणम् ॥ ५१ ॥ सर्वयुगगतानि भगवत्प्राप्तिसाधनानि कलिरेक एव ददाति तत्रापि स्वसम्भवादेकस्मात् सर्वसुगमात् कीर्त्तनादेव ददातीत्याह—कृते इति। तत्सर्वं हरिकीर्त्तनादेव भवति ॥ ५२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। द्वादशस्य तृतीयोयं सङ्गतः सङ्गतस्सताम् ॥ ३ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

आत्मभावं स्वसाम्यम् ॥ ५० ॥ अथ कलेर्महान्तं गुणमाह—कलेरिति द्वाभ्याम् ॥ ५१–५२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे तृतीयोऽध्यायार्थप्रकाशः ॥ ३ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

उपायोपदेशमुपसंहरति—तस्मादिति। हि यस्मात् अवहितः सावधानतया तद्ध्यानपरो म्रियमाणः ततः तस्मात् भगवतो हृदि स्थापनाद्धेतोः परां गतिं याति तस्मात् हे राजन् केशवं ब्रह्मरुद्रयोरप्याराध्यं भगवन्तं सर्वात्मना एकाग्रचित्तेन त्वं हृदि कुर्वित्यन्वयः ॥ ४९ ॥ इममेवार्थं दृढीकर्तुं पुनरप्याह—म्रियमाणैरिति। भगवान् सर्वदाऽभिध्येयः। यतो निरन्तरध्यानाभ्यासात् म्रियमाणैर्मरणावस्थापन्नैर्ध्यातः संस्तमात्मभावं स्वस्वरूपं प्रति नयति—हे अङ्गेति स्नेहेन सम्बोधयन्नत्र प्रतारणेति सूचयति। तत्प्राप्तेर्दुर्लभत्वं दर्शयन्नाह—परमेश्वर इति। तत्र हेतुमाह—सर्वात्मा सर्वसंश्रय इति ॥ ५० ॥ कलौ दोषबाहुल्यात्सर्वथा मनोनिरोधेनैव भगवत्परताया दुर्लभत्वात्कथं संसारनिवृत्तिरित्याह—कलेरिति ॥ ५१ ॥ कृतयुगादिषु ध्यानादिभिर्यद्यत्फलं भवति तसर्वं कलियुगे हरिकीर्त्तनादेव भवति। अतोऽयमेव सर्वसाधकः सुगम उपायः ॥ ५२ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता द्वादशे तत्र सर्वाश्रयनिरूपणे। तृतीयो विवृतोऽध्यायो हरिकीर्त्तनबोधकः ॥ ३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

उपायोपदेशमुपसंहरति। तस्मादिति। हे राजन्, हि यतः म्रियमाणः, तस्मात् अवहितः सन्, सर्वात्मना, केशवं हृदिस्थं कुरु, ततः हृदिस्थकेशवकरणात्, त्वं, परां गतिं, यासि यास्यसि ॥ ४९ ॥ इममेवार्थं दृढीकर्त्तुं पुनरप्याह। म्रियमाणैरिति।

म्रियमाणैः, भगवान् परमेश्वरः एव, अभिध्येयः। अङ्ग हे राजन्, यतः सर्वात्मा सर्वेषामात्मनामात्मेत्यर्थः। शरीरिणः शरीरं निरतिशयप्रियं, जीवात्मनः परमेश्वरशरीरत्वाच्छरीरिणः परमेश्वरस्य स्वशरीरभूतो जीवः प्रियस्ततः स तद्गतमनर्थं दूरीकरोतीति भावः। सर्वसंश्रयः सर्वसंश्रयत्वात् स स्वस्मिन् सुलभ एवेति भावः। एवंभूतः सः अभिध्यातः सन्, आत्मभावमात्मस्वभाव-साम्यापत्तिं नयति॥ ५०॥ अथ बहुदोषाकरोऽयं कलिः सर्वथा भगवत्प्राप्तिं निरुन्ध्यादित्यभिप्रायमालक्ष्याह। कलेरिति। हे राजन्, दोषनिधेः अपि कलेः, एकः कश्चित् अनितरसाधारणः, महान् गुणः अस्ति हि। कोऽसौ तत्राह। कृष्णस्य भगवतः, कीर्त्तनात् एव, मुक्तबन्धः निरस्तप्राप्तिप्रतिबन्धकः सन्, परं परमपुरुषं व्रजेत्॥ ५१॥ कृत इति। किं च कृते सत्ययुगे, विष्णुं श्रीहरिं, ध्यायतः यत्फलं, त्रेतायां, मखैः क्रतुभिः, यजतः यत्फलं द्वापरे परिचर्यायामर्चने, यत्फलं तत्सर्वं कलौ हरिकीर्त्तनात्, एव भवति कीर्त्तनं त्वत्राऽऽप्रायणानुवृत्तमवगन्तव्यम्॥ ५२॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचिताया-मन्वयार्थावोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे तृतीयोऽध्यायः॥ ३॥

## हिन्दी अनुवाद

परीक्षित्! अब तुम्हारी मृत्यु का समय निकट आ गया है। अब सावधान हो जाओ। सम्पूर्ण शक्ति से और अन्तःकरण की सारी वृत्तियों से भगवान् श्रीकृष्ण को अपने हृदय सिंहासन पर बैठा लो। ऐसा करने से अवश्य ही तुम्हें परमगति की प्राप्ति होगी॥ ४९॥ जो लोग मृत्यु के निकट पहुँच रहे हैं, उन्हें सब प्रकार से परम ऐश्वर्यशाली भगवान् का ही ध्यान करना चहिये। प्यारे परीक्षित्! सबके परम आश्रय और सर्वात्मा भगवान् अपना ध्यान करनेवाले को अपने स्वरूप में लीन कर लेते हैं, उसे अपना स्वरूप बना लेते हैं॥ ५०॥ परीक्षित्! यों तो कलियुग दोषों का खजाना है, परन्तु इसमें एक बहुत बड़ा गुण है। वह गुण यही है कि कलियुग में केवल भगवान् श्रीकृष्ण का सङ्कीर्तन करने मात्र से ही सारी आसक्तियाँ छूट जाती हैं और परमात्मा की प्राप्ति हो जाती है॥ ५१॥ सत्ययुग में भगवान् का ध्यान करने से, त्रेता में बड़े-बड़े यज्ञों के द्वारा उनकी आराधना करने से और द्वापर में विधिपूर्वक उनकी पूजा-सेवा से जो फल मिलता है, वह कलियुग में केवल भगवन्नाम का कीर्तन करने से ही प्राप्त हो जाता है॥ ५२॥

इति श्रीमद्भागवते एकादशस्कन्धे तृतीयोऽध्यायः॥ ३॥



# अथ चतुर्थोऽध्यायः

### श्रीशुक उवाच

कालस्ते परमाण्वादिर्द्विपरार्धावधिर्नृप । कथितो युगमानं च शृणु कल्पलयावपि ॥ १ ॥

चतुर्युगसहस्रं च[1] ब्रह्मणो दिनमुच्यते । स कल्पो यत्र मनवश्चतुर्दश विशांपते ॥ २ ॥

तदन्ते प्रलयस्तावान् ब्राह्मी रात्रिरुदाहृता । त्रयो लोका इमे तत्र कल्पान्ते प्रलयाय हि ॥ ३ ॥

एष नैमित्तिकः प्रोक्तः प्रलयो यत्र विश्वसृक् । शेतेऽनन्तासनो विश्वमात्मसात्कृत्य चा[2]त्मभूः ॥ ४ ॥

द्विपरार्धे त्वतिक्रान्ते ब्रह्मणः परमेष्ठिनः । तदा प्रकृतयः सप्त कल्पन्ते प्रलयाय वै ॥ ५ ॥

एष प्राकृतिको राजन् प्रलयो यत्र लीयते । आण्डकोशस्तु सङ्घातो विघात उपसादिते ॥ ६ ॥

पर्जन्यः शतवर्षाणि भूमौ राजन् न वर्षति । तदा निरन्ने ह्यन्योन्यं भक्षमाणाः क्षुधार्दिताः ॥ ७ ॥

क्षयं यास्यन्ति शनकैः कालेनोपद्रुताः प्रजाः ।

सामुद्रं दैहिकं भौमं रसं सांवर्तको रविः । रश्मिभिः पिबते घोरैः सर्वं नैव विमुञ्चति ॥ ८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—नृप ते परमाण्वादिः द्विपरार्धावधिः कालः कथितः युगमानं च ( कथितम् ) कल्पलयौ अपि शृणु ॥ १ ॥ ब्रह्मणः दिनं चतुर्युगसहस्रम् उच्यते विशांपते यत्र चतुर्दश मनवः सः कल्पः ॥ २ ॥ तदन्ते तावान् प्रलयः ( सः ) ब्राह्मी रात्रिः उदाहृता तत्र इमे त्रयः लोकाः प्रलयाय कल्पन्ते हि ॥ ३ ॥ एषः नैमित्तिकः प्रलयः प्रोक्तः यत्र अनन्तासनः आत्मभूः विश्वसृक् विश्वम् आत्मसात्कृत्य शेते ॥ ४ ॥ परमेष्ठिनः ब्रह्मणः द्विपरार्धे अतिक्रान्ते तु तदा सप्त प्रकृतयः प्रलयाय कल्पन्ते वै ॥ ५ ॥ राजन् विघाते उपसादिते यत्र सङ्घातः आण्डकोशः लीयते एषः प्राकृतिकः प्रलयः ॥ ६ ॥ राजन् शतवर्षाणि भूमौ पर्जन्यः न वर्षति तदा निरन्ने क्षुधार्दिताः कालेन उपद्रुताः प्रजाः अन्योन्यं भक्षमाणाः शनकैः क्षयं यास्यन्ति सांवर्तकः रविः सामुद्रं दैहिकं भौमं रसं घोरैः रश्मिभिः पिबते सर्वं न एव विमुञ्चति ॥ ७–८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चतुर्थे तु चतुर्धोक्ता लया नैमित्तिकादयः । तत्र संसारनिस्तारो हरिकीर्त्यैव वर्ण्यते ॥ १ ॥

कलिदोषनिवर्तकं हरिनामसंकीर्तनादिकं स एव च कलौ परमो धर्म इति प्रश्नद्वयस्योत्तरमुक्तम् । यच्चान्यत्पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति तदिदानीं तृतीयस्कंधोक्तकालमानानुवादपूर्वकं निरूपयति । काल इति । 'स कालः परमाणुर्वै यो भुंक्ते परमाणुताम्' इत्यादिना कालः कथितः । 'चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् । संख्यातानि सहस्राणि द्विगुणानि शतानि च ।' इति युगमानं कथितम् ॥ १ ॥ तत्र कल्पमानमाह । चतुर्युगेति । यत्र चतुर्दशमनवः क्रमेण भवंति ॥ २ ॥ प्रलयस्तु चतुर्विधः नैमित्तिकः प्राकृतिक आत्यंतिको नित्यश्चेति । तत्र नैमित्तिकं प्रलयं मानसहितमाह तदंत इति द्वाभ्याम् । तावान् चतुर्युगसहस्रप्रमाणः । सैव ब्राह्मी रात्रिः ॥ ३ ॥ नैमित्तिकत्वं दर्शयति । यत्र यदा विश्वसृक् श्रीनारायणो विश्वमात्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते । आत्मभूर्ब्रह्मा च तस्मिन् शेते । तयोरभेदविवक्षया वा ब्रह्मण एवानंतासनत्वमुक्तम् । ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो लोकत्रयप्रलयो नैमित्तिक इत्यर्थः ॥ ४ ॥ प्राकृतिकं प्रलयमाह द्वाभ्याम् । द्विपरार्धे तु ब्रह्मण आयुषि । सप्त प्रकृतयो महदहंकार-

---

१. तु । २. विश्वभूः ।

पंचतन्मात्राणि ॥ ५ ॥ संघातो महदादिकार्यभूतः । प्रकृतीनां तत्कार्यब्रह्मांडस्य च प्रलयात्प्राकृतिक इत्यर्थः । विघाते विघातकारणे उपसादिते सति ॥ ६ ॥ तदेवाह । पर्जन्य इत्यादिना बुद्धींद्रियार्थरूपेणेत्यतः प्राक्तनेन ग्रंथेन ॥ ७ ॥ सामुद्रादिकं सर्वं रसं रविः पिबते आकर्षति ॥ ८—९ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एवकारेण 'कलौ नास्त्येव नास्त्येव कलौ नास्त्येव केवलम्' इति स्मृतिराकृष्यते । तत्र नैमित्तिकादिमध्ये ( १ ) नृपेति—कालज्ञानं विना नृपालनं न संभवतीति भावः ॥ १ ॥ यत्र दिने । विशांपते इति—प्रजापालनासक्तत्वात्त्वं कालं नाकलयसीति भावः ॥ २ ॥ तदंते दिनांते । यत्र रात्रौ ॥ ३ ॥ इत्यर्थं इति—अत्र प्रवर्तमानेर्थे ठक् प्रत्ययः ॥ ४–५ ॥ हे राजन्निति—धैर्येण मृत्युकालेऽपि तव दीप्तिर्न नष्टेति भावः । विघातकारणेऽकाले उपसादिते प्राप्ते सति ॥ ६ ॥ तदेव विघातकारणमेवाह । तदा वर्षणाभावेन निरन्नेऽन्नाभावे सति ॥ ७ ॥ सांवर्तकः प्रलयकालिकः । रसं रसनीयमार्द्रत्वमिति यावत्, रसं जलमित्यर्थः । यद्यपि 'मेघपुष्पं घनरसः' इत्यमरोक्तेर्न केवलरसशब्दो जलवाची तथाप्येकदेशन्यायेन तथास्त्येवेति ज्ञेयम् ॥ ८ ॥

### अन्वितार्थप्रकाशिका

चतुर्थे तु चतुर्द्धोक्ता लया नैमित्तिकादयः । निस्तारो हरिकीर्त्यैव तत्र श्लोकास्त्रिसिन्धवः ( ४३ ) ॥
उवाचेत्येकं त्रिपादाः सप्तवेदा ( ४६॥। ) अनुष्टुभः ॥ ४ ॥

कलौ परमो धर्मः पृष्टस्तदुत्तरं दत्त्वा शेषं प्रलयकल्पयोर्मानं कथयति—काल इति । हे नृप ! ते तुभ्यं स कालः "परमाणुर्वै" इत्यादिना तृतीयस्कन्धे परमाण्वादिः द्विपरार्द्धावधिः कालः कथितः । युगमानं च कथितम् । अथ कल्पलयावपि तयोर्मानं शृणु ॥ १ ॥ कल्पो द्विविधः दैनन्दिनो महांश्च तत्राद्यमाह—चतुर्युगेति । हे विशांपते ! यत्र चतुर्दश मनवो भवन्ति तत् चतुर्णां युगानां सहस्रं ब्रह्मणो दिनमुच्यते । स एव दैनन्दिनः कल्प उच्यते । ब्रह्मायुःपरिमितश्च महाकल्पो ज्ञेयः ॥ २ ॥ प्रलयस्तु चतुर्विधः । नैमित्तिकः प्राकृतिकः आत्यन्तिको नित्यश्चेति । तत्र मानसहितं नैमित्तिकं प्रलयमाह—तदन्त इति । तस्य कल्पस्यान्ते तावान् चतुर्युगसहस्रप्रमाणः प्रलयः सैव ब्राह्मी रात्रिरुदाहृता । तत्र त्रयो लोकाः भूर्भुवःस्वराख्याः प्रलयाय कल्पन्ते ॥ ३ ॥ एष इति । यत्र यदा विश्वसृक् श्रीनारायणो विश्वमात्मसात्कृत्य स्वस्मिन्नुपसंहृत्य अनन्ते आसनं यस्य सोऽनन्ते शेते आत्मभूर्ब्रह्मा च तस्मिन् शेते । एष ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो लोकत्रयप्रलयो नैमित्तिकः प्रोक्त इत्यर्थः । एष एव दैनन्दिनाख्यश्च ॥ ४ ॥ प्राकृतं प्रलयमाह—द्विपरार्द्ध इति । परमेष्ठिनः सर्वोत्तमस्य ब्रह्मण आयुर्भूते द्विपरार्द्धकाले त्वतिक्रान्ते सति तदा सप्त प्रकृतयो महदहङ्कारपञ्चतन्मात्राणि प्रलयाय कल्पन्ते ॥ ५ ॥ एष इति । हे राजन् ! विघाते विघातकारणे उपसादिते सति सप्तप्रकृतीनां सङ्घातः कार्यरूपो यत्र लीयते सप्त प्रकृतयः यत्कार्यं ब्रह्माण्डं च लीयते स एष प्रकृतिलयात् प्राकृतः प्रलय उच्यते ॥६॥ पर्जन्य इति सार्द्धम् । स्पष्टम् ॥ ७ ॥ सामुद्रमिति । सांवर्तकः प्रलयकालोपचितो रविः सामुद्रं देहेषु भवं दैहिकं भौमं च सर्वरसं घोरैः रश्मिभिः पिबते आकर्षति । तज्जार्षः । नैव च मुञ्चति ॥ ८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

॥ १–३ ॥ आत्मभूशब्दस्य चतुर्मुखपरत्वे तस्यानन्तासनत्वं प्रासादखट्वापर्यङ्कन्यायादुपपद्यते "कृष्णनाभिह्रदोद्भूतकमलोदरशायिने" इत्यनन्तशयनभगवन्नाभिपद्मशायित्वं स्मर्यते ब्रह्मणः ॥ ४ ॥ सप्तप्रकृतयः महदहङ्काराकाशादयः ॥ ५ ॥ यत्र प्रलये अण्डकोशो लीयत इत्यन्वयः । विघाते शैथिल्ये ॥ ६–९ ॥

### श्रीमद्वीरराघवव्याख्या

अथ यत्पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति तत्तृतीयस्कन्धोक्तकालस्वरूपानुवादपूर्वकं निरूपयितुमारभते—काल इति । ते तुभ्यं कथित इति सम्बन्धः । परमाणुः आदिर्यस्य द्विपरार्द्धमवधिरुत्तरावधिर्यस्य सः कालः कथितः "स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्" इत्यादिना कथितः तथा "चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम् । सङ्ख्यातानि सहस्राणि द्विगुणानि शतानि च" इति युगमानं च कथितम् इत्यर्थः । इदानीं कल्पलयावपि शृणु तयोर्मानं शृणु इत्यर्थः ॥ १ ॥ अत्र तावत्कल्पमानमाह—चतुर्युगसहस्रमिति । कल्पो द्विविधः दैनन्दिनो महांश्चेति तत्राद्यो ब्रह्मणो दिनात्मक एव कल्प इत्यभिधीयते तं विशिनष्टि—हे विशाम्पते । यत्र कल्पे चतुर्दशमनवः क्रमेण भवन्ति मन्वन्तरमानं तु "स्वं स्वं कालं मनुर्भुङ्क्ते युगानामेकसप्ततिम्" इति तृतीयस्कन्ध एवोक्तमप्यनुसन्धेयम् इति ॥ २ ॥ प्रलयस्तु चतुर्विधः, नैमित्तिकः प्राकृतिकः आत्यन्तिको नित्यश्चेति । तत्र नैमित्तिकं प्रलयं निरूपयति—

तदन्ते इति द्वाभ्याम्। तदन्ते चतुर्युगसहस्रान्ते प्रलयस्तावान् चतुर्युगसहस्रपरिमाणः सैव ब्राह्मी रात्रिः दिनान्ते चतुर्युगसहस्रान्ते निवृत्ते जगद्व्यापारः चतुर्मुखश्चेति स नैमित्तिकः प्रलय इत्यर्थः। तदेवाह—त्रय इति। यत्र रात्रौ इमे भूराद्यस्त्रयो लोकाः प्रलयाय कल्पन्ते प्रलीना भवन्तीत्यर्थः॥ ३॥ एष नैमित्तिकः प्रलयः प्रोक्तः तत्र नैमित्तिकशब्दस्य प्रवृत्तौ निमित्तमाह—यत्र विश्वसृगिति। विश्वसृजः शयननिमित्तं कृत्वा तस्य प्रलयस्य नैमित्तिकत्वं कथम्भूतः शेते इत्यत्राह—अनन्तः शेषः आसनं शय्या यस्य सः विश्वमात्मसात्कृत्य आत्मगतं कृत्वा स्वस्मिन्नुपसंहृत्य इति यावत्। अत्र विश्वसृगात्मभूशब्दयोश्चतुर्मुखपरत्वेपि तस्यानन्तशायत्वं प्रासादखट्वापर्यङ्कन्यायादुपपद्यते "कृष्णनाभिह्रदोद्भूतकमलोदरशायनः" इत्यनन्तशयनभगवन्नाभिपद्मशायित्वं ब्रह्मणः स्मर्य्यते इति॥ ४॥ एवं दैनिन्दिनकल्पः नैमित्तिकप्रलयश्च निरूपितः अथ महाकल्पं प्राकृतप्रलयं च निरूपयति—द्विपरार्द्ध इति। द्विपरार्द्ध इत्यनेनायमेव महाकल्प इति सूचितम् सप्तप्रकृतयः महदहङ्कारौ भूतपञ्चकञ्चेति सप्त अयं सप्तप्रकृतीनां लयात्मकत्वात् प्राकृतिको लय इत्यच्युत इत्यर्थः॥५॥ प्रकृतयः सप्त कथं लीयन्ते इत्यत्र तत्प्रकारं वक्तुं प्रस्तौति यत्र लीयते इत्यादिना। विघाते विनाशनिमित्ते उपसादिते उपगते सति सङ्घातः प्रकृतिसप्तकसङ्घातः परिणामरूपोऽण्डकोशः यत्र प्राकृतिके प्रलये लीयते॥ ६॥ कोऽसौ विघात इत्यत आह—पर्जन्य इति। अवर्षतीति सप्तम्यन्तं शतवर्षाणि पर्जन्ये ऽवर्षति सतीत्यर्थः। निरन्नैरिति लिङ्गव्यत्यय आर्षः अन्योन्यं भक्ष्यमाणाः प्रजा एवमुपद्रुताः कालेन शनैः क्षयं यास्यन्तीति सम्बन्धः। सामुद्रमिति समुद्रादिषु भवं रसं जलं साम्वर्तको रविः प्रलयादित्यः॥ ७–८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भगवत्कटाक्षप्रेक्षणाक्षिप्तकल्पप्रलयप्रकारं तत्स्वरूपं भागवतप्रवृत्तिं च कथयत्यस्मिन्नध्याये तत्रादावुक्तमनूद्य वक्तव्यं प्रतिविधत्ते—काल इति कथितस्तृतीयस्कन्धे। अथ कल्पप्रलययोरपि कालाधीनत्वेन तत्स्वरूपश्रवणानन्तरम्॥ १॥ यत्र दिने॥ २॥ यस्य दिनस्यान्ते ब्राह्मी ब्रह्मसम्बन्धिनी यत्र रात्रौ॥ ३॥ यत्र प्रलये आत्मसात्कृत्य आत्मनि निधाय॥ ४॥ सप्त प्रकृतयः महदहङ्कारावाकाशादिपञ्चभूतानि॥ ५॥ यत्र प्रकृतिप्रलये सङ्घातश्चतुर्विंशतितत्त्वसमूहात्मकः, प्रलयप्रकारमाह—विघात इति। विघाते प्रलये उपसादिते आसन्ने सति॥ ६–७॥ "कल द्रवणे" इति धातोः कालेन द्रवणहेतुना सामुद्रं समुद्रस्य विद्यमानं रसं जलं दैहिकं देहस्य विद्यमानं रसं रेतोलक्षणं वीर्यं भूमे रसं तिक्तादिलक्षणम्॥ ८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

॥ १–३॥ एष नैमित्तक इत्युपलक्षणं मन्वन्तरनिमित्तत्वमपि तदन्तर्भूतं ज्ञेयम्॥ ४–१२॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

नैमित्तिकाद्यान् प्रलयांश्चतुर्थे चतुरः क्रमात्। उक्त्वोपसञ्जहार श्रीशुकः कृष्णकथामृतम्॥

यच्च पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति तत्र तृतीयस्कन्धोक्तकालानुवादपूर्वकमाह—काल इति,॥ १–२॥ तावान् चतुर्युगसहस्रप्रमाणः॥ ३॥ प्रलयाश्चत्वारस्तत्रैष प्रलयो नैमित्तिकः प्रथमः विश्वसृक् श्रीनारायणः आत्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते आत्मभूर्ब्रह्मा च तस्मिन् प्रविश्य शेते अत एव ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्त्तमानो लोकत्रयप्रलयो नैमित्तिकः एष एव दैनन्दिनशब्दवाच्यश्च॥ ४॥ प्राकृतिकं प्रलयमाह—द्विपरार्द्धेति द्वाभ्याम्। आद्यः परार्द्धोऽपक्रान्त एव द्वितीयेपि परार्द्धे अतिक्रान्ते सति ब्रह्मण आयुः समाप्तौ सत्यां सप्तप्रकृतयो महदहङ्कारतन्मात्रपञ्चकानि॥ ५॥ प्रकृतेः सकाशादुद्भूतवस्तूनां प्रकृतावेव प्रवेशात् प्राकृतिकः सङ्घातः महदादितत्त्वसमूह एवाण्डकोशः विघातकाल उपसन्ने सति॥ ६॥ तत्र प्रकारमाह—पर्जन्य इति॥ ७–८॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं राजदेहाद्युपलक्षितं सर्वं प्राकृतं निरोधविषयमुक्त्वाऽथ निरोधं प्रपञ्चयति। चतुर्थाध्यायेन, तत्र तावत् यत्पृष्टं कलिदोषनिवृत्त्युपायादिकं तदुत्तरं दत्वा यच्च पृष्टं युगानित्यनेन युगमानमिति प्रलयकल्पयोर्मानं, कालस्य च गतिं ब्रूहीति, तदुत्तरमाह—काल इति। ते तुभ्यं 'सकालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्' इत्यादिना तृतीयस्कन्धे कालः कथितः 'चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्। संख्यातानि सहस्राणि द्विगुणानि शतानि च' इति युगमानं च कथितम् अधुना कल्पलयावपि शृणु इति यावत्॥ १॥ तत्र तावत्कल्पमानमाह—चतुर्युगसहस्रमिति,॥ २॥ प्रलयस्तु चतुर्विधः, नैमित्तिकः प्राकृतिकः आत्यन्तिको नित्यश्च, तत्र तावन्नैमित्तिकं प्रलयं मानसहितमाह—तदन्त इति तदन्ते तस्य चतुर्युगसहस्रात्मकस्य ब्रह्मणो दिनस्यान्ते तावान् चतुर्युगसहस्रप्रमाणः प्रलयः सैव ब्राह्मी रात्रिः॥ ३॥ यत्र विश्वसृक् श्रीनारायणः अनन्तः शेषः आसनं शय्या यस्य सः विश्वं लोकत्रयमात्मसात्कृत्य स्वस्मिन्नुपसंहृत्य शेते आत्मभूः ब्रह्मा च तस्मिन् शेते स च श्रीमन्नारायणो ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्तमानो लोकत्रयप्रलयो नैमित्तिक इत्यभिधीयते कल्पान्ते श्रीनारायणे ब्रह्मादीनां प्रवेश उक्तो हरिवंशे।

"ब्रह्माणमग्रतः कृत्वा प्रभवं विश्वतो मुखम्। सर्वे देवगणाश्चैव त्रयस्त्रिंशाश्च छन्दजाः।
प्रविशन्ति महायोगं हरिं नारायणं प्रभुम्॥" इति॥ ४॥

अथ प्राकृतिकं प्रलयमाह—द्विपरार्द्धे इत्यष्टादशभिः। महदहङ्कारौ पञ्चतन्मात्राणि चेत्येवं सप्त॥ ५॥ एष वक्ष्यमाण-कार्यकारणात्मिकायाः प्रकृतेर्वक्ष्यमाणेन प्रकारेण परे देवे लयात् प्राकृतिको लय इत्यभिधीयते इत्याह—एष इति विघाते विनाश-निमित्तं उपसादिते कालेन प्रापिते सति सप्तप्रकृतिसङ्घातः अण्डकोशः लीयते मूलप्रकृताविति शेषः॥ ६॥ तदेवाह—पर्जन्य इत्यादिना॥ ७॥ पिबते आकर्षति॥ ८–९॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

वैराग्याय च कालस्य प्राबल्यं विनिरूपयन्। चतुर्थे तु चतुर्धोक्ता लया नैमित्तिकादयः॥ १॥

एवं कलिदोषनिवर्त्तकं हरिनामसङ्कीर्त्तनादिकं स एव कलौ परमो धर्म इति प्रश्नद्वयस्योत्तरमुक्तम्। यच्चान्यत्पृष्टं प्रलय-कल्पयोर्मानं ब्रूहि तदिदानीं तृतीयस्कन्धोक्तकालस्वरूपानुवादपूर्वकं निरूपयति—काल इति। हे नृप 'स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्' इत्यादिना कालस्ते तुभ्यं कथितः। तथा 'चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्। सङ्ख्यातानि सहस्राणि द्विगुणानि शतानि च' इति युगमानं च कथितम्। अथ कल्पलयावपि तयोर्मानं शृणु॥ १॥ तत्र तावत्कल्पमानमाह—चतुर्युगेति। कल्पो द्विविधः। दैनन्दिनो महांश्च। तत्राद्यमाह—हे विशाम्पते। यत्र कल्पे क्रमेण चतुर्दश मनवो भवंति। मन्वन्तरमानं तु 'युगानामेक-सप्ततिः' इत्युक्तं ज्ञेयम्॥ २॥ प्रलयस्तु चतुर्विधः नैमित्तिकः प्राकृतिक आत्यन्तिको नित्यश्चेति। तत्र मानसहितं नैमित्तिकं प्रलयमाह तदन्त इति द्वाभ्याम्। तावान् चतुर्युगसहस्रप्रमाणः सैव ब्राह्मी रात्रिः॥ ३॥ नैमित्तिकत्वं दर्शयति—यत्र यदा विश्वसृक् श्रीनारायणो विश्वमात्मसात्कृत्य स्वस्मिन्नुपसंहृत्य अनन्ते आसनं यस्य सोऽनन्ते शेते। आत्मभूर्ब्रह्मा च तस्मिन् शेते। एष ब्रह्मणो निद्रां निमित्तीकृत्य प्रवर्त्तमानो लोकत्रयप्रलयो नैमित्तिकः प्रोक्त इत्यर्थः॥ ४॥ अथ महाकल्पं प्राकृतं प्रलयं च निरूपयति—द्विपरार्द्धेति। अयमेव महाकल्प इति सूचितम्। परमेष्ठिनः सर्वोत्तमस्य ब्रह्मण आयुर्भूते द्विपरार्द्धकाले त्वतिक्रान्ते सति तदा सप्त प्रकृतयो महदहङ्कारपञ्चतन्मात्राणि प्रलयाय कल्पन्ते॥ ५॥ विघाते विघातकारणे उपसादिते सति सप्तप्रकृतीनां सङ्घातः कार्यरूपो यत्र लीयते स एष हे राजन् प्राकृतः प्रलय उच्यते॥ ६॥ तत्प्रकारमाह—पर्जन्य इति॥ ७॥ समुद्रादिषु भवं सर्वं रसं जलं रविः पिबते आकर्षति नैव मुञ्चति॥ ८॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

लयाश्चतुर्विधाः प्रोक्तास्तुर्ये नैमित्तिकादयः। निस्तारः संसृतेस्तत्र हरेः कीर्त्यैव कीर्त्यते॥ १॥

नृपकृतप्रश्नेषु द्वयोरुत्तरं कृत्वाथ यत्पृष्टं प्रलयकल्पयोर्मानं ब्रूहीति तदुत्तरं कर्त्तुं तृतीयस्कन्धोक्तकालस्वरूपानुवादं निरूप-यन्नारभते। काल इति। हे नृप राजन्, परमाणुरादिर्यस्य सः, द्विपरार्द्धमवधिरुत्तरावधिर्यस्य सः कालः, ते तुभ्यं, कथितः। 'स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम्' इत्यादिना तृतीयस्कन्धे संप्रोक्तः। तथा। 'चत्वारि त्रीणि द्वे चैकं कृतादिषु यथाक्रमम्। संख्यातानि सहस्राणि द्विगुणानि शतानि च' इति युगमानं च कथितं, इदानीं कल्पलयावपि शृणु तयोर्मानमाकर्णयेत्यर्थः॥ १॥ तत्र तावत् कल्पमानमाह। चतुर्युगसहस्रमिति। कल्पो द्विविधः, दैनंदिनो महांश्चेति। तत्राद्यो ब्रह्मणो दिनात्मक एव कल्पः। इत्यभिधीयते। तं विशिनष्टि। यत् चतुर्युगसहस्रं च चकारस्त्वर्थे। तत्तु ब्रह्मणः दिनम् उच्यते। सः कल्पः। हे विशांपते, यत्र कल्पे, क्रमेण चतुर्दश मनवः भवन्ति। मन्वन्तरमानं तु 'स्वं स्वं कालं मनुर्भुंक्ते युगानामेकसप्ततिम्' इति तृतीयस्कन्ध एवोक्तमनु-संधेयमिति॥ २॥ प्रलयश्चतुर्विधः, नैमित्तिकः प्राकृतिकः आत्यन्तिकः नित्यश्चेति। तत्र नैमित्तिकं प्रलयं निरूपयति द्वाभ्याम्। तदन्त इति। तदन्ते चतुर्युगसहस्रान्ते, तावान् चतुर्युगसहस्रपरिमाणः, प्रलयः। सा ब्राह्मी रात्रिः उदाहृता, यत्र रात्रौ इमे भूरादयः त्रयः लोकाः, प्रलयाय कल्पन्ते हि, लीना भवन्तीत्यर्थः॥ ३॥ एष इति। एषः नैमित्तिकः प्रलयः प्रोक्तः, तत्र नैमित्तिकशब्द-प्रवृत्तौ निमित्तमाह। यत्र नैमित्तिकप्रलये, विश्वसृट् अनन्तः शेषः आसनं यस्य सः आत्मभूः विश्वं च विश्वमपि, आत्मसात्कृत्य स्वात्मन्युपसंहृत्येत्यर्थः। कृत्येत्यार्षम्। शेते। विश्वसृजः शयननिमित्तकत्वादस्य प्रलयस्य नैमित्तिकत्वम्। अत्र विश्वसृगात्मभू-शब्दयोश्चतुर्मुखपरत्वेऽपि तस्यानन्तशय्यत्वविशेषणतः श्रीनारायणपरत्वं प्रतीयते, तच्च तयोरभेदविवक्षया बोध्यम्। यद्वा। यत्र यदा विश्वसृट् श्रीनारायणः, विश्वं आत्मसात्कृत्य स्वस्मिन्नुपसंहृत्य, अनन्तासनः सन्, शेते। आत्मभूर्ब्रह्मा च तस्मिन् शेते इति व्याख्येयम्। विष्णुपुराणे तु 'एकार्णवे ततस्तस्मिन् शेषशय्यास्थितिः प्रभुः। ब्रह्मरूपधरः शेते भगवानादिकृद्धरिः। जनलोकगतैः सिद्धैः सनकाद्यैरभिष्टुतः। ब्रह्मलोकगतैश्चैव चिन्त्यमानो मुमुक्षुभिः। आत्ममायामयीं दिव्यां योगनिद्रां समास्थितः। आत्मानं वासुदेवाख्यं चिन्तयन् परमेश्वरः। एष नैमित्तिको नाम मैत्रेय प्रतिसंचरः। निमित्तं तत्र यच्छेते ब्रह्मरूपधरो हरिः'। इत्युक्तं,

तत्र ब्रह्मा चतुर्मुखस्तस्य रूपं मूर्तिस्तस्या धरः स्वनाभिपद्मे धारकः सन्, हरिर्वैराजो नारायणः अनन्तशय्यायां शेते इति प्रतिभाति ॥ ४ ॥ एवं दैनंदिनकल्पो नैमित्तिकः प्रलयः स निरूपितोऽथ प्राकृतं प्रलयं महाकल्पं च निरूपयति। द्विपरार्द्ध इति। द्विपरार्द्धं इत्यनेनायमेव महाकल्प इति च सूचितम्। परमेष्ठिनः ब्रह्मणः द्विपरार्द्धे आयुपि, अतिक्रान्ते सति, तु तदा सप्त प्रकृतयः महदहंकारौ भूतपञ्चकं चेति नामानः प्रलयाय कल्पन्ते वै। अयं सप्तप्रकृतीनां लयात्मकत्वात् प्राकृतिको लय इत्युच्यते ॥ ५ ॥ एष इति। हे राजन्, एषः प्राकृतिकः प्रलयः। सप्त प्रकृतयः कथं लीयन्ते इत्यत्र तत्प्रकारं वक्तुं प्रस्तौति। यत्रेत्यादिना। हे राजन्, विघाते विनाशनिमित्ते उपगते सति, संघातः आण्डकोशः प्रकृतिसप्तसंघातपरिणामात्मक आण्डकोश इत्यर्थः। यत्र प्राकृतिके प्रलये लीयते ॥ ६ ॥ कोऽसौ विघात इत्यत आह। पर्जन्य इति। हे राजन्, तदा यदा प्राकृतिको लयो जायते तदेत्यर्थः। शतवर्षाणि शतवर्षपर्यन्तमित्यर्थः। भूमौ पर्जन्य मेघे अवर्षति सति निरन्नैर्जनैः अन्योऽन्यं भक्षमाणाः क्षुधा अर्दिताः अतः उपद्रुताः प्रजाः, कालेन शनकैः क्षयं यास्यन्ति हि पाठान्तरे तु हे राजन्, पर्जन्यः भूमौ शतवर्षाणि न वर्षति। तदा हि निरन्ने अन्नसामान्याभावे सति क्षुधा अर्दिताः अतः अन्योऽन्यं भक्षमाणाः प्रजाः, कालेन उपद्रुता सत्यः, शनकैः क्षयं यास्यन्ति ॥ ७ ॥ सामुद्रमिति। तदा सांवर्त्तकः प्रलयकालीनः रविः समुद्रं समुद्रसंबन्धिनं दैहिकं देहसंबन्धिनं, भौमं भूमिसंबन्धिनं सर्वं रसं, घोरैर्दुःसहैः रश्मिभिः, पिबते आकर्षति, नैव विमुञ्चति। अधुनेव पीत्वा न विमुञ्चतीत्यर्थः ॥ ८ ॥

### हिन्दी अनुवाद

## चार प्रकार के प्रलय

श्रीशुकदेवजी कहते हैं—परीक्षित्! (तीसरे स्कन्ध में) परमाणु से लेकर द्विपरार्धपर्यन्त काल का स्वरूप और एक एक युग कितने-कितने वर्षों का होता है, यह मैं तुम्हें बतला चुका हूँ। अब तुम कल्प की स्थिति और उसके प्रलय का वर्णन भी सुनो ॥ १ ॥ राजन्! एक हजार चतुर्युगी का ब्रह्मा का एक दिन होता है। ब्रह्मा के इस दिन को ही कल्प भी कहते हैं। एक कल्प में चौदह मनु होते हैं ॥ २ ॥ कल्प के अन्त में उतने ही समय तक प्रलय भी रहता है। प्रलय को ही ब्रह्मा को रात भी कहते हैं। उस समय ये तीनों लोक लीन हो जाते हैं, उनका प्रलय हो जाता है ॥ ३ ॥ इसका नाम नैमित्तिक प्रलय है। इस प्रलय के अवसर पर सारे विश्व को अपने अंदर समेट कर—लीन कर ब्रह्मा और तत्पश्चात् शेषशायी भगवान् नारायण भी शयन कर जाते हैं ॥ ४ ॥ इस प्रकार रात के बाद दिन और दिन के बाद रात होते-होते जब ब्रह्माजी की अपने मान से सौ वर्ष की और मनुष्यों की दृष्टि में दो परार्द्ध की आयु समाप्त हो जाती है, तब महत्तत्त्व, अहङ्कार और पञ्चतन्मात्रा—ये सातों प्रकृतियाँ अपने कारण मूल प्रकृति में लीन हो जाती हैं ॥ ५ ॥ राजन्! इसी का नाम प्राकृतिप्रलय है। इस प्रलय में प्रलय का कारण उपस्थित होने पर पञ्चभूतों के मिश्रण से बना हुआ ब्रह्माण्ड अपना स्थूलरूप छोड़कर कारणरूप में स्थित हो जाता है, घुल-मिल जाता है ॥ ६ ॥ परीक्षित्! प्रलय का समय आने पर सौ वर्ष तक मेघ पृथ्वी पर वर्षा नहीं करते। किसी को अन्न नहीं मिलता। उस समय प्रजा भूख-प्यास से व्याकुल होकर एक-दूसरे को खाने लगती है ॥ ७ ॥ इस प्रकार काल के उपद्रव से पीडित होकर धीरे धीरे सारी प्रजा क्षीण हो जाती है। प्रलयका लीन सांवर्तक सूर्य अपनी प्रचण्ड किरणों से समुद्र, प्राणियों के शरीर और पृथ्वी का सारा रस खींच-खींचकर सोख जाते है और फिर उन्हें सदा की भाँति पृथ्वी पर बरसाते नहीं। उस समय सङ्कर्षण भगवान् के मुख से प्रलयकालीन संवर्तक अग्नि प्रकट होती है ॥ ८-९ ॥

ततः संवर्तको वह्निः सङ्कर्षणमुखोत्थितः। दहत्यनिलवेगोत्थः शून्यान् भूविवरानथ ॥ ९ ॥

उपर्यधः समन्ताच्च शिखाभिर्वह्निसूर्ययोः। दह्यमानं विभात्यण्डं दग्धगोमयपिण्डवत् ॥ १० ॥

ततः प्रचण्डपवनो वर्षाणामधिकं शतम्। परः सांवर्तको वाति धूम्रं खं रजसाऽऽवृतम् ॥ ११ ॥

ततो मेघकुलान्यङ्ग चित्रवर्णान्यनेकशः। शतं वर्षाणि वर्षन्ति नदन्ति रभसस्वनैः ॥ १२ ॥

तत एकोदकं विश्वं ब्रह्माण्डविवरान्तरम्। तदा भूमेर्गन्धगुणं ग्रसन्त्याप उदप्लवे ॥ १३ ॥

ग्रस्तगन्धा तु पृथिवी प्रलयत्वाय कल्पते। अपां रसमथो तेजस्ता लीयन्तेऽथ नीरसाः ॥ १४ ॥

ग्रसते तेजसो रूपं वायुस्तद्रहितं तदा। लीयते चानिले तेजो वायोः खं ग्रसते गुणम् ॥ १५ ॥

स वै विशति खं राजंस्ततश्च नभसो गुणम्। शब्दं ग्रसति भूतादिर्नभस्तमनुलीयते ॥ १६ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—ततः सङ्कर्षणमुखोत्थितः संवर्तकः वह्निः अनिलवेगोत्थितः शून्यान् भूविवरान् दहति अथ वह्निसूर्ययोः शिखाभिः उपरि अधः समन्तात् च दह्यमानम् अण्डं दग्धगोमयपिण्डवत् विभाति ॥ ९–१० ॥ ततः प्रचण्डपवनः परः सांवर्तकः वर्षाणाम् अधिकं शतं वाति धूम्रं खं रजसा आवृतम् ॥ ११ ॥ अङ्ग ततः अनेकशः चित्रवर्णानि मेघकुलानि शतं वर्षाणि रभसस्वनैः नयन्ति वर्षन्ति ॥ १२ ॥ ततः ब्रह्माण्डविवरान्तरं एकोदकं विश्वं तदा उदप्लवे आपः भूमेः गन्धगुणं ग्रसन्ति ॥ १३ ॥ पृथिवी ग्रस्तगन्धा प्रलयत्वाय कल्पते अथ अपां रसं तेजः ( ग्रसति ) अथ नीरसाः ताः लीयन्ते ॥ १४ ॥ तेजसः रूपं वायुः ग्रसते तदा तद्रहितं तेजः अनिले लीयते वायोः गुणं ग्रसते राजन् सः खं विशति ततः नभसः गुणं शब्दं भूतादि ग्रसति नभः तम् अनुलीयते ॥ १५–१६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अनिलवेगोत्थो वायुवेगोद्भूतः । अनिलवेगो वा इति पाठे अनिलेन वेगो यस्य सः । वाः रविणा रश्मिभिः पीतमुदकं च दहतीत्यर्थः । अनिलवेगो वै इति तुपाठः सुगमः । भूविवरान्पातालादीन् शून्यान्रविणा दैहिकरसाकर्षणात्प्राणिरहितान् । शिखाभिर्ज्वालाभिः ॥ १० ॥ किंचिदधिकं वर्षाणां शतम् । सांवर्तकः प्रलयहेतुः परो वायुर्वाति तदा रजसाऽऽवृतं खं धूम्रं भवति ॥११–१२॥ रभसस्वनैस्तीव्रगर्जितैः । ब्रह्मांडविवरमध्यगतं विश्वमेकोदकमेकार्णवोदकव्याप्तं भवति ॥ १३ ॥ उदप्लवे उदकेनाप्लवे सति । प्रलयत्वायाभावाय ॥ १४–१६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ततो रसशोषानंतरम् ॥ ९ ॥ इत्यर्थ इति–मेघांतर्गतमपि जलं शोषयतीति भावः । सूर्यपक्षे शिखाभी रश्मिभिः ॥ १० ॥ ततो ब्रह्मांडदाहोत्तरम् । प्रचंडपवनः सशब्दो वायुः । अधिकं किञ्चिदधिकम् ॥ ११ ॥ परो बलवत्तरः । ततो रजःकृताकाशधूम्रत्वानंतरम् ॥ १२ ॥ अंतरे तिष्ठतीत्यान्तरं ब्रह्मांडविवरस्यांतरं ब्रह्मांडविवरांतरम् । एकमुदकमेव यत्र प्रतीयते नान्यत्तदेकोदकम् ॥ १३ ॥ भूमेर्गंधगुणमापो ग्रसंति भूलयाय तस्याममभिभावयंति । एवमग्रेऽप्यूह्यम् । अन्यगुणस्यान्यत्र लयासंभवात् तन्मात्राणां कारणत्वकल्पने पूर्वं लयासंभवात्तन्मात्रकार्यत्वे भूतानां भूतांतरे लयासंभवाच्च ग्रस्तघेदकगुणाप्रलयत्वाय कल्पते योग्यो भवति ॥ १४ ॥ ता आपः । अनीरसा रसहीनाः संतः । तद्रहितं रूपरहितम् ॥ १५ ॥ वायोर्गुणं स्पर्शम् । खमाकाशः । स वायुः ॥ १६ ॥

## अन्वितार्थप्रकाशिका

तत इति अनिलवेगोत्थः वायुवेगेन प्रज्वलितः संकर्षणमुखोत्थितः सांवर्त्तको वह्निः शून्यान् सर्वप्राणिरहितान् सर्वरसाकर्षणाच्छुष्कांश्च भूविवरान् पातालादीन् दहति । अनिलवेगो वा इति पाठे अनिलेन वेगो यस्य स वा रविणा रश्मिभिः पीतमुदकं च दहति । अनिलवेगो वै इति च पाठः ॥ ९ ॥ उपरीति ॥ उपर्यधः समंताच्च वह्निसूर्ययोः शिखाभिः ज्वालाभिर्दह्यमानं ब्रह्माण्डं दग्धगोमयपिण्डवद् विभाति ॥ १० ॥ तत इति । ततश्च किंचिदधिकं वर्षाणां शतं परः बलीयान् संवर्त्तकाख्यः प्रचण्डो निष्ठुरः पवनो वाति तदा रजसा वृत्तं खमाकाशं धूम्रं भवति ॥ ११ ॥ तत इति । अङ्ग हे राजन् ! ततश्चित्रवर्णानि अनेकशः मेघकुलानि शतं वर्षाणि वर्षन्ति रभसस्वनैः तीव्रगर्जितैर्नदन्ति । गर्जितानि कुर्वन्ति चेत्यर्थः ॥ १२ ॥ तत इति । ततश्च ब्रह्माण्डविवरमध्यगतं विश्वम् एकोदकमेकार्णवोदकव्याप्तं भवति । उदप्लवे उदकेन लोके प्लाविते सति भूमेर्गन्धगुणमापः ग्रसन्ति । गन्धोऽप्सु लीयत इत्यर्थः । तङभाव आर्षः ॥ १३ ॥ ग्रस्तेति । ग्रस्तगन्धा पृथिवी प्रलयत्वाय कल्पते । अपां रसं तेजो ग्रसति । तङभाव आर्षः । ता नीरसा आपस्तेजसि लीयन्ते ॥ १४ ॥ ग्रसत इति । ततस्तेजसो रूपं वायुर्ग्रसते । ततस्तद्रहितं तेजस्तदा अनिले लीयते । वायोर्गुणं स्पर्शं खमाकाशो ग्रसते ॥ १५ ॥ स इति । हे राजन् ! संस्पर्शरहितो वायुः खमाकाशं विशति । ततश्च नभसो गुणं शब्दं भूतादिस्तामसाहंकारो ग्रसति । तं शब्दमनु पश्चान्नभोऽपि तस्मिन् लीयते ॥ १६ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

भूविवराणि पातालादीनि ॥ १०–१४ ॥ तेजः ग्रसतीत्यन्वयः । ता आपः ॥ १५–१६ ॥

## श्रीमद्वीरराघवव्याख्या

दुःसहैः रश्मिभिः पिबते न त्वधुनेव पीत्वा विसृजतीत्यर्थः । तत इति अनिलवेगोत्थः वायुवेगोत्थः प्रलयाग्निः अनिलवेगो वारिति पाठे वार्जलं रविणा पीतावशिष्टोदकं च दहतीत्यर्थः । वैशब्दपाठस्तु सुगमः । अनिलेन वेगो यस्य स इति पाठद्वयेप्यर्थः ।

ततः शून्यान् त्रिलोकान् भूविवरान् पातालादीनि च दहतीति सम्बन्धः। इत्थमुपर्यधः समन्ताच्च वह्निसूर्ययोः शिखाभिर्ज्वालाभिर्दह्यमानं ब्रह्माण्डं दग्धगोमयपिण्डवद्विभाति वर्तिष्यते तत इति वर्षाणामधिकं शतं किञ्चिदधिकं वर्षाणां शतमित्यर्थः। प्रचण्डोऽतिनिष्ठुरः ॥ ९–११ ॥ परः बलीयान् सांवर्त्तकः प्रलयवायुर्वाति तदा रजसावृतं खमाकाशं धूम्रं भविष्यति ततो मेघकुलानीति। अङ्ग, हे राजन्! रभसस्वनैः तीव्रगर्जितैर्नदन्ति गर्जितानि करिष्यन्ति चेत्यर्थः। व्यत्ययेन तृतीया तदा ब्रह्माण्डविवरमध्यगतं विश्वम् एकोदकम् एकार्णवोदकव्याप्तं भविष्यति तदेत्थम् उदप्लवे उदकप्लवरूपे सति जगति भूमेर्गन्धगुणमापो ग्रसन्ते (न्ति) सोऽप्सु लीयते इत्यर्थः। ग्रस्तः गन्धो यस्याः सा पृथिवी प्रलयत्वायाभावाय कल्पते ॥ १२–१४ ॥ अपामिति। अथोऽनन्तरमपां रसगुणं तेजो ग्रसतीति वचनविपरिणामेनानुषक्तेन सम्बन्धः। अथ नीरसास्ता आपः लीयन्ते तेजसीति विभक्तिविपरिणामेनावृत्तेन सम्बन्धः ततस्तेजसो रूपं वायुर्ग्रसते तदा तद्रहितं तेजः वायौ लायत इत्युत्तरेण सम्बन्धः। वायोर्गुणं स्पर्शं खमाकाशो ग्रसते। स वै स्पर्शरहितो वायुः हे राजन्! खमाकाशं विशति तत्र लीयत इत्यर्थः। ततश्च नभसो गुणं शब्दं भूतादिस्तामसाहङ्कारो ग्रसति तदनु स्वगुणग्रसनानन्तरं तस्मिन् भूतादौ लीयते इत्यर्थः। तैजसश्चेति। चशब्दः साहित्यद्योतकः राजसाहङ्कारसहितः वैकारिकः सात्त्विकाहङ्कारः गुणैर्वृत्तिभिः सह देवानिन्द्रियाणि ज्ञानेन्द्रियाणि ग्रसते ततोऽहङ्कारत्रिविधं महान् ग्रसते ततः सत्त्वादयो गुणाः तं महान्तं ग्रसन्ति गुणा ग्रसन्तीत्युपचारः गुणमयी प्रकृतिरेव महान्तं ग्रसतीत्यर्थः। ग्रसत इति। हे राजन्! कालेन चोदितम् अव्याकृतं प्रधानं गुणान् ग्रसति विषमान् गुणान् समीकरोति समीकृतगुणं भवतीति यावत् तन्महदादिनामरूपविभागरहितं गुणसाम्यावस्थं प्रधानमव्याकृतशब्देनाभिधीयते ॥ १५–१८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

साम्वर्तकः प्रलयकालीनः ॥ ९ ॥ सत्वशून्यान् प्राणिरहितान् भूविवरान् पातालादीन् ॥ १०–११ ॥ रजसावृतं खं धूम्रस्थानं चित्रवर्णानि नीलादिनानाविधानि ॥ १२ ॥ ब्रह्माण्डविवरान्तरं ब्रह्माण्डविलविशेषं ब्रह्माण्डविलोदरं वा एकोदकम् उदकात्मकं भवति ॥ १३ ॥ पञ्चभूतगुणलयप्रकारमाह—तदेति। उपप्लवे प्रलये ॥ १४ ॥ नीरसाः आपः तद्रहितं रूपरहितम् ॥ १५ ॥ तेजो वायौ लीयते स वायुः खं विशति तदनु शब्दगुणलयानन्तरं तैजसानीन्द्रियाणि तैजसाहङ्कारे लीयन्ते इति शेषः ॥ १६ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

पिबते आकर्षति ॥ ९–१० ॥ किञ्चिदधिकं वर्षाणां शतं व्याप्य वाति तदा रजसाऽऽवृतं खं धूम्रं भवति ॥ ११–१३ ॥ प्रलयत्वाय प्रकृष्टो लयो यस्याः सा प्रलया तस्या भावः प्रलयत्वं तस्मै नाशायेत्यर्थः ॥ १४ ॥ अपां रसं तेजो ग्रसति ॥ १५–१६ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

शिखाभिः ज्वालाभिः ॥ १०–११ ॥ परः महाबलः रजसाऽऽवृतं खं धूम्रं भवति ॥ १२ ॥ रभसस्वनैस्तीव्रगर्जितैः ॥१३॥ उदप्लवे उदकेन प्लाविते सति प्रलयत्वाय कारणभावाय ॥ १४–१६ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अनिलवेगोत्थः वायुर्वेगेन प्रज्वलवेगो वा इति पाठे। वा इति रविणा पीतावशिष्टं जलं दहतीत्यर्थः। अनिलवेगो वै इति पाठस्तु सुगमः। भूविवरान् पातालादीन् शून्यान् रविणा दैहिकसर्वरसाकर्षणात् प्राणिरहितान् दहति ॥ ९ ॥ उपर्यधःसमन्ताच्च वह्निसूर्ययोः शिखाभिर्ज्वालाभिर्दह्यमानं ब्रह्माण्डं दग्धगोमयपिण्डवद्विभाति ॥ १० ॥ ततश्च किञ्चिदधिकं वर्षाणां शतं परः बलीयान् संवर्त्तकाख्यः प्रचण्डो निष्ठुरं पवनो वाति। तदा रजसा वृत्तं खमाकाशो धूम्रं भवति ॥ ११ ॥ हे अङ्ग राजन्। रभसस्वनैः तीव्रगर्जितैर्नदन्ति, गर्जितानि कुर्वन्ति, चेत्यर्थः ॥ १२ ॥ ततश्च ब्रह्माण्डविवरमध्यगतविश्व एकोदकमेकार्णवोदकव्याप्तं भवति। उदप्लवे उदकेन लोके प्लाविते सति भूमेर्गन्धगुणमापः ग्रसन्ति, गन्धोऽप्सु लीयत इत्यर्थः ॥ १३ ॥ तं प्रलयत्वाय अभावाय कल्पते अपां रसं तेजो ग्रसति ता नीरसा आपस्तेजसि लीयन्ते ॥ १४ ॥ ततस्तेजसो रूपं वायुर्ग्रसते ततस्तद्रहितं रूपरहितं तेजस्तदा अनिले लीयते। वायोर्गुणं स्पर्शं खमाकाशो ग्रसते ॥ १५ ॥ ततश्च हे राजन् संस्पर्शरहितो वायुः खमाकाशं विशति। ततश्च नभसो गुणं शब्दं भूतादिस्तामसाहङ्कारो ग्रसति। तं शब्दमनु पश्चान्नभोऽपि तस्मिन् लीयते गुणैर्वृत्तिभिः सहितानीन्द्रियाणि तैजसो राजसाहङ्कारो ग्रसते। वैकारिकः सात्त्विकश्चाहङ्कारो देवानिन्द्रियाधिष्ठातॄन् ग्रसते ॥ १६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तत इति। ततः संकर्षणमुखोत्थितः सांवर्त्तकः प्रलयकालीनः वह्निः, अनिलवेगोत्थः वायुवेगेन वृद्धिं प्राप्तः सन्, शून्यान् निर्लोकान् भूविवरान् पातालादीन् अथ कार्त्स्न्येन दहति, अनिलवेगो वा इति पाठे वार्जलं रविपीतावशिष्टोदकं च दहतीत्यर्थः। वैशब्दपाठस्तु सुगमः, पाठद्वयेऽप्यनिलवेग इत्यस्य अनिलेन वेगो यस्येति बहुव्रीहिस्तेनानिलवेगसंवृद्ध इति एवार्थः॥ ९॥ उपरीति। इत्थं उपरि अधः समन्ताच्च, वह्निश्च सूर्यश्च तयोः शिखाभिः मयूखैर्ज्वालाभिश्चेत्यर्थः। दह्यमानं अण्डं ब्रह्माण्डं दग्धगोमयपिण्डवत् विभाति वर्त्तिष्यते इत्यर्थः॥ १०॥ तत इति। ततः अधिकं किंचिदधिकं वर्षाणां शतं, प्रचण्डोऽतिनिष्ठुरः परः बलीयान् सांवर्त्तकः प्रलयकालीनः, पवनो वायुः वाति। तदा रजसा आवृतं, खमाकाशं धूम्रं धूम्रवर्णं भवति॥ ११॥ तत इति। अङ्ग हे नृपते, ततः चित्रवर्णानि अनेकशः मेघकुलानि शतं वर्षाणि शतवर्षपर्यन्तमित्यर्थः। रभसस्वनैः तीव्रगर्जितैः युतानि सन्तीति शेषः। नदन्ति वर्षन्ति च॥ १२॥ तत इति। ततस्तदा ब्रह्माण्डविवरान्तरं ब्रह्माण्डविवरमध्यगतमित्यर्थः। विश्वं एकोदकमेकार्णवादेकव्याप्तं भवति। तदा उदप्लवे इत्थं प्रलये जायमाने सतीत्यर्थः। भूमेः गन्धगुणं आपः ग्रसन्ति॥ १३॥ग्रस्तेति। ग्रस्तः गन्धो यस्याः सा पृथिवी तु तदा प्रलयत्वाय कल्पते। अथो अनन्तरं, अपां रसं गुणं तेजः ग्रसतीति शेषः। अथानन्तरं नीरसा रसरहिताः ता आपः लीयन्ते॥ १४॥ ग्रसत इति। ततः तेजसः रूपं गुणं, वायुः ग्रसते। तदा तद्रहितं रूपरहितं तेजः अनिले वायौ च लीयते, वायोः गुणं स्पर्शं, खमाकाशं ग्रसते॥ १५॥ स वै इति। हे राजन्, स्पर्शगुणरहितः वायुः। खमाकाशं विशति आकाशे लीयते इत्यर्थः। वै ततश्च नभसः गुणं शब्दं भूतादिस्तामसाहंकारः, ग्रसति। तमनु स्वगुणग्रसनानन्तरमित्यर्थः। नभ आकाशं लीयते भूतादाविति शेषः॥ १६॥

### हिन्दी अनुवाद

वायु के वेग से वह और भी बढ़ जाती है और तल-अतल आदि सातों नीचे के लोकों को भस्म कर देती है। वहाँ के प्राणी तो पहले ही मर चुके होते हैं। नीचे से आग की करारी लपटें और ऊपर से सूर्य की प्रचण्ड गरमी! उस समय ऊपर नीचे, चारों ओर यह ब्रह्माण्ड जलने लगता है और ऐसा जान पड़ता है, मानो गोबर का उपला जलकर अंगारे के रूप में दहक रहा हो। इसके बाद प्रलयकालीन अत्यन्त प्रचण्ड सांवर्तक वायु सैकड़ों वर्ष तक चलती रहती है। उस समय का आकाश धूएँ और धूल से तो भरा ही रहता है, उसके बाद असंख्य रंग-बिरंगे बादल आकाश में मँडराने लगते हैं और बड़ी भयङ्करता के साथ गरज-गरज कर सैकड़ों वर्ष तक वर्षा करते रहते हैं। उस समय ब्रह्माण्ड के भीतर का सारा संसार एक समुद्र हो जाता है, सब कुछ जलमग्न हो जाता है॥ १०-१३॥ इस प्रकार जब जल-प्रलय हो जाता है, तब जल पृथ्वी के विशेष गुण गन्ध को ग्रस लेता है—अपने में लीन कर लेता है। गन्ध गुण के जल में लीन हो जानेपर पृथ्वी का प्रलय हो जाता है, वह जल में घुल मिलकर जलरूप बन जाती है॥ १४॥ राजन्! इसके बाद जल के गुण रस को तेजस्तत्त्व ग्रस लेता है और जल नीरस होकर तेज में समा जाता है। तदनन्तर वायु तेज के गुण रूप को ग्रस लेता है और तेज रूपरहित होकर वायु में लीन हो जाता है। अब आकाश वायु के गुण स्पर्श को अपने में मिला लेता है और वायु स्पर्शहीन होकर आकाश में शान्त हो जाता है। इसके बाद तामस अहङ्कार आकाश के गुण शब्द को ग्रस लेता है और आकाश शब्दहीन होकर तामस अहङ्कार में लीन हो जाता है। इसी प्रकार तैजस अहङ्कार इन्द्रियों को और वैकारिक (सात्त्विक) अहङ्कार इन्द्रियाधिष्ठातृ-देवता और इन्द्रियवृत्तियों को अपने में लीन कर लेता है॥ १५-१७॥

तैजसश्चेन्द्रियाण्यङ्ग देवान् वैकारिको गुणैः। महान् ग्रसत्यहङ्कारं गुणाः सत्त्वादयश्च तम्॥ १७॥
ग्रसतेऽव्याकृतं राजन् गुणान् कालेन चोदितम्। न तस्य कालावयवैः परिणामादयो गुणाः॥ १८॥
अनाद्यनन्तमव्यक्तं नित्यं कारणमव्ययम्॥ १९॥
न यत्र वाचो न मनो न सत्त्वं तमो रजो वा महदादयोऽमी।
न प्राणबुद्धीन्द्रियदेवता वा न सन्निवेशः खलु लोककल्पः॥ २०॥

### कृष्णप्रिया व्याख्या

अन्वयः—अङ्ग गुणैः इन्द्रियाणि तैजसः वैकारिकः देवान् अहंकारं महान् ग्रसति तं सत्त्वादयः गुणाः (ग्रसन्ति)॥१७॥ राजन् कालेन चोदितम् अव्याकृतं गुणान् ग्रसते तस्य (अव्याकृतस्य) कालावयवैः परिणामादयः गुणाः न (तत्) अनादि अनन्तम्

अव्यक्तं नित्यम् अव्ययं कारणम् ॥ १८–१९ ॥ यत्र वाचः न मनः न सत्त्वं न तमः रजः वा अमी महदादयः न प्राणबुद्धीन्द्रियदेवताः वा न लोककल्पः सन्निवेशः खलु न ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

भूतादिस्तामसोऽहंकारः । गुणैर्वृत्तिभिः सह ॥ १७ ॥ अव्याकृतं प्रधानम् ॥ १८ ॥ तस्य तु लयो नास्तीत्याह । न तस्येति। कालावयवैरहोरात्रादिभिः । गुणा भावविकाराः । परिणामो विपरिणामः । अव्यक्तमस्तित्वविकारशून्यम् । नित्यं सर्वदैकरूपं ह्रासवृद्धिरहितमित्यर्थः । अव्ययमपक्षयशून्यम् । सर्वत्र हेतुः कारणमिति ॥ १९ ॥ किंच । वागादिगोचरस्य सविशेषस्य विकारा भवंतीदं तु न तथेत्याह न यत्रेति द्वाभ्याम् । लोककल्पो लोकरूपः सन्निवेशो रचनाविशेषो नास्ति ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

हे अंग राजन् ॥ १७ ॥ महान् ईक्षणम् । अहंकारं बहुभवनसंकल्पम् । महदहंकारयोर्भगवदीक्षणसंकल्परूपयोस्तज्जन्यत्वे सति तज्जन्यजनको व्यापार इति लक्षणसद्भावेन मायोपहितेश्वरव्यापारत्वेन निमित्तत्वेप्युपादानत्वासंभवात्कालेन स्वोपहितेनेश्वरेण नोदितमव्यक्तं तदुपाधिमायात्मकाज्ञानम् । गुणान्स्वकार्यभूतान् ॥ १८ ॥ तस्याव्याकृतस्य तदवयवविभागस्य पश्चाद्भावितया तद्धेतुत्वानुपपत्तेः । गुणा धर्माः बोधात्पूर्वमबाधीन्नित्यत्वात्व्ययत्वे तस्येति केचित् ॥ १९ ॥ अन्यदाह—किञ्चेति । इदमव्यक्तं तु न तथा वागादिगोचरो नेत्यर्थः । गुणानां तद्रूपेण सत्त्वेऽपि साम्ये विभागाभावेनाभावोक्तिः ॥ २० ॥

## अन्वितार्थप्रकाशिका

तैजस इत्यर्द्धम् । अङ्ग हे राजन् ! गुणैर्वृत्तिभिः सहितानि इन्द्रियाणि तैजसो राजसाहङ्कारो ग्रसते । वैकारिकः सात्त्विकश्चाहङ्कारो देवानिन्द्रियाधिष्ठातॄन् ग्रसते । महानिति तं त्रिविधमप्यहंकारं महान् ग्रसते । तं महान्तं सत्त्वादयो गुणा ग्रसन्ते । कालेन नोदितमव्याकृतं प्रधानं गुणान् ग्रसते साम्यावस्थां नयति ॥ १७ ॥ नेति । अत्र तस्य तु लयो नास्तीत्याहेति अवतरणात् अव्यक्तपरेयं वक्ष्यमाणा त्रिश्लोकीति श्रीस्वाम्याशयः प्रतीयते । परे तु अव्यक्तलयस्थानं परात्परत्वेन व्याचक्षते । कालावयवैः अहोरात्रादिभिस्तस्य परिणामो विपरिणामस्तदादयो गुणा भावविकारा नैव भवन्ति । तच्च अनादि अनन्तम् अव्यक्तमस्तित्वविकारशून्यं नित्यं सर्वदैकरूपं वृद्धिरहितमित्यर्थः । कारणमव्ययम् अपक्षयशून्यम् । इति विकारषट्कं निषिद्धम् ॥ १८ ॥ किंच वागादिगोचरस्य सविशेषस्य विकारा भवन्ति । इदं तु न तथेत्याह—नेति । यत्र वाचो मनः सत्त्वादयो गुणा महदादयो विकाराश्च न सन्ति । यत्र प्राणबुद्धीन्द्रियदेवता वा न सन्ति । लोककल्पः लोकस्य सदृशः कश्चित्सन्निवेषश्च नास्ति ॥ १९ ॥ नेति तत्स्वप्नजाग्रत्सुषुप्तरूपं नास्ति । खं जलं भूरनिलोऽग्निरर्कश्च नास्ति । तच्च संसुप्तवत् शून्यवत् अप्रतर्क्यमनिर्वचनीयं तन्मूलभूतं पदमामनन्ति ॥ २० ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

देवान् ज्ञानेन्द्रियाणि अहङ्कारो ग्रसतीत्यध्याहारः गुणा ग्रसन्तीत्युपचारः गुणमयी प्रकृतिरेव ग्रसति महान्तमव्याकृतं गुणान् ग्रसतीतिविषमान् गुणान् समीकरोतीत्यर्थः ॥ १७–१८ ॥ परिणामशब्दो वृद्धेः पूर्वावस्थापरः ॥ १९ ॥ न यत्रेति जाग्रत् इत्यादि वचस्तद्गोचरं मनश्च न प्रवर्त्तेत इत्यर्थः । सत्त्वादिशब्दैर्विषमावस्थं गुणत्रयं विवक्षितम् ॥ २० ॥

## श्रीमद्वीरराघवव्याख्या

ननु, तत् क्व लीयते ? इत्यभिप्रायमालक्ष्य परस्मिन् देव एवेति वदन् तस्यापि क्वचिल्लयशङ्कां वारयितुं परमात्मस्वरूपं शोधयति—न यस्येति त्रिभिः । यच्छब्दस्य "तन्मूलभूतं पदमामनन्ति" इति तृतीयेन सम्बन्धः । पदशब्देनाऽव्याकृतलयस्थानं विवक्षितम् अव्यक्तस्य लयो नामाऽविभक्तनामरूपतया तमोवस्थापत्तिः यस्य परमात्मस्वरूपस्य कालावयवैरहोरात्रादिभिः परिणामादयो गुणा न सन्ति परिणामशब्दो वृद्धेः पूर्वावस्थापरः तत्र हेतुरनाद्यन्तमाद्यन्तरहितमत एवाऽव्यक्तं व्यक्तैरिन्द्रियैर्न व्यज्यत इति तथा नित्यमित्यनाद्यन्तत्वस्यैव विवरणम् । यद्वा, स्वरूपतः स्वभावतश्च नित्यं कारणमव्यक्तादिपृथिव्यन्तजगत्कारणम् अनेनाऽव्यक्तलयस्थानत्वयोग्यत्वं सूच्यते तथाप्यव्ययं कार्यगतैर्दोषैर्न व्येति न वैविध्यं गच्छतीति तथा ॥ १९ ॥ किञ्च, न यत्रेति जायते वर्द्धते इत्यादिवाचः तद्गोचरं मनश्च यत्र न वर्तन्ते यत्र स्वरूपे सत्त्वादयो न सन्ति सत्त्वादिशब्दैः साम्य वैषम्यावस्थं गुणत्रयं

विवक्षितम् अनेन गुणत्रयवश्यत्वव्युदासः देवताशब्दो ज्ञानेन्द्रियपरः इन्द्रियशब्दः कर्मेन्द्रियपरः महदादयो न सन्तीत्यनेन कर्मायत्त-महदादिसङ्घातात्मकदेहसम्बन्धव्युदासः करणायत्तज्ञानवत्ताव्युदासो वा, लोकाः कल्प्यन्ते यत्र स लोककल्पः सन्निवेशः ब्रह्माण्डात्मकः यत्र नेत्यनेन सन्निवेशस्य परमात्मस्वरूपगतत्वव्युदासः। तस्य प्रकृतिस्वरूपगतत्वादिति भावः ॥ २० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वैकारिका देवाः वैकारिकाहङ्कारे स्वगुणैः सह ॥ १७ ॥ तं महान्तं बीजं व्यञ्जकम् अव्याकृतं मूलप्रकृतिः कालेन हरिणा चोदितं प्रेरितं सत्त्वादिगुणान् ग्रसते ॥ १८ ॥ मूलप्रकृतिस्वरूपं वक्ति—न तस्येति। तस्याव्यक्तस्य त्रुटिलवादिकालावयवैः परिणामादयो गुणा न सन्ति तदव्यक्तं मूलप्रकृतिं विश्वसृजां कारणम् आमनन्तीति शेषः इतरविशेषणमुक्तयोः सममित्याशयेनाह—अनादीति ॥ १९ ॥ कालेनेत्युक्तस्य हरेः स्वरूपं दर्शयति—न यत्रेति। वागादयो यत्र कञ्चन विशेषं नापादयन्तीति शेषः ॥ २० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

भूतादिस्तामसोऽहङ्कारः तैजसोऽहङ्कार इन्द्रियाणि ग्रसति महान् अहङ्कारं गुणैस्तद्वृत्तिभिः सह ग्रसति तं महान्तम् ॥१७॥ अव्याकृतं प्रधानम् ॥ १८ ॥ तस्य प्रधानस्य कालावयवैरहोरात्रैः परिणामो विपरिणामश्चतुर्थो विकारः अनादीति प्रथमो विकारो जन्मनः अनन्तमित्यन्तो न अव्यक्तमित्यस्तित्वलक्षणविकारो न नित्यं सदैकरूपमिति वृद्धिर्न अव्ययमित्यपक्षयो नेति विकारषट्कं निषिद्धम् ॥ १९ ॥ किञ्च, रागादिगोचरस्य सविकारस्य विकारा भवन्ति इदं तु न तथेत्याह—न यत्रेति द्वाभ्याम्। लोककल्पः लोकरूपसन्निवेशो रचनाविशेषः ॥ २०-२१ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

भूतादिस्तामसोऽहङ्कारः गुणैर्वृत्तिभिः सह तैजस इन्द्रियाणि ग्रसति अनेनेन्द्रियाणां स्वरूपतोऽणुत्वेपि वृत्तितः किञ्चिद्व्यापकत्वमिति सूचितम् ॥ १७ ॥ अव्याकृतंमूलप्रकृतिः भगवच्छक्तिः गुणान् सत्त्वादीन् ग्रसते समीकरोति अत्र चकारात् पुरुषाव्यक्तयोरिति वक्ष्यमाणत्वाच्चायमर्थो बोध्यः प्रकृतिः परे देवे लीयते इति तथाचाम्नायति सुबालोपनिषदि 'पृथिव्यप्सु लीयते आपस्तेजसि तेजो वायौ प्रलीयते वायुराकाशे प्रलीयते आकाश इन्द्रियेषु इन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ लीयन्ते भूतादिर्महति महानव्यक्ते अव्यक्तमक्षरे अक्षरन्तमसि तमः परे देवे एकीभवति' इति। अत्राकाशान्तः सुगमोऽन्वयः परत्र पाठक्रमानर्थक्रमस्य बलीयस्त्वेन आकाशस्तन्मात्रेषु तन्मात्राणि भूतादौ तामसाहङ्कारे इन्द्रियाणीन्द्रियेषु कार्यकारणयोरभेदात्स्वकारणे राजसाहङ्कारे लीयन्ते इत्यन्वयः। तत्र तन्मात्रेष्विति बहुवचनं पृथिव्यादीनामपि गन्धादिद्वारा लयदर्शनार्थम् इन्द्रियेष्विति बहुवचनात् सात्त्विकाहङ्कारे देवताः मनश्च लीयन्ते इति भावः। त्रिविधोप्यहङ्कारो महति महानव्यक्ते लीयते अव्यक्तमक्षरे इत्यत्र गुणसाम्यगुणवैषम्यकार्योन्मुख्यवस्थाभेदेन तमोऽक्षरमव्यक्तमिति प्रकृतेरेवावस्थात्रयम् तथाचाव्यक्तमक्षरे लीयते इति कार्योन्मुख्यावस्थां परित्यज्य गुणवैषम्यावस्थां प्राप्नोति प्रकृतिरक्षरं तमसीति गुणवैषम्यावस्थां परित्यज्य गुणसाम्यावस्थां प्राप्ता सती परे देवे परब्रह्मणि श्रीपुरुषोत्तमे एकीभवति सूक्ष्मशक्तिरूपतयाऽवतिष्ठत इत्यर्थः ॥ १८ ॥ तत्सर्वकारणं परदेवाख्यं तत्त्वं कीदृशमित्याकाङ्क्षायां तत्तत्त्वं निरूपयति—न तस्येति त्रिभिः। अनाद्यन्तमत एव नित्यम् ॥ १९ ॥ वाचो मनश्च इयत्ताबोधकतया यत्र न प्रवर्तन्ते। किञ्च, यत्र सत्त्वादयः सन्निवेशान्ताः प्रातिकूल्येन प्रवर्तन्ते इत्यर्थः। लोकाः भूरादयः कल्पन्ते यत्र स लोककल्पः सन्निवेशः ब्रह्माण्डात्मकः ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तं त्रिविधमप्यहङ्कारं महान् ग्रसते। तं च महान्तं सत्त्वादयो गुणा ग्रसन्ते कालेन नोदितमव्याकृतं प्रधानं गुणान् ग्रसते ॥ १७ ॥ परमात्मरूपनिरूपणपूर्वकं प्रधानस्य तस्मिँल्लयमाह—न तस्येति त्रिभिः। यदेवम्भूतं सर्वकारणं परं ब्रह्म तत्प्रकृतेरपि मूलभूतं पदं तल्लयस्थानमामनन्तीति त्रयाणामन्वयः। सर्वकारणत्वेऽपि तस्य निर्विकारत्वमाह—कालावयवैः अहोरात्रादिभिस्तस्य परिणामादयो गुणा विकारा नैव भवन्ति। परिणामो विपरिणामः। अनाद्यनन्तं जन्ममृत्युशून्यम्। अव्यक्तमिति, इन्द्रियैरभिव्यक्तिराहित्येन अस्तित्वविकारशून्यमित्यर्थः। नित्यमिति सर्वदैकरूपतया ह्रासवृद्धिरहितमित्यर्थः। अव्ययं अपक्षयशून्यम् ॥ १८ ॥ किञ्च वागादिगोचरस्य सविशेषस्य प्राकृतस्यैव विकारा भवन्तीदं न तथाऽतस्ते कथं स्युरित्याह—न यत्रेति। यत्र ब्रह्मणि जायते अस्ति वर्द्धत इत्यादिवचो न प्रवर्त्तन्ते। मनश्चेदमित्थमिति न निश्चिनोति। सत्त्वादयः प्राणादयश्च न सन्ति। खलु निश्चये। लोककल्पो

लोकसदृशः सन्निवेशः प्राकृतो देहश्च नास्ति॥ १९॥ अतएवाकाशादयः पृथगपि न सन्ति। अर्कोऽपि तत् प्रकाशको न भवति तस्यैव सर्वप्रकाशकत्वात्स्वयम्प्रकाशत्वाच्च। स्वप्नजाग्रदाद्यवस्थायुक्तमपि तन्न भवति। किन्तु इन्द्रियाभावात्सुषुप्तवत् अतिसूक्ष्मत्वेनेन्द्रियागोचरत्वाच्छून्यवच्च भवति आमनन्ति। 'पूरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' इत्यादयो वेद इति शेषः॥ २०॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तैजस इति। तैजसो राजसाहंकारः, गुणैर्वृत्तिभिः सह, इन्द्रियाणि ग्रसति। वैकारिकः सात्त्विकाहंकारश्च, गुणैः सह देवान् ग्रसते, ततः अहंकारं, महान् महत्तत्वं, ग्रसति। त्रिविधोऽप्यऽहंकारः महत्तत्त्वे लीयते इत्यर्थः। तं महान्तं, च सत्त्वादयः गुणाः ग्रसन्तीत्युपचारः। गुणमयी प्रकृतिरेव महान्तं ग्रसतीत्यर्थः। हे राजन्, कालेन नोदितं कालेन चालितं, अव्याकृतं प्रधान् गुणान् ग्रसते। विषमान् समीकरोति, समीभावापन्नगुणं भवतीति यावत्। महदादिनामरूपविभागरहितगुणसाम्यावस्थापन्नं तत्प्रधानमव्यक्तशब्देनाभिधीयते॥ १७॥ ननु तत् क लीयते इति तदभिप्रायमालक्ष्य परस्मिन् देवे एवेति वदंस्तस्यापि कचिल्लया-शङ्कां वारयितुं परमात्मस्वरूपं शोधयति न यस्येति त्रिभिः। नेति। यच्छब्दस्य तन्मूलभूतं पदमामनन्तीति तृतीयेन संबन्धः। यस्य परमात्मस्वरूपस्य, कालावयवैः अहोरात्रादिभिः परिणामादयः गुणाः न सन्ति। परिणामशब्दः पूर्वावस्थापरित्यागपूर्व-मुत्तरावस्थापरः। तत्र हेतुं प्रदर्शयन् परदेवं विशिनष्टि। अनाद्यनन्तं आद्यन्तरहितं, अत एव व्यक्तैरिन्द्रियैर्न व्यज्यते इत्यव्यक्तम्। तथा नित्यमित्यनाद्यनन्तत्वस्यैव विवरणम्। यद्वा। स्वरूपतः स्वभावतश्च नित्यं, कारणमव्यक्तादिपृथिव्यन्तजगत्कारणम्, अनेनाऽ-व्यक्तलयस्थानत्वयोग्यत्वं सूचितम्। तथापि, कार्यगतैर्दोषैर्नेव्येति न वैविध्यं गच्छतीत्यव्ययम्॥ १८॥ न यत्रेति। किं यत्र परे देवे, वाचः जायते वर्द्धते इत्यादिवाचः, न प्रवर्त्तन्ते। तद्गोचरं यन्न वर्त्तते इत्यर्थः। मनः न यत्र मनोऽपि न प्रवर्त्तते, यन्मनोगोचरमपि न वर्त्तते इत्यर्थः। यत्र यदीयस्वरूपे, सत्त्वं तमः रजो वा न सत्त्वादिशब्दैः साम्यावस्थापन्नं गुणत्रयं विवक्षितं, तन्निषेधेन गुणत्रय-वश्यताव्युदासः। यत्र प्राणाश्च बुद्धिश्च इन्द्रियाणि च देवताश्च ताः अमी वा महदादयोऽपि न। तत्र प्राणबुद्धी प्रसिद्धे। इन्द्रियशब्दः कर्मेन्द्रियपरः। देवताशब्दो ज्ञानेन्द्रियपरः, महदादयः प्रसिद्धाः। अनेन कर्मोद्यतमहदादिसंभूतात्मकदेहसंबन्ध-व्युदासः। करणायत्तज्ञानवत्ताव्युदासो वा। लोकाः कल्पन्ते यत्र स लोककल्पः सन्निवेशो ब्रह्माण्डात्मकः यत्र न। अनेन संनिवेश परमात्मस्वरूपगतत्वव्युदासस्तस्य प्रकृतिस्वरूपगतत्वादिति भावः॥ १९॥ नेति। तत्परमात्मस्वरूपं स्वप्नजाग्रत् न। जीववत् स्वप्नजागरादिरूपसंकोचविकाशार्हधर्मभूतज्ञानाश्रयं न, नित्यासंकुचितधर्माश्रयमिति यावत्। तत् सुषुप्तं न च सुषुप्त्यवस्था-रहितं स्वप्नादपि सुषुप्तावत्यन्तज्ञानसंकोचस्तत्तारहितं चेत्यर्थः। तत् खं न, जलं न, भूः न, अनिलः न, अग्निः न, अर्को न, अनेन तत् खादिविजातीयं विवक्षितम्। एवं 'न यत्र वाचः' इत्यादिना 'न च तत् सुषुप्तम्' इत्यन्तेन तस्य जीववैजात्यमुक्तम्। एवं परमात्म-स्वरूपं जीवजडाभ्यां विलक्षणतया शोधितम्। अथ किं बहुनेत्यभिप्रेत्याह। तत् संप्रुप्ते हि जीवे देहान्तरावस्थितेऽपि बाह्याभ्यन्तर-ब्राह्मणत्वस्य सुखदुःखादिविकाराणां चानवभासः दृष्टः। आकाशस्य सर्वगतत्वेऽपि व्याप्यगतदोषास्पर्शश्च दृष्टः। एवं परमात्म-स्वरूपमपि चिदचिदात्मकजगदन्तरात्मतयावस्थितमपि बाह्याभ्यन्तरविकारविरहितं आकाशवन्निर्मलं चेत्यर्थः। अप्रतर्क्यं जडजीव-सजातीयत्वेन तर्कितुमशक्यम्। तदेतत् मूलभूतं सर्वकारणं परमात्मस्वरूपं, पदमव्यक्तलयस्थानं, आमनन्ति। कथयन्ति वेदान्ता इति शेषः। 'महानव्यक्ते लीयते क्षरं तमसि लीयते तमः परे देवे एकीभवति' इत्याद्या वेदान्ता उपपादितजडजीववैजात्यस्य अप्रतर्क्य-मित्युपसंहार इत्यतो न पौनरुक्त्यम्॥ २०॥

### हिन्दी अनुवाद

तत्पश्चात् महत्तत्त्व अहङ्कार को और सत्त्व आदि गुण महत्तत्त्व को ग्रस लेते हैं। परीक्षित्! यह सब काल की महिमा है। उसीकी प्ररणा से अव्यक्त प्रकृति गुणों को ग्रस लेती है और तब केवल प्रकृति-ही-प्रकृति शेष रह जाती है॥ १८॥ वही चराचर जगत् का मूल कारण है। वह अव्यक्त, अनादि, अनन्त, नित्य और अविनाशी है। जब वह अपने कार्यों को लीन करके प्रलय के समय साम्यावस्था को प्राप्त हो जाती है, तब काल के अवयव वर्ष, मास, दिन-रात, क्षण आदि के कारण उसमें परिणाम, क्षय, वृद्धि आदि किसी प्रकार के विकार नहीं होते॥ १९॥ उस समय प्रकृति में स्थूल अथवा सूक्ष्मरूप से वाणी, मन, सत्त्वगुण, रजोगुण, तमोगुण, महत्तत्त्व आदि विकार, प्राण, बुद्धि, इन्द्रिय और उनके देवता आदि कुछ नहीं रहते। सृष्टि के समय रहने वाले लोकों की कल्पना और उनकी स्थिति भी नहीं रहती॥ २०॥

न स्वप्नजाग्रन्न च तत् सुषुप्तं न खं जलं भूरनिलोऽग्निरर्कः ।
संसुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति ॥ २१ ॥

लयः प्राकृतिको ह्येष पुरुषाव्यक्तयोर्यदा । शक्तयः सम्प्रलीयन्ते विवशाः कालविद्रुताः ॥ २२ ॥

बुद्धीन्द्रियार्थरूपेण ज्ञानं भाति तदाश्रयम् । दृश्यत्वाव्यतिरेकाभ्यामाद्यन्तवदवस्तु यत् ॥ २३ ॥

दीपश्चक्षुश्च रूपं च ज्योतिषो न पृथग् भवेत् । एवं धीः खानि मात्राश्च न स्युरन्यतमादृतात् ॥ २४ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—स्वप्नजाग्रत् न तत् सुषुप्तं न खं न जलं भूः अनिलः अर्कः अग्निः न संसुप्तवत् शून्यवत् अप्रतर्क्यं तन् मूलभूतं पदम् आमनन्ति ॥ २१ ॥ यदा विवशाः कालविद्रुताः शक्तयः सम्प्रलीयन्ते तदा एषः पुरुषाव्यक्तयोः प्राकृतिकः लयः ॥ २२ ॥ बुद्धीन्द्रियार्थरूपेण तदाश्रयं ज्ञानं भाति दृश्यत्वाव्यतिरेकाभ्याम् आद्यन्तवत् यत् अवस्तु ॥ २३ ॥ दीपः चक्षुः रूपं च ( यथा ) ज्योतिषः पृथक् न भवेत् एवं धीः खानि मात्राः च अन्यतमात् ऋतात् ( भिन्नाः ) न स्युः ॥ २४ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

स्वप्नजाग्रत्स्वप्नजागरावस्थायुक्तम् । संसुप्तवदिंद्रियाभावात् । शून्य सादृश्ये हेतुः । अप्रतर्क्यम् । न पुनः शून्यमेवेत्याह तदिति ॥ २१ ॥ उपसंहरति लयम् इति । शक्तयः सत्त्वादयः ॥ २२ ॥ आत्यंतिकं लयमाह बुद्धींद्रियेति द्वादशभिः । आत्यंतिकलयो मोक्षः स च ब्रह्मज्ञानेन सर्वप्रपंचलयात्मकः । न च प्रपंचस्यात्मवत्सत्यत्वे लयः संभवतीति ज्ञानरूपाद्ब्रह्मणः पृथग्भूतस्य तस्या-सत्त्वमुपपादयति । बुद्धिश्चेंद्रियाणि चार्थाश्चेत्येवं ग्राहककरणग्राह्यरूपेण तेषामाश्रयभूतं ज्ञानमेव भाति न पृथक् । तत्र हेतुमाह । दृश्यत्वाव्यतिरेकाभ्यामिति । अतो यदाद्यंतवत्तदवस्तु । अत्रैवं प्रयोगः विमतं सन्न भवति । दृश्यत्वात्कारणाव्यतिरेकादाद्यंतवत्त्वाच्च रज्जुसर्पादिवदिति ॥ २३ ॥ तत्राव्यतिरेकं दृष्टांतेन प्रपंचयति दीप इति । दीपचक्षूरूपाणां तेजोविशेषाणां तेजसो यथा न व्यतिरे-कस्तथा धीः कर्त्री खानि करणानि मात्रा विषयाः ऋताद्ब्रह्मणः पृथङ् न स्युर्ब्रह्मकार्यत्वात् । नन्वेवं कार्यकारणयोरभेदे कार्यासत्त्वे कारणस्याप्यसत्त्वं प्रसज्जेत तत्राह । अन्यतमादिति । कार्यादत्यंतव्यतिरिक्ताद्ब्रह्मणः प्रपंचाद्ब्रह्मणोऽस्ति व्यतिरेकः प्रपंचस्य तु ततो नास्ति व्यतिरेक इत्यर्थः ॥ २४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

सुषुप्तं व्यष्टिसुषुप्तिर्नेति ज्ञेयम् । सुषुप्तवत् कार्यादर्शनात् ॥ २१ ॥ संप्रलीयंते साम्येनाक्षुब्धास्तिष्ठंति । शक्तयः पृथिव्यादय इति तीर्थः । लयः । कथित इति शेषः । कालेन विद्रुता अभिभूता अत एव विवशाः ॥ २२ ॥ बुद्धिरूपेणेंद्रियरूपेण विषयरूपेण च तेषां बुद्ध्यादीनामाश्रयमात्मस्वरूपं ज्ञानमेव । तत्रात्मस्वरूपज्ञानत्वे । अतो दृश्यत्वाव्यतिरेकाभ्याम्, अत्र बुद्ध्यादीनामात्मस्वरूप-ज्ञानत्वे निश्चेतव्ये । एवं वक्ष्यमाणरीत्या । प्रयोगोऽनुमानम् । विमतं विवादास्पदीभूतं बुद्ध्यादि । कारणाव्यतिरेकात् कारणा-भिन्नत्वात् । आदिना स्वप्नदृश्यवद्घटादिवदिति गृह्यते ॥ २३ ॥ तत्र द्वयोर्हेत्वोः । अत्राक्षिपति—नन्विति । इत्यर्थ इति—कारण-सत्तातः कार्यसत्ता न पृथक्, कार्यसत्तातः कारणसत्ता तु पृथगस्ति; तच्च मृद्घटादौ स्फुटतरमिति भावः । यद्वा—अन्यतमात्सुषुप्ति-समाध्यादौ बुद्ध्यादिवावेऽपि परिशिष्यमाणत्वाद्व्यतिरिक्तत्वम् ॥ २४ ॥

## अन्वितार्थप्रकाशिका

लय इति ॥ विवशाः परतंत्राः पुरुषाव्यक्तयोः शक्तयः सत्त्वादयः कालेन विद्रुताः चालिता यदा उक्तप्रकारेण संप्र-लीयन्ते तदा ह्येष प्राकृतो लयो भवति ॥ २१ ॥ ज्ञानसाध्ये ब्रह्मणि लयरूपमात्यन्तिकं प्रलयं वदन् तदुपकरणत्वेन प्रपञ्चस्य ब्रह्माभेदमाह—बुद्धीति ॥ बुद्धिश्च इन्द्रियाणि च अर्थाश्चेत्येवं ग्राहककरणग्राह्यरूपेण तेषामाश्रयभूतं ज्ञानात्मकं ब्रह्मैव भाति न ततः पृथक्किंचिदस्ति । यतः दृश्यत्वाव्यतिरेकाभ्यां दृश्यत्वात् कारणस्याव्यतिरेकः कारणव्यतिरेकेण पृथगभावः तस्माच्चेति हेतुभ्याम् आद्यन्तवत् यद्वस्तु तदवस्तु असत् अत्रैवं प्रयोगः विमतं सन्न भवति । दृश्यत्वात् कारणव्यतिरेकेणाभावात् आद्यन्त-वत्त्वाच्च ॥ २२ ॥ कारणाव्यतिरेकं प्रपञ्चयति—दीप इति ॥ यथा दीपश्चक्षुश्च रूप चेति त्रयं तेजःकार्यं तेजसः पृथक् न

भवेत् एवं धीः कर्त्री खानि इन्द्रियाणि करणानि मात्राः शब्दादयो विषयाश्च अन्यतमात् तेभ्यो भिन्नात् ऋतात्सत्याद्ब्रह्मणः पृथक् न स्युः। प्रपञ्चाद्ब्रह्मणोऽस्ति व्यतिरेकः प्रपञ्चस्य ततो नास्तीति ब्रह्मणो जगन्न भिन्नम्। एतेन कार्यासत्त्वे तदभिन्नस्य कारणस्याप्यसत्त्वं स्यादिति प्रत्युक्तम्॥ २३॥ यत्तु विश्वतैजसप्राज्ञा इति जीवस्य नानात्वं तदपि मिथ्येत्याह– बुद्धेरिति॥ जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः अवस्थाः विवेकिभिर्बुद्धेरेवेत्युच्यते। अतो हे राजन्! प्रत्यगात्मनि त्वदिदमवस्थाप्रयुक्तं नानात्वं विश्वतैजसप्राज्ञरूपं मायामात्रम् अविद्यया कल्पितमित्यर्थः॥ २४॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

पदं लयस्थानम्॥ २१॥ पुरुषस्य लयोऽत्यन्तज्ञानसङ्कोचः अव्यक्तस्य लयो नाम अविभक्ततमोऽवस्थापत्तिः शक्तयः परमात्मनोऽपृथक्सिद्धविशेषणतया शक्तिशब्दवाच्याः सर्वपदार्थाः॥ २२॥ बुद्धीन्द्रियार्थरूपेणेत्यादिबुद्धीन्द्रियार्थेति पूर्वश्लोके शक्तिशब्देनोक्तसर्वपदार्थानां परमात्मन्यपृथक्सिद्धविशेषणत्वमेव प्रपञ्चयत्यनेन श्लोकन ज्ञानशब्दः परमात्मवाची 'सत्यं ज्ञानम्' इति प्रयोगात्। बुद्ध्यादिसर्ववस्त्वाश्रयः परमात्मा बुद्धीन्द्रियादिसर्ववस्तुशरीरतया भाति प्रामाणिकैस्तथा ज्ञायत इत्यर्थः। तत्र हेतुमाह—दृश्यत्वाव्यतिरेकाभ्यामिति। परमात्मशरीरत्वेन 'यस्य चक्षुः शरीरम्' इत्यादि प्रमाणैर्ज्ञायमानत्वात् अतएव परमात्मानं विना अवस्थानायोगाच्च स एव तत्तच्छरीरको भातीत्यर्थः। परमात्मशरीरत्वेऽपि शरीरशरीरिणोः स्वभावभेदमाह–आद्यन्तवदस्तु तदिति। बुद्धीन्द्रियादिकं न परमात्मस्वरूपवन्नित्यम् अपि त्वाद्यन्तवत् तस्मादचिद्वस्तुसृष्टयन्तर्भूतमित्यर्थः॥ २३॥ एवं सर्ववस्तु-शरीरत्वादपृथक्भाव उक्तः विश्वशरीरस्य तस्य कारणत्वादुपकारकत्वादाधारत्वाच्च अव्यतिरेकमाह—दीप इति। तेजः कार्यं दीपः तेजोऽनुग्राह्यश्चक्षुः इन्द्रियाणि ह्यहङ्कारकाणि तेजस्याश्रितं रूपम् अतो दीपादेर्न तेजो हित्वाऽवस्थानं धीशब्दोपलक्षितं बुद्धिरूपान्तः-करणं बुद्धीन्द्रियार्थरूपेणेति पूर्वमुक्तत्वात् एवमिन्द्रियान्तःकरणविषयाणां परमात्मसृष्टत्वात् तदनुग्राह्यत्वात् तदाश्रितत्वाच्च अन्यतमात् बुद्ध्यादिभ्यो विलक्षणतमात् ज्योतिः शब्दवाच्यात् परमात्मनः ऋते तेषां नाऽवस्थानमित्यर्थः॥ २४॥

## श्रीमद्वीरराघवव्याख्या

नेति। स्वप्नजाग्रज्जीववत्स्वप्नजागरादिरूपसङ्कोचविकाशार्हधर्मभूतज्ञानाऽनाश्रयं नित्यासङ्कुचितज्ञानाश्रयमितियावत् न च तत् सुषुप्तं सुषुप्त्यवस्थारहितं स्वप्नादपि सुषुप्तावत्यन्तज्ञानसङ्कोचस्तद्रहितं चेत्यर्थः। न खम् इत्यादिनाऽऽकाशजलाग्नि-वाय्वर्कविजातीयत्वं विवक्षितम् अनेन जडप्रकृतिविलक्षणत्वमुक्तम्। न यत्र वाचो न मनश्चेत्यादिना न च तत्सुषुप्तमित्यन्तेन जीव-वैजात्यमुक्तम् इत्थं जीवजडाभ्यां विलक्षणं परमात्मस्वरूपं शोधितं किं बहुनेत्यभिप्रेत्याह–संसृप्तवच्छून्यवदप्रतर्क्यं यथा संसृप्तस्तद्वत् शून्यशब्देनाकाशो विवक्षितः तद्वच्च संसृप्ते हि जीवे देहान्तरसंस्थितेऽपि ब्राह्मणाभ्यन्तरब्राह्मणत्वादिविभागसुखदुःखादिविकारानव-भासः आकाशस्य सर्वगतत्वेपि व्याप्यगतदोषास्पर्शश्च दृष्टः एवं परमात्मस्वरूपमपि चिदचिदात्मकजगदन्तरात्मतयाऽवस्थितमपि बाह्याभ्यन्तरविकारविधुरमाकाशवन्निर्मलञ्चेत्यर्थः। अप्रतर्क्यं जडजीवसजातीयत्वेन तर्कयितुमशक्यं तदेतन्मूलं सर्वकारणं परमात्मस्वरूपं पदमव्यक्तलयस्थानमामनन्ति वेदान्ता इति शेषः। "महानव्यक्ते लीयते अक्षरं तमसि लीयते तमः परे देव एकी-भवति" इत्याद्या वेदान्ताः उपपादितजडजीववैजात्यस्याप्रतर्क्यमित्युपसंहार इत्यतो न पौनरुक्त्यम्॥ २१॥ प्राकृतिकप्रलय-निरूपणमुपसंहरति—जय इति। यदा पुरुषाव्यक्तयोर्लयः यदा च शक्तयः पृथिव्यादिमहदन्ताः कालेन विद्रुताः चालिताः (चोदिताः) स्वस्वकारणेषु प्रलीयन्ते स एष प्राकृतिको लय इत्यर्थः। तत्र पुरुषस्य लयो नामात्यन्तज्ञानसङ्कोचेन परमात्मसंश्लेषविशेषः अव्यक्तस्य लयस्तु अविभक्ततमोऽवस्थापत्तिरूप इत्युक्त एव लयो नामाविभक्तनामरूपतमोवस्थाप्राप्तिरेवेतितदर्थः। शक्तिशब्देन पृथिव्यादिसर्वपदार्थानां परमात्मानं प्रत्यपृथक्सिद्धविशेषणत्वं सूचितम् कार्योपयुक्तमपृथक् सिद्धविशेषणं शक्तिः॥ २२॥ एतदेव सुस्पष्टं प्रपञ्चयति—बुद्धीन्द्रियार्थरूपेणेति। ज्ञानशब्दः परमात्मवाची "सत्यं ज्ञानमनन्तम्" इति प्रयोगात् बुद्धीन्द्रियार्थ-रूपेण बुद्ध्यादयो रूपं शरीरं यस्य तस्य भावस्तत्ता तथा बुद्ध्यादिसर्ववस्तुशरीरकतया एवेत्यर्थः। तदाश्रयं बुद्ध्यादिसर्ववस्त्वा-श्रयम् अनेन धारकत्वमुक्तम् पूर्वेण तु नियन्तृत्वं नियाम्यं हि शरीरं भाति प्रामाणिकानामिति शेषः। प्रामाणिकैस्तथा ज्ञायत इत्यर्थः। अत्र हेतुमाह—दृश्यत्वाव्यतिरेकाभ्यामिति "यस्य चक्षुः शरीरम्" इत्यादिप्रमाणैः परमात्मशरीरत्वेन ज्ञायमानत्वादत एव परमात्मानं विनाऽवस्थानायोगाच्च स एव तच्छरीरको भातीत्यर्थः। परशरीरत्वेऽपि शरीरशरीरिणोः स्वभावभेदमाह–आद्यन्तवद-वस्तुवदिति। बुद्धीन्द्रियादिकं न परमात्मस्वरूपवन्नित्यमपि त्वाद्यन्तवदत एव तदवस्तु न वसत्येकरूपेणेत्यवस्तु सततपरिणामि॥२३॥ एवं सर्ववस्तुशरीरकत्वादपृथग्भाव उक्तः। अथ विश्वशरीरकस्य तस्य कारणत्वादुपकारत्वाद्धारकत्वाच्चाव्यतिरेकमाह—दीप इति। तेजः कार्य्ये हि दीपः तेजोनुग्राह्यं चक्षुः इन्द्रियाणि तेजः कारणभूताहङ्कारकार्याणि इति यस्याश्रितं रूपं तद्धर्मः अतो दीपादेर्न

तेजो हित्वाऽवस्थानं दीपशब्दोपलक्षितं बुद्धिरूपान्तःकरणं बुद्धीन्द्रियार्थरूपेणेति पूर्वमुक्तत्वात् एवम् इन्द्रियान्तःकरणविषयाणां परमात्मसृष्टत्वात्तदनुग्राह्यत्वात्तदाश्रितत्वाच्चान्यतमादू बुद्ध्यादिभ्योऽपि विलक्षणतमाज्ज्ञानशब्दवाच्यात्परमात्मन ऋते तेषां नावस्थानम् इत्यर्थः ॥ २४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

आकाशाद्यन्यतमवच्च न भवतीत्याह—न स्वप्नेति। "स वा एष आत्मा नेति नेति" इति श्रुतेः। सुषुप्तवत्सुखरूपं सुखमस्वाप्समिति सुषुप्तिपदेन सुखं लक्ष्यते। शून्यवत्सूक्ष्मम् अत एवाप्रतर्क्यं तर्कागोचरं मूलभूत सर्वस्य प्रधानकारणं पद्यत इति पदं गम्यमित्यर्थः ॥ २१ ॥ कालाख्यपरमात्मस्वरूपमुक्त्वा लयं निर्दिशति—लय इति। यदा यस्मिन् लये कालविद्रुताः कालेन समाप्तजीवनावधयः अत एव विवशाः हर्यधीनाः पुरुषाव्यक्तयोर्ब्रह्मप्रकृत्योः शक्तयः पृथिव्यादयः सम्प्रलीयन्ते एष लयः प्राकृतिको हि नामेति शेषः ॥ २२ ॥ चराचरेऽवशिष्यमाणं किम्? तत्राह—बुद्धीति। तदा प्रलय आश्रयन्ते ऽनेन चराचरेणेत्याश्रयं प्रपञ्चाधारभूतं ज्ञानं नित्यनिर्दोषज्ञानात्मकं ब्रह्म बुद्धीन्द्रियार्थरूपेण बुद्ध्या ज्ञानात्मिकया लक्ष्म्या ज्ञानहेतुत्वेन बुद्धिशब्दवाच्यया त्रय्या मुक्तश्रेण्या वा चक्षुरादीन्द्रियविषयसौन्दर्यातिशयेन भाति ज्योतीरूपेण वर्तते कथंकारं वर्तत इति तत्राह—अन्वयव्यतिरेकाभ्यामिति। प्रपञ्चसद्भावासद्भावाभ्यां कालाभ्यां वर्तत इति। यद्वा, बुद्धीन्द्रियात्मकदेहाकारेण "बुद्धिवान्मनोवान्" इत्यादिश्रुतेः। अनेन "सम्विदेव परितो विराजते" इति पूर्वाचार्यवचनाज्ज्ञातृज्ञेयविवर्जितज्ञानमिति व्याख्यानं प्रत्युक्तं तादृक्ज्ञानस्य पाषाणकल्पत्वेन हेयत्वात् "नासदासीत्" इतीतरवस्तुनिषेधाद्धात्रादिसद्भावः कथमत्राह—आद्यन्तवदिति। यच्छरीरयोगवियोगवत्तदवस्त्वस्वतन्त्रं यदादावन्ते च वर्तमानं लक्ष्म्यादितत्त्वं तदप्यस्वतन्त्रं यदादिनिधनयुक्तम् उत्पत्तिनाशवत्तद्वस्तुनो ब्रह्मणो व्यतिरिक्तं न भवति तदध्यस्तत्वेन तज्ज्ञाने लीयत इति यन्मतं तदासुरम् तदुक्तम्—

जीवविष्ण्वोरभेदश्च देहयोगवियोजने। विष्णोर्दुःखव्रणित्वादिपराभावस्तथैव च ॥
अस्वातन्त्र्यं च वेदादावुक्तवद्भासते विभोः। क्वचित्क्वचिद्विमोहाय दैत्यादीनान्दुरात्मनाम्" ॥ इति ॥

एतमर्थं सोदाहरणमाह—दीप इति। दीपादिकं ज्योतिषस्तेजसस्तत्त्वात्तच्छक्तिमन्तरेण पृथक् स्वातन्त्र्येण प्रकाशकं न भवेत् एवं बुद्ध्यादिकमपि मारुतांमुख्यप्राणादपि पृथक् ज्ञानजननशक्तिमन्न वायुना वै गौतमसूत्रेण "प्राणेन हीदम्" इत्यादिश्रुतेः। किमुत परब्रह्मणः एतस्माज्जायते प्राणः" आत्मन एव प्राणो जायते, ब्रह्मणो वा एतानि करणानि" इति श्रुतेः ॥ २४ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तत्र तदाश्रयत्वतत्प्रकाश्यत्वव्यतिरिक्तत्वेभ्यो बुद्धीन्द्रियादीनां परमात्मस्वभावशक्तिमयत्वमाह—बुद्धीति। अन्तः करणबहिःकरणविषयरूपेण परमात्मलक्षणं ज्ञानमेव भवति तस्मादनन्यदेव बुद्ध्यादिवस्त्वित्यर्थः। यतस्तदाश्रयं तेषामाश्रयरूपं तज्ज्ञानं क्लीबत्वमार्षे तथापि राजभृत्ययोरिवात्यन्त एव भेदः स्यात् तत्र हेत्वन्तरेऽप्याह—दृश्यत्वं तत्प्रकाश्यत्वम् अव्यतिरेकः तदव्यतिरेके व्यतिरेकस्ताभ्यां तस्मात् "एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा" इत्यादिवत् बुद्ध्यादीनां तत्स्वाभाविकशक्तिमयत्वमेव सेत्स्यतीति भावः। यतवत्वाद्यन्तवत् शुक्त्यादौ कदाचिदेवारोपितं रजतं तत् पुनरवस्तु तदाश्रयकत्वतत्प्रकाश्यत्वतदव्यतिरेकाभावात् शुक्त्यादिवस्तु न भवति शुक्त्यादिभ्योऽनन्यन्न भवतीत्यर्थः। ततश्चैकविज्ञाने सर्वविज्ञानप्रतिज्ञाविरुद्धचेतेति भावः। एवमसत्कार्य्यवादान्तरेऽपि ज्ञेयम् ॥ २३ ॥ एकस्यापि वस्तुनोंऽशभेदेनाश्रयाश्रयित्वं स्वयमेव दृष्टान्तेन स्पष्टयति—दीप इति। दीपचक्षूरूपाणां महाभूतज्योतिरंशरूपत्वात् दीपादिकं न ततः पृथक् एवं धीप्रभृतीनि ऋतात्परमात्मनो न पृथक् तथापि यथा महाभूतज्योतिर्दीपादिदोषेण न लिप्यते तथा बुद्ध्यादिदोषेण परमात्मापि तद्वदस्याप्यन्यतमत्वादित्याह अन्यतमादिति ॥ २४ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

उपसंहरति—लय इति। शक्तयः सत्त्वाद्या एव लीयन्ते ननु तयोः कदापि क्वापि क्षतिरिति भावः ॥ २२ ॥ अथ निर्वाणमोक्षार्थिनां ब्रह्मैक्यभावनामय आत्यन्तिकः प्रलय उच्यते; तच्च सिषाधयिषितं ब्रह्मैक्यं ब्रह्मकार्य्यस्य द्वैतप्रपञ्चस्यासत्यत्वे साधित एव स्यादिति प्रौढिश्चेत्तदा ऽसत्यमेवेदं कार्य्यजातमित्याह—बुद्धीन्द्रियेति नवभिः। ज्ञानं ब्रह्मैव बुद्धीन्द्रियार्थरूपेण भाति बुद्ध्यादीनां ब्रह्मशक्तिपरिणामत्वादिति भावः। ज्ञानं कीदृशम्? तदाश्रयं तस्य बुद्ध्यादिप्रपञ्चस्य कारणत्वादाश्रयः क्लीबत्वमार्षे किञ्च, यत् बुद्ध्यादिप्रपञ्चजातं तत् आद्यन्तवत् उत्पत्तिलयविशिष्टम् अतो वस्तुत्वेनाभिज्ञातमपि असार्वकालिकत्वात् परमार्थतोऽवस्त्वेवेत्यर्थः। अपरावपि हेतू आह—दृश्यत्वञ्च अव्यतिरेकः कारणादव्यतिरेकाभावश्च ताभ्यामपि अवस्तु अत्रैवं प्रयोगः

बुद्ध्यादिप्रपञ्चजातं दृश्यत्वात् कारणादतिरेकादाद्यन्तवत्त्वाच्च कनककुण्डलादिवत् परमार्थतोऽवस्तु अवस्तु मिथ्यैवेति मतेपि स्याच्चेचित्सम आत्मवदित्यग्रिमग्रन्थमनुसृत्य दृश्यत्वादित्यत्र चिद्भिन्नत्वे सतीति विशेषणमवश्यं स्यादन्यथाऽस्य हेतौ व्यभिचारः स्यात् "तासां मध्ये साक्षाद् ब्रह्मगोपालपुरी हि" इत्यादिश्रुत्या मन्निकेतं तु, निर्गुणं निर्गुणो मदपाश्रयः" इत्यादिभगवदुक्त्या च दृश्यानामपि भगवद्धामादीनां निर्गुणत्वप्रतिपादनेन नित्यत्वात् ॥ २३ ॥ अत्र दृष्टान्तः, दीप इति। दीपचक्षूरूपाणां तेजोविशेषाणां ते यथा तेजसः कारणादव्यतिरेकः तथा धीः कर्ता खानीन्द्रियाणि करणानि मात्रा विषयाः ऋतात् ब्रह्मणः पृथक् न स्युः यथा तेजः कार्य्याणि दीपचक्षूरूपाणि तेजांस्येवोच्यन्ते एवं ब्रह्मकार्य्यं बुद्धीन्द्रियविषयादिकं ब्रह्मैवोच्यत इत्यर्थः। नन्वेवं कार्य्यकारणयोरभेदे कार्यस्यासत्यत्वे कारणस्याप्यसत्यत्वं प्रसज्येत कारणस्यैव कार्य्यरूपेण परिणतत्वात्तत्राह—अन्यतमात् कार्य्येभ्यः स्वरूपतोऽत्यन्तव्यतिरिक्तात् तस्य कारणरूपायाः प्रकृतेरपि परत्वादिति भावः ॥ २४ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

तत्तस्मिन् स्वप्नादिकं जीववन्न तथा खादयो बहिरन्तरूपकारित्वेन नापेक्षिताः किञ्च सर्वानिरपेक्षत्वात् स्वानन्दतृप्तत्वाच्च संसुप्तवत् सर्वाविरोधित्वात्सर्वोपद्रवात्स्पर्शलेशशून्यत्वाच्छून्यवत् यत्तत्त्वं सर्वस्य मूलभूतं वेदाः आमनन्ति ॥ २१ ॥ उपसंहरति—लय इति। यदा पुरुषाव्यक्तयोः उपलक्षणमेतत् तमसोपि तथा च पूर्वोक्तानामव्यक्ताक्षरतमः शब्दवाच्यानां प्रकृत्यवस्थानां परे देवे लयः शक्तयश्च पृथिव्यादिमहदन्ता उक्तक्रमेण लीयन्ते तदैव प्राकृतिको लय इत्यभिधीयते यद्वा पुरुषो जीवः तस्य शक्तयो ऽहम्ममादिवृत्तयः ॥ २२ ॥ अथ चेतनाचेतनयोर्ब्रह्मात्मकत्वमवधार्य गेहादौ मदीयत्वाभिमानं देहे आत्मत्वाभिमानं स्वरूपे स्वाधीनत्वाभिमानं च हित्वा ब्रह्मभावापत्तिलक्षणं मोक्षं साधनसम्पत्त्या प्राप्नोति तदेव नित्यप्रलय इति वक्तुं सर्वब्रह्मात्मकत्वपक्षस्य वैदिकस्य विरोधिभूतानां साङ्ख्यवैशेषिकादीनां पक्षाणामप्रामाण्यं द्योतयन् सर्वस्य ब्रह्मकार्यत्वादिना ब्रह्मात्मकत्वमाह—बुद्धीन्द्रियार्थरूपेणेत्यादिना। तत्र साङ्ख्याः अचेतनानां महदहङ्काराकाशादीनामचेतनमब्रह्मात्मकं प्रधानमेव कारणमित्याहुः—तदुक्तं षष्टिसंहितायाम् "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" इति तन्मतं निराकरोति बुद्धिश्चेन्द्रियाणि च खं वायुर्ज्योतिरापश्च अर्थात् शब्दादयश्च तदाश्रयभूताः खादयश्च तेषां रूपेण "एतस्माज्जायते प्राणः' मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापश्च पृथ्वी विश्वस्य धारिणी" इत्यादिश्रुतिप्रोक्तेन स्वकार्यरूपेण "सत्यं ज्ञानमनन्तं ब्रह्म" इतिश्रुतिप्रोक्तं ज्ञानमेव भाति सर्वस्य विश्वस्य तच्छक्तिपरिणामत्वा हेतुगर्भे विशेषणं तदाश्रयमिति तेषां बुद्ध्यादीनामाश्रयम् आदौ मध्ये अन्ते च धारकम् अचेतनस्य प्रधानस्य स्वधारकत्वमपि न सम्भवति, कुतः? पुनः परधारकत्वात् प्रयोजनमाह दृश्यत्वाऽव्यतिरेकाभ्यामिति। दृश्यत्वाय भोगसुखसिद्धये आ समन्तात् व्यतिरेकः लोकसृष्ट्यादिव्यापाररहितो मोक्षस्तत्सिद्धये च बुद्ध्यादिरूपेण भाति एवम्भूतस्यैव ज्ञानरूपस्य जगत्कारणत्वमस्ति "तदैक्षत" एकोहं बहुस्याम्" इत्यादिश्रुतेः। अतो न प्रधानं जगत्कारणम् एतेन परमाणुकारणवादोऽपि निराकृतः तथाऽऽह भगवान् सूत्रकारः "ईक्षतेर्नाशब्दम्" (१।१–५) इत्यादि केचिद्बाह्या ब्रह्म मिथ्या जगन्नित्यमित्याहुः तन्मतं निराकरोति—आद्यन्तवद्वस्तु तदिति वस्तु कारणं तद्भिन्नमवस्तु कार्ये तदाद्यन्तवदनित्यं भवति अनादि वेदप्रामाण्यात् जगत्कारणं ब्रह्म नित्यं कार्यभूतं जगदनित्यम् शब्दब्रह्मपरब्रह्मणमन्तरो बाह्याः श्रेयस्कामैर्मुमुक्षुभिरनवलोक्या इति भावः। अस्मिन् प्रकरणे केचिज्जगत् मिथ्येति प्रलपन्ति ते अप्रमाणिकत्वादुपेक्षणीयाः अध्यासवादस्य भ्रान्तिमूलत्वेनाध्यासगीरिवज्रे सर्वथा निराकृतत्वादुपलभ्यते ॥ २३ ॥ कार्यस्य बुद्ध्यादेः कार्यत्वावच्छिन्नेन रूपेणानित्यत्वमुक्तम् इदानीं "सदेव सौम्येदमग्र आसीत्" इतिश्रुत्युक्तरीत्या नित्यत्वमाह—दीप इति। दीपः कार्ये चक्षुरिन्द्रियमनुग्राह्यं रूपं गुणाः ज्योतिषः कारणादनुग्राहकात्गुणिनः सकाशाद्यथा पृथक् न भवेत् एवम् ऋतात् सत्यात्कारणात् कार्यभूताः धीप्रभृतयः अन्यतमा न स्युः कार्यमनित्यमपि कारणात्मना नित्यमेवेत्यर्थः। कारणात्पृथङ्न विद्यते इति सत्कार्यवादसिद्धिः ॥ २४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

प्राकृतप्रलयनिरूपणमुपसंहरति—लय इति। पुरुषाव्यक्तयोः शक्तयः सत्त्वादयः कालेन विद्रुताः चालिता यदा उक्तप्रकारेण सम्प्रलीयन्ते तदा ह्येष प्राकृतो लयो भवति ॥ २१ ॥ आत्यन्तिकं प्रलयमाह—बुद्धीन्द्रियेति द्वादशभिः। आत्यन्तिकः ज्ञानसाध्यो ब्रह्मणि लयात्मको मोक्षः स भेदस्य वास्तवत्वेन सम्भवतीति प्रपञ्चस्य ब्रह्माभिन्नत्वमाह—बुद्धिश्च इन्द्रियाणि च अर्थाश्चेत्येवं ग्राहककरणग्राह्यरूपेण तेषामाश्रयभूतं ज्ञानात्मकं ब्रह्मैव भाति न ततः पृथक्किञ्चिदस्ति। यतः आद्यन्तवत् यद्वस्तु तदवस्तुकारणात् अन्यवस्तु न भवति। तत्र हेतुमाह—दृश्यत्वाव्यतिरेकाभ्यामिति। कार्यस्य कारणाव्यतिरेकेणैव दृश्यमानत्वादित्यर्थः ॥ २२ ॥ तत्राव्यतिरेकमेव दृष्टान्तेन प्रपञ्चयति—दीप इति। दीपचक्षूरूपाणां तेजोविशेषाणां यथा तेजसो न व्यतिरेकस्तथा धीः कर्त्री खानि इन्द्रियाणि करणानि मात्राः शब्दादयो विषयाः ऋतात् सत्यात् ब्रह्मणः पृथक् न स्युर्ब्रह्मकार्यत्वात्।

नन्वेवं कार्यकारणयोरभेदे कार्यगतविकारः कारणे ब्रह्मण्यपि प्रसज्येतेत्याशङ्क्याह—अन्यतमादिति । कार्यादत्यन्तव्यतिरिक्तादित्यर्थः । प्रपञ्चाद्ब्रह्मणोऽस्ति व्यतिरेकः प्रपञ्चस्य 'तु ततो नास्ति व्यतिरेक इत्याशयः ॥ २३ ॥ तत्र बुद्धिदोषासंस्पर्शित्वमाह—बुद्धेरिति । जागरणाद्यवस्थात्रयं तु विवेकिभिर्बुद्धेरेवेत्युच्यते । अतो हे राजन् प्रत्यगात्मनि त्विदमवस्थाप्रयुक्तं नानात्वं विश्वतैजसप्राज्ञरूपं मायामात्रम्, अविद्यया कल्पितमित्यर्थः ॥ २४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

प्राकृतिकलयनिरूपणमुपसंहरति । लय इति । यदा पुरुषश्च अव्यक्तं च तयोः लयः, तदा च शक्तयः पृथिव्यादिमहदन्ताः, कालविद्रुताः कालेन चालिताः, अत एव विवशाः सत्ये संप्रलीयन्ते स्वस्वकारणेषु प्रलीयन्ते । तदा एषः प्राकृतिकः लयः हि, तत्र पुरुषस्य लयो नामात्यन्तज्ञानसंकोचेन परमात्मसंश्लेषविशेषः । अव्यक्तस्य लयस्त्वविभक्ततमोऽवस्थापत्तिरूपः शक्तिशब्दोक्तपृथिव्यादिसर्वपदार्थानां परमात्मानं प्रत्यपृथक् सिद्धविशेषणतारूपः शक्तिलयः ॥ २१ ॥ एतदेव सुस्पष्टं प्रपञ्चयति । बुद्धीति । तदाश्रयं, बुद्ध्याद्याश्रयं ज्ञानं परमात्मस्वरूपं अस्त्यतः बुद्धीन्द्रियार्थरूपेण बुद्धीन्द्रियार्थाः रूपं शरीरं यस्य तेन, बुद्धीन्द्रियार्थरूपेणेति भावप्रत्ययान्तं बोध्यं, तेन बुद्ध्यादि सर्ववस्तुशरीरकतयेत्यर्थः । भाति । अनेन तद्धारकतापूर्वकं तन्नियन्तृत्वमप्युक्तम् । एवं सति नियन्ता परमात्मा शरीरी नियाम्यं बुद्ध्यादि हि शरीरं इति प्रामाणिकानां भातीत्यर्थः । प्रामाणिकैस्तथा ज्ञायते इति भावः । तत्र हेतुमाह, दृश्यत्वाव्यतिरेकाभ्यामिति । दृश्यत्वात् 'यस्य चक्षुः शरीरम्' इत्यादिप्रमाणैः दृश्यानां चक्षुरादीनां परमात्मशरीरकत्वेन ज्ञायमानत्वात् अव्यतिरेकाच्च परमात्मानं विनावस्थानायोगाच्च परमात्मैव तच्छरीरको भातीत्यर्थः । सर्वस्य परमात्मशरीरत्वेऽपि शरीरशरीरिणोः स्वभावभेदमाह । यद्यतः शरीरभूतं तद्बुद्ध्यादिकं आद्यन्तवत् । बुद्धीन्द्रियादिकं न परमात्मस्वरूपवन्नित्यमपि त्वाद्यन्तवदित्यर्थः । अत एव अवस्तु च, न वसत्येकरूपेणेत्यवस्तु सततपरिणामीत्यर्थः । अस्ति, अयं भावः, अचित्प्रकृतिर्वस्तुसत्त्वेऽपि सततपरिणामित्वादनित्यशब्दवाच्या चित्प्रकृतिधर्मभूतज्ञानसंकोचविकाशभाक्त्वेऽपि स्वरूपभूतज्ञानस्य संकोचविकाशाभावान्नित्यशब्दवाच्या । परमात्मा तदुभयशरीरवान् सन्नपि परिणामित्वाभावात् ज्ञानसंकोचविकाशाभावाच्च 'नित्यो नित्यानाम्' इति श्रुतेः सदा नित्य एव ॥ २२ ॥ एवं सर्ववस्तुशरीरकत्वात्तस्य तदपृथग्भाव उक्तः । अथ विश्वशरीरकस्य तस्य कारणत्वादुपकारकत्वाच्चाव्यतिरेकमाह । दीप इति । दीपः चक्षुश्च रूपं च एतत्त्रय ज्योतिषस्तेजसः सकाशात् पृथक् न भवेत्, तत्र तेजः कार्ये हि दीपः, तेजोऽनुग्राह्यं चक्षुः, तदनुग्राह्यं रूपं तदेतत्त्रिकं ज्योतिषः तेजसः पृथग्भूतं नैव । एवं धीर्बुद्धिः खानीन्द्रियाणि मात्रास्तन्मात्राश्च अन्यतमात् ज्योतिः स्थानीयात् परमात्मनः ऋते न स्युः परमात्मानं विना न तेषामन्यदवस्थानमित्यर्थः ॥ २३ ॥ एवं सर्वस्य परमात्माधीनसत्तास्थितिप्रवृत्तिकत्वे स्थिते सति जीवगतावस्थानामपि तथात्वं सिद्धं, तत्राधिकं विशेषमाह । बुद्धेरिति । अत्र बुद्धिशब्दो जीवात्मनः धर्मभूतज्ञानपरः । जागरणम्, स्वप्नः, सुषुप्तिश्च इत्येषः बुद्धेर्जीवात्मनो धर्मभूतज्ञानस्य धर्मः, उच्यते । हे राजन्, इदं नानात्वं प्रत्यगात्मनि जीवे मायामात्रं जीवस्य ज्ञानविकाशसंकोचरूपजागरणादिकमवस्थानानात्वं जीवे प्रकृतिसबन्धमात्रकृतमित्यर्थः । जीवात्मनः स्वरूपभूतज्ञानस्य धर्मभूतज्ञानस्याज्ञानात्मकप्रकृतिसंबन्धस्य चानादित्वेऽपि साक्षाद्भगवदुपासनयात्मपरमात्मनोर्ज्ञानानन्तरं प्रकृतिसंबन्धात्मकाज्ञाननाशे धर्मधर्म्यात्मकज्ञानानाशात्तदेव पारमार्थिकं तदितरदपरमार्थिकतया मायामात्रत्वादनित्यमेवेति भावः । अनादेरनित्यत्वं कथमिति न शङ्कनीयमाद्यन्तरहितस्यैव नित्यत्वात् केवलानादित्वमात्रस्य नित्यत्वप्रयोजकताभावादनादेरपि प्रकृतिसंबन्धस्यानित्यत्ववेति गूढोऽभिप्रायः ॥ २४ ॥

## हिन्दी अनुवाद

उस समय स्वप्न, जाग्रत् और सुषुप्ति—ये तीन अवस्थाएँ नहीं रहती । आकाश, जल, पृथ्वी, वायु, अग्नि और सूर्य भी नहीं रहते । तब कुछ सोये हुए के समान शून्य सा रहता है । उस अवस्था का तर्क के द्वारा अनुमान करना ही असम्भव है । उस अव्यक्त को ही जगत् का मूलभूत तत्त्व कहते हैं ॥ २१ ॥ इसी अवस्था का नाम 'प्राकृत प्रलय' है । उस समय पुरुष और प्रकृति दोनों की शक्तियाँ काल के प्रभाव से क्षीण हो जाती हैं और विवश होकर अपने मूल स्वरूप में लीन हो जाती हैं ॥२२॥ परीक्षित् ! अब ( आत्यन्तिक प्रलय अर्थात् मोक्ष का स्वरूप बतलाया जाता है । ) बुद्धि, इन्द्रिय और उनके विषयों के रूप में उनका अधिष्ठान, ज्ञानस्वरूप वस्तु ही भासित हो रही है । उन सब का तो आदि भी है और अन्त भी । इसलिये वे सब सत्य नहीं हैं । वे दृश्य हैं और अपने अधिष्ठान से भिन्न उनकी सत्ता भी नहीं है । इसलिये वे सर्वथा मिथ्या—मायामात्र हैं ॥२३॥ जैसे दीपक, नेत्र और रूप—ये तीन तेज से भिन्न नहीं हैं, वैसे ही बुद्धि, इन्द्रिय और इनके विषय तन्मात्राएँ भी अपने अधिष्ठानस्वरूप ब्रह्म से भिन्न नही हैं—यद्यपि वह इनसे सर्वथा भिन्न है; ( जैसे रज्जुरूप अधिष्ठान में अध्यस्त सर्प अपने अधिष्ठान से पृथक् नहीं है, परन्तु अध्यस्त सर्प से अधिष्ठान का कोई सम्बन्ध नहीं है । ) ॥ २४ ॥

बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति चोच्यते । मायामात्रमिदं राजन् नानात्वं प्रत्यगात्मनि ॥ २५ ॥
यथा जलधरा व्योम्नि भवन्ति न भवन्ति च । ब्रह्मणीदं तथा विश्वमवयव्युदयाप्ययात्[1] ॥ २६ ॥
सत्यं ह्यवयवः प्रोक्तः सर्वावयविनामिह । विनार्थेन प्रतीयेरन् पटस्येवाङ्ग तन्तवः ॥ २७ ॥
यत् सामान्यविशेषाभ्यामुपलभ्येत स भ्रमः । अन्योन्यापाश्रयात् सर्वमाद्यन्तवदवस्तु यत् ॥ २८ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—जागरणं स्वप्नः सुषुप्तिः इति बुद्धेः ( वृत्तयः ) उच्यते राजन् इदं नानात्वं प्रत्यगात्मनि मायामात्रम् ॥ २५ ॥ जलधराः व्योम्नि यथा भवन्ति न भवन्ति तथा उदयाप्ययात् इदम् अवयवि विश्वं ब्रह्मणि ॥ २६ ॥ इह सर्वावय विनाम् अवयवः सत्यं प्रोक्तः अङ्ग अर्थेन विना अपि ( अवयवाः ) पटस्य तन्तवः इव प्रतीयेरन् ॥ २७ ॥ सामान्य विशेषाभ्यां यत् उपलभ्येत अन्योन्यापाश्रयात् सः भ्रमः आद्यन्तवत् यत् सर्वम् अवस्तु ॥ २८ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

यदा तु बुद्धे रसत्त्वं तदा तदवस्थानां सुतरामसत्त्वमित्याशयेनाह । बुद्धेरिति । ननु विश्वतैजसप्राज्ञानामेता अवस्था न बुद्धेरित्याशंक्याह । मायामात्रमिति । इदं विश्वतैजसप्राज्ञरूपम् ॥ २५ ॥ आद्यंतवत्त्वादित्यस्य हेतोरसिद्धिमाशंक्य सावयवत्वेन साधयति । यथेति । अवयवीति । यत्सावयवं तदाद्यंतवद्घटादिवदित्यर्थः । अत उदयाप्ययादाद्यंतवत्त्वाद्विश्वं सन्न भवतीत्यर्थः । यद्वा पृथगेवागमापायित्वाद्विश्वं मिथ्या । ब्रह्म तु तदवधित्वात्सत्यमित्यनेन साध्यते । दृष्टांतस्तु पूर्वोक्त एव । यथा जलधरा व्योम्नीति दृष्टांतस्त्वागमापायि तदवधित्वमात्रे न तु मिथ्यात्वे ॥ २६ ॥ अन्यतमादृतादिति । प्रतिज्ञातं कारणस्य सत्यत्वमुपपादयति । सत्यमिति । अवयवः कारणं प्रोक्तम् "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिश्रुतिभिः । अत्र युक्तिमपि दर्शयति । विनेति । अंग हे राजन् हि यस्मादर्थेनावयविना पृथगेवावयवाः प्रतीयेरन् । यथा पटस्यावयववास्तंतवः पटात्पृथक्प्रतीयंते तद्वदिति ॥ २७ ॥ ननु कार्याभावे कारणत्वं ब्रह्मणः कुतो घटेत । सत्यम् । तदपि नातीव सत्यमित्याह । यदिति । सामान्यं कारणं विशेषः कार्यं तद्रूपेणान्योन्यापाश्रयात्परस्परापेक्षत्वेन निरूपणासहत्वादित्यर्थः । अतः कारणत्वमवधित्वं व्यापकत्वमित्यादिकमपि यत्परापेक्षत्वादाद्यंतवत्तत्सर्वमवस्त्वित्यर्थः । यद्वा तत्रैव हेत्वंतरमेतत् । यदुपलभ्येत स भ्रमः सामान्यविशेषरूपत्वात्स्वप्नवत् । अन्योऽन्यापाश्रयादितीदमपि हेत्वंतरं गुणगुणिविशेष्यव्यापकत्वादिरूपेण परस्पराधीनसिद्धित्वात् । तथा तु स्वप्नवदिति निगमनम् । अतो यदाद्यंतवत्तत्सर्वमवस्त्विति ॥ २८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्राक्षिपति—नन्विति । यद्वा—जागरणं स्वप्नः सुषुप्तिश्च प्रत्यगात्मन्यधिष्ठाने बुद्धेरेव परिणामस्तस्याश्च मायाकार्यत्वादिदं नानात्वं मायामात्रं नानात्वात्स्वप्ननानात्ववत् ॥ २५ ॥ न कदाचिदनीदृशं जगदिति मीमांसकमतेन विश्वस्याद्यंतवत्त्वं नास्तीत्यभिप्रेत्याह—आद्यंतवत्त्वादिति । असिद्धिं स्वरूपासिद्धिम् । इत्यर्थ इति—यथा घटादयः सावयवत्वादाद्यंतवंतस्तथेदमपीति भावः । अतः सावयवत्वात् । इत्यर्थ इति—आद्यंतवद्रज्जुसर्पादिर्यथा सत्त्वं नास्ति तथास्यापीति भावः । ननु विश्वस्य ब्रह्मानन्यत्वे ब्रह्मणो नित्यत्वेन तस्यापि नित्यत्वं स्यादिति चेत्तत्राह—यद्वेति । ब्रह्मणः पृथगिदं विश्वं मिथ्यैव, आगमापायित्वात् । तदवधित्वात् तदाश्रयत्वात् । पूर्वोक्त एव रज्जुसर्पवदित्येव । ननु यथा जलधरा इति दृष्टांतसत्त्वे पूर्वोक्तदृष्टांताश्रयणं किमर्थं कृतं तत्राह—यथा जलधरो व्योम्नीत्यादि ॥ २६ ॥ अत्रावयवसत्यत्वे । उक्तार्थग्रहण उत्साहवृद्धये संबोधयति—हे अंगेति । गुरुप्रीतिवाक्यश्रुतेः स्वयमेवार्थः स्फुरतीति भावः । पटं विना पृथक्प्रतीतेः सत्त्वमेव तंतूनां, तंतून्विना पटस्य पृथगप्रतीतेरसत्त्वमिति भावः ॥ २७ ॥ अत्राक्षिपति—नन्विति । इत्यर्थ इति—अन्योन्यसिद्धावन्योन्यापेक्षणमन्योन्याश्रयः, स च दोष एव । तथापि—कारणत्वं हि कार्यत्वनिरूप्यं, कस्य कारणमित्यनुयोगविषयत्वात्, एवं कार्यत्वमपि कारणत्वमनिरूप्यं कस्य कार्यमित्यनुयोगगोचरत्वादतोऽनयोः पौर्वापर्यनिर्णयाभावाद्दोषत्वमेवेति भावः । उक्तमर्थमन्यत्राप्यतिदिशति—अतः कारणत्वमित्यादि । इत्यर्थ इति—परस्य कार्यावधेयव्याप्यस्यापेक्षावत्त्वात्कारणत्वादीनामपि पूर्वोक्तदोषवत्त्वमिति भावः । आदिना प्रकाशकत्वादिग्रहः । अस्तु कार्यत्वादिभावोऽपि मिथ्याकारणत्वादिभावस्य मिथ्यात्वे ब्रह्मणोऽपि मिथ्यात्वं प्रसज्येत तत्राह—यद्वेति । तत्रैव विश्वमिथ्यात्व एव । तथाभूतस्वप्नवत् ।

१. श्वं सम्भवत्युदया ।

निद्रानिरूपितस्वाप्नवत् यथा स्वप्ननिरूप्या निद्रा, निद्रानिरूप्यः स्वप्नः, उभावेतावसत्यौ तथेदमपीति निगमनं दृष्टांतः। उपसंहरति—अथ इति,—उक्तहेतुसमूहात् ॥ २८ ॥

### अन्वितार्थप्रकाशिका

यथेति। यथा जलधरा व्योम्नि भवन्ति न भवन्ति च तथा उदयाप्ययात् आद्यन्तवत्त्वात् इदमवयविकार्यभूतं विश्वमपि तथैव कदाचिद्भवति कदाचिन्न न भवतीत्यर्थः। यत्सावयवं तदाद्यन्तवत् घटादिवदित्यर्थः ॥ २५ ॥ कारणस्य सत्त्वमुपपादयति—सत्यमिति। इह व्यवहारे सर्वेषामप्यवयविनामवयवः कारणमेव सत्यं परमार्थतया प्रोक्तः "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येवायम्" इत्यादिश्रुतिभिर्निरूपितः। अत्र युक्तमपि दर्शयति। अङ्ग हे राजन्! हिं यस्मात् अर्थेन अवयविना विनाऽपि तदभावदशायामपि अवयवाः पृथक् प्रतीयेरन् प्रतीयन्ते। तत्र दृष्टान्तः। यथा पटस्यावयवास्तन्तवः पृथक् प्रतीयन्ते तद्वदित्यर्थः ॥२६॥ ननु कार्यस्यासत्त्वे ब्रह्मणः कारणताऽपि कुतो घटेतेति चेत्साऽपि नातीव सत्येत्याह—यदिति। सामान्य कारण विशेषः कार्यं तद्रूपेण पृथक् यत् उपलभ्यते सः अन्योन्यापाश्रयात् परस्परापेक्षत्वेन निरूपणासहत्वात् भ्रम एव। यतः कारणत्वाभिमते कारणत्वं कार्यत्वाभिमतनिष्ठकार्यतानिरूपितम्। एवं कार्यत्वाभिमते कार्यत्वमपि कारणत्वाभिमतनिष्ठकारणतानिरूपितमेवातः एकस्य निरूपणमपरस्य निरूपणं विना न संभवति। अतः कारणत्वमबाधित्वं व्यापकत्वमित्यादिकमपि यत्परस्परापेक्षत्वादाद्यन्तवत्तत्सर्वम वस्तु। यद्वा। यदुपलभ्यते स भ्रमः सामान्यविशेषरूपत्वात्स्वप्नवत्। अन्योन्यापाश्रयात् इति हेत्वन्तरम्। गुणगुणाति विशेषण-विशेष्यव्याप्यव्यापकत्वादिरूपेण परस्पराधीनसिद्धिकत्वात् तथाभूतस्वप्नवदिति अतो यदाद्यन्तवत्तत्सर्वमवस्तु ॥ २७ ॥ ननु प्रपञ्चस्यापि प्रकाशमानत्वादात्मवत्सत्त्वं किन्न स्यात्तत्राह—विकार इति। ख्यायमानो व्यवह्रियमाणः प्रकाशमानोऽपि विकारः कार्यभूतः प्रपञ्चः प्रत्यगात्मानमन्तरा प्रत्यगात्मप्रकाशं विनाऽणुमात्रोऽपि न निरूप्योऽस्ति चेत् यदि तं विनाऽपि स्वतन्त्रतया निरूप्यः स्यात्तर्हि सोऽपि चित्समः स्यात् चिद्रूपेणात्मना समः स्वप्रकाश एव भवेत्। तथा सोऽप्यात्मवदेकरूप एव स्यादित्यर्थः ॥ २८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

एवं सर्वस्य परमात्माधीनत्वे स्थिते जीवगतावस्थानामपि तथात्वं सिद्धं तत्राधिकविशेषमाह—बुद्धेरिति। अत्र बुद्धिशब्दो जीवात्मधर्मभूतज्ञानपरः। जीवस्य ज्ञानविकाससङ्कोचविशेषरूपज्ञानाद्यवस्थानानात्वं मायामात्रं प्रकृतिसम्बन्धमात्रकृतम् ॥ २५ ॥ एवम्विधाः दोषाः सर्वाधारमपि परमात्मानं न स्पृशन्तीत्याह—यथा जलधरा इति। इदन्तया जलधरा इव इदन्तया भासमानं प्रत्यक्षादि प्रमाणगम्यं विश्वं स्थित्यादीन्प्राप्नोतीत्यध्याहारेण योजना ॥ २६ ॥ सत्यमिति। पाणिपादाद्युपलम्भेऽप्यात्मनोऽनु-पलभ्यत्वमुच्यते अवयविनां देवमनुष्यादीनां पाणिपादाद्यवयवाः प्रोक्ताः सन्ति, ज्ञात्वा व्यवह्रियन्ते तेतु अर्थेन पुरुषार्थभूतेनात्म-स्वरूपेण दोषादिव्यावृत्तधर्मोपेताः विना प्रतीयेरन् विना प्रतीतिः सर्वेषां सम्भवति पटस्येवाङ्ग तन्तव इति जीवानधिष्ठितपटावयववत् जीवाधिष्ठितदेहावयवाश्च तनेन विना प्रतीयन्त इत्यर्थः। यद्वा जगतो ब्रह्मकार्यत्वं पूर्वश्लोकेन प्रकृतं तत्प्रसङ्गेनासत्कार्यवादनिरास उच्यते अवयविनामवयवास्तावत्सन्ति अवयवी न तेभ्योऽतिरिक्तः अतिरेके देवदत्ते न दग्धावयविनो ऽवयवा उपलभ्येरन् नच तथोपलभ्यन्ते नहि पटद्रव्यातिरेकेण तन्तव उपलभ्यन्त इत्यर्थः। पूर्वयोजनाऽत्रोपरितनशलाकसङ्गता ॥ २७ ॥ आत्मनो देहाद्यव्या-वृत्ततया प्रतीतिर्भ्रम इत्याह—यत्सामान्येति। साधारणाकाराकारेणारोपितविशेषतया च यदुपलम्भः सम्भ्रमः साधारणाकारस्या-रोपितविशेषस्य चान्योन्यापाश्रयात् अन्योन्यसम्बन्धात् अविरोधादित्यर्थः। आत्मस्वरूपा देहस्य व्यावृत्ताकारमाहसर्वमिति। सर्वशरीरस्याद्यन्तवत्त्वान्न स्थिरमित्यर्थः ॥ २८ ॥

### श्रीमद्वीरराघवव्याख्या

एवं सर्वस्य परमात्मायत्तसत्तास्थितिप्रवृत्तिकत्वे स्थिते सति जीवगतावस्थानामपि तथात्वं सिद्धं तत्राधिकं विशेषमाह—बुद्धेरिति। अत्र बुद्धिशब्दो जीवात्मधर्मभूतज्ञानपरः जीवस्य ज्ञानविकाससङ्कोचविशेषरूपजागरणादिकमवस्थानानात्वं प्रत्यगात्मनि जीवे मायामात्रं प्रकृतिसम्बन्धमात्रकृतमित्यर्थः ॥ २५ ॥ एवम्विधा दोषाः सर्वाधारमपि परमात्मानं न स्पृशन्तीत्याह—यथेति। इदन्तया भासमानं प्रत्यक्षादिप्रमाणगम्यं विश्वमवयविनि ब्रह्मणि उदयाद्भवति तस्मिन्नेव लयान्न भवति च शरीरभूतचिदचिद्गता विकाराः स्वरूपन्त्वाकाशवन्निर्मलमिति भावः ॥ २६ ॥ इत्थं जगतो ब्रह्मकार्यत्वाभिधानात्सत्कार्यवादः फलितः तद्विरुद्धमसत्कार्यवादं निरस्यति—सत्यमिति। अवयविनामवयवास्तावत्सत्यं प्रोक्ताः अबाधिता व्यवह्रियन्त इत्यर्थः। अवयवी तु न तेभ्योऽतिरिक्तः अतिरिक्तत्वे तु पटावयविनः पृथगवयवा उपलभ्येरन्न च तथोपलभ्यन्ते न हि पटद्रव्यातिरेकेण तन्तव उपलभ्यन्त इत्यर्थः। तथा सच्छब्दवाच्याद्ब्रह्मणो न पृथग्भूतं जगद्रूपं कार्य्यमिति सत्कारणमेव जगदित्यर्थः। अङ्गेति सम्बोधनं द्योतकम् अबाधित-

तन्त्वात्मकावयवसमुदाय एव व्यतिषङ्गविशेषं गतः पट इत्युच्यते प्रतीयते च तत्र पटरूपं कार्यं न तन्तुभ्योऽतिरिक्तं तथा प्रमाणप्रतिपन्नं चिदचिदीश्वरसमुदायात्मकं "सदेवेद सौम्येदम्" इत्यादिषु सच्छब्दवाच्यब्रह्मपरिणामविशेषमापन्नं कार्य्यमित्युच्यते प्रामाणिकैस्तथा तेषां प्रतीयते चातो नासत्कार्य्यत्वमिति भावः। अत्र "पटवच्च" [ २।१-१९ ] इति सूत्रार्थः स्मारितः॥ २७॥ ननु, बुद्धिशब्दान्तरादिभिः कार्य्यकारणयोर्भेद एवेत्यसत् कार्य्यत्वमेवोचितमित्यत आह—यदिति। घटशरावादिषु मृदयं घट इति सामानाधिकरण्येन प्रतीतिविषयं यत्सामान्यशब्देन मृदादिकं कारणं विवक्षितं विशेषशब्देन घटशरावादिविशेषकारो विवक्षितः सच मृद्वतो विकारः ताभ्यां यदन्यबुद्धिशब्दान्तरादिभिर्द्रव्यान्तरमुपलभ्यते असत्कार्य्यवादिनां स भ्रमः कार्य्यस्य द्रव्यान्तरत्वोपलम्भो भ्रमात्मकः, कुतः ? अन्योन्यापाश्रयत्वात् सामान्यविशेषयोरेव परस्परमाधाराधेयभावेकाश्रितत्वात्सामान्यतस्तद्गताकारापेक्षया द्रव्यान्तरस्यानुपलम्भाद्बुद्धिशब्दनामान्तरादीनां विकारनिवन्धनत्वेनाप्युपपत्तेरितिभावः। एवं चिदचिदीश्वरसङ्घातस्य कार्य्यकारणोभयावस्थत्वं तयोरभेदश्चेत्युपपादितमसत्कार्य्यवादश्च प्रतिक्षिप्तः। अथ कार्यावस्थानामपि चिदचिदीश्वराणां मिथो व्यावृत्ताकारतां विवक्षुस्तावदात्मस्वरूपादेहस्य व्यावृत्ताकारणमाह—सर्वमिति। यत्सर्वं शरीरमाद्यन्तवद्धेतुगर्भमिदमत् अवस्त्वनात्मवस्त्वित्यर्थः॥ २८॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

न स्वप्नेत्यत्र स्वप्नाद्यवस्था अपि न ब्रह्मण इत्युक्तम्। तर्हि कस्य ता इति तत्राह—बुद्धेरिति। बुधं ज्ञानं धीयतेऽस्मिन्निति बुद्धिर्जीवः तस्य जागरणादिकमुच्यते ह "सता सौम्य" इत्यादि श्रुतिसिद्धम् अथ हैतत्पुरुषः स्वपिति नामेति च अनेन जाग्रदादीनां निरालम्बनतया मिथ्यात्वमपास्तम् ननु, सु (षु) प्त्याद्यवस्थावद्धिश्वादीनामपि नानात्वं सत्यं स्यादिति तत्राह—मायामात्रमिति। प्रत्यगात्मनि परमात्मनि स्थितं नानात्वं मायया स्वेच्छया मात्रं निर्मितं त्रातं न स्वाभाविकम् एतेन कृष्णरामादिरूपाणां मिथो मूलरूपेण भेदो निरस्तः। तदुक्तम्—

"प्रत्येकं विष्णुरूपाणां भ्रान्तिमात्राभिदा मता। जगतश्चैव विष्णोस्तु सत्यो भेदः सदैव तु॥
यथाकाशधनौ नित्यं भिन्नावेव परस्परम्। एवमीशो जगच्चैव भिन्नावेव परस्परम्"॥ इति॥

नन्वेवं तर्हि जगद्ब्रह्मणोश्च भेदो न पारमार्थिकः स्यादित्यतः सोदाहरणं भेदस्य सत्यत्व समर्थयते—यथेति। उदयाप्ययियोर्मिथो विरुद्धधर्मत्वादेकवद्भावः। इदं विश्वं ब्रह्माधारतया सृष्टिसंहारौ याति गगनघनयोराधाराधेययोर्भेदो यथा सत्यस्तथा जगद्ब्रह्मणोरपीति एतदप्युक्तं यथाकाशघनावित्यादिना॥ २६॥ ननु, जगद्ब्रह्मणोरिवावयवावयविनामपि भेदः सन्नेव किं न स्यात्पटस्यामी तन्तव इति तत्प्रतीतेरिति ? तत्राह—एत इति। सर्वेषामवयविनां महदादीनां ये अवयवाः प्राक्ताः स्वादयः एतेऽर्थेन विना भेदव्यवहारमन्तरेण प्रतीयेरन् हि यस्मात्तस्मादभिन्ना इति शेषः। कथमभेदः ? इत्यत्राह—पटस्येति। पटस्यावयवास्तन्तवोऽवयविना पटेनाऽभिन्ना इति यथाङ्गीकर्तव्यं तन्तुः पटः मृदघटः शुक्लः पट इत्याद्यभेदव्यवहारदर्शनात् प्रत्येकं तन्तुना भेदेऽपि समुदायरूपेणाभेद इति प्रकटनाय तन्तव इति बहुवचनम् अत एव—

अवयव्यवयवाभेदात्कोटयंशो भेद ईरितः। सोपि भेदो न चाभेदात्पृथगेव प्रवर्त्तत॥

इति वाक्यमत्र गृहीतम् अनेन कार्यकारणादीनां भेद इति मतमपास्तं पटस्य तन्तव इति प्रयोगः पटस्य शौक्ल्यमितिवन्निष्कर्षणार्थः सोपि श्रीहरिर्नियत इति न युक्तिविरोधः "अवयव्यवयवानान्तु कार्यकारणवस्तुनाम्। एक एव नियन्ताऽसौ हरिर्नारायणः परः"। इति वाक्यादवगन्तव्यः॥ -७॥ नन्वेवं चेदवयविनि सत्यवयवनाशे तस्यापि तदभेदः स्यादत्राह—यदिति। यावद्द्रव्यभाविसामान्यमित्युच्यते अयावद्द्रव्यभाविविशेषः इति तत्र यद्वस्तु नष्टावयवाभिन्नमित्युपलभ्येत सामान्यावयववत् स बुद्धेर्भ्रमः कुतः अन्योन्यापाश्रयाद्विश्लेषात् तस्मादाद्यन्तवदवस्त्वेव यद्वा हनुमद्भीमांशानां वाय्वाद्यंशिनां सामान्यविशेषशक्तिदर्शनात्कथमभेदः सङ्गच्छते ? इति यत्राह यदिति। अन्योन्यापाश्रयात् अन्योन्याभेदविषयप्रमाणात् असुरजनमोहाधिकृतत्वेनाद्यन्तवत्त्वादवस्तु सर्वमविद्यमानमेव॥ २८॥

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तदेवं धीप्रभृतीनां परमात्मस्वाभाविकशक्तिमयत्वमुक्त्वा तथापि तेभ्यो बहिरङ्गशक्तिमयेभ्योऽन्तरङ्गशक्तितटस्थशक्तिविशिष्टपरमात्मनोऽन्यतमत्वेन तेषामशुद्धत्वव्यञ्जनया सदोषत्वमुक्त्वा तेषु धीप्रभृतीष्वध्यासं परित्याजयितुं तिसृषु धीवृत्तिषु तावच्छुद्धस्यैव जीवस्य सकारणमध्यासमाह—बुद्धेरिति। बुद्धिवृत्तिरूपं जागरणं स्वप्नः सुषुप्तिः इतीदं प्रत्यगात्मनि शुद्धजीवे विश्व-

तैजसप्राज्ञत्वाख्यं नानात्वं मायामात्रं मायाकृताध्यासमात्रेण जातमित्यर्थः ॥ २५ ॥ ततः परमात्मनि बुद्ध्यादिमयस्य जगतः सतोपि सम्पर्कः सुतरां नास्तीत्याह—यथेति। यथा व्योम्नि व्योमकार्य्यवायुज्योतिः । सलिलपार्थिवांशधूमपरिणता जलधरास्तेषामेवावयविनामुदयात् भवन्ति दृश्यन्ते अप्ययान्न भवन्ति न दृश्यन्ते ते च तन्न स्पृशन्तीति ज्ञेयं तथा ब्रह्मणीदं विश्वमिति योऽयं ततः सूक्ष्मरूपेण तस्य स्थितिरस्त्येव जगच्छक्तिविशिष्टकारणास्तित्वात् इत्थमेवोक्तं सतोभिव्यञ्जकः काल इति ॥ २६ ॥ तदेव वक्तुं कारणास्तित्वं दृष्टान्तेन प्रतिपादयति—सत्यमिति। सर्वेषामवयविनां स्थूलवस्तूनाम् अवयवः कारणं सत्यं सत्यो वाऽभिचाररहितः प्रोक्तः लोके तथा दर्शनादित्याह—विनेति। अर्थेन स्थूलरूपेण पटेनापि विना ॥ २७ ॥ तस्मिन् कार्य्योस्तित्वमपि व्यतिरेकेण प्रतिपादयति। यदिति अयमर्थः यद्येवमुच्यते पूर्वं सूक्ष्माकारेणापि जगन्नासीत् किन्तु तदेव शक्त्या निमित्तभूतया विशेषाकारेण जगद्रूपेण परिणतमिति तदसत् यदेवं सामान्यविशेषाभ्यामुपलभ्येत स भ्रमो विवर्त्तवाद एव तत्र हि शुद्धब्रह्मैवाज्ञानरूपया शक्त्या जगत्तया विवृतमिति मतं न चास्माकं तदभ्युपपत्तिः परिणामवादस्य सत्कार्य्यतापूर्वकत्वादित्यर्थः। नन्वपूर्वमेव कार्य्यमारम्भविवर्त्तवादिनामिव युष्माकमपि जायतां तत्राह, यदाद्यन्तवत् अपूर्वं कार्य्यं तत्पुनरवस्तुनिरूपणासहमित्यर्थः। तत्र हेतुः अन्योन्याश्रयात् यावत्कार्य्यं न जायतं तावत्कारणत्वं मृच्छुक्त्यादेर्न सिद्ध्यति कारणत्वासिद्धौ च कार्य्यं न जायत एवेति परस्परसापेक्षत्वदोषात् अतः कारणत्वसिद्धये कार्यशक्तिस्तवावश्यमभ्युपगन्तव्या सा च कार्य्यसूक्ष्मावस्थैवेति कार्य्योस्तित्वं सिद्ध्यति तथापि स्थूलरूपतापादकत्वान्मृदादेः कारणत्वमपि सिद्ध्यतीति भावः ॥ २८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

यत्तु विश्वस्तैजसः प्राज्ञः इति जीवस्य नानात्वं तत्तु बुद्धिवृत्तीनां त्रितयत्वात्तस्यापि त्रितयत्वं मिथ्यैवेत्याह—बुद्धेरिति। जागरस्वप्नसुषुप्तयस्तिस्रो वृत्तयो बुद्धेरेवेत्युच्यन्ते अतस्तदध्यासात् प्रत्यगात्मनि जीवेऽपि विश्वतैजसप्राज्ञसंज्ञाभिर्नानात्वं मायामात्रं मिथ्यैवेत्यर्थः ॥ २५ ॥ परिणामवादे कार्य्यकारणाव्यतिरेको दर्शितः अथारम्भवादे विश्वस्याद्यन्तवत्त्वं तत्कारणस्य परमेश्वरस्य सत्यत्वं च क्रमेण दर्शयति—यथेति द्वाभ्याम्। भवन्ति नश्यन्ति तथैव ब्रह्मणादिदं विश्वं भवति न भवति च अत्र व्योम्नीति दृष्टान्तेन परमात्मनो निर्लेपता दर्शिता अवयवीति यत्सावयवं तदाद्यन्तवत् घटादिवदित्यर्थः। अत उदयाप्ययात् आद्यन्तवद्विश्वं न सर्वदा सत्यमित्यर्थः ॥ २६ ॥ किञ्च, सर्वेषामवयविनाम् अवयवः कारणं सत्यं लोके तथा दर्शनादित्याह—विनेति। अङ्ग हे राजन्! हि यस्मात् अर्थेनावयविना विनापि पृथगेवावयवाः प्रतीयन्ते यथा यस्यावयवाः तन्तवः यस्मात् पृथक् प्रतीयन्ते यद्वत् अत्र "कार्यकारणवस्त्वैक्यदर्शनं पटतन्तुवत्" इति सप्तमोक्तेः सिषाधयिषितं ब्रह्मैक्यं तु लभ्यत एव ॥ २७ ॥ विवर्त्तवादे तु ब्रह्मकार्य्यं जगदसत्यं यथा तथा ब्रह्मणः कारणत्वादिकमप्यसत्यमित्याह—यदिति। सामान्यं कारणं विशेषः कार्य्यं ताभ्यां यदुपलभ्यते स भ्रमः कुतः? अन्योन्यापाश्रयात् परस्परापेक्षत्वेन निरूपणासहत्वादित्यर्थः। अयमर्थः, यथा रज्जुरेवाज्ञानेन सर्पत्वेन विवर्त्तते तत्र रज्जुः कारणं सर्पः कार्य्यः सतु मिथ्यैव तथैव सामान्यं ब्रह्मैव अज्ञानेन जगद्रूपतया विवृत्तं तत्र जगतः कार्य्यस्याभावे तदपेक्षतया सिद्धं ब्रह्मणः कुतः कारणत्वमिति ॥ २८ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एवं द्वाभ्यां श्लोकाभ्यामचिदंशस्य ब्रह्मकार्यस्यानित्यत्वं नित्यत्वं च दर्शितमथ चेतनस्यापि कार्ये विश्वस्मिन् स्थितस्य विश्वसृष्ट्यादौ ज्ञानविकाससङ्कोचौ भवतः बन्धनभूतया न तु तत्स्वरूपे किञ्चिद्विकारादिकमस्तीति जागरणादिप्रदर्शनेन सूचयति—बुद्धेरिति। नानात्वं जाग्रतत्वसुप्तत्वादि ॥ २५ ॥ ननु, भवतु जीवो निर्विकारस्वरूपः ब्रह्मणि तु जगत्संसर्गजा दोषा बलादेव भविष्यन्ति जगदुपादाननिमित्तकारणत्वादस्येत्यत आह—यथेति। भवन्ति उत्पद्यन्ते न भवन्ति विलीयन्ते नत्वेतावता दोषभाग्भवति तथा अवयविब्रह्मणः परस्परप्रकृतिद्वयसंयुक्तमिदं विश्वं ब्रह्मणि उदयाद्भवति लयान्न भवति ज्ञानसङ्कोचविकासबन्धमोक्षादयो धर्माः ब्रह्मांशभूतजीवविषयाः विकारत्वादयो धर्माः ब्रह्मशक्तिरूपप्रकृतिविषयाः विश्वसृजननियमनपालनादयः सत्यत्वज्ञानत्वानन्दत्वनिर्विकारत्वादयो धर्माः ब्रह्मविषया इति विवेकः ॥ २६ ॥ अथ सत्कार्यवादं निराचिकीर्षुः ऋतात् धीप्रभृतयोऽन्यतमाः न स्युरिति प्रागुक्तं सत्यकार्यवादं पुनर्द्रढयति—सत्यमिति। हे अङ्ग विष्णुदत्त! सर्वेषामवयविनां रथप्रासादादीनाम् पटस्य तन्तव इव कारणभूताः अवयवाः सत्यं प्रोक्ताः ते एव अवयव्यवस्थां प्राप्नुवन्ति, तन्निरपेक्षा अवयविनो नोत्पद्यन्ते इति भावः। अन्यथा अर्थेन अवयवभूतेन विनैव रथादयः प्रतीयेयुर्नतु निर्बीजाः भवन्ति प्रतीयन्ते वा एवम् इह प्रकृतेपि हीनश्च ये सन्मूलमेव कार्यमुत्पद्यते तथा च श्रुतिः "सन्मूलाः सौम्येमाः प्रजाः" इत्यादिः ॥ २७ ॥ ननु, वायवीयतैजसाप्यपार्थिवपरमाणवो यदि श्रुतिबलाज्जगत् कारणतया नाङ्गीक्रियन्ते किन्तु सर्वात्मत्वद्योतनार्थं ब्रह्मैव जगत्कारणतयाङ्गीक्रियते तदापि सर्वात्मत्वं ब्रह्मणो न सङ्गच्छते कार्यकारणयोरत्यन्तभिन्नत्वादित्यत आह—यदीति। अन्योन्यापाश्रयात् परस्परानाश्रयात् बुद्धितः शब्दतः व्यवहारा-

दितश्च कार्यकारणयोरितरेतरः आश्रयो नास्ति, नहि घटबुद्धौ मृत्पिण्डः आश्रयः न च मृत्पिण्डबुद्धौ घटः तथा घटशब्दे उच्चार्यमाणे तदर्थतया न मृत्पिण्डस्फूर्तिरित्यादि स्वयमूह्यम् तस्मादन्योन्यापाश्रयाद्धेतोः सामान्यविशेषाभ्याम् सामान्यं कारणं मृत्पिण्डादि विशेषः कार्यं घटादि ताभ्यां व्यवह्रियमाणाभ्याम् तत् यस्तयोरत्यन्तभेदबोधः उपलभ्येत स वैशेषिकानां भ्रमः मृत्पिण्डं विना घटलाभाभावात् अतोऽसत्कार्यवादो मुमुक्षुभिर्हेय इति भावः। ननु, तर्हि कार्यस्य जगतोऽपि ब्रह्मत्वात्तत्परित्यागपूर्वकं ब्रह्मभावापत्तिर्मुक्तिरिति कोऽयं दुराग्रहः ? इत्यत आह, सर्वमाद्यन्तवदस्तु यदिति। वस्तु कारणं तद्भिन्नमवस्तु कार्ये यत् तत्सर्वमाद्यन्तवदतो नित्यब्रह्मभावाप्राप्तिरिष्टेति भावः ॥ २८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

प्रपञ्चस्याद्यन्तवत्वं तद्दोषेण ब्रह्मणोऽसंस्पृश्यत्वं दृष्टान्तेनाह—यथेति। उदयाप्ययात् आद्यन्तवत्त्वात् इदमवयवि कार्यभूतं विश्वमपि तथैव कदाचिद्भवति कदाचिच्च न भवतीत्यर्थः ॥ २५ ॥ अन्यतमादिति यत्कारणस्यान्यत्वं प्रतिज्ञातं तदुपपादयति—सत्यमिति। इह व्यवहारे सर्वेषामव्ययविनामवयवः कारणमेव सत्यं परमार्थतया प्रोक्तः। 'वाचारम्भण विकारो नामधेय मृत्तिकेत्येवसत्यम्' इत्यादिश्रुतिभिर्निरूपितः। अत्र युक्तिमपि दर्शयति—अङ्ग हे राजन् हि यस्मात् अर्थेन अवयविनापि तदभावदशायामपि अवयवाः पृथक् प्रतीयेरन्। तत्र दृष्टान्तः यथा पटस्यावयवास्तन्तवः पटात् पृथक् प्रतीयन्ते तद्वदित्यर्थः ॥ २६ ॥ ननु यदि कार्यकारणयोर्भेदो नास्ति तदा कथं तयोर्भेदव्यवहार—यदिति। सामान्यं कार्यमात्रेऽनुगतं कारण विशेषस्तत्तद्रूपेण पृथक् सिद्ध काय ताभ्यां यत् उपलभ्येत भेदः स भ्रम एव। तत्र हेतुमाह—अन्योऽन्यापाश्रयादिति, पृथक्तयाऽनुपलम्भादित्यर्थः। अतो यदाद्यन्तवत् तत्सर्वमवस्तु कारणव्यतिरिक्तं वस्तु न भवतीति सिद्धम् ॥ २७ ॥ उक्तमेव पुनर्द्रढयति—विकार इति। स्वयमनो व्यवच्छियमानोऽपि विकारः कार्यभूतः प्रपञ्चः प्रत्यगात्मानमन्तरा विनाऽणुमात्रोऽपि न निरूप्योऽस्ति चेत् यदि तं विनाऽपि स्वतन्त्रतया निरूप्यः स्यात्तर्हि सोऽपि चित्समः स्यात् चिद्रूपेणात्मना समः स्वप्रकाश एव भवेत् तथा सोऽप्यात्मवदेकरूप एव स्यादित्यर्थः ॥ २८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एवंविधा जाग्रदादिदोषाः सर्वाधारमपि परमात्मानं न स्पृशन्तीत्याह। यथेति। यथा व्योम्नि, जलधराः भवन्ति च, तथा इदमिदंतया भासमानप्रत्यक्षादिप्रमाणगम्यं विश्वं, ब्रह्मणि उदयश्चाप्ययश्च तावतति सातत्येन प्राप्नोति उदयाप्ययात्। अवयति अवगतं ब्रह्मण्येव उदयाद्भवतीति तस्मिन्नेव लयान्न भवतीति च विज्ञायते। विकाराः शरीरभूतचिदचिद्गताः स्वरूपं चाकाशवन्निर्मलमिति भावः। पाठान्तरे पूर्वार्द्धव्याख्योक्तप्रकार एव। तत्र न्यायमते व्योम निरवयवं नित्यं च, जलधरास्तु सावयवा आगमापायिनश्चातोऽनित्याः। तथा निरवयवे ब्रह्मणि अवयवि सावयवं इदं विश्वं उदयाप्ययात् उत्पत्तिविनाशाभ्यामाद्यन्तवदित्यर्थः। अत्रैव प्रयोगः। अवयवी न नित्यः आद्यन्तवत्त्वात् घटादिवदिति। अत्र ब्रह्मशब्देन परमात्मप्रभा बोध्या। परमात्मा प्रभावान् बोध्यः। प्रभाप्रभावतोरनन्यत्वमेव। तेन प्रभेक्षया परमात्मनो निरवयता बोध्या। एतत्पाठापेक्षया पूर्वपाठेनोक्त व्याख्यान साधु क्लशाभावात् ॥ २५॥ इत्थं जगतो ब्रह्मकार्यत्वाभिधानात् सत्कार्यवादः फलितः। तद्विरुद्धमसत्कार्यवादं निरस्यति। सत्यमिति। इह सर्वावयविनां अवयवाः। सत्यं यथा तथा प्रोक्ताः। सामान्ये नपुंसकत्वं वा। अबाधिता व्यवह्रियन्तं इत्यर्थः। अवयवी तु न तेभ्योऽतिरिक्तः। अङ्ग हे राजन, अर्थे पटे पटस्य तन्तवः इव विना पटेन विना न प्रतीयेरन् हि, अवयविनः अवयवेभ्यो व्यतिरिक्तत्वे तु पटात्मकादवयविनः पृथक् तन्तवोऽवयवा उपलभ्येरन् न च तथो उपलभ्यते अबाधिततन्त्वात्मकावयवसमुदाय एव व्यतिषङ्गविशेष गतः सन् पट इत्युच्यते। प्रतीयते च तथा सच्छब्दवाच्याद्ब्रह्मणः न पृथग्भूतं जगद्रूपं कार्यमिति सत्कारणात्मना सद्रूपमेव जगद्रूपं कार्यमित्यर्थः। अयं भावः। यथा पटरूपं कार्यं न तन्तुभ्यो व्यतिरिक्तं, तथा प्रमाणप्रतिपन्नं चिदचिदीश्वरसमुदायात्मकं सदेव सोम्येदम्' इत्यादिश्रुतिषु सच्छब्दवाच्यं जगन्नामरूपपरिणामविमेषमापन्नं कार्यमित्युच्यते प्रामाणिकं। तथा तेषां प्रतीयते च अतो नासत्कार्यत्वमिति अनेन पटवच्च' इति सूत्रार्थः स्मारितः। तद्यथा। कार्यस्य कारणादनन्यत्वे निदर्शनं पटवच्च। यथा तन्तव एव व्यतिषङ्गविशेषभाजः पट इति नामरूपकार्यादिकं भजन्ति तद्वद्ब्रह्मापीति ॥ २६ ॥ ननु कार्यकारणयोः संज्ञाभेदादिभिर्भेद एव प्रतीयते कार्यस्यासत्त्वं कारणस्य सत्त्वं च दृश्यते तत् कथं कार्यस्य सत्त्वं किं त्वसत्कार्यत्वमेवोचितमित्यत आह। यदिति। सामान्यं मृदादिकं कारण च विशेषः घटशरावादिरूपो विशेषाकारश्च ताभ्यां यत् द्रव्यान्तरं उपलभ्येत नामभेदमात्रेण प्रतीयेत, सः असत्कार्यवादिनां भ्रमः, कार्यस्य द्रव्यान्तरत्वोपलम्भो यस्तेषां जायते स भ्रमात्मक एवेत्यर्थः। कुतः अन्योऽन्यापाश्रयात् सामान्यविशेषशब्दवाच्यकारणकार्ययोरेव परस्परमाधाराधेयभावेनाश्रितत्वात्। सामान्यरूपाया मृदः घटशरावादिरूपतद्गतविकारापेक्षया द्रव्यान्तरस्यानुपलम्भादित्यर्थः। एवं चिदचित्संघातस्य कार्यकारणोभयावस्थत्वं तयोरभेदश्चेत्युपपादितम्। अकार्यवादश्च प्रतिक्षिप्तः। अथ कार्यावस्थानामपि चिदचिदीश्वराणां मिथो व्यावृत्ताकारतां विवक्षुस्तावदात्मस्वरूपाद् देहस्य व्यावृत्ताकारतामाह। यत् सर्वं शरीरं तदाद्यन्तवत् हेतुगर्भ-

मिदम्। अतः अवस्तु आत्मवस्तु नेत्यर्थः ॥२७॥ किंच देहाकारा आत्मनि न सन्तीत्याह। विकार इति। विकारः जातिगुणक्रियाजन्मवृद्ध्यादिर्विकारः ख्यायमानः अपि देहाभिमानिनां स्वात्मनि प्रतीयमानोऽपि, प्रत्यगात्मानम् अन्तरा विना तं विनैव भवति आत्मनि स नास्तीत्यर्थः। कुतः न निरूप्यः न तस्मिन् विकारो निरूप्योऽस्तीत्यर्थः। तस्मिंस्तत्सत्त्वोक्तौ त्वनिष्ठमापादयति। चेद्यदि अणुरल्पोऽपि विकारः स्यादात्मनि भवेत् तदा सोऽपि आत्मवदात्मस्वरूपवत्। चित्समः ज्ञानात्मकात्मस्वरूपतुल्यः आत्मवत्स्वयंप्रकाशश्च स्यादित्यर्थः। एवं सति मुक्तावपि एकरूपतया स्वप्रकाशतया च प्रतीयमानो भावैवेति। न हि तथा प्रतीतिः प्रमितिरूपेति भावः। पाठान्तरे अणुरपि विकार आत्मनि स्यात्तर्हि आत्मवान्। प्राशस्त्ये मतुप्। आत्मवच्छब्दवाच्यो मुक्तात्मापि तत्समोऽचिज्जातीय एव स्यादित्यर्थः ॥ २८ ॥

## हिन्दी अनुवाद

परीक्षित्! जाग्रत्, स्वप्न और सुषुप्ति—ये तीनों अवस्थायें बुद्धि की ही हैं। अतः इनके कारण अन्तरात्मा में जो विश्व, तैजस और प्राज्ञरूप नानात्व की प्रतीति होती है वह केवल मायामात्र है। बुद्धिगत नानात्व का एकमात्र सत्य आत्मा से कोई सम्बन्ध नहीं है॥ २५॥ यह विश्व उत्पत्ति और प्रलय से ग्रस्त है, इस लिये अनेक अवयवों का समूह अवयवी है। अतः यह कभी ब्रह्म में होता है और कभी नहीं होता, ठीक वैसे ही जैसे आकाश में मेघमाला कभी होती है और कभी नहीं होती॥ २६॥ परीक्षित्! जगत् के व्यवहार में जितने भी अवयवी पदार्थ होते हैं, उनके न होनेपर भी उनके भिन्न-भिन्न अवयव सत्य माने जाते हैं। क्यों कि वे उनके कारण हैं। जैसे वस्त्ररूप अवयवी के न होने पर भी उसके कारणरूप सूत का अस्तित्व माना ही जाता है, उसी प्रकार कार्यरूप जगत् के अभाव में भी इस जगत् के कारणरूप अवयव की स्थिति हो सकती है॥ २७॥ परन्तु ब्रह्म में यह कार्य-कारण भाव भी वास्तविक नहीं है। क्यों कि देखो, कारण तो सामान्य वस्तु है और कार्य विशेष वस्तु। इस प्रकार का जो भेद दिखायी देता है, वह केवल भ्रम ही है। इसका हेतु यह है कि सामान्य और विशेष भाव आपेक्षिक हैं, अन्योन्याश्रित हैं। विशेष के बिना सामान्य और सामान्य के बिना विशेष की स्थिति नहीं हो सकती। कार्य और कारणभाव का आदि और अन्त दोनों ही मिलते हैं, इस लिये भी वह स्वाप्निक भेद-भाव के समान सर्वथा अवस्तु है॥ २८॥

**विकारः ख्यायमानोऽपि प्रत्यगात्मानमन्तरा। न निरूप्योऽस्त्यणुरपि स्याच्चेच्चित्सम आ[१]त्मवत्॥ २९॥**

**न हि सत्यस्य नानात्वमविद्वान् यदि मन्यते। नानात्वं छिद्रयो[२]र्यद्वज्ज्योतिषोर्वातयो[३]रिव॥ ३०॥**

**यथा हिरण्यं बहुधा समीयते नृभिः क्रियाभिर्व्यवहारवर्त्मसु।**
**एवं वचोभिर्भगवानधोक्षजो व्याख्यायते लौकिकवैदिकैर्जनैः॥ ३१॥**

**यथा घनोऽर्कप्रभवोऽर्कदर्शितो ह्यर्कांशभूतस्य च च[४]क्षुषस्तमः।**
**एवं त्वहं ब्रह्मगुणस्तदीक्षितो ब्रह्मांशकस्यात्मन आत्मबन्धनः॥ ३२॥**

## कृष्णप्रिया व्याख्या

अन्वयः—ख्यायमानः अपि विकारः प्रत्यगात्मानम् अन्तरा अणुः अपि न निरूप्यः ( निरूप्यः ) स्यात् चेत् चित्समः आत्मवत्॥ २९॥ सत्यस्य नानात्वम् अविद्वान् यदि मन्यते हि ( तन्नानात्वं ) छिद्रयोः यद्वत् ज्योतिषोः वातयोः इव॥ ३०॥ नृभिः यथा व्यवहारवर्त्मसु हिरण्यं बहुधा समीयते एवं भगवान् अधोक्षजः लौकिकवैदिकैः वचोभिः जनैः व्याख्यायते॥ ३१॥ अर्कप्रभवः अर्कदर्शितः घनः अर्कांशभूतस्य चक्षुषः यथा तमः एवं तु अहं ब्रह्मगुणः तदीक्षितः ब्रह्मांशकस्य आत्मनः आत्मबन्धनः॥ ३२॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तदेवमनेकैर्हेतुभिः प्रपंचस्यासत्त्वं साधितम्। तत्र शंका। ननु प्रपंचस्यापि प्रकाशमानत्वादात्मवत्सत्त्वं किं न स्यादिति तत्राह। विकार इति। ख्यायमानः प्रकाशमानोऽपि विकारः प्रपंचः प्रत्यगात्मप्रकाशं विनाऽणुमात्रोऽपि न निरूप्योऽस्ति। तं विना निरूप्यः स्याच्चेत्तर्हि सोऽपि चित्समः स्याच्चिद्रूपेणात्मना समः स्वप्रकाशो भवेत्। तथा च सति सोप्यात्मवत्स्यात्। एकरूपः

१. आत्मवान्। २. योरपि। ३. प्रतीयते। ४. चाक्षुषं तमः।

स्यादित्यर्थः ॥ २९ ॥ कुत इत्यत आह । न हीति । ननु सत्यस्याप्यात्मनो जीवब्रह्मरूपं नानात्वमस्त्येव तत्राह । यद्येवं नानात्वं मन्यते तर्ह्यविद्वान् । कथं तर्हि तयोर्भेदव्यवहारः उपाधिकृत इत्याह । नानात्वमिति । तत्र छिद्रयोर्घटाकाशमहाकाशयोरिवेति परिच्छेदापरिच्छेदे दृष्टांतः । ज्योतिषोराकाशजलस्थयोः सूर्ययोरिवेत्युपाधिकृतविकारसदसद्भावे । वातयोर्बाह्यशरीरस्थवाय्वोरिवेति क्रियाभेदे ॥ ३० ॥ ब्रह्मण एव प्रपंचव्यवहारालंबनत्वं दृष्टांतेन स्पष्टयति । यथेति । क्रियाभिस्तत्तद्रचनाभेदैर्बहुधा कटककुंडलादिरूपेण । लौकिकवैदिकैर्वचोभिः । जनैरहंकारोपहितैः ॥ ३१ ॥ नन्वहंकारस्य कथं ब्रह्मस्वरूपावरणेन भेदव्यवहारहेतुत्वम् । तस्य स्वकारणभूतब्रह्मावरकत्वासंभवादावरणे वा स्वस्यापि प्रकाशासंभवादित्याशंक्य सदृष्टांतमाह । यथेति । अर्करश्मय एव मेघरूपेण परिणता वर्षंति । "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" इत्यादिवचनात्तस्मादर्कप्रभवः । अर्केणैव दर्शितः प्रकाशितश्च । तमः स्वरूपभूतार्कदर्शनप्रतिबंधको भवति अहमहंकारो ब्रह्मगुणो ब्रह्मकार्यभूतस्तदीक्षितस्तेनैव प्रकाशितश्चात्मनो जीवस्यात्मबंधनो ब्रह्मस्वरूपदर्शनप्रतिबंधको भवति ॥ ३२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र प्रपंचासत्यत्वे । शंकाऽऽक्षेपः । तामाह—नन्विति । ख्यायत इति ख्यायमानः, ख्यातेः कर्मणि शानच् । इत्यर्थ इति—न ह्यचितः प्रकाशश्चितं विहाय कदापि भवत्यतश्चिदेव तत्तदाकारेण प्रकाशतेऽचितः पृथक्सत्तानंगीकारात् "सर्वं खल्विदं ब्रह्म" "नेह नानास्ति किंचन" इत्यादिश्रुतेरिति भावः ॥ २९ ॥ अत्र हेतुमाशंक्याह—कुत इति । अत्राक्षिपति—नन्विति । तयोर्जीवब्रह्मणोः । तत्र छिद्रादिदृष्टांतेषु । परिच्छेदापरिच्छेदेऽल्पानल्पत्वे ॥३०॥ क्रियाभिस्तत्तद्रचनाभेदैः । भगवान् बहुधाकाशादिरूपेण ब्रह्मादिरूपेण च व्याख्यायते प्रकाश्यते—एष ब्रह्मा एष शिव इत्यादिना वैदिकैश्च शास्त्रधिया लौकिकैश्च शास्त्रज्ञानाभावात् घटोऽयं पटोयमित्यादिना स एव प्रकाश्यत इति भावः ॥ ३१ ॥ अत्राक्षिपति—नन्विति । ब्रह्मस्वरूपदर्शनप्रतिबंधकः स्वाध्यासेन बंधभ्रमापादको भवति ॥३२॥

## अन्वितार्थप्रकाशिका

कुत इत्यत आह—न हीति । सत्यस्य परमार्थभूतस्य नानात्वं नास्त्येव । ननु सत्यस्याप्यात्मनो नानात्वमस्त्येवेत्याशङ्क्य स व्यवहारस्तूपाधिकृत एवेत्याह । यदि अविद्वान् तत् नानात्वं मन्यते तर्हि तत् छिद्रयोरिव घटाकाशमहाकाशयोरिव न वास्तवम् । अयं परिच्छेद्यापरिच्छेद्ययोर्दृष्टान्तः । तथा ज्योतिषोरिव आकाशजलस्थसूर्ययोरिवेत्युपाधिकृतविकारसदसद्भावे दृष्टान्तः । वातयोर्बाह्यशरीरस्थवाय्वोरिति क्रियाभेदे दृष्टान्तः ॥ २९ ॥ यथेति । क्रियाभिस्तत्तद्रचनाभेदैर्व्यवहारमार्गेषु यथा हिरण्यमेव बहुधा कटककुण्डलादिरूपभेदैर्नृभिः समीयते एवं लौकिकवैदिकैर्वचोभिरधोक्षजो भगवानेव अहंकारोपहितैर्जनैः व्याख्यायते ॥ ३० ॥ नन्वहङ्कारस्य स्वकारणभूतब्रह्मावरणासंभवात्कथं भेदव्यवहारहेतुत्वम् आवरणे वा स्वस्यापि प्रकाशसंभव इत्याशङ्क्याह—यथेति । अर्करश्मय एव मेघरूपेण परिणता वर्षन्ति 'आदित्याज्जायते वृष्टिः' इति वचनात्तस्मात् अर्केणैव दर्शितः प्रकाशितश्च घनो मेघो यथार्कांशभूतस्य चक्षुषः तमःस्वरूपभूतार्कदर्शनप्रतिबन्धको भवति एवमेवाहम् अहङ्कारोऽपि ब्रह्मणो गुणः कार्यभूतः तदीक्षितः तेनैव प्रकाशित ब्रह्मांशकस्यात्मबन्धनः जीवस्यात्मबन्धनः ब्रह्मस्वरूपदर्शनप्रतिबन्धको भवति ॥ ३१ ॥ धन इति । यथा च अर्कप्रभवः धनो यदा पवनेन विदीर्यते तदैव चक्षुःस्वरूपभूतं रविमीक्षते तथा यदैव जिज्ञासया विचारेण आत्मन उपाधिरावरकोऽहङ्कारो विनश्यति तर्हि तदा अनुस्मरेत् ब्रह्मैवाहमिति पश्यतीत्यर्थः ॥ ३२ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

देहाकारा आत्मनि न सन्तीत्याह—विकार इति । जातिगुणक्रियाऽपचयजन्मवृद्ध्यादिरूपः अल्पोऽपि विकारो न निरूप्यः आत्मधर्मतया न चिन्त्यः तथा निरूप्यत इति मन्यमानोऽस्मद्बुद्ध्या नात्मविदित्यर्थः ॥ २९ ॥ औपाधिकानां जात्यादिभेदानां जीवात्मन्यविद्यमानत्वमाह नहीति । सत्यशब्दो जीवपरः 'तदनुप्रविश्य सच्च त्यच्चाऽभवत्, सत्यं चाऽनृतं च सत्यमभवत्' इति प्रयोगात् 'प्राणा वै सत्यम्' इति प्रयोगाच्च नहि परिशुद्धजीवात्मस्वरूपस्य देवमनुष्यादिनानात्वमिति अस्तीति जानन्नविद्वानेव, औपाधिकभेदस्य स्वरूपस्पर्शित्वे तेजोवायुज्योतिश्छिद्राणि दृष्टान्तयति—नानात्वमिति । पूर्वापरदेहवर्त्तितयाभिन्नत्वेन प्रतीयमानयोरात्मनोरभेदे दृष्टान्तः छिद्रयोरिति द्विवचनात् इयान् विशेषः भिन्नकलोपाधिकृतभेदराहित्ये तुल्यकालोपाधिकृतभेदरहितवस्तु दृष्टान्तितमिति केषुचित् कोशेषु दृष्टत्वात् बुद्धीन्द्रियार्थरूपेणेति श्लोकाष्टकं व्याख्यातम् ॥ ३० ॥ व्यावहारिकेष्वर्थं क्रियार्हपरिणामदृष्टान्तेन परिहरति—यथा हिरण्यमिति । यथा क्रियार्हत्वात् हिरण्यबहुत्वं सत्यम् एवं प्रमाणिकत्वात्परमात्मबहुत्वमपि सत्यमित्यर्थः ॥ ३१ ॥ आत्यन्तिकं प्रलयं वक्तुमुपक्रमते यथा घन इति । धूमादिमिश्रतमोद्रव्यारब्धत्वात् मेघस्यार्कप्रभवत्वम् आदित्याधिष्ठितत्वात् चक्षुषः आदित्यांशत्वं तम इति तिरोधायकत्वमुच्यते अहंशब्दोऽहमभिमानविषयदेहपरः उत्तरत्राहङ्कारशब्देन

१३

निर्देशात् ब्रह्मगुणः परमात्मविशेषणभूतः आत्मबन्धनः ज्ञानप्रतिबन्धकः यथार्कांशस्य चक्षुषोऽर्कदर्शनं तत्प्रभवो मेघः प्रतिबध्नाति एवं परमात्मांशभूतस्य जीवस्य परमात्मदर्शनं तद्गुणभूतो देहः प्रतिबध्नातीत्यर्थः ॥ ३२ ॥

### श्रीमद्वीरराघवव्याख्या

किञ्च न देहविकारा आत्मनि सन्तीत्याह–विकार इति। विकारः जातिगुणक्रियाजन्मवृद्ध्यादिविकारः ख्यायमानः आत्मनि देहात्माभिमानिनां प्रतीयमानोपि प्रत्यगात्मानमन्तरा तं विनैव भवति न तास्मिन्नस्तीत्यर्थः। तदाह–नेति। न तस्मिन् विकारो निरूप्योऽस्तीत्यर्थः। विपर्ययेऽनिष्टमापादयति–स्यादित्यादिना। चेद्यद्यणुरल्पोपि विकारः आत्मनि स्यात्तर्ह्यात्मवान् प्राशस्त्ये मतुप् मुक्ताऽऽत्मापि तत्समः देहसमः अचिज्जातीय एव स्यादित्यर्थः। चित्समः आत्मवदिति पाठान्तरं तदा विकारोप्यात्म-स्वरूपवत्सदेकरूपः चित्समः ज्ञानात्मकात्मस्वरूपतुल्यः तद्वत्स्वयं प्रकाशश्च स्यात् मुक्तावप्येकरूपतया स्वप्रकाशतया च प्रतीयेते-त्यर्थः। न हि तथा प्रतीतिः प्रमितेति भावः ॥ २९ ॥ ननु, ख्यायमानोऽपि विकारः कुत आत्मनि नेत्युच्यते इत्यत्रौपाधिकत्वादि-त्याह–नहीति। सत्यशब्दोऽत्र जीवपरः 'तदनुप्रविश्य सच्च त्यच्चाभवत् विज्ञानं चाविज्ञानं च सत्यानृतं च' इति 'प्राणा वै सत्यम्' इति च प्रयोगात् नहि परिशुद्धजीवात्मस्वरूपस्य देवमनुष्यादिनानात्वमस्ति यस्तु यद्येवं नानात्वं मन्यते तर्हि न स विद्वान्न देह-विलक्षणात्मयाथात्म्यविदपितु देहात्माभिमानीति भावः। औपाधिकभेदस्य जीवस्वरूपास्पर्शित्वे नभस्तेजोवायवो दृष्टान्ताः इत्यभिप्रायेणाह–छिद्रयोरिति। यद्यथा छिद्रयोराकाशयोर्ज्योतिषोर्वातयोर्वाय्वाश्च यथा न नानात्वं तद्वदात्मनोः पूर्वापरदेहवर्ति-तयाऽभिन्नत्वेन प्रतीयमानयोरात्मनोरभेदे दृष्टान्तत्वाभिप्रायेण छिद्रयोरित्यादिद्विवचननिर्देश इयान् विशेषः भिन्नकालोपाधिभेद-राहित्ये तुल्यकालोपाधिकृतभेदराहित्यं वस्तु दृष्टान्तितमिति छिद्रयोरिति द्विवचनान्तेन मेघाद्युपहितावाकाशप्रदेशौ विवक्षितौ घटा-काशमहाकाशौ वा ज्योतिश्शब्देन सूर्यादिबिम्बप्रतिबिम्बौ वातशब्देन बाह्यशरीरौ ॥ ३० ॥ एवमात्मनो देहाद्व्यावृत्ताकारत्वप्रति-पादनेनैव देहस्यापि ततो व्यावृत्ताकारत्वमर्थसिद्धं ताभ्यां परमात्मनोऽव्यावृत्ताकारतातु 'न तस्य कालावयवैः' इत्यादिभिस्त्रिभिः प्रतिपादितैव अथोपपादितं चिदचिद्विशिष्टस्य विचित्रजगद्रूपेण परिणामं कार्य्यकारणयोरनन्यत्वं चोपसंहरन् कार्यमित्यात्मपक्ष-प्रतिक्षेपाय तत्सत्यताञ्च सदृष्टान्तमाह–यथा हिरण्यमिति। व्यवहारवर्त्मसु व्यवहारमार्गेषु निमित्तभूतेषु व्यवहारशब्दः प्रयोजन-स्याप्युपलक्षणार्थः कुण्डलमानय कटकमानय बिभृहीत्यादि व्यवहारार्थं धारणादिप्रयोजनार्थञ्चेत्यर्थः। क्रियाभिः रचनाविशेषैरे-कमेव सुवर्णं बहुधा कुण्डलादिरूपेण ( भेदेन ) नृभिः समीयते प्रमीयते रचनाविशेषादि क्रियार्हत्वाद्धारणादिप्रयोजनार्हत्वाच्च कटकादिकं सत्यमेव कारणात् सुवर्णात् अनन्यच्च न हि शुक्तिरजतादिकमर्थक्रियार्हमिति भावः एवं स्.. चिदचिद्विशिष्टो भगवानेक एव लौकिकैर्वैदिकैश्च वचोभिर्जनैर्विशिष्टाद्वैतवादिभिश्च व्याख्यायते विविधमाख्यायते विचित्रजगद्रूपेण परिणतः ख्यायते 'कटकमुकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते यथैकम्। सुरनरपशुपादपादिभेदैर्हरिरजितोपि उदीर्य्यते तथैकः' इत्यादीनि लौकिकवचांसि 'यथा सौम्येकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्' वाचारम्भणं विकारो नामधेयं' लोहमणिरित्येवसत्यम्' इत्यादीनि वैदिकानि। भगवानित्यनेन कारणत्वाशङ्कितहेयास्पदत्वव्यावृत्तिः सूच्यते ॥ ३१ ॥ अथ मोक्षापरपर्यायसंसृतिबन्धनि-वृत्तिरेवात्यन्तिकः प्रलय इति विवक्षुस्तावत् कोसौ देहाद्व्यावृत्तस्यात्मनो बन्ध इत्यत्राह–यथेति। मेघस्यार्कप्रभवत्वमर्करश्मि-मिश्रितधूमादितमोद्रव्यारब्धत्वादेव–गन्तव्यम् आदित्याधिष्ठितत्वाच्चक्षुषोर्कांशत्वं यथा अर्कप्रभवोऽर्केणैव प्रकाशितश्च मेघोऽर्कांश-भूतस्य चक्षुषस्तमः तमोवदर्कदर्शनप्रतिबन्धकस्तिरोधायक इति यावत्। अहंशब्दोऽत्र देहात्माभिमानिनामहमभिमानविषयत्वाद्देह-परः ब्रह्मगुणः परमात्मविशेषणभूतः उद्दीक्षितस्तेन परमात्मना प्रकाशितः ब्रह्मांशकस्यात्मनः जीवस्यात्मबन्धनः ज्ञानप्रतिबन्धकः यथा अर्कांशस्य चक्षुषाऽर्कदर्शने तत्प्रभवो मेघः प्रतिबन्धकः एव परमात्मशरीरभूतस्य जीवस्य परमात्मदर्शनं तद्गुणभूतो देहः प्रतिबध्नातीत्यर्थः। तत्प्रतिबन्ध एव संसृतिप्रतिबन्धो नामेति भावः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यथाऽवयव्यवयवादीनाम् अभेदो दुरवबोधः एवं पदार्थानामनन्तत्वात्तत्स्वरूपभेदोपि परमात्मानमन्तरेण दुर्ज्ञेय इत्याशयेनाह विकार इति। विनिषेवे पृथग्भाव इत्यतः पृथक्कारो नानाविधो भेदः प्रत्यगात्मानं साक्षीभूतं श्रीनारायणम् अन्तरेणाणु-रल्पोपि निरूप्यो नास्ति स एव निरूपयितुं शक्तः नासत्त्वान्नेत्याह ख्यायमान इति। प्रतीयमानस्यासत्त्वं जुगुप्सितं प्रमाणविरोधादि-त्यपिशब्दः ॥ २९ ॥ नन्वेकस्य प्रतिभानं तु कृतकान्न विशिष्यत इतिवन्निर्धारणायोग्य इति तत्राह–नहीति। यद्यविद्वान् ब्रह्मरूपाणां नानात्वं मन्यते तर्ह्यपि सत्यस्य ब्रह्मणो रूपाणां नानात्वं सत्यं न भवति अविद्वन्मतत्वात्। ननु, युक्ताह्यस्य हरयः शतादशः' इति श्रुतेः। कथं सत्यं नेत्यत्राह–नानात्वमिति। नेत्यनुवर्तते छिद्रयोर्बाह्यान्तःस्थाकाशयोः यद्यथा नानात्वं नास्ति एक एव महाकाशो घटे जायमाने बहिरन्तश्चेति द्वित्वसंख्यामुपैति उत्पद्यमानो नीलिमाकारोप्याकाशो द्वित्वमेति तत्र प्रागुक्तो हरेरूपमिति यातः पश्चादुक्तो जीवानामित्यर्थविशेषो हिशब्देनोपात्तः। उक्तञ्च–

महाकाशो बहिस्थश्च घटाद्यन्तःस्थ एव च। द्वेधा समुदितोऽन्यौ च द्वावाकाशौ प्रकीर्तितौ॥
घटरूपस्तदन्यश्च महाकाशात्परो लघुः। महाकाशवदेवात्र परमात्मा सनातनः॥
घटान्तःस्थमहाकाशप्रतिमोऽन्तर्गतो विभुः। घटस्यान्तर्गताकाशो महाकाशात्परो मतः॥
तद्वद्देवादयः सर्वे जीवा मुक्त्युपयोगिनः। तमोगाश्चैव ये सर्वे घटरूपखवन्नराः'॥ इति।

ज्योतिषोरधिदैवाध्यात्मसञ्ज्ञयोः "सहस्रं वा आदित्यस्य रश्मय आसु नाडिष्वाततः" इति श्रुतेर्वा तयोर्वातप्राणसञ्ज्ञयोः "अधिदैवं यथाध्यात्मम्" इति श्रुतेश्च। अत्रापि विशेषः पूर्ववदवगन्तव्य इति॥ ३०॥ बहुत्वसङ्ख्यावाचिन्याः श्रुतेः किं विनिगमकमत्राह—यथेति। बहुधा कटककुण्डलाद्यात्मना हेम नानासञ्ज्ञाविषयं समीयते तथा भगवानपि देवो नरो वराहः शुक्लः पीतो ह्रस्वोऽणुर्दीर्घो महानिति विविधाकारेण व्याख्यायते प्रकाश्यत इति॥ ३१॥ हरेस्तत्त्वस्वरूपं निरूप्य संसारप्रकारमाह—यथेति। अर्कशब्देनाग्नितेजोवायव उच्यन्ते तेजःसम्बन्धेन धूम उपलक्ष्यते अर्कप्रभवः धूमतेजोजलमरुद्भ्यः प्रभव उत्पत्तिः यस्य स तथा अर्केण नभसि दर्शितः सूर्यप्रकाशे सत्येव दृश्यते नान्यथा यथा घनः सूर्यदर्शनप्रतिबन्धकः "आपो वा अर्कः" इति श्रुतिः। यथाऽर्कांशस्य चक्षुषस्तमः सूर्यदर्शने प्रतिबन्धकम् "आदित्यश्चक्षुर्भूत्वा ऽक्षिणी प्राविशत्" इति श्रुतेः। एवमेवाहङ्कारो ब्रह्मापेक्ष्य गुणोऽमुख्यः तदीक्षितः तेन प्रकाशितः ब्रह्मांशकस्य जीवस्य "पादोऽस्य विश्वा भूतानि" इति श्रुतेः। ब्रह्मणो भिन्नांशस्य आत्मनो जीवस्यात्मानं मति ज्ञानं बध्नातीत्यात्मबन्धनः "आत्मा देहे धृतौ जीवे" इत्यादौ यादवप्रकाशेन मतौ प्रयुक्तत्वात् "तद्ब्रह्मा वेदाहं ब्रह्मास्मि" इति श्रुतेः। ब्रह्मणो विशेषभूत इति वा॥ ३२॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदेवं स्वाभाविकशक्तिमयमेव परमात्मनो जगदित्युपसंहरति, विकार इति। यद्यपि ख्यायमानः प्रकाशमान एव तथापि स्वल्पोपि विकारः प्रत्यगात्मानं विना तद्व्यतिरेकेण स्वतन्त्रतया न निरूप्योऽस्ति तदुक्तं तदनन्यत्वविवरण एव यदि च तं विनापि स्यात् तदा चित्समः स्यात् चिद्रूपेण समः स्वप्रकाश एवा ऽभविष्यत् आत्मवत् परमात्मवन्नित्यैकावस्थश्चाभविष्यत्॥ २९॥ ननु, यदि परमात्मानं विना विकारो नास्ति तर्हि परमात्मनः सोपाधित्वे निरुपाधित्वं न सिद्धयति तस्मात् सोपाधेर्निरुपाधिरन्य एव किमित्यत्राह—नहीति। सत्यस्य परमात्मनो नानात्वं न हि विद्यते यदि तस्य नानात्वं मन्यते तर्ह्यविद्वान् यतस्तस्य निरुपाधित्वसोपाधित्वलक्षणं नानात्वं महाकाशघटाकाशयोर्यद्वत् तद्वत् गृहाङ्गणगतसर्वव्यापि तेजसोरिव बाह्यशारीरवाय्वोरिव चेति॥ ३०॥ यस्माद्विकारः ख्यायमानोपि प्रत्यगात्मानमन्तरा न निरूप्योस्त्यणुरपि तस्मात् सर्वशब्दवाच्योपि स एवेति सदृष्टान्तमाह—यथा हिरण्यमिति। क्रियाभिस्तत्तद्रचनाभेदैः बहुधा कटककुण्डलादिरूपेण यथा सुवर्णमेव वचोभिस्तत्तन्नामभिः प्रतीयते तथा लौकिकवैदिकैः सर्वैरेव वचोभिर्भगवानेव व्याख्यायते तदुक्तं "सर्वनामाभिधेयश्च सर्ववेदेडितश्च सः" इति स्कान्दे॥ ३१॥ तदेवं जगतः परमात्मस्वाभाविकशक्तिमयत्वमुक्त्वा तेन च जीवकर्तृकेन ज्ञानेन तन्नाशनासामर्थ्यं व्यज्य मोक्षार्थं तदध्यासपरित्यागमुपदेष्टुं परमात्मशक्तिमयस्यापि तस्योपाध्यध्यासात्मकस्याहङ्कारस्य जीवस्वरूपप्रकाशावरकत्वरूपं दोषं सदृष्टान्तमुपपादयति—यथा घन इति। अर्करश्मय एव मेघरूपेण परिणता वर्षन्ति—

'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः'॥

इत्यादिवचनात्तस्मादयमर्थः यथार्कप्रभवः अर्केणैव प्रदर्शितः प्रकाशितश्च घनो निविडो मेघः अर्कांशभूतस्य चक्षुषस्तमो दिवि भूमौ च महान्धकाररूपो भवति एवम् अहं प्राकृताहङ्कारः ब्रह्मगुणः परमात्मशक्तिकार्य्यभूतः तदीक्षितः तेनैव प्रकाशितश्च ब्रह्मांशकस्य तटस्थशक्तिरूपकत्वात् परमात्मनो यो हीनांशस्तस्य आत्मनो जीवस्याऽऽत्मबन्धनः स्वरूपप्रकाशावरको भवति॥३२॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

किञ्च विकारः ख्यायमानः विकारत्वेन प्रसिद्धिमानयं प्रपञ्चः प्रत्यगात्मानं परमात्मानं विना अणुरपि न निरूपणीयः किन्तु सर्वः परमात्मैव परमात्मन्येव प्रपञ्च आरोपितः यथा मरीचिकायां जलत्वेन प्रसिद्धं वस्तु तेजो विना अनणुमात्रमपि न निरूप्यं किन्तु सर्वं तेज एव तेजस्येव जलत्वमारोप्यत इत्यर्थः। ननु, च क्वचिद्विकारत्वेन प्रसिद्धिमानपि पदार्थश्चिदेव सत्य एवेक्ष्यते यथा भक्तिः तत्कारणाधिकरणकर्तादिर्भगवत्पुरी च तथा हि "लक्षणं भक्तियोगस्य निर्गुणस्येत्युदाहृतम्" इति "मत्सेवायां तु निर्गुणः" इति "मन्निकेतं तु निर्गुणम्" इति "निर्गुणो मदपाश्रयः" इति "मन्निष्ठं निर्गुणं स्मृतम्" इत्यादिभगवदुक्तेर्भक्त्युपकरणीभूतः पदार्थमात्र एव निर्गुणः तथा "तासां मध्ये साक्षाद्ब्रह्मगोपालपुरीहि" इति सच्चिदानन्दैकरसे भक्तियोगे तिष्ठतीति च गोपालतापनीश्रुतेः। भगवल्लोको भक्तियोगश्च निर्गुण एवातः परमसत्य एवेति तत्राह—स्याच्चेदिति। यदि निर्गुणत्वेन निरूप्यो भवति तर्हि

सोऽपि चित्समः "सीता सा सीतया समा" इतिवदभेदे उपमा चिदेवेत्यर्थः । आत्मवत् परमात्मेव निर्गुणः परमात्मविलासत्वात्परमात्मैव स एक एवेत्यर्थः ॥ २९ ॥ ननु, केन प्रकारेणैक्यं मन्तव्यम् ? तत्राह—नहीति । सत्यस्य परमसत्यस्य चिद्वस्तुनो नानात्वं नहि नैवास्ति तदपि यदि नानात्वं मन्यते तर्ह्यविद्वान् यथा छिद्रयोर्घटद्वये इदमेकमाकाशमिदमपरमाकाशमिति एवं ज्योतिषोर्दीपद्वयगतयोर्वातयोर्देहद्वयगतयोः प्राणयोरिति ॥ ३० ॥ तदेवं सृष्टिसमयोपप्रपञ्चस्य नानाव्यवहारालम्बनत्वे दृष्टमप्येकं ब्रह्मैव जानीयादित्याह—यथेति । क्रियाभिस्तत्तद्रचनाभेदैः बहुधा कटककुण्डलादिरूपेण एवं लौकिकवैदिकैर्वचोभिः ॥ ३१ ॥ ननु, यद्येवं सर्वमेव ब्रह्मकार्यत्वादेकं ब्रह्मैव तर्हि ब्रह्मकार्येणाहङ्कारेणासत्येन ब्रह्मांशभूतादिरिचित्कणाः सत्या जीवाः कथमाव्रियन्ते ते वा तदावृताः कथं मुह्यन्तीति तत्र सदृष्टान्तमाह—यथेति । अर्करश्मय एव मेघरूपेण परिणता वर्षन्ति—

"अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः" ॥

इत्यादि वचनात् तस्मादर्कप्रभव एव घनः अर्केणैव दर्शितः प्रकाशितश्च अथ चार्कांशभूतस्य चक्षुषस्तमः आवरकः एवमेव अहम् अहङ्कारः आत्मनो जीवस्य आत्मबन्धनः आत्मना स्वेनैव जीवं बध्नातीत्यर्थः ॥ ३२ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एवं ज्ञानऋतादिशब्दवाच्यः सर्वात्मा सर्वकारणम् भगवान्नित्यप्रलयाख्ये मुक्तौ गम्यो निरूपितः अथ बुद्धेर्जागरणमित्यत्र निरूपितोऽपि गन्ता तार्किकायुक्तजीवस्वरूपतद्धर्मभूतज्ञानश्रवणेन मुमुक्षोः—

"अन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा" ॥

इति शास्त्रोक्तोऽनर्थोमाभूदिति तं स्वरूपतो धर्मतश्च निरूपयति विकार इति द्वाभ्याम् । तत्र तार्किकादयः आत्मा जडः ज्ञानगुणकः तज्ज्ञानं च नीलं पीतमित्येवं जायते नश्यति च तन्निराकरोति विकारः ज्ञानविकारः नीलपीताद्याकारैः ख्यायमानोऽपि तार्किकादिभिः प्रत्यगात्मानमन्तरा जीवमध्ये अणु अपि न निरूप्यो भवति स्याच्चेदिति असन्देहे सन्देहवचनं तार्किकादीनां शनैः प्रबोधनार्थम् "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्यादिश्रुतिप्रोक्तो गणः स्याच्चेत्तर्हि स चित्समः चित् "चेतनश्चेतनानाम्" इति श्रुतिप्रोक्तः ज्ञानस्वरूपप्रत्यगात्मा तत्तुल्यः ज्ञानात्मक एव मन्तव्यः किञ्च, आत्मवत् "नित्यो नित्यानाम्" इति श्रुतिप्रोक्तो नित्यः आत्मा प्रत्यगात्मा तद्वन्नित्य एव मन्तव्यः ननु नीलपीतादिनानाकार इत्यर्थः ॥ २९ ॥ नन्वेकस्यैव ब्रह्मणः किं महाकाशघटाकाशन्यायेन विम्बप्रतिविम्बादिन्यायेन वा महावाताल्पवातन्यायेन वा नानात्वं नेत्याह—सत्यस्य ब्रह्मणो नानात्वं स्वरूपतो न हि घटेत अभेद्यत्वात् यदि छिद्रयोः महाकाशघटाकाशयोर्यद्वत् नानात्वं तद्वत् यथा ज्योतिषोः सूर्यादिबिम्बप्रतिबिम्बयोरिव वातयोः महावाताल्पवातयोरिव नानात्वं मन्यते तदा अविद्वान् स्यात् प्रथमदृष्टान्तेन घटावच्छिन्नाकाशवदुपाध्यवच्छिन्नब्रह्मप्रदेशभूतजीवस्वीकारे जीवोत्क्रान्त्यादिविधायकशास्त्रव्याकोपादिदोषप्रसङ्गात् द्वितीयदृष्टान्तेन सूर्यादिप्रतिबिम्बवत् ब्रह्मप्रतिबिम्बरूपजीवस्वीकारे व्यापकप्रतिविम्बाऽनुपपत्त्यादिदोषापातात् तृतीयदृष्टान्तेन बृहदल्पवायुभेदवत् परजीवभेदस्वीकारे जलवत्सावयवद्रव्यस्य वायोर्नानात्वं सम्भवति निरवयवे अखण्डैकरूपे नानात्वासम्भवात् अवच्छेदप्रतिविम्बादौ पराभिमताध्यासगिरिवज्रादौ विस्तारतो निराकृतौ ग्रन्थविस्तारभयादत्रोपरम्यते तस्माज्ज्ञानगुणकः ज्ञानस्वरूपः भगवदंशभूतो जीव इति भावः ॥ ३० ॥ ननु, तर्हि ब्रह्मणः सकाशाज्जीवो भिन्नोऽभिन्नो वेति संशये जीवस्यैव का कथा यथा जलधरा व्योम्नि इत्यत्रोक्तस्य चेतनाचेतनस्य सर्वस्य विश्वस्य ब्रह्मकार्यस्य ब्रह्मभिन्नाऽभिन्नत्वं सर्वशास्त्राचार्यसम्मततया प्रतिपादयति—हिरण्यमिति । यथा व्यवहारवर्त्मसु पदार्थक्रयमार्गेषु कारणतया एवमेव हिरण्यं क्रियाभिः कटककुण्डलादिरचनाव्यापारैर्बहुधा नृभिः समीयते एवं सर्वज्ञः सर्वशक्तिः सर्वकारणो भगवान् विश्वभिन्नाऽभिन्नतया 'एकः सन्बहुधा व्यचचार' इत्यादिवैदिकवचोभिः ।

"अनेकमेकं बहुधा वदन्ति श्रुतिस्मृतिन्यायनिविष्टचित्ताः । आहुर्यमात्मानमजं पुराविदो द्रष्टुं तमीशं प्रतिसंयतास्म" ॥

एकस्त्वमेव द्वयमद्वयं च—

इत्यादिभिर्लैकिकैः पौराणैर्वचोभिर्जनैस्तत्त्वविद्भिर्व्याख्यायते इत्यन्वयः सूत्रकृतापि बहूनि सूत्राणि 'उभयव्यपदेशात्त्वहिकुण्डलवत्' ( ३।२।२६ ) इत्यादीन्युक्तानि ॥ ३१ ॥ एवं सर्वस्य ब्रह्मात्मकत्वं विजानतोऽहङ्कारादिदोषापगमे ब्रह्मध्यायेन तद्भावापत्तिलक्षणं नित्यप्रलयापरपर्यायं मोक्षं वस्तुमहङ्कारबन्धनं तन्निवृत्तिप्रकारं चाह—यथेति द्वाभ्याम् । यथा घनः अर्कप्रभवः अर्केण प्रवर्तितः अर्कदर्शितः अर्केणैव दर्शितश्च अर्कांशभूतस्य अर्कदैवत्यस्य चक्षुषस्तमो भवति अर्कादिदर्शनप्रतिबन्धको भवति एवमहमहङ्कारः

देहगेहादावहंममाभिमानरूपः अन्तःकरणवृत्तिविशेष इत्यर्थः। ब्रह्मगुणः ब्रह्मशक्तिगुणमयः 'तदीक्षितस्तेनैवानादिकर्मप्रवाहनेत्रा-प्रकाशितः एष परस्यांशः 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति श्रुतिस्मृतिप्रसिद्धस्य ब्रह्मांशकस्यात्मनो जीवस्य आत्म-बन्धकः आत्मविषये ब्रह्मभावापत्तौ प्रतिबन्धकः॥ ३२॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

नन्वात्मनोऽपि जीवब्रह्मरूपेण नानात्वं इष्टमेवेत्याशङ्क्याह—नहीति। सत्यस्य परमार्थभूतस्य नानात्वं नास्त्येव। 'एको देवः सर्वभूतेषु गूढः' इति श्रुतेः। ननु कथं तर्हि तयोर्भेदव्यवहार इत्याशङ्क्योपाधिकृत एवेत्याह—यदि अविद्वान् तन्नानात्वं मन्यते तर्हि छिद्रयोरिव घटाकाशमहाकाशयोरिवेति परिच्छेद्ययोर्दृष्टान्तः। तथा ज्योतिषोरिव आकाशजलस्थसूर्ययोरिवेत्युपाधि-कृतविकारसदसद्भावे दृष्टान्तः। वातयोर्बाह्यशरीरस्थवाय्वोरिवेति क्रियाभेदे दृष्टान्तः॥ २९॥ अतो जडचेतनात्मकं सर्वं ब्रह्मैवेति सदृष्टान्तमाह—यथेति। क्रियाभिस्तत्तद्रचनाभेदैर्व्यवहारमार्गेषु यथा हिरण्यमेव बहुधा कटककुण्डलादिरूपभेदैर्नृभिः समीयते प्रतीयते एवं लौकिकवैदिकैर्वचोभिर्भगवानेव व्याख्यायते। तर्हि हिरण्यवत्कुतो न प्रतीयत इत्याशङ्क्याह—अधोक्षज इति। हिरण्यमिन्द्रियगोचरमयं तु तदगोचर एतावाँस्तु विशेषः॥ ३०॥ ननु अधः अक्षजमिन्द्रियजं ज्ञानं यस्मात् सोऽधोक्षजः परमात्मा तत्र कथं तस्य तथात्वमित्यपेक्षायां 'नायं वेद स्वमात्मानं यच्छक्त्याहन्धिया हतम्' इत्यादौ तत्र तत्र तस्याहङ्कारेणावृतत्वस्य प्रदर्शितत्वात् इति चेत् कथमहङ्कारस्य ब्रह्मस्वरूपावरणेन भेदव्यवहारहेतुत्वं तस्य स्वकारणभूतब्रह्मावरकत्वासम्भवात्। आवरणे वा स्वस्यापि प्रकाशासम्भवादित्याशङ्क्य सदृष्टान्तमाह—यथेति। अर्करश्मय एव मेघरूपेण परिणता वर्षन्तीति। 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठति। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति वचनात्। तस्मात् अर्कप्रभवः अर्केणैव दर्शितः प्रकाशितश्च घनो मेघो यथार्कांशभूतस्य चक्षुषः तमः स्वरूपभूतार्कदर्शनप्रतिबन्धको भवति। हीत्यत्र न सन्देहः। एवमेवाहम्। अहङ्कारोऽपि ब्रह्मणो गुणः कार्यभूतः तदीक्षितः तेनैव प्रकाशितश्च ब्रह्मांशकस्यात्मनो जीवस्यात्मबन्धनः ब्रह्मस्वरूपदर्शनप्रतिबन्धको भवति॥ ३१॥ अत एवाहङ्कारनाशे स्वरूपदर्शनं भवतीति तेनैव दृष्टान्तेनाह—घन इति यथा च अर्कप्रभवो घनो यदा पवनेन विदीर्यते तदैव चक्षुः स्वरूपभूतं रविमीक्षते तथा यदैव जिज्ञासया विचारेण आत्मन उपाधिरावरकोऽहङ्कारो विनश्यति तर्हि तदा अनुस्मरेत्, ब्रह्मैवाहमिति पश्यतीत्यर्थः॥ ३२॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ननु ख्यायमानोऽपि विकारः कुतः आत्मनि नेत्युच्यते इति चेदौपाधिकत्वादित्याह। न हीति। सत्यशब्दोऽत्र जीवपरः 'तदनु प्रविश्य सच्च त्यच्चाभवत्। विज्ञानं च सत्यानृतं चेति प्राणा वै सत्यम्' इति च प्रयोगात्। सत्यस्य परिशुद्धजीवात्मस्वरूपस्य नानात्वं देवमनुष्यादिनानात्वं, हि नैव विद्यते इत्यर्थः। अविद्वान् कश्चित् यदि मन्यते, तथापि तत् नानात्वं छिद्रयोः यद्वत् घटाकाशमहाकाशयोरिवेत्यर्थः। ज्योतिषोर्वा सूर्यादिप्रतिबिम्बयोरिवेत्यर्थः। वातयोरिव बाह्यशरीरस्थवाय्वोरिवेत्यर्थः। औपाधिक-भेदस्य जीवस्वरूपास्पर्शित्वे नभस्तेजोवायवो दृष्टान्ता बोध्याः॥ २९॥ एवमात्मनो देहाद्व्यावृत्ताकारत्वप्रतिपादनेनैव देहस्यापि आत्मनः सकाशाद्व्यावृत्ताकारत्वमर्थसिद्धम्। ताभ्यां प्रकृतपरमात्मनो व्यावृत्ताकारता स्फुटैव, सा च न तस्य कालावयवैरित्यादि-भिस्त्रिभिः प्राक् प्रतिपादितैव; अथोपपादितं चिदचिद्विशिष्टस्य परमात्मनो विचित्रजगद्रूपेण परिणामं कार्यकारणयोरनन्यत्वं चोपसंहरन् कार्यमिथ्यात्वपक्षप्रतिक्षेपाय तत्सत्यतां च सदृष्टान्तं यथा तथाह। यथा हिरण्यमिति। व्यवहारवर्त्मसु व्यवहारमार्गेषु निमित्तभूतेषु। व्यवहारशब्दः प्रयोजनस्याप्युपलक्षणार्थः। कुण्डलमानय कटकमानय बिभृहीत्यादिव्यवहारार्थं धारणादिप्रयोजनार्थं चेत्यर्थः। क्रियाभिः रचनाविशेषैः, हिरण्यं वस्तुत एकमेव सुवर्णं, बहुधा कुण्डलादिभेदेन नृभिः समीयते प्रमीयते च। रचना-विशेषादिक्रियार्हत्वाद्धारणादिप्रयोजनार्हत्वाच्च कटकादिकं सत्यमेव कारणादनन्यच्च। न हि शुक्तिरजतादिकमर्थक्रियार्हमिति भावः। एवं सूक्ष्मचिदचिद्विशिष्टः अधोक्षजः भगवानेक एव लौकिकैः वैदिकैश्च वचोभिः करणैः जनैर्विशिष्टाद्वैतवादिभिर्लोकैः कर्तृभिः, यद्वा द्वे अपि कर्तृतृतीये व्याख्यायते विविधमाख्यायते जगद्रूपेण परिणतः कथ्यते इत्यर्थः। यथा कटकमुकुटकर्णिकादिभेदैः कनकमभेदमपीष्यते, तथैकः सुरनरपशुपादिभेदैर्हरिरपि उदीर्यते इत्यादीनि लौकिकवचांसि 'यथा सौम्यैकेन लोहमणिना सर्वं लोहमयं विज्ञातं स्यात्, 'वाचारम्भणं विकारो नामधेयं लोहमणिः इत्येव सत्यम्, इत्यादीनि वैदिकानि वचांसि भगवानित्यनेन कारणत्वाशङ्कित हेयास्पदत्वव्यावृत्तिः सूच्यते॥ ३०॥ अथ मोक्षपर्यायसंसृतिबन्धनिवृत्तिरेव आत्यन्तिकप्रलयः, इति विवक्षुस्तावत् कोऽसौ देहात्मनो बन्ध इत्यत्राह। यथेति। यथा घनो मेघः, अर्कात् सूर्यात् प्रभवो यस्य सः मेघस्य अर्कप्रभवत्वमर्करश्मि-मिश्रितधूमादितमोद्व्यारब्धत्वादवगन्तव्यम्, अर्कदर्शितः सूर्यप्रकाशितश्च स च अर्कांशभूतस्य चक्षुषः तमः तमःसमानश्च अर्कदर्शनप्रतिबन्धकः इति यावत्। आदित्याधिष्ठितत्वाच्चक्षुषोऽर्कांशत्वम्, एवं अहंशब्दोऽत्र देहात्माभिमानविषयत्वाद्देहपरो

बोध्यः, ब्रह्मगुणः परमात्मनः विशेषणभूतः अहमहंकारपरिणामात्मको देहः तदीक्षितस्तेन परमात्मना प्रकाशितः सन्, ब्रह्मांशकस्य ब्रह्मात्मकस्य ब्रह्मणः शरीरभूतस्य, आत्मनो जीवस्य तु आत्मबन्धकः जायते। यथा अर्कांशस्य चक्षुषः अर्कदर्शने तत्प्रभवो मेघः प्रतिबन्धकः एवं शरीरतया परमात्मस्वरूपभूतस्य जीवस्य परमात्मदर्शने तद्गुणभूतो देहः प्रतिबन्धको जायते इत्यर्थः। तत्प्रतिबन्ध एव संसृतिप्रतिबन्धो नामेति भावः॥ ३१॥ मेघविनाशे चक्षुषो रविदर्शनवद् हरूपाहंतिरोधानविगमे जीवस्य परमात्मावलोकनमित्याह। घनो यदेति। अर्कप्रभवः घनः, यदा विदीर्यते वायुना विशीर्यते तदा चक्षुः स्वरूपं स्वस्य प्रकाशकं रविम्, ईक्षते पश्यति हि एवं यदा तु अहंकारपरिणामात्मकोऽहमित्यभिमानविषयो वा देहः स एव उपाधिः आत्मनः जिज्ञासया विचारपूर्वकोपासनया नश्यति, तर्हि तदा अनुस्मरेत् परमात्मानं साक्षात् कुर्यादित्यर्थः। यद्वा। आत्मनः जिज्ञासया विचारेण अनुस्मरेदात्मानमुपासीत। तदा उपाधिः नश्यति ततश्च परमात्मानम् ईक्षते इत्यर्थः। 'ततस्तु तं पश्यति निष्कलं ध्यायमानः' इति श्रुतेः, इति भावः॥ ३२॥

## हिन्दी अनुवाद

इसमें सन्देह नहीं कि यह प्रपञ्चरूप विकार स्वाप्निक विकार के समान ही प्रतीत हो रहा है, तो भी यह अपने अधिष्ठान ब्रह्मस्वरूप आत्मा से भिन्न नहीं है। कोई चाहे भी तो आत्मा से भिन्नरूप में अणुमात्र भी इसका निरूपण नहीं कर सकता। यदि आत्मा से पृथक् इसकी सत्ता मानी भी जाय तो यह भी चिद्रूप आत्मा के समान स्वयं प्रकाश होगा, और ऐसी स्थिति में वह आत्मा की भाँति ही एकरूप सिद्ध होगा॥ २९॥ परन्तु इतना तो सर्वथा निश्चित है कि परमार्थ-सत्य वस्तु में नानात्व नहीं है। यदि कोई अज्ञानी परमार्थ-सत्य वस्तु में नानात्व स्वीकार करता है, तो उसका यह मानना वैसा ही है, जैसा महाकाश और घटाकाश का, आकाशस्थित सूर्य और जल में प्रतिबिम्बित सूर्य का तथा बाह्य वायु और आन्तर वायु का भेद मानना॥ ३०॥ जैसे व्यवहार में मनुष्य एक ही सोने को अनेकों रूपों में गढ़ गलाकर तैयार कर लेते हैं और वह कंगन, कुण्डल, कड़ा आदि अनेकों रूपो में मिलता है; इसी प्रकार व्यवहार में निपुण विद्वान लौकिक और वैदिक वाणी के द्वारा इन्द्रियातीत आत्मस्वरूप भगवान् का भी अनेकों रूपों में वर्णन करते हैं॥ ३१॥ देखो न, बादल सूर्य से उत्पन्न होता है और सूर्य से ही प्रकाशित। फिर भी वह सूर्य के ही अंश नेत्रों के लिये सूर्य का दर्शन होने में बाधक बन बैठता है। इसी प्रकार अहङ्कार भी ब्रह्म से ही उत्पन्न होता है, ब्रह्म से ही प्रकाशित होता है और ब्रह्म के अंश जीव के लिये ब्रह्मस्वरूप के साक्षात्कार में बाधक बन बैठता है॥ ३२॥

घनो यदार्कप्रभवो विदीर्यते चक्षुः स्वरूपं रविमीक्षते तदा।
यदा ह्यहङ्कार उपाधिरात्मनो जिज्ञासया नश्यति तर्ह्यनुस्मरेत्॥ ३३॥
यदैवमेतेन विवेकहेतिना मायामयाहङ्करणात्मबन्धनम्।
छित्त्वाच्युतात्मानुभवोऽवतिष्ठते तमाहुरात्यन्तिकमङ्ग सम्प्लवम्॥ ३४॥
नित्यदा सर्वभूतानां ब्रह्मादीनां परन्तप। उत्पत्तिप्रलयावेके सूक्ष्मज्ञाः सम्प्रचक्षते॥ ३५॥
कालस्रोतोजवेनाशु ह्रियमाणस्य नित्यदा। परिणामिनामवस्थास्ता जन्मप्रलयहेतवः॥ ३६॥

## कृष्णप्रिया व्याख्या

अन्वयः—अर्कप्रभवः घनः यदा विदीर्यते तदा चक्षुः स्वरूपं रविम् ईक्षते (तथैव) यदा जिज्ञासया आत्मनः उपाधिः अहंकारः नश्यति तर्हि अनुस्मरेत्॥ ३३॥ यदा एवं विवेकहेतिना एतेन मायामयाहङ्करणात्मबन्धनं छित्वा अच्युतात्मानुभवः अवतिष्ठते अङ्ग तम् आत्यन्तिकं सम्प्लवम् आहुः॥ ३४॥ परन्तप एके सूक्ष्मज्ञाः सर्वभूतानां ब्रह्मादीनां नित्यदा उत्पत्तिप्रलयौ सम्प्रचक्षते॥ ३५॥ कालस्रोतोजवेन आशु ह्रियमाणस्य नित्यदा जन्मप्रलयहेतवः परिणामिनां ताः अवस्थाः॥ ३६॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अत एवाहंकारनाशे स्वरूपदर्शनं भवतीति तेनैव दृष्टांतेनाह। घन इति। आत्मन उपाधिः। जिज्ञासया विचारेण। तर्हि तदाऽनुस्मरेत्। ब्रह्माहमिति पश्यतीत्यर्थः॥ ३३॥ सोऽयमात्यंतिकः प्रलय इत्युपसंहरति। यथैवमिति। विवेकहेतिना

ज्ञानशस्त्रेण। अहंकरणमेवात्मबंधनम्। अच्युतं परिपूर्णमात्मानमनुभवतीति तथा॥ ३४॥ नित्यप्रलयमाह। नित्यदेति॥ ३५॥ कुत इत्यत आह। कालेति। परिणामिनां नदीप्रवाहप्रदीपज्वालादीनां या उच्चनीचावस्थास्ताः कालरूपस्रोतसो वेगेनाशु ह्रियमाणस्य देहादेर्दृश्यमानास्ता एव नित्यदा जन्मप्रलयहेतवो भवंति। देहः प्रतिक्षणं प्रध्वंसी प्रतिक्षणमवस्थाभेदास्पदत्वात्प्रदीपादिवदित्यनुमानम्॥ ३६॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यतोऽहंकार एव प्रतिबंधकोस्ति अतो हेतोरेव। इत्यर्थ इति—प्रतिबंधकनाशे स्वत एव स्वरूपज्ञानं भवतीति भावः॥३३॥ जिज्ञासयाहंकारबाधप्रकारमाह—यदैवं गुरोर्महावाक्यश्रवणोत्तरं श्रूयमाणेशजीवाभेदस्य विरोधादनुपपत्तेरेतेन मायाऽविद्याद्युपाधिविवेकरूपहेतिना भागत्यागलक्षणतद्बाधकरूपखड्गेन तयोर्मायाहंकरणोपाधिरूपमात्मबंधनं छित्त्वाऽच्युतो हरिरेवात्मा मत्स्वरूपमित्यनुभवोऽपरोक्षबोधो यस्य तथाभूतः शुद्धनिरुपहितस्वरूपेणावतिष्ठते, तमात्यंतिकमंगसंप्लवं स्थूलसूक्ष्मकारणांगत्रयप्रलयमाहुः। अंगेति संबोधनम् असंकरणमात्मावरकमहंकारम्। अंगेति संबुद्धिः पूर्ववदिति विश्व०॥ ३४॥ हे परन्तपेति—शत्रुतापकस्य तवाज्ञानतापकताप्यस्त्येवेति भावः॥ ३५–३६॥

### अन्वितार्थप्रकाशिका

यदेति। यदैवमुक्तप्रकारेण विवेकहेतिना ज्ञानशस्त्रेण मायामयमहङ्करणरूपमात्मबन्धनम् आत्मावरकं छित्त्वा अच्युतं परिपूर्णमात्मानमनुभवतीति तथाभूतः सन्नवतिष्ठते तदा अङ्ग हे राजन्! तमात्यन्तिकं संप्लवं प्रलयमाहुः॥ ३३॥ नित्यप्रलयमाह—नित्यदेति। हे परन्तप! एके केचित् सूक्ष्मज्ञा विवेकिनः सर्वभूतानां नित्यदा प्रतिक्षणमेवोत्पत्तिप्रलयौ संप्रचक्षते कथयन्ति॥ ३४॥ तत्र हेतुमाह—कालेति कालरूपस्रोतसो वेगेनाशु ह्रियमाणस्य देहादेर्नित्यदा दृश्यमाना या बाल्ययुवादिरूपास्ता एव नित्यदा जन्मप्रलययोर्हेतवः ज्ञापिकाः आरम्भकावतसंयोग एवोत्पत्तिः तद्विभाग एव विनाशः। तत्र प्रत्यवयविना प्रत्यवयवेषु मुक्तान्नादिपरमाणूनां संयोगविभागसंभवे वृद्धिह्रासाद्यवस्थाभेदो न स्यात्। अतः प्रतिक्षणं परमाणुपर्यन्तं संयोगविभागावश्यमङ्गीकार्याविव्याशयः। तत्र दृष्टान्तमाह। परिणामिनामिति। यथा परिणामिनां नदीप्रवाहप्रदीपज्वालादीनामुच्चनीचावस्थास्तज्ज्ञापिकास्तथेति देहः प्रतिक्षणं प्रध्वंसी प्रतिक्षणमवस्थाभेदवत्त्वात् प्रदीपवदित्यनुमानम्॥ ३५॥ ननु यदि प्रतिक्षणमवस्थास्तर्हि कथं न दृश्यन्ते अतो हेतुरसिद्ध इत्याङ्क्याह—अनादीति। आद्यन्तवता आद्यन्तरहितेन ईश्वरमूर्त्तिना कालेन जायमाना अवस्था नैव दृश्यन्ते न लक्ष्यन्ते। आकाशे गच्छतां ज्योतिषां चन्द्रादीनां गमनावस्थाविशेषा यथा नैव लक्ष्यन्ते तद्वत् तथा च यथा तेषां प्रदेशान्तरप्राप्त्यान्यथाऽनुपपत्त्या प्रतिक्षणं गमनावस्थाः कल्प्यन्ते तद्वदत्रापि बाल्यतारुण्यादिदर्शनेन तन्मध्यवर्त्तिन्योऽवस्थाः कल्प्यन्त इति न हेतुरसिद्ध इत्यर्थः॥ ३६॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

मेघविनाशे चक्षुषो रविदर्शनवद्देहतिरोधानविगमे जीवस्य परमात्माऽवलोकनमित्याह—घनो यदेति। यदा ह्यहमिति। अत्राप्यहङ्कारशब्दोऽहम्बुद्धिगोचरदेहपरः 'मायामयाहङ्करणात्मबन्धनम्' इत्यनन्तरोक्तेः॥ ३३॥ अच्युतेति अच्युते स्वान्तरात्मनि अनुभवो यस्य सोऽच्युतात्माऽनुभवः आत्यन्तिकः सम्प्लवः प्रलयः मोक्षः॥ ३४॥ नित्यदेति सूक्ष्मपरिणामयोगः प्रलयः मोक्षः॥ ३४॥ नित्यदेति सूक्ष्मपरिणामयोगः प्रलयो विवक्षितः परिणामिशब्देन शरीरं विशेष्यम्॥ ३५॥ अवस्था जन्मप्रलयहेतवः॥ ३६॥

### श्रीमद्वीरराघवव्याख्या

मेघविनाशे चक्षुषो रविदर्शनवद्देहतिरोधानविगमे जीवस्य परमात्मावलोकनमित्याह—घनो यदेति। विदीर्यते वायुना तदा चक्षुःस्वरूपं रविं पश्यति एवं यदा अहङ्कारः अहङ्कारपरिणामात्मकः अहमभिमानविषयो वा देहः स एवोपाधिरात्मनो जिज्ञासया विचारपूर्वकोपासनया नश्यति तदा अनुस्मरेत् परमात्मानं साक्षात्कुर्यादित्यर्थः। यद्वा आत्मनो जिज्ञासया विचारेणानुस्मरेदात्मानमुपासीत तदोपाधिर्नश्यति ततश्च परमात्मानम् ईक्षते इत्यर्थः। 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' इति श्रुतेः इति भावः॥ ३३॥ एवमुपाधिविलय एवात्यन्तिकः प्रलय इत्याह—यदेवेति। एतेन विवेकहेतिना विवेकादिसाधनसम्पन्नकानुगृहीतभगवदुपासनरूपेण खड्गेन माया विकाराहङ्कार परिणामरूपदेहसम्बन्ध एवात्मनो बन्धस्तं छित्वा अच्युते स्वान्तरात्मनि [स्वान्तर्यामिणि] अनुभवो यस्य स अवतिष्ठत इति यत्तमेव अङ्ग हे राजन् आत्यन्तिकं संप्लवं प्रलयमाहुः तद्याथात्म्यविद इति कर्त्तृपदाध्याहारः॥ ३४॥ अथ नित्यं प्रलयं निरूपयति—नित्यदेति। हे परन्तप राजन् ब्रह्मादीनां सर्वभूतानां नित्यदा प्रतिक्षणम् उत्पत्तिप्रलयौ

प्रचक्षते [ पूर्वपूर्वावस्था एके केचित्संप्रचक्षते ] ब्रह्मादिसर्वक्षेत्रज्ञशरीराणां सततपरिणामस्वभावत्वात्तत्रोत्तरोत्तरावस्थाप्राप्तिरुत्पत्तिः पूर्वपूर्वावस्थात्यागः प्रलय इत्याचक्षते इमावेव नित्योत्पत्तिप्रलयाविति भावः स्थूलदृष्टिभिस्तौ न ज्ञायेते इत्यभिप्रायेण सूक्ष्मज्ञा इत्युक्तम् ॥ ३५ ॥ एतदेवोपपादयति—कालेति । काल एव स्रोतः प्रवाहः तस्य जवेन वेगेनाशु शीघ्रं ह्रियमाणस्येतीवार्थगर्भो विवक्षितः नदीप्रवाहवेगेन ह्रियमाणस्य तृणकाष्ठादेरुच्चनीचाद्यवस्था इवेत्यर्थः । परिणामिनां देहानां नित्यं या या अवस्थाः तास्ताः जन्मप्रलयहेतवः संयोगवियोगविषयतया हेतव इत्यर्थः ॥ ३६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यदा घनोऽर्कप्रभया तीव्रया सूर्यप्रभया विदीर्यते नष्टो भवति तदा सूर्यांशं चक्षुः स्वरूपं रविबिम्बं रविमीक्षते यथा यदा जीवस्यात्मनः परमात्मनो दर्शने उपाधिनिमित्तभूतोहङ्कारो जिज्ञासया परमात्मोपासनया तथा नश्यति तर्हि तदा जीवः परं परमात्मानमनुस्मरेत् अनुकूलस्मरणसमर्थो भवतीत्यन्वयः । हिशब्देन 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः' इतीदं वाक्यमग्राहि ॥३३॥ असम्प्रज्ञातसमाधिस्थलक्षणमाह—यदेति । एवमुक्तविधयोद्भूतयैतया विवेकहेतिना निशितज्ञानायुधेन मायामयाहङ्करणात्मबन्धनं भगवदिच्छानिर्मितं लिङ्गशरीरलक्षणाहङ्कारजनितसंसारहेतुं छित्वा अच्युतात्मानुभवः नित्यमुक्तपरमात्माऽपरोक्षदर्शनेनासम्प्रज्ञातसमाधिस्थो निर्मुक्तलिङ्गशरीराभिमानोऽवतिष्ठते एतमङ्ग ! आत्यन्तिकं सम्प्लवम्प्रलयमाहुः असम्प्रज्ञातसमाधिस्थावस्थायाः नामान्तरमिदम् ॥ ३४ ॥ इदानीं दैनन्दिनजन्मप्रलयावाह—नित्यदेति । दिने-दिने ब्रह्मादीनां सर्वभूतानामुत्पत्तिलयौ स्त इति एके सूक्ष्मज्ञा वदन्तीत्यनेनान्वयः ॥ ३५ ॥ चेतनानां निर्विकारत्वेन जन्माद्यसम्भवात्कथमुच्यते नित्यदा जन्माद्यस्तीति तत्राह—कालेति । कालस्रोतोजवेन कालनदीप्रवाहवेगेन क्षिप्रं ह्रियमाणस्य नीयमानस्य देहस्य ॥ ३६ ॥

## श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

स चाध्यासपरित्यागः स्वतो न भवति किन्तु परमात्मजिज्ञासया तत्प्रभावेणैवेति वक्तुं पूर्ववदेव दृष्टान्तपरिपाटीमाह—घन इति । घनो यदार्कप्रभवो विदीर्यत इति दृष्टान्तांशे तद्विदारणस्य न चक्षुःशक्तिसाध्यत्वं किन्तु सूर्यप्रभावसाध्यत्वमिति व्यक्तम् अनेन दार्ष्टान्तिकेऽपि आत्मनः परमात्मनो जिज्ञासया जातेन तत्प्रसादेनाहङ्कारो नश्यति पलायत इत्यत्रांशे पुरुषज्ञानसाध्यत्वमहङ्कारनाशस्य खण्डितम् अतो विवर्त्तवादो नाभ्युपगतः अत्र चोपाधिरिति विशेषणेन स्वरूपभूतो ऽहङ्कारस्त्वन्य एवेति स्पष्टीभूतम् एवं यथा दृष्टान्तेन घनमयमहान्धकारावरणाभावात्प्रभावेन योग्यतालाभाच्चक्षुः कर्तृभूतं स्वरूपं कर्मभूतमीक्षते स्वस्वरूपप्रकाशमस्तित्वेन जानाति स्वशक्तिप्राकट्यं लभत इत्यर्थः । कदाचित् तदक्षिणोन्मुखः सन् रविं चेक्षते तथा दार्ष्टान्तिकेऽत्यनुस्मरेत् स्मर्तुमनुसन्धातुं योग्यो भवति आत्मानं परमात्मानं चेति शेषः ॥ ३३ ॥ निगमयति—यदैवेति । एतेन पूर्वोक्तेन विवेकशस्त्रेण मायामयेति विशेषणं स्वरूपभूतव्यवच्छेदार्थम् अवतिष्ठते स्वरूपेणावस्थितो भवति न केवलमेतावदेव अच्युतात्मानुभवः अच्युते अच्युतनाम्नि आत्मनि परमात्मनि अनुभवो यस्य तथाभूत एव सन्नवतिष्ठते ॥ ३४–३९ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तस्यैवाहङ्कारस्य नाशो सत्यावरणभङ्गो ब्रह्मस्वरूपदर्शनं च भवतीति तेनैव दृष्टान्तेनाह—घन इति । विदीर्य्यते विनश्यति तदस्वक्षुः कर्तृ रूपं रविनीक्षते इति मनुष्यादेरेव चक्षुर्नतूलूकादेश्चक्षूरविमीक्षते, यथा तथा भक्तिमतामेव ज्ञानिनां ननु भक्तिमकुर्वतामिति "भक्त्याहमेकया ग्राह्यः" इत्याद्युक्तेः अनुसरेत् ब्रह्मानुभवति ॥३३॥ अहङ्कारविदारणे भक्तिमिश्रं ज्ञानं खलु साधनमित्याह यदेति । विवेकहेतिना ज्ञानास्त्रेण अच्युते भगवति आत्मनो मनसोऽनुभवः सुदृढध्यानं यस्य तथाभूतः सन्नवतिष्ठते यद्वा एवमहङ्कारं छित्वा स्थितस्य योगिनः अच्युतात्मानुभवः पूर्णब्रह्मानुभवः अवतिष्ठते स्थिरीभवति यस्तम् आत्यन्तिकं संप्लवं प्रलयम् आहुः ।३४–३५। नित्यप्रलयमाह—नित्यदेति । कुत इत्यत आह; कालरूपस्रोतसो वेगेन आशु ह्रियमाणस्य एकवचनमार्षं ह्रियमाणानामित्यर्थः परिणामिनां देहादीनाम् अवस्था बाल्यपौगण्डाद्या जन्मप्रलयहेतवः जन्मप्रलययोरनुमापकाः देहाद्याः प्रतिक्षणजन्मप्रलयवन्तः । अवस्थाभेदानां विद्यमानत्वात् प्रदीपादिवदित्यनुमानम् ॥ ३६ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

आत्मनः जीवस्य उपाधिः अहङ्कारः जन्ममरणप्रवाहावहः जिज्ञासया वेदान्ततत्त्वविचारेण नश्यति तर्हि तदानुस्मरेत् आत्मपरमात्मयाथात्म्यं पश्यतीत्यर्थः ॥ ३३ ॥ आत्यन्तिकप्रलयमाह—यादति । यदा च अहङ्कारनाशानन्तरं एवमुक्तप्रकारेण आत्मपरमात्मयाथात्म्यविवेकशस्त्रेण मायामयं अहङ्करणमेव आत्मबन्धनं यस्मिन् तच्च तच्च तत् कार्यकारणप्रकृतिमण्डलं छित्वाऽतिक्रम्य

अच्युतानुभवः अवतिष्ठति हे अङ्ग, विष्णुदत्त ! तं मोक्षमात्यन्तिकसम्प्लवमाहुः ॥ ३४ ॥ अथ नित्यं प्रलयमाह—नित्यदेति। ब्रह्मादीनां चतुर्मुखशरीरादीनाम् नित्यं प्रतीक्षणम् ॥ ३५ ॥ अनुमानेन देहादीनां नित्यं प्रलयं ज्ञापयति, कालेति। परिणामिनां प्रतिक्षणं जन्मप्रलयवतां नदीप्रवाहदीपज्वालादीनां याः प्रत्यक्षाः अवस्थाः ताः कालस्रोतोजवेन ह्रियमाणस्य कालरूपस्रोतोवेगेन चाल्यमानस्य देहादेः प्रतिक्षणं जन्मप्रलययोः साध्ययोर्हेतवः साधका ज्ञेयाः देहादिः सर्वोपि प्रपञ्चः प्रतिक्षणमुत्पत्तिसंहारवान् भौतिकत्वात् दीपप्रवाहादित्यनुमानम् ॥ ३६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अयमेवात्यन्तिकः प्रलय इत्युपसंहरति—यदेति। यदैवमुक्तप्रकारेण विवेकहेतिना ज्ञानशस्त्रेण आत्मबन्धनं आत्माऽवबन्धनमात्मावरकमहङ्कारं छित्वा अच्युतं परिपूर्णं भगवद्रूपमात्मानमनुभवतीति तथाभूतः सन्नवतिष्ठते तदा हे अङ्ग तमात्यन्तिकं प्रलयमाहुः। अहङ्कारस्य ज्ञाननिरास्यत्वं कथमित्यपेक्षायां तस्याविद्याकार्यत्वादित्याशयेनाह—मायामयमिति ॥ ३३ ॥ नित्यप्रलयमाह नित्यदेति। हे परन्तप एके केचित् सूक्ष्मज्ञा विवेकिनः सर्वभूतानां नित्यदा प्रतिक्षणमेवोत्पत्तिप्रलयौ सम्प्रचक्षते कथयन्ति ॥ ३४ ॥ एतदेवोपपादयति—कालेति। कालरूपस्रोतसो वेगेनाशु ह्रियमाणस्य देहादेर्नित्यदा दृश्यमाना बाल्ययुवादिरूपा अवस्थास्ता एव नित्यदा जन्मप्रलययोर्हेतवः ज्ञापिकाः। आरम्भकावयवसंयोग एवोत्पत्तिः तद्विभाग एव विनाशः तत्र प्रत्यवयविना प्रत्यवयवेषु भुक्तान्नादिपरमाणूनां संयोगविभागासम्भवात् बुद्धिह्रासाद्यवस्थाभेदो न स्यात् अतः प्रतिक्षणं प्रतिपरमाणुपर्यन्तसंयोगविभागावश्यमङ्गीकार्यावित्याशयः। तत्र दृष्टान्तमाह—परिणामिनामिति। यथा परिणामिनां नदीप्रवाहप्रदीपज्वालादीनामुच्चनीचावस्तज्ज्ञापिकास्तथेति। देहः प्रतिक्षणं प्रध्वंसी प्रतिक्षणमवस्थाभेदवत्त्वात् प्रदीपादिवदित्यनुमानम् ॥ ३५ ॥ यदि प्रतिक्षणमवस्था भवन्ति तर्हि किं न दृश्यन्ते अतो हेतुरसिद्ध इत्याशङ्क्याह—अनाद्यन्तवता। तत्र हेतुः—ईश्वरमूर्त्तिना कालेन जायमानाऽवस्था नैव लक्ष्यन्ते। आकाशे गच्छतां ज्योतिषां चन्द्रादीनां गमनावस्थाविशेषा यथा नैव लक्ष्यन्ते तद्वत्। तथा तेषां प्रदेशान्तरप्राप्त्यन्यथाऽनुपपत्त्या प्रतिक्षणं गमनावस्थाः कल्प्यन्ते तद्वदत्रापि बाल्यतारुण्यादिदर्शनेन तन्मध्यवर्त्तिन्योऽवस्थाः कल्प्यन्त इति न हेतुरसिद्धः इत्यर्थः ॥ ३६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एवमुपाधिप्रलय एवात्यन्तिकः प्रलय इत्याह। यदैवमिति। यदा एवं एतेन विवेकहेतिना विवेकादिसाधनसप्तकानुगृहीतभगवदुपासनरूपेण खड्गेन साधनसप्तकं तु विवेकविमोकाभ्यासक्रियाकल्याणाऽनवसादाऽनुद्धर्षरूपम्। तत्र विवेको नाम जात्याश्रयनिमित्तात् दुष्टात् अन्नात्कायशुद्धिः, विमोकः कामानभिषङ्गः, अभ्यासः पुनः पुनरारम्भणसंशीलनम्, क्रिया पञ्चमहायज्ञाद्यनुष्ठानम्, कल्याणानि सत्यार्जवदयादानाहिंसानभिध्याः, अनवसादः देशकालवैषम्याच्छोकवस्त्वाद्यनुस्मृतिजन्यदैन्यात्मकं मनसोऽभास्वरत्वनवसादस्तद्विपर्ययात्मकः। संप्रारब्धमहार्थसंपूर्णतासंसिद्ध्यसत्त्वेऽपि तावता जाता तुष्टिरुद्धर्षः तद्विपर्ययोऽनुद्धर्षः। तत्र संतोषस्य तद्विरोधित्वात् मायामयाहंकरणात्मबन्धनं मायाविकाररूपाहंकारपरिणामरूपदेहसंबन्धात्मकमात्मनो यद्बन्धनं तदित्यर्थः। छित्वा अच्युतो भगवांस्तद्रूपो य आत्मान्तरात्मा तस्मिन्ननुभवस्तैलधारावदविच्छिन्नस्मृतिसंतानतयावस्थानं यस्य तथाभूतः अवतिष्ठते यत् तं, अङ्ग हे राजन्, आत्यन्तिकं संप्लवं प्रलयं, आहुः। तद्याथात्म्यविद इति कर्तृपदाध्याहारः ॥ ३३ ॥ एवं त्रिभिः श्लोकैरात्यन्तिकं प्रलयं निरूपयति। नित्यदेति। हे परंतप राजन् ब्रह्मादीनां सर्वभूतानां, नित्यदा प्रतिक्षणं, उत्पत्तिप्रलयौ, एके केचित्, सूक्ष्मज्ञाः संप्रचक्षते। ब्रह्मादिसर्वक्षेत्रज्ञशरीराणां सततपरिणामस्वभावत्वात्तत्रोत्तरावस्थाप्राप्तिरुत्पत्तिः पूर्वपूर्वावस्थात्याग प्रलय इत्याचक्षते। इमावेव नित्योत्पत्तिप्रलयाविति भावः। स्थूलदृष्टिभिस्तौ न ज्ञायेते इत्यभिप्रायेण सूक्ष्मज्ञा इत्युक्तम् ॥ ३४ ॥ एतदेवोपपादयति। कालेति। काल एव स्रोतः प्रवाहस्तस्य जवो वेगस्तेन, आशु शीघ्रं ह्रियमाणस्य आकृष्यमाणस्य आत्मनः संबन्धिना परिणामिनां देहानां, नित्यदा नित्यं याः याः अवस्थाः, ताः ताः जन्मप्रलयहेतवः देहसंयोगवियोगविषयतया जन्मप्रलयहेतुभूता इत्यर्थः ॥ ३५ ॥ यदि प्रतिक्षणमवस्था भवन्ति तर्हि किं न दृश्यन्ते इत्यत्राह। अनाद्यन्तवतेति। अनाद्यन्तवता नित्येनेत्यर्थः। ईश्वरमूर्त्तिना अनेन कालेन अवस्थाः, या या नित्यं जायमानास्तास्ता अवस्था इत्यर्थः। वियत्याकाशे चरतां ज्योतिषां सूर्यादिग्रहाणां इव, नैव दृश्यन्ते। यथा प्रतिक्षणं सूर्यादीनां देशान्तरप्राप्तिर्न दृश्यते तद्वदित्यर्थः ॥ ३६ ॥

### हिन्दी अनुवाद

जब सूर्य से प्रकट होनेवाला बादल तितर-बितर हो जाता है, तब नेत्र अपने स्वरूप सूर्य का दर्शन करने में समर्थ होते हैं। ठीक वैसे ही, जब जीव के हृदय में जिज्ञासा जगती है, तब आत्मा की उपाधि अहङ्कार नष्ट हो जाता है और उसे अपने स्वरूप का साक्षात्कार हो जाता है ॥ ३३ ॥ प्रिय परीक्षित् ! जब जीव विवेक के खड्ग से मायामय अहङ्कार का बन्धन

काट देता है, तब यह अपने एकरस आत्मस्वरूप के साक्षात्कार में स्थित हो जाता है। आत्मा की यह मायामुक्त वास्तविक ही आत्यन्तिक प्रलय कही जाती है ॥ ३४ ॥ हे शत्रुदमन! तत्त्वदर्शी लोग कहते हैं कि ब्रह्मा से लेकर तिनकेतक जितने प्राणी या पदार्थ हैं, सभी हर समय पैदा होते और मरते रहते हैं। अर्थात् नित्यरूप से उत्पत्ति और प्रलय होता ही रहता है ॥ ३५ ॥ संसार के परिणामी पदार्थ नदी-प्रवाह और दीप-शिखा आदि क्षण-क्षण बदलते रहते हैं। उनकी बदलती हुई अवस्थाओं को देखकर यह निश्चय होता है कि देह आदि भी कालरूप सोते के वेग में बहते-बदलते जा रहे हैं। इसलिये क्षण-क्षण में उनकी उत्पत्ति और प्रलय हो रहा है ॥ ३६ ॥

अनाद्यन्तवतानेन कालेनेश्वरमूर्तिना। अवस्था नैव दृश्यन्ते वियति ज्योतिषामिव ॥ ३७ ॥

नित्यो नैमित्तिकश्चैव तथा प्राकृतिको लयः। आत्यन्तिकश्च कथितः कालस्य गतिरीदृशी ॥ ३८ ॥

एताः कुरुश्रेष्ठ जगद्विधातुर्नारायणस्याखिलसत्त्वधाम्नः।
लीलाकथास्ते कथिताः समासतः कात्स्न्र्येन नाजोऽप्यभिधातुमीशः ॥ ३९ ॥

संसारसिन्धुमतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवो भगवतः पुरुषोत्तमस्य।
लीलाकथारसनिषेवणमन्तरेण पुंसो भवेद् विविधदुःखदवार्दितस्य ॥ ४० ॥

### कृष्णप्रिया व्याख्या

अन्वयः—अनाद्यन्तवता अनेन ईश्वरमूर्तिना कालेन वियति ज्योतिषाम् इव अवस्थाः न एव दृश्यन्ते ॥ ३७ ॥ नित्यः नैमित्तिकः प्राकृतिकः आत्यन्तिकः लयः कथितः कालस्य ईदृशी गतिः ॥ ३८ ॥ कुरुश्रेष्ठ जगद्विधातुः अखिलसत्त्वधाम्नः नारायणस्य एताः लीलाकथाः ते समासतः कथिताः कात्स्न्र्येन अभिधातुम् अजः अपि न ईशः ॥ ३९ ॥ विविधदुःखदवार्दितस्य अतिदुस्तरं संसारसिन्धुम् उत्तितीर्षोः पुंसः भगवतः पुरुषोत्तमस्य लीलाकथारसनिषेवणम् अन्तरेण अन्यः प्लवः न ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु यदि प्रतिक्षणमवस्था भवंति तर्हि किं न दृश्यंतेऽतो हेतुरसिद्ध इत्याशंक्याह। अनाद्यंतवता कालेन जायमाना अवस्था नैव लक्ष्यंते। आकाशे गच्छतां ज्योतिषां चंद्रादीनां गमनावस्थाविशेषा यथा नैव लक्ष्यंते तद्वत्। अतो यथा तेषां प्रदेशांतर-प्राप्त्या प्रतिक्षणं गत्यवस्थाः कल्प्यंते तद्वदत्रापि बाल्यतारुण्यादिदर्शनेन मध्यवर्तिन्योऽवस्थाः कल्प्यंत इति न हेतुरसिद्ध इत्यर्थः॥३७॥ उपसंहरति। नित्य इति ॥ ३८ ॥ पुराणार्थमुपसंहरति। एता इति। लीलाविषयाः कथा अजो ब्रह्माऽपि कात्स्न्र्येनाभिधातुं नेशः ॥ ३९ ॥ ननु यदि साकल्येनाभिधातुं न शक्यंते तर्हि किं तदभिधानेन तत्राह। संसारेति। विविधं दुःखमेव दवो दावानल-स्तेनार्दितस्य पीडितस्यात उत्तितीर्षोः पुंसो भगवतो या लीलास्तासां कथास्तासां रसस्तन्निषेवणमंतरेणान्य प्लवस्तरणसाधनं न भवेत्। उपायांतरासंभवात्तत्कथाश्रवणमेव यथाशक्ति निषेव्यमित्यर्थः ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्राक्षिपति—नन्विति। अतो दर्शनाभावात्। हेतुः प्रतिक्षणमवस्थाभेदास्पदत्वादिति हेतुः। अतो दर्शनाभावात्। तेषां ज्योतिषाम्। इत्यर्थ इति—हेतुः पक्षेऽस्त्येवेति भावः ॥ ३७ ॥ कालस्य च गतिं ब्रूहीति प्रश्नस्योत्तरमुपसंहरन्नाह—कालस्येति ॥ ३८ ॥ हे कुरुश्रेष्ठेति—अंतावस्थायां श्रीभागवतश्रवणत्वं सर्वेभ्यः स्वकुलमुख्येभ्यः श्रेष्ठोसीति भावः। किञ्च—भगवल्लीला अस्मदादिलीलावद्राग-पूर्विका न किन्तु योगमायैव। तथा च श्रुतिः—'यदचरस्तन्वा वावृधानो बलानींद्र प्रब्रुवाणो जनेषु मायेत्सा ते या नियुद्धान्याहुर्नाद्य-शत्रुं ननु पुरा विवित्से' इति। अस्या अर्थः—हे इंद्र परमेश्वर यत् तन्वा मत्स्यकूर्मादिशरीरेणाचरः चरणं कृतवानसि वावृधानः ववृधे दैत्यादीन्हत्वा महत्त्वं च प्राप्तवानसि लोके बलानि भूमेरुद्धरणादीनि जनेषु प्रब्रुवाणः ख्यापितवानभूः सा सर्वा ते तव मायेत् मायैव सा का या नियुद्धान्याहुः देवासुरसंग्रामाः सर्वे मायैव। कुत एतत्—यस्त्वं ननु निश्चितम् अद्य वर्तमानकाले पुरा वा शत्रुं नाशनीयं न विवित्से लभसे, सर्वस्यांतरात्मकत्वात्कालत्रयेपि तत्र शत्रुर्नास्तीति तस्मात्स्वाप्नानुवादवदेतत्पुराणं भगवल्लीलामनु-वदतीति मंत्रार्थः ॥ ३९ ॥ पुनराक्षिपति—नन्विति। इत्यर्थ इति। यथा महदन्नेकान्नराशितो यत्किञ्चित्तदन्नैकदेशाशनेनक्षुन्निवृत्तिर्भवति तथा लील.कथैकदेशोऽपि संसारदुःखनिवर्तकोऽतस्सोऽवश्यं सेव्य इति भावः। विश्वनाथस्तु—यत्प्रथमस्कन्धपृष्टं 'क्रियमाणस्य किं कृत्यं' तदुत्तरमाह—संसारेति। दुःसहक्षुधायां भोजनमंतरेण नोपशम इतिवन्नान्यो ज्ञानादिकः प्लव उत्तरणसाधनं दुःसहक्षुधायाः

स्रक्चंदनादिरिव, तेनैतदुत्तराध्याये मयाप्युपदेष्टव्यः। महारहस्यभक्तिरत्नच्छादनार्थं यज्ज्ञानं तत्त्वयाऽप्यत्वेन न प्रत्येतव्यमिति भावः। रसशब्देन लीलाकथानाममृतत्वमारोपितम्। अतएव विविधदुःखमहारोगाणां दवमहाज्वालास्तत्पीडितस्य सद्य एवैकममृतं विना नान्यदौषधं प्रयोक्तव्यमिति भावः॥ ४०॥

## अन्वितार्थप्रकाशिका

नित्य इति। स्फुटम्॥ ३७॥ पुराणार्थमुपसंहरति—एता इति हे कुरुश्रेष्ठ! जगद्विधातुः अखिलसत्त्वधाम्नः नारायणस्य एता लीलाविषयाः कथास्ते तुभ्यं समासतः संक्षेपतः प्रोक्ताः। कार्त्स्न्येन तु अजो ब्रह्माऽपि अभिधातुं नेशः॥ ३८॥ संसारेति। विविधं दुःखमेव दवो दावानलस्तेनार्दितस्य पीडितस्य अत एव दुस्तरत्वात् संसार एव सिन्धुस्तमुत्तितीर्षोः पुंसो भगवतः पुरुषोत्तमस्य या लीलास्तासां याः कथास्तासां यो रसस्तन्निषेवणमन्तरेण विनाऽन्यः प्लवस्तरणसाधनं न भवेत् नास्ति। अतस्तत्कथा-श्रवणमेव यथाशक्ति निषेव्यम्॥ ३९॥ पुराणेति। एतां पुराणसंहिताम् अव्ययो नारायणः चतुर्मुखद्वारा नारदाय प्राह स्म। यद्वा। ब्रह्मणे प्राह इत्यध्याहार्यम्। नारायणो ब्रह्मणे स्म। स च नारदायेति। स नारदः कृष्णद्वैपायनाय आह स्म॥ ४०॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

ईश्वरमूर्तिना ईश्वरमूर्त्या पुल्लिङ्ग आर्षः सूक्ष्मावस्थानां दुर्दर्शत्वे दृष्टान्तमाह—ज्योतिषामिवेति। नक्षत्रादीनां प्रतिक्षणं स्पन्दो यथा दुर्दर्शस्तद्वदित्यर्थः॥ ३७–३८॥ अजोऽपि ब्रह्माऽपि॥ ३९–४३॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धव्याख्याने श्रीसुदर्शनसूरिकृतशुकपक्षीये चतुर्थोऽध्यायः॥ ४॥

## श्रीमद्वीरराघवव्याख्या

यदि प्रतिक्षणमवस्था भवन्ति तर्हि किं न लक्ष्यन्ते दृश्यन्ते—इत्यत्राह? अनाद्यन्तवतेति—नित्येन ईश्वरमूर्त्तिना पुंस्त्वमार्षं ईश्वरमूर्त्तिना [ तेन ] कालेन या या नित्यमवस्थास्ता नैव दृश्यन्ते दुर्दर्शत्वे दृष्टान्तमाह—वियतीति। यथा वियत्याकाशे चरतां ज्योतिषां सूर्यादीनां प्रतिक्षणं देशान्तरप्राप्तिर्न दृश्यते तद्वत्॥ ३७॥ चतुर्विध प्रलयनिरूपण निगमयति–नित्य इत्यादि॥ ३८॥

"तस्मात्सर्वात्मना राजन् हरिः सर्वत्र सर्वदा। श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम्॥

इति द्वितीये स्कन्धे मुमुक्षोरवश्यश्रोतव्यतया प्रतिज्ञातभगवत्कथानिरूपणं निगमयति–एता इति। जगद्विधातुः जगत्स्रष्टुरत एव नारायणस्य नराणां प्राप्यस्य प्रापकस्याखिलसत्वधाम्नोऽखिलाधारस्य भगवतः एताः लीलाकथाः लीलारूपाणां चेष्टितानां कथाः ते तुभ्यं समासतः संक्षेपतः कथिताः तर्हि विस्तरतः कथयेत्यत्राह—कार्त्स्न्येनेति। अजो ब्रह्मापि कार्त्स्न्येन विस्तरेणाभिधातुं नेश्वरः न प्रभुः॥ ३०॥ सत्यं कथिताः किमतः इत्यत आह—संसारेति। विविधं दुःखमेव दवो दावानलः तेनार्दितस्य पीडितस्यात एवातिदुस्तरं संसारसागरम् उत्तितीर्षोः [ तर्तुमिच्छोः ] पुंसो याः भगवतो लीलाकथाः तासां रसस्तन्निषेवणमन्तरेण अन्यः प्लवः उत्तारणोपायः न भवेत्॥ ४०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्रतिदिनं जीवस्योर्वारुकविकारवत्परिणामाद्यवस्थाः किं न स्युरिति तत्राह—अनाद्यन्तवतेति। आकाशे ज्योतिषां नक्षत्राणां यथा स्थितेर्लयो नास्ति तथाचेतनस्येति शेषः॥ ३७॥ उक्तमुपसंहरति, नित्य इत्यादिना। कालस्य कालान्तर्यामिणो हरेर्गतिः स्थितिरीदृशी दुरवबोधेति॥ ३८॥ परमप्रमेयमुपसंहरति—एता इति। "यत्रोद्यतः क्षितितलोद्धरणाय बिभ्रत्क्रौडीं तनुम्" इत्यारभ्य याः कथाः एताः जगद्विधातृत्वं चतुर्मुखस्यास्तीति अतोऽखिलसत्त्वधाम्न इति सत्त्वगर्भमुदरम्भरत्वमित्यतो नारायणस्येति "सत्त्वो स्त्रीजन्तुषु क्लीवे" इति यादवः। विस्तरतः कथनं किं न स्यादिति तत्राह, कार्त्स्न्येनेति अजो ब्रह्मा॥ ३९॥ कथाकथनप्रयोजनमाह—संसारेति। प्लवो नौः॥ ४०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एषा च लीलाकथा तद्भक्त्येकपुरुषार्थिभिर्यथायथं श्रोतव्यैव मोक्षार्थिभिरप्यवश्यं श्रोतव्येत्याह—संसारेति। अन्यासामपि भक्तीनां तत्पूर्वकत्वेनैव प्रवृत्तेरुपायान्तरासम्भवत्वं युक्तम्॥ ४०–४३॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे चतुर्थोऽध्यायः॥ ४॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

यदि प्रतिक्षणम् अवस्था भवन्ति तर्हि किम् न दृश्यन्ते? अतो हेतुरसिद्ध इत्याशङ्क्याह—अनाद्यन्तवता कालेन प्रतिक्षणम् जन्या नाश्याश्चावस्था नैव लक्ष्यन्ते यथा वियत्याकाशे गच्छताम् ज्योतिषां चन्द्रादीनां गमनावस्थाविशेषा नैव लक्ष्यन्ते

वद्वत् अतो यथा तेषां देशान्तरप्राप्त्या प्रतिक्षणं गत्यवस्थाः कल्प्यन्ते तद्वदत्रापि बाल्यतारुण्यादिदर्शनेन तन्मध्यवर्त्तिन्यः सूक्ष्मा अप्यवस्थाः कल्प्यन्ते इति ननु हेतुरसिद्ध इत्यर्थः ॥ ३७ ॥ उपसंहरति, नित्य इति ॥ ३८ ॥ भगवत्कथाः उपसंहरति, एता इति ॥ ३९ ॥ एता विविधाः कथाः खलु विविधभक्तानां जीवातव एव मोक्षार्थिनामप्येताः कथाविज्ञानादिभिर्न मोक्ष इत्याह, संसारेति द्वाभ्याम् । त्वया यत् प्रथमत एव पृष्टं म्रियमाणस्य किम् कृत्यम् ? तदुत्तरनिष्कर्षोऽयमित्याह, संसारेति । दुःसहायाः क्षुधाया भोजनमन्तरेण नोपशम इति वत् नान्यो ज्ञानादिकप्लवः उत्तरणसाधनम् दुःसहायां क्षुधायां स्रक्चन्दनादिरिव तेनैतदुत्त-राध्याये मयाप्युपदेष्टव्यं महारहस्यभक्तिरत्राच्छादनार्थं यज्ज्ञानं तत् त्वया स्वोपादेयत्वेन न प्रत्येतव्यमिति भावः । रसशब्देन लीलाकथानाम् अमृतत्वमारोपितम् अत एव विविधदुःखरूपमहारोगाणां दवा महाज्वालास्तेषां सद्य एवैकममृतं विना नान्यदौषधं प्रयोक्तव्यमिति भावः ॥ ४० ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

सूक्ष्मज्ञाः परिचक्षते इत्यनेन स्थूलबुद्धयो न पश्यन्तीति सूचितं तत्र कारणमाह—अनाद्यन्तवतेति । अनाद्यन्तवता नित्येन ईश्वरमूर्तिनेश्वराधिष्ठितेन तच्छक्तिभूतेन ज्योतिषां सूर्यादीनां वियत्याकाशे गच्छताम् अवस्था प्रतिक्षणं गमनावस्था नैव दृश्यन्ते तथा भूतानां प्रतिक्षणमुत्पत्तिप्रलयौ दौर्ज्ञेयावित्यर्थः ॥ ३७ ॥ चतुर्विधप्रलयनिरूपणमुपसंहरति, नित्य इति ॥ ३८ ॥ स्वोपदिष्टं सर्ववेदेति-हासानां सारमुपसंहरति—एता इति । अखिलजगतो विधातुः सृष्ट्यादिकर्तुः नारायणपदनिरुक्तिं सूचयति अखिलानां सत्त्वानां नरादिसमूहानां धाम्नः अयनस्य "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति श्रीमुखवचनात् ॥ ३९ ॥ अस्य महापुराणस्य मुक्तिप्रदहरिचेष्टितप्रतिपादकत्वेन श्रैष्ठ्यमाह—संसारसिन्धुमिति ॥ ४० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

उपसंहरति—नित्य इति ॥ ३७ ॥ पुराणार्थमुपसंहरति—एता इति । समासतः कथने हेतुः—कार्त्स्न्येनेति । अतो ब्रह्माऽपि ॥ ३८ ॥ ननु यदि साकल्येनाभिधातुं न शक्यते तर्हि सङ्क्षेपतस्तदभिधानेन किं प्रयोजनमिति शङ्कां वारयंस्तत्फलमाह—संसारेति । विविधं दुःखमेव दवो दावानलस्तेनार्दितस्य पीडितस्य अत एव दुस्तरत्वात्संसार एव सिन्धुस्तमुत्तितीर्षोः पुंसो भगवतः पुरुषोत्तमस्य या लीलास्तासां याः कथास्तासां यो रसस्तन्निषेवणमन्तरेणान्यः प्लवस्तरणसाधनं न भवेत् नास्ति । तथाचोपायान्तरा-भावात् यथाशक्ति श्रवणकीर्त्तनादिना कथैव सेव्येत्याशयः ॥ ३९ ॥ श्रोतुरादरदार्ढ्याय सम्प्रदायप्रवृत्तिमाह—पुराणसंहितामिति चतुर्भिः । चतुर्मुखद्वारा नारदाय प्राह—स नारदः ॥ ४० ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

चतुर्विधप्रलयनिरूपणं निगमयति । नित्य इति । नित्यः, नैमित्तिकः, तथा प्राकृतिकः आत्यन्तिकश्च । एवं चतुर्विध एव लयश्च प्रलयोऽपीत्यर्थः । कथितः । हे राजन्, कालस्य गतिः ईदृशी, भवतीति शेषः ॥ ३७ ॥ 'तस्मात् सर्वात्मना राजन् हरिः सर्वत्र सर्वदा । श्रोतव्यः कीर्तितव्यश्च स्मर्तव्यश्चेच्छताऽभयम्' इति द्वितीयस्कन्धे मुमुक्षोरवश्यश्रोतव्यतया प्रतिज्ञातभगवत्कथानिरूपणं निगमयति । एता इति । जगद्विधातुः जगत्स्रष्टुः, अत एव नारायणस्य नराणां प्राप्यस्य प्रापकस्य च, अखिलसत्त्वधाम्नः अखिला-धारस्य भगवतः, एताः लीलाकथाः लीलारूपाणां चेष्टितानां कथा इत्यर्थः । हे कुरुश्रेष्ठ, ते तुभ्यं समासतः संक्षेपतः । कथिताः । तर्हि विस्तरतः कथयेत्यत्राह । अजो ब्रह्मापि, कार्त्स्न्येन विस्तरेण अभिधातुं ईशः समर्थः, न भवतीत्यर्थः ॥ ३८ ॥ ननु यदि ताः साकल्येनाभिधातुं न शक्यन्ते तर्हि किं तदभिधानेन तत्राह । संसारेति । विविधं दुःखमेव दवो दवानलस्तेनार्दितः पीडितस्तस्य, अत एव अतिदुस्तरं संसारसिन्धुं संसारसागरं, उत्तितीर्षोः उत्तरितुमिच्छोः पुंसः, पुरुषोत्तमस्य भगवतः, लीलारूपा याः कथास्तासां रसस्तस्य निषेवणं अन्तरेण विना, अन्यः प्लवः उत्तरणोपायः न भवेत् ॥ ३९ ॥ श्रोतुरादरदार्ढ्याय संप्रदायप्रवृत्तिमाह त्रिभिः । पुराणसंहितामिति । एतां श्रीमद्भागवतरूपां पुराणसंहितां, ऋषिः सर्वज्ञः अव्ययः नारायणः नारदाय प्राह । चतुर्मुखद्वारा चतुः-श्लोकीरूपेणेत्यर्थः । यद्वा । ऋषिश्चतुर्मुखशरीरकः सन्, प्राह । स नारदः कृष्णद्वैपायनाय प्राह ॥ ४० ॥

## हिन्दी अनुवाद

जैसे आकाश में तारे हर समय चलते ही रहते हैं, परन्तु उनकी गति स्पष्टरूप से नहीं दिखायी पड़ती, वैसे ही भगवान् के स्वरूपभूत अनादि-अनन्त काल के कारण प्राणियों के प्रतिक्षण होने वाले उत्पत्ति और प्रलय का भी पता नहीं चलता ॥ ३७ ॥ परीक्षित् ! मैंने तुमसे चार प्रकार के प्रलय का वर्णन किया; उनके नाम हैं—नित्य प्रलय, नैमित्तिक प्रलय, प्राकृतिक प्रलय और आत्यन्तिक प्रलय। वास्तव में कालकी सूक्ष्म गति ऐसी ही है ॥ ३८ ॥ हे कुरुश्रेष्ठ ! विश्व-विधाता भगवान् नारायण ही समस्त प्राणियों और शक्तियों के आश्रय हैं। जो कुछ मैंने संक्षेप से कहा है, वह सब उन्हीं की लीला

कथा है। भगवान् की लीलाओं का पूर्ण वर्णन तो स्वयं ब्रह्माजी भी नहीं कर सकते ॥ ३९ ॥ जो लोग अत्यन्त दुस्तर संसार सागर से पार जाना चाहते हैं अथवा जो लोग अनेकों प्रकार के दुःख-दावानल से दग्ध हो रहे हैं, उनके लिये पुरुषोत्तम भगवान् की लीला-कथारूप रसके सेवन के अतिरिक्त और कोई साधन, कोई नौका नहीं है। ये केवल लीला-रसायन का सेवन करके ही अपना मनोरथ सिद्ध कर सकते हैं ॥ ४० ॥

**पुराणसंहितामेतामृषिर्नारायणोऽव्ययः। नारदाय पुरा प्राह कृष्णद्वैपायनाय सः ॥ ४१ ॥**

**स वै मह्यं महाराज भगवान् बादरायणः। इमां भागवतीं प्रीतः संहितां वेदसम्मिताम् ॥ ४२ ॥**

**एतां वक्ष्यत्यसौ सूत ऋषिभ्यो नैमिषालये। दीर्घसत्रे कुरुश्रेष्ठ सम्पृष्टः शौनकादिभिः ॥ ४३ ॥**

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे[1] चतुर्थोऽध्यायः ॥ ४ ॥**

### कृष्णप्रिया व्याख्या

अन्वयः—अन्वयः नारायणः ऋषिः एतां पुराणसंहितां पुरा नारदाय प्राह सः कृष्णद्वैपायनाय (प्राह) ॥ ४१ ॥ महाराज भगवान् बादरायणः सः प्रीतः (सन्) इमां वेदसम्मितां भागवतीं संहितां मह्यं (प्राह) ॥ ४२ ॥ कुरुश्रेष्ठ नैमिषालये दीर्घसत्रे शौनकादिभिः सम्पृष्टः असौ सूतः ऋषिभ्यः एतां वक्ष्यति ॥ ४३ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

श्रोतुरादरदार्ढ्याय संप्रदायप्रवृत्तिमाह पुराणसंहितामिति त्रिभिः ॥ ४१ ॥ स वै बादरायणः प्रीतः सन्मह्यमिमां संहितां प्राहेति पूर्वेणान्वयः ॥ ४२ ॥ असौ सूत इति पुरतः स्थितमंगुल्या निर्दिश्याह। नैमिषालये नैमिषारण्यस्थाने ॥ ४३ ॥

इति श्रीमद्भागवते म० द्वादशस्कंधे भावार्थदीपिकायां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अन्वयः सर्वदैकरसः नारायण ऋषिः सर्वज्ञः ब्रह्मद्वारा पुरा नारदाय प्राह। स नारदः ॥ ४१ ॥ स कृष्णद्वैपायनः। हे महाराजेति—महेन भगवत्प्राप्त्युत्सवेनाधुना समंतात्त्वं राजसीति भावः। तत्त्वज्ञापकत्वेन सर्ववेदतुल्याम् ॥ ४२ ॥ हे कुरुश्रेष्ठेति संबुद्धिर्व्याख्यातचरी॥ ४३ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे चतुर्थोऽध्यायः ॥ ४ ॥

### अन्वितार्थप्रकाशिका

स इति। स वै प्रसिद्धो बादरायणः प्रीतः सन् इमां भागवतीमत एव वेदैः सम्मितां तुल्यां संहितां मह्यं प्राहेति पूर्वेणान्वयः ॥ ४१ ॥ एतामिति। हे कुरुश्रेष्ठ! नैमिषालये नैमिषारण्यस्थाने तत्रापि दीर्घसत्रसभायामसौ अङ्गुल्या निर्दिश्यमानः पुरोवर्ती शौनकादिभिः संपृष्टः सूत एतां वक्ष्यति ॥ ४२ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकां गङ्गासहायश्चतुर्थे द्वादशस्य व्यधादिमाम्।
इति श्रीमद्भागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायां चतुर्थोऽध्यायः ॥ ४ ॥

### श्रीमद्वीरराघवव्याख्या

श्रोतुरादरदार्ढ्याय सम्प्रदायप्रवृत्तिमाह—त्रिभिः। पुराणसंहितामिति। एतां भागवतीमृषिः सर्वज्ञो नारायणोऽनिरुद्धरूपी नारदाय प्राह चतुर्मुखद्वारा चतुःश्लोकीरूपेण प्राहेत्यर्थः। यद्वा ऋषिचतुर्मुखशरीरकः अथवा पूर्वञ्चतुर्मुखेनोपदिष्टां चतुःश्लोकीं बदर्याश्रमवासी नारायणो प्राहेत्यर्थः अन्यथा द्वितीयस्कन्धान्तसन्दर्भविरोधात्स नारदः कृष्णद्वैपायनाय ॥ ४१ ॥ स कृष्णद्वैपायनः बादरायणो व्यासः इमामष्टादशसहस्रग्रन्थसङ्ख्यां निर्मायेतिशेषः वेदसम्मितां वेदतुल्यां मह्यं प्राह ॥ ४२ ॥ अथ भाविनीं प्रवृत्तिमाह—एतामिति। असौ सूत इति पुरतः स्थितस्याङ्गुल्या निर्देशः नैमिषारण्यक्षेत्रे ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां चतुर्थोऽध्यायः ॥ ४ ॥

---

१. न्धे परमार्थनिर्णयो नाम।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कथारसनिषेवणाय भागवतपुराणमेव मुख्यसाधनमित्यभिप्रेत्य तस्याप्रिमूलत्वज्ञापनाय मूलं दर्शयति, पुराणेति ॥ ४० ॥ संहिताया वेदसंहितात्वज्ञापनाय वेदसम्मितामिति ॥ ४२-४१ ॥

इतिश्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां चतुर्थोऽध्यायः ॥ ४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

श्रीगुरुसम्प्रदायं शुद्धमविच्छिन्नमनुसृत्यैवैतत् पठनपाठनश्रवणश्रावणादिकं कार्यमित्यभिप्रायेणाह—पुराणेति। ऋषिः नारायणो ब्रह्मणे इत्यधाहार्य्यं स च ब्रह्मा अन्ययः अपराधाभावाद्भक्तिव्ययरहितो नारदाय पुराणसंहितामेतामिति इमां भागवतीमिति वाक्यभेदान्न पौनरुक्त्यम् ॥ ४१–४२ ॥ असौ सूत इति पुरस्थितमङ्गुल्या निर्दिशति ॥ ४३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। द्वादशस्य चतुर्थोऽपि सङ्गतः सङ्गतस्सताम् ॥ ३ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भगवत्प्रोक्तत्वेन परमं श्रेष्ठ्यमाह—पुराणसंहितामिति ॥ ४१ ॥ वेदसम्मितां वेदतुल्यां स द्वैपायनः मह्यमाह ॥ ४२ ॥ अनयेव सूतशौनकादिद्वारा प्रवृत्तया जनः पवित्रीभविष्यतीत्याशयेनाह—एतामिति। असौ पुरतो विराजमानः ॥ ४३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे चतुर्थोऽध्यायः ॥ ४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

स वै प्रसिद्धो बादरायणः इमां भागवतीमत एव वेदतुल्यां संहितां प्रीतः सन्मह्यं प्राहेति पूर्वेणान्वयः ॥ ४१ ॥ त्वया च पृष्टोऽहं तुभ्यमुक्तवानिति सूचयन्सम्बोधयति—कुरुश्रेष्ठेति। असावित्यङ्गुल्या निर्देशः। नैमिषालये नैमिषारण्यस्थाने तत्रापि दीर्घसत्रसभायामसौ सूत एतां वक्ष्यति ॥ ४२ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता द्वादशे तत्र सर्वाश्रयनिरूपणे। चतुर्थो विवृतोऽध्यायश्चतुर्द्धा लयबोधकः ॥ ३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स इति। हे महाराज हे राजन्, सः बादरायणः भगवान् प्रीतः सन्, वेदसंमितां वेदतुल्यां भागवतीं संहितां, इमामष्टादशसहस्रग्रन्थसंख्याकां, निर्मायेति शेषः। मह्यं प्राह वै ॥ ४१ ॥ अथ भाविनीं प्रवृत्तिमाह। एतामिति। हे कुरुश्रेष्ठ, असौ सूतः, पुरतः स्थितस्याङ्गुल्यायं निर्देशः। नैमिषालये नैमिषारण्ये क्षेत्रे, दीर्घसत्रे शौनकादिभिः संपृष्टः सन्, ऋषिभ्यः एतां वक्ष्यति ॥ ४२ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचिताया-न्वयार्थाविबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥

### हिन्दी अनुवाद

जो कुछ मैंने तुम्हें सुनाया है, यही श्रीमद्भागवतपुराण है। इसे सनातन ऋषि नर-नारायण ने पहले देवर्षि नारद को सुनाया था और उन्होंने मेरे पिता महर्षि कृष्णद्वैपायन को ॥ ४१ ॥ महाराज ! उन्हीं बदरीवनविहारी भगवान् श्रीकृष्णद्वैपायन ने प्रसन्न होकर मुझे इस वेदतुल्य श्रीभागवतसंहिता का उपदेश किया ॥ ४२ ॥ कुरुश्रेष्ठ ! आगे चलकर जब शौनकादि ऋषि नैमिषारण्य क्षेत्र में बहुत बड़ा सत्र करेंगे, तब उनके प्रश्न करने पर पौराणिक वक्ता श्रीसूतजी उन लोगों को इस संहिता का श्रवण करायेंगे ॥ ४३ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥



# अथ पञ्चमोऽध्यायः

## श्रीशुक उवाच

अत्रानुवर्ण्यतेऽभीक्ष्णं विश्वात्मा भगवान् हरिः । यस्य प्रसादजो ब्रह्मा रुद्रः क्रोधसमुद्भवः ॥ १ ॥

त्वं तु राजन् मरिष्येति पशुबुद्धिमिमां जहि । न जातः प्रागभूतोऽद्य देहवत्त्वं न नङ्क्ष्यसि ॥ २ ॥

न भविष्यसि भूत्वा त्वं पुत्रपौत्रादिरूपवान् । बीजाङ्कुरवद् देहादेर्व्यतिरिक्तो यथानलः ॥ ३ ॥

स्वप्ने यथा शिरश्छेदं पञ्चत्वाद्यात्मनः स्वयम् । यस्मात् पश्यति देहस्य तत आत्मा ह्यजोऽमरः ॥ ४ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—श्रीशुकः उवाच-अजः ब्रह्मा यस्य प्रसादजः रुद्रः (यस्य) क्रोधसमुद्भवः (सः) विश्वात्मा भगवान् हरिः अत्र अभीक्ष्णम् अनुवर्ण्यते ॥ १ ॥ राजन् त्वं तु मरिष्ये इति इमां पशुबुद्धिं जहि प्राग् अभूतः अद्य न जातः देहवत् त्वं न नङ्क्ष्यसि ॥ २ ॥ बीजाङ्कुरवत् पुत्रपौत्रादिरूपवान् त्वं भूत्वा देहादेः व्यतिरिक्तः न भविष्यसि यथा अनलः ॥ ३ ॥ यथा स्वप्ने आत्मनः शिरश्छेदं पञ्चत्वादि स्वयं पश्यति (जागरणे) देहस्य (पश्यति) यस्मात् ततः आत्मा अजः अमरः ॥ ४ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पंचमे तु समासेन परब्रह्मोपदेशतः । राज्ञस्तक्षकसंदंशान्मृत्युभीतिनिवारणम् ॥ १ ॥

एतत्पुराणं शृण्वन्नभयं प्राप्नोतीत्यभिप्रेत्य पुराणार्थमनुस्मारयति । अत्रेति । अयं भावः । जगतः कर्ता ब्रह्माऽपि यस्य प्रसादजः । प्रसादोऽत्र रजोवृत्तिर्हर्षः । ततो जातत्वात्परतंत्रः । सर्वसंहर्ता रुद्रश्च यस्य क्रोधसंभवो न तु स्वतंत्रः । स विश्वस्यात्मा नियंता भगवानत्रानुवर्ण्यते । अत एवंभूतं भगवंतं शृण्वतः कुतोऽन्यस्माद्भयशंकेति ॥ १ ॥ त्वं पुनः कृतार्थ एवेत्यनुस्मारयति । त्वं त्विति । पशुबुद्धिमविवेकम् । यस्मान्न नंक्ष्यसि । कुत इत्यत आह । न जात इति । यथा देहः प्रागभूत एवाद्य जातो नंक्ष्यति । न चैवं त्वं पूर्वं नाभूर्न चाद्य जातोऽस्यतो न नंक्ष्यसि ॥ २ ॥ ननु बीजादंकुरवत्स्वस्मात्पुत्ररूपेणापि स्वमेव भवति । यथाऽऽह श्रुतिः । 'अंगादंगात्संभवसि हृदयादभिजायसे । आत्मा वै पुत्रनामाऽसि स जीव शरदः शतम्' इति ततः पुनरंकुराद्बीजमिव पौत्रादिरूपेणापि स्वयमेव भवति । 'पिता पुत्रेण पितृमान्योनियोनौ' इति श्रुतेः । अतस्तेषु नश्यत्सु कथं न नंक्ष्यामीति चेत्तत्राह । न भविष्यसीति । भूत्वा पुत्रपौत्रादिरूपवन्बीजांकुरवन्न भविष्यपि यस्माद्देहादेर्व्यतिरिक्तस्त्वं यथाऽनलः काष्ठात् । देहाद्देहो जायते नात्मेति भावः ॥ ३ ॥ जन्मादीनां देहधर्मत्वं दृष्टांतेन प्रपंचयति । स्वप्ने यथाऽऽत्मनः शिरश्छेदं स्वयं पश्यति एवं जागरणेऽपि । यस्माद्देहस्य पंचत्वादिकं पश्यति ततस्तद्देवात्मन इदं भ्रममात्रम् । वस्तुतश्चात्माऽजोऽमरश्चेत्यर्थः । तदुक्तम् । 'आत्मनः पितृपुत्राभ्यामनुमेयौ । न भवाप्ययवस्तूनामभिज्ञोऽद्वयलक्षणः' इत्यादि ॥ ४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

समासेन संक्षेपेण (१) । अत्र ग्रन्थे । अत्र तात्पर्यं स्वामिचरणा आहुः—अयं भाव इत्यादिना । शास्त्रार्थमुपसंहृत्य श्रीशुकः किंचिदात्मनैव परामर्श—अहो असाध्वनुष्ठितं यन्महारहस्यमसमाधिकं स्वहृदय संपुटात्समुद्धृत्य सर्वलोकदृग्गोचरीकृतम् । यः खलु मत्प्रभुणा 'राजविद्या राजगुह्यम्' इत्यनेन विद्यानां राजेति, गुह्यानां राजेत्युक्तः, पुनश्च 'सर्वगुह्यतमं भूयः शृणु मे' इत्यनेन गुह्यतमशब्देनोक्तः, स खलु भक्तियोगो मया परीक्षिति कृपावशतया प्रायः प्रकटीकृत्यैवोक्तः । तथाहि—'अकामः सर्वकामो वा मोक्षकाम उदारधीः । तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ।' इत्यादिना 'मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह' इत्यत्र 'य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् । न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः ।' इत्यादिना चान्वयव्यतिरेकाभ्यां भक्तिरेव सर्वं

फलसाधनत्वेनोपपादिता। स्वर्गादिसाधनानि कर्माणि दूरे तावदासताम्, मोक्षसाधनस्यातिप्रसिद्धस्याऽपि ज्ञानस्य मोक्षकारणत्वं परास्तीकृतमेव। 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम्' इति, चतुर्थाश्रमिणो ज्ञानिनोऽपि 'स्थानाद्भ्रष्टाः पतन्त्यधः' इति 'आरुह्य कृच्छ्रेण परं पदं ततः पतन्त्यधो नादृतयुष्मदंघ्रयः' इत्याद्युक्तेर्ज्ञानसत्त्वेऽपि भक्त्या विना मोक्षासिद्धेः। 'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। सर्वं मद्भक्तियोगेन पुरुषो लभतेऽञ्जसा।' इति ज्ञानव्यतिरेकेपि भक्त्यैव मोक्षसिद्धेरुक्तत्वात्। मोक्षं प्रति ज्ञानं नैवान्वयव्यतिरेकीति तदपि ज्ञानान्मोक्ष इति या प्रसिद्धिस्तत्र ज्ञानगता गुणीभूता भक्तिरेव मोक्षं जनयति, ज्ञानस्य तु नाममात्रेण कारणता 'भक्त्याहमेकया ग्राह्यः' इति, 'न तपो नात्ममीमांसा' इति, 'किं वा योगेन सांख्येन न्यासस्वाध्याययोरपि। श्रेयोभिरितरैश्चैव न यत्रात्मप्रदो हरिः।' इत्यादिवाक्यैर्ब्रह्मानुभवं प्रति ज्ञानस्य सहकारीतापि वस्तुतो न प्रतिपादिता, भक्तेरेवो-पक्रमोपसंहाराभ्यासेषु प्रपंचितम्, तदपि यदंतरांतरा योगज्ञानादिकमुपन्यस्तं तत्खलु भक्तेरुत्कर्षं तत्तन्मतानि च भक्तान्प्रति ज्ञापयितु-मेवेति। किञ्च—'यन्नामधेयश्रवणानुकीर्तनाद्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित्' इति, 'अहो बतश्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्तते नाम तुभ्यम्' इति 'यन्नाम सकृच्छ्रवणात्पुल्कसोपि विमुच्यते' इत्यादिभ्यः। किञ्च—'न मात्रयापि भक्त्या मोक्षः' इति, तथा—'तापत्रयेणा-भिहतस्य घोरे संतप्यमानस्य भवाध्वनीह। पश्यामि नान्यच्छरणं तवांघ्रिद्वन्द्वातपत्रादमृताभिवर्षात्।' इत्युद्धववाक्येन, 'संसारसिन्धु-मतिदुस्तरमुत्तितीर्षोर्नान्यः प्लवः' इत्युपसंहारे मद्वाक्येन च तां विना तु नान्येनोपायेन संसारान्मोक्ष इत्यपि निर्धारितम्। किञ्च—भक्त्या तयैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भवदीयत्वेनैव परिसमाप्तसर्वार्था इति, 'मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते' इति, 'न परिलषन्ति केचिदपवर्गमपि' इति, 'सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भूत्' इति, 'स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः' इत्यादि वाक्येभ्यश्चतुर्थं पुरुषार्थमपि तिरस्कृत्य भक्तेरेव पुरुषार्थशिरो-मणित्वं मया स्थापितम्। किञ्च—मुन्यन्तरवाक्यस्य प्रामाण्यमापेक्षिकमेव, मद्वाक्यस्य तु प्रामाण्यमात्यन्तिकमेवेति सर्वत्र वैकुण्ठेऽपि प्रसिद्धिर्भूयसी। 'परोक्षवादा ऋषयः परोक्षं च मम प्रियम्' इति भगवदुक्तेर्महारहस्योद्घाटनपटिष्ठो भूत्वा भगवदप्रियं करोऽप्य-भूवम्। तदधुना किं करिष्ये पुराणार्थश्च समाप्तीकृत एव; भवत्वधुनापि भक्तेर्महामहिमानं संवरीतुं यतिष्ये, यथा कश्चिन्महारत्न-मतिगोप्यमपि रभसवशेन सर्वलोकान्प्रदर्श्यापि पुनः किञ्चित्सरामृश्य तदलक्षितं संपुटितं कृत्वा महाकोशाभ्यन्तरे संस्थाप्य रत्नान्तरं बहिः प्रकाश्यानेनैवास्माकं सर्वार्थसिद्धिरिति ब्रूते, तथैव राजानमहं ज्ञानमुपदिशामि यथा गमनसमये तु शुकः परीक्षिते ज्ञानमेवो-पदिष्टवानिति भगवन्मायाप्रभावाज्ज्ञानमेवोत्कृष्टं, भक्तिस्तु तत्साधनमिति संस्यन्ते। किञ्च—भक्तिसिद्धाञ्जनान्प्रति प्रादुर्भूय भगवां-स्तान्परीक्षमाणो मोक्षं गृहाण यथा ब्रूते, तथैवानेन ज्ञानोपदेशेनास्य मच्छिष्यस्य परीक्षितो भक्तिमद्दृश्यतृप्तिञ्च परीक्षिष्ये। परीक्षा चेयं सर्वज्ञेनापि जगत्यस्मिन्परीक्षितो भक्तिनिष्ठाज्ञापनार्था ज्ञेया। किञ्च—भक्तिज्ञानयोः फलमंततो मुक्तिरेव केवलमित्य-नभिज्ञव्याख्यानं नैव मदभिप्रायसंबद्धं ज्ञेयम्, यतः 'राजन् पतिर्गुरुरलं भवतां यदूनां दैवं प्रियः कुलपतिः क्व च किंकरो वः। अस्त्ये-वमंग भगवान्भजतां मुकुंदो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्।' इत्युक्तवता मया मुक्तेः सकाशादपि भक्तेरुत्कृष्टफलस्य प्रतिपा-दितत्वात्। न चोपदेष्टव्येनानेन ज्ञानेन परीक्षितो निर्वाणमुक्तिप्राप्तिरेवेति ज्ञेयम्, 'स वै महाभागवतः परीक्षिद्येनापवर्गाख्यमदभ्रबुद्धिः। ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम्।' इति मदभिप्रायाभिज्ञेनानेन मच्छिष्येण सूतेनाग्रे वक्ष्यमाणत्वात्। राज-न्पतिर्गुरुरलम्' इत्यत्र भजद्भ्यस्तु भक्तियोगं ददाति इति परीक्षितः प्रेमभक्तिप्राप्तिरेव व्यंजिता, न चोपदिश्यमानेनानेनैव देहादि-व्यतिरिक्तात्मज्ञानेन ब्रह्मानुभवः सिध्येत्, किन्त्वस्यापि ज्ञानस्य भक्त्या निर्जयेनैव यदुक्तं भगवता—'द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः। श्रद्धावस्थाकृतिर्निष्ठा त्रैगुण्ये सर्व एव हि। सर्वे गुणमया भावाः पुरुषा व्यक्त्यधिष्ठिताः। दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ। एताः संसृतयः पुंसो गुणकर्म निबन्धनाः। येनेमा निर्जिताः सौम्य गुणा जीवेन चित्तजाः। भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते।' इति। किञ्च—भगवद्भक्तस्य मोक्षकामत्वेऽपि नास्ति ज्ञानेन प्रयोजनम्। यदुक्तं स्वयं भगवता—'ज्ञाने कर्मणि योगे च वार्तायां दंडधारणे। यावानर्थो नृणां तात तावांस्तेऽहं चतुर्विधः।' इति। तस्मादनेन सर्वान्ते ज्ञानोपदेशेनास्य शास्त्रस्य-स्पष्टतयैव मोहिनीसाधर्म्यं प्रतिपादयिष्ये। यथा ह्यसुराः प्रेमसुधया वञ्चिता एव भवेयुरिति। अपि च—ज्ञानोपदेशात्प्रागेकं वाक्यं व्यञ्जनया वृत्त्या भक्तान् प्रीणयितुं भक्तिरसमम्रक्षितमेव करिष्ये, तदनन्तरं ज्ञानोपदेशवाक्यान्यपि यानि भक्तिप्रतिकूलानि वक्ष्ये तान्यप्यन्तर्भूतभक्त्यनुकूलार्थानेव करिष्य इत्यादिकं विचार्याह—अत्रेति। अत्र समाप्तीकृतेऽस्मिन्पुराणशास्त्र इत्यर्थः। यस्य हरेः प्रसादजो ब्रह्मेति—प्रसादस्य सत्त्वगुणत्वाद्ब्रह्मणस्तु रजःसंभवत्वादेतन्न संगच्छते, तथा रुद्रः क्रोधसमुद्भव इति भगवतो निर्गुण त्वात्स्वरूपेण तामसः क्रोधोऽपि न संभवेच्चदुद्भवो रुद्रः स्यात् तस्माद्वाक्यमिदमतिशयोक्त्याऽर्थान्तरतात्पर्यकं ज्ञेयम्। तच्चैवम्—निर्गुणस्य भगवतः स्वभक्तसेविनि जने प्रसादः स्वभक्तद्रोहिणि क्रोधश्च दृष्टस्तौ च भक्तवत्सलस्य शुद्धसत्त्वस्वरूपादेवेत्यत एवं व्याख्येयम्—यस्य प्रसादजो यस्य प्रसादाख्यो भाग्यविशेषो ब्रह्मैवोक्तसमस्तसाध्यसाधनोत्पत्तिहेतुरतस्तदर्थमेव भक्तैर्यतनीयं,

तथैवोक्तसाध्यसाधनविनाशहेतुर्भगवत्कोप एवेत्यतस्तदनुद्भव एव यतनीयमित्येतावत्पुराणतात्पर्यमवधेयमिति भावः। ननु यदि श्रीशुकदेवेन भागवतपुराणमिदमत्रैव समाप्तीकृतं कथं तर्हि प्रथमस्कंधस्यावशिष्टद्वादशस्य च श्रीभागवतत्वमुच्यते, यज्ञस्य प्रागुत्तरक्रिययोरपि यागत्वमेव, नाटकशास्त्रस्य यथा प्राक्पश्चाद्गतयोः प्रस्तावनाशीर्वादयोरपि नाटकत्वमेव तथैव प्रथमद्वादशार्द्धयोरपि भागवतत्वम्, यथा च–'गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः। या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता।' इत्यष्टादशाध्यायाः श्रीगीतायाः सर्वस्या भगवत्प्रोक्तत्वाभावेऽपि भगवत्प्रोक्तत्वमुच्यते, तथैव सप्रथमद्वादशस्य श्रीभागवतत्वं श्रीशुकदेवप्रोक्तत्वाभावेपि श्रीशुकप्रोक्तत्वञ्चेति समाधिः॥ १॥ मरिष्य इति छेदः, संधिरार्षः। हे राजन्निति—मद्दत्तज्ञानेन राजस्वेति भावः। अथ ज्ञानोपदेशः–त्वं त्विति। तुर्भिन्नोपक्रमे। मरिष्येतीति सन्धिरार्षः। पशूनामिव बुद्धिं जहि विवेकेन नाशयेति। 'तमोपयातं प्रतियन्तु विप्रा गंगा च देवी धृतचित्तमीशे। द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः।' इति भागवतश्रवणात्प्रागेव प्रतिज्ञातवतस्तस्य पशुबुद्धेः प्रसक्तिरेव नास्तीत्यतस्तन्निवर्तको ज्ञानोपदेशो न राजानं प्रति संभवेत्किंतु ये पशुबुद्धयस्तानेव प्रति, तदपि राजन्निति संबोधनं तु तमेव लक्ष्यीकृत्यान्यविषयकस्याप्युपदेशस्य वक्तुमौचित्यात्तस्यैव तच्छिष्यत्वात् यथा सर्वविषयकोप्युपदेशः श्रीगीतायामर्जुनं लक्ष्यीकृत्यैवोक्तः। विवेकमेवाह–न जात इति। यथा देहः प्रागभूत एवेदानीं जातो नंक्ष्यति, न तथा त्वं जातः नापि प्रागभूतो नाप्यद्य नंक्ष्यसि, त्वं जीवात्मा जडाद्युपाधेः पृथगेवासीति नायं भक्तिप्रतिकूलोर्थः॥२॥ अत्राक्षिपति–नन्विति। अंगादंगात्प्रत्येकं भिन्नाद्भिन्नादंगाद्भिन्नंभिन्नमंगं भवतीत्यभिप्रायः। स त्वं शरदः वर्षाणां शतं जीवेत्यर्थः। ततः पुत्रात्। योनियोनौ पौत्रप्रपौत्रादिजन्मनि पिता तत्तत्पुत्रेण पितृमान् पितृपंक्तिभाग्भवतीत्यर्थः। यतः पुत्रादयोऽपि तद्रूपा एवातो हेतोः। तेषु पुत्रादिषु। इति भाव इति–'अजो नित्यः शाश्वतोऽयं पुराणः' इत्यादिश्रुतेरित्याशयः॥ ३॥ तद्वदेव स्वप्नवदेव। आत्मन इदं पंचत्वादि। इत्यर्थं इति–यज्जन्यं तद्विनाशीति व्याप्तेर्देहस्यैव जन्यत्वान्मृत्युजन्मादि, आत्मनस्त्वजन्यत्वात्तन्नेति भावः। तद्देहस्य मरणादि। उक्तम् एकादशस्कन्धे। आत्मन इति श्लोकस्तु व्याख्यातचर एव। जन्माद्यवस्थावतो देहात्मनः पार्थक्यं दृष्टान्तेनाह—स्वप्न इति। न हि स्वशिरश्छेदं स्वयं पश्यति, अत आत्मा ततः पृथगेव तद्द्रष्टा, तथैव जागरेपि तस्मात्पृथग्भूत एवात्मनो देहस्य पंचत्वादि पश्यति, अतो हेतोरात्माऽजोऽमरो जन्ममृत्युहीन इति॥ ४॥

## अन्वितार्थप्रकाशिका

पञ्चमे ब्रह्मोपदेशाद्राज्ञस्तक्षकजं भयम्। न्यवारयन्मुनिस्तत्र श्लोकाः सार्द्धत्रयोदश (१३)॥
उवाचेति वचस्त्वेकं (१) श्लोकतुल्या (१३) अनुष्टुभः॥ ५॥

अत्रेति। जगतः कर्त्ता अजो ब्रह्माऽपि यस्य प्रसादजः प्रसादोऽत्र रजोवृत्तिर्हर्षस्ततो जातः अतः परतन्त्रः तथा सर्वसंहारकर्त्ता रुद्रश्च यस्य क्रोधसमुद्भवः न तु स्वतन्त्रः। स विश्वस्यात्मा नियन्ता भगवान् हरिः। अत्र पुराणेऽभीक्ष्णमनुवर्ण्यते॥ १॥ त्वमिति। हे राजन्! त्वं तु अहं मरिष्य इतीमां पशुबुद्धिं देहात्माविवेकरूपां जहि त्यज। मरिष्य इति तङ् सन्धिश्चार्षौ। यथा देहः प्रागभूत एवाद्य जातो नङ्क्ष्यति च न चैवं त्वं पूर्वं नाभूः न चाद्य जातोऽसि। अतो न नङ्क्ष्यसि॥ २॥ ननु वीजाङ्कुरवत् स्वस्मात्पुत्ररूपेण स्वयमेव भवति 'आत्मा वै पुत्रनामासि' इति श्रुतेः। ततः पुनरङ्कुराद्वीजमिव पौत्ररूपेणापि स्वयमेव वर्त्तते अतस्तेषु नश्यत्सु कथं नङ्क्ष्यामीति चेत्तत्राह—नेति त्वं भूत्वा पुत्रपौत्रादिरूपवान् वीजाङ्कुरवन्न भविष्यसि यस्माद्देहाद्देर्व्यतिरिक्तस्त्वं देहाद्देह एव जायते न त्वात्मा। यथाऽनलः काष्ठाद्व्यतिरिक्तः॥ ३॥ स्वप्ने इति। स्वप्ने यथा आत्मनः शिरश्छेदं पञ्चत्वादि मरणादि च स्वयं पश्यति तथा जागरणेऽपि देहस्यैव तत्पश्यति आत्मनस्तु भ्रममात्रम्। यस्मादेवं ततः आत्मा अजः अमरश्च॥ ४॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

॥१–२॥ भूत्वा पुत्रपौत्रादिरूपवान् न च भविष्यसि न पुनर्जननं बीजाङ्कुरन्यायेन सन्तानोत्पादकश्च न भविष्यसीत्यर्थः यथाऽनलः काष्ठादिति शेषः॥ ३॥ स्वप्ने देहादप्यात्माविलक्षण इत्यर्थः॥ ४॥

## श्रीमद्वीरराघवव्याख्या

एवं भागवतीं संहितां संश्राव्य अथ स्वर्त्तव्यं प्राधान्येन प्रतिपाद्यं निष्कृष्य दर्शयन्देहात्मयाथात्म्यविमर्शनपूर्वकं स्वशरीरकपरब्रह्मानुसंधाननिष्ठोऽस्पृष्टलौकिकदुःखो मुक्तो भविष्यसीत्याह पञ्चमेन। अत्रेत्यादिना—अत्रास्यां संहितायां हरिराश्रितबन्धहरो भगवाननुवर्ण्यते ततः किमत इत्यत्र तस्यैव 'कारणं तु ध्येयः' इत्युक्तरीत्यावश्यध्येयत्वख्यापनाय सर्वकारणत्वमाह—यस्येति। यस्य हरेः सोऽनुवर्ण्यत इति सम्बन्धः॥ १॥ निष्कृष्य त्याज्योपादेयविभागमाह–त्वन्त्विति। अनासन्नमरणानां तु सन्त्युपाया आसन्नमरणस्त्वं इति तु शब्दाभिप्रायः हे राजन्! मरिष्ये इत्येवंविधां पशुबुद्धिमविवेकं जहि अहं प्रत्ययवेद्यस्यात्मनो नित्यत्वान्मरणा-

भावादितिभावः तदाह–न जात इति। न त्वं देहवत्प्रागभूतोऽविद्यमानः अद्य न जातः नोत्पन्नः नापि नङ्‌क्ष्यसि न मरिष्यसीत्यर्थः॥ २॥ भूत्वा उत्पद्य पुनर्बीजाङ्कुरवत्पुत्रपौत्रादिरूपवान्न भविष्यसि तत्र हेतुत्वेन विशिनष्टि–देहाद्व्यतिरिक्त इति। तत्र दृष्टान्तः यथाऽनल इति काष्ठादितिशेषः। यथा काष्ठादग्निर्व्यतिरिक्तस्तथेत्यर्थः॥ ३॥ स्वप्नदेहादिवज्जाग्रद्देहादप्यात्मा विलक्षणः इत्याह–स्वप्न इति। स्वप्ने यथा आत्मनः शिरश्छेदं स्वयं पश्यत्येवं जागरणेपि तत्र यथा द्रष्टाः छिद्यमानाद्देहाद्विलक्षण एवं जागरेपीति भावः। यस्मात्तु देहस्य पञ्चत्वादिकं मरणादिकं पश्यति ततः आत्मा देहाद्विलक्षणः ( देहाद्व्यतिरिक्तः ) अतो न जायत इति तथाऽमरः मरणरहितश्च॥ ४॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्याः विषयमाह–अत्रेति। कुतोऽस्या इतरेभ्यः श्रैष्ठ्यं येनादरेण ग्राह्या स्यादित्यतो वाऽऽह–अत्रेति। विष्णवभिन्नत्वेन ब्रह्मान्यतमः किं न स्यादित्यत्राह–यस्येति। अनेन 'आत्मा वै पुत्रनामासीत्' इति वाक्यप्राप्ता तदात्मशङ्कापि दूरीकृतेति॥ १॥ ननु, जातो मृतोऽहमिति बुद्धेर्विक्रियायाः कथं चेतनस्य परिणामाद्यवस्थाभाव इत्याशङ्क्य सिंहावलोकनन्यायेन तस्याविकारित्वमाह–त्वञ्चेति। मरिष्यति सन्धिभावेन घटादिनाशवैलक्षण्यं देहवियोगस्य दर्शयति वैलक्षण्यमेव दर्शयति–नेति। 'न जायते म्रियते वा कदाचित्' इत्यादेः देहवदित्येतत्प्रत्येकमभिसम्बद्ध्यते नेति च त्वद्देहवत् न जातः तर्हि प्रागासन्नेत्याह, प्रागिति। देहवत्प्रागभूतोऽनुत्पन्न अद्य देहवन्न परिणमसि॥ २॥ देहान्तरवन्न भविष्यसि पुत्रपौत्रादिरूपवान्भूत्वा त्वं देहवन्न नङ्‌क्ष्यसि कथमिव पुत्रादिरूपवानिति तत्राह–बीजेति। बीजाङ्कुरपरम्परा यथा तथा कस्मान्नाशाभाव इति तत्राह, देहादेरिति। हेतुगर्भं विशेषणम् अत्रापि निदर्शनं यथाऽनल इति दार्वादेरितिशेषः। पुत्रादिरूपत्वेत्वभेदोपि प्राप्त इत्यतो वाऽऽह, यथा बीजपरम्पराया भेदः प्रमितः तया प्रकृत इति शेषः प्राग्वत्॥ ३॥ ननु, जातो मृत इत्यभेदप्रतीतेस्तद्व्यतिरेकः कथमनलदृष्टान्तः परमात्मनि सङ्गत इति तत्राह–स्वप्न इति। आत्मनो जीवस्य स्वप्ने स्वशिरश्छेदो यथा मिथ्या तथा पञ्चत्वादि इदं स्वानुभवसिद्धमित्याह, यस्मादिति। त्वं देहस्य पञ्चत्वादि पश्यसीति यस्मात्तत आत्मा अजो न जातोऽमरो न मृतश्चेति तस्माद्देहस्यैव जन्मादयो न चेतनस्येति सिद्धम्॥ ४॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अत्रानुवर्ण्यत इत्यादि प्राक् लीनसाधकभक्तानुत्पद्यमद्भाक्तिङ्करिष्यन्तीति भागवतान्प्रतिजाताद्यस्य प्रसादाज्जातास्तेषु मुख्यो ब्रह्मा तथा कालेन तद्विमुखप्राये लोके तद्वैमुख्यहेतुं भावं प्रतिजाताद्यस्य क्रोधाज्जातः स्वाभक्तशास्ता रुद्र इत्यर्थः॥१॥ प्रथमस्कन्धान्ते तत्र म्रियमाणस्य कृत्यम् यत् पृष्टम् तत्तु स्वार्थम् तवायुक्तमित्यभिप्रेत्य प्रत्याचष्टे, त्वन्त्विति। पशुबुद्धिमिति यतः पशोरेव सा बुद्धिर्युक्ता न तु तवेति भावः। न जात इत्यन्तर्भूतानश्वरभगवत्पार्षददेहत्वादिति भावः। व्यतिरेके दृष्टान्तः देहवत् दृश्यमानदेह एव॥ २॥ दृश्यमानं चास्मिन्नावेशाभावान्न भविष्यतीति॥३॥ साधारणानामपि तदावेशोऽभूस एवेत्याह, स्वप्न इति पञ्चभिः॥४॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

एतच्छास्त्रार्थतात्पर्य्याच्छादनायात्र पञ्चमे। ब्रह्मज्ञानोपदेशः श्रीमुनीन्द्रेण नृपे कृतः॥

शास्त्रार्थमुपसंहृत्य श्रीमन्मुनीन्द्रः किञ्चिदात्मनैव पराममर्श अहो असाध्वनुष्ठितं यन्महारहस्यरत्नमसमानाधिकं स्वहृदयसम्पुटादुद्घटय्य सर्वलोकदृष्टिगोचरीकृतं यः खलु मत् प्रभुणा 'राजविद्या राजगुह्यम्' इत्यनेन विद्यानां राजेति गुह्यानां राजेत्युक्तः पुनश्च 'सर्वगुह्यतमं भूयः शृणु मे' इत्यनेन सर्वगुह्यशब्देनोक्तः स खलु भक्तियोगोऽत्र शास्त्रे मया परीक्षिति कृपापरवशतया प्रायः प्रकटीकृत्यैवोक्तः तथाहि—

'अकामः सर्वकामो वा मोक्षकाम उदारधीः। तीव्रेण भक्तियोगेन यजेत पुरुषं परम्'॥

इत्यादिना 'मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह' इत्यत्र 'य एषां साक्षादात्मप्रभवमीश्वरम्। न भजन्त्यवजानन्ति स्थानाद्भ्रष्टाः पतन्त्यधः' इत्यादिना चान्वयव्यतिरेकाभ्यां भक्तिरेव सर्वफलसाधनत्वेन प्रतिपादिता स्वर्गादिसाधनानि कर्मादीनि दूरे तावदासतां मोक्षसाधनत्वेनातिप्रसिद्धस्यापि ज्ञानस्य मोक्षकारणत्वं परास्तीकृतमेव नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्' इति चतुर्थाश्रमिणो ज्ञानिनोपि 'स्थानाद्भ्रष्टाः पतन्त्यधः' इति 'आरुह्य कृच्छ्रेण परम्पदं ततः पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः' इत्याद्युक्तेर्ज्ञानान्वयेऽपि भक्त्या विना मोक्षासिद्धेः—

'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा'॥ इति।

ज्ञानव्यतिरेकेऽपि भक्त्यैव मोक्षसिद्धेरुक्तत्वात् मोक्षप्रतिज्ञानं नैवान्वयव्यतिरेकीति तदपि ज्ञानान्मोक्ष इति या प्रसिद्धिस्तत्र ज्ञानगता गुणीभूता भक्तिरेव मोक्षं जनयेत् ज्ञानस्य तु नाममात्रेणैव कारणता 'भक्त्याहमेकया ग्राह्यः' इति 'न तपो नात्ममीमांसा' इति—

'किम्वा योगेन साङ्ख्येन न्यासस्वाध्याययोरपि। किम्वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरिः' ॥

इत्यादिवाक्यैर्ब्रह्मानुभवं प्रतिज्ञानस्य सहकारितापि वस्तुतो न प्रतिपादितेति भक्तेरेव साधनत्वनुपक्रमोपसंहाराभ्यामेधु प्रपञ्चितं तदपि यदन्तराज्ञानयोगादिकमप्युपन्यस्तं तत् खलु भक्तेरुत्कर्षं तत्तन्मतानि च भक्तानुज्ञापयितुमेवेति किञ्च 'यन्नामधेयश्रवणकीर्त्तनाद्यत्प्रह्वणात् यत्स्मरणादपि क्वचित्' इति 'अहो बत श्वपचोऽतो गरीयान् यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम्' इति यन्नाम सकृत् श्रवणात् पुल्कसोपि विमुच्यते संसारादित्यादिभ्यः किञ्चिन्मात्रापि भक्त्यां मोक्ष इति तथा 'तापत्रयेणाभिहतस्य घोरे सन्तप्यमानस्य भवाध्वनीह' पश्यामि नान्येनोपायेन संसारादपि मोक्ष इत्यपि निर्द्धारितम्। किञ्च, 'भक्त्या तथैव परया निर्वृत्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादिनो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्था' इति मयि सञ्जायते भक्तिः कोन्योऽर्थोऽस्यावशिष्यते' इति 'न परिलषन्ति केचिदपवर्गमपि' इति 'सा ब्रह्मणि स्वमहिम्न्यपि नाथ माऽभूत्' इति 'स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः' इत्यादिवाक्येभ्यश्चतुर्थपुरुषाथमपि तिरस्कृत्य भक्तेरेव पुरुषार्थशिरोमणित्वं च मया स्थापितं किञ्च मुन्यन्तरवाक्यस्य प्रामाण्यमापेक्षिकमेव मद्वाक्यस्य तु प्रामाण्यमात्यन्तिकमेवेति सर्वत्र वैकुण्ठेऽपि प्रसिद्धिर्भूयसी 'परोक्षवादा ऋषयः परोक्षं मम च प्रियम्' इति भगवदुक्तेर्महारहस्योद्घाटनपटिष्ठो भूत्वा भगवदप्रियङ्करोऽप्यहमभूव तदधुना किं करिष्ये पुराणार्थश्च समाप्तीकृत एव त्वधुनाप भक्तेर्महामहिमानं संवरीतुं यतिष्ये यथा कश्चिन्महारत्नमतिगोप्यं रभसवशेन सर्वलोकान् सन्दर्श्यापि पुनः किञ्चित्परामृश्य तदलक्षितं सम्पुटगतं कृत्वा महाकोषाभ्यन्तरे संस्थाप्य रत्नान्तरं बहि प्रकाशयानेनैवास्माकं सर्वार्थसिद्धिरिति ब्रूते तथैवाधुना राजानमहं ज्ञानमुपदिशामि यथा गमनसमये तु शुकः परीक्षिते ज्ञानमेवोपदिष्टवानिति भगवन्मायाप्रभावाज्ज्ञानमेवोत्कृष्टं भक्तिस्तु तत्साधनमेवेति मंस्यन्ते किञ्च भक्तिसिद्धान् जनान् प्रतिप्रादुर्भूय भगवांस्तान् परीक्षमाणो मोक्षं गृहाणेति यथा ब्रूते तथैवानन ज्ञानोपदेशेनास्य मच्छिष्यस्य परीक्षितो भक्तिमृतत्व्युत्पत्तिं च परीक्षिष्ये परीक्षा च सर्वज्ञे नापि जगत्यस्मिन् परीक्षिद्भक्तिनिष्ठाज्ञापनार्थो ज्ञे या किञ्च भक्तिज्ञानयोः फलमन्ततो मुक्तिरेव केवलमित्यनभिज्ञव्याख्यानं नैव मदभिप्रायसम्बद्धं ज्ञे यं यतो—

'राजन्! पतिर्गुरुरलं भवतां यदूनाम्—दैवं प्रियः कुलपतिः क्व च किङ्करो वः।
अस्त्वेवमङ्ग! भगवान् भजतां मुकुन्दो—मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम्' ॥

इत्युक्तवता मया मुक्तेः सकाशादपि भक्तेरुत्कृष्टफलत्वस्य प्रतिपादितत्वात् न चोपदेष्टव्येनानेन ज्ञानेन परीक्षितो निर्वाणमुक्तिप्राप्तिरेवेत्याशङ्कनीयम्—

'स वै महाभागवतः परीक्षित्—येनापवर्गाख्यमदभ्रबुद्धिः।
ज्ञानेन वैयासकिशब्दितेन—भेजे खगेन्द्रध्वजपादमूलम्' ॥

इति मदभिप्रायाभिज्ञे नानेन मच्छिष्येण सूतेनाग्रे वक्ष्यमाणत्वात् मयापि 'राजन्! पतिर्गुरुरलम्' इत्यत्र भगवद्भयस्तु स्वभक्तियोगं ददातीति परीक्षितः प्रेमभक्तिप्राप्तिरभिव्यञ्जितैव न चोपदिश्यमानेनानेनैव देहादिव्यतिरिक्तात्मज्ञानेन ब्रह्मानुभवः सिद्ध्येत् किं तस्यापि ज्ञानस्य भक्त्या निर्जयेनैव यदुक्तं भगवता—

'द्रव्यं दिशः फलं कालो ज्ञानं कर्म च कारकः। श्रद्धावस्थाकृतिर्निष्ठा त्रैगुण्यः सर्व एव च ॥
सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः। दृष्टं श्रुतमनुध्यातं बुद्ध्या वा पुरुषर्षभ! ॥
एताः संसृतयः पुंसो गुणकर्मनिबन्धनाः। येनेमे निर्जिताः सौम्य! गुणा जीवेन चित्तजाः ॥
भक्तियोगेन मन्निष्ठो मद्भावाय प्रपद्यते' ॥ इति

किञ्च, भगवद्भक्तस्य मोक्षकामत्वेपि नास्ति ज्ञानेन प्रयोजनं यदुक्तं स्वयं भगवता—

'ज्ञाने कर्मणि योगे च वार्त्तायां दण्डधारणे। यावानर्थो नृणां तात! तावांस्तेऽहं चतुर्विधः' ॥ इति

तस्मादहं तेम सर्वान्ते ज्ञानोपदेशेनास्य शास्त्रस्य स्पष्टतयैव मोहनीसाधर्म्यं प्रतिपादयिष्ये यथा ह्यसुराः प्रेमसुधया वञ्चिता एव भवेयुरिति अपि च ज्ञानोपदेशात् प्रागेकं वाक्यं पुनर्व्यञ्जनया वृत्या भक्तान् प्रीणयितुं भक्तिरसप्रक्षितमेव करिष्ये,

तदनन्तरं ज्ञानोपदेशवाक्यान्यपि यानि भक्तिप्रतिकूलानि वक्ष्ये तान्यप्यन्तर्भूतभक्त्यनुकूलार्थान्येव करिष्ये इत्यादिविचार्याह—अत्रेति। अत्र समासीकृते अस्मिन् पुराणशास्त्र इत्यर्थः। यस्य हरेः प्रसादजो ब्रह्मेति प्रसादस्य सत्त्वगुणत्वात् ब्रह्मणस्तु रजःसम्भवत्वादेतन्न सङ्गच्छते तथा रुद्रक्रोधसमुद्भव इति भगवतो निर्गुणत्वात् स्वरूपेण तामसः क्रोधोपि न सम्भवेत् यदुद्भवो रुद्रः स्यात्तस्माद्वाक्यमिदमतिशयोक्त्या अर्थान्तरतात्पर्यकं ज्ञेयं तच्चैवं निर्गुणस्य भगवतः स्वभक्तसेविनि जने प्रसादः स्वभक्तद्रोहिणि क्रोधश्च दृष्टस्तौ च भक्तवत्सलस्य तस्य शुद्धसत्त्वस्वरूपावेवेत्यत एवं व्याख्येयं यस्य प्रसादजः यस्य प्रसादोत्थो भाग्यविशेषो ब्रह्मैवोक्तसमस्तसाध्यसाधनोत्पत्तिहेतुरतस्तदर्थमेव भक्तैर्यतनीयं तथैवोक्तसाध्यसाधनविनाशहेतुर्भगवत्कोप एवेत्यतस्तदनुद्भव एव यतनीयामत्येतत् पुराणतात्पर्यमवध्येयमिति भावः। ननु, यदि श्रीशुकदेवेन श्रीभागवतपुराणमिदमत्र समाप्तीकृतं कथं तर्हि प्रथमस्कन्धस्यावशिष्टद्वादशस्य च श्रीभागवतत्वम् उच्यते? यज्ञस्य यथा प्रागुत्तरकृत्यकलापयोरपि यज्ञत्वमेव नाटकशास्त्रस्य यथा प्राक् पश्चाद्गतयो प्रस्तावनाशीर्वादयोरपि नाटकत्वमेव तथैव प्रथमद्वादशार्द्धयोरपि श्रीभागवतत्वं यथा च—

"गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः। या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता" ॥

इत्यष्टादशाध्यायागीतायाः सर्वस्या भगवत्प्रोक्तत्वाभावेपि भगवत्प्रोक्तत्वमुच्यते तथैवास्य द्वादशस्कन्धस्य श्रीभागवतस्य सर्वस्य शुकप्रोक्तत्वाभावेपि शुकप्रोक्तत्वमिति समाधिः ॥ १ ॥ अथ ज्ञानोपदेशः त्वं त्विति तु भिन्नोपक्रमे मरिष्येतीत्यार्षं मरीष्यामीति पशूनामिव बुद्धिं जहि विवेकेन नाशयेति—

"तं मोपयातं प्रतियन्तु विप्रा—गङ्गा च देवी धृतचित्तमीशे।
द्विजोपसृष्टः कुहकस्तक्षको वा—दशत्वलं गायत विष्णुगाथाः" ॥ इति।

श्रीभागवतश्रवणात्पूर्वमेव प्रतिज्ञातवतस्तस्य पशुबुद्धेः प्रसक्तिरेव नास्तीत्यतस्तन्निवर्त्तको ज्ञानोपदेशो न राजानं प्रति सम्भवेत् किन्तु ये पशुबुद्धयोऽन्ये तानेव प्रति तदपि राजन्निति सम्बोधनं तु तमेव लक्ष्यीकृत्यान्यविषयकस्याप्युपदेशस्य वक्तुमौचित्यात्तस्यैव तच्छिष्यत्वात् यथा सर्वविषयकोप्युपदेशो गीतायामर्जुनं लक्ष्यीकृत्यैवोक्तं विवेकमेवाह, न जात इति। यथा देहः प्रागभूत एव इदानीं जातोऽद्य नङ्क्ष्यति न तथा त्वं जातः नापि प्रागभूतः नाप्यनङ्क्ष्यसि त्वं जीवात्मा जडादुपाधेः पृथगेवासीति नायं भक्तिप्रतिकूलोऽर्थः ॥ २ ॥ यथा देहो भूत्वा पुनर्भवति न तथा त्वमात्मा इत्याह—नेति। पुत्रपौत्रादिरूपवानिति यथाह श्रुतिः—

"अङ्गादङ्गात् सम्भवसि हृदयादभिजायसे। आत्मा वै पुत्रनामासि सञ्जीव शरदः शतम्" ॥ इति।

बीजाङ्कुरवत्स्वयमेव पुत्रो भवति ततः पुनरङ्कुरात् बीजमिव पौत्रोपि स्वयमेव भवति तथात्वं न भविष्यसि यस्माद्देहादेरुपाधेर्जडात्त्वमात्मा व्यतिरिक्तः यथा अनलः काष्ठात् देहाद्देहो जायते नात्मेति भावः ॥ ३ ॥ जन्ममरणाद्यवस्थावतो देहादात्मनः पार्थक्यं दृष्टान्तेन स्पष्टयति, स्वप्ने इति। नहि स्वस्य शिरच्छेदं स्वयं पश्येत् अत आत्मा ततः पृथगेव न द्रष्टा तथैव जागरेपि तस्मात्पृथग्भूत एव आत्मनो देहस्य पञ्चत्वादि पश्यति ततो हेतोरात्मा अजो जन्मरहितः अमरो मृत्युरहितश्च ॥ ४ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अत्रेदं बोध्यं निष्कामकर्मयोगेन शुद्धान्तःकरणः भगवद्विषयकं ज्ञानं ततो भगवद्भक्तिं तदनन्तरमत्र ब्रह्म समश्नुते इति श्रुतेश्चरमकलेवरे एव भगवन्तं ध्याने प्राप्नोति चरमकलेवरत्यागानन्तरं च भगवद्भक्त्यैव भगवद्भावापत्तिलक्षणं मोक्षं प्राप्नोति मुमुक्षुः इति श्रीमुखेनैवोक्तम्—

"योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया। ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योस्ति कर्हिचित्" ॥ इति।

"भक्तियोगेन मन्निष्ठो मद्भावायोपपद्यते" तत्र देहत्यागानन्तरं भक्त्या भगवद्भावापत्तिः षष्ठेऽध्याये राज्ञः स्फुटीभविष्यति इह तूक्तसाधनबलेन निर्भयः सन् अस्मिन्कलेवरे एव श्रीकृष्णं परमात्मानं प्राप्नुहीत्याह राजानं प्रति भगवान् शुकः—अत्रेति। अत्रास्मिन् महापुराणे हरिः स्वानन्यभक्तक्लेशहरः वर्ण्यते भगवान् स्वाभाविकषडैश्वर्यसम्पन्नः यस्य प्रसादजः ब्रह्मा रुद्रश्च क्रोधसमुद्भवः सर्वेश्वरः समानातिशयशून्य इत्यर्थः। विश्वात्मा चेतनाचेतनत्वयोरनन्तरं वक्ष्यमाणयोः समुदायभूतस्य आत्मा कारणं यद्विज्ञानेन सर्वमात्मानात्मस्वरूपादिकं विज्ञातं भवति सः भगवान् श्रीकृष्णः अभीक्ष्णं पुनः पुनः नवभिर्लक्षणैः साक्षाच्च अनुवर्ण्यते ॥ १ ॥ तस्यैवांशाभूतस्त्वं परमात्मानं बुद्ध्वा तद्विषयकज्ञानभक्तिबलेन तमेव परमात्मानं ध्यानेन प्राप्नुहि तथाभूतं त्वां सर्पस्य तु का कथा मृत्यवोपि धर्षयितुं न शक्नुवन्तीत्याह—त्वन्त्विति सार्द्धैर्नवभिः। तुशब्दः प्राप्तविद्यस्य राज्ञः अविद्वद्भ्यो वैलक्षण्यं सूचयति इमामनादितः प्रवृत्तामात्मानात्माऽविवेकरूपां सुप्तप्रबुद्धस्मरणन्यायेन विवेके जातेपि संस्कारवशात्प्रस्फुरितां

मरिष्ये इति पशुबुद्धिमज्ञमतिं जहि त्यज सन्धिरार्षः। आत्मानात्मविवेकं पूर्वत्र नानाख्यानेपूपदिष्टमनुस्मारयति प्रागभूत्वा अविद्यमानः न जातः नापि देहवत् नङ्क्ष्यसि मरिष्यसि॥ २॥ किञ्च भूत्वा उत्पद्य बीजाङ्कुरवत् पुत्रपौत्रादिरूपवान् त्वं न भविष्यसि यतः यथा दारुभ्यस्तत्प्रकाशकः अनिलो व्यतिरिक्तः तथा देहेन्द्रियमनोबुद्धिप्राणादिभ्यस्तेषां प्रकाशकस्त्वं व्यतिरिक्तोसि अयमर्थः आत्मा ऽविकारी पुत्रादिरूपेण न विक्रियते किंत्वात्माधिष्ठितो देह एव विक्रियते "अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे। आत्मा वै पुत्रनामासि सञ्जीव शरदः शतम्" इति श्रुतेः॥ ३॥ देहादेर्व्यतिरिक्तत्वमेवाह—स्वप्ने इति। स्वप्ने यथा आत्मनः स्वाप्नदेहात्पृथग्भूत एव शिरच्छेदं स्वयं पश्यति एवं जागरेपि देहात्पृथग्भूत एव आत्मनो यो देहस्तस्य पञ्चत्वादि पश्यति ततो हेतोरात्मा अजः जन्मशून्य अमरः मृत्युवर्जितश्च॥ ४॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

पञ्चमे तु समासेन परब्रह्मोपदेशतः। राजंस्तक्षकसन्दंशान्मृत्युमीतिर्निवार्यते॥ १॥

एतत्पुराणश्रवणकीर्त्तनादिपरो निर्भयो भवतीत्यभिप्रेत्य पुराणार्थमनुस्मारयति—अत्रेति। जगतः कर्त्ता अजो ब्रह्मा यस्य प्रसादजः। प्रसादोऽत्र रजोवृत्तिर्हर्षस्ततो जातः। अतस्ततो जातत्वात्तत्परतन्त्र एव न स्वतन्त्रः। तथा सर्वसंहारकर्त्ता रुद्रश्च यस्य क्रोधसमुद्भवः। अतस्सोऽपि तत्परतन्त्र एव न तु स्वतन्त्रः। स हरिः भक्तदुःखहर्ता विश्वस्यात्मा नियन्ता भगवान् अत्र पुराणेऽभीक्ष्णमनुवर्ण्यते। अत एतच्छ्रवणादिपरस्य कुतः संसारभयं स्यादित्याशयः॥ १॥ त्वं त्वेतच्छ्रवणेन कृतार्थ एवातो भयं त्यजेत्याह त्वं त्विति। सन्धिरार्षः। हे राजन् त्वं त्वहं मरिष्य इतीमा पशुबुद्धिं देहात्माऽविवेकरूपां जहि त्यज। कुत इत्यत्राह—न जात इति। यथा देहः प्रागभूत एवाद्य जातो नङ्क्ष्यति च न चैवं त्वं पूर्वं नाभूः न चाद्य जातोऽसि न नङ्क्ष्यसि॥ २॥ ननु बीजादङ्कुरवत्स्वस्मात्पुत्ररूपेण स्वयमेव भवति। यथाह श्रुतिः—'अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम्' इति। 'ततश्च 'पुनरङ्कुराद्बीजमिव पौत्ररूपेणापि स्वयमेव भवति। पिता पुत्रेण पितृमान्योनिर्योनौ' इति श्रुतेः। अतस्तेषु नश्यत्सु कथं न नङ्क्ष्यामीति चेत्तत्राह—न भविष्यतीति। त्वं भूत्वा पुत्रपौत्रादिरूपवान् बीजाङ्कुरवन्न भविष्यसि। यस्माद्देहादेर्व्यतिरिक्तस्त्वम्। देहाद्देह एव जायते न त्वात्मा यथाऽनलः काष्ठादव्यतिरिक्तः॥ ३॥ जन्मादीनां देहधर्मत्वं दृष्टान्तेन स्पष्टयति—स्वप्ने यथाऽऽत्मनः शिरश्छेदं स्वयं पश्यति तथा जागरणेपि देहस्यैव तत्पश्यति। यस्मादेवं ततः आत्मा अजः अमरश्च। हि अत्र न संशयः॥ ४॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ब्रह्मरूपं विभाव्य स्वमुपास्यो हरिरीरितः। पञ्चमे नृपतेः सर्पदंशभूभृतिमीत्यजिः॥ १॥

एवं भागवतीं संहितां संश्राव्य स्वर्त्तव्यं प्राधान्येन प्रतिपाद्यं निष्कृष्य दर्शयन् देहात्मयाथात्म्यविमर्शनपूर्वकं स्वशरीरकपरब्रह्मानुसंधाननिष्ठोऽस्पृष्टलौकिकदुःखो मुक्तो भविष्यसीति प्राह मुनिः अत्रेत्यादिना। अत्रेति। अत्रास्यां संहितायां, हरिः स्वाश्रितबन्धनहरः, विश्वात्मा भगवान्, अभीक्ष्णं अनुवर्ण्यते। ननु ब्रह्मरुद्रौ परित्यज्यायमेव किमिति वर्ण्यते इति चेत् 'तत्कारणं तु ध्येयः' इति श्रुत्युक्तरीत्याऽवश्यध्येयत्वख्यापनाय भगवतः सर्वकारणत्वमाह यस्येति। यस्य हरेः प्रसादजः जगतः कर्त्ता ब्रह्मापि, परतन्त्रः यस्य क्रोधसंभवः संहर्त्ता रुद्रः अपि, परतन्त्र एव। न तु स्वतन्त्रः एवमपरतन्त्रत्वेन सर्वकारणत्वात् सोऽत्र वर्ण्यते इति संबन्धः। एवंभूतं भगवन्तं शृण्वतः कुतोऽन्यस्माद्भयशङ्केति भावः॥ १॥ निष्कृष्य त्याज्योपादेयविभागमाह। त्वं त्विति। अनासन्नमरणानां तु बहव उपायाः सन्ति, त्वं त्वासन्नमरण इति तु शब्दाभिप्रायः। हे राजन्, अहं मरिष्ये मरणं प्राप्स्यामि इत्येवंविधां, इमां पशुबुद्धिं अविवेकमित्यर्थः। जहि, अहंप्रत्ययवेद्यस्यात्मनो नित्यत्वान्मरणाभावादिति भावः। मरिष्ये इत्यत्र संधिरार्षः। यतः त्वं देहवत् प्राक् अभूतः, अद्य सांप्रतमेव जातश्चेति न, अतः देहवत् त्वं न नङ्क्ष्यसि। आत्मा त्वं नित्योऽसि देहोऽनित्य एवास्तीति भावः॥ २॥ ननु बीजाङ्कुरवत् स्वस्मात्पुत्ररूपेण स्वयमेव भवति। 'अङ्गादङ्गात् संभवसि हृदयादभिजायसे। आत्मा वै पुत्रनामासि स जीव शरदः शतम्' इति श्रुतेः, ततः पुनरङ्कुराद्बीजमिव पौत्ररूपेणाऽपि स्वयमेव भवति 'पिता पुत्रेण पितृमान् योनियोनौ' इति श्रुतेश्च, अतस्तेषु नश्यत्सु कथं न नङ्क्ष्यामीति चेत्तत्राह। न भविष्यसीति। त्वं भूत्वोत्पद्य, पुनः बीजाङ्कुरवत् पुत्रपौत्रादिरूपवान् न भविष्यसि। यतः, अनलः यथा व्यतिरिक्तः काष्ठादेरिति शेषः। तथा त्वं देहादेः व्यतिरिक्तः असि। देहाद्देहो जायते न त्वात्मेति भावः॥ ३॥ स्वाप्नदेहादिवज्जाग्रद्देहात्तथात्मा विलक्षण इत्याह। स्वप्न इति। स्वप्ने यथा आत्मनः शिरश्छेदं स्वयं पश्यति, एवं जागरेऽपि, तत्र यथा द्रष्टा छिद्यमानाद्देहाद्विलक्षणः, एवं जागरेऽपीति भावः। यस्मात् देहस्य पञ्चत्वादि मरणादिकं पश्यति आत्मा निरीक्षते, ततः आत्मा देहाद्विलक्षणः, अतः अजः न जायते, तथा अमरः न म्रियते, हि। यस्माद्देहस्यैव जन्मादयो न त्वात्मन इति सिद्धम्॥ ४॥

## हिन्दी अनुवाद

## श्रीशुकदेवजी का अन्तिम उपदेश

श्रीशुकदेव जी कहते हैं—प्रिय परीक्षित्! इस श्रीमद्भागवत महापुराण में बार-बार और सर्वत्र विश्वात्मा भगवान् श्रीहरि का ही सङ्कीर्तन हुआ है। ब्रह्मा और रुद्र भी श्रीहरि से पृथक् नहीं हैं, उन्हीं की प्रसाद-लीला और क्रोध-लीला की अभिव्यक्ति हैं॥ १॥ हे राजन्! अब तुम यह पशुओं की-सी अविवेकमूलक धारणा छोड़ दो कि मैं मरूँगा; जैसे शरीर पहले नहीं था और अब पैदा हुआ और फिर नष्ट हो जायेगा, वैसे ही तुम भी पहले नहीं थे, तुम्हारा जन्म हुआ, तुम मर जाओगे-यह बात नहीं है॥ २॥ जैसे बीज से अङ्कुर और अङ्कुर से बीज की उत्पत्ति होती है, वैसे ही एक देह से दूसरे देह की और दूसरे देह से तीसरे की उत्पत्ति होती है। किन्तु तुम न तो किसी से उत्पन्न हुए हो और न तो आगे पुत्र-पौत्रादिकों के शरीर के रूप में उत्पन्न होओगे। अजी, जैसे आग लकड़ी से सर्वथा अलग रहती है—लकड़ी की उत्पत्ति और विनाश से सर्वथा परे, वैसे ही तुम भी शरीर आदि से सर्वथा अलग हो॥ ३॥ स्वप्नावस्था में ऐसा मालूम होता है कि मेरा सिर कट गया है और मैं मर गया हूँ, मुझे लोग श्मशान में जला रहे हैं; परन्तु ये सब शरीर की ही अवस्थाएँ दीखती हैं, आत्मा की नहीं। देखने वाला तो उन अवस्थाओं से सर्वथा परे, जन्म और मृत्यु से रहित, शुद्ध-बुद्ध परमतत्त्वस्वरूप है॥ ४॥

घटे भिन्ने यथाऽऽकाश आकाशः स्याद् यथा पुरा। एवं देहे मृते जीवो ब्रह्म सम्पद्यते पुनः॥ ५॥

मनः सृजति वै देहान् गुणान् कर्माणि चात्मनः। तन्मनः सृजते माया ततो जीवस्य संसृतिः॥ ६॥

स्नेहाधिष्ठानवर्त्यग्निसंयोगो यावदीयते।
ततो दीपस्य दीपत्वमेवं देहकृतो भवः। रजःसत्त्वतमोवृत्त्या जायतेऽथ विनश्यति॥ ७॥

न तत्रात्मा स्वयंज्योतिर्यो व्यक्ताव्यक्तयोः परः। आकाश इव चाधारो ध्रुवोऽनन्तोपमस्ततः॥ ८॥

### कृष्णप्रिया व्याख्या

अन्वयः—घटे भिन्ने (सति) यथा आकाशः (घटाकाशः) यथा पुरा (तथा) आकाशः स्यात् एवं देहे मृते (सति) जीवः पुनः ब्रह्म सम्पद्यते॥ ५॥ मनः आत्मनः देहान् गुणान् कर्माणि च सृजति तत् मनः माया सृजते ततः जीवस्य संसृतिः॥ ६॥ यावत् स्नेहाधिष्ठानवर्त्यग्निसंयोगः ततः दीपस्य दीपत्वम् एवं देहकृतः भवः रजःसत्त्वतमोवृत्त्या जायते अथ विनश्यति॥ ७॥ तत्र आत्मा न (न जायते न नश्यति) यः व्यक्ताव्यक्तयोः परः स्वयंज्योतिः आकाशः इव आधारः ध्रुवः अनन्तोपमः ततः (व्याप्तः)॥ ८॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

यस्माद्देहोपाधिकोऽयमात्मनो जन्मादिसंसारभ्रमस्तस्मादुपाधिनिवृत्तौ मुच्यत इति सदृष्टांतमाह। घट इति। यथा पुरा घटोपाधेः पूर्वमिव पुनर्घटे भिन्ने तदंतर्वर्त्यवकाश आकाश एव स्यात्तथा। एवं देहे मृते तत्त्वज्ञानेन लीने सति॥ ५॥ ज्ञानेन लयं भावयितुं मायाकृतमात्मनो देहाद्युपाधिसंबंधप्रकारमाह। मन इति। मन आत्मनो देहादीन्सृजति। तच्च मनो माया सृजति। ततो मायाद्युपाधिसमुदायाज्जीवस्य संसृतिर्न स्वतः॥ ६॥ यस्मादुपाधिनिबंधनो जीवस्य संसारोऽतस्तन्नाशे जीवत्वं गच्छतीत्येतदेव सदृष्टांतमाह सार्धेन। स्नेहेति। दीपस्य ज्योतिषो दीपत्वं ज्वालारूपः परिणामः। तत्र तैलस्थानीयं कर्म। तदधिष्ठानस्थानीयं मनः। वर्तिस्थानीयो देहः। अग्निसंयोगस्थानीयश्चैतन्याध्यासः। दीपस्थानीयः संसार इति योज्यम्। देहकृतो देहनिबंधनः। यद्वा देहकृतो मनसो न त्वात्मनः॥ ७॥ अतो दीपवत्संसार एव नश्यति न त्वात्मा ज्योतिर्वदित्याह। नेति। ननु तत्र प्रतीयमान आत्मा कुत इत्यत आह। य इति। व्यक्ताव्यक्तयोः स्थूलसूक्ष्मदेहयोः परोऽन्यः। यतः स्वयंज्योतिः। परत्वं प्रपंचयति। आकाश इवेति। आधारो देहादेः प्रपंचस्य। ध्रुवो निर्विकारः। नास्त्यंत उपमा च यस्य सोऽनंतोपमः। ततो विभुः॥ ८॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यथा पुरा तन्नाशात्पूर्वमप्याकाश एव, एवं जीवो देहे मृते निरुपाधिर्यथा पुनर्ब्रह्म संपद्यते, तथा पुरापि "ब्रह्मैव सन्ब्रह्माप्येति" इति श्रुतेः। तदप्यात्मनो लिंगशरीराध्यासो दुर्जरो यः सोऽयं ज्ञाने सति निवर्तते, इहैक्यात्मवादिनां दृष्टान्तमाह घट इति। भिन्ने विदीर्णे। यथा पुरेति–घटोत्पत्तेः पूर्वं यथा महानाकाशस्तथा घटे भग्नेपीत्यर्थः। एवं देहे मृते तत्त्वज्ञानेन

१. गुणकर्माणि। २. तावद्दीप०।

लीने सति। अप्रकटार्थमाह–यथेति। ननु देहात्पृथग्भूतो यथा जीवात्मा तथा परमात्मापि, तावुभावपि देहावृतौ दृश्येते, लिङ्गे भग्ने सत्युभावपि मुक्तौ स्यातामिति कथं नोच्यते। अत्र परमात्मन आवरणं कालत्रयेऽपि नास्तीति सदृष्टान्तमाह–घट इति, यथा पुरेति। घटे वर्तमानेऽपि आकाशः आकाश एवानावृतस्तथा घटे भग्नेपीत्यर्थः। आकाशस्य घटान्तर्बहिर्मध्येपि वर्तमानत्वप्रदाकाशं घटः कथमावृणोत्विति भावः। एवं देहेऽमृते वर्तमानेपि अजीवो जीवभिन्नः परमात्मा ब्रह्म सर्वव्यापकः सन्नेव संपद्यते विराजते॥ ५॥ स्वाप्नदेहवज्जागरेऽप्यात्मनो नानादेहान् गुणान्कर्माणि च मन एव संकल्पात्मकं सृजति कल्पयति। तन्मनः स्वाप्नसंकल्पादिवन्माया सृजति, ततो जीवस्य संसृतिर्मायैवेत्यर्थः। यद्वा—मनः पूर्वकर्मप्रेरितं सद्गुणान्सत्त्वादीन्सृजति पर्यायेण विभावयति, ततो गुणमयानि विविधानि कर्माणि सृजति, ततः कर्मानुरूपान् देहान्सृजतीति भावः। ज्ञानेन लयं संभावयितुं माया-कृतमात्मनो देहाद्युपाधिसम्बन्धप्रकारमाह–मन आत्मनो देहादीन्सृजति। तदुक्तम्–"यतो यतो धावति दैवचोदितं मनो विकारात्मकम्" इत्यादि। ततो मनो माया सृजति। ततो मायाद्युपाधिसमुदायात्॥ ६॥ यस्माद्युपाधिनिबंधनो जीवस्य संसारोऽतस्तन्नाशे नश्यतीति सदृष्टान्तमाह–ततस्तावदित्यर्थः। तत्र दार्ष्टान्तिके। तदधिष्ठानस्थानीयं तैलाधिष्ठानशरावस्थानीयम्। देहनिबन्धनो देहाध्यासहेतुकः। देहाध्यासोऽपि मनस्तादात्म्येनैवेत्याह–यद्वेति। देहकृतो देहसंबन्धकृतः। भवः संसारः॥ ७॥ यतो दीपस्थानीयः संसारोऽतो हेतोः। तत्र देहे। अतो देहद्वयभिन्नत्वात्। आत्माऽनाशे हेतुः–य इति। य आत्मा। यद्वा–अनंतेनाकाशेनोपमीयत इत्यनन्तोपमः, आकाशो यथाऽसंगस्तथेत्यर्थः। 'अनन्तं सुरवर्त्म खम्' इत्यमरः। ततो व्यापकः, तनोतेः क्तः॥ ८॥

## अन्वितार्थप्रकाशिका

घट इति। यथा घटे भिन्ने सति तदन्तर्वर्त्यवकाशः यथा पुरा घटोपाधेः पूर्वं यथा तथा आकाशः स्यात्। एवमात्मज्ञानेन देहे मृते लीने सति जीवः पुनर्ब्रह्म सम्पद्यते॥ ५॥ मन इति। मनः आत्मनो देहान् गुणान् कर्माणि च सृजति तच्च मनो माया सृजति ततो मायाद्युपाधिसमुदायाज्जीवस्य संसृतिर्भवति न स्वतः॥ ६॥ स्नेहेति सार्द्धम्। यावत्स्नेहः तैलादि अधिष्ठानं पात्रं वर्त्तिरग्निरेतेषां संयोग ईयते प्रतीयते। ततः तावत् दीपस्य ज्योतिषः दीपत्वं दीपज्वालारूप परिणामः एवं देहकृतो देहाद्यध्यासनिबन्धन एव भवः। तत्र तैलस्थानीयं कर्म तदधिष्ठानस्थानीयं मनः वर्त्तिस्थानीयो देहः अग्निसंयोगस्थानीयश्चैतन्याध्यासः दीपस्थानीयः संसार इत्यूह्यम्। अतो दीपवत्संसार एव रजआदिगुणवृत्त्या जायते विनश्यति च॥ ७॥ न त्वात्मा जायते नश्यति वा ज्योतिर्वत् इत्याह–नेति। एवं संसारो जायते नश्यति। तत्र स्थितोऽप्यात्मा न जायते न च नश्यति। य आत्मा व्यक्ताव्यक्तयोः स्थूलसूक्ष्मदेहयोः परः अन्यः स्वयंज्योतिः आकाश इव देहादेराधारः ध्रुवो निर्विकारः नास्त्यन्त उपमा च यस्य सोऽनन्तोपमः ततः व्याप्तः॥ ८॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

यथा पुरा स्यात् निरुपाधिकः स्यात् एवं जीवो ब्रह्म सम्पद्यते परिशुद्धावस्थो भवतीत्यर्थः। ब्रह्मशब्दोऽत्र मुक्तात्मवाची 'ब्रह्मभूयाय कल्पते, ब्रह्मणो हि प्रतिष्ठाहम्' इति प्रयोगात्॥ ५॥ मनः सृजतीति मनसो देहादिसृष्टिहेतुत्वं पुण्यपापद्वारेत्याह–कर्माणि चेति। माया प्रकृतिः॥ ६॥ एवं देहकृतो भव इति कर्मारब्धदेहेन्द्रियावधिको भवति इत्यर्थः। रजः सत्त्वं तमोवृत्त्या गुणत्रयसंसर्गादात्मनो जन्ममरणादिः स्वतस्तु तद्विलक्षणो नित्य इत्यर्थः॥ ७॥ परो जीवादन्यः॥ ८॥

## श्रीमद्वीरराघवव्याख्या

अस्त्वेवं ततः किमित्यत्रैवंविधविवेकयुक्तस्य मुक्तिरेव स्यादित्याह–घट इति। यथाऽऽकाशः घटोपहिताकाशः घटे भिन्ने सति यथापुराऽऽकाशः स्यात्पूर्ववन्निरौपाधिक आकाशः स्यादेवं जीवोपि देहं मृते परमात्मोपासनया निश्शेषं प्रकृतिसम्बन्धविगमे सति ब्रह्मसम्पद्यते संशुद्धावस्थो भवतीत्यर्थः। ब्रह्मशब्दोऽत्र मुक्तात्मवाची 'ब्रह्मभूयाय कल्पते, ब्रह्मणोहि प्रतिष्ठाहम्' इति प्रयोगात्॥ ५॥ कथमनादेर्बन्धस्य निवृत्तिरित्यत्रोपाधिकत्वादित्यमिप्रेत्य तमुपपादयति–मन इति। गुणान् सत्त्वादिगुणमयानात्मनो जीवस्य देहान् सृजति मनसो देहसृष्टिहेतुत्वं पुण्यपापद्वारेत्याह, कर्माणीति। तन्मनः कर्म माया सृजति ततो माया मनो देहकर्मभ्यः जीवस्य संसृतिर्भवति॥ ६॥ एतदेव सदृष्टान्तमुपपादयति। सार्द्धेन स्नेहेति। दीपस्य ज्योतिषः दीपत्वं ज्वालारूपपरिणामः तत्र तैलस्थानीयं कर्म तदधिष्ठानस्थानीयं मनः वर्त्तिस्थानीयो देहः अग्निसंयोस्थानीयो देहात्माभिमानः दीपस्थानीयः संसारः इति योज्यम्। एवम्भवः संसारः देहकृतः कर्मारब्धदेहेन्द्रियावधिभोग इत्यर्थः। अतो रजरसत्त्वतमोवृत्या गुणत्रयसंसर्गादुपाधेरात्मनो जन्ममरणादि स्वतस्तु तद्रहितोऽस्तीत्यर्थः। तदेवाह नेति। तत्र देहे जायमाने नश्यति च सत्यात्मा जायते न नश्यति च तत्र हेतुः व्यक्ताव्यक्तयोः परः व्यक्तं शरीरमव्यक्तं मूलप्रकृतिः ताभ्यां परोऽन्यः तत्र हेतुः स्वयंज्योतिः स्वयम्प्रकाशः विजातीयत्वादिति भावः॥ ७–८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अधुना प्रसङ्गात्सामान्यविशेषमरणावस्थामाह–घट इति। घटे भिन्ने कपालीभूते घटाकारपरिमितो घटाकाशो नीलिमाकारबहिस्थाकाशः स्यात्पुरा यथा तथेत्यर्थः। एवं देहे मृते सति जीवः संसारी ब्रह्मतत्त्वं यथा कर्मस्वर्गनरकादिकं सम्पद्यते घटान्तस्थमहाकाशैकदेशे बहिस्थव्याप्ताकाशो भवति यथा तथा पुरा जीवः प्राणधारकः परमात्मान्तर्यामी ब्रह्मव्याप्तस्वरूपमाप्नोति घटान्तर्गतभूताकाशः पुरा यथा महाकाशाधीनः पश्चादपि तदधीनतामापद्यते तथा चरमदेहान्तलिङ्गशरीरे मृते नष्टे जीवो मुक्तियोग्यः। आत्मा परं ज्योतिः सम्पद्यते अयमर्थो 'महाकाशो बहिःस्थश्च घटाद्यन्तस्थ एव च' इति तत्त्वसंहितावचनादवगन्तव्य इति ब्रह्ममोक्षं पुनरावृत्तिशून्यं वा॥ ५॥ प्रकारान्तरेण संसारावस्थामाह–मन इति। आत्मनो जीवस्य मनः सुरनरादिदेहान्गुणान्कर्माणि आवृत्तिहेतुभूतानि पुण्यपापलक्षणानि च सृजति आपादयति शब्दादिविषयासक्तिहेतुभूतानि वा एवम्विधं मनः सत् किं तत्राह, तदिति। माया जडप्रकृतिः तन्मन उत्पादयति सृजत इत्यात्मनेपदप्रयोगेण चिन्मिश्रं मन इति सूचयति ततो जडमनसो जीवस्य संसारो वर्तत इति शेषः॥ ६॥ कियन्तं कालं जन्मात्मकः संसार इति तत्राह–स्नेहेति। यावद्यावन्तं कालं तैलादिस्नेहद्रव्याधिष्ठानस्थितवर्त्यग्निसंयोगस्तावत्तावन्तं कालं दीपस्य दीपत्वं प्रकाशसामर्थ्यम् एवं देहकृतो देहादिकर्मनिमित्तकृतो भव इत्यन्वयः। तैलाद्यभावेन यथा दीपादेः शून्यता एवं जीवस्यापि देहाद्यभावेन शून्यत्वमायातमत्राह, रज इति। मनसो रज आदिगुणोपजीवनेन देहो। जायते (१) इत्यादि॥७॥ तत्र तस्यामवस्थायामपि योऽव्यक्ताव्यक्तयोर्देहप्रकृत्योः परो विलक्षणः स आत्मा जीवो न जायते न वर्द्धते न नश्यति कुतः? स्वयञ्ज्योतिर्ज्ञानात्मा इदानीमुपास्तिप्रकारं विधत्ते, आकाश इति। आकाशवत्ततो व्याप्तो ध्रुवाधारो नित्याधारो ध्रुवो नित्यश्च यः नानामितः तत्तद्वस्तुपरिमाणपरिमितिश्च॥ ८॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

देह इति देहद्वयम् इत्यर्थः। ब्रह्मतत्त्वं सम्पद्यते यथायथं प्राप्नोति॥ ५॥ मायादीनां स्रष्टृत्वं यत् किञ्चित्तद्धेतुत्वात्॥ ६॥ दीपस्य ज्योतिषो दीपत्वं स्नेहाद्यधिष्ठातृत्वेन विकारित्वमित्यर्थः। ततस्तस्मात् स्वयञ्ज्योतिरादिरूपत्वादनन्तोपमः परमात्मसदृशः 'सदृशौ सखायौ' इति श्रुतेः॥ ७-८॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तदप्यात्मनो लिङ्गशरीराध्यासो दुर्जरो यः ज्ञाने सति निवर्त्तेत इत्यत्रैकात्मवादिनां दृष्टान्तमाह–घट इति। भिन्ने विदीर्णे यथापुरेति घटोत्पत्तेः पूर्वं यथा महानेवाकाशस्तथैव घटे भग्नेऽपीत्यर्थः। एवं देहे मृते ज्ञानेन लीने सति अप्रकटोर्थो यथा जीवात्मा तथा परमात्मापि तावुभावपि देहावृत्तौ दृश्येते लिङ्गभङ्गे सत्युभावपि मुक्तौ स्यातामिति कथं नोच्यते तत्र परमात्मन आवरणं कालत्रयेपि नास्तीति सदृष्टान्तमाह, घट इति। यथा पुरेति। घटं वर्त्तमानेऽपि आकाश एव यथा अनावृतस्तथैव घटे भग्नेपीत्यर्थः। आकाशस्य घटान्तर्वहिर्मध्येपि वर्तमानत्वादाकाशं घटः कथमावृणोत्विति भावः। एवं देहे अमृते वर्त्तमानेपि अजीवो जीवभिन्नः परमात्मा ब्रह्म सर्वव्यापकः सन्नेव सम्पद्येते विराजते॥ ५॥ ज्ञानेन लयं सम्भावयितुं मायाकृतमात्मनो देहाद्युपाधिसम्बन्धप्रकारमाह–मन आत्मनो देहादीन् सृजति यदुक्तं 'यतो यतो धावति दैवचोदितं मनोविकारात्मकम्' इत्यादि तच्च मनो माया सृजति ततो मायाद्युपाधिसमुदायात्॥ ६॥ एतदेव सदृष्टान्तमाह–सार्द्धेन स्नेहेति। दीपस्य ज्योतिषः दीपत्वं ज्वालारूपः परिणामः तत्र तैलस्थानीयं कर्म तदधिष्ठानस्थानीयं मनः वर्त्तिस्थानीयो देहः अग्निसंयोगस्थानीयश्चैतन्याध्यासः दीपस्थानीयः संसारः इति योज्यं देहकृतो देहसंयोगनिबन्धनोऽयं भवः संसारः॥ ७॥ अतो दीपवत् संसार एव नश्यति न त्वात्मा ज्योतिर्वदित्याह–नेति। ननु तत्र प्रतीयमान आत्मा कुतः? इत्यत आह य इति। व्यक्ताव्यक्तयोः परः स्थूलसूक्ष्मदेहाभ्यामन्यः यतः स्वञ्ज्योतिः त एव हेतोः आधारो देहस्य प्रपञ्चस्य ध्रुवो निर्विकारः नास्त्यंतः उपमा च यस्य सोऽनन्तोपमः पक्षे यः खलु व्यक्ताव्यक्तयोः कार्यकारणयोः परः कारणरूपः परमात्मा स तु आकाश इव सर्वाधार इत्यादि॥ ८॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एवंभूतात्मानात्मविवेकेन भागवतः प्रथमं निर्वन्धनं स्वरूपं प्राप्नोति पुनः ब्रह्मसम्पद्यतेत्याह–घट इति। घटे भिन्ने सति तदावृतः आकाशः यथा पुरा अनावृतः आकाशः तथैव स्यात् एवं देहे मृते अत्र देहशब्देन तत्कारणभूता प्रकृतिर्गृह्यते तस्यामुपरतायामित्यर्थः—

"यद्येषोपरता देवी माया वैशारदी मतिः। सम्पन्न एवेति विदुर्महिम्नि स्वे महीयते"॥

इत्युक्तत्वात् जीवः स्यात् निरावरणः स्यात् पुनः स एव निर्बन्धनो जीवः ब्रह्म ब्रह्मसाम्यं प्राप्नोति "निरञ्जनः परमं साम्यमुपैति" इति श्रुतेः ॥ ५ ॥ प्रकृतौ उपरतायां स्वस्वरूपं सम्पद्येत इत्युक्तं तत्र प्रकृतिकृत एव जीवस्य संसार इति हेतुमाह—मन इति । यन्मनः माया एव महदादिद्वारा सृजति तदेव चेत्रज्ञावरकं गुणान् सङ्कल्परूपान् कर्माणि देहांश्च सृजति—

"यतो यतो धावति दैवचोदितं मनो विकारात्मकपञ्चसु पृथक् । गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते" ॥

इत्युक्तत्वात् एवं ततो देहशब्दन गृहीतायाः प्रकृतेनैव जीवस्य संसृतिः ॥ ६ ॥ एतदेव दृष्टान्तेनाह—स्नेहेति । स्नेहादीनां संयोगो यावदीयते तावदेव दीपस्य दीपत्वं संयोगापगमे तु तदभाव एव एवं देहकृतो भवः कार्यकारणरूपः प्रकृतिकृतो भवजन्म-मरणप्रवाहरूपः संसारः ॥ ७ ॥ स च देहः प्रकृतिरेव मनुष्यदेवतिर्यगादिशरीराकारेण रजःसत्त्वतमोवृत्त्या जायते विनश्यति च मायामोहितो जीवस्त्वज्ञानात् जातोस्मि मरिष्ये इति मन्यते वस्तुतस्तु यः तत्र मनुष्यादिशरीरे आत्मा जीवः स न जायते न विनश्यति मनुष्यादिदेहस्तत्प्रकाश्यः स स्वयञ्ज्योतिः यतो व्यक्ताव्यक्तयोः कार्यकारणयोः शरीरप्रकृत्योः परः ताभ्यामन्यः आकाश इव अदृश्यत्वात् आधारः देहादिधारकत्वात् ध्रुवो नित्यस्ततो हेतोरनन्त आद्यन्तशून्यः अव्ययः अविकारी ॥ ८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

यस्माद्देहोपाधिकोऽयमात्मनो जन्मादिसंसारभ्रमस्तस्मादुपाधिनिवृत्तौ मुच्यत इति सदृष्टान्तमाह—घट इति । घटे भिन्ने सति तदन्तर्वर्त्याकाशः यथा पुरा घटोत्पत्तेः पूर्वं यथाऽऽसीत् तथा स्यात् । एवमात्मज्ञानेन देहे मृते लीने सति जीवः पुनर्ब्रह्म सम्पद्यते ॥ ५ ॥ ज्ञानेन लयं सम्भावयितुं मायाकृतमात्मनो देहाद्युपाधिसम्बन्धप्रकारमाह—मन इति । मन आत्मनो देहादीन् सृजति । तच्च मनो माया सृजति ततो मायाद्युपाधिसमुदायाज्जीवस्य संसृतिर्भवति न स्वतः ॥ ६ ॥ एतदेव सदृष्टान्तमाह—स्नेहेति सार्द्धेन । ईयते प्रतीयते । ततः तावत् दीपस्य ज्योतिषः दीपज्वालारूपः परिणामः । एवं देहकृतो देहाद्यध्यासनिबन्धन एव भवः । तत्र तैलस्थानीयं कर्म । तदधिष्ठानस्थानीयं मनः । वर्त्तिस्थानीयो देहः । अग्निसंयोगस्थानीयश्चैतन्याध्यासः । दीपस्थानीयः संसार इत्यूह्यम् ॥ ७ ॥ अतो दीपवत्संसार एव रागादिगुणवृत्त्या जायते नश्यति च न तत्र स्थितोऽप्यात्मा । तत्र हेतुमाह—व्यक्ता-व्यक्तयोः स्थूलसूक्ष्मदेहयोः परः अन्यः स्वयञ्ज्योतिः । परत्वमेव प्रपञ्चयति—आकाश इव देहादेराधारः ध्रुवो निर्विकारः । नास्त्यन्त उपमा च यस्य सोऽनन्तोपमः ततः व्याप्तः ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अस्त्वेवं ततः किमित्यत्रैवंविधविवेकयुक्तस्य मुक्तिरेव स्यादित्याह । घट इति । यथा आकाशः घटोपहिताकाशः घटे भिन्ने सति, अपुरा घटाकाशाख्यप्राक्तनावस्थावर्जित इत्यर्थः । यथा यथार्थः आकाशः स्यात् निरुपाधिक आकाशः स्यादित्यर्थः । एवं जीवोऽपि देहे मृते सति, पुनः परमात्मोपासनया निरवशेषप्रकृतिसंबन्धिविगमे सति त्वित्यर्थः । पुनःशब्दोऽत्र रघुवंशचतुर्थसर्गे 'न पुनः प्राप तच्छ्रियम्' एतद्व्याख्याने मल्लिनाथः । तस्य रघोः श्रियं पुनः शोभां तु न प्रापेत्यत्रेव त्वर्थः । ब्रह्म संपद्यते ब्रह्म-शब्दोऽत्र मुक्तात्मवाची 'ब्रह्मभूयाय कल्पते' 'ब्रह्मणो हि प्रतिष्ठाहम्' इत्यादिप्रयोगदर्शनात् । अत्र देहशब्देन हि देहत्रिकं बोध्यं सामान्येन विशेषोपादानस्य न्यायसिद्धत्वात् । अत्र स्थूलदेहमरणमायुःकालभोगान्ते प्रसिद्धमेव, सूक्ष्मदेहलिङ्गदेहयोः पर्यायत्वात्त-न्मरणं नाम लिङ्गभङ्गः स च ऋषभदेवेन पञ्चमे पुत्रान् प्रति 'हंसे गुरौ मयि भक्त्यानुवृत्त्या' इत्यादिपञ्चविंशतिसाधनैः लिङ्गं व्यपोहेत् कुशलोऽहमाख्यम्' इत्यनेनोक्तः । कारणशरीरं तस्य नाशस्तु निजात्मनो ब्रह्मभावनापूर्वं साक्षाद्भगवद्ध्यानेनैव, ततस्त्वं निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणं विभाव्य त्वदृष्टसाक्षाद्भगवतस्तत्र सम्यक् ध्यानं कुरु तेन चिञ्चाबीजत्वमग्नितापेन यथा विनाशं प्राप्नोति, तथा त्वत्कारणदेहो नाशं प्राप्स्यतीति मरणभयचिंतां त्यक्त्वोक्तविधो भवेति भावः । भगवद्ध्यानेन कारणदेहनाश उक्तो हरिवाक्यसुधासिन्धावष्टाधिकशततमे तरङ्गे । तद्यथा—'वपूंषि त्रीणि जीवस्य स्थूलं सूक्ष्मं च कारणम् । जीवस्य बन्धानान्येव तानि मायामयानि वै । कारणं न पृथक् जीवोद्धतुं शक्यं मुमुक्षुभिः । यदा मुमुक्षुः सत्सङ्गं कृत्वा साक्षाद्धरिं हृदि । दृढं निश्चित्य रहसि प्रेम्णा ध्यायति निश्चलः । तदा तु तत्प्रतापेन भवत्यात्मा ततः पृथक् । चिञ्चाबीजस्य त्वगर्भैकत्वेन स्थितावपि । अग्नितापेन भिन्नौ स्तो यथा तेन तथैव तौ । नास्ति कारणमायाया जीवस्यास्य पृथक्स्थितौ । एवं विना ह्युपायोऽन्य इति जानीत निश्चितम्' इति ॥ ५ ॥ कथमनादेः कारणशरीरात्मकबन्धस्य निवृत्तिरिति चेदौपाधिकत्वादित्यभिप्रेत्य तदुपपादयति । मन इति । मनः कर्तृ, गुणान् सत्त्वादिगुणमयान् आत्मनो जीवस्य देहान् कर्माणि च सृजति, वै । तत् मनः कर्म, माया सृजति, ततः मायामनोदेहकर्म-समुदायात् जीवस्य संसृतिः भवति, न वस्तुतः ॥ ६ ॥ एतदेव सदृष्टान्तमाह सार्द्धेन । स्नेहेति । दीपस्य ज्योतिषः दीपत्वं ज्वालारूपः परिणामः, यावत् स्नेहश्च अधिष्ठानं स्नेहाधारपात्रं वर्तिर्दशा च अग्निश्च तेषां संयोगः संबन्धः ईयते, ततस्तावत् भवतीत्यर्थः । तत्र

तैलस्थानीयं कर्म, तदधिष्ठानस्थानीयं मनः, वर्त्तिस्थानीयो देहः अग्निस्थानीयो देहात्माभिमानः, दीपस्थानीयः संसारः। एवं देहकृतः देहोपलक्षितकर्मादिचतुष्टयकृतः, भवः संसारः ॥ ७ ॥ अतो दीपवत् संसार एव नश्यति न त्वात्मा ज्योतिर्वदित्याह। रज इति। रजःसत्त्वतमोवृत्त्या देहः जायते, अथ विनश्यति च, तत्र यः व्यक्तं शरीरं च अव्यक्तं मूलप्रकृतिश्च तयोः ताभ्यां परः स्वयंज्योतिः स्वयंप्रकाशः विजातीयत्वादिति भावः। आत्मा न जायते न विनश्यति चेत्यर्थः ॥ ८ ॥

## हिन्दी अनुवाद

जैसे घड़ा फूट जाने पर आकाश पहले की ही भाँति अखण्ड रहता है, परन्तु घटाकाशता की निवृत्ति हो जाने से लोगों को ऐसा प्रतीत होता है कि वह महाकाश से मिल गया है—वास्तव में तो वह मिला हुआ था ही, वैसे ही देहपात हो जानेपर ऐसा मालूम पड़ता है मानो जीव ब्रह्म हो गया। वास्तव में तो वह ब्रह्म था ही, उनकी अब्रह्मता तो प्रतीतिमात्र थी ॥ ५ ॥ मन ही आत्मा के लिये शरीर, विषय और कर्मों की कल्पना कर लेता है; और उस मनकी सृष्टि करती है माया (अविद्या)। वास्तव में माया ही जीव के संसार-चक्र में पड़ने का कारण है ॥ ६ ॥ जबतक तेल, तेल रखने का पात्र, बत्ती और आग का संयोग रहता है, तभी तक दीपक में दीपकपना है; वैसे ही उनके ही समान जबतक आत्मा का कर्म, मन, शरीर और इनमें रहने वाले चैतन्याध्यास के साथ सम्बन्ध रहता है तभीतक उसे जन्म-मृत्यु के चक्र संसार में भटकना पड़ता है और रजोगुण, सत्त्वगुण तथा तमोगुण की वृत्तियों से उसे उत्पन्न, स्थित एवं विनष्ट होना पड़ता है ॥ ७ ॥ परन्तु जैसे दीपक के बुझ जाने से तत्त्वरूप तेज का विनाश नहीं होता, वैसे ही संसार का नाश होने पर भी स्वयंप्रकाश आत्मा का नाश नहीं होता। क्यों कि वह कार्य और कारण, व्यक्त और अव्यक्त सबसे परे है, वह आकाश के समान सबका आधार है, नित्य और निश्चल है, वह अनन्त है। सचमुच आत्मा की उपमा आत्मा ही है ॥ ८ ॥

**एवमात्मानमात्मस्थमात्मनैवामृश प्रभो। बुद्ध्यानुमानगर्भिण्या वासुदेवानुचिन्तया ॥ ९ ॥**

**चोदितो विप्रवाक्येन न त्वां धक्ष्यति तक्षकः। मृत्यवो नोपधक्ष्यन्ति मृत्यूनां मृत्युमीश्वरम् ॥ १० ॥**

**अहं ब्रह्म परं धाम ब्रह्माहं परमं पदम्। एवं समीक्षन्नात्मानमात्मन्याधाय निष्कले ॥ ११ ॥**

**दशन्तं तक्षकं पादे लेलिहानं विषाननैः। न द्रक्ष्यसि शरीरं च विश्वं च पृथगात्मनः ॥ १२ ॥**

## कृष्णप्रिया व्याख्या

अन्वयः—प्रभो एवम् अनुमानगर्भिण्या वासुदेवानुचिन्तया बुद्ध्या एवम् आत्मस्थम् आत्मानम् आत्मना एव आमृश ॥९॥ विप्रवाक्येन चोदितः तक्षकः त्वां न धक्ष्यति मृत्यवः मृत्यूनां मृत्युम् ईश्वरं न उपधक्ष्यन्ति ॥ १० ॥ अहं ब्रह्म परं धाम ब्रह्म अहं परं पदम् एवं निष्कले आत्मनि आत्मानम् आधाय समीक्षन् विषाननैः लेलिहानं पादे दशन्तं तक्षकं शरीरं विश्वं च आत्मनः पृथक् न द्रक्ष्यसि ॥ ११-१२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अतस्त्वमेवं चिंतयेत्याह। एवमिति। आत्मस्थं देहाद्युपाधिस्थितम्। आमृश विचारय। अनुमानगर्भिण्या द्रष्टृदृश्यान्वयव्यतिरेकयुक्तया ॥ ९ ॥ एवं च सति त्वां तक्षको न दहेदित्याह। चोदित इति। तत्र हेतवः। मृत्यव इति मृत्युहेतवः ॥ १० ॥ विमर्शप्रकारं दर्शयंस्तक्षकादर्शनं दर्शयति द्वाभ्याम्। योऽहं स ब्रह्मैव यद् ब्रह्म तदहमेवेति समीक्षन्। तत्राहं ब्रह्मेति भावनया जीवस्य शोकादिनिवृत्तिः ब्रह्माहमिति भावनया च ब्रह्मणः पारोक्ष्यनिवृत्तिर्भवतीति व्यतिहारो दर्शितः। निष्कले निरुपाधौ। आत्मनि ब्रह्मणि ॥ ११ ॥ विषयुक्तैराननैर्दशंतं ग्रसंतं तक्षकम्। लेलिहानं सर्पम्। यद्वा लेलिहानं जिह्वाभिरोष्ठप्रांतान्सनिष्पेषमास्वादयंतम्। आत्मनः पृथक् ॥ १२ ॥

## श्रीगंगाधरकृतो भावार्थदीपिकाप्रकाशः

यत आत्मा देहादेः पृथगतो हेतोः। द्रष्टृदृश्ययोरात्मदेहयोरन्वयव्यतिरेकाभ्यां युक्तया। तथाहि—जीवश्चेतनो द्रष्टृत्वात्, परमात्मवत्, यश्चेतनो न भवति स द्रष्टापि न भवति, यथा घटः। एवं देहो जडो दृश्यत्वात्, घटवत्, यो दृश्यो न भवति स जडोऽपि न भवति, यथात्मेति। किञ्च—आत्मा स्थायी, अवस्थात्रयसाक्षित्वात्, परमात्मवत् देहो विनाशी आद्यन्तयोरविद्यमान-

त्वात्, शुक्तिरजतवत्, इत्याद्यन्वयव्यतिरेकानुमानसहकृतया बुद्ध्या। एवं वक्ष्यमाणरीत्या। वासुदेवस्यानुचिन्ता तात्पर्येणावगतिर्यस्यां बुद्ध्यां तया। यद्वा–बुद्ध्या श्रवणजबोधेनानुमानगर्भिण्या मननसहकृतेन वसन्त्यस्मिन्निति वासु अधिष्ठानं परं ब्रह्म, देवयतीति देवः सर्वावभासकः साक्षिचिदात्मा एव तदनुचिन्तया निदिध्यासनेनावगतस्वरूपं त्वां विप्रवाक्येन चोदितस्तक्षको न धक्ष्यति न भस्मीकरिष्यति। न केवलं तक्षक एव त्वां न धक्ष्यत्यपि तु मृत्युहेतवोऽन्येऽपि सिंहव्याघ्ररोगादयो नोपधक्ष्यन्ति। तत्र हेतुः—मृत्यूनामपि तेषामपि मृत्युम् 'मारयन्मृत्युनांतकम्' इत्युक्तेः। तत्रापि हेतुः—ईश्वरं ज्ञानबलेनावाप्तेश्वरभावम्। अत्र हेतुगर्भितविशेषणद्वयं प्रतीयते। स्वामिचरणैरत्र हेतव इति बहुत्वं तु मृत्यवस्त्वां यतो नोपधक्ष्यन्ति इत्यपि हेतुत्वेनैवाभिप्रेतं देहभिन्नत्वात्। बुद्ध्यादिप्रवर्तकत्वेन यदात्मनोऽनुमानं तदेव गर्भे यस्य तद्युक्तया तद्व्यवसायवत्या, यथा बुद्ध्यादीनि करणानि कर्तृप्रयोज्यानि करणत्वाद्वास्यादिवदिति कर्ता चात्मैव स च वासुदेव एव, सर्वत्र लक्ष्यः। सकलमिदमहञ्च वासुदेव इत्येवानुचिन्ता यस्यां तादृशया॥ ९॥ त्वामात्मानं देहात्पृथग्भूतम्। तक्षकस्य का वार्ता स्वयं मृत्यवोऽपि मूर्तिमन्तः नहि वासुदेवरूपं त्वां देहं तक्षकं च धक्ष्यन्ति स्वस्य स्वयं हननायोगात्, ब्रह्मशापादीनां व्यर्थप्रायत्वादिति भावः॥ १०॥ परं धाम सर्वावभासकत्वेन देहेन्द्रियादिधर्मैरस्पष्टंज्योतिः स्वरूपम्। परमं सर्वबाधावधित्वेन परमार्थं पदं पदनीयम्। तत्र विमर्शे। आदिना भयादिग्रहः। पारोक्ष्यनिवृत्तिः साक्षात्कारः। परस्परीकरणं व्यतिहारः॥ ११॥ 'ओष्ठप्रान्तास्वादने च लेलिहानो भुजंगमे' इत्यभिधानादर्थान्तरमाह—यद्वेति। 'निष्पेषः पेषणाभावाभीक्ष्ण्यापेषणकेषु च' इत्यभिधानात्सनिष्पेषं पौनःपुन्येन सहितम्॥ १२॥

## अन्वितार्थप्रकाशिका

एवमिति। हे प्रभो! वासुदेवानुचिन्तया युक्तस्त्वानुमानगर्भिण्या बुद्ध्यादिप्रवर्तकत्वेन यदात्मनोऽनुमानं स एव गर्भस्तद्युक्तबुद्ध्या आत्मना स्वयमेव आत्मस्थं देहादिसङ्घातस्थमात्मानम् आमृश विविच्य पश्येत्यर्थः। बुद्ध्यादीनि प्रवर्तकसापेक्षाणि जडत्वात् चक्रादिवदित्याद्यनुमानम्॥ ९॥ चोदित इति। विप्रवाक्येन चोदितस्तक्षकस्त्वां न धक्ष्यति किंतु देहमेव। यतो मृत्यवः मृत्युहेतवः कालादयो मृत्यूनां मृत्युमीश्वरं नोपधक्ष्यन्ति। अत आत्मना ईश्वरेणैकताप्राप्तं त्वां स न धक्ष्यन्तीत्याशयः॥१०॥ अहमिति युग्मम्। योऽहं स परं धाम सर्वाश्रयं ब्रह्म तदहमेव! एवं निष्कले निरुपाधौ आत्मनि ब्रह्मणि आत्मानमात्मना एकीकृत्य समीक्षन्। शता आर्षे। विषयुक्तैराननैः स्वपादे दशन्तं तक्षकं लेलिहानं सर्वं स्वशरीरं च विश्वं चात्मनः पृथक् न द्रक्ष्यसीति। तत्राहं ब्रह्मेति भावनया जीवस्य शोकादिनिवृत्तिः ब्रह्माहमिति भावनया ब्रह्मणः पारोक्ष्यनिवृत्तिर्भवतीति व्यवहारो दर्शितः॥ ११–१२॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

परमात्मानं जीवम् आत्मस्थं परमात्मस्थम्॥ ९॥ न त्वां धक्ष्यति तव दाहवेदना भविष्यतीत्यर्थः। मृत्यव इति ईश्वरो मृत्युः मृत्युं तं यथा मृत्युर्धक्ष्यति एवं तद्भक्तानपि नेत्यर्थः॥ १०॥ अहं ब्रह्मेति ब्रह्माहमिति च तात्पर्यभेदेन विशेषणप्रधानो विशेष्यप्रधानश्च निर्देशभेदः परं पदं परमप्राप्यम्॥ ११॥ न द्रक्ष्यसीति भगवत्स्मृत्यादितत्पदं न तथा दुःखादेर्हेतुभूतमन्यन्नवेत्स्यसीत्यर्थः॥ १२–१३॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धव्याख्याने श्रीसुदर्शनसूरिकृतशुकपक्षीये पञ्चमोऽध्यायः॥ ५॥

## श्रीमद्वीरराघवव्याख्या

तत्र दृष्टान्तः—आकाश इवेति। यथा घटाद्युपाधेराकाशःपरस्तद्वदाधारः देहस्य धारकः अनन्तः स्वभावतोऽपरिच्छिन्नः अव्ययः स्वरूपतो विकाररहितः ततः किमत आह—एवंविधमिति। एवंविधमात्मस्थं परमात्मस्थं देहस्थं वा आत्मानम् आत्मनैवामृश विचारय प्रत्यक्षत्वादात्मनैवेत्युक्तिः॥ ९॥ बुद्ध्येति-अनुमानगर्भिण्या अनुमीयतेनेन सूक्ष्मार्थम् इत्यनुमानं शास्त्रं तद्गर्भिण्या शास्त्रजन्यज्ञानयुक्तयेत्यर्थः। बुद्ध्या आत्मविमर्शनात्मिकया वासुदेवानुचिन्तया वासुदेवानुचिन्तारूपया बुद्ध्या वा उपलक्षितं त्वां विप्रवाक्येन प्रचोदितोपि तक्षकः न धक्ष्यति तव वेदनां न जनयिष्यति इत्यर्थः मृत्यव इति। ईश्वरो हि मृत्यूनां मृत्युरतस्ते मृत्यवः मृत्युहेतवः न धक्ष्यन्ति एवं तद्भावमपीत्यभिप्रायः॥ १०॥ अहमिति। अहं ब्रह्मेति ब्रह्माऽहमिति च तात्पर्यभेदेन विशेषणप्रधानो विशेष्यप्रधानश्च निर्देशभेदः परं धाम परमं पदमिति च ब्रह्मविशेषणं परमं पदं प्राप्यं एवमित्थं समीक्षन् सन्दधानः निष्कले प्राकृतशरीररहिते आत्मनि परमात्मन्यात्मानं प्रत्यगात्मानमाधाय परमात्मशेषतैकरसं ध्यात्वेत्यर्थः। यद्वा, अनादि माया विषया जातदेहात्मबुद्ध्यभिभूतनिजस्वरूपं राजानं नित्यं श्रीभगवच्छेषभूतमात्मानं देहद्वयविलक्षणं गुणत्रयातीतं जडविलक्षणं सदैव चेतनं नित्यं सदा परमात्मस्वरूपाधीनसत्तास्वरूपं विद्धीत्युपदिशति—अहं ब्रह्मेत्यादिना। धाम निरुपाधिकचेतनं प्रकाशबहुलं तेजोमयं ज्योतिस्स्वरूपं परमं श्रेष्ठं जडविलक्षणम् अत एव जडवर्गादतिश्रेष्ठमपि पदं स्वरूपं यस्य तत् अहम् अहन्तत्त्वं जीवस्वरूपं ब्रह्मपरं

प्रधानं श्रेष्ठं मान्यं पूज्यं सेव्यं यस्य तत् अत एव ब्रह्माहं ब्रह्मणः अहं ब्रह्माहं ब्रह्मणः परमात्मनः शेषिण एवाहं शेषो नान्यस्यतदि-तरस्य सर्वस्यापि चेतनाचेतनस्य शेषरूपत्वादिति तदभिप्रायः मम च शेषी ब्रह्मैव परमात्मैव नान्यः। तथा सति सर्वेपि शेपिण एव स्युः अतो न शेषस्य शेषीति श्रुतावेत एव शेषी वर्णितः "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" "न तत्समश्चाभ्यधिकश्च दृश्यते" इत्यादि श्रुतिः। "नत्वत्समोस्त्यभ्यधिकः कुतोन्यः" इत्यादिश्रीगीतोपनिषत्सु च शेषी एक एव श्रीमन्नारायणः शेषास्तु बहव एवेति सर्वशेषिणो नियन्तुः आज्ञा शेषभूतैस्सदैव पालनीयेति सूक्ष्मदृशात्ववधारणीयः। अन्यथा शेषस्वरूपमेव न सिद्ध्य तीतिदिक् एवञ्च सर्वस्य शेषी परब्रह्मश्रीमन्ननारायण एव नान्य इति यथा राजपुरुष इत्यादौ षष्ठीसमासघटितपुरुषस्याप्राधान्यं प्रसिद्धम् तत्र भेदवादिनः भ्रान्ता एवेति परब्रह्मपराधीनमेतादृशस्वरूपं जीवतत्त्वं यत्तस्मिन् स्वस्वरूपे निष्कले आत्मनि जीवस्वरूपे आत्मानमन्तर्यामिणं परमात्मानं श्रीमन्नारायणं निजस्वामिनं श्रीरमानाथं निजनाथं ( परमात्मस्वरूपं वा आत्मानं व्याप्य शेषभूतं ) समीक्षन् सम्यक् पश्यन् नित्यस्वामिसेवकभावेन सम्यगालोकयन् ध्यानेन दृशा प्रत्यक्षमिव कुर्वन् विश्वासश्रद्धावैराग्यज्ञानानुराग-भक्तिनयनैः प्रत्यक्षमेव कुर्वन्नप्यहं जडदेहादिविलक्षणो निर्गुणः शुद्धो मुक्तस्वरूपचिदात्माप्यहं न स्वयं ब्रह्मा ब्रह्माहमस्मि किन्तु स्वयं ब्रह्मणः सर्वशेषिणः श्रीस्वामिनो दास एवाहमस्मि इति सर्व श्रुतिशास्त्रार्थसारोयमर्थः। एतादृशबोधपूर्वकं श्रीभगवद्ध्यानानुरागी त्वं देहं स्थूलदेहं दशन्तं तक्षकं स्थूल सूक्ष्मञ्च शरीरमुभयदेहोत्पादकमविद्याप्रधानादिकं सर्वं जगद्विश्वं च तन्नाशादिकरं कालं च न द्रक्ष्यसीत्यनेन श्रीभगवद्व्यतिरिक्तं किमपि न वत्स्यसि परमात्मानमेव नित्यमात्मन्यन्तर्यामिणं परमात्मनि व्यापके श्रीस्वामिनि वा नित्यव्याप्यभूतं सदा शेषरूप निजस्वरूपं सम्यगालोचयिष्यसीति सर्वमङ्गलमनवद्यम्॥ ११ ॥ दशन्तमिति। विषययुक्तैराननैर्मुं-खैर्लेलिहानमास्वादयमानं दशन्तं च तक्षकमात्मनः परमात्मनः पृथक्सिद्धं शरीरं विश्वं च न द्रक्ष्यसि भगवत्स्मृत्याह्लादे मग्नतया दुःखादिहेतुभूतमन्यन्न वेत्स्यसीत्यर्थः॥ १२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवंविधमाहात्म्योपेतमात्मस्थं स्वहृदयकुहरनिलयमात्मानं परमात्मानमात्मनैव सर्वप्रयत्नेनामृश सम्यग्विचार्योपास्व प्रभो इत्युपास्तिसामर्थ्यमाह—दुर्मरणदोषदुष्टस्य मम देहत्यागेपि मोक्षो नास्तीति न चिन्तयेत्याशयेनाह, बुद्ध्येति। आत्मा स्वस्वेतर-वृत्तित्वान क्रान्तनित्यनिष्ठाधिकरणं मेयत्वादात्मवदिति देहः स्वस्वेतरवृत्तित्वानाक्रान्तनित्यनिष्ठाधिकरणं मेयत्वात् घटवदित्यनुमान-गर्भिण्या वासुदेवानुचिन्तया हरेर्निरन्तरसदुपासनया वर्तमानं त्वाम्॥ ९॥ विप्रकुमारवाक्येन चोदितः प्रेरितस्तक्षको न धक्ष्यति दष्टदोषं नापादयतीत्यन्वयः। मृत्यूनां मारकाणां मृत्युं मारकम् ईश्वरम् उप समीपे स्थितं मृत्यवो न सर्पन्ति त्वां न प्राप्नुवन्ति॥१०॥ दंशदोषास्पर्शने प्रकारान्तरेणोपायमाह—अहमिति। न हन्यत इत्यहं न हीयत इति वा कदापि न जहाति स्वशक्तिमिति वा एवं विधमीश्वरं विहाय कदापि न तिष्ठत्यस्वातन्त्र्यादित्यर्थः उपासनाफलमाह—एवमिति। एवंविधस्त्वं निष्कले आत्मनि परमात्मानं समाधाय संयुज्य समीक्ष्य सम्यक् ध्यायन्॥ ११॥ विषयुक्ताननैः पदे दशन्तं तक्षकं लेलिहानं सर्पं न द्रक्ष्यसि इतरसर्पवदिति शेषः। आत्मनो हरेः पृथक् स्वातन्त्र्येण स्थितं विश्वं शरीरं च न पश्यसीत्यन्वयः॥ १२॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

पूर्वोक्तातिदेशेनोपदिशति—एवमिति। आत्मानमन्तर्भूतभगवत्पार्षदभावात्मकम् आत्मना जीवस्वरूपेण सहात्मस्थं बुद्ध्यामृश कीदृश्या पूर्वोक्तानुमानगर्भिण्या तथा वासुदेवस्यानुगतचिन्ता यस्यां तया॥९॥ त्वां पूर्वोक्तरूपं यतो मृत्यव इति॥ १०॥ कुतोऽहमीश्वरः तदेकपालित्वाभिमानेन तच्छक्त्यैव स्वशक्त्यभिमानेन वा तदभेदाभिमानादित्याह—अहं ब्रह्मेति युग्मकेन। निष्कले मायातीते आत्मनि ब्रह्मणि आधाय निवेद्य आत्मनि ब्रह्मणि आधाय निवेद्य आत्मनः पृथक् यच्छरीरं विश्वं च तन्न द्रक्ष्यस्येवेति किमुत तदुपकारेण स्वोपकारं मन्यस इति॥ ११–१२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

आत्मस्थं देहाद्युपाधिस्थितम् आत्मना मनसा आमृश विचारय बुद्ध्यादिप्रवर्त्तकत्वेन यदात्मनोऽनुमानं तदेव गर्भस्तद्युक्तया बुद्ध्या साध्ववसायवत्या सह वासुदेवस्यानुचिन्ता यस्यां तया त्वामात्मानं देहात्पृथग्भूतं तक्षकस्य का वार्ता स्वयं मृत्यवोऽपि मूर्त्तिमन्तः पक्षे ईश्वरम् उपाधिमुक्तत्वाद्देहाद्यपरतन्त्रं मृत्यूनां भक्त्यन्तरायाणां मृत्युं नाशहेतुं त्वां प्राप्य भक्त्यन्तराया ब्रह्मशापाद्य एव वैयर्थ्योत्रष्टा एव बभूवुरित्यर्थः॥ ९–१०॥ विमर्शप्रकारं दर्शयन् तक्षकादर्शनं दर्शयति—द्वाभ्याम्। योऽहं स ब्रह्मैव ब्रह्मैवाहं न संसारीति भावनया शोकादिनिवृत्तिः ब्रह्माहमिति अहमेव ब्रह्मेति भावनया च ब्रह्मणः पारोक्ष्यनिवृत्तिर्भवतीति व्यतिहारो दर्शितः निष्कले निरुपाधौ आत्मनि ब्रह्मणि पक्षे अहं धाम सूर्य्योपमस्य परमेश्वरस्य त्विट् कणाश्चित्कण एवेत्यर्थः। गृहदेहत्विट् प्रभावा

धामानि' इत्यमरः कीदृशं ब्रह्म परं 'नारायणपरो विप्रः' इतिवत् ब्रह्मोपासकमित्यर्थः। अत एव ब्रह्माहं ब्रह्मणः परमेश्वरस्यैवाहमिति षष्ठीतत्पुरुषः एवं परमं पदं ब्रह्म स्वरूपं चरणारविन्दं वा समीक्ष्य आत्मानं स्वम् आत्मनि परमात्मनि कृष्णे निष्कले निष्को वक्षोऽलङ्कारस्तद्वति॥ ११॥ विषाननैर्विषयुक्तैराननैः दशन्तं लेलिहानं जिह्वाभिरोष्ठप्रान्तं सनिष्पेषमास्वादयन्तं तक्षकं न द्रक्ष्यसि नापितेन द्रष्टुं शरीरं च आत्मन पृथग्भूतं विश्वं च पक्षे श्रीकृष्णचरणारविन्दसाक्षात्कारानन्दमूर्च्छां प्राप्तस्त्वं न द्रक्ष्यसीति॥ १२॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

ननु, प्रकृतिबन्धनिवृत्त्यनन्तरं निर्बन्धनो ब्रह्म प्राप्नोतीति यदुक्तं तत्प्राप्तये अधुना मया किमनुष्ठेयमत्राह—एवमिति। अनुमीयते अनुभवविषयीक्रियते वेदार्थभूतो भगवान् येन तदनुमानं वेदः तद्गर्भिण्या तदर्थशालिन्या बुद्ध्या भगवज्ज्ञानेन वासुदेवानुचिन्ता वासुदेवानुरक्तिर्भक्तिस्तव च आत्मनः 'एष ते आत्मान्तर्यामी' इति श्रुतिप्रोक्तमात्मस्थं स्वात्मनि संस्थितमात्मना निर्मलेन मनसा एव यथोपदिष्टम् आमृश विचारय अत्र 'ब्रह्म समश्नुते' इतिश्रुत्युक्तं त्र ह्मप्राप्नुहीति भावः। प्रभो इति सम्बोधन उक्तार्थं द्योतयति॥ ९॥ एवं कुर्वाणं त्वां न कोपि धर्षयिष्यतीत्याह–चोदित इति। ईश्वरं समर्थम्॥ १०॥ ननु, येन सम्बन्धेन स सम्बन्धो भवता वक्तव्य इत्यतः 'आत्मेतितूपगच्छन्ति ग्राहयन्ति च' (४।१।३) इति सूत्रकारोक्तम् वेत्तृवेद्ययोस्तादात्म्यसम्बन्धमाह अहमिति। अहमणुस्वरूपः जीवः 'अणुर्ह्येष आत्मा' एष परस्यांशः 'ममैवांशो जीवलोके जीवभूतः सनातनः' इति श्रुतिस्मृतिप्रोक्तः परं पूर्णं ब्रह्मैव अंशस्य स्वरूपतो भिन्नत्वेपि अंशिव्यतिरिक्तस्थितिप्रवृत्त्याद्यभावेन तदभिन्नत्वात् अनेन 'द्वितीयाद्वै भयं भवति भयशोकादिनिवृत्तिर्जीवस्य भवति परमं पदं ब्रह्म चाहम् अशिनः स्वरूपतोऽनन्तत्वेपि सर्वात्मत्वेन अंशवियुक्तत्वाभावात् अनेन ब्रह्मणः स्वांशे जीवे नित्यप्राप्त्या पारोक्ष्य निर्वृत्तिर्भवति एष एव जीवब्रह्मणोः भिन्नाभिन्नसम्बन्धः सूत्रकारेण कात्स्न्यकृष्णौडुलोम्पादिसिद्धान्ततया बहुधा प्रतिपादितः सर्वश्रुतिसङ्गत्यर्थम् 'अंशो नानाव्यपदेशात् अन्यथा चापि दाशकितवादित्वमधीयत एके' इत्यत्र स्वमतत्वेन च दृढीकृतः एवं निष्कले निर्मले आत्मनि स्वस्मिन् वेत्तरि आत्मानं वेद्यम् आधाय समीक्षन् सन्दधानः तक्षकादीन् न द्रक्ष्यसीत्यग्रिमेण सम्बन्धः लेलिहानं जिह्वाभिरोष्ठप्रान्तं सनिष्पेषमास्वादयन्तम् विषयुक्तैराननैर्दशन्तं तक्षकम् आत्मनः पृथग्भूतं शरीरं च किं बहुना विश्वं च न द्रक्ष्यसि परमानन्दतादात्म्यं प्राप्तत्वात्॥ १२॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अतस्त्वमेवं चिन्तयेत्याह–एवमिति। सामर्थ्यं त्वस्तीति सूचयन्सम्बोधयति—प्रभो इति। वासुदेवानुचिन्तया युक्तस्त्वमनुमानगर्भिण्या द्रष्टृदृश्यान्वयव्यतिरेकयुक्तया बुद्ध्या आत्मना स्वयमेव आत्मस्थं देहादिसङ्घातस्थमात्मानं विमृश्य विविच्य पश्येत्यर्थः॥ ९॥ एवं दर्शनस्य फलमाह—चोदित इति। तत्र हेतुमाह—मृत्यवः मृत्युहेतवः कालादयो मृत्यूनां मृत्युमीश्वरं नोपधक्ष्यन्ति अत आत्मन ईश्वरैकताप्राप्तं त्वां न धक्ष्यतीत्याशयः॥ १०॥ उक्तविमर्शप्रकारं दर्शयंस्तक्षकाद्यदर्शनं दर्शयति—अहमिति द्वाभ्याम्। योऽहं स परं धाम सर्वाश्रयं ब्रह्मैव। यत् परं पदं परमाश्रयं ब्रह्म तदहमेव। एवं निष्कले निरुपाधौ आत्मनि ब्रह्मणि आत्मानमाधाय एकीकृत्य समीक्षन् विषयुक्तैराननैः स्वपादे दशन्तं तक्षकं लेलिहानं सर्पं स्वशरीरं च विश्वं चात्मनः पृथक् न द्रक्ष्यसीति द्वयोरन्वयः। तत्राहं ब्रह्मेति भावनया जीवस्य शोकादिनिवृत्तिः। ब्रह्माहमिति भावनया च ब्रह्मणः पारोक्ष्यनिवृत्तिर्भवतीति व्यतिहारो दर्शितः॥ ११–१२॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

आत्मनो देहादेः परत्वमेव प्रपञ्चयति। आकाश इवेति। आकाशः इव यथा घटाद्युपाधेः आकाशः परः, तथा देहस्य आधारो धारकः ध्रुवः। अनन्तः स्वभावतोऽपरिछिन्नः, ततः अव्ययः स्वरूपतो विकारहीनः आत्मा, देहादेः परो भवति। ततः किमत आह। हे प्रभो, एवंविधं आत्मस्थं देहस्थं जीवस्थं वा आत्मानं, जीवं परमात्मानं च आत्मना स्वयमेवेत्यर्थः। आमृश विचारय प्रत्यक्त्वादात्मनैवेत्युक्तिः॥ ९॥ बुद्ध्येति। अनुमीयतेऽनेन सूक्ष्मार्थ इत्यनुमानं ज्ञानं तद्गर्भेऽस्त्यस्या इत्यनुमानगर्भिणी तया अनन्यज्ञानयुक्तयेत्यर्थः। बुद्ध्या आत्मविमर्शनात्मिकया मत्या, वासुदेवस्यानुचिन्ता संस्मरणं यस्यां तया बुद्ध्या च, उभयप्रकारेण वर्त्तमानमिति शेषः। त्वां विप्रवाक्येन चोदितः अपि तक्षकः न धक्ष्यति। तव वेदनां न जनयिष्यतीत्यर्थः। तत्र हेतुमाह। मृत्यव इति। मृत्यूनां मृत्युं ईश्वरं, मृत्यवः मृत्युहेतवः, न उपधक्ष्यन्ति। एवं तेनैकात्मभावमापन्नं त्वामपि न धक्ष्यन्तीत्यर्थः॥ १०॥ अहं ब्रह्मेति। कदाचिदपि न जहाति स्वशक्तिमित्यहं सर्वदाऽगणितस्वशक्त्युपेतं ब्रह्म, यदीयं सकलं लोकभोगैश्वर्यादिसर्वेभ्यो वृद्धिमत्तथाभूतं परं धाम स्वशरीरनिर्यत्सर्वातिरिक्ताप्राकृततेजोमयं, परमहामुक्तैरेव मीयतेऽनुभूयते इति परमं, अत एव पदमन्ते सर्वेषां स्थानं, ब्रह्म परमात्मस्वरूपं, अहं मच्छरीरकमित्यर्थः। अहं यच्छरीरभूतः य मच्छरीरी, ततः विशेषणं यथा विशेष्यांव्यतिरेकि,

प्रभा प्रभावतो यथाऽव्यतिरिक्ता, तथा शरीरभूतोऽहं शरीरिणः परमात्मनोऽव्यतिरिक्तोऽस्मीति विभावयेति भावः। एवमित्थं समीक्षन् संदधानः सन्, निष्कले प्राकृतशरीररहिते आत्मनि परमात्मनि, आत्मानं प्रत्यगात्मानं आधाय, परमात्मशेषतैकरसं ध्यात्वेत्यर्थः ॥ ११ ॥ दशन्तमिति। विषाननैः विषयुक्तमुखगतजिह्वाभिरित्यर्थः। लेलिह्यानं सृक्किणीयुगलमास्वादमानं, पादे दशन्तं च तक्षकं, आत्मनः पृथक् सिद्धं शरीरं विश्वं च न द्रक्ष्यसि। भगवत्स्मृत्याह्लादे मग्नतया दुःखादिहेतुभूतमन्यन्न वेत्स्यसीत्यर्थः। द्वयोरेकसंबन्धः ॥ १२ ॥

## हिन्दी अनुवाद

हे राजन् ! तुम अपनी विशुद्ध एवं विवेकवती बुद्धि को परमात्मा के चिन्तन से भरपूर कर लो और स्वयं ही अपने अन्तर में स्थित परमात्मा का साक्षात्कार करो ॥ ९ ॥ देखो, तुम मृत्युओं की भी मृत्यु हो। तुम स्वयं ईश्वर हो। ब्राह्मण के शाप से प्रेरित तक्षक तुम्हें भस्म न कर सकेगा। अजी तक्षक की तो बात ही क्या, स्वयं मृत्यु और मृत्युओं का समूह भी तुम्हारे पास तक न फटक सकेंगे ॥ १० ॥ तुम इस प्रकार अनुसन्धान—चिन्तन करो कि 'मैं ही सर्वाधिष्ठान परब्रह्म हूँ। सर्वाधिष्ठान ब्रह्म मैं ही हूँ।' इस प्रकार तुम अपनेआप को अपने वास्तविक एकरस अनन्त अखण्ड स्वरूप में स्थिति कर लो ॥ ११ ॥ उस समय अपनी विषैली जीभ लपलपाता हुआ, अपने ओठों के कोने चाटता हुआ तक्षक आये और अपने विषपूर्ण मुखों से तुम्हारे पैरों में डस ले—कोई परवा नहीं। तुम अपने आत्मस्वरूप में स्थित होकर इस शरीर को—और तो क्या, सारे विश्व को भी अपने से पृथक् न देखोगे ॥ १२ ॥

**एतत्ते कथितं तात यथाऽऽत्मा[1] पृष्टवान् नृप। हरेर्विश्वात्मनश्चेष्टां किं भूयः श्रोतुमिच्छसि ॥ १३ ॥**

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे[2] ब्रह्मोपदेशो नाम पञ्चमोऽध्यायः ॥ ५ ॥**

## कृष्णप्रिया व्याख्या

अन्वयः—तात नृप आत्मा (त्वम्) विश्वात्मनः हरेः चेष्टां यथा पृष्टवान् एतत् ते कथितं भूयः किं श्रोतुम् इच्छसि ॥ १३ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

हरेश्चेष्टामात्मा त्वं यत्पृष्टवांस्तत्ते कथितम्। शिष्यस्य कृतार्थतापरीक्षणाय पृच्छति। किमिति ॥ १३ ॥

इति श्रीमद्भागवते म० द्वादशस्कंधे भावार्थदीपिकायां टीकायां पञ्चमोऽध्यायः ॥ ५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

हे नृपेति—नृभ्यो भयजनकत्वेन विक्षेपकेभ्यः कालजन्मजरादिभ्यः पायते रक्ष्यत इति नृपः, तथा च मया तत्त्वोपदेशेनान्वर्थनामा कृतोऽसीति भावः। अतः परं श्रोतव्यं नास्तीत्याह—किं भूय इति। अत्र संदर्भः—लीलाकथारसिकस्य तस्य पूर्वोक्तेनातिरुचिमालक्ष्योपसंहरति—एतत्त इति। ते तुभ्यम्। 'त्वं तु राजन्मरिष्येति' इत्यादिना कथितम्। ननु ममानभीष्टमनुपक्रान्तञ्च तत्कथं कथितं तत्राह—आत्मा कस्यचिदात्मनिष्ठस्य मनो यत्पृष्टवान् परीक्षितोऽस्यात्मज्ञानं जातं न वेति संदिह्य स्वगतमेवमपि यज्ज्ञातुमिष्टवानित्यर्थः। अहम् 'तत्रानुवर्ण्यते' इत्यादिनोपक्रांतं भगवन्महिमानमेव पुनरपि वर्णयिष्यामीत्याह—हरेरिति। विश्वात्मन इति—किं व्यष्ट्यात्मनः स्वरूपवर्णनेनेति भावः। नन्वस्मिन्प्रकरणे श्रीशुकदेवस्योपदेशे भक्तावेव तात्पर्यं ज्ञाने वेति संदिहानं प्रति पुनर्विचार्यते। तत्र 'अत्रानुवर्ण्यतेऽभीक्ष्णम्' इत्याद्युपक्रमे 'एतत्ते कथितं तात' इत्याद्युपसंहारेपि तादृशमहिमत्वेन पुनर्लीलाकथाश्रवणस्यैव प्राधान्यात्, तत उपक्रमोपसंहारनिर्दिष्टत्वाच्छ्रवणोपलक्षितभक्तेरेवात्रापि प्राधान्यम्। यस्तु तन्मध्ये 'त्वं तु राजन्मरिष्येति' इत्यादिना ज्ञानोपदेशः, स च तस्य प्रागेव गता या भक्तिनिष्ठा तस्याः संप्रत्यपि स्थैर्यप्रकटनार्थं एव, एकान्तभक्तेषु भगवता मोक्षवरच्छंदनवत् पूर्वमपि भक्तिनिष्ठा मरणभयत्यागात्। अनन्तरं च श्रुत्वापि तज्ज्ञानोपदेशं स्वस्य भक्तिनिष्ठाया एव दर्शयिष्यमाणत्वात्। तत्र प्राचीना तन्निष्ठा यथा प्रथमे—'कृष्णांघ्रिसेवामधिमन्यमानः' इति, 'दध्यौ मुकुन्दांघ्रिमनन्यभाव' इति च। तन्निष्ठयैव तद्भयपरित्यागो यथा तद्वाक्ये—'द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं, गायत विष्णुगाथाः' इति तज्ज्ञानश्रवणानन्तरमपि

१. यदात्मा। २. न्धे प्रलयप्रमाणलक्षणं।

तादृश निष्ठायाः स्थैर्यदर्शनं यथा तत्र तावत्पद्यत्रयेण तज्ज्ञानोपदेशं बहु मत्वा श्रवणलक्षणया भक्त्यैव स्वकृतार्थत्वमुक्तं षष्ठाध्यायारंभे—'सिद्धोऽस्म्यनुगृहीतोऽस्मि' इत्यादिना। 'अत्यद्भुतमिदं इत्यादि, 'पुराणसंहिताम्' इत्यादिना च। पुनश्चैकेन पद्येन तद्वाक्यगौरवमात्रेणांगीकृतस्य ब्रह्मज्ञानस्य तक्षकादिभयनिवृत्तहेतुत्वमुक्त्वाऽन्येन तदूर्ध्वं वाक्चेतसोस्तन्नामकीर्तनध्यानावेशानुज्ञा प्रार्थिता 'भगवंस्तक्षकादिभ्यः' इत्यादिना, 'अनुजानीहि मां ब्रह्मन्' इत्यादिना च। अथ पुनरन्येन पद्येनाज्ञानान्निरासो ज्ञानवृद्धिश्च भगवत्पदारविन्ददर्शनसुखान्तर्भूतैव मम स्फुरतीति ज्ञापितम्। 'अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया। भवता दर्शितं चेमं परं भगवतः पदम्।' इति। अत्र पदशब्दस्य चरणारविन्दाभिधायकत्वे 'ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम्' इत्येवास्ति प्रथमे साधकम्। एतत्प्रकरणार्थस्तु श्रीसूतेनैव स्पष्टीकृतः—"ब्रह्मकोपोत्थिताद्यस्तु तक्षकात्प्राणविप्लवात्। न संमुमोहोरुभयाद्भगवत्यर्पिताशयः। नोत्तमश्लोकवार्तानां जुषतां तत्कथामृतम्। स्यात्संभ्रमोऽन्तकालेऽपि स्मरतां तत्पदांबुजम्"। इति। तथा पूर्वं द्वादशस्य तृतीये प्रथमस्कन्धां तस्थस्य "अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम्। पुरुषस्येह यत्कार्यं म्रियमाणस्य सर्वथा"। इत्यस्य राजप्रश्नस्योत्तरत्वेन भगवद्ध्यानकीर्तने एव स्वयं श्रीशुकदेवेनाप्युपदिष्टे "तस्मात्सर्वात्मना राजन् हृदिस्थं कुरु केशवम्। म्रियमाणो ह्यवहितततस्तो यासि परां गतिम्। म्रियमाणैरभिध्येयो भगवान्परमेश्वरः। आत्मभावं नयत्यंग सर्वथा सर्वसंभवः। कलेर्दोषनिधे राजन्" इत्यादिना। ततस्तत्र केशवे ह्यवहितः कृतावधानः। आत्मभावमात्मनो भक्तिम्। अस्तु तावदायाससाध्यं ध्यानं हि यस्मादनायाससाध्यात्कीर्तनादेवेत्यर्थः। द्वितीयस्कन्धेपि—'न ह्यतोऽन्यः शिवः पंथाः' इत्यादिना 'एवमेतन्निगदितम्' इत्यन्तेन ग्रंथेन नानाङ्गवाञ्छुद्धभक्तियोग एवात्रोत्तरत्वेन पर्यवसितः। तत्र 'पिबन्ति ये भगवतः' इत्यादिना लीलाकथाश्रवण एव पर्यवसानं दृश्यते तस्मात्साधूक्तम्—'त्वन्तु राजन्मरिष्येति' इत्यादिकं भगवद्भक्तिनिष्ठाप्रकटनार्थमेवेति। अतो भक्तावेव तदुपदेशस्य तात्पर्यमत एव द्वितीयाध्मे राजप्रार्थनान्वर्था स्यात्—"कृष्णे निवेश्य निस्संङ्गं मनस्त्यक्ष्ये कलेवरम्" इति ॥ १३ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे पञ्चमोऽध्यायः ॥ ५ ॥

### अन्वितार्थप्रकाशिका

एतदिति। हे तात! हे नृप! आत्मा त्वं यथा विश्वात्मनो हरेश्चेष्टां लीलां पृष्टवान् तथैतत्ते तुभ्यं सर्वं मया कथितम्। भूयः किं श्रोतुमिच्छसि ॥ १३ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकां गङ्गासहायो पञ्चमे द्वादशस्य व्यधादिमाम्।

इति श्रीमद्भागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायां पञ्चमोऽध्यायः ॥ ५ ॥

### श्रीमद्वीरराघवव्याख्या

अखिलप्रश्नोत्तरं निगमयति—एतदिति। हे तात! हे नृप! हरेश्चेष्टां प्रति यद्यदात्मा त्वं पृष्टवान् तत्सर्वं ते तुभ्यं कथितं कृतार्थतापरीक्षायै पृच्छति—किं भूयः श्रोतुमिच्छसीति। भूयः पुनः ॥ १३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां पञ्चमोऽध्यायः ॥ ५ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अवान्तरप्रमेयमुपसंहरति—एतदिति। चेष्टेति पाठे सा कथितेति शेषः ॥ १३ ॥

इतिश्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां पञ्चमोऽध्यायः ॥ ५ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

लीलाकथैकरसिकस्य तस्य पूर्वोक्ते तु नातिरुचिमालक्ष्य तथोपसंहरति—एतत्त इति ते तुभ्यमेतत् 'त्वं तु राजन मरिष्येति' इत्यादिना कथितम्। ननु, ममानभीष्टनुपक्रान्तं च तत् कथं कथितं तत्राह—आत्मकस्य चिदात्मनिष्ठस्य मनो यत्पृष्टवान् परीक्षितोऽस्यात्मज्ञानं जातमस्ति नवेति सन्दिह्य स्वगतमेवामपि यज्ज्ञातुमिष्टवानित्यर्थः। अहं त्वत्रानुवर्ण्य इत्यादिनोपक्रान्तं श्रीभगवन्महिमानमेव पुनरपि वर्णयिष्यामीत्याह—हरेरिति। विश्वात्मन इति किं व्यष्टयात्मनः स्वरूपादिवर्णनेति भावः। नन्वस्मिन् प्रकरणे श्रीशुकदेवस्योपदेशो भक्तावेव तात्पर्य्यं ज्ञानं वति सन्दिहानं प्रति पुनर्विचार्यतेऽभीक्ष्णम्' इत्याद्युपक्रमे 'एतत्तो कथितं तात'

इत्याद्युपसंहारेपि तादृशमहिमत्वेन पूर्वोक्तलीलाकथाश्रवणस्यैव प्राधान्यात् ततोऽनुपक्रमोपसंहारनिर्दिष्टत्वाच्छ्रवणोपलक्षितभक्ते-रेवात्रापि प्राधान्यं यस्तु तन्मध्ये 'त्वं तु राजन् मरिष्येति' इत्यादिना ज्ञानापदेशः स च तस्य प्रागेव गता या भक्तिनिष्ठा तस्याः सम्प्रत्यपि स्थैर्य्यप्रकटनार्थं एव एकान्तभक्तेषु भगवता मोक्षवरच्छन्दनवत् पूर्वमपि तन्निष्ठया स्वत एव मरणभयपरित्यागात् अनन्तरं च श्रुत्वापि तज्ज्ञानोपदेश स्वस्य भक्तिनिष्ठाया एव स्वयं दर्शयिष्यमाणत्वात् तत्र प्राचीना तन्निष्ठा यथा प्रथमे कृष्णाङ्घ्रिसेवाम-धिमन्यमानः' इति 'दध्यौ मुकुन्दाङ्घ्रिमनन्यभावः इत्यादि' तन्निष्ठयैव तद्भयपरित्यागो यथा तद्वाक्ये 'द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं गायत विष्णुगाथाः' इति तज्ज्ञानोपदेशश्रवणानन्तरमपि तादृशस्वनिष्ठायाः स्थैर्य्यदर्शनं यथा तत्र तावत्पद्यत्रयेण तदा ज्ञानोपदेशं बहु मत्वा श्रवणलक्षणया भक्त्या एव स्वकृतार्थत्वमुक्तं षष्ठाध्यायारम्भे 'सिद्धोस्म्यनुगृहीतोस्मि' इत्यादि 'नात्यद्भुत-मिदम्मन्ये' इत्यादि 'पुराणसंहिताम्' इत्यादि पुनश्चैकेन पद्येन तद्वाक्यगौरवमात्रेणाङ्गीकृतस्य ब्रह्मज्ञानस्य तक्षकादिभयनिर्वृत्ति-हेतुत्वमुक्त्वाऽप्यन्येन तदूर्ध्वमधोक्षज एव वाक् चेतसोस्तन्नाम कीर्त्तनध्यानवेशानुज्ञा प्रार्थिता 'भगवंस्तक्षकादिभ्यः' इत्यादिना 'अनुजानीहि मां ब्रह्मन्' इत्यादिना अथ पुनरन्येन पद्येनाज्ञाननिरासज्ञानविज्ञानसिद्धिश्च भगवत्पादारविन्ददर्शनसुखान्तर्भूतैव मम स्फुरतीति ज्ञापितम् 'अज्ञानञ्च निरस्तम्मे ज्ञानविज्ञाननिष्ठया ! भवता दर्शितं क्षेमं परं भगवतः पदम्' इति अत्र पदशब्दस्य चरणारविन्दाभिधायकत्वे 'ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम्' इत्येवारित प्रथमे साधकं तदेतत्प्रकरणार्थस्तु श्रीसूतेनैव स्पष्टीकृतः—

'ब्रह्मकोपोत्थिताद्यस्तु तक्षकात्प्राणविप्लवात्। न सम्मुमोहोरुभयाद्भगवत्यर्पिताऽऽशयः'॥
नोत्तमश्लोकवार्त्तानां जुषतान्तत्कथामृतम्। स्यात्सम्भ्रमोऽन्तकालेपि स्मरतां तत्पदाम्बुजम्॥

इति। तथा पूर्वं द्वादशस्य तृतीये प्रथमस्कन्धान्तस्थस्य—

'अतः पृच्छामि संसिद्धिं योगिनां परमं गुरुम्। पुरुषस्येह यत्कार्य्यम्म्रियमाणस्य सर्वथा'॥

इत्यस्य राजप्रश्नस्योत्तरत्वेन भगवद्ध्यानकीर्त्तने एव स्वयं श्रीशुकदेवेनाप्युपदिष्टे—

'तस्मात् सर्वात्मना राजन्! हृदिस्थं कुरु केशवम्। म्रियमाणो ह्यवहितस्ततो याति पराङ्गतिम्॥
म्रियमाणैरभिध्येयो भगवान् परमेश्वरः। आत्मभावं नयत्यङ्ग! सर्वात्मा सर्वसम्भवः॥
कलेर्दोषनिधे राजन्!"।—

इत्यादिना। ततस्तत्र केशवे अवहितः कृतावधान आत्मभावं आत्मनो भक्तिम् अस्तु तावदायाससाध्यं ध्यानं हि यस्मादा-यास साध्यं ध्यानं हि यस्मादनायाससाध्यात् कीर्त्तनादेवेत्यर्थः। द्वितीयस्कन्धेपि 'नह्यतोऽन्यः शिवः पन्थाः' इत्यादिना 'एवमे-तन्निगदितम्' इत्यन्तेन ग्रन्थेन नानाङ्गवान् शुद्धभक्तियोग एव तत्रोत्तरत्वेन पर्य्यवसितः तत्र 'पिबन्ति ये भगवतः' इत्यादिना लीलाकथाश्रवण एव तत्पर्य्यवसानं दृश्यते तस्मात् साधूक्तं 'त्वन्तु राजन् मरिष्येति' इत्यादिकं तद्भक्तिनिष्ठाप्रकरणार्थमेवेति अतो भक्तावेव तदुपदेशस्य तात्पर्य्यम् अत एव द्वितीयस्याऽष्टमे राजप्रार्थना च नान्यथा स्यात् 'कृष्णे निवेश्य निःसङ्गम्मनस्त्यक्ष्ये कलेवरम्'॥ १३॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे पञ्चमोऽध्यायः॥ ५॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

एतत् ब्रह्मज्ञानं त्वया सम्प्रत्यपृष्टमपि ते कथितं यद्धरेश्चेष्टां लीलाम् आत्मा त्वं पृष्टवान् मां पूर्वमपृच्छः तां तु पूर्वमेवा-वोचमिति शेषः। शिष्यस्य तस्य पूर्णत्वज्ञापनाय पृच्छति, किमिति॥ १३॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। द्वादशे पञ्चमोऽध्यायः सङ्गतः सङ्गतः सताम्॥ ५॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

सर्वप्रश्नोत्तरमुपसंहरति—एतत्ते इति। तन्मुखेनैव तत्कृतार्थतां श्रोतुमाह किम्भूयः श्रोतुमिच्छसीति॥ १३॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे पञ्चमाऽध्यायार्थप्रकाशः॥ ५॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अखिलप्रश्नोत्तरमुपसंहरति— एतदिति। स्नेहं सूचयन्सम्बोधयति— हे तात हे नृप आत्मा त्वं यथा विश्वात्मनो हरेश्चेष्टां लीलां पृष्टवान् तथैतत् ते तुभ्यं सर्वं मया कथितम्। शिष्यस्य कृतार्थतापरीक्षणाय पृच्छति—किं भूय इति॥ १३॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता द्वादशे तत्र परमाश्रयनिरूपणे। पञ्चमो विवृतोऽध्यायो मृत्युभीतिनिवारकः॥ ३॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अखिलप्रश्नोत्तरं निगमयति। एतदिति। हे तात, हे नृप, विश्वात्मनः सर्वान्तरात्मनः हरेः श्रीकृष्णस्य, चेष्टां प्रति यथा यत् अहं पृष्टवान् पृष्टः, त्वयेति शेषः। एतत् सर्वं ते तुभ्यं, कथितमभिहितम्। मयेति शेषः। यथात्मा पृष्टवान्नृपेति पाठे, आत्मा भवान् पृष्टवान्, एतत् ते कथितं, शिष्यस्य कृतार्थतापरीक्षणाय पृच्छति। भूयः पुनः, किं श्रोतुम् इच्छसि॥ १३॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे पञ्चमोऽध्यायः॥ ५॥

## हिन्दी अनुवाद

आत्मस्वरूप बेटा परीक्षित्! तुमने विश्वात्मा भगवान् की लीला के सम्बन्ध में जो प्रश्न किया था, उसका उत्तर मैंने दे दिया, अब और क्या सुनना चाहते हो?॥ १३॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे पञ्चमोऽध्यायः॥ ५॥



# अथ षष्ठोऽध्यायः

सूत उवाच

एतन्निशम्य मुनिनाभिहितं परीक्षिद् व्यासात्मजेन निखिलात्मदृशा समेन ।
तत्पादपद्म¹मुपसृत्य नतेन मूर्ध्ना बद्धाञ्जलिस्त²मिदमाह स विष्णुरातः ॥ १ ॥

रा³जोवाच

सिद्धोऽस्म्यनुगृहीतोऽस्मि भवता करुणात्मना । श्रावितो यच्च मे साक्षाद⁴नादिनिधनो हरिः ॥ २ ॥
नात्यद्भुत⁵महं मन्ये महतामच्युतात्मनाम् । अज्ञेषु तापतप्तेषु भूतेषु यदनुग्रहः ॥ ३ ॥
पुराणसंहितामेतामश्रौष्म भवतो वयम् । यस्यां खलूत्तमश्लोको भगवाननुवर्ण्यते ॥ ४ ॥
भगवंस्तक्षकादिभ्यो मृत्युभ्यो न बिभेम्यहम् । प्रविष्टो ब्रह्म निर्वाणमभयं दर्शितं त्वया ॥ ५ ॥
अनुजानीहि मां ब्रह्मन् वाचं यच्छाम्यधोक्षजे । मुक्तकामाशयं चेतः प्रवेश्य विसृजाम्यसून् ॥ ६ ॥
अज्ञानं च निरस्तं मे ज्ञानविज्ञाननिष्ठया । भवता दर्शितं क्षेमं परं भगवतः पदम् ॥ ७ ॥

सूत उवाच

इत्युक्तस्तमनुज्ञाप्य भगवान् बादरायणिः । जगाम भिक्षुभिः सार्द्धं⁶ नरदेवेन पूजितः ॥ ८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—सुत उवाच—व्यासात्मजेन निखिलात्मदृशा समेन मुनिना अभिहितम् एतत् निशम्य विष्णुरातः परीक्षित् नतेन मूर्ध्ना तत्पादपद्मम् उपसृत्य बद्धाञ्जलिः सः तम् इदम् आह ॥ १ ॥ राजा उवाच—अहं सिद्धः अस्मि अनुगृहीतः अस्मि यत् मे करुणात्मना भवता अनादिनिधनः साक्षात् हरिः श्रावितः ॥ २ ॥ अच्युतात्मनां महतां तापतप्तेषु अज्ञेषु भूतेषु यत् अनुग्रहः (यत्) अहम् अत्यद्भुतं न मन्ये ॥ ३ ॥ वयम् एतां पुराणसंहितां भवतः अश्रौष्म यस्याः खलु उत्तमश्लोकः भगवान् अनुवर्ण्यते ॥ भगवन् अहं तक्षकादिभ्यः मृत्युभ्यः न बिभेमि (यतः) त्वया अभयं दर्शितं ब्रह्मनिर्वाणं प्रविष्टः ॥ ५ ॥ ब्रह्मन् वाचम् यच्छामि मुक्तकामाशयं चेतः अधोक्षजे प्रवेश्य असून् विसृजामि (इति) माम् अनुजानीहि ॥ ६ ॥ ज्ञानविज्ञाननिष्ठया मे अज्ञानं निरस्तं भवता परं क्षेमं भगवतः पदं दर्शितम् ॥ ७ ॥ सूतः उवाच—इत्युक्तः तम् अनुज्ञाप्य नरदेवेन पूजितः भगवान् बादरायणिः भिक्षुभिः सार्द्धं जगाम ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

षष्ठे परीक्षितो मोक्षः सर्पहोमादि तत्सुतात् । वेदशास्त्रविभागोक्तौ त्रिवेदीव्यासवर्णनम् ॥ १ ॥

एतत्पुराणं निशम्य निखिलात्मा हरिरतं पश्यति निखिलं वाऽत्मनि पश्यतीति तथा तेन अतः समेन । नतेनावनतेन मूर्ध्ना तत्पादतलमुपसृत्य तत्पादौ शिरसि निधायेत्यर्थः ॥ १ ॥ सिद्धः कृतार्थोस्मि । यतोऽनुगृहीतोऽस्मि अनुग्रहमेवाह । यद्यस्म.च्छ्रावितः चशब्दात्प्राप्तिसाधनं च श्रावितम् ॥ २ ॥ करुणात्मतामभिनंदति द्वाभ्याम् । नात्यद्भुतमिति ॥ ३ ॥ अश्रौष्म श्रुतवंतः । भवतः

---

१. तत्पादमूल० । २. स्तदिद० । ३. परीक्षिदुवाच । ४. द्भगवान्मधुसूदनः । ५. तमिदं । ६. साकं ।

सकाशात् ॥ ४ ॥ सिद्धोऽस्मीत्युक्तं तदेवाविष्करोति । भगवन्निति । यतस्त्वया दर्शितं ब्रह्म प्रविष्टः । कथंभूतम् । अभयम् । यतो निर्वाणं कैवल्यरूपम् ॥ ५ ॥ किं भूयः श्रोतुमिच्छसीति यदुक्तं तत्र सिद्धोऽहं न किंचिच्छ्रोतुमिच्छामि केवलमनुज्ञां देहीत्याह । अनुजानीहीति । वाचमित्युपलक्षणं सर्वेन्द्रियाणाम् । वाच नियम्य किं करिष्यसि तदाह । मुक्ताः कामाशयास्तद्वासना येन तच्चेतोऽधोक्षजे प्रवेश्यासून्विसृजामि ॥ ६ ॥ ननु किं प्राणत्यागेन किंचित्काल ज्ञाननिष्ठो भवेति चेत्तत्राह । अज्ञानं चेति । चकारात्तत्संस्कारश्च । तच्च त्वत्कृपयैवेत्याह । भवेति ॥ ८ ॥

## श्रीगंगाधरकृतो भावार्थदीपिकाप्रकाशः

तत्सुतात्परीक्षित्पुत्राज्जनमेजयात् । आदिना तक्षकरक्षणादिग्रहः । त्रयाणां वेदानां समाहारस्त्रिवेदी तस्य व्यासो विस्तरस्तस्य वर्णनम् ( १ ) अतोः निखिलात्मदर्शित्वात् । इत्यर्थ इति–शिरसि पादस्थापनं विना पादतलस्पर्शो न भवतीति भावः । यद्वा–निखिलानामात्मानं मनः पश्यतीति तेन तात्कालिकज्ञानोपदेशो तत्रत्यानां केषांचिज्ज्ञानिनामपि मन आनंदितमिति भावः ॥ १ ॥ साक्षाद्गर्भे बाल्ये च । यः साक्षाद्दृष्टः स एव श्रावित इति साक्षात्पदार्थः ॥ २ ॥ महतां भवादृशानाम् । अज्ञेषु मादृशेषु ॥ ३ ॥ संहितामित्युक्त्या वेदतुल्यत्वमस्य पुराणस्य सूचयति । अनुवर्ण्यते अभीक्ष्णशस्तत्तत्कथाप्रसंगेन प्रतिपाद्यते ॥ ४ ॥ हे भगवन्निति श्रीशुकं साक्षाद्भगवाञ्श्रीकृष्णस्तद्रूपेणामंत्रयतीति भावः । यथा श्रीकृष्णेन जगतोऽभयं दुष्टदैत्यहननादि दर्शितं तथा मम त्वयापि तद्दर्शितमिति तत्साम्यमुक्तम् । यद्वा–'नान्यत्त्वदभयं पश्ये' इति श्रीकुंत्युक्तेः अभयः श्रीकृष्ण एव । क्लीबत्वमार्षम् । श्रीभागवतश्रावणेनापि साक्षाच्छ्रीकृष्ण एव दर्शितो भवतीति भावः । यद्वा–ब्रह्मनिर्वाणरूपमभयं दर्शितम् । 'अधोक्षजालंबमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् । तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ।' इति सर्वभक्तशिरोमणिना श्रीकायाधवेन मनसा श्रीकृष्णचिंतनस्यैव संसारनिरासकत्वमुक्तमिति ॥ ५ ॥ हे ब्रह्मन्निति—साक्षात्परब्रह्ममूर्तिस्त्वमतो मामाज्ञापयेति भावः । अधोक्षजे परब्रह्मणि श्रीकृष्ण एव 'कृष्णे मनः समावेश्य संत्यक्ष्येऽहं कलेवरम्' इति द्वितीयोक्तेः । असून्प्राणान् ॥ ६ ॥ अत्राक्षिपति नन्विति । ज्ञानं श्रीकृष्णानुभवो विज्ञानं तदैश्वर्यानुभवस्तत्र निष्ठा स्थितिस्तया ॥ ७ ॥ भिक्षुभिस्तत्रत्यैः कथाश्रवणार्थमागतैर्दुर्वासःप्रभृतिभिः संन्यासिभिः । नरदेवेन परीक्षिता । पूजितोऽभ्युत्थानपुष्पाद्यैरर्चितः ॥ ८–१० ॥

## अन्वितार्थप्रकाशिका

षष्ठे परीक्षितो मोक्षः सर्पसत्रं तदाहृतिः । वेदत्रयविभागश्च श्लोकास्तत्राष्टहस्तिनः ( ८० )
उवाचाष्टकमङ्घ्र्यूना नवाशीतिरनुष्टुभः ( ८८ )

एतदिति । व्यासात्मजेन निखिलात्मा भगवान् तमेव पश्यति निरन्तरं ध्यायति इति तथा तेन अतः समेन मुनिना शुकेनाभिहितं कथितमेतत्पुराणं निशम्य । यद्वा । किं भूयः श्रोतुमिच्छसीतिवचनं निशम्य विष्णुना रातो दत्तः परीक्षित् नतेन नम्रेण मूर्ध्ना तस्य पादपद्ममुपसृत्य तत्पादौ शिरसि निधायेत्यर्थः । बद्धाञ्जलिः सन्निदं वक्ष्यमाणमाह स्म ॥ १ ॥ सिद्ध इति । अहं सिद्धः कृतार्थोऽस्मि करुणात्मना भवता अनुगृहीतोऽस्मि । यत् यस्मात् मे मह्यं त्वया अनादिनिधनो जगत्कारणभूतः साक्षात् हरिर्भवता श्रावितः । चकारात् तत्प्राप्तिसाधनं च श्रावितम् ॥ २ ॥ नेति । अच्युतः आत्मनि येषां तेषां महतामज्ञेषु यः अनुग्रहस्तमत्यद्भुतम् आश्चर्यं न मन्ये स्वाभाविकत्वात् ॥ ३ ॥ पुराणेति । वयमेतां पुराणसंहितां भवतो मुखात् अश्रौष्म श्रुतवन्तः । स्फुटमन्यत् । ननु श्रीशुकदेवेन इदं पुराणमत्र समापितं तर्हि कथं प्रथमस्कन्धस्यावशिष्टद्वादशस्य च भागवतत्वम् । यज्ञस्य यथा प्रागुत्तरकृत्यकलापयोरपि यज्ञत्वमेव नाटकस्य प्राक्पश्चाद्गतयोः प्रस्तावनाशीर्वादयोरपि नाटकत्वमेव तथा प्रथमस्कन्धशेषद्वादशयोरपि भागवतत्वमिति ॥ ४ ॥ भगवन्निति । हे भगवन् ! अहं तक्षकादिभ्यो मृत्युकारणेभ्यो न बिभेमि । यतस्त्वया दर्शितमभयं भयरहितं निर्वाणं कैवल्यरूपं ब्रह्म प्रविष्टोऽस्मि । अनेनैव कृतार्थताऽपि स्पष्टीकृता ॥ ५ ॥ किं भूयः श्रोतुमिच्छसीत्युक्तं तत्र न किंचिदिच्छामि किन्त्वनुज्ञामात्रं देहीत्याह—अनुजानीहीति । हे ब्रह्मन् ! वाचमिति सर्वेन्द्रियोपलक्षणम् सर्वेन्द्रियाणि नियम्य मुक्ताः कामाशयाः कामवासना यस्मात्तथाभूतं चेतः अधोक्षजे भगवति प्रवेश्य असून् प्राणान् विसृजामि एतदर्थं मामनुज्ञां देहि ॥ ६ ॥ अज्ञानमिति । भवता दर्शितं क्षेमं निर्भयं परं सर्वोत्तमं भगवतः पदं स्वरूपं तस्य ज्ञानं विज्ञानं च साक्षात्कारात्मकं तन्निष्ठया मे अज्ञानं निरस्तं चकारात्तत्संस्कारश्च निरस्तः ॥ ७ ॥ इत्युक्त इति । स्फुटम् ॥ ८ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

॥ १–४ ॥ ब्रह्मनिर्वाणम् आनन्दरूपं ब्रह्म ॥ ५–१० ॥

## श्रीमद्वीरराघवव्याख्या

आत्मनः सिद्धार्थतां कृतज्ञतां चाविष्कुर्वन्नाह राजेत्याह सूतः—एतदिति। मुनिना शुकेनाभिहितम् एतत् किं भूयः श्रोतुमिच्छसीत्येतन्निशम्य कथम्भूतेन समेनेति भावप्रधानो निर्देशः साम्येन निखिलात्मनः पश्यतीति तथा तेन नतेन नम्रेण मूर्ध्ना तस्य पादपद्ममुपसृत्य संस्पृश्य स विष्णुरातः परीक्षित् तं मुनिं प्रति इदं वक्ष्यमाणमाह ॥ १ ॥ उक्तिमेवाह—सिद्ध इति। सिद्धोऽस्मीति कुतः यतः भवताऽनुगृहीतोऽस्मि कोऽसावनुग्रहः? मे मह्यमनादिनिधनो हरिः च शब्दात्तत्प्राप्त्युपायश्च श्रावित इति यदेषः ॥ २ ॥ करुणात्मतामाविष्करोति—नेति। अच्युते आत्मा मनो येषां तेषाम् अत एव महतां यत् वात्सल्यसौशील्यादिगुणोत्कृष्टानां भवतामिदं नात्यद्भुतं किन्तद्यदज्ञेष्वत एव तापत्रयतप्तेषु भूतेष्वनुग्रह इत्येतत् ॥ ३ ॥ पुराणसंहितामिति। भवतः सकाशादश्रौष्म श्रुतवन्तः कथम्भूतां यस्यां संहितायाम् ॥ ४ ॥ सिद्धोऽस्मीत्येतदुपपादयति—भगवन्! इति अभयहेतुत्वेनात्मानं विशिनष्टि, त्वया दर्शितमभयं निर्वाणमानन्दरूपं (मात्रं) ब्रह्म प्रविष्टः तदनुभवमग्न इत्यर्थः ॥ ५ ॥ तदुक्तं किं भूयः श्रोतुमिच्छसीति तत्र सिद्धोऽहं न किञ्चिच्छ्रोतुमिच्छामि किंत्वनुज्ञां देहीत्याह—अनुजानीहि हे ब्रह्मन्! वाचं यच्छामि मौनं बिभर्मि मुक्ताः कामाः आशया तद्वासनाश्च यस्मात्तस्मात् अधोक्षजे निवेश्यासून् प्राणान् विसृजामि तदथ मामनुजानीहि ॥ ६ ॥ पुनः सिद्धार्थतामेवाविष्करोति—अज्ञानमिति। ज्ञानमुपदेशजन्यं विज्ञानं भगवदनुभवात्मकन्तन्निष्ठयाऽज्ञानन्देहात्मभ्रमस्वतन्त्रात्मभ्रममूलं निरस्तं भव तत्क्षेमं केवल सुखरूपं भगवतः पदं स्वरूपं यतो दर्शितम् ॥ ७ ॥ इतीति। तं राजानमनुज्ञायानुज्ञाप्य नरदेवेन राज्ञा पूजितः भिक्षुभिः मुनिभिः सह जगाम ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

श्रीनारायणानुग्रहेण परीक्षितो देहवियोगलक्षणं मरणं जनमेजयस्य पितृभक्तिप्रदर्शनाय सर्पयागः शक्रस्य च शक्रस्य स्वविमानपातोपेक्षां कथयत्यस्मिन्नध्याये; तत्रादौ परीक्षितः शुकानुज्ञानदानप्रार्थनाप्रकारं वक्तुमाह—एतदिति। एतत्पुराणं निखिलं पूर्णमात्मानं पश्यतीति निखिलात्मदृक् तेन समस्तस्वामिदृशा वा ॥ १ ॥ सिद्धः सम्पादितपुरुषार्थदेहः ॥ २ ॥ दीनेष्वनुग्रह इति यत्तादिदम् ॥ ३ ॥ कोऽयमनुग्रह इति तमाह—पुराणेति ॥ ४ ॥ भयाभावे निमित्तमाह—प्रविष्ट इति निर्वाणमानन्दं प्राकृतशरीररहितं वा ॥ ५ ॥ कामानामाशयः शयनं यस्मात्तज्जडचेतो निगृह्याऽधोक्षजे प्रवेक्ष्ये ॥ ६ ॥ क्षेमं मङ्गलं 'क्षेमो ना प्राप्तरक्षायां मोक्षेऽप्यस्त्री तु मङ्गले' इति यादवः ॥ ७-८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

॥१॥ सिद्धोऽस्मीत्यादि। किञ्च, अच्युतात्मनाम् अच्युतस्यैवात्मा स्वभावो येषां तेषां महतामात्मारामाणामपीति तद्भावभावितत्वादनुग्रहादयो गुणा युक्ता एव तस्मान्नात्यद्भुतमित्यर्थः ॥ २-४ ॥ यस्मादश्रौष्म तस्मादेव भगवन्निति अधुना तु यदुपदिष्टं तच्च मम जातमेवेत्याह—प्रविष्ट इति निर्वाणं परमानन्दस्वरूपं ब्रह्म सर्वतो बृहद्भगवत्तत्त्वं प्रविष्टस्तस्मिन्नाविष्ट इत्यर्थः ॥ ५ ॥ अधोक्षजे श्रीकृष्णे 'अधोऽनेन शयानेन' इत्यादि श्रीहरिवंशोक्तेः ॥ ६ ॥ भगवतः पदमित्यत्र पदशब्दस्य चरणारविन्दवाचकत्वं 'ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपादमूलम्' इत्येवास्ति प्रथमं साधकम् ॥ ७-८ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

षष्ठे कृष्णपदप्राप्तीराज्ञोऽथ जनमेजयात्। सर्पहोमस्ततो वेदत्रयशाखोपवर्णनम् ॥

निखिलात्मा श्रीकृष्णस्तं पश्यतीति तेन यद्वा, निखिलमप्यात्मानं मनः पश्यतीति तेन तात्कालिकेन ब्रह्मज्ञानोपदेशेन तत्रस्थानां केपाञ्चित् ज्ञानिनामपि मनः आनन्दितमिति भावः। यतः समेन ॥ १ ॥ सिद्धोऽस्मि कृतार्थोऽस्मि मे साक्षादिति गर्भे बाल्ये च साक्षात्कृतो यो हरिः श्रीकृष्णः स एव श्रावितस्त्वया स एव मया श्रुतः ॥ २ ॥ अच्युत एव आत्मा मनो येषां तेषाम् ॥ ३ ॥ ननु, मत्तः श्रुतस्यास्य शास्त्रस्य कः खल्वर्थस्त्वया अवधारितः इत्यपेक्षायामाह—पुराणेति। भगवाननुवर्ण्यते इत्यन्यवर्णनस्यापि तत्पोषणार्थत्वेन तदङ्गत्वात् भगवदनुवर्णनत्वमेवेति भावः ॥ ४ ॥ किन्त्वेकमेव वाक्यं मन्मनोऽभिज्ञं न त्वया मां प्रति नोक्तं यद्यपि तदप्याशङ्कावतो ममैतावदेवासह्यमभूदित्याह—हे भगवन्! सर्वज्ञ! मच्चित्तस्य भक्त्यै कनिष्ठत्वं जानन्नपि किमेवमुपदिशतीति भावः। तक्षकादिभ्यस्तथा विविधजन्मान्तरप्राप्तेभ्यो मृत्युभ्यः सकाशादहं न बिभेमि किन्तु त्वया दर्शितमभयं ब्रह्म निर्वाणं प्रविष्टः सन्नेव बिभेमीत्यर्थः। अत्र गृहे स्थितो नानोपद्रवेभ्यो न बिभेमि किन्तु वनं प्रविष्टः सन्नेवेतिवत् तस्माद्वनं न प्रविशामीति तत्राभिप्रायः तथैवात्रापि तक्षकादिभ्यः पुनः पुनर्मृत्युभ्यश्च सकाशादपि त्वया दर्शिताद्ब्रह्मनिर्वाणान्मम महाभयमिति वाक्यार्थः। तेन पञ्चमस्कन्धवाक्याद्भगवदीयत्वेनैव समाप्तसर्वार्थानां 'नारायणपराः सर्वे न कुतश्चन बिभ्यति। स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः'

इत्युक्तवता भगवता श्रीमन्महारुद्रेणैव प्रकटिताभिप्रायाणामस्माकं भक्तानां निर्वाणमोक्षः खल्वसह्य एव तत्रापि 'पुनश्च भूयाद्भगवत्यनन्ते रतिः प्रसङ्गश्च तदाश्रयेषु। महत्सुयां यामुपयामि सृष्टिं मैत्र्यस्तु सर्वत्र नमो द्विजेभ्यः' इति प्रायोपवेशारम्भत एव प्रतिज्ञातवन्तं मामपि ब्रह्मनिर्वाणमुपदिशसीति श्रीमुनीन्द्रे ईर्ष्यैव ध्वनिता तथापि तस्य तद्भक्तिनिष्ठां परीक्ष्यमाणस्य सुखमेवाभूत् यथा रासारम्भे आज्ञां लङ्घयन्तीनां व्रजसुन्दरीणामीर्ष्यया कृष्णस्य अत्र किंचित्याक्षेपलब्धमेव 'त्वामसि वच्मि विदुषां समवायोत्र तिष्ठति' इति 'आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत्' इत्यस्य पूर्वार्द्धान्ते यथा किञ्चित्याक्षेपलब्धं काव्यप्रकाशटीकाकृद्भिस्तथा व्याख्यात् व्याख्यान्तरं तु शास्त्रस्य मोहिनीत्वप्रतिपादकं भक्तैरग्राह्यम् ॥ ५ ॥ तस्मात् कृपया मामेतदेवाज्ञापयन्त्वेतत् प्रतिकूलमित्याह—अनुजानीहि अनुज्ञान्देहीत्यर्थः। अधोक्षजे श्रीकृष्णे मुक्तकामा शयं त्यक्तकामवासनम् ॥ ६ ॥ ज्ञानं भगवद्विषयकं विज्ञानं तदैश्वर्य्यमाधुर्य्यानुभवः ज्ञानविज्ञाननिष्ठा तव कुतो जातेत्यत आह, भवतेति। पदं स्वरूपं चरणकमलं धाम वा ॥ ७ ॥ भिक्षुभिः सर्वमुनीन्द्रैः ॥ ८ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

षष्ठाध्याये श्रीशुकस्य गमनं राज्ञो मुक्तिः सर्पयज्ञवेदशाखाप्रवृत्तिश्च वर्ण्यते—एतदिति। निखिलात्मानं सर्वात्मानं श्रीकृष्णं पश्यतीति संस्तेन ॥ १ ॥ चकारात् तत्प्राप्तिसाधनं च श्रावितम् ॥ २–३ ॥ अश्रौष्म श्रुतवन्तः ॥ ४ ॥ त्वया दर्शितं ब्रह्म श्रीकृष्णाख्यं निर्वाणं समानातिशयानन्दरूपम् ॥ ५ ॥ यदुक्तं किं भूयः श्रोतुमिच्छसि' इति तत्र ब्रह्मणि प्रपन्ननिष्ठत्वान्न किंचिच्छ्रवणेच्छाऽतोऽनुज्ञां देहीत्याह—अनुजानीहीति। वाच वागिन्द्रियोपलक्षितानि सर्वाणीन्द्रियाण यच्छामि निवृत्तिकानि करोमि अधोक्षजे श्रीकृष्णे चेतः प्रवेश्य असून् विसृजामि ॥ ६ ॥ भगवतः परं प्रकृतिमण्डलाद्धा ह्वदे शीयं पदं स्थानं दर्शयामास लोकं स्वं गोपानां तमसः परमित्यादिषु भवत दर्शितमेव देहं हित्वा तत्र यास्यामीति भावः ॥ ७–८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

षष्ठे परीक्षितो मोक्षः सर्पहोमादि तत्सुतात्। वेदशाखाविभागोक्तौ त्रिवेदीव्यासवर्णनम् ॥ १ ॥

व्यासात्मजेन शुकेनाभिहितं कथितमेतत्पुराणं निशम्य। यद्वा किं भूयः श्रोतुमिच्छसीति वचनं निशम्य परीक्षित् नतेन नम्रेण मूर्ध्ना तस्य पादपद्ममुपसृत्य संस्पृश्य बद्धाञ्जलिः सन्निदं वक्ष्यमाणमाहेत्यन्वयः। एवम्भूतेनैव कृत उपदेशः सफलो भवतीत्याशयेन शुकं विशिनष्टि—मुनिना मननशीलेन। निखिलात्मा भगवांस्तमेव पश्यति निरन्तरं ध्यायतीति तथा तेन। अतः समेन राजाऽप्येतच्छ्रवणेन कृतार्थतार्थमेव भगवता रक्षितः अन्यथा तक्षकादपि रक्षितः स्यादित्याशयेनाह—स विष्णुरात इति ॥ १ ॥ तद्वचनमेवाह—सिद्धोऽस्मीति षड्भिः। सिद्धोऽस्मि अहं कृतार्थोऽस्मि यतो भवताऽनुगृहीतोऽस्मि। एवमनुग्रहस्य तव कृपैव हेतुर्न मत्तः किञ्चित्प्रयोजनमस्तीत्याशयेनाह—करुणात्मनेति। कोऽसावनुग्रहस्तत्राह—यत् यस्मात् अनादिनिधनो जगत्कारणभूतः साक्षात् हरिर्भवता श्रावितः चकारात् तत्प्राप्तिसाधनं च श्रावितम् ॥ २ ॥ करुणात्मतामभिनन्दति—नात्यद्भुतमिति द्वाभ्याम्। महता यस्तापतप्तेषु अनुग्रहस्तमत्यद्भुतं आश्चर्यं न मन्ये स्वाभाविकत्वात्। महतां लक्षणमाह—अच्युत आत्मनि मनसि येषां तेषामिति। सन्तापे हेतुमाह—अज्ञेष्विति ॥ ३ ॥ भवतः सकाशात् अश्रौष्म वयं सर्वे श्रुतवन्तः ॥ ४ ॥ यदुक्तं मरिष्य इति बुद्धिं जहीति तत्राह—भगवन्निति। यतस्त्वया दर्शितमभयं भयरहितं निर्वाणं कैवल्यरूपं ब्रह्म प्रविष्टोऽस्मि। अनेनैव कृतार्थताऽपि स्पष्टीकृता ॥ ५ ॥ कृतार्थत्वान्न किञ्चिच्छ्रवणेच्छातोऽनुज्ञां देहीत्याह—अनुजानीहीति। हे ब्रह्मन् वाचमिति सर्वेन्द्रियोपलक्षणं सर्वेन्द्रियाणि नियम्य मुक्ताः कर्माशयाः कामवासना यस्य तथाभूतं चेतः अधोक्षजे भगवति प्रवेश्य असून् प्राणान् विसृजामि। एतदर्थं मामनुज्ञां देहि ॥ ६ ॥ पुनरात्मनः कृतार्थतामेव स्पष्टयति—अज्ञानमिति। भवता दर्शितं क्षेमं निर्भयं परं सर्वोत्तमं भगवतः पदं स्वरूपं तस्य ज्ञानं विज्ञानं च साक्षात्कारात्मकं तन्निष्ठया मे अज्ञानं निरस्तं चेत्यन्वयः ॥ ७–८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

मोक्षः परीक्षितः षष्ठे सर्पसत्त्रेऽहिदाहनम्। विभागोक्तौ च वेदानां व्यासवर्णनम् ॥ १ ॥

आत्मनः सिद्धतां कृतज्ञतां चाविष्कुर्वन्नाह राजेत्याह सूतः। एतदिति। निखिलात्मा हरिस्तं पश्यत्यात्मनीति निखिलात्मदृक् तेन, समेन सर्वेषु समदर्शिना अब्रह्मात्मकं किमपि नास्तीति जानतेत्यर्थः। व्यासात्मजेन मुनिना श्रीशुकेन अभिहितं किं भूयः श्रोतुमिच्छसि, इति यत् कथितं, एतत् निशम्य, विष्णुरातः गर्भे भगवता त्रातः, सः परीक्षित्, नतेन मूर्ध्ना तत्पादपद्म

उपसृत्य, शुकचरणाब्जद्वयं स्वशिरसि निधायेत्यर्थः। बद्धाञ्जलिः सन्, तं मुनिं प्रति, इदं वक्ष्यमाणं आह॥ १॥ उक्तिमेवाह सिद्धोऽस्मीति। हे मुने, अहं सिद्धः सिद्धार्थः अस्मि। कुतः। करुणात्मना भवता अनुगृहीतः अस्मि। कोऽसावनुग्रहस्तत्राह। मे मह्यं, अनादिनिधनः साक्षात् हरिः श्रावितः। चशब्दात् यश्च तत्प्राप्त्युपायः सोऽपि एषः यद्यस्मात् श्रावित इति॥ २॥ करुणात्मतामाविष्करोति। नेति। अज्ञेषु अतएव तापतप्तेषु आध्यात्मिकादित्रिविधपरितापसंतप्तेषु भूतेषु, अनुग्रहः इति यत्, एतत् अच्युते भगवति आत्मा मनो येषां तेषां अतएव, महतां वात्सल्यसौशील्यादिगुणोत्कृष्टानां भवतां अत्यद्भुतं, अहं न मन्ये॥३॥ पुराणसंहितामिति। यस्यां पुराणसंहितायां खलु, उत्तमश्लोकः भगवान्, अनुवर्ण्यते। तथाविधां एतां पुराणसंहितां, वयं भवतः सकाशात्, अश्रौष्म श्रुतवन्तः॥ ४॥ सिद्धोऽस्मीत्येतदुपपादयति। भगवन्निति। हे भगवन्, अहं तक्षकादिभ्यः न बिभेमि। अभयहेतुत्वेनात्मानं विशिनष्टि। यतः त्वया दर्शितं अभयं निर्वाणमानन्दरूपं ब्रह्म प्रविष्टः, तदनुभवमग्नो जातोऽस्मीत्यर्थः॥ ५॥ यदुक्तं 'किं भूयः श्रोतुमिच्छसि' इति तत्र सिद्धोऽहं, न किंचिच्छ्रोतुमिच्छामि, किं त्वनुज्ञां देहीत्याह। अनुजानीहीति। हे ब्रह्मन्, वाचं यच्छामि मौनं बिभर्मीत्यर्थः। मुक्ताः कामा आशयास्तद्वासनाश्च यस्मात्, तथाभूतं चेतः अधोक्षजे प्रवेश्य आवेश्य, असून् प्राणान् विसृजामि। तदर्थं मां अनुजानीहि॥ ६॥ पुनः सिद्धार्थतामेवाविष्करोति अज्ञानमिति। ज्ञानमुपदेशजन्यं च विज्ञानं भगवदनुभवात्मकं च तयोर्निष्ठा सम्यगवगमनं तया, मे मम अज्ञानं च देहात्मभ्रमस्वतन्त्रात्मभ्रममूलमनवबोधनमपीत्यर्थः। निरस्तं, कुतः। यतः भवता निष्कारणापारकरुणावता त्वया, क्षेमं केवलसुखरूपं भगवतः प्रत्यक्षीक्षितश्रीकृष्णस्य पदं स्वरूपं दर्शितं, तत इति शेषः। अनेन भूतपूर्वभगवदवतारभजनतः सांप्रतजातभगवदवतारभजनादरेतिश्रैष्ठ्य' प्रतिपादितम्। 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति वाक्ये वर्त्तमानप्रयोगप्रदर्शनेन भगवता तथैव बोधितत्वादिति भावः॥ ७॥ इतीति इत्युक्तप्रकारेण उक्तो राज्ञाभिहितः, भगवान् बादरायणिः श्रीशुकः, तं राजानं अनुज्ञाप्यानुज्ञाय, नरदेवेन राज्ञा पूजितः सन्, भिक्षुभिः साकं मुनिभिः सहेत्यर्थः। जगाम ततोऽगच्छत्॥ ८॥

## हिन्दी अनुवाद

## परीक्षित् की परमगति, जनमेजय का सर्पसत्र और वेदों के शाखाभेद

श्रीसूतजी कहते हैं—शौनकादि ऋषियो! व्यासनन्दन श्रीशुकदेव मुनि समस्त चराचर जगत् को अपनी आत्मा के रूप में अनुभव करते हैं और व्यवहार में सबके प्रति समदृष्टि रखते हैं। भगवान् के शरणागत एवं उनके द्वारा सुरक्षित राजर्षि परीक्षित् ने उनका सम्पूर्ण उपदेश बड़े ध्यान से श्रवण किया। अब वे सिर झुकाकर उनके चरणों के तनिक और पास खिसक आये तथा अञ्जलि बाँधकर उनसे यह प्रार्थना करने लगे॥ १॥ राजा परीक्षित्ने कहा—भगवन्! आप करुणा के मूर्तिमान् स्वरूप हैं। आपने मुझपर परम कृपा करके अनादिअनन्त, एकरस, सत्य भगवान् श्रीहरि के स्वरूप और लीलाओं का वर्णन किया है। अब मैं आप की कृपा से परम अनुगृहित और कृतकृत्य हो गया हूँ॥ २॥ संसार के प्राणी अपने स्वार्थ और परमार्थ के ज्ञान से शून्य हैं और विभिन्न प्रकार के दुःखों के दावानल से दग्ध हो रहे हैं। उनके ऊपर भगवन्मय महात्माओं का अनुग्रह होना कोई नयी घटना अथवा आश्चर्य की बात नहीं है। यह तो उनके लिये स्वाभाविक ही है॥ ३॥ मैंने और मेरे साथ और बहुत-से लोगों ने आपके मुखारविन्द से इस श्रीमद्भागवत महापुराण का श्रवण किया है। इस पुराण में पद-पदपर भगवान् श्रीहरि के उस स्वरूप और उन लीलाओं का वर्णन हुआ है, जिसके गान में बड़े-बड़े आत्माराम पुरुष रमते रहते हैं॥ ४॥ भगवन्! आपने मुझे अभयपद का, ब्रह्म और आत्मा की एकता का साक्षात्कार करा दिया है। अब मैं परम शान्तिस्वरूप ब्रह्म में स्थित हूँ। अब मुझे तक्षक आदि किसी भी मृत्यु के निमित्त से अथवा दल-के-दल मृत्युओं से भी भय नहीं है। मैं अभय हो गया हूँ॥ ५॥ ब्रह्मन्! अब आप मुझे आज्ञा दीजिये कि मैं अपनी वाणी बंद कर लूँ, मौन हो जाऊँ और साथ ही कामनाओं के संस्कार से भी रहित चित्त को इन्द्रियातीत परमात्मा के स्वरूप में विलीन करके अपने प्राणों का त्याग कर दूँ॥ ६॥ आप के द्वारा उपदेश किये हुए ज्ञान और विज्ञान में परिनिष्ठित हो जाने से मेरा अज्ञान सर्वदा के लिये नष्ट हो गया। आपने भगवान् के परम कल्याणमय स्वरूप का मुझे साक्षात्कार करा दिया है॥ ७॥ श्रीसूतजी कहते हैं—शौनकादि ऋषियो! राजा परीक्षित् ने भगवान् श्रीशुकदेवजी से इस प्रकार कहकर बड़े प्रेम से उनकी पूजा की। अब वे परीक्षित् से बिदा लेकर समागत त्यागी महात्माओं, भिक्षुओं के साथ वहाँ से चले गये॥ ८॥

परीक्षिदपि राजर्षिरात्मन्यात्मानमात्मना । समाधाय परं दध्यावस्पन्दासुर्यथा तरुः ॥ ९ ॥
प्राक्कूले बर्हिष्यासीनो गङ्गाकूल उदङ्मुखः । ब्रह्मभूतो महायोगी निःसङ्गश्छिन्नसंशयः ॥ १० ॥
तक्षकः प्रहितो विप्राः क्रुद्धेन द्विजसूनुना । हन्तुकामो नृपं गच्छन् ददर्श पथि कश्यपम् ॥ ११ ॥
तं तर्पयित्वा द्रविणैर्निवर्त्य विषहारिणम् । द्विजरूपप्रतिच्छन्नः कामरूपोऽदशन्नृपम् ॥ १२ ॥
ब्रह्मभूतस्य राजर्षेर्देहोऽहिगरलाग्निना । बभूव भस्मसात् सद्यः पश्यतां सर्वदेहिनाम् ॥ १३ ॥
हाहाकारो महानासीद् भुवि खे दिक्षु सर्वतः । विस्मिता ह्यभवन् सर्वे देवासुरनरादयः ॥ १४ ॥
देवदुन्दुभयो नेदुर्गन्धर्वाप्सरसो जगुः । ववृषुः पुष्पवर्षाणि विबुधाः साधुवादिनः ॥ १५ ॥
जनमेजयः स्वपितरं श्रुत्वा तक्षकभक्षितम् । यथा जुहाव संक्रुद्धो नागान् सत्रे सह द्विजैः ॥ १६ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—राजर्षिः परीक्षित् अपि आत्मना आत्मानम् आत्मनि समाधाय अस्पन्दासुः यथा तरुः परं दध्यौ ॥ ९ ॥ गङ्गाकूले प्राक्कूले बर्हिषि उदङ्मुखः निःसङ्गः छिन्नसंशयः ब्रह्मभूतः महायोगी आसीनः ॥ १० ॥ विप्राः क्रुद्धेन द्विजसूनुना प्रहितः नृपं हंतुकामः गच्छन् तक्षकः पथि कश्यपं ददर्श ॥ ११ ॥ विषहारिणं तं द्रविणैः तर्पयित्वा निवर्त्य कामरूपः द्विजरूपप्रतिच्छन्नः नृपम् अदशत् ॥ १२ ॥ ब्रह्मभूतस्य राजर्षेः देहः सर्वदेहिनां पश्यतां अहिगरलाग्निना सद्यः भस्मात् बभूव ॥ १३ ॥ भुवि खे दिक्षु सर्वतः महान् हाहाकारः आसीत् देवासुरनरादयः सर्वे विस्मिताः हि अभवन् ॥ १४ ॥ देवदुन्दुभयः नेदुः गन्धर्वाप्सरसः जगुः साधुवादिनः विबुधाः पुष्पवर्षाणि ववृषुः ॥ १५ ॥ जनमेजयः स्वपितरं तक्षकभक्षितं श्रुत्वा संक्रुद्धः द्विजैः सह नागान् सत्रे जुहाव ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

आत्मना बुद्ध्या आत्मानं मन आत्मनि प्रत्यक्प्रकाशे समाधाय परमात्मानं दध्यौ । अस्पंदासुर्लीनप्राणः । यथा तरुः स्थाणुः ॥ ९ ॥ तमेव विशिनष्टि । प्राक्कूले प्रागग्रे । बर्हिषि दर्भे ॥ १० ॥ तदेवं ब्रह्मभूते तस्मिंस्तक्षकागमनादिकं पिष्टपेषणमिवाभवदिति दर्शयति तक्षक इति त्रिभिः । हे विप्राः ॥ ११ ॥ तं विषचिकित्सया परीक्षिद्रक्षणेन द्रव्यार्जनायागच्छंतम् । तत्र स्वालीढवटवृक्षस्य भस्मीभूतस्य पुनरंकुरादिक्रमेणोत्थापनाद्विषहारिणं तदपेक्षितद्रविणैः संतर्प्य ततो निवर्त्य द्विजरूपेण तिरोहितः सन्नदशत् ॥ १२ ॥ तच्च पुत्रकृत्यमिव जातमित्याह । ब्रह्मभूतस्येति ॥ १३ ॥ तत्र क्षणं सर्वेषां दुःखं च ततः परमुत्सवं चाह द्वाभ्याम् । हाहाकार इति ॥ १४–१५ ॥ प्रासंगिकमाह जनमेजय इत्यादि । सर्पाभिचारसत्रे द्विजैः सह वर्तमानो यथावदाजुहाव जुहावेति वा । सर्वसर्पाह्वाने कारणमाह । संक्रुद्ध इति ॥ १६–१८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अहो ब्राह्मणानां तपोबलं महदित्यभिप्रेत्याह—हे विप्रा इति ॥ ११ ॥ तत्र मार्गे । स्वालीढः स्वदष्टो यो वटवृक्षस्तस्य । कामरूपो देवत्वात् ॥ १२ ॥ तच्च दंशनम् । पुत्रेण यथा पितुर्देहो दह्यते तद्वज्जातम् । अहिगरलमेवाग्निस्तेन । ब्रह्मभूतस्य विचारेण तादूप्यं प्राप्तस्य ॥ १३ ॥ तत्र तदा । क्षणं क्षणमात्रम् । ततः क्षणोत्तरम् । अहो ब्राह्मणरूपेण फलानि दातुमागतेन किं कृतमित्येवं विस्मिता अभवन् ॥ १४ ॥ देवलोकेऽपि तद्गमन उत्सवोऽभूदित्याह—देवदुंदुभय इति ॥ १५ ॥ प्रासंगिकं प्रकृतम् । तक्षकेण भक्षितं दष्टम्, भक्षणवद्दंष्ट्राव्यापारसाम्याद्दंशोऽपि भक्षणशब्देनोच्यते । आह्वाने प्रयोजनाभावादाकारप्रश्लेषं त्यक्त्वाह—जुहावेति वेति ॥ १६ ॥

### अन्वितार्थप्रकाशिका

परीक्षिदपीति । राजर्षिः परीक्षिदपि आत्मना बुद्ध्या आत्मानं मनः आत्मनि प्रत्यक्प्रकाशे समाधाय एकीकृत्य अस्पन्दासुः लीनप्राणस्तरुर्यथा परमात्मानं दध्यौ ॥ ९ ॥ प्राक्कूले इति । प्राक्कूले प्रागग्रे बर्हिषि दर्भे आसीनः । स्फुटमन्यत् ॥ १० ॥

तक्षक इति। हे विप्राः! क्रुद्धेन द्विजसूनुना प्रहितः प्रेषितस्तक्षकः नृपं हन्तुकामो गच्छन् पथि कश्यपं तन्नामानं ब्राह्मणं ददर्श॥११॥ तमिति। तं विषचिकित्सया परीक्षिद्रक्षणेन द्रव्यार्जनाय गच्छन्तं तत्र स्वालीढवटवृक्षस्य भस्मीभूतस्य पुनरङ्कुरादिक्रमेणोत्थापना- द्विषहारिणं तदपेक्षितद्रविणैः संतर्प्य ततो निवर्त्य कामरूपः स तक्षकः द्विजरूपेण तिरोहितः सन्नागत्यापेक्षितरूपेण नृपमदशत्॥१२॥ ब्रह्मेति त्रयम्। स्पष्टम्॥ १३–१५॥ जनमेजय इति। जनमेजयः स्वपितरं तक्षकभक्षितं श्रुत्वा संक्रुद्धः सन् सर्पाभिचारसत्रेण द्विजैः सह वर्त्तमानः यथा यथावत् नागान् आजुहाव मन्त्रैराचकर्ष। जुहावेत्येव वाच्छेदः॥ १६॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

विप्रा इति सम्बोधनम्॥ ११–२९॥

### श्रीमद्वीरराघवव्याख्या

परीक्षिदपि इति। आत्मनि परमात्मन्यात्मानमात्मनैव सम्यगाधाय परमात्मशेषतैकरसं स्वात्मानमेव ध्यात्वेत्यर्थः॥ ९॥ गङ्गातीरे प्रागग्रदर्भेषु उदङ्मुख आसीनः यथा तरुस्तद्वदस्पन्दासुः तिरोहितसर्वेन्द्रियव्यापारः निस्सङ्गः देहतदनुबन्ध्यभिमानरहितः छिन्नाः संशयाः देहात्मजीवपरमात्मभेदाभेदादिसंशयाः येन सः महायोगी महासमाधियुक्तः ब्रह्मभूतः संशुद्धावस्थः ब्रह्मशब्दो मुक्तावस्थाजीवपरः मुक्तो ऽभवदिति यावत्॥ १०॥ तदा हे विप्राः। क्रुद्धेन द्विजसूनुना प्रचोदितः तक्षकः नृपं हन्तुकामो गच्छन् पथि काश्यपं ददर्श॥११॥ तं विषचिकित्सया परीक्षिद्रक्षणेन [ निर्धार्य तत् ] द्रव्यार्जनाय गच्छन्तं स्वालीढस्य वृक्षस्य भस्मीभूतस्य पुनरङ्कुरादिक्रमेणोत्पादनाद्विषहारिणं तदपेक्षितद्रविणैः सन्तर्प्य निवर्त्य द्विजरूपेण तिरोहितः सन्नदशत्॥ १२॥ निर्जीवस्य शरीरस्य दंशनेन भस्मीकरणं पुत्रकृत्यमिव जातमित्याह—ब्रह्मभूतस्येति। मुक्तावस्थां प्राप्तस्य राजर्षेर्देहः सर्वदेहिनां पश्यतां सतां सद्य एव गरलाग्निना भस्मसादभवत्॥ १३॥ तत्क्षणं सर्वेषां दुःखं ततः परमुत्सवञ्चाह—द्वाभ्याम्। हाहाकार इति। भुवि खे आकाशे सर्वतः सर्वासु दिक्षु॥ १४॥ देवदुन्दुभय इति स्वयमेव दध्वनुः॥ १५॥ प्रासङ्गिकमाह—जनमेजय इत्यादिना। तदा सत्रे क्रोधेन प्रारब्धे सर्पाभिचारयोगे सर्पानाजुहाव मन्त्रैराचकर्ष सर्वसर्पाह्वाने कारणं सङ्क्रुद्ध इति॥ १६॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्पन्दासुर्निश्चलेन्द्रियः विषयव्यापारशून्येन्द्रिय इत्यर्थः॥ ९॥ ब्रह्मणि भूतः॥ १०॥ हे विप्राः!॥ ११–१२॥ अहिगरलाग्निना सर्पविषाग्निना॥ १३–१५॥ कथान्तरमारभ्यते—जनमेजय इत्यादिना॥ १६–१७॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

परमधोक्षजं तदाख्यं श्रीकृष्णमेव दध्यौ ब्रह्मभूतः प्रसन्नेत्यादिरीत्या ब्रह्मभूतः॥ ९–२९॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

आत्मना बुद्ध्या आत्मानं श्रीकृष्णम् आत्मनि मनसि परम् अतिशयेन अस्पन्दासुः अन्तरेव लीनप्राणः॥ ९॥ प्राक्कूले बर्हिषि प्रागग्रे दर्भे त्रिगुणातीतत्वाद्ब्रह्मभूतः "तासां मध्ये साक्षाद्ब्रह्म गोपालपुरी हि" इतिवत्॥ १०॥ तदेवं ब्रह्मभूते तस्मिन् तक्षकागमनादिकं पिष्टपेषणमभवदिति दर्शयति— तक्षक इति त्रिभिः॥ ११॥ तं विषचिकित्सया परीक्षिद्रक्षणेन द्रव्यार्जनायागच्छन्तं तत्र स्वालीढवटवृक्षस्य भस्मीभूतस्य पुनरङ्कुरादिक्रमेणोत्थापनात् विषहारिणं तदपेक्षितद्रविणैः सन्तर्प्य ततो निवर्त्त्य द्विजरूपेण तिरोहितः सन्नदशत्॥ १२॥ तत्र पुत्रकृत्यमित्याह—ब्रह्मभूतस्येति॥ १३–१५॥ यथा यथावत् निस्सर्पमिदं जगत् करिष्य इति वदन् क्रुद्धः द्विजैः सह स्थितः सन्॥ १६–२०॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अस्पन्दासुः जितप्राणः॥ ९॥ प्राक्कूले बर्हिषि प्रागग्रे दर्भे ब्रह्मभूतं प्राधान्ये प्राप्तं येन सः॥ १०–१२॥ प्रकृतेः परं ब्रह्मप्राप्तस्य देहो भस्मसाद्बभूव राजर्षिस्तु "एतां गतिं भागवतो गतो यः सवै पुनर्नेह विसज्जतेङ्ग" इति श्रीशुकप्रोक्तेन मार्गेण प्रकृतेः परं लोकं परं विरजस्कं विशोकं यास्यत्ययं भागवतप्रधानः इति सर्वज्ञानां महामुनीनां वचनादित्यर्थः॥ १३–२१॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

शुकगमनानन्तरं राजा किं कृतवानित्यपेक्षायामाह—परीक्षिदपीति। परीक्षिदपि आत्मना बुद्ध्या आत्मानं मनः आत्मनि परमात्मनि समाधाय एकीकृत्य तं परमात्मानं दध्यावित्यन्वयः। तं विशिनष्टि—अस्पन्दासुः लीनप्राणः यथा तरुः स्थाणुः॥ ९॥

प्राक्कूले प्रागग्रे बर्हिषि दर्भे आसीनः ॥ १० ॥ तदेवं ब्रह्मभूते तस्मिंस्तक्षकागमनादिकं पिष्टपेषणमिवाभवदित्याह—तक्षक इति त्रिभिः ॥ ११ ॥ तं विषचिकित्सया परीक्षिद्रक्षणेन द्रव्यार्जनाय गच्छन्तम्। तत्र स्वालीढवटवृक्षस्य भस्मीभूतस्य पुनरङ्कुरादि-क्रमेणोत्थापनाद्विषहारिणं तदपेक्षितद्रविणैः सन्तर्प्य ततो निवर्त्य द्विजरूपेण तिरोहितः सन्नागत्यापेक्षितरूपेण नृपमदशत्। यतः कामरूपः यथेष्टरूपधारणे शक्तः ॥ १२ ॥ तच्च तस्य पुत्रकृत्यमिव जातमित्याह—ब्रह्मभूतस्येति ॥ १३ ॥ तत्र क्षणं सर्वेषां दुःखं ततः परमुत्सवं चाह—हाहाकार इति द्वाभ्याम् ॥ १४–१५ ॥ प्रासङ्गिकमाह—जनमेजय इत्यादिना वाक्यमित्यन्तेन सर्पाभिचारसत्रे द्विजैः सह वर्त्तमानः यथावत् नागान् आजुहाव मन्त्रैराचकर्ष। सर्वसर्पावाहने कारणमाह—संक्रुद्ध इति ॥ १६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

परीक्षिदिति। राजर्षिः परीक्षिदपि, आत्मनि परमात्मनि श्रीकृष्णे आत्मानं ब्रह्मभावभावितं स्वात्मानं, आत्मनैव स्वत एव समाधाय परमात्मशेषतैकरसं स्वात्मानं कृत्वेत्यर्थः। तरुः यथा अस्पन्दासुः सम्यग्विलीनप्राणः निवृत्तसर्वेन्द्रियव्यापार इति यावत्। एवंभूतः सन्, परं परमात्मानं दध्यौ ॥ ९ ॥ तमेव विशिनष्टि। प्राक्कूल इति। गङ्गाकूले गङ्गातीरे प्राक्कूले प्रागग्रे, बर्हिषि दर्भे, प्रागग्रदर्भेष्वित्यर्थः। उदङ्मुखः आसीनः, निःसङ्गः देहतदनुबन्ध्याद्यभिमानरहितः, छिन्नाः संशयाः देहात्मजीवपरमात्मभेदा-भेदादिसंशयाः यस्य तथाभूतः, महायोगी महासमाधियुक्तः, अत एव ब्रह्मभूतः, अभवदिति शेषः ॥१०॥ तक्षक इति। तदा हे विप्राः, क्रुद्धेन द्विजसूनुना प्रहितः प्रचोदितः तक्षकः, नृपं हन्तुकामः अतएव पथि गच्छन्, काश्यपं कश्यपगोत्रिणं कंचिद्विषचिकित्सकं ब्राह्मणं ददर्श ॥ ११ ॥ तमिति। तं विषचिकित्सया परीक्षिद्रक्षणेन द्रव्यार्जनाय गच्छन्तं विषहारिणं स्वालीढवृक्षस्य भस्मभावं प्राप्तस्य पुनरङ्कुरादिक्रमेणोत्थापनाद्विषापहर्त्तारम्, ज्ञात्वेति शेषः। द्रविणैः तदपेक्षितद्रव्यदानैः तर्पयित्वा संतर्प्य, निवर्त्त्य, कामरूपः स्वेच्छारूपधरः अतएव द्विजरूपप्रतिच्छन्नः द्विजरूपेण तिरोहितस्वस्वरूपः सन्, नृपं अदशत्। अत्रास्मात् श्लोकात्प्राक् 'तत्रालीढं वटं दृष्ट्वा तक्षकेण महात्मना। चकार निर्विषं विप्रो मन्त्रपूतेन वारिणा' इति श्लोकं केचित् पठन्ति। स त्वस्माभिः क्षेपकत्वादुपेक्ष्य न व्याख्यातः। तमिति श्लोकटीकयैतदर्थावगमात्। तक्षककृतं विषापहरविप्रनिवर्त्तनं तक्षकमात्रवेद्यमन्यैः कथं ज्ञातमित्यस्य सापेक्ष-त्वादेतावदत्र कथ्यते। यदा तक्षकेण स्वविषवीर्यप्रदर्शनाय वटो दष्टस्तदानीं काष्ठग्रहणार्थं प्रागवटारूढो विप्रोऽपि कश्चिद्वटावस्थां प्राप्तस्ततस्तेन काश्यपेन विषापहारेण मन्त्रितेन जलाञ्जलिक्षेपेण स वटो दाहात् प्राचीनावस्थां गमितस्तेन सह स विप्रोऽपि दाहतः प्राक्तनीं दशां प्राप्तस्ततस्तयोर्द्वयोर्गमनानन्तरं वटारूढो द्विजा वटादवतीर्य परीक्षिन्मन्त्रिणः प्राप्यैतदचकथयत। तैरेव सकलः स वृत्तान्तो जनमेजयादेः पुरतः कथित इति महाभारतादिपर्वणः पञ्चाशत्तमाध्यायतोऽवगन्तव्यमिति ॥ १२ ॥ निर्जीवस्य शरीरस्य दंशनेन भस्मीकरणं पुत्रकृत्यमिव जातमित्याह। ब्रह्मभूतस्येति। ब्रह्मभूतस्य मुक्तावस्थां प्राप्तस्य, राजर्षेः देहः, सर्वदेहिनां पश्यतां सतां, सद्य एव गरलाग्निना भस्मसात् बभूव हि। निर्जीवं पितृदेहं पुत्रोऽग्निप्रदानेन दहति तथा तक्षकोऽपि पितृसमनृपदेहं विषाग्निप्रदानेन दग्धवानतः पुत्रकृत्यमिवैतज्जातमिति भावः ॥ १३ ॥ तत्क्षणं सर्वेषां दुःखं ततः परमुत्सवं चाह हाहाकार इति द्वाभ्याम्। हाहाकार इति। भुवि खे आकाशे, सर्वतः सर्वासु दिक्षु च महान् हाहाकारः, आसीत् सर्वे देवासुरनरादयः विस्मिताः अभवन् हि ॥ १४ ॥ देवदुन्दुभय इति। तदा देवदुन्दुभयः नेदुः स्वयमेव दध्वनुः। गन्धर्वाप्सरसः जगुः, विबुधा देवाः, साधु-वादिनः सन्तः, पुष्पवर्षाणि ववृषुः ॥ १५ ॥ प्रासङ्गिकमाह जनमेजय इत्यादिना वाक्यमित्यन्तेन। जनमेजय इति। तदा जनमेजयः, स्वपितरं तक्षकभक्षितं तक्षकाद्दिष्टं श्रुत्वा, संक्रुद्धः सन्, सत्त्रे सर्पयागे, क्रोधेन प्रारब्धे सर्पाभिचारयागे इति यावत्। द्विजैः सह वर्त्तमानः सन्निति शेषः। नागान् सर्पान्, यथा यथावदेव जुहाव। मन्त्रैराकर्षणपूर्वं प्रज्वलदग्निकुण्डेऽहौषीदित्यर्थः ॥ १६ ॥

## हिन्दी अनुवाद

राजर्षि परीक्षित् ने भी बिना किसी बाह्य सहायता के स्वयं ही अपने अन्तरात्मा को परमात्मा के चिन्तन में समाहित किया और ध्यानमग्न हो गये। उस समय उनका श्वास-प्रश्वास भी नहीं चलता था, ऐसा जान पड़ता था मानो कोई वृक्ष का ठूँठ हो ॥ ९ ॥ उन्होंने गङ्गाजी के तटपर कुशों को इस प्रकार बिछा रक्खा था, जिसमें उनका अग्रभाग पूर्व की ओर हो और उनपर स्वय उत्तर मुँह होकर बैठे हुए थे। उनकी आसक्ति और संशय तो पहले ही मिट चुके थे। अब वे ब्रह्म और आत्मा की एकतारूप महायोग में स्थित होकर ब्रह्मस्वरूप हो गये ॥ १० ॥ शौनकादि ऋषियो! मुनिकुमार शृङ्गी ने क्रोधित होकर परीक्षित् को शाप दे दिया था। अब उनका भेजा हुआ तक्षक सर्प राजा परीक्षित् को डसने के लिये उनके पास चला। रास्ते में उसने कश्यप नाम के एक ब्राह्मण को देखा ॥ ११ ॥ कश्यप ब्राह्मण सर्पविष की चिकित्सा करने में बड़े निपुण थे। तक्षक ने बहुत-सा धन देकर कश्यप को वहीं से लौटा दिया, उन्हें राजा के पास न जाने दिया। और स्वयं ब्राह्मण के रूप में छिपकर, क्यों कि वह इच्छानुसार रूप धारण कर सकता था, राजा परीक्षित् के पास गया और

उन्हें डस लिया ॥ १२ ॥ राजर्षि परीक्षित् तक्षक के डसने के पहले ही ब्रह्म में स्थित हो चुके थे। अब तक्षक के विष की आग से उनका शरीर सबके सामने ही जलकर भस्म हो गया ॥ १३ ॥ पृथ्वी, आकाश और सब दिशाओं में बड़े जोर से 'हाय-हाय' की ध्वनी होने लगी। देवता, असुर, मनुष्य आदि सब-के-सब परीक्षित् की यह परम गति देखकर विस्मित हो गये ॥ १४ ॥ देवताओं की दुन्दुभियाँ अपने आप बज उठीं। गन्धर्व और अप्सराएँ गान करने लगीं। देवता लोग 'साधु-साधु' के नारे लगाकर पुष्पों की वर्षा करने लगे ॥ १५ ॥ जब जनमेजय ने सुना कि तक्षक ने मेरे पिता जी को डस लिया है, तो उसे बड़ा क्रोध हुआ। अब वह ब्राह्मणों के साथ विधिपूर्वक सर्पों का अग्निकुण्ड में हवन करने लगा ॥ १६ ॥

सर्पसत्रे समिद्धाग्नौ दह्यमानान् महोरगान्। दृष्ट्वेन्द्रं भयसंविग्नस्तक्षकः शरणं ययौ ॥ १७ ॥
अपश्यंस्तक्षकं तत्र राजा पारीक्षितो द्विजान्। उवाच तक्षकः कस्मान्न दह्येतोरगाधमः ॥ १८ ॥
तं गोपायति राजेन्द्र शक्रः शरणमागतम्। तेन संस्तम्भितः सर्पस्तस्मान्नाग्नौ पतत्यसौ ॥ १९ ॥
पारीक्षित इति श्रुत्वा प्राहर्त्विज उदारधीः। सहेन्द्रस्तक्षको विप्रा नाग्नौ किमिति पात्यते ॥ २० ॥
तच्छ्रुत्वाऽऽजुहुवुर्विप्राः सहेन्द्रं तक्षकं मखे। तक्षकाशु पतस्वेह सहेन्द्रेण मरुत्वता ॥ २१ ॥
इति ब्रह्मोदिताक्षेपैः स्थानादिन्द्रः प्रचालितः। [1]बभूव सम्भ्रान्तमतिः सविमानः सतक्षकः ॥ २२ ॥
तं पतन्तं विमानेन सहतक्षकमम्बरात्। विलोक्याङ्गिरसः प्राह राजानं तं बृहस्पतिः ॥ २३ ॥
नैष त्वया मनुष्येन्द्र वधमर्हति [2]सर्पराट्। अनेन पीतममृतमथ वा अज[3]रामरः ॥ २४ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—समिद्धाग्नौ सर्पसत्रे दह्यमानान् महोरगान् दृष्ट्वा भयसंविग्नः तक्षकः इन्द्रं शरणं ययौ ॥ १७ ॥ तत्र पारीक्षितः राजा तक्षकम् अपश्यन् ( सन् ) उरगाधमः तक्षकः कस्मात् न दह्येत ( इति ) द्विजान् उवाच ॥ १८ ॥ राजेन्द्रः शक्रः शरणम् आगतं तं गोपायति तेन संस्तम्भितः असौ सर्पः अग्नौ न पतति ॥ १९ ॥ उदारधीः पारीक्षितः इति श्रुत्वा ऋत्विजः प्राह विप्राः सहेन्द्रः तक्षकः अग्नौ किम् इति न पात्यते ॥ २० ॥ तत् श्रुत्वा मखे सहेन्द्रं तक्षकम् आजुहुवुः मरुत्त्वता इन्द्रेण सह तक्षक आशु इह पतस्व ॥ २१ ॥ इति ब्रह्मोदिताक्षेपैः इन्द्रः स्थानात् प्रचालितः सविमानः सतक्षकः सम्भ्रान्तमतिः बभूव ॥ २२ ॥ अम्बरात् विमानेन सह तक्षकं पतन्तं तं विलोक्य आङ्गिरसः बृहस्पतिः तं राजानं प्राह ॥ २३ ॥ मनुष्येन्द्र एष सर्पराट् त्वया वधं न अर्हति अनेन अमृतं पीतम् अथवा अजरामरः ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

कस्मात्तक्षको न दह्यतेत्युक्ताः संतो द्विजा ऊचुः। तमिति। तेनेंद्रेण। असौ सर्पः ॥ १९ ॥ ऋत्विजः प्रत्याह सहेंद्र इंद्रसहितः किमिति न पात्यते ॥ २० ॥ तद्राज्ञो वचः श्रुत्वा आजुहुवुः। साक्षेपमाह्वानं दर्शयति। तक्षकेति। इहाग्नावाशु पतस्व। मरुत्वता मरुद्गणवतेन्द्रेण सह ॥ २१ ॥ ब्राह्मणैरुक्तैराक्षेपैः परुषवाक्यैः ॥२२॥ तं तक्षकम्। अंगिरसः पुत्रो बृहस्पतिः प्राह ॥२३-२४॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

भयेन संविग्नस्त्रस्तः ॥ १७ ॥ तत्र यज्ञकुंडाग्नौ ॥ १८-१९ ॥ हे विप्रा इति—यूयमर्थिमनोरथमवश्यं पूरयंति विशेषेण प्रांति पूरयंत्यर्थिजनाभिलषितमिति विप्रा इत्यन्वर्थसंज्ञावद्भिरुक्तेरिति भावः। किमिति न कुतो न ॥ २०-२१ ॥ इतीत्थम् ॥२२-२३॥ हे मनुष्येन्द्रेति मनुष्येष्वेव तव प्रभावो न तु देवेष्वपीति भावः। अनेन तक्षकेण। अथातः। वै निश्चितम्। अजरामरो जात इत्यर्थः। यद्वा—सर्पेण तक्षकेण सह राजत इति सर्पराडिंद्रविशेषणम्। अथवा—अत एव अजरामर इति विश्वनाथः ॥ २४ ॥

### अन्वितार्थप्रकाशिका

सर्पेति। भयेन संविग्नो व्याकुलस्तक्षकः इन्द्रं शरणं ययौ। स्फुटं शेषम् ॥ १७ ॥ अपश्यन्निति। पारीक्षितः परीक्षित्पुत्रो राजा तत्र तक्षकमपश्यन् द्विजानुवाच। उरगाधमः तक्षकोऽत्र कस्मान्न दह्येतेति ॥ १८ ॥ द्विजा ऊचुः—तमिति। तेनेन्द्रेण संस्तम्भि-

१. तत्रैव च भ्रान्त०। २. पन्नगाः। ३. रोऽमरः।

तोऽसौ सर्पः अग्नौ न पतति स्फुटमन्यत् ॥ १९ ॥ पारीक्षित इति । उदारधीः पारीक्षित इति द्विजवचः श्रुत्वा ऋत्विजः प्रति प्राह स्म । हे विप्राः ! सहेन्द्रः इन्द्रेण सहितः तक्षकः अग्नौ किमिति न पात्यते ॥ २० ॥ तदिति । तद्राज्ञो वचः श्रुत्वा विप्राः मखे सहेन्द्रं तक्षकम् आजुहुवुः । हे तक्षक ! मरुत्त्वता मरुद्गणवता इन्द्रेण सह इहाग्नावाशु पतस्व । तङ्गार्षः ॥ २१ ॥ इतीति । इत्येवं ब्राह्मणैरुक्तैराक्षेपैः परुषवाक्यैः सविमानः सतक्षकश्चेन्द्रः स्थानात्प्रचालितः । अतः संभ्रान्तमतिर्बभूव ॥ २२ ॥ तमिति । तमिन्द्र-मम्बरात् आकाशात्पतन्तं विलोक्य आङ्गिरसः अङ्गिरसः पुत्रो बृहस्पतिः राजानं जनमेजयं प्राह स्म ॥ २३ ॥ नेति । हे मनुष्येन्द्र ! एष सर्पराट् त्वया वधं नार्हति । यद्वा । सर्पेण तक्षकेण सह राजत इति सर्पराट् इन्द्रः । तत्र हेतुमाह । यतोऽनेनामृतं पीतम् अथचै-तस्मादेव न जीर्यत इत्यजरः स चासावमरश्चेति तथाभूत इति ॥ २४ ॥

## श्रीमद्वीरराघवव्याख्या

सर्पसत्र इति । समिद्धे प्रज्वलिते दह्यमानान्दृष्ट्वा तक्ष काद्रवयः सर्पः इन्द्रं शरणं ययौ ॥ १७ ॥ अपश्यन्निति । पारीक्षितः परीक्षितः पुत्रः तक्षकमपश्यन् उवाच उक्तिमेवाह तक्षक इति ॥ १८ ॥ इत्थं पृष्टाः प्राहुः विप्राः किमिति हे राजेन्द्र ! तं तक्षकं शरणं गतं शक्र इन्द्रः गोपायति रक्षति तस्मात्तेन शक्रेण संस्तम्भितः निवारितोऽसौ तक्षकः सर्पोऽग्नौ न पतति ॥ १९ ॥ इति विप्रवचः श्रुत्वा पारीक्षित उदारधीः विपुलबुद्धिः पुनः ऋत्विजः प्राह तदेवाह—सहेन्द्र इति । हे विप्राः ! इन्द्रसहितः तक्षकः किमिति न पात्यते ॥ २० ॥ तत्पारीक्षितोक्तं श्रुत्वा विप्राः ऋत्विजः मखे यागे सहेन्द्रं तक्षकमाजुहुवुः आह्वानप्रकारं दर्शयति—तक्षकेति । हे तक्षक मरुत्वता मरुद्गणावृतेनेन्द्रेण सहाग्नावाशु पतस्वेति ॥ २१ ॥ इत्थंभूतैः ब्रह्मणोदिताक्षेपैर्ब्राह्मणोक्तपरुषवाक्यैः सविमानः सतक्षकः स्थानात् प्रच्यावितः सम्भ्रान्तमतिर्भीतचित्तोबभूव ॥ २२ ॥ तमिति । तमिन्द्रमम्बरात्पतन्तमवलोक्याङ्गिरसः पुत्रो बृहस्पतिः राजानं जनमेजयं प्राह ॥ २३ ॥ तदाह चतुर्भिः—नेति । हे मनुष्येन्द्र ! एषः सर्पराट् तक्षकः त्वया वधं नार्हति न वध्य इत्यर्थः । तत्र हेतुः अनेन तक्षकेण ॥ २४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तत्र यज्ञे कुण्डाग्नौ ॥ १८–१९ ॥ हे विप्राः ! पात्यतामिति शेषः ॥ २० ॥ मरुत्त्वता मरुद्भिर्युक्तेन ॥ २१ ॥ ब्रह्मोदिता-क्षेपैः ब्राह्मणोत्कर्षणमन्त्रवचनैः ॥ २२ ॥ आङ्गिरसोङ्गिरो गोत्रप्रभवः किमित्येन्द्रेणोपेक्षाकारिस्वपातेन हीन्द्रस्य ब्राह्मणेभ्योऽभिभवो-भवेद्वोत्तमत्वादिति शङ्का न कार्या जनमेजयस्य स्वसन्तानोद्भवत्वेन तत्प्रीतिकामेनेन्द्रेणेयमुपेक्षा कृता—

"स्वसन्तानोद्भवं कीर्त्या याजयन् जनमेजयम् । शक्तोप्यशक्तवच्चष्टुरिन्द्र आसीदुपेक्षकः ॥
एवमेव ऋषीणां च कीर्त्तिं योजयताऽमुना । कृतोपेक्षा महेन्द्रेण किमु विष्णुः परात्परः ॥
तस्माद्विष्णोरशक्यं न भूतभव्यभवत्स्वपि । नचानिष्टंगुणैरेव पूर्णो नारायणः सदा" ॥ इति ॥ २३ ॥

अथ तस्मात् ॥ २४ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

मरुत्वतेति । अरे इन्द्र ! तव देवेन्द्रोऽहमिति गर्वोऽस्ति तस्मात्त्वां देवैरपि समं पातयाम इति भावः "मरुतौ पवनामरौ" इत्यमरः ॥ २१ ॥ अद्य प्राणाः खलु गता एवेति सम्भ्रान्ता व्याकुला मतिः यस्य सः ॥ २२ ॥ आङ्गिरसः अङ्गिरसः पुत्र इति गौरवव्यञ्जना एव सतक्षक इन्द्रः ॥ २३ ॥ मनुष्येन्द्रेण त्वया देवेन्द्रस्य वधानौचित्यात् सर्पेण तक्षकेण सह राजत इति सः अथ अत एव वै निश्चितम् अजरामरः ॥ २४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ब्रह्मोदिताक्षेपैः ब्राह्मणोक्तपरुषवाक्यैः ॥ २२ ॥ आङ्गिरसः पुत्रः बृहस्पतिः ॥ २३–२५ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

भयेन संविग्नो व्याकुलः इन्द्रं शरणं ययौ ॥ १७ ॥ पारीक्षितः परीक्षित्पुत्रः कस्मात्तक्षको न दह्यतेत्युवाच ॥ १८ ॥ एवमुक्ता द्विजा ऊचुः—तमिति । तेनेन्द्रेण संस्तम्भितोऽसौ सर्पः अग्नौ न पतति ॥ १९ ॥ पारीक्षित ऋत्विजः प्रति प्राह—सहेन्द्रः इन्द्रेण सहितः किमित न पात्यते ॥ २० ॥ तत् राज्ञो वचः श्रुत्वा विप्रा आजुहुवुः । साक्षेपमाह्वानं दर्शयति—तक्षकेति । मरुत्वता इन्द्रेण सह इहाग्नावाशु पतस्व ॥ २१ ॥ इत्येवं ब्राह्मणैरुक्तैराक्षेपैः परुषवाक्यैः सविमानः सतक्षकश्चेन्द्रः स्थानात् प्रचालितःअतः

सम्भ्रान्तमतिर्बभूव ॥ २२ ॥ तमिन्द्रं अम्बरात् आकाशात् पतन्तं विलोक्य अङ्गिरसः पुत्रो बृहस्पती राजानं जनमेजयं प्राह ॥२३॥ हे मनुष्येन्द्र एष सर्पराट् त्वया वधं नार्हति। तत्र हेतुमाह—यतोऽनेनामृतं पीतम्। अथैव तस्मादेव न जीर्यत इत्यजरः स चासावमरश्चेति तथाभूत इति ॥ २४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

सर्पसत्र इति। सर्पसत्रे समिद्धे प्रज्वलिते अग्नौ दह्यमानान् महोरगान् दृष्ट्वा, भयसंविग्नः तक्षकः सर्पः, इन्द्रं शरणं ययौ ॥१७॥ अपश्यन्निति। पारीक्षितः परीक्षितः पुत्रः राजा जनमेजयः, तत्र दह्यमानसर्वसर्पवत् कुण्डे तक्षकं अपश्यन्ननिरीक्षमाणः सन्, हे द्विजाः, उरगाधमः तक्षकः कस्मात् न दह्येत, इति द्विजान् उवाच ॥ १८ ॥ इत्थं पृष्टा विप्राः प्राहुः। तमिति। हे राजेन्द्र, शरणं आगतं तं तक्षकं शक्र इन्द्रः, गोपायति, तस्मात् तेन शक्रेण, संस्तम्भितः निवारितः, असौ तक्षकः सर्पः अग्नौ न पतति ॥१९॥ पारीक्षित इति। इत्युक्तप्रकारं विप्रवचः श्रुत्वा, उदारधीर्विपुलबुद्धिः, पारीक्षितः परीक्षितः पुत्रो जनमेजयः, पुनः ऋत्विजः प्राह। हे विप्राः, तर्हि सहेन्द्र इन्द्रसहितः तक्षकः अग्नौ किमिति न पात्यते ॥ २० ॥ तदिति। तत् पारीक्षितोक्तं वचनं श्रुत्वा, विप्राः, ऋत्विजः मखे यागे सहेन्द्रमिन्द्रसहितं तक्षकं, आजुहुवुः आह्वानप्रकारं दर्शयति। हे तक्षक मरुत्वता मरुद्गणावृतेन इन्द्रेण सह, इहाग्नौ आशु पतस्व इति ॥ २१ ॥ इतीति। इतीत्थंभूतैः ब्रह्मोदिताक्षेपैः ऋत्विगुक्तपरुषवाक्यैः, सविमानः सतक्षकः, इन्द्रः स्थानात् प्रचालितः। अतः संभ्रान्तमतिः संभीतचित्तः, बभूव ॥ २२ ॥ तमिति सहतक्षकं तक्षकसहितं तमिन्द्रं, विमानेन सहेति शेषः। अम्बरादाकाशात् पतन्तं विलोक्य, आङ्गिरसोऽङ्गिरसः पुत्रः बृहस्पतिः, राजानं तं जनमेजयं प्राह ॥ २३ ॥ तदाह चतुर्भिः। नेति। हे मनुष्येन्द्र, एषः, सर्पराट् तक्षकः, त्वया वधं न अर्हति, त्वया न वध्य इत्यर्थः। तत्र हेतुः। अनेन तक्षकेन अमृतं पीतं, अस्तीति शेषः। अतः अयं अजरामरः अस्ति ॥ २४ ॥

### हिन्दी अनुवाद

तक्षक ने देखा कि जनमेजय के सर्प-सत्र-की प्रज्वलित अग्नि में बड़े-बड़े महासर्प भस्म होते जा रहे हैं, तब वह अत्यन्त भयभीत होकर देवराज इन्द्र की शरण में गया ॥ १७ ॥ बहुत सर्पों के भस्म होने पर भी तक्षक न आया, यह देखकर परीक्षिन्नन्दन राजा जनमेजय ने ब्राह्मणो से कहा कि 'ब्राह्मणो! अबतक सर्पाधम तक्षक क्यों नहीं भस्म हो रहा है?' ॥ १८॥ ब्राह्मणों ने कहा—'राजेन्द्र! तक्षक इस समय इन्द्र की शरण में चला गया है और वे उसकी रक्षा कर रहे हैं। उन्हों ने ही तक्षक को स्तम्भित कर दिया है, इसी से वह अग्निकुण्ड में गिरकर भस्म नहीं हो रहा है' ॥ १९ ॥ परीक्षित्नन्दन जनमेजय बड़े ही बुद्धिमान् और वीर थे। उन्होंने ब्राह्मणों की बात सुनकर ऋत्विजों से कहा कि 'ब्राह्मणो! आपलोग इन्द्र के साथ तक्षक को क्यों नहीं अग्नि में गीरा देते?' ॥ २० ॥ जननेजय की बात सुनकर ब्राह्मणों ने उस यज्ञ में इन्द्र के साथ तक्षक का अग्निकुण्ड में आवाहन किया। उन्होंने कहा—'रे तक्षक! तू मरुद्गण के सहचर इन्द्र के साथ इस अग्निकुण्ड में शीघ्र आ पड़' ॥ २१ ॥ जब ब्राह्मणों ने इस प्रकार आकर्षणमन्त्र का पाठ किया, तब तो इन्द्र अपने स्थान—स्वर्गलोक से विचलित हो गये। विमान पर बैठे हुए इन्द्र तक्षक के साथ ही बहुत घबड़ा गये और उनका विमान भी चक्कर काटने लगा ॥ २२॥ अङ्गिरानन्दन बृहस्पतिजी ने देखा कि आकाश से देवराज इन्द्र विमान और तक्षक के साथ ही अग्निकुण्ड में गिर रहे हैं; तब उन्होंने राजा जनमेजय से कहा—॥ २३ ॥ 'नरेन्द्र! सर्पराज तक्षक को मार डालना आपके योग्य काम नहीं है। यह अमृत पी चुका है। इसलिये यह अजर और अमर है ॥ २४ ॥

जीवितं मरणं जन्तोर्गतिः स्वेनैव कर्मणा। राजंस्ततोऽन्यो नान्यस्य प्रदाता सुखदुःखयोः ॥ २५ ॥

सर्पचौराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिर्नृप। पञ्चत्वमृच्छते जन्तुर्भुङ्क्त आरब्धकर्म तत् ॥ २६ ॥

तस्मात् सत्रमिदं राजन् संस्थीयेताभिचारिकम्। सर्पा अनागसो दग्धा जनैर्दिष्टं हि भुज्यते ॥ २७ ॥

सूत उवाच

इत्युक्तः स तथेत्याह महर्षेर्मानयन् वचः। सर्पसत्रादुपरतः पूजयामास वाक्पतिम् ॥ २८ ॥

१. च।

## कृष्णप्रिया व्याख्या

अन्वयः—जन्तोः स्वेन एव कर्मणा जीवितं मरणं गतिः राजन् ततः अन्यस्य सुखदुःखयोः अन्यः प्रदाता न ॥ २५ ॥ सर्पचौराग्निविद्युद्भ्यः क्षुत्तृड्व्याध्यादिभिः नृपः पञ्चत्वम् ऋच्छते जन्तुः तत् आरब्धकर्म भुङ्क्ते ॥ २६ ॥ तस्मात् राजन् इदम् आभिचारिकं सत्रं संस्थीयेत अनागसः सर्पाः दग्धाः जनैः दिष्टं हि भुज्यते ॥ २७ ॥ सूतः उवाच—इत्युक्तः सः तथा इति आह महर्षेः वचः मानयन् सर्पसगात् उपरतः वाक्पतिं पूजयामास ॥ २८ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

भवतु नामाजरामरस्तथाऽपि पितृमारकं धक्ष्यामीति चेत्तत्राह। जीवितमिति। गतिः परलोकः। अतो दुर्मरणनिमित्ता पितुर्दुर्गतिरनेन कृतेत्यपि न शंकनीयमित्यर्थः ॥ २५ ॥ कथमन्यः सुखदुःखप्रदाता नास्ति सर्पादीनामुपलभ्यमानत्वादिति चेत्तत्राह। सर्पादिना जंतुः पंचत्वं मृत्युमृच्छति प्राप्नोतीति यत्तदारब्धं कर्मैव भुंक्ते। स्वकर्मप्रयुक्ता एव सर्पादयो न स्वतंत्रा इति भावः॥ २६॥ संस्थीयेत समाप्यताम्। आभिचारिकं हिंसाफलम्। दिष्टं प्राचीनं कर्म। अतः सर्पादृष्टप्रयुक्तस्य तवाप्ययं नापराध इति भावः॥ २७॥ वाक्पतिं बृहस्पतिम्॥ २८॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

इत्यर्थ इति—"निमित्तमात्रं सर्वेषां कृतकर्मानुसारतः" इत्युक्तेर्नास्यापराध इति भावः। हे राजन् पितृशोकादेवं यद्यवस्यसि तत्र तत्त्वं शृण्वित्याह—जीवितमिति। गतिः स्वर्गादिः। जंतोरिति–निकृष्टजीवस्यैवेयं व्यवस्था तव पितुस्तु जीवितमरणभगवद्धामप्राप्तयो भगवत्कृता एव। तथाहि–स्वहस्तेनैव द्रौण्यस्त्रतो रक्षणं, मुनिशापद्वारा निधनप्रापणं, स्वप्रष्ठ-शुकोपदेशद्वारा निजपदप्रापणमिति तस्यैव कर्माणि तक्षकस्तु निमित्तमात्रमिति विश्वनाथः॥ २५॥ इति भाव इति—"सुखस्य दुःखस्य न कोऽपि दाता परो ददातीति कुबुद्धिरेषा" इत्यादिपुराणांतरात् "आत्मैव ह्यात्मनो बंधुरात्मैव रिपुरात्मनः" इति श्रीमुखवाक्याच्च स्वकर्मानुसारेण स्वस्यैव स्वदुःखादिहेतुत्वमित्याशयः प्राकृत एव लोकस्स्वकर्मवशात्सर्पादिभिर्मृतिं याति न तु त्वत्पितामहो भक्तराज इत्याह—सर्पेति। जंतुरंतिनिकृष्टजीव इति विश्वनाथः॥ २६॥ यंतः प्रारब्धकर्मत एव सर्वं भवति तस्माद्धेतोः। इदं सर्पसत्रम्। ननु तज्जातित्वात्तक्षकापराध एवैषामपराधः "एकः पापानि कुरुते फलं भुंक्ते महाजनः" इत्युक्तेस्त-त्राह—तक्षकस्याप्यपराधो नास्ति दैवेन तदंशेन स्वकृतपूर्वकर्मणा परीक्षितो मरणस्य क्लृप्तत्वादित्याशयेनाह—जनैर्दिष्टमिति। यतो दिष्टमेव फलदमतो हेतोः। इति भाव इति–तव चेतस्यपि मातृकृतसर्पदाहरूपशापादृष्टवशेनैव सर्पसत्रकृतिस्फूर्तिर्जातेति तात्पर्यम्। अत्र महाभारतीयकथाऽनुसंधेया—कदाचिदुच्चैःश्रवसोऽश्वस्य वर्णनिर्णयार्थं कद्रूविनतयोर्विवादः प्रवृत्तः। विनतयोक्तं श्वेतवर्णोऽयं, कद्र्वा चोक्तं कृष्णवर्ण इति। ततः श्वो निर्णयार्थं गमिष्यावो यदुक्तिर्मृषा सा दासी भवतु, तदा च नागमाता स्वपुत्रान्प्रत्युक्तं यूयं कृष्णरोमाकारा भूत्वाऽश्वपुच्छे लग्ना भवत, ये न करिष्यंति मद्वाक्यं ते सर्वे जनमेजययज्ञे दग्धा भविष्यंतीति। आभिचारिकं निंद्यम्। अभिचारस्य "शत्रुमरणकामः श्येनेनाभिचरेत्" इति विहितत्वेऽपि प्रायश्चित्त-श्रवणान्निंद्यत्वमिति तत्रापि तव नापराध इत्याह—जनैरिति विश्वनाथः॥ २७॥ महर्षेर्बृहस्पतेः। "वाग्वै बृहती" इति श्रुतिमेव बृहच्छब्दस्य वागर्थे मानं मत्वाह—बृहस्पतिम्॥ २८॥

## अन्वितार्थप्रकाशिका

पितृशोकं तु मा कार्षीरित्याह—जीवितमिति। जन्तोः स्वेनैव कर्मणा जीवितं मरणं गतिः स्वर्गादिप्राप्तिश्च भवति। हे राजन्! ततः स्वकर्मणोन्योन्यस्य सुखदुःखयोर्दाता नास्ति॥ २५॥ सर्पेति। सर्पादिभिर्विद्युदादिभिश्च यत् जन्तुः पञ्चत्वं मरणमृच्छति प्राप्नोति तदारब्धं कर्मैव भुङ्क्ते॥ २६॥ तस्मादिति। यस्मादेवं तस्मादिदमाभिचारिकं हिंसाफलकं सत्रं संस्थीयेत समाप्यताम्। सर्पा अपि अनागस एव दग्धाः। हि यस्माज्जनैर्दिष्टं प्राचीनं कर्म भुज्यते। अतः सर्पादृष्टप्रयुक्तस्य तवापि नापराधः॥ २७॥ इतीति। वाक्पतिं बृहस्पतिम्। स्फुटमन्यत्॥ २८॥

## श्रीमद्वीरराघवव्याख्या

पितृघातकतक्षकविषयक्रोधशान्तये तत्त्वमुपदिशति–जीवितमिति। जन्तोः प्राणिनः गतिः स्वर्गनरकादिगतिश्च अतो हे राजन्! तेन स्वकर्मणा विना सुखदुःखप्रदः नान्योऽस्तीत्यर्थः॥ २५॥ नन्वपरोक्षं तक्षकेण मत्पिता दग्धो दृष्टः ननु कर्मणेत्यत आह–सर्पेति। सर्पादिभिः जन्तुः मरणमृच्छति प्राप्नोति इति यत्तदारब्धं कर्मैव भुङ्क्ते स्वकृतकर्मप्रयुक्ताः सर्पादयो न स्वतन्त्रा

इति भावः ॥ २६ ॥ तस्मादिति । यत एवं तस्माद्धे राजन् ! इदमाभिचारिकं सत्रं संस्थीयेत समाप्यतां वृथा निरपराधाः सर्पा दग्धाः, कुतः ? हि यस्माज्जनैर्दिष्टं प्रारब्धमेव भुज्यते ॥ २८ ॥ इतीति स जनमेजयः महर्षेर्बृहस्पतेर्वचो मानयंस्तथेत्याह, सर्पसत्रं समाप्यताम् इत्याह, सर्पसत्रादिति वाक्पतिं बृहस्पतिम् ॥ २८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मरणं देहवियोगलक्षणं गतिः परलोकावाप्तिलक्षणा स्वेन स्वतन्त्रेण हरिणैवोद्बोधितेन कर्मणा तेन स्वकर्मोद्बोधकेन हरिणा विना सुखदुःखयोः प्रदाताऽन्यो नास्ति ॥ २५ ॥ कर्मणः कारणत्वे सर्पादिना मृतो विष्णुमित्र इति कथमुपपद्येतेत्याशङ्क्य तेपि कर्म निमित्तीकृत्य कारणमिति भावेनाह—सर्पेति । आदिशब्देन वृक्षादिभ्यः पतनं गृह्यते सुखादिभोगहेतुत्वाच्च कर्मप्रधानकारणमित्याह—भुङ्क्त इति ॥ २६ ॥ फलितमाह—तस्मादिति । संस्थीयेत समाप्तं भवतु आभिचारिकं जनोपद्रवकारकं कर्म एकस्यापराधेनानपराधिबहुजननाशेन पापमेव स्यादिति भावेनाह—सर्पा इति । ननु, तज्जातित्वात्तक्षकापराध एषामपराधस्तस्मादनागसो न स्युः 'एकः पापानि कुरुते फलं भुङ्क्ते महाजनः' इत्याशङ्क्य तक्षकस्याप्यपराधो नास्ति दैवेन तद्दर्शनेन स्वकृतकर्मपूर्वकेण परीक्षितो मरणस्य क्लृप्तत्वादिति भावेनाह, जनैरिति । दिष्टं दैवकृतं कर्मफलम् ॥ २७ ॥ इत्यादियुक्तिपूर्वकेण वचसा वाक्पतिं बृहस्पतिं 'वाग्वै बृहती' इतिश्रुतेः तद्बृहतोः करपत्योश्चोरदेवतयोरिति सुट्तलोपश्च ॥ २८ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

हे राजन् ! स्वपितृशोकादेवं यद्व्यवस्यसि तत्र तत्त्वं शृण्वित्याह—जीवितमिति । गतिः स्वर्गादिः जन्तोरिति निकृष्टजीवस्यैवेयं व्यवस्था तव पितुस्तु जीवितमरणभगवद्धामप्राप्तये भगवत्कृता एव तथाहि स्वहस्तेनैव द्रौण्यस्त्रतो रक्षणं मुनिशापद्वारा निधनप्रापणं स्वप्रेष्ठशुकोपदेशद्वारा स्वपदप्रापणमिति तस्यैवैतानि कर्माणि तक्षकस्तु नाममात्रेणैव निमित्तमिति भावः ॥ २५ ॥ प्राकृत एव लोकः सर्पादिभिः कर्मवशान्मरणं प्राप्नोति नतु त्वत्पिता महाभक्तराज इत्याह—सर्पेति । जन्तुरतिनिकृष्टजीवः ॥ २६ ॥ संस्थीयेत समाप्यतां यत आभिचारिकं निन्द्यं वृथैव एतावन्तः सर्पा दग्धाः तत्रापि तव नापराध इत्याह—जनैरिति । दिष्टं प्राचीनं कर्म सर्वैरपि स्वप्रारब्धफलं भुक्तमिदमिति भावः ॥ २७–२८ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पञ्चत्वं मरणं सर्पादिभ्यो यत् ऋच्छति प्राप्नोति तत् प्रारब्धं कर्म भुङ्क्ते स्वारब्धं कर्म प्रेरिता एव सर्पादयो मारका इति भावः ॥ २६ ॥ तस्मात्तव पितुर्मरणस्य तत्कर्मफलत्वात् आभिचारिकं हिंसाफलं सत्रं संस्थीयेत समाप्यतां जनैः सर्वैरपि दिष्टं पूर्वकृतं कर्म भुज्यते, सर्पा अपि स्वदिष्टवशान्मृता इति भावः ॥ २७ ॥ वाक्पतिं बृहस्पतिम् ॥ २८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तथापि पितृघातकत्वादेनं धक्ष्यामीत्यभिप्रायमालक्ष्य परमार्थमाह—जीवितमिति । गतिः स्वर्गादिलोकप्राप्तिः अतो दुर्मरणनिमित्ता पितुर्दुर्गतिरनेन कृतेत्यपि न शङ्कनीयं यतो हे राजन् ततः स्वकर्मणोऽन्योन्यस्य सुखदुःखयोर्दाता नास्ति । ननु सर्पादीनां तथात्वेनोपलभ्यमानत्वात्कथं ततोऽन्यो नास्तीत्याशङ्कयाह—सर्पेति । सर्पादिभिर्यत् जन्तुः पञ्चत्वं मरणमृच्छति प्राप्नोति तदारब्धं कर्मैव भुङ्क्ते । अतः स्वकर्मप्रयुक्ता एव सर्पादयः सुखदुःखप्रदा न ते स्वतन्त्रा इत्यर्थः ॥ २५–२६ ॥ यस्मादेवं तस्मादिदमाभिचारिकं हिंसाफलकं सत्रं संस्थीयते समाप्यताम् । अन्यथा इतोऽप्यनिष्टकरं पापमेव स्यात् । सर्पादिष्टप्रयुक्त एव त्वं तान्मारितवानतस्तवापि नापराध इति सूचयन्नाह—सर्पा इति । दिष्टं प्राचीनं कर्म ॥ २७ ॥ वाक्पतिं बृहस्पतिम् ॥ २८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

क्रोधशान्तये तत्त्वमुपदिशति । जीवितमिति । हे राजन्, जन्तोः प्राणिनः, जीवितं मरणं, गतिः स्वर्गनरकादिगतिश्च । स्वेन स्वकीयेन कर्मणा जायते ततः कर्मणः सकाशात्, अन्यः अस्य जन्तोः, सुखदुःखयोः प्रदाता न अस्ति । अतो दुर्मरणनिमित्ता पितुर्गतिरनेन कृतेत्यपि न शङ्कनीयमिति भावः ॥ २५ ॥ ननु कर्मणः कारणतासत्त्वे . सर्पादिदंशेन मृतो विष्णुमित्र इति कथमुपपद्येतेत्याशङ्क्य तेऽपि कर्म निमित्तीकृत्य कारणमित्यभिप्रेत्याह । सर्पेति । हे नृप, सर्पश्च चौरश्च अग्निश्च विद्युच्च तेभ्यः, क्षुच्च तृट् च व्याधिश्च ते आदयो येषां वृक्षादिभ्यः पतनादीनां तैश्च, जन्तुः पञ्चत्वं मरणं, ऋच्छते प्राप्नोति, इति यत् तत्, प्रारब्धकर्म एव भुङ्क्ते । स्वकृतकर्मप्रयुक्ताः सर्पादयो दशन्ति न स्वतन्त्रा इति भावः ॥ २६ ॥ तस्मादिति । यदेवं तस्मात्, हे राजन्, इदम् आभिचारकं सत्त्रं, संस्थीयेत समाप्यताम् । अनागसो निरपराधाः सर्पाः दग्धाः वृथैव दाहं प्राप्ताः । कुतः । जनैः दिष्टं भुज्यते

मातृवचनातिक्रमजतच्छापात्मकसर्पोद्दिष्टप्रयुक्तस्य तवाप्ययं नापराध इति भावः। अत्र मातृशापरूपं तद्दिष्टं महाभारतीयादिपर्वणि आस्तिकोपाख्यानगतपञ्चदशाध्यायत आरभ्य बोध्यम्। तत्र 'मात्रा हि भुजगाः शप्ताः पूर्वं ब्रह्मविदां वर। जनमेजयस्य वो यज्ञे धक्ष्यत्यनिलसारथिः।' इति। तथा 'ततः पुत्रसहस्रं तु कद्रूर्जिह्मं चिकीर्षती। आज्ञापयामास तदा वाला भूत्वाञ्जनप्रभाः। आविशध्वं हयं क्षिप्रं दासी तस्यामहं यथा। नावपद्यन्त ये वाक्यं तान् शशाप भुजंगमान्। सर्पसत्रे वर्त्तमाने पावको वः प्रधक्ष्यति। जनमेजयस्य राजर्षेः पाण्डवेयस्य धीमतः।' इति विंशाध्यायेऽस्यैवाभिहितत्वादिति॥ २७॥ इतीति। इति उक्तः स जनमेजयः, महर्षेर्बृहस्पतेः वचो वचनं मानयन् सन्, तथास्तु इत्याह। सर्पसत्रं समाप्यतामित्याहेत्यर्थः। ततः सर्पसत्रात् उपरतः सन्, वाक्पतिं पूजयामास॥ २८॥

## हिन्दी अनुवाद

राजन्! जगत् के प्राणी अपने-अपने कर्म के अनुसार ही जीवन, मरण और मरणोत्तर गति प्राप्त करते हैं। कर्म के अतिरिक्त और कोई भी किसी को सुख-दुःख नहीं दे सकता॥ २५॥ जनमेजय! यों तो बहुत-से लोगों की मृत्यु साँप, चोर, आग, बिजली आदि से तथा भूख, प्यास, रोग आदि निमित्तों से होती है; परंतु यह तो कहने की बात है। वास्तव में तो सभी प्राणी अपने प्रारब्ध-कर्म का ही उपभोग करते हैं॥ २६॥ राजन्! तुमने बहुत-से निरपराध सर्पों को जला दिया है। इस अभिचार-यज्ञ का फल केवल प्राणियों की हिंसा ही है। इसलिये इसे बंद कर देना चाहिये। क्यों कि जगत् के सभी प्राणी अपने-अपने प्रारब्धकर्म का ही भोग कर रहे हैं॥ २७॥ श्रीसूतजी कहते हैं—शौनकादि ऋषियो! महर्षि बृहस्पतिजी की बात का सम्मान करके जनमेजय ने कहा कि 'आप की आज्ञा शिरोधार्य है।' उन्होंने सर्प-सत्र बंद कर दिया और देवगुरु बृहस्पतिजी की विधिपूर्वक पूजा की॥ २८॥

सैषा विष्णोर्महामायाबाध्ययालक्षणा यया। मुह्यन्त्यस्यैवात्मभूता भूतेषु गुणवृत्तिभिः॥ २९॥

न यत्र दम्भीत्यभया विराजिता मायाऽऽत्मवादेऽसकृदात्मवादिभिः।
न यद्विवादो विविधस्तदाश्रयो मनश्च सङ्कल्पविकल्पवृत्ति यत्॥ ३०॥
न यत्र सृज्यं सृजतोभयोः परं श्रेयश्च जीवस्त्रिभिरन्वित स्त्वहम्।
तदेतदुत्सादितबाध्यबाधकं निषिध्य चोर्मीन् विरमेत् स्वयं मुनिः॥ ३१॥
परं पदं वैष्णवमामनन्ति तद् यन्नेति नेतीत्य तदुत्सिसृक्षवः।
विसृज्य दौरात्म्यमनन्यसौहृदा हृदोपगुह्यावसितं समाहितैः॥ ३२॥

## कृष्णप्रिया व्याख्या

अन्वयः—अबाध्यया यया अस्य एव आत्मभूताः गुणवृत्तिभिः भूतेषु मुह्यन्ति अलक्षणा सा एषा विष्णोः महामाया॥ २९॥ दम्भी इति असकृत् माया आत्मवादे आत्मवादिभिः यत्र अभया न विराजिता यद्विवादः न विविधः तदाश्रयः न संकल्पविकल्पवृत्ति यत् मनः न॥ ३०॥ यत्र सृजता सृज्यं न उभयोः परं श्रेयः (न) त्रिभिः अन्वितः जीवः तु अहम् (न अतः) उत्सादितबाध्यबाधकं तत् एतत् (इति) ऊर्मीन् निषिध्य मुनिः स्वयं विरमेत्॥ ३१॥ अनन्यसौहृदाः नेति नेति इति अतत् उत्सिसृक्षवः परं वैष्णवं पदम् आमनन्ति समाहितैः दौरात्म्यं विसृज्य हृदा उपगुह्य अवसितम्॥ ३२॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु कथं विदुषामप्येवं संमोहो यतो ब्रह्मकोपात्परीक्षितो मृत्युर्जनमेजयकोपात्सर्पाणामित्यादि तत्राह। सैषेति। तस्या महत्त्वं दर्शयति। अलक्षणा न लक्ष्यत इत्यलक्षणा अप्रतर्क्येत्यर्थः। काऽसावित्यत आह। ययाऽस्य विष्णोरेवात्मभूता आत्मांशभूताः प्राणिनो गुणवृत्तिभिः क्रोधादिभिः सद्भूतेषु देहेषु मुह्यंति बाध्यबाधकतां व्रजंतीत्यर्थः। ननु श्रवणादिनां बाधितया तया कुतो मोहः स्यात्तत्राह। अबाध्यया बाधितुमशक्यया॥ २९॥ कथं तर्हि मायातत्कार्यनिवृत्तिरित्याशंक्य श्रीविष्णुस्वरूपनिरूपणपूर्वकं

१. तः स्वयम्। २. भोगान् विरमेतत्तन्मुनिः। ३. त्यसदु०।

तद्भजनात्सर्वानर्थनिवृत्तिरिति शास्त्रार्थमुपसंहरति न यत्रेति पंचभिः। दंभीति। माया कपटवानयं पुमानित्येवंभूतायां बुद्धावस-कृदुल्लिख्यमाना या मायेत्यर्थः। साऽऽत्मवादे क्रियमाणे आत्मवादिभिर्यत्राभया न विराजिता न प्रकाशिता किंतु भीतेव स्वकार्यं मोहादिकमकुर्वती कथंचिद्वर्तत इति प्रतिपादितेत्यर्थः। तदुक्तम्। 'तस्मै नमो भगवते वासुदेवाय धीमहि। यन्मायया दुर्जयया मां ब्रुवंति जगद्गुरुम्। विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया। विमोहिता विकत्थंते ममाहमिति दुर्धियः।' इति। किंच यद्यस्मिंस्त-दाश्रयो मायाश्रयो विविधो विवादोऽपि नास्ति। विशेषविषयत्वाद्विवादानां तस्य च विशेषातीतत्वादिति भावः। संकल्पविकल्पा वृत्तयो यस्य तन्मनोऽपि यत्र नास्ति। संकल्पविकल्पानामपि विशेषविषयत्वात्॥ ३०॥ किंच। सृज्यं कर्म सृजता कारकवर्गेण सहोभयोः सृज्यस्रष्ट्रोः परं साध्यं श्रेयः फलमपि। अतस्त्रिभिः सृज्यस्रष्टृफलैरन्वितो जीवश्चाहंकारात्मको यत्र नास्ति। अत एवात्सा-दितौ निरस्तौ बाध्यबाधकौ यस्मिंस्तदेतत्स्वयमात्मस्वरूपमित्यर्थः। तत्तस्मिन्नूर्मीनहंकारादीन्निषिध्य मुनिः विरमेत्। विशेषेण क्रीडेदित्यर्थः॥ ३१॥ यतस्तद्वैष्णवं पदमामनंतीत्याह। पदमिति। यदेतत्तदेव परं वैष्णवं पदं स्वरूपमामनंति। के। अतत् आत्मव्य-तिरिक्तमुत्सिसृक्षवस्त्यक्तुमिच्छवः। यतोऽनन्यसौहृदानास्त्यन्यस्मिन्यसौहृद येषां ते। कुतः दौरात्म्यं देहाद्यहं भावंविसृज्या देहेऽहं-काराभावादन्यत्र सौहृदं नास्त्यतस्त्यक्तुमिच्छव इत्यर्थः। कथम् नेति नेतीत्येवम्। अत्र विद्वदनुभवमपि प्रमाणयति। हृदोपगुह्य ध्यानादिना ततः समाहितैरवसितं निश्चितम्। यद्वा अवसितमवबद्धमात्मतया गृहीतमित्यर्थः॥ ३२॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत्राक्षिपति—नन्विति। इत्यर्थ इति—लक्षित एव वस्तुनि तर्को भवतीति भावः। इत्यर्थ इति—अन्यथाभावस्यैव मोहत्वा-दिति भावः। पुनराक्षिपति—नन्विति। अबाध्यया ब्रह्मात्मबोधं विना बाधितुमशक्यया॥ २९॥ विष्णुस्तर्हि दंभी येन तस्य मायेत्युच्यते तत्राह—न यत्रेति। यत्र विष्णौ यस्य विष्णोस्संनिधाने निमित्ते आ ईषत् विराजिता यत्किंचिच्चक्षुःसामर्थ्यापि दंभी दंभवानयमित्यभया न भवति किन्तु तस्मिन्दंभादर्शनात्सभयैव भवतीत्यर्थः। माया हि सदंभ एव निर्भया भवतीति। तदुक्तम्—'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया। विमोहिता विकत्थन्ते ममाहमिति दुर्धियः।' इति विष्णौ महाभागवते च मायाधिकारो नास्तीत्यर्थः। कीदृशी—दंभिनि दंभवति पुरुषे इतौ गमने आक्रमे इत्यर्थः। अभया निर्भयैव विराजिता। 'इण्—गतौ' क्त्यंतः। विष्णुतद्भक्तयोस्तु शून्येव भवतीति भावः। तथात्मवादिभिरति बहुधात्मवादे प्रवर्तिते विष्णुस्वरूपे स्फुरिते सति विविधो वादो नास्ति यतस्तदाश्रयो मायाश्रय एव सः 'यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवंति' इत्युक्तेः। तथा संकल्पादिरूपा मायावृत्तयो यत्र तन्मनोपि नास्तीत्यर्थ इति विश्वनाथः। इत्यर्थ इति—अत्र मायाशब्दः कपटपर एव न तु भगवच्छक्तिरूपयोग-मायापर इति भावः। इत्यर्थ इति—इत्थं प्रतिपादिता या माया सा यत्रात्मस्वरूपे नास्तीति भावः। अत्र प्रमाणमाह—तदुक्तमिति। श्लोकौ तु व्याख्यातचरावेव। अन्यदा—किञ्चेति। यद्यस्मिन्नात्मस्वरूपे। इति भाव इति—'नेह नानास्ति किञ्चन' इत्यादिश्रुतेस्तस्यात्मस्व-रूपस्य सर्वविशेषरहितत्वस्य निश्चयादिति तात्पर्यम्। विशेषविषयत्वाद्द्वैतविषयत्वात्॥३०॥ अन्यदप्याधिक्यमाह—किञ्चेति। कारक-वर्गेणेन्द्रियसमूहेन। अतः सृज्यादित्रयाभावात्। अत एवाहंकाराभावादेव। बाध्यं द्वैतं, बाधकं वृत्तिरूपं ज्ञानञ्च। इत्यर्थ इति—सर्व-बाधावधित्वेन ज्ञेयमिति भावः। केचित्त्वात्मस्वरूपमिहावगत्येति शेषं कृत्वा योजयंस्तदशोभनमिव भातीति। ऊर्मिशब्देनात्राहंकारादयो लक्ष्यंते जले तरंगवत्तेषामपि चित्ते उत्थानदर्शनात्। इत्यर्थ इति—'कश्चित्तमनुवर्तते' इति वेरुपसर्गस्य धात्वर्थानुगतत्वादयं भावः। यत्र स्फुरीते सति सृज्यादिर्न यत् उभयोः स्रष्टृसृज्ययोः परं पृथग्भूतं तत्स्वयं तथा श्रेयः स्वर्गादिफलमपि यत्र न स्फुरति तथा त्रिभिर्गुणैर्जागरादिभिर्वा युक्तोऽहंकारात्मको जीवोऽपि न स्फुरति तस्मादेतद्विष्णुस्वरूपम्। उत्सादिता निरस्ता बाध्या जीवा बाधका गुणाश्च तस्मात्तथाभूतम्। ननु तर्हि तत्कः प्रकाशयेत्तत्राह—निषिध्येति। स्वभक्तहृद्गतानमून्कामक्रोधादीन्स्वयमेव। तत्र विशेषतो रमते तत्प्रसिद्धमिति विश्वनाथः॥ ३१॥ किमर्थं तत्र क्रीडेदिति तत्राह—यतस्तद्वैष्णवमिति। 'तदिति ब्रह्मणो नाम' इति श्रुतेस्तव्य-तिरिक्तं प्रपंचम्। तत्र हेतुः—यत इति। अनन्यसौहृदत्वे हेतुमाशंकते—कुत इति। इत्यर्थः इति पूर्वोक्तं यत इति पदमत्र योज्यमिति भावः। केन प्रकारेण त्यक्तुमिच्छवस्तत्राह—नेतीति। देहोऽप्यात्मा न, जडत्वात्, घटवत्। इंद्रियाण्यप्यात्मा न, तैजसत्वात्, दीपादिवदित्येवं प्रकारेणेत्यर्थः। अत्रात्मस्वरूपस्य वैष्णवपदत्वे। आदिना धारणाग्रहः। ततो ध्यानानंतरम्। समाहितैः कृत-समाधिभिः। धात्वर्थप्रसिद्धिमादायाह—यद्वेति। इत्यर्थ इति—आत्मरूपतया ग्रहणस्यैवार्थकरत्वादिति भावः। यद्वा—नान्यस्मिन्सौहृदं ममत्वं येषां ते, अन्यत्र त्यक्तममत्वाद्विरक्ता विवेकिनोऽन्वयव्यतिरेकादियुक्त्या च दौरात्म्यं देहादिकोशपंचके आत्मत्वाध्यासं विसृज्य ब्रह्मणि यत् अतत् आत्मस्वरूपातिरिक्तं मायोपाधिं तत्प्रयुक्तसृष्टिकर्तृत्वादि च तदुत्सिसृक्षवः, एवं भागत्यागलक्षणया तत्त्वंपदार्थयोर्विरुद्धभागत्यागेन लक्षितं हृदौपनिषदबोधेन समाहितैः प्रत्ययैरुपगुह्य निदिध्यास्य यदवसितं साक्षात्कृतं प्रत्यगभिन्नं ब्रह्म तदेव विष्णोः परं पदं स्वरूपमामनंति वेदप्रतिपाद्यमध्यवस्यंतीत्यर्थः। तद्वैष्णवं पदं विष्णोः स्वरूपमामनंति पुनः पुनः स्मरणेनाभ्यस्यंति कीदृशाः—दौरात्म्यमहंममेति दौर्जन्यं विसृज्य नेति नेति नैतदनुकूलं नैतदनुकूलमिति कृत्वा तत् तद्व्यतिरिक्तदेहगेहपुत्रादिकम्

अहंममतास्पदं यद्वस्तु तत्क्रमेण त्यक्तुमिच्छवः यतोऽनन्यैश्चैकांतिकभक्तैश्चैव सौहृदं प्रीतिर्येषां तेऽतः समाहितैकाग्रचित्तैस्तैरेव भक्तैर्हृदा मनसा उपगुह्य ज्ञात्वाऽवसितं तद्वैष्णवं पदं निश्चितं नान्यैरिति विश्वनाथः ॥ ३२ ॥

## अन्वितार्थप्रकाशिका

सैषेति। अबाधया भगवत्कृपां विना बाधितुमशक्यया यया मायया अस्य विष्णोरात्मभूताः अंशरूपा एव प्राणिनो गुणवृत्तिभिः क्रोधादिभिर्भूतेषु प्राणिषु मुह्यन्ति बाध्यबाधकतां व्रजन्तीत्यर्थः। सैषा न लक्ष्यते इत्यलक्षणा अप्रतर्क्या विष्णोर्महामाया ॥ २९ ॥ न यत्रेति। दम्भीति कपटवानयं पुमानित्येवंभूतायां बुद्धावसकृदुल्लिख्यमाना या माया ब्रह्मवादे ब्रह्मविचारे क्रियमाणे आत्मवादिभिर्यत्र विष्णौ अभया न विराजिता किन्तु भीतेव। स्वकार्यं मोहादिकमकुर्वती कथंचिद्वर्त्तत इति प्रतिपादितेत्यर्थः। किंच यत् यस्मिन् तदाश्रयः मायाश्रयः मायाकृतो विविधो विवादो वाग्व्यवहारो नास्ति विवादानां विशेष-विषयत्वात् तस्य च विशेषातीतत्वात्। तथा संकल्पविकल्पा वृत्तयो यस्य तन्मनोऽपि यत्र न प्रवर्त्तते संकल्पविकल्पानामपि विशेष-विषयत्वात्। "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह।" इति श्रुतेः ॥ ३० ॥ न यत्रेति। तथा सृजता कारकवर्गेण सह सृज्यं पुण्यपापात्मकं कर्म यत्र नास्ति तथोभयोः सृज्यस्रष्ट्रोः परं साध्यं श्रेयःफलं च सुखदुःखादि यत्र नास्ति तथा त्रिभिः सत्त्वादिभिर्गुणैर्जागरादिभिर्वा सृज्यस्रष्टृफलैर्वाऽन्वितः जीवो जीवोपाधिरूपोऽहङ्कारश्च यत्र नास्ति। अत एव उत्सादितौ निरस्तौ बाध्यबाधकौ। भावप्रधानो निर्देशः। बाध्यत्वबाधकत्वे यस्मिंस्तदेतत् परमात्मनः स्वरूपमित्यर्थः। अतः मुनिर्विवेकी स्वयमपि ऊर्मीन् अहङ्कारादीन्निषिद्ध्य त्यक्त्वा विरमेत् विशेषेण क्रीडेदित्यर्थः ॥ ३१ ॥ परमिति। अनन्यसौहृदाः नास्ति आत्मनोऽन्य-स्मिन् देहादौ सौहृदं ममताहन्तादि येषां ते अत एव नेति नेतीत्येवमतत् आत्मव्यतिरिक्तमुत्सिसृक्षवस्त्यक्तुमिच्छवो जनाः यत्पूर्वं निरूपितं तदेव परं सर्वत उत्कृष्टं वैष्णवं पदं स्वरूपमामनन्ति वर्णयन्ति। तथा यत् समाहितैर्वशीकृतदेहेन्द्रियान्तः-करणैर्मुमुक्षुभिः दौरात्म्यं देहादावहंममभावं विसृज्य हृदा ध्यानेनोपगुह्यालिङ्ग्य व्यवसितं निरन्तरं ध्येयतया गृहीतमित्यर्थः ॥ ३२॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

गम्भीररया दुर्निरूप्यवेगा आत्मवादे आत्मनिरूपणे दुर्विभाव्या वा माया न यत्र यस्मिन् परमात्मनि नास्ति विविधो विवादो न तदाश्रयः परमात्माश्रयः परमात्मा तु साधकबाधकाऽगोचर इत्यर्थः। मनश्च तत्प्रवणं न तदाश्रयमित्यर्थः ॥ ३० ॥ न यत्र सृज्यमिति यत्र परमात्मस्वरूपे सृज्यं शरीरं नास्ति सृजता इति सृज्यशरीरोत्पादकं निमित्तं कर्म च नास्ति उभयोः परं न कर्म तत्कृतदेहाभ्यां जुष्टं यद्वचो देवमनुष्यादिशब्दजातं च यत्र न वर्त्तते त्रिभिरन्वितः गुणत्रयवश्यो जीवश्च यः जीवरूपेणावस्थितो यः तन्मुनिः तादृशपरमात्मस्वरूपमननपरः एवं पृथिव्याचिन्तनं निषिद्ध्य ऊर्मीन् अशनायापिपासाशोकमोहजराभृत्यूंश्च निषिद्ध्य विरमेत् समः समाहितमनस्कतया निवृत्तव्यापारो भवेत् उत्सादितबाध्यबाधकमिति क्रियाविशेषणं परस्परमुद्भवाभिभवहेतुभूतं गुणत्रयं यथा उत्सादितं स्यात्तथा निषिद्ध्येत्यर्थः ॥ ३१ ॥ समाधिदशायामनुसन्धेयं परस्वरूपमित्याह—परम्पदमिति। पद्यते इति पदं स्वरूपं नेति नेतीति प्राकृतेति जडाजडवस्तु यादृशं तादृङ् न भवतीत्याह—आमनन्तीति। सर्वं चिदचिद्वै लक्षण्यात् उत्सिसृक्षवः तद्व्यतिरिक्तं चेतनाचेतनं व्यावर्त्यं त्यक्तुमिच्छवः दौरात्म्यं रागद्वेषादि अन्यत्र भगवत्सौहृदव्यतिरिक्तं सौहृदं येषां नास्ति तैः अनन्यसौहृदैः तैः अवसितं निश्चितम् अनुभूतम् ॥ ३२–३३ ॥

## श्रीमद्वीरराघवव्याख्या

ननु, कथं विदुषामप्येवं सम्मोहनं यतो ब्राह्मणक्रोधात्परीक्षितो मृत्युः जनमेजयकोपाच्च सर्पाणामित्यादि तत्राह—सैषेति। बाध्यबाधकेति भावप्रधानो निर्देशः बाध्यत्वबाधकत्वे लक्ष्यत्युत्पादयति तथा तत्त्वं न साक्षात्किन्तु जीवमोहनद्वारेत्यभिप्रेत्याह—ययेति। यया मायया निदानभूतया भूतेषु क्रीडाविषयेषु गुणवृत्तिभिः क्रीडादिभिरसावात्मा मुह्यति ( ते ) ॥ २९ ॥ विष्णोर्महामायेति सम्बन्धोक्त्या तस्यापि तया मोहादिशङ्कां वारयन् समाधिदशायामनुसन्धेयं परमात्मस्वरूपमाह—न यत्रेति। आत्मवादिभिः परमात्मस्वरूपनिरूपकैः सकृदप्यात्मवादे परमात्मस्वरूपनिरूपणे क्रियमाणे दुर्विभाव्यतया दुर्विभाव्यत्वेन न विभाव्यते न स्वकार्य-करणेनावतिष्ठते सा माया यत्र परमात्मस्वरूपे न स्वकार्यक्षमेति किम्पुनर्वक्तव्यमित्यर्थः। किंच यद्यत्र परमात्मनि तदाश्रयः मायाश्रयः मायाप्रयुक्तमोहमूलकः विविधो विकारः कुतर्करूपो नास्ति तस्य तदविषयत्वादिति भावः। यद्यत्र सङ्कल्पविकल्पाभ्यां वर्तत इति तथा तन्मनश्च नास्ति न तद्विषयीकरोति निवृत्तसङ्कल्पविकल्पयोगपरिशुद्धमनोविषयत्वादिति भावः ॥ ३० ॥ किञ्च नेति सृज्यं शरीरं सृजतीति सृजत् कर्म तेन सह सृज्यं यत्र नास्ति कर्म तदायत्तं शरीरं च यत्र नास्तीत्यर्थः। उभयोः कर्म तत्कल्पितदेहयोः

परं ताभ्यां साध्यं सुखदुःखादिरूपं फलं च यत्र नास्तीत्यर्थः। वचश्च देवमनुष्यादिशब्दजातं च यत्र न वर्त्तते तदित्थम्भूतं परमात्मस्वरूपमित्यर्थः। ततः किमत आह—जीवः स्वयं त्रिभिरन्वितोपि गुणत्रयवशयोपि तन्मुनिः तादृशपरमात्मस्वरूपमननपरः एतत्पृथिव्याद्यचित्तत्त्वं निषिध्य परिहृत्य ऊर्मीनशनायापिपासाशोकमोहजरामृत्यूंश्च निषिध्य विरमेत् समाहितमनस्कतया निवृत्तव्यापारो भवेत् उत्सादितबाध्यबाधकमिति क्रियाविशेषणं परस्परम् उद्भवाभिभवहेतुभूतं गुणत्रयं यथोत्सादितं स्यात्तथा निषिध्येत्यर्थः॥ ३१॥ किञ्च तदेव वैष्णवं पदं परमामनन्ति वैष्णवमित्यभेदसम्बन्धे विशेषणं परं प्रकृतिपुरुषविलक्षणं परं सर्वोत्कृष्टं वा पद्यत इति पदं स्वरूपं किं तत् यन्नेतिनेति प्रकृतिप्राकृतजडाजडवस्तु यादृशं तादृशं न भवतीत्यत उत्सिसृक्षवः तद्व्यतिरिक्तचेतनाचेतनं व्यावर्त्तयितुमिच्छवः दौरात्म्यं रागद्वेषादिकमहं ममाभिमानं वा विसृज्य अनन्यसौहृदाः नान्यस्मिन् भगवद्व्यतिरिक्तं सौहृदं येषां ते हृदोपगूह्य ध्यानादिनासंश्लिष्य समाहितैः समाधिनिष्ठैरवसितं निश्चितम्॥ ३२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सुखादेर्जीवादृष्टमेव मुख्यं कारणं नान्यदित्याशङ्कां परिहरति—सैषेति। यादृष्टोद्बोधिका सैषा महामाया महदपरिमितं माहात्म्यं तस्य विष्णोस्तस्मात्र दुर्गात्रोच्यते बाध्ये स्थितत्वात् बाध्यात्मत्वेन जानाति सत्त्वादिगुणवृत्तिभिः कारणैः विषयवृत्तिभिर्न्यीपारैरिति शेषः॥ २९॥ मुख्यात्मा परमात्मेति शङ्कामपाकरोति—नेति। आत्मवादिभिः उपनिषद्विचारचतुरैः पुरुषैः असकृद्बहुवारमात्मवादे परमात्मविचारे कृते सति मायामोहनशक्तिर्यत्र हरौ न विराजते मोहकत्वेन न प्रवर्तते अन्यैर्दुर्विभाव्यतया स्थिता उपक्रमादितात्पर्यलिङ्गैः क्रियमाण एव विचारो निर्णायको नतु यथा प्रतीतार्थ इत्याह, नेति। विविधो यद्विवादः तदाश्रयो ब्रह्मविषयो न भवति "यद्वाचानभ्युदितम्" इति श्रुतेः। तर्हि मननसमर्थस्य मनसो विषयत्वं स्यादत्राह—मनश्चेति। चोप्यर्थः मनोपि यद्ब्रह्म न विषयीकरोति "यन्मनसा न मनुत" इति श्रुतेः। सङ्कल्पविकल्पाभ्यां वृत्तिर्यस्य तत्तथा अनेन मनसोऽस्थिरत्वेन विषयीकरणसामर्थ्यं नास्तीति सूचितं "मनसा वा अग्रे सङ्कल्पयत्यथ वाचा व्याहरति" इति श्रुतेः। वचो विषयो नेति किं वक्तव्यमिति कैमुत्यन्यायोप्यदर्शि अत्र वागादिशब्देन तदभिमानिदेवता व्यपदिश्यन्ते तासां जडत्वेन प्रवृत्त्यनुपपत्तेः॥ ३०॥ सृज्यं विश्वं यत्र न वर्तते बाधकतयेति शेषः। उभयोर्देवासुरयोः परं विलक्षणम् आनन्दलक्षणं श्रेयः सृजता ददता येन वैषम्यनैर्घृण्येनाप्येते इति शेषः। त्रिभिः सत्त्वादिगुणैर्धर्मार्थकामैर्वान्वितो जीवः स्वयं च यत्र न कञ्चन विशेषमापादयतीतिशेषः। यस्तदेतत् ब्रह्म जानाति तन्मुनिः स ज्ञानी षडूर्मीन्निषिध्य विरमेत कृत्यादितिशेषः। कीदृशं ब्रह्म उत्सादितबाध्यबाधकम् उत्सादितौ बाध्यबाधकौ येन तत्तथा॥ ३१॥ किन्नामधेयं ब्रह्मेति तत्राह—परं पदमिति। यन्नेति नेति इत्यतदुत्सिसृक्षवो विचक्षणाः यदेवं स्थितं तद्वैष्णवं पदमामनन्ति वदन्तीत्यन्वयः। कीदृशं तस्मिन्नेव समाहितैः करणैरवसितं सम्यग्वशीकृतम्॥ ३२॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कथं तर्हि विष्णुर्दम्भीये न तस्य महामायेत्युच्यते तत्राह—न यत्रेति। यत्र विष्णौ यस्य विष्णोः सन्निधाने निमित्ते आ इषत् विराजिता यत्किञ्चित् लब्धसामर्थ्यापि दम्भी दम्भवानयमित्यभिया न भवति किन्तु तस्मिन् दम्भादर्शनात् सभियैव भवतीत्यर्थः। माया हि सदम्भ एव निरर्गला भवतीति तदुक्तं "विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया" इति। किञ्चात्मवादिभिरात्मवादे कर्त्तव्ये यत् यत्र तदाश्रयो विविधो विवादो न विद्यते आत्मनः परत्वादिति भावः। अतो मनश्चेति ततस्तु सुतरां विवादाभाव इति भावः। तदेवं तत्सान्निध्यमात्रेण स्थिता न तु तत् सम्मता तस्यामनासक्तत्वात् तस्येति स्थितम्॥ ३०॥ मायाश्रयव्यवधानमसत्त्वं विवृणोति—न यत्र सृज्यमिति। जीवस्त्वहमित्यन्वयः निगमयति तत्पूर्वनिर्दिष्टमेतत्प्रकारमुत्सादितबाध्यबाधकं विष्णुतत्त्वमिति तदेतन्मननेनोर्मीन् मायादीन्निषिध्य मुनिर्विरमेत् तस्मादन्यत्र स्वयमेव विरतो भवति न तु यत्नान्तरेणेत्यर्थः॥ ३१॥ पुनस्तदेव विशदयति—परम्पदमिति। अतत् विष्णुतत्त्वव्यतिरिक्तं दौरात्म्यं तस्मिन् सौहृदाभावं समाहितैस्तस्मिन् समाहितान्तःकरणैः आत्मारामैरपि वा अवसितमनुभूतम्॥ ३२॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ननु, कथं विदुषामप्येवं सम्मोहः? यतो जनमेजयस्य कोपात् सर्पाणां वधस्तत्सभासदां विदुषामपि विप्राणामाभिचारिके सत्रे प्रवर्त्तनमिति तत्राह—सैषेति। तस्या महत्त्वं दर्शयति, अलक्षणा न लक्ष्यत इत्यलक्षणा अप्रतर्क्येत्यर्थः। यया अबाधया विद्वद्भिरपि बाधितुमशक्यया मुह्यन्ति, के ते? इत्यत आह, अस्यैव विष्णोरात्मभूता आत्मांशभूताः प्राणिनः भूतेषु प्राणिषु विषयेषु याः गुणवृत्तयः क्रोधद्वेषाद्यास्ताभिर्मुह्यन्ति॥ २९॥ ननु, यदि क्रोधद्वेषादिमत्सु सर्वजीवेष्वेवास्या मायाया मोहनाद्धेतोरधिकारस्तर्हि

कुत्र नाधिकार इति चेत्" विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया "विमोहिता विकत्थन्ते ममाहमिति दुर्धियः" इति ब्रह्मोक्तेर्भगवति विष्णौ भागवते च लोकेऽस्या नैवाधिकारः सत्ये कीदृशं तर्हि विष्णोः स्वरूपमित्यपेक्षायामाह—न यत्रेति त्रिभिः। यत्र विष्णुस्वरूपे माया न प्रभवति कीदृशी दम्भिनि दम्भवति पुरुषे इतौ गमने आक्रम इत्यर्थः अभया निर्भयैव विराजिता "इण् गतौ" कथयन्तः विष्णौ तदुक्तं च दम्भाभावात् तत्र सभयाविराजशून्यैव भवतीति भावः। तथा आत्मवादिभिरपि असकृत् पुनः पुनः आत्मवादे प्रवर्तिते सति यत् यत्र विष्णुस्वरूपे स्फुरिते सति विवादो नास्ति कीदृशः तदाश्रयः तां मायामेवाश्रयत इति सः यदुक्तं "यच्छक्तयो वदतां वादिनां वै विवादसम्वादभुवो भवन्ति" इति तथा सङ्कल्पविकल्परूपा मायिक्यो वृत्तयो यस्य तथाभूतं मनोपि यत्र नास्ति।३०। यथा यत्र स्फुरिते सति सृज्यं वस्तु सृजता कारणवर्गेण सह न स्फुरतीत्यर्थः। यतः उभयोः परं सृज्यस्रष्टृभ्यां पृथग्भूतं तच्च रूपं यथा यत्र स्फुरिते सति श्रेयश्च स्वर्गादिफलमपि न स्फुरति तथा त्रिभिर्गुणैर्जागरादिभिर्वा अन्वितो अहङ्कारात्मको जीवोपि न तत् तस्मादेतत् विष्णुस्वरूपम् उत्सादिता निरस्ता बाध्या जीवा बाधका गुणाश्च यस्मिंस्तथाभूतम् ननु, तर्ह्येतत् कः प्रकाशयेत् तत्राह, निषिद्धचेति स्वभक्तहृद्गतान् ऊर्मीन् कामक्रोधादीन् स्वयमेव तत्र विशेषतो रमेत तत्प्रसिद्धम्॥ ३१॥ तद्वैष्णवं पदं विष्णोः स्वरूपम् आमनन्ति भक्ताः पुनः पुनः स्मरणैरभ्यस्यन्ति कीदृशाः दौरात्म्यम् अहम्ममेति दौर्जन्यं विसृज्य नेति नेति नैतदनुकूलं नैतदननुकूलमिति कृत्वा अतत् तद्व्यतिरिक्तं देहगेहपुत्रकलत्रादिकमहं ममतास्पदं च उत्सिसृक्षवः क्रमेण त्यक्तुमिच्छवः यतोऽनन्येषु ऐकान्तिकभक्तेष्वेव सौहृदं येषां ते अतः समाहितैरेकाग्रचित्तैस्तैरेव भक्तैर्हृदा मनसा उपगुह्य अवसितं तत् वैष्णवं पदमवगतं नान्यैः॥ ३२॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

ननु, शृङ्गीक्रोधात् परीक्षितो मृत्युः जनमेजयक्रोधात्सर्पाणां च मृत्युरित्येवम्भूते मोहे को हेतुरत्राह—सैषेति। यया अस्य विष्णोः आत्मभूताः आत्मत उत्पन्नाः स्वांशभूताः जीवाः गुणवृत्तिभिः क्रोधादिभिः भूतेषु देहेषु मुह्यन्ति बाध्यबाधकतां प्राप्नुवन्ति सा एषा मोहहेतुभूता विष्णोरेव महामाया ननु स्वमोहकरीं सर्वे कुतो न जानन्तीत्यत आह—अलक्षणा शब्दादिरूपेण पृथिव्यादिरूपेण च अनुकूलतया प्रतीयमानापि मोहकतया न लक्ष्यते इत्यलक्षणा। ननु, एवम्भूतामहितकरीं कथञ्चिज्ज्ञात्वा कुतो न निवारयन्त्यत आह—अबाधयेति। विष्णुकृपां विना बाधयेत्यर्थः॥ २९॥ कथं तर्हि महामायातो जीवस्य विमुक्तिरित्यत्र हरौ निष्ठातिशयेनेत्याह—न यत्रेत्यादिना। यत्र जीवे अनादित अभया विराजितापि माया स आत्मवादिभिः सकृदपि आत्मवादे आत्मनः परमात्मनः वादे स्वरूपगुणादिनिर्णये क्रियमाणे इति हेतोः दम्भी न ज्ञेयः अयमर्थः यस्य विष्णोः स्वरूपगुणादिनिर्णये क्रियमाणे मायायुक्तोपि श्रवणपरो दम्भी न भवति किन्तु साधुरेव भवति "अपि चेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः" इति श्रीमुखवचनात् यत् यस्मिन् परमात्मनि तदाश्रयः मायाश्रयः विविधो विवादोपि नास्ति सर्ववेदैकवेद्यत्वात् सङ्कल्पविकल्पवृत्ति अशुद्धं यन्मनस्तदपि यस्मिन् न प्रवर्तते तस्मिन् परमात्मनि विष्णौ यदा जीवो विरमेत् तदा मायाविनिर्मुक्तो भवेदिति द्वयोरन्वयः।३०। तस्मिन् विष्णौ जीवः ऊर्मीन् शोकमोहादीन् निषिध्य मुनिः मननशीलः सन् विरमेत् विशेषतो रमेत समुच्येत इति शेषः। ननु जीवस्येदं देहादिकं प्रियं भवतीत्यत आह—सृजतीति। सृजत् विश्वसृड्गणः तेन सह इदं सृज्यं विश्वं यत्र यस्मिन् चिन्त्यमाने श्रेयो हितं न भवति। किञ्च, तयोः सृज्यस्रष्टोः परं कारणं प्रधानमपि न श्रेयो भवति तदा त्रिभिरन्वितः कफवातपित्तसमन्वितोऽतिमलिनो देहः श्रेयो नेति किमु वक्तव्यम्। ननु, स्वस्वरूपानन्देनैव कृतार्थतासिद्धौ किं तत्र रमणेनेत्यत आह—अहमिति। एतत् चेत्रज्ञत्वेन प्रसिद्धम् उत्सादितौ बाध्यबाधकभावौ यस्मात्तत् अहम् अस्मच्छब्दार्थभूतं जीवतत्त्वमपि यस्मिन् विचार्यमाणे श्रेयो न "सर्वेषामपि वस्तूनां नृप स्वात्मैव वल्लभः। इतरेऽपत्यवित्ताद्यास्तद्वल्लभतयैव हि। तस्यापि भगवान् कृष्णः किमतद्वस्तु रूप्यताम्। कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्" इति श्रीशुकवचनाच्च॥ ३१॥ किं तत्परमात्मस्वरूपमित्यत आह—परमिति। दौरात्म्यं देहादावहम्ममाभिमानं विसृज्य हृदा उपगुह्य ध्यानादिभिराश्लिष्य यत् यैः समाहितैरवसितं निश्चितं तत्ते एव सुज्ञातभगवत्तत्त्वाः नान्यत्र भगवद्व्यतिरिक्ते सौहृदं येषां ते अतत् भगवद्व्यतिरिक्तम् उत्सिसृक्षवः परं क्षराक्षराभ्यां विलक्षणम्—

"यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोस्मि लोके वेदे च प्रथितः पुरुषोत्तमः"॥

इति स्वमुखगीतं वैष्णवं पदं विष्णुस्वरूपमामनन्तीत्यन्वयः॥ ३२॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ननु कथं विदुषामप्येवं मोहो यतो ब्रह्मकोपात् परीक्षितो मृत्युः। जनमेजयकोपाच्च सर्पाणामित्यादि तत्राह—सैषेति। यया अस्य विष्णोरात्मभूताः अंशरूपा एव प्राणिनो गुणवृत्तिभिः क्रोधादिभिर्भूतेषु प्राणिषु मुह्यन्ति, बाध्यबाधकतां व्रजन्तीत्यर्थः।

सैषा विष्णोर्महामायेत्यन्वयः। तस्य महत्त्वं तस्यात्मभूता इत्यनेन सूचितम्। तत्र हेतुमाह—अलक्षणेति। न लक्षत इत्यलक्षणा, अप्रतर्क्येत्यर्थः। ननु विचारेण बाधितया कथं मोहः स्यादित्याशङ्क्याह—अबाधयेति। भगवत्कृपामन्तरेण स्वल्पयत्नेन बाधितुमशक्ययेत्यर्थः॥ २९॥ ननु यदि सैवं प्रबला तदा विष्णोरपि मोहादिकं स्वकार्यं कुर्यादित्याशङ्क्याह—न यत्रेति। दम्भीति कपटवानयं पुमानित्येवम्भूतायां बुद्धावसकृदुल्लिख्यमाना या माया ब्रह्मवादे ब्रह्मविचारे क्रियमाणे आत्मवादिभिर्यत्र विष्णौ अभया न विराजिता किन्तु भीतेव स्वकार्यं मोहादिकमकुर्वती कथञ्चिद्वर्त्तत इति प्रतिपादितेत्यर्थः। यदुक्तं ब्रह्मणापि—'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया। विमोहिता विकत्थन्ते ममाहमिति दुर्धियः' इति। किञ्च यत् यस्मिन् तदाश्रयः तत्कृतो मायाकृतो विविधो विवादो वाग्व्यवहारो नास्ति। तथा सङ्कल्पविकल्पा वृत्तयो यस्य तन्मनोऽपि यत्र न प्रवर्त्तते 'यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह' इति श्रुतेः॥३०॥ तथा सृजता कारकवर्गेण सह सृज्यं पुण्यपापात्मकं कर्म यत्र नास्ति। तथोभयोः सृज्यस्रष्टोः परं साध्यं श्रेयःफलं च सुखदुःखादि यत्र नास्ति। तथा त्रिभिः सत्त्वादिभिर्गुणै रचितः जीवो जीवोपाधिरूपोऽहङ्कारश्च यत्र नास्ति। अतएव उत्सादितौ निरस्तौ बाध्यबाधकौ भावप्रधानो निर्देशः, बाध्यत्वबाधकत्वे यस्मिंस्तदेतत् परमात्मनः स्वरूपमित्यर्थः। अतो न तत्र मायाकार्यं मोहादिकमिति भावः। तर्हि जीवगता मोहनिवृत्तिः कथमित्यपेक्षायामाह—निषिध्येति। मुनिः मननशीलो विवेकी स्वयमपि ऊर्मीन् अहङ्कारादीन् निषिध्य त्यक्त्वा विरमेत् विशेषेण क्रीडेत् तद्ध्यानपर एव भवेदित्यर्थः॥ ३१॥ उक्तमेव सदाचारेण दृढयति—परमिति। अनन्यसौहृदाः नास्ति भगवतोऽन्यस्मिन् सौहृदं प्रेम येषां ते अतएव नेति नेतीत्येवमतत् भगवद्व्यतिरिक्तमुत्सिसृक्षवः त्यक्तुमिच्छवो भगवद्भक्ता यत्पूर्व निरूपितं तदेव परं सर्वत उत्कृष्टं वैष्णवं पदं स्वरूपमामनन्ति वर्णयन्ति। तथा समाहितैर्वशीकृतदेहेन्द्रियान्तःकरणैर्मुमुक्षुभिः दौरात्म्यं देहादावहम्ममभावं विसृज्य हृदा ध्यानेनोपगुह्यालिङ्ग्य अवसितं, निरन्तरं ध्येयतया गृहीतमित्यर्थः॥ ३२॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ननु विदुषः शृङ्गिब्राह्मणस्य क्रोधात् परीक्षितो मृत्युर्विदुषो जनमेजयस्य कोपाच्च सर्पाणां मृत्युरित्येवं विदुषामपि क्रोधाग्निरूपः संमोहः केन हेतुनोत्पन्नः स्यादिति चेद्भगवन्माययेत्याह। सैषेति। सा एषा विष्णोर्भगवतः, बाध्यबाधकौ बाध्यबाधकत्वे लक्षयत्यापादयतीति बाध्यबाधकलक्षणा महामाया। बाध्यबाधकाविति भावप्रधानो निर्देशः। बाध्यत्वबाधकत्वे माया साक्षान्न करोति, किं तु जीवमोहनद्वारेत्यभिप्रेत्याह ययेति। यया बाध्यबाधकत्वनिदानभूतया मायया हेतुना, भूतेषु देहद्वारेन्द्रियभोग्येषु विषयेषु, गुणवृत्तिभिः क्रोधादिभिः, असौ आत्मा मुह्यति बाध्यबाधकतां व्रजतीत्यर्थः। केचित्तु अस्य श्लोकस्य पूर्वार्द्धद्वितीयपादस्थाने 'अबाधयाऽलक्षणया यया' इति, उत्तरार्द्धाद्यपादस्थाने 'मुह्यत्यस्यैवात्मभूता' इति च पठन्ति। तथात्वेऽप्येष व्याख्यायते। यया विदुषामपि एवं संमोह इति शेषः। सा एषा विष्णोर्भगवतः महामाया। यतो भगवत एव शक्तिभूतेयं महामाया भवत्यत इति शेषः। 'अकारो वासुदेवः स्यात्' इत्येकाक्षरकोशात्, अः विष्णुस्तेन तत्प्रपदनेनैव बाधं यातीत्यबाधया। आदन्ताड्डप्रत्यये रूपं गोदावत्, स्वशरणं प्राप्तानां विष्णुनैव निवर्त्तनीयाऽस्तीत्यर्थः। तथा चोक्तं भगवतैव 'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति। अस्योक्तविधस्य विष्णोरेव आत्मभूताः शरीरभूताः 'यस्यात्मा शरीरम्' इति श्रुतेः, न लक्ष्यन्ते स्वरूपत इत्यलक्षणाः जीवाः येषां विरूपमेवंविधमित्याकलयितुं न शक्यं तथाभूताः क्षेत्रज्ञाः सन्तीत्यर्थः। तदप्युक्तं भगवतैव 'आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः। आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित्'। इति। एवं भगवच्छरीरभूता दुराकलनीयस्वरूपाः सन्तोऽप्येते जीवा इति शेषः। यया मायया निमित्तभूतया, गुणवृत्तिभिः गुणत्रयवृत्त्यात्मकक्रोधादिभिः करणैः, भूतेषु देहतदनुबन्धिविषयादिषु मुह्यन्ति॥ २९॥ विष्णोर्महामायेत्युक्त्या विष्णोरपि मायासंबन्धोक्त्या तस्यापि तया मोहादिशङ्का प्राप्ता, तां वारयन् समाधिदशायामनुसधेयपरमात्मस्वरूपमाह। न यत्रेति। आत्मवादिभिः उपनिषद्विचारचतुरतया परमात्मस्वरूपनिरूपकैः पुरुषैः, असकृद्बहुवारं, आत्मवादे परमात्मस्वरूपनिरूपणे क्रियमाणे, परमात्मस्वरूपविचारे कृते सतीत्यर्थः। या दुर्भाव्यतया दुर्विभाव्यत्वेन न विभाव्यते। उपक्रमोपसंहारादिलिङ्गैर्विचारे क्रियमाणे स्वकार्यकरणे नावतिष्ठत इत्यर्थः। सा माया यत्र परमात्मस्वरूपे न, स्वकार्यक्षमा नेति किं पुनर्वक्तव्यमित्यर्थः। आत्मस्वरूपविचारवत्सु यस्या बलं न प्रवर्त्तते तथाभूता सा परमात्मनि स्वकार्यकरणक्षमा कथं स्यादिति भावः। किं च, यद्यत्र परमात्मनि तदाश्रयः मायाश्रयः मायाप्रयुक्तमोहमूलक इत्यर्थः। विविधः विकारः विविधकुतर्करूपो विकार इत्यर्थः। न अस्ति। तस्य तदविषयत्वादिति भावः। यद्यत्र संकल्पविकल्पाभ्यां वर्त्तत इति संकल्पविकल्पवृत्ति मनश्च न, तन्न विषयीकरोति, विनिवृत्तसंकल्पविकल्पयोगपरिशुद्धमनोविषयत्वादिति भावः। केचित्तु 'न यत्र दम्भीत्यभया विराजिता' इति पूर्वार्द्धपूर्वपादं तथा 'न यद्विवादो विविधस्तदाश्रयः' इत्युत्तरार्द्धाद्यपादं च पठन्ति। तथाविधपाठेऽप्ययं व्याख्यायते। कथंतर्हि मायातत्कार्यनिवृत्तिरित्याशङ्क्य श्रीविष्णुस्वरूपनिरूपणपूर्वकं तद्भजनात् सर्वानर्थनिवृत्तिरिति वदति। न यत्रेति। दम्भी इति। दम्भी नाम माया, सा का, तत्कपटभाक् जीवः, परमात्मा वोभौ इति नामैवंभूतायां बुद्धौ इत्यर्थः। आत्मवादिभिः असकृद्वारं वारं, आत्मवादे आत्मशब्दवाच्यजीवात्मपरमात्मस्वरूपविचारे इत्यर्थः। क्रियमाणे सति, यत्र परमात्मस्वरूपे, या अभया

सती न विराजिता, सा माया या स्ववशवर्त्तिनि जीवे मोहनादि स्वकार्यं कुर्वती सत्यपि, विष्णौ तु मत्कपटमयं जानातीति स्वकार्यं विधातुं तत्पुनः निर्भयं यथा तथा स्थातुं न शक्नोति सा मायेति भावः। 'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया। विमोहिता विकत्थन्ते ममाहमिति दुर्धियः।' इत्युक्तेः किं च यद्यस्मिन् भगवत्स्वरूपे तदाश्रयः मायाश्रयः, विविधः विवादः न, संकल्पविकल्पाभ्यां वृत्तिर्यस्य तत् यत् मनस्तच्च न प्रवर्त्तते 'यद्वाचानभ्युदितम्। यन्मनो न मनुते' इति च श्रुतेः। जीवस्य त्वनादिकालतो मायापरिवृतत्वाद्भगवत्प्रपदनं विना न ततो विमोचनमिति भावः। तथा चोक्तं वृहद्ब्रह्मसंहितायाम्—'अनादिकालतो जीवो मायया परिवेष्टितः। अनुग्रहाद्धरेरेव मुच्यते नात्र संशयः' इति ॥ ३० ॥ न यत्रेति। सृजतीति सृजत् कर्म तेन सह सृज्यं शरीरं यत्र 'न कर्म तदायत्तं शरीरं च यत्रनास्तीत्यर्थः। उभयोः कर्मतत्कल्पितदेहयोः परं न, कर्मदेहाभ्यां साध्यं सुखदुःखादिरूपं फलं च यत्र नास्तीत्यर्थः। वचश्च देवमनुष्यादिशब्दजातं च न, यत्र न वर्त्तते इत्यर्थः। इत्थंभूतं परमात्मस्वरूपमस्तीति भावः। ततः किमत आह। स्वयं जीवः क्षेत्रज्ञः त्रिभिः अन्वितः तु गुणत्रयपरवशोऽपीत्यर्थः। तत् तस्योक्तविधपरमात्मस्वरूपस्य मुनिः मननपरः सन्, एतदचित्तत्त्वं, अहं तदहंभावं च निषिध्य परिहृत्य, ऊर्मीन् अशनापिपासाशोकमोहजरामृत्यूंश्च उत्सादितौ बाध्यबाधकौ यथा स्यात्तथा निषिध्य परस्परमुद्भवाभिभवहेतुभूतं गुणत्रयं यथोत्सादितं स्यात्तथा निषिध्येत्यर्थः। विरमेत् समाहितमनस्कतया निवृत्तव्यापारो भवेत्। परमात्मस्वरूपं सर्वदा त्रिगुणातीतमेव जीवस्वरूपमनादिकालतस्त्रिगुणबद्धमेवैवंभूतो जीवो यद्ध्यानादिना गुणवश्यतां विसृज्य ब्रह्मभूतः सन् भगवतः परभक्तिभाग्भवेदिति भावः। 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्। इति भगवदुक्तेः ॥ ३१ ॥ परमिति। नेति नेति एवंभूतं न एवंभूतं नेत्येवमित्यर्थः। अतदुत्सिसृक्षवः प्रकृतिप्राकृतजडाजडवस्तु यादृशं न भवतीत्यतदुत्सिसृक्षवः, तत्स्वरूपव्यतिरिक्तचेतनाचेतनं व्यावर्त्तयितुमिच्छव इत्यर्थः। दौरात्म्यं रागद्वेषादिकं, अहंममाभिमानं वा विसृज्य, नान्यस्मिन् भगवद्व्यतिरिक्तं सौहृदं येषां तेऽनन्यसौहृदाः सन्तः, हृदा उपगुह्य मनसा ध्यानादिभिः संश्लिष्येत्यर्थः। ये वर्त्तन्ते इति शेषः। समाहितैः समाधिनिष्ठैस्तैः अवसितं निश्चितं, अनुभूतमित्यर्थः। एवंभूतं यत् परं परमात्मस्वरूपं, तत् वैष्णवं पदं आमनन्ति। विष्णुभक्तप्राप्यं स्वरूपं वेदा वारं वारं कथयन्तीत्यर्थः ॥ ३२ ॥

## हिन्दी अनुवाद

ऋषिगण! (जिससे विद्वान् ब्राह्मण को भी क्रोध आया, राजा को शाप हुआ, मृत्यु हुई, फिर जनमेजय को क्रोध आया, सर्प मारे गये) यह वही भगवान् विष्णु की महामाया है। यह अनिर्वचनीय है, इसी से भगवान् के स्वरूपभूत जीव क्रोधादि गुण-वृत्तियों के द्वारा शरीरों में मोहित हो जाते हैं, एक दूसरे को दुःख देते और भोगते हैं और अपने प्रयत्न से इसको निवृत्त नहीं कर सकते ॥ २९ ॥ (विष्णु भगवान् के स्वरूप का निश्चय करके उनका भजन करने से ही माया से निवृत्ति होती है; इसलिये उनके स्वरूप का निरूपण सुनो—) यह दम्भी है, कपटी है—इत्याकारक बुद्धि में बार-बार जो दम्भ-कपट का स्फुरण होता है, वही माया है। जब आत्मवादी पुरुष आत्मचर्चा करने लगते हैं, तब वह परमात्मा के स्वरूप में निर्भय रूप से प्रकाशित नहीं होती; किन्तु भयभीत होकर अपना मोह आदि कार्य न करती हुई ही किसी प्रकार रहती है। इस रूप में उसका प्रतिपादन किया गया है। माया के आश्रित नाना प्रकार के विवाद, मतवाद भी परमात्मा के स्वरूप में नहीं हैं, क्योंकि वे विशेष-विषयक हैं और परमात्मा निर्विशेष है। केवल वाद-विवाद की तो बात ही क्या है, लोक-परलोक के विषयों के सम्बन्ध में सङ्कल्प-विकल्प करने वाला मन भी शान्त हो जाता है ॥ ३० ॥ कर्म, उसके सम्पादन की सामग्री और उनके द्वारा साध्यकर्म इन तीनों से अन्वित अहङ्कारात्मक जीव—यह सब जिसमें नहीं हैं, वह आत्मस्वरूप परमात्मा न तो कभी किसी के द्वारा बाधित होता है और न तो किसी का विरोधी है। जो पुरुष उस परमपद के स्वरूप का विचार करता है, वह मन की मायामयी लहरों, अहङ्कार आदि का बाध करके स्वयं अपने आत्मस्वरूप में विहार करने लगता है ॥ ३१ ॥ जो मुमुक्षु एवं विचारशील पुरुष परमपद के अतिरिक्त वस्तु का परित्याग करते हुए 'नेति-नेति' के द्वारा उसका निषेध करके ऐसी वस्तु प्राप्त करते हैं, जिसका कभी निषेध नहीं हो सकता और न तो कभी त्याग ही, वही विष्णु भगवान् का परम पद है; यह बात सभी महात्मा और श्रुतियाँ एक मत से स्वीकार करती हैं। अपने चित्त को एकाग्र करने वाले पुरुष अन्तःकरण की अशुद्धियों को, अनात्म-भावनाओं को सदा-सर्वदा के लिये मिटाकर अनन्य प्रेमभाव से परिपूर्ण हृदय के द्वारा उसी परम पद का आलिङ्गन करते हैं और उसी में समा जाते हैं ॥ ३२ ॥

त एतदधिगच्छन्ति विष्णोर्यत् परमं पदम् । अहं ममेति दौर्जन्यं न येषां देहगेहजम् ॥ ३३ ॥

अतिवादांस्तितिक्षेत नावमन्येत कञ्चन । न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ३४ ॥

नमो भगवते तस्मै कृष्णायाकुण्ठमेधसे । यत्पादाम्बुरुहध्यानात् संहितामध्यगामिमाम् ॥ ३५ ॥

शौनक उवाच

पैलादिभिर्व्यासशिष्यैर्वेदाचार्यैर्महात्मभिः । वेदाश्च कतिधा व्यस्ता एतत् सौम्याभिधेहि नः ॥ ३६ ॥

सूत उवाच

समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः । हृद्याकाशादभून्नादो वृत्तिरोधाद् विभाव्यते ॥ ३७ ॥

यदुपासनया ब्रह्मन् योगिनो मलमात्मनः । द्रव्यक्रियाकारकाख्यं धूत्वा यान्त्यपुनर्भवम् ॥ ३८ ॥

ततोऽभूत्त्रिवृदोङ्कारो योऽव्यक्तप्रभवः स्वराट् । यत्तल्लिङ्गं भगवतो ब्रह्मणः परमात्मनः ॥ ३९ ॥

शृणोति य इमं स्फोटं सुप्तश्रोत्रे च शून्यदृक् । येन वाग् व्यज्यते यस्य व्यक्तिराकाश आत्मनः ॥ ४० ॥

कृष्णप्रिया व्याख्या

अन्वयः—येषां देहगेहजम् अहं मम इति दौर्जन्यं न ते एतत् विष्णोः यत् परमं पदम् अधिगच्छन्ति ॥ ३३ ॥ अतिवादान् तितिक्षेत कञ्चन न अवमन्येत इमं देहम् आश्रित्य केनचित् वैरं न कुर्वीत ॥ ३४ ॥ यत्पादाम्बुरुहध्यानात् इमां संहिताम् अध्यगाम् अकुण्ठमेधसे तस्मै भगवते कृष्णाय नमः ॥ ३५ ॥ शौनकः उवाच—सौम्य व्यासशिष्यैः वेदाचार्यैः महात्मभिः पैलादिभिः वेदाः कतिधा व्यस्ताः एतत् नः अभिधेहि ॥ ३६ ॥ सूतः उवाच—ब्रह्मन् समाहितात्मनः परमेष्ठिनः ब्रह्मणः हृदि आकाशात् नादः अभूत् ( यः ) वृत्तिरोधात् विभाव्यते ॥ ३७ ॥ ब्रह्मन् यदुपासनया योगिनः आत्मनः द्रव्यक्रियाकारकाख्यं मलं धूत्वा अपुनर्भवं यान्ति ॥ ३८ ॥ ततः त्रिवृत् ओंकारः अभूत् यः अव्यक्तप्रभवः स्वराट् यत् तत् भगवतः परमात्मनः ब्रह्मणः लिङ्गम् ॥ ३९ ॥ यः सुप्तश्रोत्रे इमं स्फोटं शृणोति ( यः ) शून्यदृक् येन वाक् व्यज्यते यस्य आकाशे आत्मनः व्यक्तिः ॥ ४० ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

एतत्प्राप्तावधिकारिणो दर्शयति । त एतदिति । देहजमहमिति । गेहजं ममेति ॥ ३३ ॥ तत्र प्राप्त्युपायमाह । अतिवादानिति ॥ ३४ ॥ शास्त्रसमाप्तौ गुरुं प्रणमति । नम इति । कृष्णाय व्यासाय । अध्यगामधिगतवानस्मि ॥ ३५ ॥ इमां संहितामध्यगामित्युक्तं तत्र पुराणसंहिताविभागं विशेषतो बुभुत्सुर्वेदविभागमपि प्रसंगात्पृथक् पृच्छति । पैलादिभिरिति । हे सौम्य ॥ ३६ ॥ तत्र प्रथमं वेदाविर्भावप्रकारमाह समाहितात्मन इत्यष्टभिः । ब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूत् । यः कर्णपुटपिधानेन श्रोत्रवृत्तिनिरोधादस्मदादिष्वपि विभाव्यते वितर्क्यते ॥ ३७ ॥ प्रसंगान्नादोपासकानां मोक्षफलमाह । यस्य नादस्योपासनयाऽऽत्मनो मलं धूत्वाऽपोह्य । कथंभूतं मलं तमाह । द्रव्यमधिभूतं क्रियाऽध्यात्मं कारकमधिदैवं एवं त्रिधाभूता आख्या यस्येति तथा तम् ॥ ३८ ॥ त्रिवृत् त्रिमात्रः कंठोष्ठादिभिरुच्चार्यमाणस्योंकारस्याक्षरसमाम्नायांतर्भावात्सूक्ष्मतया तं विशिनष्टि । अव्यक्तः प्रभवो यस्य सः । तदेवाह । स्वराट् स्वत एव हृदि प्रकाशमानः । तमेव कार्येण लक्षयति । यत्त दिति । नपुंसकत्वं लिंगशब्दविशेषणत्वात् । लिंगं गमकम् ॥ ३९ ॥ कोऽसौ परमात्मा तमाह । शृणोतीति । इमं स्फोटमव्यक्तमोंकारम् । ननु जीव एव तं शृणोतु नेत्याह । सुप्तश्रोत्रे कर्णपिधानादिनाऽवृत्तिकेऽपि श्रोत्रे सति । जीवस्तु करणाधीनज्ञानत्वान्न तदा श्रोता । तदुपलब्धिस्तु तस्य परमात्मद्वारिकैवेति भावः । ईश्वरस्तु नैवम् । यतः शून्यदृक् । शून्येऽपींद्रियवर्गे दृग् ज्ञानं यस्य । तथाहि सुप्तो यदा शब्दं श्रुत्वा प्रबुध्यते न तदा जीवः श्रोता लीनेंद्रियत्वात् । अतो यस्तदा शब्दं श्रुत्वा जीवं प्रबोधयति स यथा परमात्मैव तद्वत् । कोऽसावोंकारस्तं विशिनष्टि सार्धेन । येन वाग्बृहती व्यज्यते । यस्य च हृदयाकाशे आत्मनः सकाशाद्व्यक्तिरभिव्यक्तिः ॥ ४० ॥

श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एतत् प्रत्युक्तया नित्यापरोक्षं परमं पदमुपाधिविमुक्तं शुद्धस्वरूपम् । दौर्जन्यं दुर्जनतालक्षकम् ॥ ३३ ॥ एतद्वैष्णवपदमपराधे सति तिरोहितं भवेदतोऽपराधानुद्भवविधिमाह—अतिवादान् कटूक्तीः सहेतैव न तु तादृशमुत्तरं दद्यात् ॥३४॥ गुरुं श्रीव्यासम् ।

यद्यपि श्रीशुक एव तदुपदेष्टा तथापि श्रीकृष्णद्वैपायननतिसदुपदेशस्यापि तत्प्रसादमननादेवेति ध्येयम्। यद्वा—शास्त्रं समाप्य स्वेष्टदेवं भगवंतं नमति—नम इति। अध्यगां श्रीशुकादधिगतवानस्मीति ॥ ३५ ॥ हे सौम्येति—सोमवच्चित्तसंतापहरत्वेन प्रकाशस इति भावः। तत्र वेदविभागपुराणसंहिताविभागयोर्मध्ये ॥ ३६ ॥ तत्रेत्युक्तार्थमेव। हे ब्रह्मन्निति—त्वं तु जानास्येव लोकहितार्थमेवायं प्रश्न इति भावः। वेदकल्पतरोः फलं निरूप्य शाखा अपि संक्षेपत आह—समेति। परमेष्ठिनो ब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूत् यत्र नादे वृत्तिरोधादेकाग्रया बुद्ध्या ब्रह्म विभाव्यते चिंत्यते योगिभिरित्यप्यर्थः ॥ ३८ ॥ यद्ब्रह्मोपासनया स्वात्मतत्त्वानुसंधानेनात्मनो मलं माया विद्यादीशजीवोपाधितत्कार्यं च द्रव्यं समष्टिव्यष्टिदेहं क्रिया इंद्रियाणि कारकं कर्तृ अंतःकरणाख्यं धूत्वा तद्विविक्तं प्रत्यगभिन्नं ब्रह्मावगत्यापुनर्भवं मोक्षं यांतीति वार्थः ॥ ३८ ॥ अव्यक्तोऽस्फुटः, प्रभव उद्भवः। तदेवाऽव्यक्तोत्पत्तिकत्वमेव। तमेव प्रणवमेव। गमक ज्ञापकम्। ततो नादात् घंटानादतुल्यनादात्। त्रिभिरकाराद्यैर्वर्तते त्रीनकारादीन् वृणोत्यादत्ते वेति त्रिवृत्। त्रिवृदकारोकारमकारात्मक ओंकारो योऽव्यक्तस्य प्रमाणांतरागम्यस्य ब्रह्मणः प्रभवोऽपरोक्षो यस्मात्स स्वराट् स्वतः प्रमाणभूतः भगवतो ब्रह्मणः प्रत्यगात्मनश्च परलिंगम्। अकारोकारमकारवाच्यविश्वतैजसप्राज्ञविलापनेनानुच्चार्यार्द्धमात्रावबोध्यवागगोचरब्रह्मज्ञापकम् ॥ ३९ ॥ अत्राक्षिपति-नन्विति। इति भाव इति—न हि जीव इंद्रियं विनेन्द्रियिकमधिगच्छत्यन्यथांधादे रूपादिज्ञानं स्यादिति तात्पर्यम्। नैवं जीवसदृशो नेत्यर्थः। यद्वा—यः पुरुष इमं स्फुटत्यतेऽनेनेति स्फोटं सुप्तश्रोत्रे मुद्रितकर्णे शृणोति स शून्यदृक् सूक्ष्मदर्शी स्यात्। तमेव विशेषयति—यतः स्फोटात्सर्वा वाग्व्यज्यते प्रकटीभवति यन्निमित्तिका हृदयाकाशे आत्मनो व्यक्तिः। प्रणवरूपस्फोटोपासनयैव हृद्यात्माविर्भावो भवतीत्यर्थः ॥ ४० ॥

## अन्वितार्थप्रकाशिका

त एतदिति। येषां देहजम् अहमिति गेहादिजं ममेति दौर्जन्यम् अभिमानो नास्ति त एव विष्णोर्यत्परं पदं तदेतदधिगच्छन्ति ॥ ३३ ॥ अतिवादानिति। अतिवादान् निन्दावचनानि। स्फुटं शेषम् ॥ ३४ ॥ नम इति। कृष्णाय व्यासाय अध्यगाम-धीतवानस्मि स्फुटमन्यत् ॥ ३५ ॥ पैलेति। हे सौम्य! स्फुटमन्यत् ॥ ३६ ॥ समाहितेति। हे ब्रह्मन्! समाहितात्मनः निश्चलचेतसः अतः परमेष्ठिनः सर्वोत्तमाधिकारनिष्ठस्य ब्रह्मणो हृदि आकाशस्तस्मान्नादः प्राणघोषोऽभूत्। यः कर्णपुटपिधाने श्रोत्रवृत्तिरोधादस्मदादिष्वपि विभाव्यते वितर्क्यते ॥ ३७ ॥ यदिति हे ब्रह्मन्! यस्य नादस्योपासनया योगिनः द्रव्यमधिभूतं क्रिया अध्यात्मं कारकमधिदैवम् एवं त्रिधा आख्या यस्य तथाभूतम् आत्मनो मलं धूत्वा अपोह्य अपुनर्भवं मोक्षं यान्ति ॥ ३८ ॥ तत इति। ततो नादात्त्रिवृत् त्रिमात्रः कण्ठोष्ठादिभिरुच्चार्यमाणस्याक्षरसमाम्नाये वक्ष्यमाणेऽन्तर्भावात् इति स्वामिपादाः। ओंकारस्य अकारोकारमकारात्मकत्वात् इति त्वन्ये। अभवत्। यः अव्यक्तः स्पष्टः अभवो जन्म यस्य सः अत एव स्वराट् स्वत एव हृदि प्रकाशमानः यत्तद्भगवतः परमात्मनो ब्रह्मणो लिङ्गं गमकम्। यदिति क्लीबत्वं लिङ्गशब्दविशेषणत्वात् ॥ ३९ ॥ कोऽसौ परमात्मा तमाह—शृणोतीति। यः परमात्मा सुप्तश्रोत्रे कर्णपिधानादिना श्रोत्रे अवृत्तिकेऽपि सति इमं स्फोटमव्यक्तं नादात्मकमोङ्कारं शृणोति यश्चेश्वरः शून्यदृक् शून्येऽपीन्द्रियवर्गे दृक् ज्ञानं यस्य तादृशोऽस्ति तथा हि सुप्तो यदा शब्दं श्रुत्वा प्रबुद्ध्य तेन तदा जीवः श्रोता लीनेन्द्रियत्वात्। अतो यः शब्दं श्रुत्वा प्रबोधयति स तदा परमात्मैव। जीवस्तु करणाधीनज्ञानत्वान्न तदा श्रोता तदुपलब्धिस्तु तस्य परमात्मद्वारैव। तद्वत् ओङ्कारं विशिनष्टि। येन ओङ्कारेण नादरूपेण वाक् बृहती व्यज्यते यस्य च हृदयाकाशे आत्मनः सकाशात् व्यक्तिः अभिव्यक्तिः ॥ ४० ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

कृष्णाय व्यासाय अकुण्ठमेधसे अप्रतिहतज्ञानाय ॥ ३५-३६ ॥ नादः आकाशगुणभूतः शब्दः ॥ ३७ ॥ यदुपासनया अपुनर्भवं यान्तीति ज्ञानोत्पादनद्वारेणेति भावः। द्रव्यं शरीरं क्रियाकारकशब्दाभ्यां बन्धकं कर्म विविक्षितम् ॥ ३८ ॥ ततोऽभूत त्रिवृदोङ्कार इति प्रथमं धारणरूपेण प्रतिपन्नःशब्दः प्रणवो व्यक्तोऽभूदित्यर्थः। अव्यक्तप्रभवः अयोगिभिर्ज्ञातुमशक्यप्रभवः स्वयमेव राजते स्वराट् लिङ्गं ज्ञापकं वाचकम् ॥ ३९ ॥ इदं स्फोटं प्रणवरूपं यः शून्यदृक् अर्थान्तरज्ञानरहितः शृणोतीत्यन्वयः। येनेति। येन परमात्मना विश्वं कार्यं व्यज्यते सृज्यते यस्यात्मनः आकाशो व्यक्तकार्यभूतः आकाशादिप्रपञ्चकारणस्य तस्य ब्रह्मणो वाचक इत्यन्वयः। यद्वा, येन प्रणवेन परमात्मा व्यज्यते यस्य प्रणवस्य व्यक्तिरात्मनः आकाशे परमात्मनः स्थाने हृदयकाशे ॥ ४०-४१ ॥

## श्रीमद्वीरराघवव्याख्या

दौरात्म्यं विसृज्येत्युक्त्या तत्त्यागस्य साधननिष्पादनद्वारा भगवत्प्राप्तिसाधनत्वं सूचितं तत्स्पष्टमेवाह—एतदिति। येषां देहगेहजं देहगेहविषयम् अहं ममेति दौर्जन्यं नास्तीति एते तद्विष्णोः परमं पदम् अधिगच्छन्ति उपासनया साक्षात्कुर्वन्ति गत्यर्थाः

बुद्धयर्थाः यद्वा प्राप्नुवन्ति ॥ ३३ ॥ तदेवं बाध्यबाधकभावस्य भगवन्मायाप्रयुक्तत्वमभिधायाथ तदनुप्रसक्तञ्च परिहृतं तन्मायातितीर्षूणां वृत्तिमाह—अतिवादानिति। अतिक्रान्तवादान्विरुद्धवादान् पुरुषवचांसीति यावत् इमं मर्त्यं देहमाश्रित्यात्मत्वेन [ आत्मीयत्वेन ] अभिसन्धाय केनचिदपि वैरं न कुर्यात् ॥ ३४ ॥ शास्त्रसमाप्तौ गुरुनमस्कारात्मकं मङ्गलमाचरति—नम इति। कृष्णाय कृष्णद्वैपायनायाकुण्ठमेधसे असङ्कुचितबुद्धये अध्यगामधिगतवानस्मि ॥ ३५ ॥ इमां संहितामध्यगाम् इत्युक्त तत्र पुराणसंहिताविभागं विशेषतो बुभुत्सुस्तावत्तन्मूलभूतवेदविभागं पृच्छति शौनकः—पैलादिभिरिति। वेदाचार्य्यैः वेदाचारनिरतैः तत्प्रवर्त्तकैश्च कतिधा व्यक्ताः विभक्ताः एतद्विभागवैविध्यं नोऽस्मभ्यमभिधेहि ॥ ३६ ॥ इत्थमापृष्टस्तं विभागं विवक्षुस्तावत् ( यावत् ) बादरायणजन्मविभागेनैव प्रवृत्त इति वक्तुं तावद्वेदाविर्भावक्रममाहाष्टभिः समाहितेति। हे ब्रह्मन् शौनक! भगवति समाहित आत्मा मनो येन तस्य परमेष्ठिनश्चतुर्मुखस्य हृदि य आकाशस्तस्मान्नादाऽभूत् आकाशसंसृष्टवायुपरिणामात्मकप्राणघोषः अभूत् आविर्बभूव, नादं विशिनष्टि—यो वृत्तिरोधाच्छ्रोत्रवृत्तिनिरोधाद्विभाव्यते श्रोत्रपिधानाच्छ्रूयते इत्यर्थः ॥ ३७ ॥ किञ्च यस्य नादस्योपासनया योगिनः योगीश्वराः द्रव्यक्रियाकारकाख्यमात्मनो मलं विधूयापुनर्भवं मोक्षं प्राप्नुवन्ति ज्ञानोत्पादकत्वात्तदुपासनाया इति भावः। द्रव्यं शरीरं क्रिया पुण्यापुण्यात्मकं कर्म कारकम् इन्द्रियम् एवम् त्रिधा ख्यायते इति तथा देहेन्द्रियतदुभयनिष्पाद्यकर्माख्यं मलमित्यर्थः ॥ ३८ ॥ तत इति। ततो नादात् त्रिवृदोङ्कारोऽभवत्प्रथमं साधारणरूपेण प्रतिपन्नः शब्दः प्रणवरूपेण व्यक्तो बभूवेत्यर्थः। त्रिवृत्त्रयाणामकारोकारमकाराणां वृद्धर्त्तनं यस्मिन् सः त्रिमात्रो वा तमेव विशिनष्टि—अव्यक्तप्रभवः अयोगिभिर्ज्ञातुमशक्यप्रभवः स्वयमेव राजत इति स्वराट् यत्तद्ब्रह्मणः परमात्मनो लिङ्गं ज्ञापकं वाचकं यत्तदिति नपुंसकत्वं लिङ्गविशेषणत्वात् ॥ ३९ ॥ कोसौ परमात्मेत्यस्तं वदन् प्रणवस्य तद्वाचकतामाह—शृणोतीति सार्द्धेन। सुप्तश्रोत्रेणेति समस्तं पदं य इमं स्फोटं प्रणवरूपम् शब्दम् सुप्तश्रोत्रेणापि शृणोति श्रोत्रे पिहिते सत्यपि शृणोतीत्यर्थः। यः श्रोत्रयोर्दृढपिहितयोः सतोरिमं स्फोटम् शृणोति स परमात्मैव न तु जीवस्तस्य करणायत्तज्ञानत्वादिति भावः। परमात्मात्वकरणायत्तज्ञान इत्याह—शून्यदृगिति। शून्येपीन्द्रियवर्गे पश्यतीति शून्यदृक्जीवस्य नादोपलब्धिस्तु परमात्मद्वारिकेति भावः। यद्वा प्रणवमेव विशिनष्टि शृणोतीति। शून्यदृगर्थान्तरं ज्ञानरहितः पिहितकर्णेन विषयान्तरागोचरतया श्रूयमाण इत्यर्थः। येन वाग्व्यज्यते प्रचोदिता सत्यभिव्यज्यते यस्यात्मनः आकाशो व्यक्तिः शरीरम् [ स्वरूपम् ] यद्वा येन प्रणवेन वाग्व्यज्यते लौकिकवैदिकराशिरभिव्यज्यते यस्यात्मनः प्रणवस्वरूपस्याकाशः हृदयाकाशव्यक्तिरभिव्यक्तिस्थानम् ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अत्र प्रमाणमाह—तदेतदिति ॥ ३३ ॥ अतिवादान् दुष्टवचनानि ॥ ३४ ॥ श्रेयः प्राप्तौ तस्मादिदं प्रकृष्टसाधनमित्याशयेनाह—नम इति। श्रीकृष्णचरणारविन्दप्रणतिस्मरणपूर्वकं भागवतपुराणलक्षणसंहिताश्रवणमननादिकं मुख्यसाधनमित्यर्थः ॥ ३५ ॥ ( विजयध्वजतीर्थरीत्याऽत्र पञ्चमोऽध्यायस्समाप्यते ) भगवन्माहात्म्यप्रकटनाय तत्प्रेरितेन चतुर्मुखेन नादादि वेदान्तशब्दराशिमुद्धृत्याध्यापनेन पुत्रेभ्यो विश्राणनं तच्छिष्येभ्यो विभज्य दानमनुयुगं पुनरपि तद्विभागं पुराणप्रवर्तनं च निगदति अनेनाध्यायेन। तत्रादौ शौनकः सूतं वेदविभागं पृच्छति, पैलादिभिरिति। वैपदेन वेदादेरभिव्यक्तिमूलंवदविभक्तिश्च कथङ्कारमिति सूचयति व्यासशिष्यैरित्यनेन कस्मिन्युगे किं विभक्तवेदात्व्यस्यत्नुताविभक्तानिति वेदाचार्यैरित्यनेन वेदोपयोगिकल्पप्रणयननिपुणैरितिमहात्मभिरित्यनेन तपोबलाद्वेददर्शनसमर्थैरिति अभिधेहीत्यनेनान्वर्थनामपूर्वकं वदेति ॥ ३६ ॥ तत्रादौ सूचितः सूतः प्रश्नं परिहर्तुं कथामाह—समाहितात्मन इति। सं समीचीने निर्दुःखानन्दानुभवे हरावाहित आत्मा मतो यस्य स तथा तस्य ब्रह्मपदस्यानेकार्थे वृत्तेर्विवक्षितमर्थमाह—परमेष्ठिन इति। शब्दस्याकाशविशेषगुणत्वेन ततोभिव्यक्तियुक्तेति सूचयति—हृद्याकाशादिति। तत्सत्वे किं प्रमाणमत्राह वृत्तिरोधादिति। स नादः सर्वेन्द्रियवृत्तिस्तम्भाद्वायुवृत्तिनिरोधाच्च विभाव्यते ज्ञायते योगिनेति शेषः ॥ ३७ ॥ किममुना नादेन शून्यकल्पेन फलमिति तत्राह—यदुपासनयेति। यस्य नादस्योपासनया योगिनो द्रव्याणि पञ्चभूतानि तन्निर्मितदेहो वा क्रिया कर्मेन्द्रियं कारकं ज्ञानेन्द्रियम् एभ्य आख्यातं प्रकाशितम् उत्पन्नमिति यावत् आत्मनो मनसो मलं धूत्वा अपुनर्भवं मोक्षं यान्तीत्यन्वयः—

'स्त्रीपुन्नपुंसकात्मायं नादो ब्रह्मविनिर्मितः। घण्टादिनादसदृशो मुक्तिस्वर्गादिदो विभुः॥'

इति वचनादपुनर्भवं तारतम्योपेतं फलमाप्नुवन्तीति भावः ॥ ३८ ॥ ततो नादात् घण्टानादानुकारात् त्रीन् अकारोकारमकाराख्यान् वर्णान् वृणोतीति त्रिवृत् ओङ्कारोऽभूदभिव्यक्तः व्यक्तस्य प्रपञ्चस्य प्रभव उत्पत्तिर्यस्य स तथा 'भूतं भवद्भविष्यदिति सर्वमोङ्कार एव' इति श्रुतिः। वर्णपक्षे अव्यक्तस्य हरेः सकाशात्प्रभवो यस्य स तथा स्वत एव राजतीति स्वराट् स्वयम्प्रकाशमानः स्वयं परमात्मानं राजयतीति वा एतदेवाह—यत्तदिति। यत्तदोंकाराख्यं वस्तु हरेर्लिङ्गं ज्ञापकं 'ॐ तत्त्ववाची ह्योङ्कारो वक्तृयसौ

तद्गुणोत्तताम्' इति वचनात् चतुर्मुखव्यावृत्तये परमात्मन इति ॥ ३९ ॥ शम् ऊनं यापयति दैत्यादिरिति शून्यं परं ब्रह्म पश्यतीति शून्यदृक् स ब्रह्मा परोक्षीयश्च सुप्तः ब्रह्मप्राप्तः स इमं स्फोटं प्रणवलक्षणं ध्वनिं शृणोति क इव श्रोतेव भगवानिव 'श्रोता मन्ता' इति श्रुतेः। अनेनास्य सत्त्वे प्रमाणमुक्तं भवति। किञ्च, येनौङ्कारेण वाग्वेदलक्षणा व्यज्यते अकारस्य प्रणवात्मकत्वात् 'अकारो वै सर्वा वाक्' इति श्रुतेः। प्रणवस्य वेदादित्वादकारस्यापि सर्वादित्वादाम्रेरादिमत्त्वाद्वेति श्रुतेः आत्मनः परमात्मनः उत्पद्यमान आकाशो यस्य व्यक्तिः स्थानं 'आत्मन आकाशः सम्भूतः' इति श्रुतिः आकाशात्सर्वमुत्पद्यत इति च ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भः

तत्र पूर्वाङ्गमाह—त एतदिति द्वाभ्याम् ॥ ३३–३४ ॥ तदेतच्च श्रीमद्भागवतादेव ज्ञायत इत्यभिप्रेत्य स्वस्मिंस्तदुपदेष्टारं प्रणमति—नम इति। यद्यप्यस्य श्रीशुकदेवोपदेष्टा तथापि श्रीकृष्णद्वैपायननमस्कारस्तत्कृतोपदेशस्यापि तत्प्रसादप्राप्तत्वेन मननात् तदेतदाह—यदिति ॥ ३५–३६ ॥ वृत्तिरोधादिति गुरूपदेशबलेन समाहितेऽन्तःकरणे सतीत्यर्थः ॥ ३७ ॥ तथा श्रूयमाणस्य तस्योपासनाफलमाह—यदुपासनयेति ॥३८॥ लिङ्गं बोधद्वारम् अवयवरूपं वा ॥३९॥ ननु, तस्य शब्दस्य सदास्तित्वे किं प्रमाणं कर्णे पिहिते श्रवणमेवेति चेत् हुङ्कारादिकमपि श्रूयते तथा सुप्तो जाग्रदेव वाऽऽहूतिसहस्रेणाप्यवधारयितुं यो न शक्यते तेन तु जन्मबधिरेणेन्द्रियाभावात् न श्रूयते एव स तत्राह—शृणोतीति। यः परमात्मा सुप्ते श्रोत्रे चकारात् असुप्तेपि शृणोति तस्य जीववदिन्द्रिया (पेक्षा) वस्था नास्तीत्याह—शून्यदृगिति। 'अपाणिपादः' इत्यादि 'स्वाभाविकी ज्ञानबलक्रिया च' इति श्रुतेः। तत्र हेतुमाह—येन वागादीन्द्रियमपि व्यज्यते यस्य चात्मनो व्यक्तिः कार्यरूपेणाविर्भावः शब्दाश्रयः आकाशः किमुत स्पर्शाद्याश्रयो वाय्वादिरित्यर्थः। तस्मा्जीवस्तु तदुपाध्युपासनया तदनुग्रहेणैव शृणोतीति भावः ॥ ४० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

उक्तमर्थं स्पष्टीकृत्य व्याचष्टे—त इति। अधिगच्छन्तीति अवमितमित्यस्यार्थः दौर्जन्यमिति दौरात्म्यपदस्यार्थः ॥ ३३ ॥ किञ्चैतद्विष्णुस्वरूपं काप्यपराधे सति तिरोहितं भवेदतः अपराधानुद्भवे प्रकारं शिक्षयति, अतिवादान् कटूक्तीः तितिक्षेतैव नतु तथैव कटुप्रत्युत्तरं दद्यादित्यर्थः। इमं साधकदेहम् आश्रित्येति। साधकदशायामपि स्मर्य्यमाणं स्वस्य सिद्धदेहम् आश्रित्य तु स्मर्यमाणेन स्वविपक्षेण सह वैरं न कुर्यादिति रागानुगीयरसिकभक्ता अभिप्रायमाहुः कञ्चन अवमन्तारमपि ॥ ३४ ॥ शास्त्रं समाप्य स्वेष्टदेवं भगवन्तं प्रणमति, नम इति। अध्यगां श्रीशुकमुखादधिगतवानस्मि ॥ ३५ ॥ संहितामध्यगामिति श्रुत्वा संहिताविभागं बुभुत्सते, पैलादिभिरिति ॥ ३६ ॥ वेदकल्पतरोः फलं साधुतया निरूप्य शाखा अपि सङ्क्षेपतो निर्दिशंस्तस्य प्रथममाविर्भावप्रकारमाह—समाहितेत्यष्टभिः। ब्रह्मणो हृदि य आकाशस्तस्मान्नादोऽभूत् यः कर्णपुटपिधानेन श्रोत्रवृत्तिनिरोधादस्मदादिष्वपि विभाव्यते वितर्क्यते ३७ ॥ यस्य नादस्योपासनया द्रव्यक्रियाकारकाणि अधिभूतादीनि आख्या अस्य तं मलं धूत्वा नाशयित्वा ॥ ३८ ॥ ततो नादात् त्रिवृत् अकारोकारमकारात्मकः अव्यक्तोऽस्पष्टः प्रभवो जन्म यस्य सः स्वराट् साक्षात्परमेश्वर एव यत् यो भगवदादित्रयस्य लिङ्गं गमकं भक्तज्ञानियोगिभिरुपास्यत्वात् लिङ्गशब्दविशेषणत्वात्तदित्यस्य नपुंसकत्वम् ॥ ३९ ॥ भगवदादिशब्दवाच्यः स परमेश्वर एव कस्तत्राह—शृणोतीति। य इमं स्फोटमव्यक्तं नादात्मकमोङ्कारं शृणोति सः। ननु, जीव एव शृणोति नेत्याह, सुप्तश्रोत्रे कर्णपिधानादिना श्रोत्रे श्रवणेन्द्रिये सुप्ते सति अवृत्तिकेऽपि सति यः शृणोतीत्यर्थः। जीवस्तु करणाधीनज्ञानत्वान्न तदा श्रोता किन्तु परमात्मैव तस्य श्रोता तदपि जीवस्य या तदुपलब्धिः सा परमात्मद्वारिकैवेति ज्ञेयम्। यतः स परमेश्वरः शून्यदृक् शून्येपीन्द्रिये वर्त्ते दृक् ज्ञानं यस्य सः तथाहि सुप्तो यदा शब्दं श्रुत्वा प्रबुद्ध्यते न तदा जीवः श्रोता लीनेन्द्रियत्वात् अतो यस्तदः शब्दं श्रुत्वा जीवं प्रबोधयति स परमात्मैव कोऽसावोङ्कारस्तं विशिनष्टि, सार्द्धेन। येन वाक् वेदलक्षणा बृहती व्यज्यते यस्य च हृदयाकाशे आत्मनः सकाशादभिव्यक्तिः ॥ ४० ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

ते एव एतत् शास्त्रप्रसिद्धं विष्णुस्वरूपं गच्छन्ति ॥ ३३ ॥ प्राप्तिसाधनविशेषमाह—अतिवादानिति ॥ ३४ ॥ शास्त्रसमाप्तौ गुरुप्रणामात्मकमङ्गलमाचरति—नम इति। अध्यगामधिगतवानस्मि ॥ ३५ ॥ इमां संहितामध्यगामिति श्रुत्वा पुराणसंहिताविभागं श्रोतुं तावन्मूलभूतस्य वेदस्य विभागं पृच्छति शौनकः—पैलादिभिरिति ॥ ३६ ॥ वेदविभागं वक्तुं वेदाविर्भावप्रकारमाह—समाहितात्मन इत्यष्टभिः। परमेष्ठिनः चतुर्मुखस्य हृदि य आकाशस्तस्मान्नादः अभूत् यः वृत्तिरोधात् श्रोत्रवृत्तिनिरोधात् अधुनापि विभाव्यते श्रूयते इत्यर्थः ॥ ३७ ॥ यदुपासनया यस्य नादस्योपासनया परब्रह्मविषयकज्ञानभक्त्युदये सतीत्यध्याहारो बोध्यः। द्रव्यक्रियाकारकाणि आधिभूताध्यात्माधिदैवतानि आख्या यस्य तं मलं धूत्वा अपवाह्य अपुनर्भवं मोक्षम् ॥ ३८ ॥ ततो नादतः त्रिवृत् त्रयाणामकारोकारमकाराणां वृद्वर्त्तनं यस्मिन् सः ओङ्कारः अभवत् तस्य पूर्वसिद्धत्वमाह—अव्यक्तात् सर्वकारणकारणात् भगवतः

२०

प्रभवः प्रादुर्भावो यस्य सः अतएव स्वस्मिन् कारणे वाचकतया राजते इति स्वराट् यत् यतः परमे प्रकृतितः परलोके तिष्ठतीति परमेष्ठी श्रीपुरुषोत्तमस्तस्य भगवतः तत् लिङ्गं ज्ञापकं लिङ्गशब्दविशेषणत्वात्तदित्यस्य नपुंसकत्वम् ॥ ३९ ॥ कथम्भूतस्य य इमं स्फोटमव्यक्तमोङ्कारं शृणोति तस्य। ननु, जीवोपि कर्णपुटपिधाने शृणोति सत्यं स तु कर्णपुटपिधानेऽपि असुप्तेनैव श्रोत्रेण शृणोति भगवांस्तु सुप्तश्रोत्रे च शृणोति यतः शून्यदृक् शून्येऽपीन्द्रियवर्गे ज्ञानं यस्य सः कथंभूतः स ॐकारः येनोङ्कारेण वाक् बृहती व्यज्यते यस्य चाकाशे हृदयाकाशे आत्मनः परमात्मनः सकाशात् व्यक्तिरभिव्यक्तिः सः ॥ ४० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एतत्प्राप्तावधिकारिणो दर्शयति—एतदिति। गेहपदं सर्वेषां सम्बन्धिनामुपलक्षणम्। देहजमहमिति गेहादिजं ममेति च येषां नास्ति त एव विष्णोः पदमधिगच्छन्ति ॥ ३३ ॥ अतोऽहन्तां ममतां च हित्वा। अतिवादान् निन्दावचनानि ॥ ३४ ॥ शास्त्रसमाप्तौ गुरुं प्रणमति—नम इति। कृष्णाय व्यासाय अध्यगामधीतवानस्मि ॥३५॥ इमां संहितामध्यगामित्युक्तं तत्र पुरा संहिताविभागं विशेषतो बुभुत्सुः तन्मूलभूतवेदविभागमपि प्रसङ्गात् पृथक् पृच्छति—पैलादिभिरिति। हे सौम्य ॥ ३६ ॥ तत्र प्रथमं वेदाविर्भावप्रकारमाह—समाहितात्मन इत्यष्टभिः। हे ब्रह्मन् समाहितात्मनः भगवद्ध्याननिष्ठस्य अतः परमेष्ठिनः सर्वोत्तमाधिकारनिष्ठस्य ब्रह्मणो हृदि आकाशस्तस्मात् नादः प्राणघोषोऽभूत्। यः कर्णपुटपिधाने श्रोत्रवृत्तिनिरोधादस्मदादिष्वपि विभाव्यते श्रूयते ॥ ३७ ॥ प्रसङ्गान्नादोपासकानां मोक्षफलमाह—यदिति। हे ब्रह्मन् यस्य नादस्योपासनया योगिनः आत्मनो मलं धूत्वा अपोह्य अपुनर्भवं मोक्षं यान्तीत्यन्वयः। किं तन्मलमित्यपेक्षायामाह—द्रव्येति। द्रव्यमधिभूतं क्रिया अध्यात्मं कारकमधिदैवम् एवं त्रिधा आख्या यस्य तथाभूतम् ॥ ३८ ॥ ततो नादात् त्रिवृत् अकारोकारमकारात्मकः अभवत्। कण्ठोष्ठादिभिरुच्चार्यमाणस्योङ्कारस्याक्षरसमाम्नायान्तर्भावात्सूक्ष्मतया तं विशिनष्टि—अव्यक्तः प्रभवो यस्य सः। अत एव स्वराट् स्वत एव हृदि प्रकाशमानः तमेव कार्येण लक्षयति—यत्तदिति। नपुंसकत्वं लिङ्गशब्दविशेषणत्वात्। लिङ्गगमकम् ॥ ३९ ॥ कोऽसौ परमात्मा तमाह—शृणोतीति। य इमं स्फोटं अव्यक्तमोङ्कारं शृणोति सः। ननु जीव एव शृणोतु नेत्याह—सुप्तश्रोत्रे कर्णपिधानादिना श्रोत्रे अवृत्तिकेऽपि सति। जीवस्तु करणाधीनज्ञानत्वान्न तदा श्रोता तदुपलब्धिस्तु तस्य परमात्मद्वारिकैवेति भावः। ईश्वरस्तु नैवम्भूतः यतः शून्यदृक् शून्येऽपीन्द्रियवर्गे दृक् ज्ञानं यस्य सः। तथाहि सुप्तो यदा शब्दं श्रुत्वा प्रबुद्ध्य तेन तदा जीवः श्रोता लीनेन्द्रियत्वात्। अतो यस्तदा शब्दं श्रुत्वा जीवं प्रबोधयति स यथा परमात्मैव तद्वत्। ओङ्कारं विशिनष्टि—सार्द्धेन। येन वाक् बृहती व्यज्यते। यस्य च हृदयाकाशे आत्मनः सकाशात् व्यक्तिः अभिव्यक्तिः ॥ ४० ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एतत्प्राप्तावधिकारिणो दर्शयन्नेतदेव स्पष्टमाह। त एतदिति येषाम्। देहगेहजं तद्विषयमित्यर्थः। अहं मम इति दौर्जन्यं नास्ति, ते भगवद्भक्ताः, यत् एतत् विष्णोः परमं पदं अधिगच्छन्ति, उपासनया साक्षात् कुर्वन्तीत्यर्थः। गत्यर्थानां बुद्ध्यर्थत्वादेवमर्थः। प्राप्नुवन्तीति वा ॥ ३३ ॥ एवमधिकारिणं निरूप्य तत्प्राप्त्युपायमाह। अतिवादानिति। अतिवादान् विरुद्धवादान्, परुषवचांसीति यावत्। तितिक्षेत तच्छ्रवणेन न परितप्येदित्यर्थः। कचन च कमपि न अवमन्येत, कस्याप्यपमानं न कुर्यादित्यर्थः। इमं मरणं धर्मात्मकं देहं आश्रित्य आत्मीयत्वेनाभिसंधायेत्यर्थः। केनचित् वैरं न कुर्वीत ॥ ३४ ॥ शास्त्रसमाप्तौ गुरुनमस्कारात्मकं मङ्गलमाचरति नम इति। अकुण्ठमेधसेऽसंकुचितबुद्धये, भगवते तस्मै कृष्णाय कृष्णद्वैपायनाय नमः। यत्पादाम्बुरुहध्यानात्, अहं इमां संहितां अध्यगामधिगतवानस्मि ॥ ३५ ॥ इमां संहितामध्यगामित्युक्तं तत्र पुराणसंहिताविभागं विशेषतो बुभुत्सुस्तावत् मूलभूतवेदविभागं पृच्छति शौनकः। पैलादिभिरिति। व्यासशिष्यैः महात्मभिः वेदाचार्यैः पैलादिभिः, वेदाः कतिधा व्यस्ताः विभक्ताः। एतद्विभागवैविध्यं च हे सौम्य, नोऽस्मभ्यं अभिधेहि ॥ ३६ ॥ तत्र प्रथमं वेदाविर्भावप्रकारमाह समाहितात्मन इत्यष्टभिः। समाहितेति। हे ब्रह्मन् शौनक, सं समीचीने निर्दुःखानन्दानुभवे श्रीहरौ आहित आत्मा मनो यस्य येन वा तस्य, परमेष्ठिनः ब्रह्मणः ब्रह्मपदस्यानेकार्थे वृत्तेर्विवक्षितचतुर्मुखबोधाय परमेष्ठिनः ब्रह्मणो विशेषणम्। हृदाकाशाद्धृदि य आकाशस्तस्मादित्यर्थः। नादः अभूत्, आकाशसंसृष्टवायुपरिणामात्मकप्राणघोष आविर्बभूव। नादं विशिनष्टि, यो नादः वृत्तिरोधाद्विभाव्यते श्रोत्रपिधानाच्छ्रूयते इत्यर्थः। योगिनेति शेषः। केचित्तु कर्णपुटपिधाने श्रोत्रनिरोधादस्मदादिष्वपि विभाव्यते तर्क्यते इति वदन्ति ॥३७॥ यदिति। किं च, हे ब्रह्मन्, यस्य नादस्योपासना तया, योगिनः द्रव्यक्रियाकारकाख्यं द्रव्यं शरीरं क्रिया पुण्यापुण्यात्मकं कर्म कारकमिंद्रियं एवं त्रिधा ख्यायते, तथा तद्देहेन्द्रियतदुभयनिष्पाद्यं कर्माख्यं आत्मनः मलं धूत्वा विधूय विनाश्येति यावत्। अपुनर्भवं मोक्षं यान्ति प्राप्नुवन्ति। अस्योपासना ज्ञानोत्पादकत्वादिति भावः ॥ ३८ ॥ तत इति। ततः घण्टानादानुकारात् नादात्, त्रीन् अकारोकारमकाराख्यान् वर्णान् वृणोतीति त्रिवृत्। यद्वा। त्रयाणामकारोकारमकाराणां वृद्धवर्त्तनं यस्मिन् सः त्रिवृत्, वा त्रिवृत् त्रिमात्रः, कण्ठोष्ठादिभिरुच्चार्यमाणः ॐकारः। अभूत्। प्रथमं साधारणरूपेण प्रतिपन्नः शब्दः प्रणवरूपेण व्यक्तोऽभवदित्यर्थः।

तस्योङ्कारस्याक्षरसमाम्नायान्तर्भावात्। सूक्ष्मतया तं विशिनष्टि। अव्यक्तः प्रभवो यस्य स अव्यक्तप्रभवः अयोगिभिर्ज्ञातुमप्यशक्य इत्यर्थः। स्वयमेव राजते इति। स्वराट् स्वत एव हृदि प्रकाशमान इत्यर्थः। यत्तत् योऽयमोंकारः स इत्यर्थः। भगवतः ब्रह्मणः बृहद्गुणस्य परमात्मनः, लिङ्गं ज्ञापको वाचक इति यावत्। यत्तदिति नपुंसकत्वं लिङ्गशब्दविशेषणत्वात्॥ ३९॥ कोऽसौ परमात्मेत्याशङ्कायां तं वदन् प्रणवस्य तद्वाचकतामाह शृणोतीति सार्द्धेन। शृणोतीति। यः इमं स्फोटं प्रणवरूपं शब्दमित्यर्थः। सुप्तश्रोत्रेण पि शृणोति। सुप्तश्रोत्रेणेति समस्तं पदं, श्रोत्रे पिहिते सत्यपि शृणोतीत्यर्थः। यः श्रोत्रयोः पिहितयोः सतोरिमं स्फोटं शृणोति स परमात्मा एव, न तु जीवस्तस्य बद्धदशायां करणायत्तज्ञानत्वादिति भावः। परमात्मा त्वप्राकृतकरणा यत्तज्ञान इत्याह। शून्येऽपीन्द्रियवर्गे पश्यतीति। शून्यदृक्, जीवस्य नादोपलब्धिस्तु परमात्मद्वारिकेति भावः। येन वाक् व्यज्यते येन परमात्मना प्रचोदिता सत्यभिव्यज्यते, यस्य आत्मनः आकाशः व्यक्तिः शरीरं तथाभूतः परमात्माऽस्ति॥ ४०॥

## हिन्दी अनुवाद

विष्णुभगवान् का यही वास्तविक स्वरूप है, यही उनका परम पद है। इसकी प्राप्ति उन्हीं लोगों को होती है, जिनके अन्तःकरण में शरीर के प्रति अहंभाव नहीं है और न तो इसके सम्बन्धी गृह आदि पदार्थों में ममता ही। सचमुच जगत् की वस्तुओं में मैं पन और मेरे पन का आरोप बहुत बड़ी दुर्जनता है॥ ३३॥ शौनकजी! जिसे इस परमपद की प्राप्ति अभीष्ट है, उसे चाहिये कि वह दूसरों की कटु वाणी सहन कर ले और बदले में किसी का अपमान न करे। इस क्षणभङ्गुर शरीर में अहंता-ममता करके किसी भी प्राणी से कभी वैर न करे॥ ३४॥ भगवान् श्रीकृष्ण का ज्ञान अनन्त है। उन्हीं के चरणकमलों के ध्यान से मैंने इस श्रीमद्भागवत महापुराण का अध्ययन किया है। मैं अब उन्हीं को नमस्कार करके यह पुराण समाप्त करता हूँ॥ ३५॥ शौनकजी ने पूछा—साधुशिरोमणि सूतजी! वेदव्यासजी के शिष्य पैल आदि महर्षि बड़े महात्मा और वेदों के आचार्य थे। उन लोगों ने कितने प्रकार से वेदों का विभाजन किया, यह बात आप कृपा करके हमें सुनाइये॥ ३६॥ सूतजी ने कहा—ब्रह्मन्! जिस समय परमेष्ठी ब्रह्माजी पूर्वसृष्टि का ज्ञान सम्पादन करने के लिये एकाग्रचित्त हुए, उस समय उनके हृदयाकाश से कण्ठ-तालु आदि स्थानों के सङ्घर्ष से रहित एक अत्यन्त विलक्षण अनाहत नाद प्रकट हुआ। जब जीव अपनी मनोवृत्तियों को रोक लेता है, तब उसे भी उस अनाहत नाद का अनुभव होता है॥ ३७॥ शौनकजी! बड़े-बड़े योगी उसी अनाहत नाद की उपासना करते हैं और उसके प्रभाव से अन्तःकरण के द्रव्य (अधिभूत), क्रिया (अध्यात्म) और कारक (अधिदैव) रूप मल को नष्ट करके वह परमगतिरूप मोक्ष प्राप्त करते हैं, जिसमें जन्म-मृत्युरूप संसारचक्र नहीं है॥ ३८॥ उसी अनाहत नाद से 'अ' कार, 'उ' कार और 'म' काररूप तीन मात्राओं से युक्त ॐकार प्रकट हुआ। इस ॐकार की शक्ति से ही प्रकृति अव्यक्त से व्यक्त रूप में परिणत हो जाती है। ॐकार स्वयं भी अव्यक्त एवं अनादि है और परमात्मस्वरूप होने के कारण स्वयंप्रकाश भी है। जिस परम वस्तु को भगवान् ब्रह्म अथवा परमात्मा के नाम से कहा जाता है, उसके स्वरूप का बोध भी ॐकार के द्वारा ही होता है॥ ३९॥ जब श्रवणेन्द्रिय की शक्ति लुप्त हो जाती है, तब भी इस ॐकार से—समस्त अर्थों को प्रकाशित करने वाले स्फोट तत्त्व को जो सुनता है और सुषुप्ति एवं समाधि-अवस्थाओं में सबके अभाव को भी जानता है, वही परमात्मा का विशुद्ध स्वरूप है। वही ॐकार परमात्मा से हृदयाकाश में प्रकट होकर वेदरूपा वाणी को अभिव्यक्त करता है।४०।

स्वधाम्नो ब्रह्मणः साक्षाद् वाचकः परमात्मनः। स सर्वमन्त्रोपनिषद्वेदबीजं सनातनम्॥ ४१॥
तस्य ह्यासंस्त्रयो वर्णा अकाराद्या भृगूद्वह। धार्यन्ते यैस्त्रयो भावा गुणनामार्थवृत्तयः॥ ४२॥
ततोऽक्षरसमाम्नायमसृजद् भगवानजः। अन्तःस्थोष्मस्वरस्पर्शह्रस्वदीर्घादिलक्षणम्॥ ४३॥
तेनासौ चतुरो वेदांश्चतुर्भिर्वदनैर्विभुः। सव्याहृतिकान् सोङ्कारांश्चातुर्होत्रविवक्षया॥ ४४॥
पुत्रानध्यापयत्तां¹स्तु महर्षीं ब्रह्मकोविदान्। ते तु धर्मोपदेष्टारः स्वपुत्रेभ्यः समादिशन्॥ ४५॥
ते परम्परया प्राप्तास्तत्तच्छिष्यैर्धृतव्रतैः। चतुर्युगेष्वथ व्यस्ता द्वापरादौ महर्षिभिः॥ ४६॥
क्षीणायुषः क्षीणसत्त्वान् दुर्मेधान् वीक्ष्य कालतः। वेदान् ब्रह्मर्षयो व्यस्यन् हृदिस्थाच्युतचोदिताः॥ ४७॥
अस्मिन्नप्यन्तरे ब्र²ह्मन् भगवाँल्लोकभावनः। ब्रह्मेशाद्यैर्लोकपालैर्याचितो धर्मगुप्तये॥ ४८॥

१. त्तांश्च ब्रह्मर्षीन्। २. तस्मिन्।

### कृष्णप्रिया व्याख्या

अन्वयः—( यः ) स्वधाम्नः परमात्मनः ब्रह्मणः साक्षात् वाचकः सः सर्वमन्त्रोपनिषत् ( सः ) वेदबीजं सनातनम् । भृगूद्वह तस्य अकाराद्याः त्रयः वर्णाः आसन् यैः गुणनामार्थवृत्तयः त्रयः गुणाः धार्यन्ते ॥४१–४२॥ ततः भगवान् अजः अन्तस्थोष्म-स्वरस्पर्शह्रस्वदीर्घादिलक्षणम् अक्षरसमाम्नायम् असृजत् ॥४३॥ तेन असौ विभुः चातुर्होत्रविवक्षया चतुर्भिः वदनैः सव्याहृतिकान् सोङ्कारान् चतुरः वेदान् ( असृजत् ) ॥ ४४ ॥ ( सः ब्रह्मा ) ब्रह्मकोविदान् ब्रह्मर्षीन् तान् पुत्रान् अध्यापयत् धर्मोपदेष्टारः ते स्वपुत्रेभ्यः समादिशन् ॥ ४५ ॥ परम्परया चतुर्युगेषु प्राप्ताः ते ( वेदाः ) धृतव्रतैः तच्छिष्यैः महर्षिभिः द्वापरादौ व्यस्ताः ॥ ४६ ॥ ( जनान् ) कालतः क्षीणायुषः क्षीणसत्त्वान् दुर्मेधान् वीक्ष्य हृदिस्थाच्युतचोदिताः ब्रह्मर्षयः वेदान् व्यस्यन् ॥ ४७ ॥ ब्रह्मन् ब्रह्मेशाद्यैः लोकपालैः धर्मगुप्तये याचितः लोकभावनः भगवान् अस्मिन् अपि अन्तरे ॥ ४८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

किंच स्वधाम्नः स्वस्याश्रयः कारणं यद्ब्रह्म तस्य किंच परमात्मांशाभूतसमस्तदेवतावाचकोऽपीत्याशयेनाह । स इति । सर्वमंत्राणामुपनिषद्रहस्यं सूक्ष्मरूपमित्यर्थः । तत्र हेतुः । वेदानां बीजं कारणम् । बीजत्वेऽप्यविकारितामाह । सनातनं सदैकरूपम् । तस्य ब्रह्मरूपत्वात् ॥ ४१ ॥ इदानीं ततः सर्वप्रपंचोत्पत्तिप्रकारमाह । तस्य हीति । त्रयस्त्रिसंख्यायुक्ता भावा यैरकारोकारमकारैर्धार्यंते तत्कारणत्वात् । तानेवाह । गुणाः सत्त्वादयः नामानि ऋग्यजुःसामानि । अर्था भूर्भुवःस्वर्लोकाः । वृत्तयो जाग्रदाद्याः ॥ ४२ ॥ ततस्तेभ्यो वर्णेभ्यः अक्षराणां समाम्नायं समाहारम् । तमेवाह । अंतस्था यरलवाः । ऊष्माणः शषसहाः । स्वरा अकाराद्याः । स्पर्शाः कादयः । ह्रस्वदीर्घश्च आदिशब्दाज्जिह्वामूलीयादयः त एव लक्षणं स्वरूपं यस्य तम् ॥ ४३ ॥ विभुश्चतुर्मुखस्वरूपो भगवान् । असृजदिति पूर्वस्य वानुषंगः । चातुर्होत्रविवक्षया चत्वारो होत्रोपलक्षिता ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं होत्राध्वर्यवादिकं कर्म चातुर्होत्रं तद्विवक्षया ॥ ४४ ॥ पुत्रान्मरीच्यादीन् तान् वेदान् ब्रह्मकोविदान्वेदोच्चारणादिनिपुणान् ॥ ४५ ॥ एवं चतुर्युगेषु प्राप्ताः । द्वापरादौ द्वापरमादिर्यस्य तदंत्यांशलक्षणस्य कालस्य तस्मिन् । द्वापरांतवेदविभागप्रसिद्धेः शंतनुसमकालं व्यासावतारप्रसिद्धेश्च । व्यस्ता विभक्ताः ॥ ४६ ॥ तत्र हेतुः । क्षीणायुषो जनान् तर्हि पुरुषबुद्धिप्रभवत्वादनादरणीयत्वं स्यादित्याशंक्याह । हृदिस्थेति ॥ ४७ ॥ एवं सामान्यतो वेदविभागक्रममुक्त्वा वैवस्वतमन्वंतरे विशेषतो निरूपयितुमाह । अस्मिन्नपीति ॥ ४८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अन्यदाधिक्यमाह—किञ्चेति । न केवलं ब्रह्मवाचक एवापि त्वन्येषामपीत्याह—किञ्चेति । इत्यर्थ इति—तत्तद्देवबोधका-खिलमंत्रसूक्ष्मरूपमिदमेवाक्षरमिति भावः । तत्र सूक्ष्मरूपत्वे । यद्वा—स्वधाम्नः स्वप्रकाशस्यापि ब्रह्मणः परमात्मनोऽपि साक्षादा-वरणबाधेन वाचको बोधकः । स एव सर्वधर्मांगमंत्राणां ब्रह्मव्यंजकोपनिषदां च सनातनं बीजम्, स्वस्य धामाश्रयो यद्ब्रह्म तस्य परमात्मनोऽपि भगवतश्च वाचकः "ॐमित्येतद्ब्रह्मणो दिष्टं नाम" इति श्रुतेः ॥४१॥ ततः प्रणवात् । तस्य प्रणवस्य । तत्कारणत्वात् तेषां भावानां कारणत्वात् । धार्यंते स्वेभ्य उत्पाद्यंते । तानेव भावान्पदार्थान् । एतच्चोपपादितमधस्तात् । यैस्त्रिभिर्वर्णैस्त्रयो भावा वेदा धार्यंते, यैश्च त्रिभिर्वेदैर्गुणाः ओजःप्रसादादयो नामानि शब्दा अर्था वाच्यलिंगा वृत्तयोऽभिधालक्षणा व्यंजनाः यथा वटबीजेनैव वटवृक्षो धार्यते तेन च स्कंधशाखापत्रपुष्पफलादयश्च ॥ ४२ ॥ तेभ्योऽकारादिभ्यः । अक्षराणां समाम्नायम् "अ इ उ ण्" इत्यादि-सूत्रचतुर्दशरूपम् । "येनाक्षरसमाम्नायमधिगम्य महेश्वरात्" इत्यत्र चतुर्दशसूत्र्यामेवाक्षरसमाम्नायपदस्य प्रयुक्तत्वात् । यद्वा—मातृकारूपम् । तत्प्रकारश्चास्मत्प्रणीतमातृकाविलासे द्रष्टव्यः ॥ ४३ ॥ तेनाक्षरसमाम्नायेन । असौ ब्रह्मा । व्याहृतयो भूर्भुवःस्वरिति व्यस्तास्समस्ताश्च । तत्सहितान् व्यक्तोंकारसहितान् । सोंकारानित्युक्तेरोंकारसहितानामेव सर्वेषां यज्ञादौ प्रयोगं सूचयति ॥ ४४ ॥ ते तु मरीच्यादयस्तु । स्वपुत्रेभ्यः कश्यपादिभ्यः ॥ ४५ ॥ ते वेदाः ॥ ४६ ॥ तत्र वेदविभागे । अत्राक्षिपति—तर्हीति । न तेषां स्वातंत्र्यमिति ध्वनितं—हृदिस्थेत्यादिना ॥ ४७ ॥ अस्मिन्नपि श्राद्धदेवमन्वंतरेपि ॥ ४८ ॥

### अन्वितार्थप्रकाशिका

स्वेति । स ओङ्कारः स्वधाम्नः स्वाश्रयस्य स्वकारणस्य परमात्मनो ब्रह्मणः साक्षाद्वाचकः तथा सः सर्वमन्त्राणां देवता-वाचकानामपि उपनिषद्रहस्यं सूक्ष्मं रूपमित्यर्थः । वेदानां बीजं बीजत्वेऽपि अविकारित्वात् सनातनं सदैकरूपम् ॥ ४१ ॥ वेदबीजत्वं दर्शयति—तस्य हीति । हे भृगूद्वह शौनक ! तस्य प्रणवस्याकाराद्यास्त्रयो वर्णा आसन् । यैरकारोकारमकारैः गुणाः सत्त्वादयः साहित्येषु प्रसिद्धाः शब्दगुणा माधुर्यौजःप्रसादा वा नामानि ऋग्यजुःसामानि । सुबन्ततिङन्ताव्ययभेदात्त्रिधा शब्दा वा । अर्था भूर्भुवःस्वर्लोकाः वाच्यलक्ष्यव्यङ्ग्या वा वृत्तयो जाग्रदाद्याः अभिधालक्षणा व्यञ्जना वा त्रयः त्रित्वसङ्ख्यायुक्ताः भावा धार्यन्ते

तत्कारणत्वात्। यथा वटबीजेनैव वटवृक्षो धार्यते तेन च स्कन्धशाखाफलादयः ॥ ४२ ॥ प्रणवाद्वर्णोत्पत्तौ क्रमं दर्शयति—तत इति। ततस्तेभ्यो वर्णेभ्यः तत ओंकाराद्वा अन्तःस्थाः यरलवाः। ऊष्माणः शषसहाः। स्वरा अकाराद्याः। स्पर्शाः कादयो मावसानाः। ह्रस्वदीर्घप्लुताश्च आदिशब्दात् जिह्वामूलीयादयः। त एव लक्षणं स्वरूपं यस्य तम्। अक्षराणां समाम्नायं समाहारं भगवान् अजो ब्रह्मा असृजत् ॥ ४३ ॥ तेनेति। तेनैवाक्षरसमुदायेन विभुर्ब्रह्मा चतुर्भिर्वदनैश्चातुर्होत्रविवक्षया चत्वारो होत्रोपलक्षिता ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं हौत्राध्वर्यवादिकं कर्म चातुर्होत्रं तद्विवक्षया सव्याहृतिकान् सोङ्कारांश्च चतुरो वेदानसृजदिति पूर्वेणान्वयः ॥ ४४ ॥ पुत्रानिति। तांस्तु वेदान् स ब्रह्मा ब्रह्मकोविदान् वेदोच्चारणादौ निपुणान् ब्रह्मर्षीन् पुत्रान् मरीच्यादीनध्यापयत्। धर्मोपदेष्टारः ते मरीच्यादयः स्वपुत्रेभ्यः कश्यपादिभ्यः समादिशन् ॥ ४५ ॥ त इति। एवं परम्परया चतुर्षु युगेषु प्राप्तास्ते वेदा धृतव्रतैः तत्तच्छिष्यैः तेषां शिष्यैः महर्षिभिर्द्वापरादौ व्यस्ताः विभक्ताः द्वापरादौ द्वापरमादिर्यस्य तदन्त्यांशलक्षणस्य कालस्य तस्मिन् द्वापरान्ते वेदविभागप्रसिद्धेः। शन्तनुसमकाले व्यासावतारप्रसिद्धेश्चेति प्राहुः ॥ ४६ ॥ क्षीणेति। जनान् कालतो युगे प्रवृत्तादधर्मतः क्षीणायुषः अल्पायुष्कान् क्षीणसत्त्वान् धैर्यादिबलहीनान् दुर्मेधान् मन्दमतीन्। असिजभाव आर्षः। वीक्ष्य हृदिस्थेनाच्युतेन चोदिताः ब्रह्मर्षयो वेदान् व्यस्यन् व्यासयन् विभक्तवन्तः। आडभाव आर्षः। विभागो नाम अपारेभ्यश्चतुर्भ्यो वेदराशिभ्य उद्धृत्य संहिताब्राह्मणकरणेन प्रवर्त्तनम् ॥ ४७ ॥ सामान्यतो वेदविभागमुक्त्वाऽत्र मन्वन्तरे विशेषतो निरूपयितुमाह—अस्मिन्निति युग्मम्। हे ब्रह्मन्! हे महाभाग! ब्रह्मेशाद्यैर्लोकपालैर्धर्मगुप्तये याचितः लोकभावनो विभुर्भगवान् अस्मिन् वैवस्वते मन्वन्तरे अंशो माया तस्याः अंशः सत्त्वं तस्य कलया व्यासरूपेण अंशेनावतीर्णः सन् वेदं चतुर्विधं चक्रे ॥ ४८–४९ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

यैरकारादिभिः त्रयो भावाः सृष्ट्यादयः तेन गुणत्रयव्यापारभूताः ॥ ४२ ॥ ततः प्रणवात् अन्तस्था यरलवाः ऊष्माणः शषसहाः स्वरा अचः स्पर्शाः कादयो मावसानाः वर्णाः ॥ ४३ ॥ चातुर्होत्रविवक्षया यज्ञप्रकाशनेच्छया ॥ ४४–६० ॥

### श्रीमद्वीरराघवव्याख्या

स्वधाम्नः स्वमहिम्नि प्रतिष्ठितस्य ब्रह्मणः परमात्मनो वाचकः किञ्च स इति सर्वेषां मन्त्राणामुपनिषदां वेदानां च बीजं कारणं सनातनम् इत्यनेन तस्य हृदयाकाशेऽभिव्यक्तिमात्रं न तूत्पत्तिरित्यभिप्रेतम् ॥ ४१ ॥ तस्येति। हे भृगूद्वह! तस्य प्रणवस्यावयवास्त्रयः अकाराद्या अकारोकारमकाराः वर्णा आसन्नाविर्बभूवुः यद्वा, तस्य प्रणवस्य प्रकृतिभूतास्त्रयो वर्णाः तान् विशिनष्टि—धार्य्यन्ते इति। यैरकारादिभिस्त्रयो भावा अर्थाः अनन्यार्हशेषत्वानन्यशरणत्वानन्यभोग्यत्वरूपाः गुणनाम्नां प्राप्यत्वप्रापकत्वाधारत्वादिगुणप्रतिपादकानां नारायणादिनाम्नां स्वार्थेषु या वृत्तयोऽभिधाश्च धार्य्यन्ते प्रकाशकतया कारणतया वेति भावः ॥ ४२ ॥ ततः प्रणवादक्षरसमाम्नायमक्षरसमाहारमसृजत् अजः चतुर्मुखशरीरकः परमपुरुषः अक्षरसमाम्नायमेव विभज्य विशिनष्टि—अन्तस्थेति। यरलवा अन्तस्थाः शषसहा ऊष्माणः अचः स्वराः कादयो मावसानाः स्पर्शा ह्रस्वदीर्घशब्दौ भावप्रधानौ आदिशब्देन प्लुतत्वोदात्तस्वरितत्वादिस्वरधर्मसङ्ग्रहः जिह्वामूलीयोपध्मानीयसङ्ग्रहश्च अन्तस्थादयो लक्षणं स्वरूपं यस्य तम् अक्षरसमाम्नायमिति सम्बन्धः ॥ ४३ ॥ तेनैवेति। तेनाक्षरसमाम्नायेनैवासौ चतुर्मुखशरीरको विभुश्चतुरो वेदानाविष्कृतवानिति शेषः। ततश्चातुर्होत्रविवक्षया चत्वारो होतारः अध्वर्युपलक्षिता ऋत्विजः तैरनुष्ठेयं कर्म चातुर्होत्रं तद्विवक्षया यज्ञप्रकाशनेच्छया इत्यर्थः। सव्याहृतिकान्सप्रणवान् चतुरो वेदान् पुत्रान् मरीच्यादीनध्यापयत् ॥ ४४ ॥ पुत्रानिति। "गतिबुद्धि" (१।४।५२) इत्यादिना कर्मत्वे द्वितीया। पुत्रान् विशिनष्टि—ब्रह्मकोविदान् वेदोच्चारणादिनिपुणान् ते तु मरीच्यादयोऽपि वैदिकधर्मोपदेष्टारः स्वपुत्रेभ्यः कश्यपादिभ्यः समादिशन् उपदिदिशुः ॥ ४५ ॥ एवं परम्परया तत्तच्छिष्यैस्तेषां तेषां शिष्यैर्धृतव्रतैः महर्षिभिः चतुर्षु युगेषु प्रतिचतुर्युगपर्यायं प्राप्तास्तत्र प्रतिद्वापरादौ प्रति द्वापरमादिर्यस्य तत्सम्बन्धितलक्षणकालस्य तस्मिन् द्वापरान्ते वेदविभागप्रसिद्धेः शन्तनुसमकालं व्यासावतारप्रसिद्धेश्च ॥ ४६ ॥ कालतः युगधर्मतः क्षीणायुषः अल्पायुष्कान् क्षीणसत्वान् अल्पबलान् अल्पबुद्धींश्च जनानवलोक्य व्यस्ता विभक्ता इत्यन्वयः। व्यसनं नामाऽपारेभ्यः चतुर्भ्यो वेदराशिभ्य उद्धृत्य संहिताकरणेन प्रवर्त्तनं तर्हि पुरुषबुद्धिप्रभवत्वादनादरणीयत्वं स्यादित्याशङ्क्याह वेदानिति। हृदिस्थेनाच्युतेन चोदिताः वेदान् व्यस्यन्विभक्तवन्तः न तु स्वबुद्ध्येति भावः ॥ ४७ ॥ तत्र वैवस्वतमन्वन्तरद्वापरादौ वेदविभागक्रमं विशेषतो निरूपयति—एतस्मिन्नित्यादिना। एतस्मिन्नन्तरे वैवस्वतमन्वतरेऽष्टाविंशतिचतुर्युगद्वापरादौ इत्यर्थः। लोकभावनः लोकान् भावयत्यभ्युदितान् करोतीति तथा हेतुगर्भमिदम् अतः ब्रह्मेशाद्यैरित्यर्थः ॥ ४८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पूर्वं लिङ्गत्वेन तद्विषयत्वमुक्तम् अधुना वाचकत्वेनाह—स्वधाम्नः स्वयं प्रकाशस्य ओङ्कारस्य सर्वानुमतत्वमाह—स इति। स ओङ्कारः सनातनं सदातनं सर्वमन्त्रोपनिषद्वेदानां बीजं फललक्षणाङ्कुरजनकशुक्रस्थानीयं स्त्रीघण्टानादवदच्छिन्नत्वेनोच्चार्यमाणं

सर्वमन्त्रादीनां जप्तानां फलदानसामर्थ्यं जनयतीति भावः ॥ ४१ ॥ त्रिवृदित्युक्तं विवृणोति–तस्येति । अकाराद्यास्त्रयो वर्णास्तस्योङ्कारस्यावयवा आसन्नित्यन्वयः । हेत्यनेन सोयमात्माध्यक्षरमोङ्कारोधिमात्रं पादानां मन्त्राः अकारोकारमकारा इत्यादिप्रसिद्धिमाह–यद्वा, वृत्यभिव्यक्तौ प्रत्यारम्भः क्रियत इति सूचयति । प्रत्यारम्भे प्रसिद्धौ हेत्यभिधानम् एभ्यः भूर्भुवः स्वरितिनामाभिव्यक्तिं वक्ति–धार्यन्त इति । यैरकाराद्यैस्त्रयो भावा व्याहृतिलक्षणा धार्यन्ते व्याहृतिभ्योक्षरसमाम्नायो व्यज्यते ज्ञानादिगुणानामर्थे विषयभूते हरौ वृत्तिर्येषां ते तथोक्ताः सर्ववेदोक्तगुणार्णवनारायणलीलाव्याहरणद्वव्याहृतय इत्यर्थः । यद्वा, भूरादिलोकेषु शब्दादिगुणानां भोगलक्षणप्रयोजनप्रवर्तकाः ॥ ४२ ॥ ततो व्याहृतिभ्योऽक्षरसमाम्नायमकारादिहकारान्तानामक्षराणां समीचीनं सम्प्रदायं गुरुपारम्पर्यक्रममसृजादत्यन्वयः । कोऽसौ क्रम इति तं स्पष्टयति—अन्तस्थेति । यरलवा अन्तस्थाः शषसहा ऊष्माणः अचः स्वराः कादयो मावसानाः स्पर्शाः 'एकमात्रो भवेद्ध्रस्वो द्विमात्रो दीर्घ उच्यते । त्रिमात्रस्तु प्लुतो ज्ञेयो व्यञ्जनं त्वर्द्धमात्रकम्' इत्यत आदिशब्दो विवृतः ॥ ४३ ॥ तेनाक्षरसमाम्नायेन सव्याहृतिकान् 'भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः' इत्यादिव्याहृतिसहितान् सोङ्कारानोमित्येतदक्षरमिदं सर्वमित्याद्योङ्कारसहितान् विनियोगमाह–चातुर्होत्रेति । चतुर्भिः होतृभिः क्रियमाणं कर्म चातुर्होत्रम् ॥ ४४ ॥ ब्रह्मकोविदान् वेदविचारविचक्षणान् ते पुत्राः ॥ ४५ ॥ ते वेदाः चतुर्युगेषु तत्तच्छिष्यैः परम्परया प्राप्ताः यथाचतुर्मुखेनाधीता अध्यापितास्तथा अध्ययनम् इत्यर्थः । उक्तापवादमाह—अथेति । अथ त्रेतानन्तरं द्वापरादौ महर्षिभिर्वेदा व्यस्ता अभूवन् ॥ ४६ ॥ एतदेव विवृणोति–क्षीणायुष इति । नन्वेषां स्वातन्त्र्यमापतितमिति तत्राह–हृदिस्थेति ॥ ४७ ॥ ननु, सत्यवतीसुतेन वेदाः कस्मिन् युगे व्यस्ता इत्यत्राह–अस्मिन्निति अस्मिन् श्राद्धदेवमन्वन्तरे ॥ ४ –४९ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

साक्षाद्वाचक इति मायावादिनामिव लक्षणा नादृता 'ओमित्येतद्ब्रह्मणो नेदिष्ठं नाम' इति श्रुतेः ॥ ४१–४२ ॥ तत इति स्वरा उदात्तादयः ह्रस्वदीर्घादयस्तु सप्लुता अचः विसर्गादयश्चत्वारश्च सोङ्कारानित्योकारस्य कारणस्यापिकार्य्येषु पुनरुक्तिर्वैखर्य्यवस्था भेदेन ॥ ४३–४८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

किञ्च, स्वस्य धाम आश्रयो यत् ब्रह्म तस्य परमात्मनो भगवतश्च वाचकः "ओमित्येतद्ब्रह्मणो नेदिष्ठं नाम" इति श्रुतेः । स प्रणवः सर्वे मन्त्रा उपनिषदश्च यत्र तस्य वेदस्य बीजं कारणं बीजत्वे ऽव्यधिकारितामाह—सनातनं सदैकरूपं तस्य ब्रह्मरूपत्वात् ॥ ४१ ॥ तस्य वेदबीजत्वमेव दर्शयति—तस्य प्रणवस्य त्रयः अकारोकारमकाराः यैरेव त्रिभिर्वर्णैस्त्रयो भावा वेदा धार्य्यन्ते यैश्च त्रिभिर्वेदैर्गुणनामार्थवृत्तयो धार्य्यन्ते तत्र गुणा ओजःप्रसादाद्याः नामानि शब्दाः अर्था वाच्यलिङ्गव्यङ्ग्यवृत्तयोभिधालक्षणा व्यञ्जना यथा वटबीजेनैव वटवृक्षो धार्य्यते तेन च स्कन्धशाखापुष्पफलादयः ॥ ४२ ॥ प्रणवाद्वेदोत्पत्तौ क्रमं दर्शयति—यतः ओङ्कारात् अक्षराणां समाम्नायं समाहारः तमेवाह—अन्तस्था यरलवाः ऊष्माणः शषसहाः स्वरा अकाराद्याः स्पर्शाः कादयो मावसानाः ह्रस्वदीर्घाः स्वरभेदाः आदिशब्दाज्जिह्वामूलीयादयः त एव लक्षणं स्वरूपं यस्य तं तेनाक्षरसमाम्नायेन विभुर्विष्णुरूपो ब्रह्मा असृजदिति पूर्वस्यैवानुषङ्गः ॥४३–४४॥ पुत्रान् मरीच्यादीन् ॥४५॥ ते वेदाः ॥४५–४७॥ अन्तरे वैवस्वतमन्वन्तरे ॥४८–४९॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

पुनः कथंभूतः स्वस्य अभिव्यक्तिस्थानतया वाच्यत्वेन च धाम आश्रयः यद्ब्रह्म तस्य परमात्मादिपदाभिधेयस्य वाचकः किञ्च, सर्वेषां मन्त्राणामुपनिषदां वेदानां च बीजं कारणम् ॥ ४१ ॥ किञ्च, तस्य ओङ्कारस्य त्रयो वर्णाः अकारोकारमकाराः यैर्वर्णैस्त्रयो भावाः धार्यन्ते तत्राकारेण सर्वमूलभूतं गम्यं परं ब्रह्म धार्यते "अ ब्रह्म" इति श्रुतेः "अक्षराणामकारोऽस्मि" इति स्मृतेः उकारेण उन्नयतीति उर्गमयिताचार्यो धार्यते अनेनैव मुक्तिकाले यतः प्राकृतात् परमं पदं मुमुक्षुर्गीयते तदचेतत्तं तत्त्वं व्याख्यातम् मकारेण "पञ्चविंशोयं पुरुषः" इति श्रुतेः । गन्ता जीवो धार्यते भावान् विशिनष्टि—गुणानामार्थवृत्तयः गुणानां तत्तदसाधारणानां नाम्नां वाचकानामर्थानां वाच्यानां शक्तिविभूत्यादिपदार्थानां वृत्तिः येषु ते तथा एष एव प्रणवार्थस्तत्त्वत्रयात्मकः गायत्रीसहितेषु तन्मूलेषु सर्वेषु वेदेषु तन्मूलेषु शास्त्रेषु च प्रपञ्चितो ज्ञेयः ॥ ४२ ॥ ततः ओंकारादेव अक्षराणां समाम्नायं समाहारं भगवानजोऽसृजत् तदेवाह—अन्तस्था यरलवाः ऊष्माणः शषसहाः स्वराः अकारादयः स्पर्शाः कादयो मावसानाः ह्रस्वदीर्घौ स्वरभेदौ आदिशब्दोऽनुक्तसमुच्चयार्थः अन्तस्थाद्याः लक्षणं स्वरूपं यस्य तम् ॥ ४३ ॥ तेनाक्षरसमाम्नायेन चतुर्भिर्होतृभिः अध्वर्यूपलक्षितैः ऋत्विग्भिः अनुष्ठेयं कर्म चातुर्होत्रन्तद्विवक्षया चतुर्भिर्वदनैः "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति श्रुत्या सूचितान् भगवदुपदिष्टानेवस्फुटतया चतुरो वेदानसृजदिति पूर्वेणान्वयः ॥ ४४ ॥ पुत्रान्मरीच्यादीन् स्वपुत्रेभ्यः काश्यपादिभ्यः ॥४५॥

ते वेदा एवं परम्परया तत्तच्छिष्यैः चतुर्युगेषु प्राप्ताः यदायदाद्वापरादि द्वापरमादिर्यस्य द्वापरान्तस्य तस्मिन् तस्मिन् द्वापरान्ते सामान्यतो महर्षिभिर्व्यस्ता इत्यर्थः ॥ ४६ ॥ तत्र हेतुमाह—क्षीणायुष इति। कालतः क्षीणायुष अत्यल्पायुष्कान् तत्रापि क्षीणसत्वान् रजस्तमोव्याप्तत्वादल्पसत्वान् अत एव दुर्मेधान् वीक्ष्य वेदान् ब्रह्मर्षयो व्यस्यन्। ननु वेदानां विभागे तेषां का शक्तिरत आह—अच्युतचोदिता इति ॥ ४७ ॥ वैवस्वतमन्वन्तरगताष्टाविंशतिमद्वापरान्ते तु वेदविभागक्रमं विशेषतो निरूपयति—अस्मिन्निति। अन्तरे वैवस्वतमन्वन्तरे भगवानवतीर्णः इत्युत्तरेणान्वयः ॥ ४८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

किञ्च स्वधाम्नः स्वाश्रयस्य स्वकारणस्य ब्रह्मणः परमात्मन इति विशेषणं चतुर्मुखव्यावृत्त्यर्थम्। साक्षाद्वाचकः। किञ्च परमात्मांशभूतसमस्तदेवतावाचकोऽपीत्याशयेनाह—स इति। स सर्वमन्त्राणामुपनिषद्रहस्यं सूक्ष्मं रूपमित्यर्थः। तत्र हेतुमाह वेदानां बीजं कारणमिति। बीजत्वेऽप्यविकारतामाह—सनातनं सदैकरूपं तस्य ब्रह्मरूपत्वात् ॥ ४१ ॥ इदानीं ततः सर्वप्रपञ्चोत्पत्ति-प्रकारमाह—तस्य हीति। हे भृगूद्वह शौनक। तस्य प्रणवस्याकाराद्यास्त्रयो वर्णा आसन्। यैरकारोकारमकारैस्त्रयो भावा धार्यन्ते तत्कारणत्वात् तानेवाह—गुणाः सत्त्वादयः। नामानि ऋग्यजुःसामानि। अर्था भूर्भुवस्स्वर्लोकाः। वृत्तयो जाग्रदाद्याः ॥ ४२ ॥ ततस्तेभ्यो वर्णेभ्यः अक्षराणां समाम्नायं समाहारं भगवान् अजो ब्रह्मा असृजत्। तमेव दर्शयति—अन्तस्थाः यरलवाः ऊष्माणः शषसहाः। स्वराः अकाराद्याः। स्पर्शाः कादयो मावसानाः ह्रस्वदीर्घाश्च। आदिशब्दात् जिह्वामूलीयादयः त एव लक्षणं स्वरूपं यस्य तम् ॥ ४३ ॥ तेनैवाक्षरसमुदायेन विभुर्ब्रह्मा चतुर्भिर्वदनैश्चातुर्होत्रविवक्षया चत्वारो होत्रोपलक्षिता ऋत्विजश्चतुर्होतारस्तैरनुष्ठेयं हौत्राध्वर्यवादिकं कर्म चातुर्होत्रं तद्विवक्षया सव्याहृतिकान्सोङ्कारांश्च चतुरो वेदान् असृजदिति पूर्वेणान्वयः ॥ ४४ ॥ तांस्तु वेदान् सपुत्रान्मरीच्यादीन् अध्यापयत्। तेषामध्यापनयोग्यतामाह—ब्रह्मकोविदान् वेदोच्चारणादौ निपुणान्। तत्र हेतुः ब्रह्मर्षीनिति ॥४५॥ एवं परम्परया चतुर्युगेषु प्राप्तास्ते द्वापरादौ महर्षिभिर्व्यस्ता विभक्ताः। द्वापरादौ द्वापरमादिर्यस्य तदन्त्यांशलक्षणस्य कालस्य तस्मिन्। द्वापरान्ते वेदविभागप्रसिद्धेः शन्तनुसमकालव्यासावतारप्रसिद्धेश्च ॥ ४६ ॥ तद्विभागे हेतुमाह—कालतो युगे प्रवृत्ता धर्मतः क्षीणायुषः अल्पायुष्कान्। क्षीणसत्त्वान् धैर्यबलादिहीनान्। दुर्मेधान् मन्दमतीन् जनान् वीक्ष्य ब्रह्मर्षयो वेदान् व्यस्यन् विभक्तवन्तः विभागो नाम अपारेभ्यश्चतुर्भ्यो वेदराशिभ्य उद्धृत्य संहिताकरणेन प्रवर्त्तनम्। तर्हि पुरुषबुद्धिप्रभवत्वाद-नादरणीयत्वं स्यादित्याशङ्क्याह—वेदानिति। हृदिस्थेनाच्युतेन चोदिता न तु स्वबुद्ध्येत्यर्थः ॥ ४७ ॥ एवं सामान्यतो वेद-विभागक्रममुक्त्वा वैवस्वतमन्वतरे तद्विशेषतो निरूपयितुमाह—अस्मिन्नपीति ॥ ४८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

स्वधाम्न इति। स्वधाम्नः स्वयंप्रकाशस्य परमात्मनः, ब्रह्मणः स्वमहिम्नि प्रतिष्ठितस्य परमात्मनः ब्रह्मण इत्यर्थः। वाचकः वाच्यः परमात्मा तद्वाचकः प्रणव इत्यर्थः। किं च स प्रणवः सनातनं मन्त्राश्च उपनिषदश्च वेदाश्च सर्वे ये मन्त्रोपनिषद्वेदास्तेषां बीजं कारणं, सनातनमित्यनेन तस्य हृदयाकाशेऽभिव्यक्तिमात्रं न तूत्पत्तिरित्यभिप्रेतम् ॥ ४१ ॥ तस्येति। हे भृगूद्वह तस्य प्रणवस्य अवयवभूता इति शेषः। यद्वा। प्रकृतिभूता इति शेषः। त्रयः अकाराद्याः अकारोकारमकारात्मका इत्यर्थः। वर्णाः आसन्। तान्विशिनष्टि, यैरकारादिभिस्त्रिभिर्वर्णैः, त्रयस्त्रिसंख्यायुक्ताः भावाः, धार्यन्ते, तान् भावानाह। गुणाः सत्त्वादयश्च नामानि ऋग्यजुः-सामानि च अर्था भूर्भुवःस्वर्लोकाश्च वृत्तयो जाग्रत्स्वप्नसुषुप्त्याख्यास्ताश्चेति। गुणानामर्थवृत्तय इति पाठे, गुणानामर्थो विषयभूतो यो हरिस्तस्मिन् वृत्तिर्येषां तथाभूताः त्रयः भावाः व्याहृतिलक्षणाः, यैस्त्रिभिर्वर्णैः धार्यन्ते इति। केचित्तु यैरकारादिभिः त्रयः भावा अर्था अनन्यार्हशेषत्वानन्यशरणत्वानन्यभोग्यत्वरूपाः। गुणनाम्नां प्राप्यत्वप्रापकत्वाधारकत्वादिगुणप्रतिपादकानां नारायणादिनाम्नां अर्थेषु स्वार्थेषु याः वृत्तयोऽभिधास्ताश्च धार्यन्ते। प्रकाशकतया कारणतया चेति भावः इत्याहुः ॥ ४२ ॥ तत इति। अजश्चतुर्मुख-शरीरकः, भगवान् परमपुरुषः, ततः प्रणवात् अन्तःस्था यरलवाश्च ऊष्माणः शषसहाश्च स्वरा अचश्च स्पर्शाः कादयो मावसानाश्च ह्रस्वश्च दीर्घश्च आदिशब्दोपात्ताः प्लुतादयश्च लक्षणं स्वरूपं यस्य तं, अक्षरसमाम्नायमक्षरसमाहारं, असृजत्। ह्रस्वदीर्घप्लुत-शब्दा भावप्रधानाः ततः ह्रस्वत्वदीर्घत्वप्लुतत्वग्रहणम्। प्लुतशब्दोत्तरधृतादिशब्देनोदात्तत्वस्वरितत्वादिस्वरधर्मसंग्रहः। जिह्वा-मूलीयोपध्मानीयसंग्रहश्च बोध्यः ॥ ४३ ॥ तेनेति। तेनोक्तविधाक्षरसमाम्नायेनैव असौ विभुः चतुर्मुखशरीरकः परमात्मेत्यर्थः। चतुर्भिः वदनैः चत्वारो होतारोऽध्वर्यूपलक्षिता ऋत्विजस्तैरनुष्ठेयं कर्म चातुर्होत्रं तद्विवक्षया, यज्ञप्रकाशनेच्छयेत्यर्थः। सव्याहृतिकान् भूरादिव्याहृतिसहितान् सोंकारान् सप्रणवान्, चतुरो वेदाश्चतुरोऽपि निगमान्, आविष्कृतवानिति शेषः ॥ ४४ ॥ पुत्रानिति। तान् चतुरो वेदान्, ब्रह्मकोविदान् वेदोच्चारणादिनिपुणान् ब्रह्मर्षीन् पुत्रान् मरीच्यादीन्, अध्यापयत्। गुरव-धारणार्थः। धर्मोपदेष्टारः वैदिकधर्मोपदेशकाः, ते मरीच्यादयस्तु स्वपुत्रेभ्यः कश्यपादिस्वसुतेभ्यः, समादिशन् सम्यगुपदिदिशुः ॥

त इति। एवं धृतव्रतैः तत्तच्छिष्यैः धृता इति शेषः। ते वेदाः, परंपरया चतुर्षु युगेषु प्राप्ताः, प्रतिचतुर्युगपर्यायं प्राप्ता इत्यर्थः। अथ ते वेदाः, द्वापरं आदिर्यस्य तत् संधिलक्षणकालस्य तस्मिन्, महर्षिभिः व्यस्ता विभक्ताः। आसन् इति शेषः। मुनिभिः प्रतिचतुर्युगं विधार्या वेदाः साकल्येन धारयितुमशक्यत्वाद्द्वापरान्तं प्राप्य तत्संधौ व्यासभगवता विभज्य प्रवर्त्तिताः सन्तः शाखाविभागेन प्रवृत्तिमगमन्निति भावः॥ ४६॥ वेदविभागे हेतुमाह। क्षीणायुष इति। कालतः कालवशात् युगधर्मत इत्यर्थः। क्षीणायुषः अल्पायुष्कान्, क्षीणसत्त्वानल्पबलान्, दुर्मेधानल्पबुद्धींश्च जनानिति शेषः। वीक्ष्यावलोक्य, हृदिस्थाच्युतनोदिताः ब्रह्मर्षयः, वेदान् व्यस्यन् विभक्तवन्तः। व्यसनं नामापारेभ्यश्चतुर्भ्यो वेदराशिभ्य उद्धृत्य संहिताकरणेन प्रवर्त्तनम्। तर्हि पुरुषबुद्धिप्रभवत्वादनादरणीयत्वं स्यादित्याशङ्कापनोदाय 'हृदिस्थाच्युतनोदिताः' इति विशेषणं दत्तं, एवं सामान्यतः प्रतिद्वापरं वेदव्यासबोधितास्ते च विष्णुपुराणस्य यस्तृतीयांशस्तस्य तृतीयाध्यायाद्विबोध्याः॥ ४७॥ तत्र विद्यमान चतुर्युगीयद्वापरादौ वेदविभागक्रमं विशेषतो निरूपयति एतस्मिन्नित्यादिना। एतस्मिन्निति। हे ब्रह्मन् एतस्मिन् अन्तरे वैवस्वताख्येऽस्मिन् मन्वन्तरेऽष्टाविंशतितमचतुर्युगीयद्वापरस्य संधिलक्षणकाले इत्यर्थः। शंतनुनृपसमकाल व्यासावतारप्रसिद्धः। लोकान् भावयत्यभ्युदितान् करोतीति लोकभावनः भगवान्, ब्रह्मेशाद्यैर्ब्रह्मरुद्रप्रभृतिभिः लोकपालैः, धर्मगुप्तये धर्मरक्षणाय, याचितः आसीदिति शेषः॥ ४८॥

## हिन्दी अनुवाद

ॐकार अपने आश्रय परमात्मा परब्रह्म का साक्षात् वाचक है। और ॐकार ही सम्पूर्ण मन्त्र, उपनिषद् और वेदों का सनातन बीज है॥ ४१॥ शौनकजी! ॐकार के तीन वर्ण हैं—'अ', 'उ' और 'म्'। ये ही तीनों वर्ण सत्त्व, रज, तम—इन तीन गुणों; ऋक्, यजुः, साम—इन तीन नामों; भूः, भुवः, स्वः—इन तीन अर्थों और जाग्रत्, स्वप्न, सुषुप्ति—इन तीन वृत्तियों के रूप में तीन-तीनकी संख्यावाले भावों को धारण करते हैं॥ ४२॥ इसके बाद सर्वशक्तिमान् ब्रह्माजी ने ॐकार से ही अन्तःस्थ (य, र, ल, व), ऊष्म (श, ष, स, ह), स्वर ('अ' से 'औ' तक), स्पर्श ('क' से 'म' तक) तथा ह्रस्व और दीर्घ आदि लक्षणों से युक्त अक्षर-समाम्नाय अर्थात् वर्णमाला की रचना की॥ ४३॥ उसी वर्णमाला द्वारा उन्होंने अपने चार मुखों से होता, अध्वर्यु, उद्गाता और ब्रह्मा—इन चार ऋत्विजों के कर्म बतलाने के लिये ॐकार और व्याहृतियों के सहित चार वेद प्रकट किये और अपने पुत्र ब्रह्मर्षि मरीचि आदि को वेदाध्ययन में कुशल देखकर उन्हें वेदों की शिक्षा दी। वे सभी जब धर्म का उपदेश करने में निपुण हो गये, तब उन्होंने अपने पुत्रों को उनका अध्ययन कराया॥ ४४-४५॥ तदनन्तर, उन्हीं लोगों के नैष्ठिक ब्रह्मचारी शिष्य-प्रशिष्यों के द्वारा चारों युगों में सम्प्रदायके रूप में वेदों की रक्षा होती रही। द्वापर के अन्त में महर्षियों ने उनका विभाजन भी किया॥ ४६॥ जब ब्रह्मवेत्ता ऋषियों ने देखा कि समय के फेर से लोगों की आयु, शक्ति और बुद्धि क्षीण हो गयी है, तब उन्होंने अपने हृदय-देशमें विराजमान परमात्मा की प्रेरणा से वेदों के अनेकों विभाग कर दिये॥४७॥ शौनकजी इस वैवस्वत मन्वन्तर में भी ब्रह्मा-शङ्कर आदि लोकपालों की प्रार्थना से अखिल विश्वके जीवनदाता भगवान् ने धर्म की रक्षा के लिये महर्षि पराशरद्वारा सत्यवती के गर्भ से अपने अंशांश-कलास्वरूप व्यास के रूप में अवतार ग्रहण किया है। परम भाग्यवान् शौनकजी! उन्होंने ही वर्तमान युग में वेद के चार विभाग किये हैं॥ ४८-४९॥

पराशरात् सत्यवत्यामंशांशकलया विभुः। अवतीर्णो महाभाग वेदं चक्रे चतुर्विधम्॥ ४९॥
ऋगथर्वयजुःसाम्नां राशीनुद्धृत्य वर्गशः। चतस्रः संहिताश्चक्रे मन्त्रैर्मणिगणा इव॥ ५०॥
तासां स चतुरः शिष्यानुपाहूय महामतिः। एकैकां संहितां ब्रह्मन्नेकैकस्मै ददौ विभुः॥ ५१॥
पैलाय संहितामाद्यां बह्वृचाख्यामुवाच ह। वैशम्पायनसंज्ञाय निगदाख्यं यजुर्गणम्॥ ५२॥
साम्नां जैमिनये प्राह तथा छन्दोगसंहिताम्। अथर्वाङ्गिरसीं नाम स्वशिष्याय सुमन्तवे॥ ५३॥
पैलः स्वां संहितामूचे इन्द्रप्रमितये मुनिः। बाष्कलाय च सोऽप्याह शिष्येभ्यः संहितां स्वकाम्॥ ५४॥
चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय भार्गव। पराशरायाग्निमित्रे इन्द्रप्रमितिरात्मवान्॥ ५५॥
अध्यापयत् संहितां स्वां माण्डूकेयमृषिं कविम्। तस्य शिष्यो देवमित्रः सौभर्यादिभ्य ऊचिवान्॥ ५६॥

१. सूत्रे। २. ततः। ३. माख्यं। ४. सामानि जैमिनेः प्रा०। ५. स्वसंहितामूचे। ६. प्रम०। ७. प्रमति०।

अन्वय :— अंशांशकलया पराशरात् सत्यवत्यां अवतीर्णः विभुः महाभाग वेदं चतुर्विधं चक्रे ॥ ४९ ॥ ऋगथर्वयजुः- साम्नां राशीन् वर्गशः उद्धृत्य मन्त्रैः चतस्रः संहिताः मणिगणाः इव चक्रे ॥ ५० ॥ सः महामतिः विभुः चतुरः शिष्यान् उपाहूय तासां एकैकां संहितां ब्रह्मन् एकैकस्मै ददौ ॥ ५१ ॥ बह्वृचाख्याम् आद्यां संहितां पैलाय उवाच निगदाख्यं यजुर्गणं वैशम्पायनसंज्ञाय ( उवाच ) ॥ ५२ ॥ जैमिनये साम्नां छन्दोगसंहितां प्राह सुमन्तवे स्वशिष्याय अथर्वाङ्गिरसीं नाम ( संहितां प्राह ) ॥ ५३ ॥ पैलः मुनिः स्वसंहितां इन्द्रप्रमितये बाष्कलाय ऊचे भार्गव सः अपि स्वकां संहितां चतुर्धा व्यस्य बोध्याय याज्ञवल्क्याय पराशराय अग्निमित्रे शिष्येभ्यः आह आत्मवान् इन्द्रप्रमितिः स्वां संहितां कविं माण्डूकेयम् ऋषिम् अध्यापयत् तस्य शिष्यः देवमित्रः सौभर्यादिभ्यः ऊचिवान् ॥ ५४–५६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अंशो माया तस्या अंशः सत्त्वं तस्य कलयांशेनावतीर्णः सन् ॥ ४९ ॥ चातुर्विध्यमेवाह। ऋगिति। ऋगादिमंत्राणां राशीन्वर्गशस्तत्तत्प्रकरणभेदैरुध्धृत्य यथा नेकविधमणिराशेर्मणिगणाः पद्मरागादयो विविच्योद्ध्रियंते तद्वदुद्धृत्य तैर्मंत्रैश्चतस्र ऋगादिसंहिताश्चक्रे ॥ ५० ॥ तासां संहितानां मध्ये ऐकैकाम् ॥ ५१ ॥ ऋक्समुदायरूपत्वाद्बह्वृचाख्याम्। नितरां प्रश्लेषेण गद्य-मानत्वान्निगदाख्यम ॥ ५२ ॥ छंदस्तु गीयमानत्वाच्छंदोगाख्यां संहिताम् ॥ ५३ ॥ तत्र ऋग्वेदशाखाविभागमाह। पैल इति। स्वसंहिता द्विधा विभज्य इंद्रप्रमितये वाष्कलाय च ऊचे। स वाष्कलोऽपि स्वकां संहितां चतुर्धा व्यस्य बोध्यादिभ्यः शिष्येभ्य आह। हे भार्गव इंद्रप्रमितिरपि स्वां संहितां स्व सुतं माण्डूकेयमध्यापयामास। तस्य मांडूकेयस्य शिष्यो देवमित्रः ॥ ५४–५५–५५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अंशेषु स्वांशेषु जीवेषु स्वांशेन बोधेन यत्कं सुखं तत्स्वरूपाविर्भावेन लाति तया कृपयावतीर्ण इति वार्थः ॥ ४९ ॥ ननु ब्रह्मणैव चतुर्भिर्मुखैश्चत्वारो वेदा आदावेव कृतास्तत्कथमुच्यते 'वेदं चक्रे चतुर्विधम्' इति तत्राह—ऋगिति। राशीन् कृत्वा तत्तत्प्र-करणभेदैर्मणिगणा इव, यथा मणिक्षेत्रेऽपि पद्मरागहीरकादयः पृथक्पृथगुधृत्य कूटं क्रियंते तद्वदिति भावः ॥ ५० ॥ विशेषेण भातीति विभुः सर्वज्ञः ॥ ५२ ॥ साम्नां सम्बन्धिनीम् ॥ ५३ ॥ तत्र चतुर्षु ॥ ५४ ॥ हे भार्गवेति—भृगुवंशजत्वात्त्वमप्येतं विभागं जानास्येवेति भावः। अग्निमित्र इति चतुर्थ्यर्थे सप्तमी। यद्वा—अग्निं मिमीते प्रामाण्येन स्थापयतीत्यग्निमितः तस्मै ॥ ५५–५६ ॥

## अन्वितार्थप्रकाशिका

चातुर्विध्यमाह यद्वा ननु ब्रह्मणैव चत्वारो वेदाः प्रथममेव कृतास्तत्कथमुच्यते चतुर्विधं वेदं चक्रे इति तत्राह—ऋगिति। ऋगादिमन्त्राणां राशीन् वर्गशस्तत्तत्प्रकरणगताश्च तस्य ऋगादिसंहिताश्चक्रे। यथाऽनेकविधमणिराशेर्मणिगणाः हरीकपद्मरागादयो विविच्योद्ध्रियन्ते तद्वदित्यर्थः ॥५०॥ तासामिति। हे ब्रह्मन्! स महामतिः विभुः व्यासः चतुरः शिष्यान् पैलादीनुपाहूय तासां संहितानां मध्ये एकैकां संहितामेकैकस्मै शिष्याय ददौ ॥ ५१॥ पैलायेति। ऋक्समुदायरूपत्वाद्बह्वृचाख्यां नितरां प्रश्लेषेण गद्यमानत्वान्निग-दाख्यम्। स्फुटमन्यत् ॥ ५२ ॥ साम्नामिति। साम्नां संबन्धिनीं छन्दःसु गीयमानत्वाच्छन्दोगाख्यां संहिताम्। स्फुटमन्यत् ॥ ५३ ॥ ऋग्वेदविभागमाह—पैल इति त्रयम्। पैलो मुनिः स्वां संहितां द्वेधा विभज्य इन्द्रप्रमितये वाष्कलाय च ऊचे। हे भार्गव! स बाष्कलोऽपि स्वकीयां संहितां चतुर्द्धा व्यस्य बोध्यादिभ्यश्चतुर्भ्यः शिष्येभ्य आह स्म। आत्मवान् इन्द्रप्रमितिरपि स्वां संहितां स्वसुतं कविं माण्डूकेयमृषिमध्यापयामास। स्फुटमन्यत् ॥ ५४–५५–५६ ॥

## श्रीमद्वीरराघवव्याख्या

अतः सत्यवत्यामंशांशकलयावतीर्णः हे महाभाग, शौनक! ॥ ४९ ॥ चातुर्विध्यमेवाह—ऋगिति। ऋगादीनां राशीन् स्वयं साक्षात्कृत्येति शेषः। वर्गशः प्रकरणभेदेन राशिभ्यः उद्धृत्य चतस्रः संहिताश्चक्रे राशेरुद्धृत्येति पाठः सुगमः। दृष्टान्ते तथा दर्शनात्। यथानेकविधमणिराशेर्मणिगणानुद्धृत्य मालाः कुर्वन्ति तद्वत् ॥ ५० ॥ अथ तासां संहितानां चतसृणां मध्ये एकैकां संहितां चतुरः शिष्यानुपाहूय तत्रैकैकस्मै एकैकां संहितां महामतिः पाराशर्यः ददौ उपदिष्टवान् ॥ ५१ ॥ कस्मै कां ददौ इत्यत्राह— पैलायेति द्वाभ्याम्। अनेकऋक्समुदायरूपत्वाद्बह्वृचाख्याम् 'तेषामृग्मंत्रार्थवशेन पादव्यवस्था' इति ऋग्लक्षणं तेषां मन्त्र-ब्राह्मणात्मकवेदैकदेशरूपाणां मध्ये यत्र येष्वर्थभेदेन विशिष्टैकार्थप्रतिपादकत्वेप्यवान्तरार्थभेदवशात्पादव्यवस्था सा ऋगिति तदर्थः। यजुर्गणस्य नितरां गद्यमानत्वान्निगदाख्यत्वं यद्यपि ऋक्साम्नाभ्यामन्यद्यत्प्रश्लिष्टपठितं मन्त्रजातं तदेव यजुस्तथा च सूचितम् 'शेषे यजुः शब्दः' इति 'उच्चैरृचा क्रियते उपांशु यजुषा' इति यजुष उपांशुपाटस्यैव श्रवणान्निगदाख्यसंज्ञाविरोधश्च तथापि निगदत्व-

मत्र न यजुषः लक्षणम् उच्यते किन्तु यजुस्संज्ञेष्वेव केषुचिन्मन्त्रेषु परसम्बोधनरूपेषु 'प्रोक्षणीरासादय' इत्येवमादिषु परसम्बोधनाय नितरां गद्यन्ते इति व्युत्पत्त्या वाचनिकोपांशुत्वबाधेन कार्यबलादुच्चैर्धर्मयोग उक्तः ॥ ५२ ॥ साम्नामिति । अत्र गीत्याधारभूता ऋचः सामशब्दविवक्षिताः 'गीतिषु सामा' इति गीतिमात्रस्य सामत्वसूत्रणात्साम्नां सम्बन्धिनीं छन्दोगसंहितां छन्दोगाख्यां संहितां जैमिनये प्राह् अथर्वांगिरसं नाम शाखां सुमन्तवे पैलादयोऽपि स्वस्वशाखां स्वशिष्येभ्यः ऊचुरित्याह–पैल इति । स्वसंहितां बह्वृचाख्यां द्वेधा विभज्य स्वपुत्राय इन्द्रप्रमितये शिष्याय बाष्कलाय ऊचे स च बाष्कलोऽपि स्विकां संहिताम् ॥ ५३-५४ ॥ चतुर्द्धा व्यस्य विभज्य हे भार्गव ! बोध्यादिभ्यः चतुर्भ्य आह आत्मवान् धीमानिन्द्रप्रमितिरपि ॥ ५५ ॥ स्वां संहितां स्वसुतं कविं विद्वांसं माण्डूकेयमृषिमध्यापयामास तस्य माण्डूकेयस्य शिष्यो वेदमित्रः सौभर्यादिभ्यः शिष्येभ्यः ॥ ५६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एतदेव विवृणोति–ऋगिति । ऋगादीनां राशीन्वर्गशो वर्गसङ्घोद्धृत्य चतस्रः संहिताश्चक्रे सूत्रैः स्यूतान् ॥ ५० ॥ तासां संहितानां मध्ये एकैकाम् ॥ ५१ ॥ एकैकामित्युक्तं विशिनष्टि, पैलायेति ॥ ५२ ॥ तथा साम्नामुद्धृतां छन्दोगसंहितां जैमिनये प्राह ॥ ५३-५४ ॥ इन्द्रप्रमितिरपि स्वसंहितां चतुर्द्धा व्यस्य विभज्य शिष्यान् नाम्ना निर्दिशति–बोध्यायेति । हे भार्गव ! इन्द्रप्रमितिरपि आत्मवान्परमात्मज्ञानी ॥ ५५ ॥ कविनाम्ना माण्डूकेयमृषिं च स्वसंहिताम् अध्यापयत्तस्य माण्डूकेयस्य ॥ ५६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अंशो महापुरुषः तस्यांशो विष्णुः तस्य कलया अंशेन विभुः भगवान् ॥ ४९-६५ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

ननु, ब्रह्मणैव चतुर्भिर्मुखैश्चत्वारो वेदाः प्रथममेव कृतास्तत् कथमुच्यते वेदं चक्रे चतुर्विधमिति ? तत्राह–ऋग्.थर्वेति । राशीन् कृत्वा वर्गशस्तत्तत्प्रकरणभेदैर्मणिगणा इवेति यथा मणिक्षेत्रेऽपि पद्मरागहीरकादय उद्धृत्य विविच्य पृथक् पृथक् कूटं क्रियत इति चतस्रः ऋगादिसंहिताः ॥ ५०-५१ ॥ बह्वृचाख्याम् ऋक्संहितां नितरां गद्यमानत्वान्निगदाख्यम् ॥ ५२-५३ ॥ तत्र ऋग्वेदशाखाविभागमाह– पैल इति । स्वसंहितां द्वेधा विभज्य इन्द्रप्रमितये बाष्कलाय ऊचे स बाष्कलोऽपि चतुर्द्धा स्वसंहितां व्यस्य बोध्यादिभ्यश्चतुर्भ्यः स्वशिष्येभ्य आह हे भार्गव ! हे शौनक ! इन्द्रप्रमितिरपि स्वसंहितां स्वसुतं माण्डूकेयमध्यापयामास तस्य माण्डूकेयस्य शिष्यो देवमित्रः ॥ ५४-५६ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

भगवानवतीर्णः इत्यत्र ज्ञापकमाह–अंशांशकलया अंशानां स्वासाधारणधर्मज्ञानवैराग्यादिभगानामंशकलयोपलक्षितो विष्णुर्विष्णुरेवावतीर्णः इत्यर्थः ॥ ४९ ॥ चातुर्विध्यं दर्शयति–ऋगिति । ऋगादिमन्त्राणां राशीन् वर्गशस्तत्प्रकरणभेदैरुद्धृत्य तैः राशिभूतैर्मन्त्रैश्चतस्रः संहिताश्चक्रे यथा मणिगणाः पद्मरागादयः नानाविधमणिमञ्जूषातः उद्धृत्य पृथक् पृथक् क्रियन्ते तद्वत् प्रथमम्भगवतैव सर्ववेदाः बीजान्तर्गतशाखा इव ब्रह्माणं प्रति सूक्ष्मबीजोपदेशेन कथिताः तेन मरीच्यादिभ्यः अङ्कुरवत् किञ्चित्प्राकट्येनोपदिष्टाः भगवता श्रीवेदव्यासेन तु यथेष्टं विभक्ता इत्यर्थः । अतः "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" इति "तेनासौ चतुरो वेदान् चतुर्भिर्वदनैर्विभुः" इति च सङ्गच्छते ॥ ५० ॥ तासां संहितानां मध्ये एकैकामेकैकस्मै ददौ ॥ ५१ ॥ तदेवाह– पैलायेति द्वाभ्याम् । ऋक्समुदायरूपत्वाद्बह्वृचाख्यामृक्संहिताम् ऋक्लक्षणं तेषामृक् यत्रार्थभेदेन पादव्यवस्थेति तेषां वेदवाक्यानां मध्ये यत्रार्थभेदेन विशिष्टैकार्थप्रतिपादकत्वेऽप्यवान्तरार्थभेदवशात्पादव्यवस्थास्ति सा ऋगित्यर्थः । नितरां गद्यमानत्वान्निगदाख्यं यजुर्गणम् अयमर्थः ऋक्सामाभ्यामन्यत् यत् प्रश्लिष्यपठितं मन्त्रजातं तद्यजुः तथाह सूत्रकारः "शेषे यजुःशब्दः" इति तत्र यजुषः उपांशुपाठः उच्चैरृचां क्रियते उपांशुयजुस्संज्ञेषु केषुचिन्मन्त्रेषु प्रोक्षणीः प्रासादयेत्येवम्प्रभृतिषु परसम्बोधनाय वाचनिकोपांशुत्वाबाधनार्थो नितरां गद्यते इत्युच्चैरुच्चारणात्मको धर्मयोगो निगदाख्यमिति पदेनोक्तः ॥ ५२ ॥ गीताश्रयः ऋचः सामानि तथाह सूत्रकारः "गीतिषु साम" इति तेषां साम्नां सम्बन्धिनीं छन्दोगाख्यां संहिताम् ॥ ५३ ॥ तत्र पैलतच्छिष्यकृतऋग्वेदशाखाविभागमाह– पैल इति । पैलः स्वसंहितां द्विधा विभज्य इन्द्रप्रमितये बाष्कलाय च ऊचे सोऽपि बाष्कलोऽपि ॥ ५४-५५ ॥ तस्य माण्डूकेयस्य शिष्यो देवमित्रः ॥ ५६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अंशः प्रकृतिस्तस्या अंशः सत्त्वं तस्य कलया अंशेन अवतीर्णः सन् ॥ ४९ ॥ चातुर्विध्यमेवाह–ऋगिति । ऋगादिमन्त्राणां राशीन् वर्गशस्तत्तत्प्रकरणभेदैरुद्धृत्य तैर्मन्त्रैश्चतस्र ऋगादिसंहिताश्चक्रे । उद्धारे दृष्टान्तमाह मणिगणा इवेति । यथानेक-

विधमणिराशेर्मणिगणाः पद्मरागादयो विविच्योद्ध्रियन्ते तद्वदित्यर्थः ॥ ५० ॥ तासां संहितानां मध्ये एकैकां संहितामेकैकस्मै विभुर्व्यासो ददौ ॥ ५१ ॥ ऋक्समुदायरूपत्वाद्बह्वृचाख्याम्। नितरां प्रश्लेषेण गद्यमानत्वान्निगदाख्याम् ॥ ५२ ॥ छन्दस्सु गीयमानत्वाच्छन्दोगाख्यां संहिताम् ॥ ५३ ॥ तत्र ऋग्वेदशाखाविभागमाह—पैल इति। पैलो मुनिः स्वां संहितां द्वेधा विभज्य इन्द्रप्रमितये वाष्कलाय च ऊचे ॥ ५४ ॥ स वाष्कलोऽपि स्वकां संहिता चतुर्द्धा व्यस्य बोध्यादिभ्यश्चतुर्भ्यः शिष्येभ्य आहेत्यन्वयः। हे भार्गव ॥ ५५ ॥ इन्द्रप्रमितिरपि आत्मवान् बुद्धिमान् स्वां संहितां स्वसुतं माण्डूकेयमध्यापयामास। तस्य माण्डूकेयस्य शिष्यो देवमित्रः ॥ ५६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

पराशरादिति। हे महाभाग शौनक, विभुः स ब्रह्मादिप्रार्थितः भगवान्, अंश इच्छारूपा माया तस्यांशः शुद्धसत्त्वं तस्य कलांशस्तया, पराशरात् सत्यवत्यां अवतीर्णः सन्, वेदं चतुर्विधं चक्रे, तथा च विष्णुपुराणे। 'सोऽयमेको महावेदतरुस्तेन पृथक्कृतः। चतुर्धाथ ततो जातं वेदपादपकाननम्' इति। काननं शाखाप्रशाखासंततिरिति एतट्टीका ॥ ४९ ॥ चातुर्विध्यमेवाह ऋगिति। ऋगथर्वयजुःसाम्नां राशीन्, स्वयं साक्षाद्बुद्धौ कृत्वेति शेषः। वर्गशः तत्तत्प्रकरणभेदैर्मन्त्रैरित्यर्थः। राशिभ्यः इति शेषः। उद्धृत्य मन्त्रैः चतस्रः संहिताः चक्रे। राशेरुद्धृत्येति पाठः सुगमः। कथमिव, मणिगणाः इव। यथाऽनेकधा मणिराशेः पद्मरागादयो मणिगणा विविच्य उद्ध्रीयन्ते उद्धृतैर्माला क्रियते, तद्वन्मन्त्रानुद्धृत्य तैः चतस्रः संहिताश्चक्रे इति भावः ॥ तासामिति। हे ब्रह्मन्, महामतिः विभुः स व्यासः, तासां चतसृणां संहितानां मध्ये, एकैकां संहितां चतुरः शिष्यान उपाहूय, एकैकस्मै ददावुपदिष्टवान् ॥ ५१ ॥ कस्मै कां ददावित्यत्राह पैलायेति द्वाभ्याम्। पैलायेति आद्यां बह्वृचाख्यां ऋक्समुदायरूपत्वाद्बह्वृचाभिधां तेषामृग्मंत्रार्थवशेन पादव्यवस्थेति ऋग्लक्षणम्। अस्यायमर्थः। तेषां मन्त्रब्राह्मणात्मकवेदैकदेशरूपाणां राशीनां मध्ये, यत्र येषु अर्थभेदेन विशिष्टार्थप्रतिपादकत्वेऽप्यवान्तरार्थभेदवशात्पादव्यस्था सा ऋगिति। संहितां पैलाय मुनये, ह स्फुटं यथा तथा उवाच। निगदाख्यं यजुर्गणस्य नितरां प्रश्लेषेण गद्यमानत्वान्निगदाभिधं यजुर्गणं वैशंपायनसंज्ञाय मुनये उवाच। व्यास इति शेषः ॥ ५२ ॥ साम्नामिति। तथा साम्नां छन्दोगसंहितां छन्दःसुगीयमानत्वाच्छन्दोगाख्यां संहितां, जैमिनये मुनये प्राह। यजुषां निगदाख्यत्वे साम्नां छन्दोगाख्यत्वे च विरोधतत्परिहारौ। शेषे यजुःशब्द इति गीतिषु सामेति च सूत्रद्वयस्य व्याख्याविशेषावगन्तव्यौ। ग्रन्थगौरवभयान्नात्र प्रपञ्चितौ। अथर्वाङ्गिरसं नाम अथर्वणामाङ्गिरसीं नाम संहितामित्यर्थः। स्वशिष्याय सुमन्तवे मुनये प्राह ॥५३॥ पैलादयोऽपि स्वस्वशाखां स्वस्वशिष्येभ्य ऊचुरिति ब्रुवन् ऋग्वेदशाखाविभागमाह। पैल इति। चतुर्धेति। अध्यापयदिति च। पैलः मुनिः बह्वृचाख्यां स्वां संहितां द्वेधा विभज्य, स्वसुताय इन्द्रप्रमितये, स्वशिष्याय वाष्कलाय च ऊचे। स वाष्कलोऽपि स्वकां संहितां चतुर्धा व्यस्य विभज्य, हे भार्गव, बोध्याय बोध्यनाम्ने, याज्ञवल्क्याय, पराशराय, अग्निमित्रे अग्निमित्राय च, एवं चतुर्भ्यः शिष्येभ्यः आह। आत्मवान् धीमान् इन्द्रप्रमितिः अपि, स्वां संहितां कविं माण्डूकेयमृषिं, अध्यापयदध्यापयामास। तस्य माण्डूकेयस्य शिष्यः देवमित्रः क्वचित्त्वत्र वेदमित्र इति पाठः। स विष्णुपुराणानुरोधी। सौभर्यादिभ्यः ऊचिवान्। एवं त्रयाणामेकान्वयः ॥ ५४–५६ ॥

## हिन्दी अनुवाद

जैसे मणियों के समूह में से विभिन्न जाति की मणियाँ छाँटकर अलग-अलग कर दी जाती हैं, वैसे ही महामति भगवान् व्यासदेव ने मन्त्रसमुदायमें से भिन्न-भिन्न प्रकरणों के अनुसार मन्त्रों का संग्रह करके उनसे ऋग्, यजुः, साम और अथर्व—ये चार संहिताएँ बनायीं और अपने चार शिष्यों को बुलाकर प्रत्येक को एक-एक संहिता की शिक्षा दी ॥ ५०–५१ ॥ उन्होंने 'बह्वृच' नाम की पहली ऋक्संहिता पैलको, 'निगद' नाम की दूसरी यजुःसंहिता वैशम्पायन को, सामश्रुतियों की 'छन्दोगसंहिता' जैमिनि को और अपने शिष्य सुमन्तु को 'अथर्वाङ्गिरस-संहिता' का अध्ययन कराया ॥ ५२–५३ ॥ शौनकजी! पैल मुनि ने अपनी संहिता के दो विभाग करके एकका अध्ययन इन्द्रप्रमिति को और दूसरे का बाष्कल को कराया। बाष्कल ने भी अपनी शाखा के चार विभाग करके उन्हें अलग-अलग अपने शिष्य बोध्य, याज्ञवल्क्य, पराशर और अग्निमित्र को पढ़ाया। परमसंयमी इन्द्रप्रमिति ने प्रतिभाशाली माण्डूकेय ऋषि को अपनी संहिता का अध्ययन कराया। माण्डूकेय के शिष्य थे—देवमित्र। उन्होंने सौभरि आदि ऋषियों को वेदों का अध्ययन कराया ॥ ५४–५६ ॥

शाकल्यस्तत्सुतः स्वां तु पञ्चधा व्यस्य संहिताम् । वात्स्यमुद्गलशालीयगोखल्यशिशिरेष्वधात् ॥ ५७ ॥

जातूकर्ण्यश्च तच्छिष्यः सनिरुक्तां स्वसंहिताम् । बलाकपैजवैतालविरजेभ्यो ददौ मुनिः ॥ ५८ ॥

बाष्कलिः प्रतिशाखाभ्यो बालखिल्याख्यसंहिताम् । चक्रे बालायनिर्भज्यः कासारश्चैव तां दधुः ॥ ५९ ॥

बह्वृचाः संहिता ह्येता एभिर्ब्रह्मर्षिभिर्धृताः । श्रुत्वैतच्छन्दसां व्यासं सर्वपापैः प्रमुच्यते ॥ ६० ॥

वैशम्पायनशिष्या वै चरकाध्वर्यवोऽभवन् । यच्चेरुर्ब्रह्महत्यांहःक्षपणं स्वगुरोर्व्रतम् ॥ ६१ ॥

याज्ञवल्क्यश्च तच्छिष्य आहाहो भगवन् कियत् । चरितेनाल्पसाराणां चरिष्येऽहं सुदुश्चरम् ॥ ६२ ॥

इत्युक्तो गुरुरप्याह कुपितो याह्यलं त्वया । विप्रावमन्त्रा शिष्येण मदधीतं त्यजाश्विति ॥ ६३ ॥

देवरातसुतः सोऽपिच्छर्दित्वा यजुषां गणम् । ततो गतोऽथ मुनयो ददृशुस्तान् यजुर्गणान् ॥ ६४ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—तत्सुतः शाकल्यः स्वां संहितां पञ्चधा व्यस्य वात्स्यमुद्गलशालीयगोखल्यशिशिरेषु अधात् ॥ ५७ ॥ तच्छिष्यः जातुकर्ण्यः मुनिः स्वसंहितां सनिरुक्तां बलाकपैजवैतालविरजेभ्यः ददौ ॥५८॥ बाष्कलिः प्रतिशाखाभ्यः ( उद्धृत्य ) बालखिल्याख्य-संहितां चक्रे बालायनिः भज्यः कासारः च एव ( त्रयः शिष्याः ) तां दधुः ॥ ५९ ॥ एताः बह्वृचाः संहिताः एभिः ब्रह्मर्षिभिः धृताः ( तथा ) एतच्छन्दसां व्यासं श्रुत्वा सर्वपापैः प्रमुच्यते ॥ ६० ॥ वैशम्पायनशिष्याः चरकाध्वर्यवः अभवन् ब्रह्महत्यांहःक्षपणं स्वगुरोः यत् व्रतं ( तत् ) चेरुः ॥ ६१ ॥ तच्छिष्यः याज्ञवल्क्यः अहो भगवन् अल्पसाराणां चरितेन कियत् सुदुश्चरं ( तपः ) अहं चरिष्ये ॥ ६२ ॥ इति उक्तः ( अत एव ) कुपितः गुरुः अपि विप्रावमन्त्रा शिष्येण त्वया अलं ( अतः ) मदधीतं आशु त्यज ( इतः ) याहि इति आह ॥ ६३ ॥ सः अपि देवरातसुतः यजुषां गण छर्दित्वा ततः गतः अथ मुनयः तान् यजुर्गणान् ददृशुः ॥६४॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तत्सुतो मांडूकेयसुतः । शाकल्यो वात्स्यादिषु पंचस्वधात् । तानध्यापयामासेत्यर्थः ॥ ५७ ॥ तच्छिष्यः शाकल्यशिष्यः स्वसंहितां त्रेधा विभज्य चतुर्थं वैदिकपदार्थव्याख्यानरूपं निरुक्तं च कृत्वा बलाकादिभ्यश्चतुर्भ्यो ददौ ॥ ५८ ॥ बाष्कलिः पूर्वोक्तस्य बाष्कलस्य पुत्रः । प्रतिशाखाभ्य उक्तसर्वशाखाभ्यः । बालायन्यादस्तामादधुरधीतवतः ॥ ५९ ॥ ऋक्शाखोपसंहारपूर्वकं तच्छ्रवण-फलमाह बह्वृचा इति एतच्छंदसामेतेषां छंदसाम् ॥ ६० ॥ यजुर्वेदे तैत्तिरीयशाखोत्पत्तिप्रस्तावमाह वैशंपायनशिष्या इत्यादिना । चरकनामनिरुक्तिमाह । यच्चेरुरिति । यद्यस्माद्ब्रह्महत्यारूपमंहः क्षपयतीति तथा तत्स्वगुरोरनुष्ठेयं व्रतं तच्चरणाच्चरका इत्यर्थः ॥ तच्छिष्यो वैशंपायनशिष्यः । अल्पसाराणामेतेषां चरितेन कियत् । सुदुश्चरमहं चरिष्यामीति ॥ ६२ ॥ विप्राणामवमंत्राऽवज्ञाकर्त्री मत्तोऽधीतमाशु त्यजेति ॥ ६३ ॥ देवरातसुता याज्ञवल्क्यः ॥ ६४ ॥

## श्रीवंशीधरकृतो भावार्थदीपकाप्रकाशः

व्यासं विभागम् ॥ ६० ॥ ब्रह्महत्याकारणमुक्तं विष्णुपुराणे–'ऋषिर्योऽद्य महामेरौ समाजे नागमिष्यति । तस्य वै सप्तरात्रात्तु ब्रह्महत्या भविष्यति । पूर्वमेवं मुनिगणैः समयाऽभूत्कृतो द्विज । वैशंपायन एकस्तु तं व्यतिक्रांतवांस्तदा । स्वस्त्रीयं बालकं सोऽथ पदा स्पृष्टमघातयत् । शिष्यानाह च भो शिष्या ब्रह्महत्यापहं व्रतम् । चरध्वं मत्कृते सर्वे न विचार्यमिदं तथा' । इति ॥ ६१–६३ ॥ ततो गुरुकुलात् ॥ ६४ ॥

## अन्वितार्थप्रकाशिका

शाकल्य इति । तत्सुता माण्डूकेयस्य सुतः शाकल्यः स्वां संहितां पञ्चधा व्यस्य वात्स्यादिषु पञ्चसु शिष्येषु अधात् तानध्यापयामास ॥ ५७ ॥ जातूकर्ण्य इति । तच्छिष्यः शाकल्यशिष्यः जातूकर्ण्यश्च स्वसंहितां त्रेधा विभज्य चतुर्थं वैदिकपदार्थ-व्याख्यानरूपं निरुक्तं च कृत्वा सनिरुक्तां स्वसंहितां बलाकादिभ्यश्चतुर्भ्यो ददौ ॥ ५८ ॥ बाष्कलिरिति । बाष्कलिः पूर्वोक्तस्य पुत्रः प्रतिशाखाभ्य उक्तसर्वशाखाभ्य उद्धृत्य बालखिल्याख्यां संहितां चक्रे । बालायन्यादयस्त्रयः शिष्यास्तां दधुः अधीतवन्तः ॥ ५९ ॥ बह्वृचा इति । एता बह्वृचाख्याः ऋग्वेदसंहिताः एभिर्ब्रह्मर्षिभिः पैलादिभिर्धृताः एतच्छन्दसाम् एतेषां छन्दसां व्यासं श्रुत्वा सर्वपापैः प्रमुच्यते ॥ ६० ॥ यजुर्वेदतैत्तिरीयशाखोत्पत्तिप्रस्तावमाह—वैशम्पायनशिष्या इत्यादिना । वैशम्पायनस्य शिष्याः

१. मौद्‌फलशालौय फाविने शिशिरेऽभ्यधात् । २. वातायः । ३. वस्तु । ४. गणान् । ५. गत्वाथ ।

चरकसंज्ञाः अध्वर्यवः यजुर्वेदविदः अभवन्। गुरुणा कृतं ब्रह्महत्यारूपमंहः पापं क्षपयतीति तथा तत्स्वगुरोरनुष्ठेयं व्रतं यत् यस्मात् गुरुभक्त्या स्वयं चेरुस्तस्मात्तच्चरणाच्चरका इत्यर्थः ॥ ६१ ॥ याज्ञवल्क्य इति। याज्ञवल्क्यश्च तच्छिष्यो वैशम्पायनशिष्यः अहो भगवन्! अल्पसाराणां तुच्छसामर्थ्यानामेषां शिष्याणां बहूनां चरितेन व्रतेन कियत्फलम्। अतः शीघ्रं ब्रह्महत्यांहःक्षपणंसुदुश्चरं व्रतमहमेक एव चरिष्यामीत्याह स्म ॥ ६२ ॥ इतीति। इत्येवमुक्तः अतः कुपितो गुरुरपि यतो विनीतानप्येतानल्पसारान् वदसि। अतः विप्राणामवमन्त्रा अवज्ञाकर्त्रा शिष्येण त्वया अलं न किमपि प्रयोजनमतो यदधीतं तदाशु त्यज इतो याहि गच्छेत्याह स्म ॥ ६३ ॥ देवेति। सोऽपि देवरातसुतो याज्ञवल्क्यः यजुषां गणं छर्दित्वा उद्गीर्य ततः स्थानाद्गतः। अथानन्तरं मुनयस्तान् यजुर्गणान् ददृशुः ॥ ६४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

चरकाध्वर्यवः अध्वर्युशाखाध्ययनादध्वर्यवः चरकशब्दनिरुक्तये चेरुरिति ॥ ६१ ॥ अल्पसाराणां अल्पतपसामितरशिष्याणाम् ॥ ६२-६६ ॥

### श्रीमद्वीरराघवव्याख्या

तत्सुतः माण्डूकेयसुतः शाकल्यस्तु स्वां संहितां पञ्चधा विभज्य वात्स्यादिषु पञ्चस्वधात् तानध्यापयामासेत्यर्थः ॥ ५७ ॥ तच्छिष्यः शाकल्यशिष्यो जातुकर्ण्यस्तु सनिरुक्तां संहितां विभज्य निरुक्तं नाम वैदिकपदव्याख्यानं तेन साकं चतुर्द्धा विभज्येत्यर्थः। बालाकादिभ्यश्चतुर्भ्यो ददौ ॥ ५८ ॥ बाष्कलिः पूर्वोक्तबाष्कलस्य पुत्रः प्रतिशाखाभ्य उक्तसर्वशाखाभ्य उद्धृत्येतिशेषः। बालखिल्याख्यां शाखां चक्रे तां च पैलायन्यादयः त्रय आददुः ॥ ५९ ॥ एवमृक्शाखाविभागप्रकारमभिधाय तच्छ्रवणफलमाह बह्वृच इति। एतच्छन्दसाम् एतेषां छन्दसां व्यासं विभागं श्रुत्वा सर्वैः पापैः प्रमुच्यते ॥ ६० ॥ अथ तैत्तिरीयशाखोत्पत्तिं प्रस्तौति वैशम्पायनशिष्या इति। चरकाध्वर्य्यवः अध्वर्युशाखाध्ययनादध्वर्यवश्चरकाश्चासन् तत्र चरकशब्दं निर्वक्ति–ये चेरुरिति। ब्रह्महत्यारूपम् अंहः पापं क्षपयतीति तथा तत्स्वगुरोरनुष्ठेयं व्रतं चेरुः व्रतचरणाच्चरकसंज्ञाश्चाभवन् इत्यर्थः ॥ ६१ ॥ याज्ञवल्क्य इति। तच्छिष्यः वैशम्पायनशिष्यः याज्ञवल्क्यः अयं पूर्वोक्तादन्यः आह–गुरुमितिशेषः। उक्तिमेवाह–अहो इत्यादिना सुदुष्करम् इत्यन्तेन। हे भगवन्! अहो अल्पसाराणां अल्पतपसामेतेषां चरितेन कियद्दहन्तु सुदुष्करं व्रतं चरिष्यामीति ॥ ६२ ॥ इत्युक्त इति। विप्रावमन्त्रा विप्रावमानकर्त्रा हेतुगर्भमिदं शिष्येण याज्ञवल्क्येनेतीत्यर्थमुक्तः कुपितो गुरुरप्याह, किमिति त्वयाऽलं याहि मदधीतं मत्तोऽधीतमाशु त्यजेति ॥ ६३ ॥ अथ देवरातसुतो याज्ञवल्क्यः यजुषां गणं छर्दित्वोद्गीर्य गतः ॥ ६४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तस्य सुतो वेदमित्रस्य पुत्रः वात्स्यादिषु पञ्चसु अधात् अदात् ॥ ५७ ॥ तस्य शाकल्यशिष्यः सनिरुक्तां निरुक्तसहिताम् ॥ ५८ ॥ बाष्कलिः पूर्वोक्तबाष्कलपुत्रः प्रतिशाखाभ्यः पूर्वोक्तसर्वशाखाभ्यः उद्धृत्य बालखिल्याख्यसंहितां चक्रे तां नाम्ना बालखिल्यसंहितां बालायनिप्रभृतयो दधुः अधीतवन्तः ॥ ५९ ॥ उक्ता एताः संहिता नाम्ना विशिनष्टि–बह्वृचा इति। ऋग्वेदसंहिताः किमनेन छन्दसां व्यासेन श्रुतेनाधीतेन निःश्रेयसानुपयुक्तेनेति तत्राह, श्रुत्वेति ॥ ६० ॥ चरकास्तीर्थसेवकाः अध्वर्यवो यज्ञकर्मणि निपुणाः ऋत्विग्विशेषाः ॥ ६१ ॥ तस्य वैशम्पायनस्य शिष्यो याज्ञवल्क्यो गुरुमित्याह–हे भगवन्गुरो! ब्रह्महत्यांहः क्षपणाय व्रतं चेरुरिति यस्मात्तस्मादंहः प्रत्यल्पसाराणामेतेषां चरितेन कियत्किम्प्रयोजनं स्यादहं दुश्चरं व्रतं चरिष्ये करिष्यामीति ॥ ६२ ॥ ततो गुरुणा किमुक्तमत्राह–इतीति। विप्रावमन्त्रा ब्राह्मणावज्ञाकर्त्रा शिष्येण त्वयाऽलम् इति याहि किं च मदधीतं आशु त्यज उत्सृजेति ॥ ६३ ॥ देवरातसुतः याज्ञवल्क्यः ततः गुरुकुलात् ॥ ६४ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

तत्सुतः माण्डुकेयसुतः शाकल्यः वात्स्यादिषु पञ्चस्वधात् तान् अध्यापयामास ॥ ५७ ॥ तच्छिष्यः शाकल्यशिष्यः स्वसंहितां त्रेधा विभज्य चतुर्थं वैदिकपदार्थव्याख्यानरूपं निरुक्तं च कृत्वा बलाकादिभ्यश्चतुर्भ्यो ददौ ॥ ५८ ॥ बाष्कलिर्बाष्कलपुत्रः प्रतिशाखाभ्यः शाखाभ्यः सङ्गृह्य ॥ ५९ ॥ यजुर्वेदे तैत्तिरीयकशाखोत्पत्तिप्रकारमाह–वैशम्पायनेति। चरकनामनिरुक्तिमाह, यच्चेरुरिति। ब्रह्महत्यारूपमंहः क्षपयतीति तथा तत्स्वगुरोरनुष्ठेयं व्रतं तच्चरणाच्चरकाश्च ते अध्वर्य्यवश्चेति ते तथा ॥६१॥ याज्ञवल्क्योपि तच्छिष्यः वैशम्पायनशिष्यः अल्पसाराणामेषां चरितेन प्रायश्चित्ताचरणेन कियत् एते सुखं तिष्ठन्तु अहमेक एव तपः समर्थश्चरिष्यामि ॥६२॥ कुपित इति यतो गर्ववशात् एतान् विनीतानपि अल्पसारानुक्त्वा आक्षिपसि तस्मात् याहि इतोऽपसर त्वया शिष्येण ममालं ततश्च भवत्वहं यामीत्युक्त्वा जिगमिषन्तं तं पुनराह–मदधीतमिति ॥ ६३ ॥ देवरातसुतो याज्ञवल्क्यः ॥ ६४ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

शाकल्यस्तत्सुतः माण्डूकेयसुतः ॥ ५७ ॥ तच्छिष्यः शाकल्यशिष्यः जातुकर्ण्यश्च स्वसंहितां त्रिधा विभक्तां निरुक्तेन वैदिकपदार्थव्याख्यानेन चतुर्थेन संहितां चतुर्भ्यो बलाकादिभ्यो ददौ ॥ ५८ ॥ बाष्कलिर्बाष्कलस्य पुत्रः बालायनिः भज्यः कासारश्च एते त्रयो दधुः आदधुः अधीतवन्तः ॥ ५९–६० ॥ यजुर्वेदं तैत्तिरीयशाखोत्पत्तिं दर्शयति, वैशम्पायन इत्यादिना। अध्वर्युशाखाध्ययनादध्वर्यवः यत् यस्मात् ब्रह्महत्यारूपमंहः पापं क्षपयतीति ब्रह्महत्यांहःक्षपणं गुरोरनुष्ठेयं व्रतं चेरुस्तस्माच्चरकाः अभवन् तादृशव्रतचरणाच्चरकसंज्ञाश्चाभवन्नित्यर्थः ॥ ६१ ॥ तच्छिष्यः वैशम्पायनशिष्यः याज्ञवल्क्यः आह गुरुमिति शेषः। अल्पसाराणामल्पतपसाम् एतेषां भवच्छिष्याणां चरितेन व्रताचरणेन कियत् अहमेकः सुदुष्करं व्रतं चरिष्ये चरिष्यामि ॥ ६२ ॥ याज्ञवल्क्येन इत्येवमुक्तः गुरुः कुपित आह— विप्रावमन्त्रा निष्कारणं विप्रावज्ञाकर्त्रा शिष्येण ममाऽलम् अतो मदधीतं मत्तोऽधीतमाशु त्यज याहि आश्रमादपसर ॥ ६३ ॥ देवरातस्य सुतः स याज्ञवल्क्योऽपि यजुषां गणं छर्दित्वा उद्गीर्य ततः आश्रमात् ॥ ६४ ॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

तत्सुतो माण्डूकेयसुतः शाकल्यः स्वां संहितां पञ्चधा व्यस्य वात्स्यादिषु पञ्चसु अधात् तानध्यापयामासेत्यन्वयः ॥५७॥ तच्छिष्यः शाकल्यशिष्यः जातूकर्ण्यश्च स्वसंहितां त्रेधा विभज्य चतुर्थं वैदिकपदार्थव्याख्यानरूपं निरुक्तं च कृत्वा बलाकादिभ्यश्चतुर्भ्यो ददौ ॥ ५८ ॥ बाष्कलिः पूर्वोक्तस्य बाष्कलस्य पुत्रः प्रतिशाखाभ्य उक्तसर्वशाखाभ्यः संहितां चक्रे। बालायन्यादयस्तामादधुः अधीतवन्तः ॥ ५९ ॥ ऋक्शाखोपसंहारपूर्वकं तच्छ्रवणफलमाह— बह्वृचा इति ॥ ६० ॥ यजुर्वेदे तैत्तिरीयशाखोत्पत्तिप्रस्तावमाह— वैशम्पायनशिष्या इत्यादिना। चरकनामनिरुक्तिमाह— यदिति। ब्रह्महत्यारूपमंहः पापं क्षपयतीति तथा तत् स्वगुरोरनुष्ठेयं व्रतं यस्मात् स्वयं चेरुस्तस्मात्तच्चरणाच्चरका इत्यर्थः ॥ ६१ ॥ याज्ञवल्क्यश्च तच्छिष्यो वैशम्पायनशिष्यः अहो भगवन् अल्पसाराणां तुच्छफलानां व्रतानामेतेषां चरितेन कियत् फलम् अहं सुदुश्चरं व्रतं चरिष्यामीत्याहेत्यन्वयः ॥ ६२ ॥ इत्येवमुक्तः अतः कुपितो गुरुरपि विप्राणामवमन्त्रा अवज्ञाकर्त्रा शिष्येण त्वया अलं पूर्णं मत्तो यदधीतं तदाशु त्यज इतो याहि गच्छेत्याहेत्यन्वयः ॥ सोऽपि देवरातसुतो याज्ञवल्क्यः यजुषां गणं छर्दित्वा उद्गीर्य ततः स्थानात् गतः। अथानन्तरं तान् मुनयो ददृशुः ॥ ६४ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

शाकल्य इति। तत्सुतो माण्डूकेयसुतः शाकल्यात्, स्वां संहितां पञ्चधा व्यस्य विभज्य, वात्स्यश्च मुद्गलश्च शालीयश्च गोखल्यश्च शिशिरश्च तेषु अधात्। तानध्यापयामासेत्यर्थः ॥ ५७ ॥ जातूकर्ण्य इति। तच्छिष्यः शाकल्यशिष्यः मुनिः, जातूकर्ण्यश्च जातूकर्ण्यस्तु इत्यर्थः। सनिरुक्तां निरुक्तसहितां स्वसंहितां विभज्य, बलाकश्च पैजश्च वैतालश्च विरजश्च तेभ्यः चतुर्भ्यः, ददौ। स्वसंहितां चतुर्धा विभज्य पञ्चमं वैदिकपदार्थव्याख्यानरूपं निरुक्तं च कृत्वा एकैकस्मै सनिरुक्तामेकैकां संहितां ददाविति भावः। बलादिषु द्वन्द्वं क्षणात् संहितायाः सनिरुक्तामिति विशेषणोपादानाच्च। अत्र केचित्तु त्रिसंख्यासंहितारतन्निरुक्तं च कृत्वा त्रिभ्यः संहिता एकस्मै निरुक्तं ददाविति वदन्ति ॥ ५८ ॥ बाष्कलिरिति। बाष्कलिः पूर्वोक्तबाष्कलस्य पुत्रः, प्रतिशाखाभ्यः उक्तसर्वशाखाभ्यः उद्धृत्येति शेषः। बालखिल्याख्यसंहितां चक्रे। तां संहितां बालायनिः, भज्यः, काशारश्च एते त्रयः दधुरधीतवन्तः एव केचित्तु पैलायनिभज्यकाशारा इति पठन्ति। अन्ये बालायनिगार्ग्यकासारा इति। 'बालायनिगार्ग्यकथाजवाः' इति विष्णुपुराणम् ॥ एवमृक्शाखाविभागप्रकारमभिधाय तच्छ्रवणफलमाह। बह्वृचा इति। एताः बह्वृचाः, संहिताः एभिः ब्रह्मर्षिभिः धृताः हि। एतच्छन्दसामेतेषां छन्दसां व्यासं विभागं श्रुत्वा, सर्वपापैः प्रमुच्यते ॥ ६० ॥ अथ यजुर्वेदीयतैत्तिरीयशाखोत्पत्तिं प्रस्तौति। वैशंपायनेति। वैशंपायनशिष्याः चरकाः तीर्थसंसेवकाश्च तेऽध्वर्यवो यज्ञकर्मणि निपुणाश्च अभवन्। ऋत्विग्विशेषा बभूवुरित्यर्थः। तत्र चरकनामनिरुक्तिमाह। यत् ये स्वगुरोः, ब्रह्महत्यांहःक्षपणं व्रतं चेरुः। तच्चरणाच्चरका इत्यर्थः। अत्र विशेषो विष्णुपुराणीयतृतीयांशीयचतुर्थाध्यायादवगन्तव्यः। तत्रत्यं किंचिल्लिख्यते। 'यजुर्वेदतरोः शाखाः सप्तविंशन्महामतिः। वैशंपायननामाऽसौ व्यासशिष्यश्चकार वै। शिष्येभ्यः प्रददौ ताश्च जगृहुस्तेऽप्यनुक्रमात्। याज्ञवल्क्यस्तु तस्याभूद्ब्रह्मरातसुतो द्विजः। शिष्यः परमधर्मज्ञो गुरुवृत्तिपरः सदा। कदाचिज्जाह्नवीतीरे ऋषीणां तु समागमे। ऋषयो ह्यब्रुवन् सर्वे संमन्त्र्य च परस्परम्। ऋषियोऽद्य महामेरौ समाजे नागमिष्यति। तस्य व सप्तरात्रान्ते ब्रह्महत्या भविष्यति। वैशंपायन एकस्तु तं व्यतिक्रान्तवांस्तदा। स्वस्रीयबालकं सोऽथ अज्ञानाच्च पदाऽस्पृशत्। ममार च तदा सोऽथ मातुलः पर्यतप्यत' इत्यादि ॥ ६१ ॥ याज्ञवल्क्य इति। तच्छिष्यः वैशंपायनशिष्यः याज्ञवल्क्यः आह। गुरुमिति शेषः। अयं पूर्वोक्ताद्याज्ञवल्क्यादन्यः उक्तिमेवाहाहो इत्यादिना सुदुष्करमित्यन्तेन अहो हे भगवन्, अल्पसाराणामल्पतपसां, एतेषां भवच्छिष्याणां चरितेन कियत्। अहं तु सुदुष्करं सुदुश्चरमित्यपि पाठः व्रतं चरिष्ये चरिष्यामि, इत्याह ॥ ६२ ॥ इत्युक्त इति विप्रावमन्त्रा विप्रावमानकर्त्रा हेतुगर्भमिदं, शिष्येण याज्ञवल्क्येन, इतीत्थं उक्तः अतएव कुपितः गुरुः अपि, त्वया

अलं याहि। मदधीतं च मत्तो यदधीतं तदित्यर्थः। आशु त्यज, इति आह ॥ ६३ ॥ देवरातेति। देवरातसुतः स याज्ञवल्क्यः अपि, यजुषां गणं छर्दित्वा उद्गीर्य, ततः गुरुकुलात् गतः। अथ मुनयः तान् यजुर्गणान् ददृशुः ॥ ६४ ॥

### हिन्दी अनुवाद

माण्डूकेय के पुत्र का नाम था शाकल्य। उन्होंने अपनी संहिता के पाँच विभाग करके उन्हें वात्स्य, मुद्गल, शालीय, गोखल्य और शिशिर नामक शिष्यों को पढ़ाया ॥ ५७ ॥ शाकल्य के एक और शिष्य थे— जातूकर्ण्य मुनि। उन्होंने अपनी संहिता के तीन विभाग करके तत्सम्बन्धी निरुक्त के साथ अपने शिष्य बलाक, पैज वैताल और विरज को पढ़ाया ॥ ५८ ॥ बाष्कल के पुत्र बाष्कलि ने सब शाखाओं से एक 'वालखिल्य' नाम की शाखा रची। उसे वालायनि, भज्य एवं कासार ने ग्रहण किया ॥ ५९ ॥ इन ब्रह्मर्षियों ने पूर्वोक्त सम्प्रदाय के अनुसार ऋग्वेदसम्बन्धी बह्वृच शाखाओं को धारण किया। जो मनुष्य यह वेदों के विभाजन का इतिहास श्रवण करता है, वह सब पापों से छूट जाता है ॥ ६० ॥ शौनकजी! वैशम्पायन के कुछ शिष्यों का नाम था चरकाध्वर्यु। इन लोगों ने अपने गुरुदेव के ब्रह्महत्या-जनित पाप का प्रायश्चित्त करने के लिये एक व्रत का अनुष्ठान किया। इसीलिये इनका नाम 'चरकाध्वर्यु' पड़ा ॥ ६१ ॥ वैशम्पायन के एक शिष्य याज्ञवल्क्य मुनि भी थे। उन्होंने अपने गुरुदेव से कहा— 'अहो भगवन्! ये चरकाध्वर्यु ब्राह्मण तो बहुत ही थोड़ी शक्ति रखते हैं। इनके व्रतपालन से लाभ ही कितना है? मैं आपके प्रायश्चित्त के लिये बहुत ही कठीन तपस्या करूँगा ॥ ६२ ॥ याज्ञवल्क्य मुनि की यह बात सुनकर वैशम्पायन मुनि को क्रोध आ गया। उन्होंने कहा—'बस-बस' चुप रहो। तुम्हारे जैसे ब्राह्मणों का अपमान करनेवाले शिष्य की मुझे कोई आवश्यकता नहीं है। देखो, अबतक तुमने मुझसे जो कुछ अध्ययन किया है, उसका शीघ्र-से शीघ्र त्याग कर दो और यहाँ से चले जाओ ॥ ६३ ॥ याज्ञवल्क्यजी देवरात के पुत्र थे। उन्होंने गुरुजी की आज्ञा पाते ही उनके पढ़ाये हुए यजुर्वेद का वमन कर दिया और वे वहाँ से चले गये। जब मुनियों ने देखा कि याज्ञवल्क्य ने तो यजुर्वेद का वमन कर दिया, तब उनके चित्त में इस बात के लिये बड़ा लालच हुआ कि हमलोग किसी प्रकार इसको ग्रहण कर लें। परन्तु ब्राह्मण होकर उगले हुए मन्त्रों को ग्रहण करना अनुचित है, ऐसा सोचकर वे तीतर बन गये और उस संहिता को चुग लिया। इसी से यजुर्वेद की वह परम रमणीय शाखा 'तैत्तिरीय' के नाम से प्रसिद्ध हुई ॥ ६४–६५ ॥

यजूंषि तित्तिरा भूत्वा तल्लोलुपतयाऽऽददुः। तित्तिरीया इति यजुःशाखा आसन् सुपेशलाः ॥ ६५ ॥
याज्ञवल्क्यस्ततो ब्रह्मन् छन्दांस्यधिगवेषयन्। गुरोरविद्यमानानि सूपतस्थेऽर्कमीश्वरम् ॥ ६६ ॥

### याज्ञवल्क्य उवाच

ॐ नमो भगवते आदित्यायाखिलजगतामात्मस्वरूपेण कालस्वरूपेण चतुर्विधभूतनिकायानां ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेषु बहिरपि चाकाश इवोपाधिनाव्यवधीयमानो भवानेक एव क्षणलवनिमेषावयवोपचितसंवत्सरगणेनापामादानविसर्गाभ्यामिमां लोकयात्रामनुवहति ॥ ६७ ॥

यदु ह वाव विबुधर्षभ सवितरदस्तपत्यनुसवनमहरहराम्नायविधिनोपतिष्ठमानानामखिलदुरितवृजिनबीजावभर्जन भगवतः समभिधीमहि तपनमण्डलम् ॥ ६८ ॥

य इह वाव स्थिरचरनिकराणां निजनिकेतनानां मनइन्द्रियासुगणाननात्मनः स्वयमात्मान्तर्यामी प्रचोदयति ॥ ६९ ॥

य एवेमं लोकमतिकरालवदनान्धकारसंज्ञाजगरग्रहगिलितं मृतकमिव विचेतनमवलोक्यानुकम्पया परमकारुणिक ईक्षयैवोत्थाप्याहरहरनुसवनं श्रेयसि स्वधर्माख्यात्मावस्थाने प्रवर्तयत्यवनिपतिरिवासाधूनां भयमुदीरयन्नटति ॥ ७० ॥

परित आशापालैस्तत्र तत्र कमलकोशाञ्जलिभिरुपहृतार्हणः ॥ ७१ ॥

अथ ह भगवंस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्वन्दितमहमयातयामयजुःकाम उपसरामीति ॥ ७२ ॥

१. सोप०। २. रिव। ३. यदुत। ४. ग्रहीतं। ५. भिरभिव०।

## कृष्णप्रिया व्याख्या

अन्वयः—( मुनयः ) तल्लोलुपतया तित्तिराः भूत्वा यजूंषि आददुः ( अत एव ) सुपेशलाः यजुःशाखाः तित्तिरीयाः इति आसन् ॥ ६५ ॥ ब्रह्मन् ततः याज्ञवल्क्यः गुरोः अविद्यमानानि छन्दांसि अधिगवेषयन् ईश्वरम् अर्कं सूपतस्थे ॥ ६६ ॥ याज्ञवल्क्यः उवाच—भवान् एकः एव ब्रह्मादिस्तम्बपर्यन्तानां चतुर्विधभूतनिकायानाम् अखिलजगताम् अन्तर्हृदयेषु आत्मस्वरूपेण बहिः अपि क्षणलवनिमेषावयवोपचितसंवत्सरगणेन कालस्वरूपेण ( वर्तमानः ) आकाशः इव उपाधिना अव्यवधीयमानः अपाम् आदानविसर्गाभ्याम् इमां लोकयात्राम् अनुवहति ( तस्मै तुभ्यम् ) भगवते आदित्याय नमः ॥ ६७ ॥ यदु ह वाव विबुधर्षभ सवितः अहरहः अनुसवनम् आम्नायविधिना उपतिष्ठमानानाम् अखिलदुरितवृजिनबीजावभर्जन अदः भगवतः तपनमण्डलं तपति ( तत् ) समभिधीमहि ॥ ६८ ॥ इह वाव यः स्थिरचरनिकराणां निजनिकेतनानाम् अनात्मनः मनइन्द्रियासुगणान् स्वयम् आत्मा अन्तर्यामी प्रचोदयति ॥ ६९ ॥ यः एव परमकारुणिकः अतिकरालवदनान्धकारसंज्ञाजगरग्रहगलितं मृतकम् इव विचेतनं इमं लोकम् अवलोक्य अनुकम्पया ईक्षया एव उत्थाप्य अहरहरनुसवनं स्वधर्माख्यम् आत्मावस्थाने प्रवर्तयति अवनिपतिः असाधूनाम् इव भयम् उदीरयन् अटति ॥ ७० ॥ परितः तत्र तत्र कमलकोशाञ्जलिभिः आशापालैः उपहृतार्हणः ( रविः अटतीति शेषः )॥ ७१ ॥ अथ ह भगवन् त्रिभुवनगुरुभिः वन्दितं तव चरणनलिनयुगलम् अहम् अयातयामयजुःकामः ( सन् ) उपसरामि इति ॥ ७२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

छर्दितस्यादानं विप्ररूपेणानुचितमिति तित्तिराः पक्षिविशेषा भूत्वाऽऽददुः ततश्च तैत्तिरीया इति प्रसिद्धाः । सुपेशला अतिरम्याः । बहुवचनमवांतरभेदविवक्षया ॥ ६५ ॥ काण्वमाध्यंदिनादिशाखाप्रसंगमाह याज्ञवल्क्य इत्यादिना । गुरोर्वैशंपायनस्य व्यासेन विभज्यानुक्तत्वादविद्यमानान्यधिकानि गवेषयन्मृगयन्सूपतस्थे सम्यक् तुष्टाव । ईश्वरमृगादिवेदानाम् । तथा च श्रुतिः "ऋग्भिः पूर्वाह्णे दिविदेव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः" इति ॥ ६६ ॥ नमो भगवते तुभ्यमादित्याय । यो भगवानेक एवेमां लोकयात्रामनुवहतीत्यन्वयः । तदेव दर्शयति । अखिलजगतामात्मस्वरूपेणांतर्हृदयेषु कालस्वरूपेण च बहिरपि वर्तमान इति । अखिलजगतामित्यस्य प्रपंचः । चतुर्विधेति । हृदयांतर्वर्तित्वेऽपि जीववत्तनोपाधिनाऽव्यवधीयमानोऽनाच्छाद्यमानः । कालस्वरूपेण चेत्यस्य प्रपंचः क्षणेति । क्षणलवादयो येऽवयवा-तैरुपचिताः संवत्सरास्तेषां गणेन प्रत्यब्दमपामादानं शोषणं विसर्गो वृष्टिस्ताभ्याम् । अनेन गायत्रीप्रथमपादोक्तवरेण्यताऽनुवर्णिता ॥ ६७ ॥ द्वितीयपादार्थानुवर्णनेन स्तौति यदुहेति । हे विबुधर्षभ हे सवितः यदप्यदो भगवतस्तव मंडलं तपति तत्समभिधीमहीति सम्यगाभिमुख्येन ध्यायेम । पुनस्तस्यैव संबोधनम् । प्रत्यहं त्रिषवणं वैदिककर्ममार्गेण स्तुवतां भक्तानां यान्यखिलानि दुरितानि तत्फलानि च वृजिनानि दुःखानि तेषां बीजमज्ञानं च तेषामवभर्जन विनाशक हे तपनेति ॥ ६८ ॥ तृतीयपादेन स्तौति । य इहेति । भवान्स्थावरजंगमसमूहानां स्वाश्रयाणां जीवानां मनइन्द्रियप्राणगणाननात्मनो जडान्स्वयमात्मैवांतर्यामी सन्प्रचोदयति प्रवर्तयति ॥६९॥ तृतीयपादमेव मंडलस्थपरतया व्याचक्षाणः स्तौति । य एवेति । य एक एव भगवानतिकरालवदनो योंधकारसंज्ञोऽजगरग्रहस्तेन गिलितमत एव मृतकमिव विचेतनं स्वधर्माख्यं यदात्मावस्थानं प्रत्यक्प्रवणत्वं तदेव श्रेयस्तस्मिन्प्रवर्तयति । किंच यो भवानवनिपतिरिवाटति गच्छति ॥ ७० ॥ आशापालैरिंद्रादिभिः । कमलकोशयुक्तैस्तत्तुल्यैर्वांजलिभिरुपहृतार्हणो दत्तार्घः ॥ ७१ ॥ यत एवंभूतस्त्वमथातः ह स्फुटमयातयामान्यन्यैर्यथावदविज्ञातानि यजूंषि तत्कामोऽहमुपसरामि भजामि ॥ ७२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तेषु यजुष्षु लोलुपतया लालसया मुनयोऽन्ये वैशंपायनशिष्या आददुर्जगृहुः । "न हि चेतः सुकृतिनामकार्ये गच्छति कचित्" इति न्यायेन छर्दिता अपि मंत्रा अशुचितां न गता इति तद्ग्रहणे मुनिगणेच्छोत्पत्तेर्ज्ञायते । अत एवोक्तम्—सुपेशला इति शाखाविशेषणम् । "सुरम्ये पेशलः प्रोक्तः शुद्धे मृदुतरे तथा" इत्यभिधानचिंतामणोक्तेः सुष्ठु पेशला अतीवशोधकज्ञानोपयोगिपञ्चकोशादिनिर्णायकत्वेनातिशुद्धाः । न हि कदाचिद्भक्षितहेमगुलिका पुरीषमार्गतोद्गीर्णा वाऽशुचितामेति किन्तु यावन्मलयोगं ततः क्षालनाद्यथा शुद्धा तथैव तित्तिरिरूपेण तदुपादानसमये एवान्नरूपेण छर्दितत्वात्तेष्वशुचित्वभ्रांत्यैव मुनिभिर्न ब्राह्मणरूपेण ते स्वीकृतास्तद्रूपत्यागोत्तरं सर्वे मुनयस्तान् जगृहुस्ते च मंत्राः कृष्णयजुष्ट्वे न प्रसिद्धा यज्ञादिपूपयुज्यंते, न ह्यशुचिमंत्रैर्यज्ञः प्रतायत इति वेदस्य साक्षान्नारायणरूपत्वाद्दुष्टावचता न भवति "नोष्टावचत्वं भजते निर्गुणत्वाद्धियो गुणैः" इत्यष्टमे मत्स्यचरितोक्तेः 'वांते यातयामः' इति निघंटूक्तेस्तद्भिन्नोऽयातयामस्तत्कामनया श्रीयाज्ञवल्क्योक्तं।सर्वं देवपूज्यम् "ब्रह्मेन्द्रनारायणरुद्रवंदितः स नः सदा यच्छतु मंगलं रविः" इत्युक्तेस्तुष्टावेति वैष्णवादौ ॥ ६५ ॥ सूर्यो देवः ईयते प्रतीयते महीयते पूज्यते । ततो वैशंपायनात् ॥ ६६ ॥ चतुर्विधेति—जरायुजांडजस्वेदजोद्भिद्भेदाज्जीवाश्चतुर्विधाः । यथा घटाद्युपाधिनाकाश इव परिच्छिन्न

इव प्रतीयते इति वा ॥ ६७ ॥ आदरेण प्रीत्युत्पादनार्थमामंत्रयति—हे विबुधर्षभेति। सर्वदेवश्रेष्ठत्वात्त्वामहं स्तौमीति भावः। सवितरिति—सर्वविश्वोत्पादकस्य तव मम सर्ववेदज्ञानोत्पादनं न दुर्घटमिति भावः। ज्ञानोत्पादनं ह्यज्ञाननाशं विना न संभवतीति चेत्तत्राह—अनुसवनमित्यादि। अत आरभ्यावभर्जनांतां संबुद्धिमाह—सेवकाज्ञाननाशद्योतिकाम्। अज्ञानस्य तमोरूपत्वात्तद्धननं प्रकाशेन भवतीति चेत्तद्द्योतिकां संबुद्धिं पुनराह—तपनेति। 'तप-ऐश्वर्ये' धातुः। ऐश्वर्यं चात्र प्रकाशलक्षणमेव सर्वविलक्षणं तवैवातः सर्वदेवाधिकस्त्वमेवासीति भावः॥ ६८–६९॥ अत एवांधकाराजगरगिलितत्वादेव। प्रत्यक्प्रवणत्वं तदेकपरत्वम्। अन्यदाधिक्यमाह—किञ्चेति ॥ ७०–७१ ॥ हे भगवन्निति—त्वमेव साक्षाद्भगवानिति भावः। तत्र हेतुः—त्रिभुवनगुरुभिरिति। "ब्रह्मेंद्रनारायणरुद्रवंदितः स नस्सदा यच्छतु मंगलं रविः" इति भविष्योक्तेः ॥ ७२ ॥

## अन्वितार्थप्रकाशिका

यजूंषीति। मुनयश्च तल्लोलुपतया यजुःषु अतिलुब्धतया छर्दितस्यादानं विप्ररूपेणानुचितं मत्वा तित्तिराः पक्षिविशेषा भूत्वा यजूंष्याददुर्गृहीतवन्तः। तद्भाव आर्षः अत एव सुपेशलाः अतिरम्याः यजुःशाखाः तैत्तिरीया इति प्रसिद्धा आसन्। बहुवचनं त्ववान्तरभेदविवक्षया ॥ ६५ ॥ कण्वमाध्यन्दिनादिशाखाप्रसङ्गमाह—याज्ञवल्क्य इत्यादिना। हे ब्रह्मन्! ततः तदनन्तरं गुरोर्वैशम्पायनस्य व्यासेन विभज्यानुक्तत्वात् अविद्यमानानि तेनानधिगतानि अधि अधिकानि गवेषयन् मृगयमाणः याज्ञवल्क्यः ऋगादिवेदानामीश्वरमर्कं सूपतस्थे सम्यक् तुष्टाव ॥ ६६ ॥ तत्र गायत्रीप्रथमपादार्थमनुवर्णयन् स्तौति—ॐ नम इति। यो भगवान् भवानेक एव ब्रह्मादिस्तम्बपर्यन्तानां जरायुजादिभेदेन चतुर्विधानां भूतनिकायानामखिलजगतामन्तर्हृदयेष्वात्मस्वरूपेण अन्तर्यामिरूपेण बहिरपि क्षणलवादयो येऽवयवास्तैरुपचिता ये संवत्सरास्तेषां गणेन कालस्वरूपेण वर्त्तमानस्तथाऽप्याकाश इव देहाद्युपाधिना अव्यवधीयमानः अनाच्छाद्यमानः रश्मिभिरपामादानं शोषणं विसर्गश्च वृष्टिस्ताभ्यामिमं दृश्यमानां लोकयात्रां वृत्तिमनुवहति तस्मै तुभ्यं भगवते आदित्याय नमः ॥६७॥ गायत्रीद्वितीयपादार्थमनुवर्णयन् स्तौति—यदिति। यदु हेति प्रसिद्धिद्योतको निपातसमुदायः। ध्येयत्वं सूचयन् बहुधा संबोधयति। हे विबुधर्षभ! हे सवितः हे अहरहः! प्रतिदिनमनुसवनं त्रिसन्ध्यमाम्नाय-विधिना वैदिकमार्गेण उपतिष्ठमानानां स्तुतिनमस्कारादिना भजतां जनानां यान्यखिलानि दुरितानि पापानि तत्फलानि वृजिनानि दुःखानि बीजं पापकारणमज्ञानं च तेषामवभर्जन विनाशक हे तपन! यददो भगवतस्तव मण्डलं तपति तत्समभिधीमहि सम्यगाभि-मुख्येन ध्यायेयेत्यन्वयः ॥ ६८ ॥ अथ गायत्रीतृतीयपादार्थमनुवर्णयन् स्तौति—य इहेति। इह लोके यो भगवान् स्थिरचरनिकराणां स्थावरजङ्गमसमूहानां निजनिकेतनानां स्वशरीरभूतानां जीवानामात्मनो जडान् मनइन्द्रियप्राणगणान् स्वयमात्मैवान्तर्यामी सन् प्रचोदयति प्रवर्त्तयति ॥ ६९ ॥ तृतीयपादमेव मण्डलस्थपरतया व्याचक्षाणः स्तौति—य एवेति। य एव परमकारुणिको भवान् अतिकरालवदनो योऽन्धकारसंज्ञोऽजगरग्रहस्तेन गिलितमत एव मृतकमिव विचेतनं निःसंज्ञमिमं लोकमवलोक्य निजानुकम्पया ईक्षया दृष्टयैव उत्थाप्याहरहरनुसवनं त्रिसन्ध्यं स्वधर्माख्यं यदात्मनः परमात्मनः अवस्थानमुपासनं तस्मिन् प्रवर्त्तयति। यश्च तत्र तत्र स्थाने आशापालैर्दिक्पालैः इन्द्रवरुणादिभिः कमलकोशयुक्तैस्तत्तुल्यैर्वाञ्जलिभिरुपहृतार्हणः दत्तार्घः अवनिपतिरिवासाधूनां दुराचाराणां मरणनरकादिभयमुदीरयन्नुत्पादयन् परितोऽटति ॥ ७० ॥ अथेति। यत एवंभूतस्त्वमथात एव हे भगवन्! तस्य तव त्रिभुवनगुरुभिरिन्द्रादिभिर्वन्दितं चरणनलिनयुगलमयातयामानि यजूंषि तत्कामोऽहमुपसरामि भजामीति। इतिशब्दः स्तुतिसमाप्ति-द्योतकः ॥ ७१ ॥ एवमिति। एवं स्तुतः प्रसादितः स भगवान् हरिः रविः। स्फुटमन्यत् ॥ ७२ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

नम इत्यादि आदित्यमण्डलान्तर्वर्तिभगवतस्तुतिः ॥ ६७ ॥ यदुहेति। यन्मण्डलन्तपति इह स्थितोऽन्तर्यामी देहेन्द्रिया-सुगणाननात्मनश्च प्रचोदयतीत्यन्वयः ॥ ६८ ॥ स्थिरचरनिकराणामित्यादिष्टकर्मावस्था य एवेति तस्य तव चरणयुगलमुपसरा-मीत्यन्वयः ॥ ६९–८० ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धव्याख्याने श्रीसुदर्शनसूरिकृतशुकपक्षीये षष्ठोऽध्यायः ॥ ६ ॥

## श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

अथ मुनयः छर्दितानामादानं विप्ररूपेणाऽचितम् इति मन्वानाः तित्तिराख्यपक्षिविशेषा भूत्वा तत्तदालोलुपतयाऽऽददुः जगृहुः अतो यजुःशाखाः तैत्तिरीयसंज्ञा आसन् सुपेशला अतिरम्याः बहुवचनमवान्तरभेदविवक्षया ॥ ६५ ॥ काण्वमाध्यन्दिन-शाखाप्रवृत्तिं प्रस्तौति—याज्ञवल्क्य इत्यादिना। हे ब्रह्मन्! गुरोरधीतानि छन्दांस्यधिगवेषन्नन्वेषयन्नप्यपश्यन् छर्दितत्वादितिभावः अर्कमादित्यमण्डलान्तवर्त्तिनमीश्वरं सुष्ठु उपतस्थे तुष्टाव ॥ ६६ ॥ स्तुतिमेवाऽह—ॐ नम इत्यादिना। यो लोकयात्रामनुवहति

तस्मै भगवते आदित्याय तुभ्यं नमः इति सम्बन्धः। तदेव दर्शयति—अखिलेत्यादिना। अखिलजगदात्मत्त्वमेव प्रपञ्चयति—चतुर्विधभूतनिकायानां देवमनुष्यपशुपादपभेदेन जरायुजाण्डजस्वेदजोद्भिज्जरूपेण वा चतुर्विधं भूतसमुदायानां किं बहुना ब्रह्मादिस्तम्बपर्यन्तानामन्तर्हृदयेष्वाकाश इव व्याप्याप्युपाधिना ब्रह्मादिस्तम्बपर्यन्तेनाव्यवधीयमान अनपोह्यमान अस्पृष्टव्याप्यगतदोष इत्यर्थः। कालरूपतां प्रपञ्चयति—बहिःक्षणादिभिरवयवैरुपचितेन सम्वत्सरगणेन तोयादानविसर्गाभ्यामिमां लोकयात्रां लोकवृत्तिमनुवहति निर्वहति॥ ६७॥ अखिलजगदात्मस्वरूपेणेत्यनेनान्तःप्रविश्य प्रेरकत्वरूपो गायत्रीप्रथमपादस्य सवितृशब्दार्थ उक्तः। अथ द्वितीयपादस्य भार्गवशब्दार्थवर्णनेन स्तौति—यदुह वेति। उहवावेति प्रसिद्धिद्योतको निपातसमुदायः भगवतस्तव यन्मण्डलमधस्तपति तत्स्वधीमहीति सम्बन्धः। स्वधीमही सुष्टु ध्यायेमेत्यर्थः। हे विबुधर्षभ! हे सवितः! हे तपनेति त्रीणि सम्बोधनानि मण्डलं विशिनष्टि—अहरहस्तुसवनम् त्रिसन्ध्यमाम्नायविधिना वैदिकमार्गेण उपतिष्ठमानानां जनानां यान्यखिलानि दुरितानि पापानि वृजिनानि तन्मूलानि दुःखानि च तान्येव बीजानि। यद्वा, दुरितानां बीजमज्ञानं च भर्जयतीति भर्जनं तद्भर्गः तेजो यस्य तत्॥ ६८॥ अथ तृतीयपादार्थसर्वधीप्रचोदयितृत्वकथनेन स्तौति, यदुहवावेति उह वावेति। पूर्ववत् यो भवान्निजनिकेतनानां स्वशरीराणां स्थावरजङ्गमसमूहानां मनइन्द्रियप्राणगणात्मनो जीवांश्च स्वयमात्माधारकोऽन्तर्यामी च सन् प्रचोदयति॥ ६९॥ चतुर्विधपुरुषार्थप्रदत्वमाविःकुर्वन्स्वाभिप्रेतं निवेदयति—य एवेति। अतिकरालवदनो योऽन्धकारसञ्ज्ञोऽजगरग्रहस्तेन गृहीतं गिलितमत एव मृतकमिवाचेतनं निःसञ्ज्ञमिमं लोकम् अवलोक्यानितरसाधारण्या कृपादृष्ट्या उत्थाप्य अहरहस्त्रिसन्ध्यं स्वधर्माख्यावस्थाने स्वधर्माख्यं स्वाराधनधर्माख्यं यदात्मावस्थानं चित्तसमाधानं तस्मिन् श्रेयसि प्रवर्त्तयिष्यति यश्च भवानवनीपतिरिवानिमिषाणां देवानामधिपतिरसाधूनां दुष्टसत्त्वानां भयमुदीरयन्नुत्थापयन्नटति यश्च परित आशापालैर्दिक्पालैः कर्तृभिः कमलकोशाकारैरञ्जलिहृतं समर्पितमर्हणं यस्य सः अटतीति पूर्वेणान्वयः॥ ७०–७१॥ अथ ह नतु, खलु हे भगवंस्त्रिभुवनगुरुभिर्ब्रह्मादिभिरभिवन्दितमुक्तविधस्य पदकमलयुगलमहमयातयामयजुःकामः अयातयामान्यन्यैर्यथावदविज्ञातान्यगतसाराणि वा यजूंषि कामयमान उपसरामि भजामीत्युपतस्थे इति पूर्वेणान्वयः॥ ७२॥

### श्रीमद्विजयध्वजतीर्थकृतपदरत्नावली

तल्लोलुपतया यजुर्गणग्रहणेच्छावत्त्वेनाददुः स्वीचक्रुः॥ ६५॥ छन्दांस्यधिगवेषयन्नभ्येतुं मृगयन्नर्कं परमानन्दरूपत्वाद्द्विरात्मार्चनाच्च सूर्यान्तर्यामित्वाच्च तन्नामाननीश्वरं नारायणं सुष्ठूपतस्थे तुष्टाव॥ ६६॥ ॐ ब्रह्मनाम्ने "ॐ स्याद्ब्रह्मण्यनुज्ञायाम्" इति यादवः "अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुण"इति श्रुतेः गुणैरोतत्वादोङ्कारस्याप्ययमेवार्थः इममेवार्थं सूचयति, भगवत इति। भगवते षड्गुणपूर्णाय अयं वसिष्ठादिवदिदानीन्तनो भगवान्नेत्याह, आदित्याय आदिभवाय पुरातनाय। यद्वा, अखिण्डतैश्वर्याय एतत् द्वयमुपपादयति—अखिलेति। यो भगवान् ब्रह्मादिस्तम्बपर्यन्तानां अण्डजादिभेदेन चतुर्विधभूतसमूहानां हृदयेष्वन्तरखिलजगदात्मस्वरूपेण समस्तजगदन्तर्यामिस्वरूपेण स्थितो बहिरपि क्षणलवनिमेषाद्यवयवोपचितसम्वत्सरगणलक्षणेन कालरूपेणाकाश इव व्यवधीयमानः तोयादानविसर्गाभ्यां प्रत्यब्दन्तोयस्य आदानं शोषणं विसर्गो वृष्टिस्ताभ्यामिमां लोकयात्रामनुवहति। यद्वा, घटाद्युपाधिनाकाश इव सुरनरादिशरीरोपाधिना व्यवधीमानः परिच्छिद्यमान इति॥ ६७॥ हे विबुधर्षभ! हे सवितः! तव यद्दोमण्डलमनुसवनं तपति प्रकाशते इह वा वेत्यलङ्कारार्थः हे तपन! प्रकाशनशील! तत्समभिधीमहि सम्यक् चिन्तयामः कीदृशं मण्डलमहरहराम्नायविधिना वेदोक्तप्रकारेणोपतिष्ठमानानां सेवमानानामखिलानां दुरितानां दुष्पापानां दुःसहानां वृजिनानां दुःखानां बीजानि दुष्कर्माण्यवभर्जयितुं शीलमस्यास्तीति अस्मिन्नर्थे ल्युट्प्रत्ययः॥ ६८॥ इह भुवि यो वाव स्वनिकेतनानां स्वाश्रयाणां स्थिरचरनिकराणामात्मा स्वामी अन्तः स्थित्वा सुखप्रेरकश्च तत्त्वमनारोपितस्वभावः स्वयं तेषामनात्मन अचेतनप्रायान् मनइन्द्रियासुगणान्प्रचोदयति अनेन विशेषणद्वयेन "तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्" इत्ययं विवृतः यो नो धियो ज्ञानसाधनत्वादिन्द्रियाणि प्रचोदयात्तस्य सवितुर्जगत्स्रष्टुः भर्गः सकलदुःखबीजभर्जनकं वरेण्यं रमणीयं तन्मण्डलं धीमहीति "आप्राद्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च" इति॥ ६९–७०॥ अतिकरालं वदनं यस्य स तथा स एवान्धकारः अज्ञानलक्षणस्तन्नाम्नाऽजगरग्रहेण गृहीतं ग्रस्तं मृतकमिव शववदचेतनकल्पमिमं लोकं जनमवलोक्य द्रवीकृतचित्तवृत्त्या परमकारुणिको यो भवानीक्षयैव कटाक्षनिरीक्षणेनैव तमुत्थाप्यानुदिनमात्मनः परमात्मनोऽवस्थानं प्राप्तिर्यस्मात्तत्तथा तस्मिन्स्वधर्माख्ये श्रेयसि प्रवर्तयत्येव "चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः" इति श्रुतेः। कालप्रणायको यश्च भवानाशापालैरिन्द्रादिभिः कमलकुड्मलाञ्जलिभिस्तत्र तत्र समुपचितोऽसाधूनां मरणभयमुदीरयन् परितः अटति परिवर्तते "आप्राद्यावापृथिवी अन्तरिक्षम्"इति श्रुतिः। तस्मै तुभ्यं नम इति पूर्वेणान्वयः॥ ७१॥ स्वाभिप्रायमुद्गलयति—अथेति। यस्मादयातयामयजुष्कामोऽथ तस्मात्त्रिभुवनगुरुभिरभिवन्दितं तव चरणनलिनयुगलमुपसरामि शरणं गतोस्मीति तुष्टुवेत्यर्थः॥ ७२॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ईश्वरमिति तदन्तर्याम्यभेदेन भाव्यमानमित्यर्थः ॥ ६६–७३ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

छर्दितस्यादानं विप्ररूपेणायुक्तमिति तित्तिराः पक्षिविशेषा भूत्वा आददुः ततश्च तैत्तिरीया इति ख्याताः ॥ ६५ ॥ अधिगवेषयन् अन्विष्यन् गुरोर्वैशम्पायनस्यापि अविद्यमानानि तेनाप्यनधिगतानीत्यर्थः ॥ ६६ ॥ यो भगवानेक एव इमां लोकयात्रामनुवहति तस्मै आदित्याय अखिलजगतां भगवते श्रीमते नम इत्यन्वयः 'भगं श्रीकाममाहात्म्ये" इत्यमरः चतुर्विधभूतनिकायानाम् अन्तर्बहिरपि क्रमेणात्मस्वरूपेण कालस्वरूपेण च वर्त्तमान इत्यर्थः। हृदयान्तर्वर्त्तित्वेपि जीववत्त्वेन उपाधिना अव्यवधीयमानः अनाच्छाद्यमानः आकाशवत् क्षणलवाद्यो येऽवयवास्तैरुपचिताः सम्वत्सरास्तेषां गणेन प्रत्यब्दमेव अपाम् आदानं शोषणं विसर्गो वृष्टिस्ताभ्याम् ॥ ६७ ॥ हे विबुधर्षभ! सवितः! यन्मण्डलं तपति अदः समभिधीमहि अनुसवनं प्रतिसमयम् अहरहः प्रत्यहं च आम्नायविधिना वैदिकमार्गेण उपतिष्ठतां स्तुवतां यान्यखिलानि दुरितानि तत्फलानि वृजिनानि दुःखानि च तेषां बीजमज्ञानं च तेषामवभर्जन! विनाशक! हे तपन! ॥ ६८ ॥ अनात्मनो जडान् प्रचोदयति प्रवर्त्तयति ॥ ६९ ॥ ईक्षयैवोत्थाप्य पूर्वोद्रावुदित्य ईक्षणप्रदानेनैवेत्यर्थः। स्वधर्माख्यं यत् आत्मावस्थानम् आत्मोपासनं तत्र ॥ ७० ॥ आशापालैर्दिक्पालैरिन्द्रादिभिः कमलकोशायुक्तैस्तत्तुल्यैर्वा अञ्जलिभिरुपहृतार्हणो दत्तार्घ्यः ॥ ७१ ॥ अयातयामानि ऊर्जस्वन्ति अन्यैर्ज्ञातुमशक्यानीत्यर्थः। यानि यजूंषि तत्कामोऽहमुपसरामि भजामि ॥ ७२–७३ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

छर्दितस्य यजुर्गणस्य विप्ररूपेणादानमयुक्तमतस्तित्तिराः पक्षिविशेषा भूत्वा आददुः जगृहुः, अतो यजुःशाखाः तैत्तिरीयाः इति प्रसिद्धाः सुपेशलाः सुरम्याः बहुवचनमवान्तरभेदाभिप्रायम् ॥ ६५ ॥ काण्वमाध्यन्दिनादिशाखाप्रवृत्तिप्रकारमाह–याज्ञवल्क्य इत्यादिना। ततः गुरोराश्रमान्निर्गमनान्तरं श्रीव्यासेन विभज्यानुपदिष्टत्वाद्गुरोर्वैशम्पायनस्य अविद्यमानानि अधिगवेषयन् अधिकानि अन्विष्यन् अर्कमीश्वरमिति "एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यकेशः हिरण्यश्मश्रुः आप्रणखात् सुवर्णः" इति श्रुत्युक्ताकोन्तरात्मानं भगवन्तमित्यर्थः। सूपतस्थे सम्यक् तुष्टाव अनेन समर्थो याज्ञवल्क्यः क्रोधाभासमिषेणायातयामयजुरानयने गुरुणैव प्रवर्त्तित इति ज्ञायते अन्यथा "नारायणोऽपयाति गुरोः प्रच्युतस्य दुर्बुद्धेः। कमलं जलादपेतं संशोषयति रविर्न पोषयति" इत्यादि शास्त्रविरोधः स्यात् ॥ ६६ ॥ यो भगवान् एकः निःसमातिशयः इमां लोकयात्रामनुवहति तस्मै भगवते आदित्याय नमः इत्यन्वयः। आदित्यशब्देनात्र सूर्यमण्डलाभिमानिदेवतान्तरात्मा सर्वशक्तिः सर्वात्मा श्रीवासुदेवो गृह्यते तदेव स्फुटतया दर्शयति– यः चतुर्विधभूतनिकायानां जरायुजाण्डजस्वेदजोद्भिज्जप्राणिसमुदायानाम् ब्रह्मादिस्तम्बपर्यन्तानां किं बहुना निखिलजगतामनेककोटिब्रह्माण्डानाम् अन्तर्हृदयेषु बहिरपि च आत्मस्वरूपेण स्वासाधारणेन रूपेण आकाश इव वर्त्तमानः उपाधिना चतुर्विधभूतनिकायेन ब्रह्मादिस्तम्बपर्यन्तेन चाखिलैर्जगद्भिश्च अव्यवधीयमानः अनाच्छिद्यमानश्च इमां लोकयात्रामनुवहति निर्वहति केनानुवहतीत्यत आह–कालरूपेणेति। तदेव प्रपञ्चयति, क्षणेति। क्षणलवादिभिरवयवैरुपचितानां सम्वत्सराणां गणेन प्रत्यब्दम् अपामादानविसर्गाभ्यां जलग्रहणत्यागाभ्याम् अनेन गायत्रीप्रथमपादगतसवितृपदार्थो वर्णितः ॥ ६७ ॥ द्वितीयपादगतभर्गशब्दार्थं दर्शयन् स्तौति–यदुहेति। हे विबुधर्षभ! सूयते विश्वं यतस्तत्सम्बोधने हे सवितः! अहरहः प्रतिदिनम् अनुसवनं प्रतिसमयं त्रिकालमित्यर्थः। आम्नायविधिना वेदविधिना उपतिष्ठतां स्तुवताम् हे अखिलदुरितवृजिनबीजावभर्जन! हे सकलपापमूलविनाशक! हे तपन! उह वावेति प्रसिद्धिद्योतको निपातसमूहः "तस्य भासा सर्वमिदं विभाति" "यदादित्यगतं तेजो जगद्भासयतेऽखिलम्। यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्"। इत्यादिशास्त्रप्रसिद्धं यत् भगवतस्तव मण्डलमदस्तपति तत्समभिधीमहि सम्यगभिमुख्येन ध्यायेम ॥ ६८ ॥ तृतीयपादार्थं सर्वधिप्रेरकत्वं दर्शयन् स्तौति, य इति। यो भगवान् निजनिकेतनानाम् "अन्तः प्रविष्टः शास्ता जनानाम्' इत्येवं स्वनियम्यानां स्थिरचरनिकराणां स्थावरजङ्गमयूथानां मनआदिगणान् अनात्मनः जडान् स्वयमात्मनैवान्तर्यामी सन् प्रचोदयति ॥ ६९ ॥ तस्य सर्वोपकारकस्य कारुणिकस्य सर्वाभिवन्दितचरणं यजुःकामः शरणङ्गतोऽस्मीत्याह–य एवेत्यादिना। उपसरामीत्यनेन यो भवान् अतिकरालवदनेन अन्धकारसञ्ज्ञेन अज्ञानाख्येन अजगरग्रहेण गिलितं कवलीकृतम् अतो मृतकमिव विचेतनं निःसञ्ज्ञम् इमं लोकम् अवलोक्य उत्थाप्य "अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्" इति स्वधर्माख्ये आत्मावस्थाने परमात्मप्रवणत्वे श्रेयसि प्रवर्तयति यश्च भवान् अवनिपतिरिव असाधूनां भयमुदीरयन् अटति ॥ ७० ॥ यश्च आशापालैः दिग्रक्षकैरिन्द्रादिभिः कमलकोशाञ्जलिभिः पद्मकोशयुक्ताः तत्तुल्या वा अञ्जलयो येषां तैः उपहृतार्हणः उपहृतं समर्पित-

मर्हणं यस्य स तथा ॥ ७१ ॥ अथ अतोहतोः भगवतस्तव चरणनलिनयुगलं त्रिभुवनगुरुभिर्ब्रह्मादिभिर्वन्दितम् अयातयामयजुःकामः अन्यैर्यथावदविज्ञाततयाऽगतसाराणि यजूंषि तत्कामोऽहं उपसरामि शरणं व्रजामि ॥ ७२ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

छर्दितस्यादानं विप्ररूपेणानुचितं मत्वा तित्तिराः पक्षिविशेषा भूत्वा यजूंष्याददुर्गृहीतवन्तः। तत्र हेतुमाह—तल्लोलुपतयेति। अतएव सुपेशलाः अतिरम्याः यजुश्शाखाः तैत्तिरीया इति प्रसिद्धा आसन्। बहुवचनं त्ववान्तरभेदविवक्षया ॥ ६५ ॥ कण्वमाध्यन्दिनादिशाखाप्रसङ्गमाह—याज्ञवल्क्य इत्यादिना। हे ब्रह्मन् ततः तदनन्तरं गुरोर्वैशम्पायनस्य अविद्यमानानि अधि अधिकानि छन्दांसि गवेषयन् मृगयन् याज्ञवल्क्यः अर्कमीश्वरं सूपतस्थे तुष्टाव ॥ ६६ ॥ तत्र गायत्रीप्रथमपादार्थमनुवर्णयन् स्तौति—ओन्नम इति। यो भगवान् भवानेक एव ब्रह्मादिस्तम्बपर्यन्तानामण्डजपिण्डजोष्मजोद्भिज्जभेदेन चतुर्विधभूतनिकायानामखिलजगतामन्तर्हृदयेष्वात्मस्वरूपेण अन्तर्यामिरूपेण बहिरपि क्षणलवादयो येऽवयवास्तैरुपचिता ये संवत्सरास्तेषां गणेन कालस्वरूपेण वर्त्तमानस्तथाप्याकाश इव देहाद्युपाधिना अव्यवधीयमानः अनाच्छाद्यमानः। रश्मिभिरपामादानं शोषणं विसर्गश्च वृष्टिस्ताभ्यामिमां दृश्यमानां लोकयात्रां वृत्तिमनुवहति तस्मै तुभ्यं भगवते आदित्याय नम इत्यन्वयः ॥ ६७ ॥ गायत्रीद्वितीयपादार्थमनुवर्णयन् स्तौति—यदुहेति। प्रसिद्धिद्योतको निपातसमुदायः। ध्येयत्वं सूचयन्बहुधा सम्बोधयति—हे विबुधर्षभ हे सवितः हे अहरहः प्रतिदिनमनुसवनं त्रिसन्ध्यमाम्नायविधिना वैदिकमार्गेण उपतिष्ठमानानां स्तुतिनमस्कारादिना भजतां जनानां यान्यखिलानि दुरितानि पापानि तत्फलानि वृजिनानि दुःखानि बीजं पापकारणमज्ञानं च तेषामवभञ्जन विनाशक हे तपन। यददो भगवतस्तव मण्डलं तपति तत्समभिधीमहि सम्यगाभिमुख्येन ध्यायेमेत्यन्वयः ॥ ६८ ॥ अथ गायत्रीतृतीयपादार्थं वर्णयन् स्तौति—य इहेति। इह लोके यो भवान् स्थिरचरनिकराणां स्थावरजङ्गमसमूहानां निजनिकेतनानां स्वशरीरभूतानां जीवानामनात्मनो जगत् मनइन्द्रियप्राणगणान् स्वयमात्मैवान्तर्यामी सन्प्रचोदयति प्रवर्त्तयति ॥ ६९ ॥ तृतीयपादमेव मण्डलस्य परतया व्याचक्षाणः स्तौति—य एवेति। य एव परमकारुणिको भवान् अतिकरालवदनो योऽन्धकारसञ्ज्ञोऽजगरग्रहग्रस्तेन गिलितमतएव मृतकमिव विचेतनं निस्सञ्ज्ञमिमं लोकमवलोक्य निजानुकम्पया ईक्षया दृष्टचैव उत्थाप्याहरहरनुसवनं त्रिसन्ध्यं स्वधर्माख्यं यदात्मनः परमात्मनः अवस्थानमुपासनं तस्मिन् प्रवर्त्तयति। यश्च तत्र तत्र स्वस्थाने आशापालैर्दिक्पालैः इन्द्रवरुणादिभिः कमलकोशायुक्तैस्तत्तुल्यैर्वाञ्जलिभिरुपहृतार्हणः दत्तार्घः अवनिपतिरिवासाधूनां दुराचाराणां मरणनरकादिभयमुदीरयन्नुत्पादयन् परितोऽटति ॥ ७० ॥ यत एवम्भूतस्त्वमथातएव हे भगवन् तस्य तव त्रिभुवनगुरुभिरिन्द्रादिभिर्वन्दितं चरणनलिनयुगलमयातयामानि विस्मरणादिदोषरहितानि अन्येष्वविद्यमानानि यानि यजूंषि तत्कामोहमुपसरामि भजामीति चतुर्णामन्वयः। हेति सन्देहवारणार्थः इतिशब्दः स्तुतिसमाप्तिद्योतकः ॥ ७१ ॥ एवं स्तुतः प्रसादितः। स भगवान् रविः ॥ ७२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

छर्दितानामादानं विप्ररूपेणानुचितमिति मन्वानास्ते यच्चक्रुस्तदाह। यजूंषीति। ते मुनय इति शेषः। तल्लोलुपतया याज्ञवल्क्यछर्दितयजुर्गणोपादानलोलुपताहेतुना तित्तिरीभूत्वा, कचित्तु तित्तिरा भूत्वा इत्यपि पाठः। यजूंषि याज्ञवल्क्यछर्दितयजुर्मन्त्रान्, आददुरगृह्णन्। अतः सुपेशलाः अतिरम्याः, तैत्तिरीयाः इति प्रसिद्धाः यजुःशाखाः आसन्। बहुवचनमवान्तरभेदविवक्षया॥६५॥ काण्वमाध्यंदिनादिशाखाप्रसङ्गमाह। याज्ञवल्क्य इति। हे ब्रह्मन्, ततः याज्ञवल्क्यः गुरोः वैशंपायनस्य अविद्यमानानि व्यासेन विभज्यानुक्तत्वादविद्यमानानि अधिकानीत्यर्थः। केचित्तु अनधीतानीत्यपि पठन्ति। छन्दांसि अधिगवेषयन् सन्, ईश्वरं अर्कं सूर्यं, सूपतस्थे। मण्डलान्तर्वर्त्तिनमीश्वरं सुष्ठु तुष्टावेत्यर्थः। सूर्यस्य ऋगादिकाशून्यत्वे श्रुतिः। 'ऋग्भिः पूर्वाह्णे दिवि देव ईयते यजुर्वेदेन तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः' इति ॥ ६६ ॥ स्तुतिमेवाह ॐ नम इत्यादिना। ओमिति। यो भगवान् एकः एव, चतुर्विधभूतनिकायानां देवमनुष्यपशुपादपभेदेन जरायुजाण्डजस्वेदजोद्भिज्जरूपेण वा चतुर्विधानां भूतसमुदायानां, किं बहुना ब्रह्मादिस्तम्बपर्यन्तानां च अखिलजगतां अन्तर्हृदयेषु हृदयमध्यप्रदेशे इत्यर्थः। आत्मस्वरूपेण वर्त्तमानः सन्नपि, आकाशः इव आकाशवदित्यर्थः। व्याप्यापीति शेषः। उपाधिना अव्यवधीयमानोऽनाच्छाद्यमानः व्याप्यगतदोषास्पृष्ट इत्यर्थः। एवमखिलजगदात्मत्वेन प्रपञ्चयित्वा कालरूपतां प्रपञ्चयति। उक्तविधाखिलजगतां बहिरपि, क्षणश्च लवश्च निमेषश्च ते येऽवयवास्तैरुपचिता ये संवत्सरास्तेषां गणेन संवत्सरगणरूपेणेत्यर्थः। कालस्वरूपेण च अपां जलानां आदानविसर्गाभ्यां तोयानां शोषणवर्षणाभ्यामित्यर्थः। इमां लोकयात्रां लोकवृत्तिं अनुवहति निर्वहति, तस्मै भगवते आदित्याय तुभ्यं ॐ नमः। अनेन गायत्रीप्रथमपादोक्तवरेण्यताऽनुवर्णिता, अखिलजगदात्मस्वरूपेणेत्यनेनान्तः प्रविश्य प्रेरकत्वरूपो गायत्रीप्रथमपादस्थसवितृशब्दार्थश्चाप्युक्तः ॥ ६७ ॥ अथ द्वितीयपादस्थभर्गशब्दार्थवर्णनेन स्तौति। उ ह वा वेतिवक्ष्यमाणार्थप्रसिद्धिद्योतको निपात-

समुदायः। हे विबुधर्षभ हे सवितः हे तपन अहः अहः प्रतिदिनं, अनुसवनं त्रिसंध्यं, आम्नायविधिना वैदिकमार्गेण, उपतिष्ठमानानां स्तुवतां जनानां यानि अखिलानि दुरितानि पापानि वृजिनानि तन्मूलानि दुःखानि च तान्येव बीजानि तेषामवभर्जनं यत् भगवतः तव अदः मण्डलं तपति। तत् समभिधीमहि सम्यगाभिमुख्येन ध्यायेम। केचित्तु अखिलदुरितवृजिनबीजावभर्जनेति संबोधनं पठन्ति। अत्र मण्डलशब्देन गायत्रीद्वितीयपादगतो भर्गशब्दार्थ उक्तः॥ ६८॥ अथ तृतीयपादार्थरूपं यत् सर्वधीप्रचोदयितृत्वं तत्कथनेन स्तौति। य उ ह वा वेति। उ ह वा वेति निपातसमुदायार्थः पूर्ववत्। यो भवान् निजनिकेतनानां स्वशरीरभूतानां स्थिरचरनिकराणां स्थावरजंगमसमूहानां, मनइन्द्रियासुगणान् मनइन्द्रियप्राणगणान्, आत्मनः जीवांश्च, स्वयं आत्मा धारकः अन्तर्यामी च सन्, प्रचोदयति प्रवर्त्तयति, अनात्मन इति पाठे अनात्मनो जडान् जीवानां मनआदीन् स्वयमात्मान्तर्यामी च सन् प्रचोदयतीत्यर्थः॥ ६९॥ चतुर्विधपुरुषार्थप्रदत्वमाविष्कुर्वन् स्वाभिप्रेतं निवेदयति। य एवेममिति। यः भवान् एव अतिकरालमतिभयंकरं वदनं यस्य तथाभूतो योऽन्धकारसंज्ञोऽजगरग्रहस्तेन गिलितं अत एव मृतकमिव शववत् विचेतनमचेतनं निःसंज्ञमित्यर्थः। इमं लोकं अवलोक्य, अनुकम्पयाऽनितरसाधारणदयोपेतया ईक्षया दृष्ट्या, हे परमकारुणिक, उत्थाप्य अहः अहः प्रतिदिनं, अनुसवनं त्रिसंध्यं स्वधर्माख्यं स्वाराधनधर्माख्यं यदात्मावस्थानं चित्तसमाधानं तस्मिंस्तद्रूपे श्रेयसि प्रवर्त्तयति। यश्च भवान् अवनिपतिरिव क्वचित्तु इवशब्दवर्जमनिमिषाधिपतिरित्यत्र पाठो दृश्यते। असाधूनां दुष्टानां भयं उदीरयन् उत्थापयन्, परितः आशापालैर्दिक्पालैः कर्त्तृभिः, तत्र तत्र कमलकोशाञ्जलिभिः कमलकोशाकारैरञ्जलिभिः करणैः उपहृतं समर्पितमर्हणं यस्य तथाभूतः संश्च अटति। केचित्त्वटतीत्यन्तं गद्यं संपाद्य परित इत्यादिकं पृथक् गद्यं पठन्ति, अटतीति पूर्वेणान्वय इत्येतट्टीकान्ते च वदन्ति॥ ७०॥ अथ हेति। यतस्त्वमेवंभूतः अथातः, ह स्फुटमेव हे भगवन् त्रिभुवनगुरुभिर्ब्रह्मादिभिः वन्दितं, तवोक्तविधस्य भवतः, चरणनलिनयुगलं पादपद्मयुग्मं, अहं अयातयामयजुष्कामः अयातयामान्यन्यैर्यथावदविज्ञातानि अगतसाराणि वा यजूंषि कामयमान इत्यर्थः। उपसरामि भजामि इत्युपतस्थे इति पूर्वेणान्वयः॥ ७१॥ एवमिति। एवं स्तुतः प्रसादितश्च, हरिरादित्यशरीरकः भगवान्, वाजिरूपधरः अश्वरूपधरः सन्, मुनये याज्ञवल्क्याय अयातयामानि यजूंषि अदात् समुपदिदेश॥ ७२॥

## हिन्दी अनुवाद

शौनकजी! अब याज्ञवल्क्यने सोचा कि मैं ऐसी श्रुतियाँ प्राप्त करूँ, जो मेरे गुरुजी के पास भी न हों। इसके लिये वे सूर्यभगवान् का उपस्थान करने लगे॥ ६६॥ याज्ञवल्क्यजी इस प्रकार उपस्थान करते हैं—मैं ॐकारस्वरूप भगवान् सूर्य को नमस्कार करता हूँ। आप सम्पूर्ण जगत् के आत्मा और कालस्वरूप हैं। ब्रह्मा से लेकर तृणपर्यन्त जितने भी जरायुज, अण्डज, स्वेदज और उद्भिज्ज—चार प्रकार के प्राणी हैं, उन सबके हृदयदेश में और बाहर आकाश के समान व्याप्त रहकर भी आप उपाधि के धर्मों से असङ्ग रहनेवाले अद्वितीय भगवान् ही हैं। आप ही क्षण, लव, निमेष आदि अवयवों से सङ्घटित संवत्सरों के द्वारा एवं जल के आकर्षण-विकर्षण—आदान-प्रदान के द्वारा समस्त लोकों की जीवनयात्रा चलाते हैं॥ ६७॥ प्रभो! आप समस्त देवताओं में श्रेष्ठ हैं। जो लोग प्रतिदिन तीनों समय वेद-विधि से आप की उपासना करते हैं, उनके सारे पाप और दुःखों के बीजों को आप भस्म कर देते हैं। सूर्यदेव! आप सारी सृष्टि के मूल कारण एवं समस्त ऐश्वर्यों के स्वामी हैं। इसलिये हम आप के इस तेजोमय मण्डल का पूरी एकाग्रता के साथ ध्यान करते हैं॥६८॥ आप सबके आत्मा और अन्तर्यामी हैं। जगत् में जितने चराचर प्राणी हैं, सब आप के ही आश्रित हैं। आप ही उनके अचेतन मन, इन्द्रिय और प्राणों के प्रेरक हैं॥ ६९॥ यह लोक प्रतिदिन अन्धकाररूप अजगर के विकराल मुँह में पड़कर अचेत और मुर्दा-सा हो जाता है। आप परम करुणास्वरूप हैं, इसलिये कृपा करके अपनी दृष्टिमात्र से ही इसे सचेत कर देते हैं और परम कल्याण के साधन समय समय के धर्मानुष्ठानों में लगाकर आत्माभिमुख करते हैं। जैसे राजा दुष्टों को भयभीत करता हुआ अपने राज्य में विचरण करता है, वैसे ही आप चोर-जार आदि दुष्टों को भयभीत करते हुए विचरते रहते हैं॥ ७०॥ चारों ओर सभी दिक्पाल स्थान-स्थान पर अपनी कमल की कली के समान अञ्जलियों से आप को उपहार समर्पित करते हैं॥७१॥ भगवन्! आप के दोनों चरणकमल तीनों लोकों के गुरु-सदृश महानुभावों से वन्दित हैं। मैंने आप के युगल चरणकमलों की इसलिये शरण ली है कि मुझे ऐसे यजुर्वेद की प्राप्ति हो, जो अब तक किसी को न मिला हो॥ ७२॥

सूत उवाच

एवं स्तुतः स भगवान् वाजिरूपधरो रवि¹ः । यजूंष्ययातयामानि मुनयेऽदात् प्रसादितः ॥ ७३ ॥
यजुर्भिरकरोच्छाखा दशपञ्च शतैर्² भुः । जगृहुर्वाजसन्यस्ताः काण्वमाध्यन्दिनादयः ॥ ७४ ॥
जैमिनेः सामगस्यासीत् सुमन्तुस्तनयो मुनि³ः । सुन्वांस्तु तत्सुतस्ताभ्यामेकैकां प्राह संहिताम् ॥ ७५ ॥
सुकर्मा चापि तच्छिष्यः सामवेदतरोर्महान् । सहस्रसंहिताभेदं चक्रे साम्नां ततो द्विजः ॥ ७६ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—एवं स्तुतः सः भगवान् वाजिरूपधरः रविः प्रसादितः सन् अयातयामानि यजूंसि मुनये अदात् ॥ ७३ ॥ प्रभुः शतैः यजुर्भिः दशपञ्च शाखाः अकरोत् वाजसन्यस्ताः ( शाखाः ) काण्वमाध्यन्दिनादयः जगृहुः ॥ ७४ ॥ सामगस्य जैमिनेः सुमन्तुः मुनिः तनयः आसीत् तत्सुतः सुतन्वान् ताभ्याम् एकैकां संहितां प्राह ॥ ७५ ॥ द्विजः सुकर्मा तच्छिष्यः महान् ततः साम्नां सहस्रसंहिताभेदं चक्रे ॥ ७६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एवं स्तुतः प्रसादितश्च ॥ ७३ ॥ पंचदशशाखाः याः शतैरपरिमितैर्यजुर्भिरकरोत् । स तैरिति पाठे स एष याज्ञवल्क्यस्तैर्यजुर्भिरकरोदिति । जगृहुरधीतवंतः । रविणाऽश्वरूपेण वाजेभ्यः केसरेभ्यो वाजेन वेगेन वा संन्यस्तास्त्यक्ताः शाखा वाजसनीसंज्ञास्ता शाखा इति वा ॥ ७४ ॥ सामशाखाविभागमाह । जैमिनेरिति तत्सुतः सुमंतसुतः । ताभ्यां पुत्रपौत्राभ्यां क्रमेणैकैकां प्राह । तच्छिष्यो जैमिनेः शिष्यः । महानतिमेधावी । सहस्रसंहितारूपं भेदं चक्रे । साम्नां तं संहिताभेदम् । ततस्तदनंतरम् । सुकर्मणः शिष्यः एकः कौशल्यो हिरण्यनाभः पौष्यंजिर्नामैकस्तौ जगृहतुः । आवंत्यश्चान्यस्तस्यैव शिष्यः सोऽपि जग्राह ॥ ७६–७७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

वाजी तुरंगस्तद्रूपधरो हरिः सूर्यः 'हरिरिंद्रो हरिर्भानुर्हरिर्विष्णुर्हरिर्मरुत्' इत्यभिधानात् ॥ ७३ ॥ अननुस्वारसकारे तु प्रथमा द्वितीयार्थे ॥ ७४–७६ ॥

### अन्वितार्थप्रकाशिका

यजुर्भिरिति । विभुर्याज्ञवल्क्यः शतैरपरिमितैर्यजुर्भिर्दश पञ्च च शाखा अकरोत् । स तैरिति पाठे स विभुस्तैः सूर्यदत्तैर्यजुर्भिरित्यर्थः । रविणाऽश्वरूपेण वाजेभ्यः केसरेभ्यः वाजेन वेगेन संन्यस्तास्त्यक्ताः शाखाः । यद्वा । वाजेभ्यः सम्यङ् नयन्तीति वाजसनीसंज्ञाः ताः शाखाः काण्वादयो जगृहुः अधीतवन्तः ॥ ७३ ॥ सामशाखाविभागमाह—जैमिनेरिति । सामगस्य जैमिनेः सुमन्तुर्नाम मुनिस्तनय आस । तत्सुतः सुमन्तुसुतः सुतन्वान् नाम आस । जैमिनिः स्ववेदं द्वेधा विभज्य ताभ्यां पुत्रपौत्राभ्यामेकैकां संहितां प्राह स्म ॥ ७४ ॥ सुकर्मेति । हे द्विजाः । द्विज इति पाठे सुकर्मविशेषणम् । सुकर्मा चापि तच्छिष्यः जैमिनिशिष्यः स च महान् महाबुद्धिमान् अतस्ततस्तस्मात् सामवेदतरोः सकाशात् साम्नां सहस्रं संहिताभेदं चक्रे । यद्वा । सामवेदतरोः सामवेदतरुसंबन्धी तच्छिष्यो महान् अन्येभ्य उत्कृष्टोऽभूत् ॥ ७५ ॥ हिरण्येति । कौशल्यः कोशलदेशोद्भवः हिरण्यनाभः पौष्यञ्जिश्च एतौ द्वौ सुकर्मणः शिष्यौ तं संहिताभेदं जगृहतुः । तथाऽन्योऽपि ब्रह्मवित्तमः आवन्त्यो नाम तस्यैव शिष्यः सोऽपि तं जग्राह ॥ ७६ ॥

### श्रीमद्वीरराघवव्याख्या

एवमिति स्तुतः प्रसादितश्च हरिरादित्यशरीरकः भगवान् वाजिरूपधरो मुनये याज्ञवल्क्यायाऽदात् उपदिदेश ॥ ७३ ॥ यजुर्भिरिति विभुर्याज्ञवल्क्यः शतैरपरिमितैर्यजुर्भिर्दशपञ्चपञ्चदश शाखा अकरोत् स तैरिति पाठे तु स विभुस्तैर्वाजिरूपेण हरिणा दत्तैर्यजुर्भिरकरोत्ततो वाजिना संन्यस्ताः सम्यग्याज्ञवल्क्ये निहिताः शाखास्ततस्ता काण्वा माध्यन्दिनाश्च जगृहुरधीतवन्तः ॥ ७४ ॥ जैमिनेः साम्नां विभागमाह—जैमिनेरिति । सामगस्य जैमिनेर्मुनेस्तनयः सुमन्तुर्नामासीत्तत्सुतः सुमन्तुसुतः सुतन्वांस्ताभ्यां तत्पुत्रपौत्राभ्यां चतुर्थ्यन्तमिदं द्वेधा विभज्यैकैकां प्राहेत्यर्थः ॥ ७५ ॥ तस्य जैमिनेः शिष्य महान् माहात्म्ययुक्तः सुकर्मा नाम सामवेद एवं तरुस्तस्मात्साम्नां सहस्रं संहितानां शाखानां भेदं चक्रे हे द्विज ॥ ७६ ॥

१. हरिः । २. विभुः । ३. नें ।

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वाजिरूपधरः अश्वरूपधरः अयातयामानि अगतसाराणि वीर्यवन्तीत्यर्थः ॥ ७३ ॥ वाजसनः सूर्यस्तत आगताः शाखा वाजसन्यः ताः शाखाः काण्वादयो माध्यन्दिनादयश्च ॥ ७४ ॥ साम गायतीति सामगः तस्य जैमिनेस्तनयः सुमन्तुर्नाम तस्य सुमन्तोः सुतः सुमन्वान्नाम ताभ्यां सुमन्तुसुमन्वाभ्यां पुत्रपौत्राभ्यां क्रमेणैकामेकां प्राह ॥ ७५ ॥ सुकर्मापि तस्य जैमिनेः शिष्यः महानतिप्रज्ञावान् सामवेदाख्यतरोः साम्नां सहस्रं संहितारूपं भेदं चक्रे ॥ ७६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

वाजसन्यस्ता इत्यत्र प्रथमे व्याख्याने 'वा पदान्तस्य' स्वारस्य नकारः व्याख्यान्तरे 'अनचि च' इति द्वित्वम् ॥७४-८०॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे षष्ठोऽध्यायः ॥ ६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पञ्चदश शाखाः शतैरपरिमितैर्यजुर्भिरकरोदिति स तैरिति दन्त्य पाठे स विभुर्याज्ञवल्क्यस्तैर्यजुर्भिरकरोत् वाजेभ्यः सूर्याश्वकेशरेभ्यः सम्यक् नयन्तीति वाजसन्यः शाखास्ताः काण्वादयो मुनयो जगृहुरधीतवन्तः ॥ ७४ ॥ सामवेदशाखाविभागमाह—जैमिनेरिति। तत्सुतः सुमन्तुसुतः जैमिनिस्ताभ्यां पुत्रपौत्राभ्यां क्रमेणैकैकां प्राह ॥ ७५ ॥ तच्छिष्यः जैमिनेः शिष्यः सामवेदतरोः सामवेदतरुसम्बन्धी तच्छिष्यो महानभूदित्यर्थः। अत एव साम्नामेव संहिताभेदं चक्रे हिरण्यनाभः कौशल्यः कोशलदेशोद्भवः पौष्पञ्जिश्च सुकर्मणः शिष्यो अन्य आवन्त्यश्च तच्छिष्यः सोऽपि जग्राह ॥ ७६–७७ ॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

स प्रपञ्चितप्रभावो रविः एवं स्तुतः प्रसादितश्च वाजिरूपधरोऽश्वरूपधरः मुनये याज्ञवल्क्याय यजूंषि अदादुपदिष्टवान् ॥ वाजिरूपिणा वाजेभ्यः संन्यस्ताः याज्ञवल्क्ये गूढतया सम्यग्ग्राहिताः विभुः पूर्णज्ञानः याज्ञवल्क्योऽपि प्रकटतया शतैर्बहुभिर्यजुर्भिः दशपञ्च पञ्चदश शाखा अकरोत्। जगृहुः अधीतवन्तः ॥ ७४ ॥ सामवेदशाखाविभागमाह—जैमिनेरित्यादिना। तत्सुतः सुमन्तसुतः ताभ्यां पुत्रपौत्राभ्याम् ॥ ७५ ॥ तच्छिष्यः जैमिनेः शिष्यः सुकर्मा सामवेदतरोः सहस्रं संहितारूपं भेदं चक्रे हे द्विजाः! ततो हेतोः साम्नां महान् विस्तर इति शेषः ॥ ७६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

विभुः दुर्लभयजुर्लाभेन समर्थः। याज्ञवल्क्यः शतैरपरिमितैर्यजुर्भिर्दशपञ्चशाखा अकरोत्। स तैरिति पाठे स विभुः तैः सूर्यदत्तैर्यजुर्भिरित्यर्थः। वाजसनीसंज्ञाः ताः शाखाः काण्वादयो जगृहुः अधीतवन्तः ॥ ७३ ॥ सामशाखाविभागमाह—जैमिनेरिति। तत्सुतः सुमन्तुसुतः सुतन्वान् स्ववेदं द्वेधा विभज्य ताभ्यां पुत्रपौत्राभ्यामेकैकां संहितां जैमिनिः प्राह ॥ ७४ ॥ सुकर्मा चापि तच्छिष्यः जैमिनिशिष्यः। स च महान् महाबुद्धिमान्। अतस्ततस्तस्मात् सामधेदतरोः सकाशात् साम्नां सहस्रं संहिताभेदं चक्रे हे द्विजाः ॥ ७५ ॥ कोशल्यो हिरण्यनाभः पौष्यञ्जिश्च एतौ द्वौ सुकर्मणः शिष्यौ तं संहिताभेदं जगृहतुः। तथाऽन्योऽपि ब्रह्मवित्तमः आवन्त्यो नाम तस्यैव शिष्यः सोऽपि तं जग्राह ॥ ७६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

यजुर्भिरिति। विभुर्याज्ञवल्क्यः, शतैरपरिमितैः यजुर्भिः, दश पञ्च, पञ्चदशेत्यर्थः। शाखाः अकरोत्, स तैरिति पाठे, विभुः सः तैर्वाजिरूपेण हरिणा दत्तैः यजुर्भिः शाखाः अकरोत्, ततः वाजिसंन्यस्ताः वाजिरूपधरेण रविणा याज्ञवल्क्ये सम्यक् निहिताः शाखाः, काण्वश्च माध्यंदिनश्च तावादी येषां ते, जगृहुरधीतवन्तः। वाजसंन्यस्ता इति पाठे, अश्वरूपेण रविणा वाजेभ्यः केसरेभ्यः वाजेन वेगेन वा संन्यस्ताः दत्ताः शाखाः वाजसनीसंज्ञास्ताः शाखा इति वा ॥ ७३ ॥ साम्नां शाखाविभागमाह। जैमिनेरिति। सामगस्य जैमिनेः सुमन्तुर्नाम मुनिः तनयः, आसीत्। तत्सुतः सुमन्तुसुतः सुतन्वान्, सुन्वांस्त्विति पाठे, तत्सुतः सुमन्तुसुतः सुन्वान् आसीत्। विष्णुपुराणे त्वस्य सुकर्मेति नामाभिहितमस्ति। जैमिनिरिति शेषः। ताभ्या पुत्रपौत्राभ्यां चतुर्थ्यन्त-मिदम्। एकैकां संहितां प्राह। स्वयं जैमिनिः, द्वेधा विभज्य एकां पुत्रायान्यां च पौत्राय प्राहेत्यर्थः ॥ ७४ ॥ सुकर्मेति। हे द्विजाः, तच्छिष्यस्तस्य जैमिनेरेव शिष्यः, महानतिमेधावी माहात्म्ययुक्त इति वा। सुकर्मा चापि सुकर्मसंज्ञोऽपि, सामवेद एव तरुस्तस्मात् साम्नां सहस्रं जैमिनेः सकाशादपरिमितानि सामानीत्यर्थः। अधीत्येति शेषः। ततः संहिताभेदं चक्रे ॥ ७५ ॥ हिरण्यनाभ इति।

कौशल्यः कोशलपुत्रः हिरण्यनाभः, पौष्यञ्जिश्च एतौ द्वावपि सुकर्मणः शिष्यौ जगृहतुः। संहिताभेदमिति शेषः। ब्रह्मवित्तमः आवन्त्यः आवन्त्यनामाऽन्योऽपि तच्छिष्यः, सोऽपि जगृहे इति शेषः॥ ७६॥

## हिन्दी अनुवाद

सूतजी कहते हैं—शौनकादि ऋषियों! जब याज्ञवल्क्य मुनि ने भगवान् सूर्य की इस प्रकार स्तुति की, तब वे प्रसन्न होकर उनके सामने अश्वरूप से प्रकट हुए और उन्हें यजुर्वेद के उन मन्त्रों का उपदेश किया, जो अबतक किसी को प्राप्त न हुए थे॥ ७३॥ इसके बाद याज्ञवल्क्य मुनि ने यजुर्वेद के असंख्य मन्त्रों से उसकी पंद्रह शाखाओं की रचना की। वही वाजसनेय शाखा के नाम से प्रसिद्ध हैं। उन्हें कण्व, माध्यन्दिन आदि ऋषियों ने ग्रहण किया॥ ७४॥ यह बात मैं पहले ही कह चुका हूँ कि महर्षि श्रीकृष्णद्वैपायन ने जैमिनि मुनि को सामसंहिता का अध्ययन कराया। उनके पुत्र थे सुमन्तु मुनि और पौत्र थे सुन्वान्। जैमिनि मुनि ने अपने पुत्र और पौत्र को एक-एक संहिता पढ़ायी॥ ७५॥ जैमिनि मुनि के एक शिष्य का नाम था सुकर्मा। वह एक महान् पुरुष था। जैसे एक वृक्ष में बहुत-सी डालियाँ होती हैं, वैसे ही सुकर्मा ने सामवेद की एक हजार संहिताएँ बना दीं॥ ७६॥

हिरण्यनाभः कौसल्यः पौष्यञ्जिश्च सुकर्मणः। शिष्यौ जगृहतुश्चान्य आवन्त्यो ब्रह्मवित्तमः॥ ७७॥
उदीच्याः सामगाः शिष्या आसन् पञ्चशतानि वै। पौष्यञ्ज्यावन्त्ययोश्चापि तांश्च प्राच्यान् प्रचक्षते॥ ७८॥
लौगाक्षिर्माङ्गलिः कुल्यः कुसीदः कुक्षिरेव च। पौष्यञ्जिशिष्या जगृहुः संहितास्ते शतं शतम्॥ ७९॥
कृतो हिरण्यनाभस्य चतुर्विंशतिसंहिताः। शिष्य ऊचे स्वशिष्येभ्यः शेषा आवन्त्य आत्मवान्॥ ८०॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे वेदशाखाप्रणयनं नाम षष्ठोऽध्यायः॥ ६॥

## कृष्णप्रिया व्याख्या

अन्वयः—कौसल्यः हिरण्यनाभः पौष्यञ्जिः च सुकर्मणः शिष्यौ जगृहतुः अन्यः ब्रह्मवित्तमः आवन्त्यः (जग्राह)॥ पौष्यञ्ज्यावन्त्ययोः च अपि पञ्चशतानि शिष्याः उदीच्याः सामगाः आसन् तान् प्राच्यान् प्रचक्षते॥ ७८॥ लौगाक्षिः माङ्गलिः कुल्यः कुसीदः कुक्षिः पौष्यञ्जिशिष्याः शतं शतं संहिताः जगृहुः॥ ७९॥ हिरण्यनाभस्य कृतः शिष्यः चतुर्विंशतिसंहिताः स्वशिष्येभ्यः ऊचे शेषाः आत्मवान् आवन्त्यः (स्वशिष्येभ्यः ऊचे)॥ ८०॥

इति द्वादशस्कन्धे षष्ठोऽध्यायः॥ ६॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

पौष्यंज्यावंत्ययोरपि चकाराद्धिरण्यनाभस्यापि पंचशतानि शिष्या आसन्। ते तावतीः शाखा यथायथं जगृहुः। तानुदीच्यान्सतः कालतः कांश्चित्प्राच्यांश्च प्रचक्षत इत्यर्थः। यथैवोक्तं वैष्णवे। "उदीच्यसामगाः शिष्यास्तस्य पंचशतं स्मृताः। हिरण्यनाभात्तावत्यः संहिता यैर्द्विजोत्तमैः। गृहीतास्तेऽपि चोच्यंते पंडितैः प्राच्यसामगाः" इति॥ ७८॥ पुनरप्येतेषां त्रयाणां सुकर्मणः शिष्याणां शिष्यांतरैः शाखाबाहुल्यं दर्शयति। लौगाक्षिरिति द्वाभ्याम्॥ ७९॥ कृतो नाम हिरण्यनाभस्य शिष्यः स्वशिष्येभ्य ऊचे। शेषा अन्या अपि याः प्रसिद्धाः शाखास्ता आवन्त्यः स्वशिष्येभ्य ऊच इति॥ ८०॥

इति श्रीमद्भागवते म० द्वादशस्कंधे भावार्थदीपिकायां टीकायां षष्ठोऽध्यायः॥ ६॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

कौशल्यः कोशलावासी। आवंत्योऽवंतीभवः॥ ७७॥ इत्यर्थ इति—वक्ष्यमाणवैष्णववाक्यप्रामाण्यादिति भावः। तदेवाह—यथैवोक्तमिति। तस्य हिरण्यनाभस्य। तावंत्यः पंचशतसंख्याकाः॥ ७८॥ 'शतमृतम्' इति पाठे ऋतं सत्यम्, स्वतः प्रमाणमित्यर्थः॥ ७९॥ आत्मवान् ज्ञानी॥ ८०॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे षष्ठोऽध्यायः॥ ६॥

१. लौकाक्षिर्लाङ्ग०। २ः ता द्विशतं।

### अन्वितार्थप्रकाशिका

उदीच्या इति। पौष्यञ्ज्यावन्त्ययोश्चकारात् हिरण्यनाभस्यापि पञ्चशतानि शिष्या आसन्। ते तावतीः शाखा यथायथं जगृहुः। तानुदीच्यान् सतः कांश्चित्प्राच्यांश्च प्रचक्षत इत्यर्थः। यथोक्तं वैष्णवे। "उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः। हिरण्यनाभात्तावत्यः संहिता यैर्द्विजोत्तमैः। गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः।" इति। यद्वा हिरण्यनाभस्य पञ्च शतानि शिष्या उदीच्या आसन्। पौष्यञ्ज्यावन्त्ययोरपि तावन्त एव शिष्याः तांस्तु प्राच्यान् प्राच्यसामगान् प्रचक्षते। ते च तावतीः शाखा जगृहुः ॥७७॥ लौगाक्षिरिति। लौगाक्ष्यादयः अन्येऽपि पञ्च पौष्यञ्जिशिष्याः आसन्। ते च शतं शतं संहिता जगृहुः॥ ७८॥ कृत इति। कृतसंज्ञकोऽन्योऽपि हिरण्यनाभस्य शिष्यः चतुर्विंशतिसंहिताः स्वशिष्येभ्य ऊचे। शेषाः अन्याः अपि याः प्रसिद्धाः शाखास्ता आत्मवान् आवन्त्यः स्वशिष्येभ्य ऊचे॥ ७९॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् गङ्गासहायो षष्ठेऽस्मिन् द्वादशस्य व्यधादिमाम्।
इति श्रीमद्भागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायां षष्ठोऽध्यायः॥ ६॥

### श्रीमद्वीरराघवव्याख्या

हिरण्यनाभ इति कौसल्य इति हिरण्यनामविशेषणं पौष्यिञ्जो नामैकः तौ सुकर्मणः शिष्यौ जगृहतुः, तथा आवस्त्यश्चान्यस्तस्यैव शिष्यः सच ब्रह्मवित्तमः सोऽपि जग्राहेत्यर्थः॥ ७७॥ उदीच्या इति पौष्यिञ्जावन्त्ययोश्चापि अपि शब्दाद्धिरण्यनाभस्यापि पञ्चशतानि शिष्या आसन् तांश्चोदीच्यान् सतः कांश्चित् प्राच्यांश्च प्रचक्षत इत्यर्थः यथोक्तं वैष्णवे—

"उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः। हिरण्थनाभश्चावन्त्यः संहिता यैर्द्विजोत्तमैः॥
गृहीतास्तेपि चोच्यन्ते पण्डितैः प्राच्यसामगाः"। इति॥ ७८॥

पुनरप्येतेषां त्रयाणां सुकर्मणः शिष्यान्तरैः शाखाबाहुल्यं दर्शयति–लोकाक्षिरिति द्वाभ्याम्। लोगाक्ष्यादयश्चत्वारः पौष्यिञ्जशिष्याः शतं शतं संहिता जगृहुरित्यर्थः॥ ७९॥ कृतो नाम हिरण्यनामस्य शिष्यः स च स्वशिष्येभ्यश्चतुर्विंशतिसंहिता ऊचे शेषा अन्या अपि याः प्रसिद्धाः शाखास्ता आवन्त्यः स्वशिष्येभ्यः ऊचे॥ ८०॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाँ षष्ठोऽध्यायः॥ ६॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

कौसल्यः कोसलपुत्रः हिरण्यनाभश्च पौष्यञ्जिश्च सुकर्मणः शिष्यौ जगृहतुः सामशाखामितिशेषः। अन्य आवन्त्य उदीच्यश्च सामशाखां जगृहतुरिति शेषः। पौष्यञ्ज्यावन्त्ययोश्चाऽपि सामगाः पञ्चशतानि शिष्या आसन्॥ ७७–७८॥ तेषां समुदितानां मतानां नामानीति पौष्यञ्जिशिष्या लौगाक्ष्यादयः नाम्ना शतं शतं संहिता जगृहुः॥ ७९॥ हिरण्यनाभस्य शिष्यः नाम्ना कृतः चतुर्विंशतिसंहिताः स्वशिष्येभ्य ऊचे शेषा अन्याः संहिता आत्मज्ञानवानावन्त्यः स्वशिष्येभ्य ऊचे॥ ८०॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां षष्ठोऽध्यायः॥ ६॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तत्र हिरण्यनाभस्य पञ्चशतानि शिष्या उदीच्या आसन् पौष्यञ्ज्यावन्त्ययोरपि तावन्त एव शिष्यास्तांस्तु प्राच्यान् प्राच्यसामगान् ते च ते च तावतीः शाखा जगृहुः॥७८–७९॥ पुनरपि पौष्यञ्जिशिष्या लोगाक्ष्यादयः पञ्च पुनरपि हिरण्यनाभस्य शिष्यः कृतः शेषा अन्या अपि या शाखा प्रसिद्धास्ता अवन्त्यः स्वशिष्येभ्य ऊचे॥ ८०॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। षष्ठोऽध्यायो द्वादशस्य सङ्गतः सङ्गतः सताम्॥ ६॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

तमेव महान्तं विस्तरं दर्शयति—हिरण्यनाभ इत्यादिना। सुकर्मणः हिरण्यनाभः पौष्यञ्जिश्चेति द्वौ शिष्यौ कौशल्य इति हिरण्यनाभविशेषणं तौ जगृहतुः सामवेदतरोः शाखा इति शेषः। अन्यो ब्रह्मवित्तमः आवन्त्यः सुकर्मणः शिष्यो जग्राह॥ ७७॥ पौष्यञ्ज्यावन्त्ययोश्चकाराद्धिरण्यनाभस्य च पञ्चशतानि शिष्याः आसन् ते तावतीः शाखाः यथायथं जगृहुः तानुदीच्यान् सतः कालयोगात् प्राच्यान् प्रचक्षते यथोक्तं वैष्णवे—

"उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः। हिरण्यनाभात्तावन्त्यः संहितास्तैर्द्विजोत्तमैः ॥
गृहीतास्तेऽपि प्रोच्यन्ते पण्डितैः प्राच्यसामगाः"। इति ॥ ७८ ॥

पुनरपि सुकर्मणः शिष्याणां त्रयाणां शिष्यान्तरैः शाखाबाहुल्यं दर्शयति—लोकाक्षिरिति द्वाभ्याम् ॥ ७९ ॥ शेषाः अन्याः अपि प्रसिद्धाः आवन्त्यः स्वशिष्येभ्य ऊचे ॥ ८० ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे षष्ठाऽध्यायार्थप्रकाशः ॥ ६ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

पौष्यञ्ज्यावन्त्ययोश्चकारात् हिरण्यनाभस्यापि पञ्चशतानि शिष्या आसन् ते तावतीः शाखा यथायथं जगृहुः। तानुदीच्यान् सतः कांश्चित्प्राच्यांश्च प्रचक्षत इत्यर्थः। यथोक्तं वैष्णवे 'उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः। हिरण्यनाभात्तावन्त्यः संहिता यै द्विजोत्तमैः। गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगा' इति ॥ ७७ ॥ पुनरप्येतेषां त्रयाणां सुकर्मणः शिष्याणां शिष्यान्तरैः शाखाबाहुल्यं दर्शयति—लौगाक्षिरिति द्वाभ्याम् ॥ ७८ ॥ कृतसंज्ञको हिरण्यनाभस्य शिष्यः चतुर्विंशतिसंहिताः स्वशिष्येभ्य ऊचे। शेषाः अन्या अपि याः प्रसिद्धाः शाखास्ता आवन्त्यः स्वशिष्येभ्य ऊचे ॥ ७९ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता द्वादशे तत्र सर्वाश्रयनिरूपणे। षष्ठो हि विवृतो वेदविभागविनिरूपकः ॥ ३ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

उदीच्या इति। पौष्यञ्ज्यावन्त्ययोः चकारात् हिरण्यनाभस्य अपि, पञ्चशतानि शिष्याः आसन् वै। यद्यपि सामगाः ते तच्छिष्याः उदीच्याः सन्ति, तथापि तान् प्राच्यान् प्रचक्षते च एव। तथा चोक्तं वैष्णवे तृतीयेंऽशे षष्ठेऽध्याये। 'उदीच्याः सामगाः शिष्यास्तस्य पञ्चशतं स्मृताः। हिरण्यनाभात्तावत्यः संहिता यैर्द्विजोत्तमैः। गृहीतास्तेऽपि चोच्यन्ते पण्डितैः प्राच्यसामगाः, इति ॥ ७७ ॥ पुनरपि सुकर्मणः शिष्याणामेतेषां त्रयाणां शिष्यान्तरैः शाखाबाहुल्यं दर्शयति द्वाभ्याम्। लौगाक्षिरिति। लौगाक्षिः, विष्णुपुराणे यो लोकाक्षिरिति पठितोऽस्ति। माङ्गलिः वैष्णवे लाङ्गलिरित्ययमुक्तः। कुल्यः कुशीदः कुक्षिश्च एते पौष्यञ्जिशिष्याः ये, ते शतं शतं संहिताः जगृहुः। एव वैष्णवे कुक्षिं परित्यज्य लोकाक्ष्यादयश्चत्वार उक्ताः ॥ ७८ ॥ कृत इति। हिरण्यनाभस्य शिष्यः कृतः नाम, स च स्वशिष्येभ्यः चतुर्विंशतिसंहिताः ऊचे। शेषा अन्या अपि याः प्रसिद्धाः शाखाः सन्ति, ताः आत्मवान् आवन्त्यः स्वशिष्येभ्यः ऊचे ॥ ७९ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

## हिन्दी अनुवाद

सुकर्मा के शिष्य कोसल देशनिवासी हिरण्यनाभ, पौष्यञ्जि और ब्रह्मवेत्ताओं में श्रेष्ठ आवन्त्यने उन शाखाओं को ग्रहण किया ॥ ७७ ॥ पौष्यञ्जि और आवन्त्य के पाँच सौ शिष्य थे। वे उत्तर दिशा के निवासी होने के कारण औदीच्य सामवेदी कहलाते थे। उन्हीं को प्राच्य सामवेदी भी कहते हैं। उन्होंने एक-एक संहिता का अध्ययन किया ॥ ७८ ॥ पौष्यञ्जि के और भी शिष्य थे—लौगाक्षि, माङ्गलि, कुल्प, कुसीद और कुक्षि। इसमें से प्रत्येक ने सौ-सौ संहिताओं का अध्ययन किया ॥ हिरण्यनाभ का शिष्य था—कृत। उसने अपने शिष्यों को चौबीस संहिताएँ पढायीं। शेष संहिताएँ परम संयमी आवन्त्य ने अपने शिष्यों को दीं। इस प्रकार सामवेद का विस्तार हुआ ॥ ८० ॥

इति द्वादशस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥

# अथ सप्तमोऽध्यायः

## सूत उवाच

अथर्ववित् सुमन्तुश्च शिष्यमध्यापयत् स्वकाम्[1] । संहितां सोऽपि पथ्याय वेददर्शाय चोक्तवान् ॥ १ ॥
शौक्लायनिर्ब्रह्मबलिर्मोदोषः पिप्पलायनिः । वेददर्शस्य शिष्यास्ते पथ्यशिष्यानथो शृणु ॥ २ ॥
कुमुदः शुनको ब्रह्मन् जाजलिश्चाप्यथर्ववित् ।
बभ्रुः शिष्योऽथाङ्गिरसः सैन्धवायन[2] एव च । अधीयेतां संहिते द्वे सावर्ण्याद्यास्तथापरे ॥ ३ ॥
नक्षत्रकल्पः शान्तिश्च कश्यपाङ्गिरसादयः । एते आथर्वणाचार्याः शृणु पौराणिकान् मुने ॥ ४ ॥
त्रय्यारुणिः कश्यपश्च सावर्णिरकृतव्रणः । वैशम्पायनहारीतौ षड् वै पौराणिका इमे ॥ ५ ॥
अधीयन्त व्यासशिष्यात् संहितां मत्पितुर्मुखात् । एकैकामहमेतेषां शिष्यः सर्वाः समध्यगाम् ॥ ६ ॥
कश्यपोऽहं च सावर्णी रामशिष्योऽकृतव्रणः । अधीमहि व्यासशिष्याच्चतस्रो[3] मूलसंहिताः ॥ ७ ॥
पुराणलक्षणं ब्रह्मन् ब्रह्मर्षिभिर्निरूपितम् । शृणु त्वं[4] बुद्धिमाश्रित्य वेदशास्त्रानुसारतः ॥ ८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—सूतः उवाच–अथर्ववित् सुमन्तुः शिष्यं स्वकां संहिताम् अध्यापयत् सः अपि पथ्याय वेददर्शाय च उक्तवान् ॥ १ ॥ ब्रह्मन् शौक्लायनिः ब्रह्मबलिः मोदोषः पिप्पलायनिः ते वेददर्शस्य शिष्याः अथ पथ्यशिष्यान् कुमुदः शुनकः अथर्ववित् जाजलिः च अथ आङ्गिरसः बभ्रुः शिष्यः सैन्धवायनः एव च द्वे संहिते अधीयेतां तथा अपरे सावर्ण्याद्याः नक्षत्रकल्पः शान्तिः कश्यपाङ्गिरसादयः एते आथर्वणाचार्याः आसन् मुने पौराणिकान् शृणु ॥ २–४ ॥ त्रय्यारुणिः कश्यपः सावर्णिः अकृतव्रणः वैशम्पायनहारितौ इमे षट् वै पौराणिकाः ॥ ५ ॥ (एते तट्) व्यासशिष्यात् मत्पितुः मुखात् संहिताम् अधीयन्त एतेषां शिष्यः अहम् एकैकां सर्वाः (संहिताः) समध्यगाम् ॥ ६ ॥ कश्यपः अहं सावर्णिः रामशिष्यः अकृतव्रणः व्यासशिष्यात् चतस्रः मूलसंहिताः अधीमहि ॥ ७ ॥ ब्रह्मन् ब्रह्मर्षिभिः निरूपितं पुराणलक्षणं त्वं वेदशास्त्रानुसारतः बुद्धिम् आश्रित्य शृणु ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सप्तमेऽथर्वविस्तारः पुराणव्यसनं ततः । पुराणलक्षणादीनि फलं भागवतश्रुतेः ॥ १ ॥

क्रमप्राप्तमथर्ववेदविभागमाह । अथर्वविदिति । शिष्यं कवंधनामानम् । स्वकां स्वकीयां संहिताम् । सोऽपि शिष्योऽपि तां द्विधा विभज्य । तदुक्तं वैष्णवे । "अथर्ववेदं स मुनिः सुमंतुरमितद्युतिः । शिष्यमध्यापयामास कवंधं सोऽपि च द्विधा । कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्" इति ॥ १ ॥ तत्र वेददर्शः स्वसंहितां चतुर्धा विभज्य चतुरः शिष्यानध्यापयामास । पथ्यश्च त्रिधा विभज्य त्रीनित्याह सार्धेन । शौक्लायनिरिति ॥ २ ॥ अंगिरसः शुनकस्य शिष्यो बभ्रुः सैंधवायनश्च । तदुक्तम् "शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे । द्वितीयां संहितां प्रादात्सैंधवायनसंज्ञिने" इति सावर्ण्याद्याः सैंधवायनादीनां शिष्याः ॥ ३ ॥ नक्षत्रकल्पः शांतिकल्पश्चेति द्वौ । तदुक्तम् "नक्षत्रकल्पो वेदानां संहितानां तथैव च । चतुर्थः स्यादांगिरसः शांतिकल्पश्च पंचमः" इति । नक्षत्रकल्पादीनां कर्तारस्तन्नामभिरुच्यंते ॥ ४–५ ॥ मत्पितुर्मुखादिति । प्रथमं व्यासः षट् संहिताः कृत्वा मत्पित्रे रोमहर्षणाय प्रादात् ।

---

१. ष्यानध्यापयत् स्वकान् । २. शिशपायन० । ३. सपुत्राच्च० । ४. शृणुष्व ।

तस्य च मुखादेते त्रय्यारुण्यादय एकैकां संहितामधीयंत। एतेषां षण्णां शिष्योऽहं ताः सर्वाः समधीतवान् ॥ ६ ॥ रामशिष्यो योऽकृतव्रणः एवं चत्वारो वयम्। मूलसंहिता इत्यनेन ततः संहिताबाहुल्यं सूचितम् ॥ ७ ॥ शुकपरीक्षित्संवादे निरूपितमपि पुराणलक्षणं तद्भेदकथनाय दर्शयति। पुराणेति ॥ ८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुराणानां व्यसनं विभागः। भागवतश्रुतेरिति भगवान्व्यासस्तस्येमे शिष्या भागवताः पैलाद्यास्तेषां श्रुतिः श्रवणं तस्याः फलम्। यद्वा—'वेदो नारायणः साक्षात्' इत्युक्तेर्भगवतो वेदस्यायं विभागो भागवतस्तस्य श्रुतेः फलं, तच्चाध्यायांतिमश्लोकेन 'ब्रह्मतेजोविवर्द्धनम्' इति वक्ष्यत्येव ( १ )। वैष्णवे विष्णुपुराणे। तदेतच्छ्लोकोक्तं वृत्तमुक्तम् ॥ १ ॥ तत्र द्वयोर्मध्ये। हे ब्रह्मन्निति संबुद्धिरुक्ताभिप्राया ॥ २–३ ॥ तदुक्तमित्यादि वाक्यं विष्णुपुराणीयमेव। कल्पशब्दस्य प्रत्येकं सम्बंधः। वेदकल्पः, संहिताकल्पः, आंगिरसकल्प इति। नक्षत्रकल्पो नक्षत्रादिपूजाविधिः, वेदकल्पो वैतानिकब्रह्मत्वादिविधिः, संहिताकल्पः संहिताविधिः, आंगिरसकल्पोऽभिचारादिविधिः, शांतिकल्पोऽश्वगजाद्यष्टादशमहाशान्त्यादिविधिरिति तट्टीका च ॥ ४ ॥ इमे इति बुद्धिसन्निहितत्वात् ॥५॥ एकैकामिति—त्रिभिस्त्रिभिर्मिलित्वैकत्वम्। 'त्रिषट्' इति वक्ष्यमाणात्। तच्च—'ब्राह्मं पाद्मं वैष्णवम्' इति मिलित्वैकादिरूपाम्। अवांतरसंहिता तु क्वचिदेका, यथा श्रीभागवतस्य परमहंससंहितात्वम्, क्वचिदेकैकस्यैव विभागशः। यथा—स्कांदस्य सनत्कुमारप्रोक्तसंहितानामादिका, श्रीभागवतस्य श्रीशुकात्तु पश्चाद्व्यक्तिः सूर्यादिव यजुर्भागस्य वाजसनेयस्यादौ व्यक्तत्वात् ॥ ६ ॥ कश्यपोऽहमुग्रश्रवाः सावर्णिरकृतव्रणश्चतुर्थ एते चत्वारो वयमित्यर्थः। मूलत्वमेषामितिहासापेक्षया ज्ञेयम् "अष्टादश पुराणानि कृत्वा सत्यवतीसुतः। भारतं कृतवान्पश्चात्" इति मात्स्यात्। "ब्राह्मी भागवती शैवी वैष्णवी च प्रकीर्तिताः। चतस्रः संहिताः पुण्या धर्मकामार्थमोक्षदाः"। इति। क्वचित्पञ्चोक्ताः। "ब्रह्मणः स्युः शिवस्यापि प्रह्लादस्यापि संहिताः। गौतमस्य कुमारस्य संहिताः पञ्च वर्णिताः"। क्वचित् षडुक्ताः—"आद्या सनत्कुमारोक्ता द्वितीया सूतसंहिता। तृतीया शांकरी विप्राश्चतुर्थी वैष्णवी तथा। तत्परा संहिता ब्राह्मी सौरांत्या परिकीर्तिता"। "अन्या अपि संहितास्तु विज्ञेया मुनिनिर्मिताः। कौशिकी संहिता मुख्या वासिष्ठी मानवी तथा। गर्गादिमा च सा पाराशरी वैयासकी तथा। हनुमत्संहिता ज्ञेया तथा सौदर्शनी मता"। इति सर्वार्थचिंतामण्युक्तः। व्यासशिष्यान्मत्पितू रोमहर्षणात् ॥ ७ ॥ वेद एव शास्त्रं तदनुसारतो यथा वेदे पुराणलक्षणमुक्तं तदनतिलंघ्यैवेह वर्णयामीत्यर्थः ॥ ८ ॥

## अन्वितार्थप्रकाशिका

सप्तमेऽथर्वभागाश्च पुराणलक्षणादि च। फलं भागवतश्रुत्याः श्लोकाः सार्द्धेषुबाहवः ( २५॥ ) ॥

तावन्तोऽनुष्टुभोऽ ( २५॥ ) ध्यत्रोवाचेत्येकं ( १ ) वचः स्मृतम् ॥ ७ ॥

अथर्वविभागमाह—अथर्वविदिति। अथर्ववित्सुमन्तुः स्वकां स्वकीयां संहितां स्वशिष्यं कवन्धनामानमध्यापयामास। सोऽपि शिष्योऽपि तां द्विधा विभज्य पथ्याय वेददर्शाय च उक्तवान्। तदुक्तं वैष्णवे। "अथर्ववेदं सुमतिः सुमन्तुरमितद्युतिः। शिष्यमध्यापयामास कवन्धं सोऽपि तं द्विधा। कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्"। इति ॥ १ ॥ शौक्लायनिरिति सार्द्धम्। हे ब्रह्मन्! वेददर्शस्य अथर्ववेदवित् शौक्लायनिरित्यादयश्चत्वारः शिष्याः। अथ पथ्यस्य शिष्यान् शृणु। ते च कुमुदादयः त्रयः। अयं भावः। वेददर्शपथ्यौ स्वस्वसंहितां स्वस्वशिष्यसङ्ख्यया विभज्य तानध्यापयामासतुरिति ॥ २ ॥ बभ्रुरिति। अथाङ्गिरसः शुनकस्य बभ्रुः शिष्यः तथा सैन्धवायनश्चेति। शुनकोऽपि स्वसंहितां द्विधा विभज्य ताभ्यां ददौ इति भावः। तथा परेऽपि सावर्ण्याद्याः सैन्धवायनादीनां शिष्याः अथर्वविद आसन् ॥ ३ ॥ आद्यशब्दग्राह्यानाह—नक्षत्रेति। नक्षत्रकल्पः शान्तिः शान्तिकल्पः कश्यपाङ्गिरसादयश्चेति नक्षत्रकल्पादि कल्पादिकर्तृत्वात्तत्तन्नाम्ना व्यवहारः। एते सुमन्त्वाद्या आथर्वणाचार्याः शाखाविभागेन वेदप्रवर्त्तकाः आसन्। अथ हे मुने! पौराणिकान् शृणु ॥ ४ ॥ त्रय्यारुणिरिति। स्फुटम् ॥ ५ ॥ अधीयन्तेति। व्यासशिष्यात् प्रथमं व्यासः षट् संहिताः कृत्वा मत्पित्रे रोमहर्षणाय प्रादात्। अनन्तरं च व्यासशिष्यात् मत्पितुर्मुखादेते त्रय्यारुणादयः एकैकां संहितामधीयन्त अध्यैयत। आडभावश्छान्दसोऽन्तावार्षौ। एतेषां षण्णां शिष्योऽहमतस्ताः सर्वा एव समधीतवान् ॥ ६ ॥ कश्यप इति। कश्यपोऽहमुग्रश्रवाः सावर्णिरिति त्रयः रामशिष्योऽकृतव्रणश्च चत्वारो वयं व्यासशिष्यात् चतस्रो मूलसंहिताः अधीमहि। मूलेत्युक्त्या संहिताबाहुल्यं सूचितम् ॥ ७ ॥ पुराणेति। हे ब्रह्मन्! ब्रह्मर्षिभिर्वेदशास्त्रानुसारतः निरूपितं पुराणलक्षणं बुद्धिमाश्रित्य सावधानो भूत्वा शृणुष्व। तत्रार्थः ॥ ८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

॥ १–१० ॥

### श्रीमद्वीरराघवव्याख्या

अथ क्रमप्राप्तमथर्ववेदविभागमाह—अथर्वविदित्यादिना। शिष्यं कवन्धनामानं स्विकां संहितामध्यापयत्सोऽपि शिष्योऽपि तां द्विधा विभज्य तदुक्तं वैष्णवे—

"अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः। शिष्यमध्यापयामास कवन्धं सोऽपि च द्विधा॥
कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्"। इति॥ १॥

स्वसंहितां चतुर्द्धा विभज्य शौक्लायन्यादींश्चतुरोऽध्यापयामास पथ्यस्तु त्रिधा विभज्य त्रीनित्याह—सार्द्धेन, शौक्लायनिरिति। हे ब्रह्मन्!॥ २॥ तत्र शुनकेन द्विधा विभक्तां स्वसंहितां ततो बभ्रुः सैन्धवायनावधीतवन्तौ इत्याह—बभ्रुरिति। बभ्रुः सैन्धवायनश्चाङ्गिरसगोत्रप्रभवः शौनकशिष्यावित्यर्थः। सावर्ण्याद्याः सैन्धवायनबभ्रोः शिष्याः॥ ३॥ आद्यशब्दविवक्षितानाह—नक्षत्रकल्प इति। नक्षत्रकल्पः शान्तिश्च नक्षत्रकल्पः शान्तिकल्पश्चेति द्वौ तदुक्तं "नक्षत्रकल्पो वेदश्च शान्तिकल्पस्तथैव च" इति काश्यपाः कश्यपगोत्रोद्भवाः आङ्गिरसाः तद्गोत्रोद्भवाः एते नक्षत्रकल्पादीनां कर्तृत्वात्तत्तन्नामभिरुच्यन्ते ते आथर्वणाचार्या अथर्ववेदशाखाविभागजननेन तत्प्रवर्त्तका इत्यर्थः। इत्थं वेदसंहिताविभागमभिधायाऽथ पुराणसंहिताप्रपञ्चशुश्रूषामालक्ष्य तावत्तत्प्रवर्त्तकान् श्रोतुं प्रचोदयति—शृणु पौराणिकान्मुने इति। हे मुने!॥ ४॥ के पुनस्ते इत्यत्राह—त्रय्यारुणिरिति। त्रय्यारुण्यादय इमे षट् मत्पितुर्मुखादेकैकां संहितां पुराणसंहितामधीयन्त मत्पितुर्मुखादित्यनेन तावद्बादरायणः षट् संहिता रोमहर्षणाय प्रोवाच तस्मादेते षडध्यैपत इति सूच्यते अहन्तु एतेषां षण्णां शिष्यो भूत्वा सर्वाः षडपि संहिता अध्यगामधीतवानस्मि॥ ५–६॥ किञ्च, काश्यप इति रामस्य भार्गवस्य शिष्यो योऽकृतव्रणः त एते चत्वारो वयं व्यासपुत्रात् श्रीशुकाच्चतस्रो मूलसंहिता अधीमहि॥ ७॥ अधीमहि मूलसंहिता इत्यनेन पुराणसंहिताबाहुल्यं सूच्यते तदग्रे स्पष्टीकरिष्यन् तावत् शुकपरीक्षितसंवादनिरूपितमपि पुराणलक्षणं तद्वद्दकथनाय दर्शयति, पुराणेत्यादिना। वेदशास्त्रानुसारेण निरूपितं पुराणलक्षणं बुद्धिमाश्रित्य शृणु अवहितमनाः शृणु इत्यर्थः॥ ८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सोऽपि सुमन्तोः शिष्योऽपि पथ्याय॥१॥ कुमुदादयः पथ्यशिष्याः॥२॥ बभ्रुसैन्धवायनौ पथ्यशिष्यस्य अङ्गिरसोऽङ्गिरसोगोत्रे विद्यमानस्य शुनकस्य शिष्यौ अधीयेताम् अधीतवन्तौ—

"शुनकस्तु द्विधा कृत्वा ददावेकान्तु बभ्रवे। द्वितीयां संहितां प्रादात्सैन्धवायनसञ्ज्ञिने"॥ इति।

सावर्ण्याद्याश्च सैन्धवायनादीनां शिष्याः॥३॥ आथर्वणाचार्याः अथर्ववेदाचार्याः पाठतोऽर्थतश्चाथर्ववेदप्रवर्त्तका इत्यर्थः। पौराणिकान् पुराणाचार्यान्॥ ४–५॥ मत्पितुर्मुखात्पुराणसंहितामधीयन्त त्रय्यारुण्यादयः कथम् एकैकामधीतवन्तः त्वन्तु कथं सर्वानधीतवानिति? तत्राह अहमिति। अहमेतेषां शिष्यः सर्वां पुराणसंहितामपठम्॥ ६॥ व्यासपुत्राच्छ्रीशुकात्॥ ७॥ प्रसङ्गात्पुराणलक्षणं वक्तुं प्रतिजानीते, पुराणेति॥ ८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

॥ १–३॥ पञ्चमवेदस्य विभागज्ञापनार्थमाह—शृणु पौराणिकानिति॥ ४–५॥ एकैकामिति त्रिभिस्त्रिभिर्मिलित्वैकत्वं त्रिषडिति वक्ष्यमाणात् तच्च ब्राह्मं पाद्मं वैष्णवमिति मिलित्वैकेत्यादिक्रमात् अवान्तरसंहिता तु कचिदेका यथा श्रीभागवतस्य परमहंससंहितात्वं कचिदेकैकस्यैव विभागशः यथा स्कान्दस्य सनत्कुमारप्रोक्तसंहितानामादिका श्रीशुकात्तु श्रीभागवतस्य पश्चाद्व्यक्तिः सूर्यादेव यजुर्भागस्य वाजसनेयस्य ज्ञेयम्॥ ६॥ मूलसंहिता इति त्वितिहासविशेषापेक्षया ज्ञेयम् बहूनामन्येषाम् इतिहासानां मूलत्वात् मूलम् इदं च परिशेषेण लक्ष्यते "इतिहासपुराणानां पिता मे रोमहर्षणः" इत्युक्तेः ते च महाभारताद्याः शृणु पौराणिकानिति तूपलक्षणतयोक्तम्॥ ७–८॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सप्तेऽथर्वणो व्यासं पुराणस्य च तस्य च। लक्षणानि दश प्रोच्य तस्य सङ्ख्या च कथ्यते॥

शिष्यं विष्णुपुराणोक्तं कबन्धसञ्ज्ञम्॥ १–२॥ अङ्गिरसः शुनकस्य शिष्यो बभ्रुः सावर्ण्याद्याः सैन्धवायनादीनां शिष्याः॥ ३–५॥ मत्पितुः रोमहर्षणस्य एतेषां षण्णामप्यहं शिष्यः॥ ६–७॥ व्यासशिष्यात् लोमहर्षणात् ब्रह्मर्षिभिः श्रीशुकचरणैरुपक्रमे यदुक्तं प्रायेण तदेवोपसंहारेऽप्युच्यते॥ ८–९॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

सप्तमे क्रमप्राप्तमथर्ववेदविभागं पुराणविभागं तल्लक्षणादिकं चाह— अथर्वविदित्यादिना। सुमन्तुः स्वकां स्वकीयां संहितां शिष्यं कबन्धमध्यापयत् सोऽपि कबन्धोऽपि तां द्विधा विभज्य पथ्याय वेददर्शाय चोक्तवान् तथोक्तं विष्णुपुराणे—

"अथर्ववेदं सुमतिः सुमन्तुरमितद्युतिः। शिष्यमध्यापयामास कबन्धं सोऽपि तं द्विधा॥
कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्"। इति॥ १॥

तत्र वेददर्शः संहितां चतुर्धा विभज्य शौल्कायन्यादीन् पथ्यस्तु त्रिधा विभज्य कुमुदादीन् अध्यापयामासेत्याह— शौक्लायनिरिति सार्द्धेन॥ २॥ अङ्गिरसः शुनकस्य शिष्यः तदुक्तम्—

"शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे। द्वितीयां संहितां प्रादात्सैन्धवायनसञ्ज्ञिने"॥ इति।

सावर्ण्याद्याः सैन्धवायनादिशिष्याः॥ ३॥ आदिशब्देन निर्दिष्टान् स्फुटतया दर्शयति—नक्षत्रकल्प इति॥ ४–५॥ मत्पितुः रोमहर्षणस्य अहं तु एषां षण्णां शिष्यः सर्वाः षडपि संहिताः अध्यगामधीतवान्॥ ६॥ व्यासशिष्यात् रोमहर्षणादेव एतेन संहिताबाहुल्यं सूचितम्॥ ७॥

"अत्र सर्गो विसर्गश्च स्थानपोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः"॥

इत्यनेन द्वितीयस्कन्धे श्रीशुकपरीक्षत्सम्वादे निरूपितमपि पुराणलक्षणं तद्भेदकथनाय पुनरपि निरूपयति— पुराणेत्यादिना॥ ८॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सप्तमेऽथर्वविस्तारः पुराणव्यसनं तथा। पुराणलक्षणादीनि फलं भगवतश्रुतेः॥ १॥

क्रमप्राप्तमथर्ववेदविभागमाह—अथर्वविदिति। सुमन्तुः स्वकीयां संहितां स्वशिष्यं कबन्धनामानमध्यापयामास। सोऽपि शिष्योऽपि तां द्विधा विभज्य। तदुक्तं वैष्णवे 'अथर्ववेदं सुमतिः सुमन्तुरमितद्युतिः। शिष्यमध्यापयामास कबन्धं सोऽपि तं द्विधा। कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्' इति॥ १॥ तत्र वेददर्शः स्वसंहितां चतुर्द्धा विभज्य शौक्लायन्यादिचतुरः शिष्यान् अध्यापयामास। पथ्यश्च त्रिधा विभज्य त्रीनिति सार्द्धेनाह—शौक्लायनिरिति॥ २॥ अङ्गिरसः शुनकस्य शिष्यः। तदुक्तम् 'शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे। द्वितीयां संहितां प्रादात्सैन्धवायनसंज्ञिने' इति सावर्ण्याद्यासैन्धवायनादिशिष्याः॥ ३॥ आद्यशब्दविवक्षितानाह—नक्षत्रकल्पः शान्तिश्च शान्तिकल्पश्चेति द्वौ। तदुक्तम् 'नक्षत्रकल्पो वेदानां संहितानां तथैव च। चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चम' इति। नक्षत्रकल्पादिग्रन्थानां कर्तारस्तत्तन्नामभिरुच्यते। आचार्याः शाखाविभागेन प्रवर्त्तकाः एवं वेदसंहिताविभागमभिधाय पुराणसंहिताविभागकर्तृश्रवणे प्रचोदयति—हे मुने पौराणिकान् शृण्विति॥ ४॥ तानाह— त्रय्यारुणिरिति॥ ५॥ व्यासशिष्यात् मत्पितुर्मुखादेते अधीयन्त। प्रथमं व्यासः षट् संहिताः कृत्वा मत्पित्रे रोमहर्षणाय प्रादात्। तस्य च मुखादेते त्रय्यारुण्यादयः एकैकां संहितामधीयन्त। एतेषां षण्णां शिष्योऽहमतस्ताः सर्वा एव समधीतवान्॥ ६॥ एते चत्वारो वयं मूलसंहिता अधीमहि मूलेत्युक्त्या ततः संहिताबाहुल्यं सूचितम्॥ ७॥ शुकपरीक्षित्संवादे निरूपितमपि पुराणलक्षणं तद्भेदकथनाय पुनराह—पुराणेति॥ ८॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

विस्तारोऽथर्वणः प्रोक्तः स पुराणस्य सप्तमे। लक्ष्मादीनि पुराणस्य व्युष्टिर्भागवतश्रुतेः॥ १॥

अथ क्रमप्राप्तमथर्ववेदविभागमाहाथर्वविदित्यादिना। अथर्वेति। अथर्ववित् सुमन्तुश्च सुमन्तुमुनिरपि, शिष्यं कबन्धनामानं छात्रं, स्वकां स्वकीयां संहितां अध्यापयत्। स कबन्धमुनिरपि, तां द्वेधा विभज्य पथ्याय शिष्याय वेददर्शाय शिष्याय च, उक्तवान्। तथा चोक्तं वैष्णवे। 'अथर्ववेदं स मुनिः सुमन्तुरमितद्युतिः। शिष्यमध्यापयामास कबन्धं सोऽपि तं द्विधा। कृत्वा तु वेददर्शाय तथा पथ्याय दत्तवान्।' इति॥ १॥ शौक्लायनिरिति। शौक्लायनिः, ब्रह्मबलिः, मोदोषः, केचिदत्र मौद्गल इत्यपि पठन्ति। विष्णुपुराणेऽयं मौद्गल इत्यप्युक्तेः। पिप्पलायनिः। त एते वेददर्शस्य शिष्याः। वेददर्शः स्वसंहितां चतुर्धा विभज्य

शौक्लायनादींश्चतुरः शिष्यानध्यापयामासेत्यर्थः। अथो पथ्यशिष्यान् शृणु। हे ब्रह्मन्, कुमुदः, शुनकः, जाजलिश्चापि अथर्ववित् अथर्ववेदाभिज्ञः पथ्यः, स्वसंहितां त्रेधा विभज्य कुमुदादित्रीनध्यापयामासेत्यर्थः॥ २॥ बभ्रुरिति। अथ आङ्गिरसः अङ्गिरसः गोत्रे विद्यमानस्य शुनकस्य शिष्यः बभ्रुः सैन्धवायनश्च अभूतां तौ द्वौ द्वे संहिते अधीयेताम्। शुनकः स्वसंहितां द्वेधा विभज्य बभ्रुसैन्धवायनौ ते अध्यापयामासेत्यर्थः। तथा चोक्तं वैष्णवे। 'शुनकस्तु द्विधा कृत्वा ददावेकां तु बभ्रवे। द्वितीयां संहितां प्रादात् सैन्धवायनसंज्ञिने।' इति। तथा अपरे सावर्ण्याद्याः सैन्धवायनबभ्र्वोः शिष्याः॥ ३॥ आद्यशब्दविवक्षितमाह। नक्षत्रकल्प इति। नक्षत्रकल्पः शातिश्च सावर्णिः पूर्वश्लोकोक्तः नक्षत्रकल्पः शान्तिकल्पश्चेति द्वौ। काश्यपाः कश्यपगोत्रोद्भवाश्च आङ्गिरसोऽङ्गिरसो गोत्रोद्भवाश्च ते आद्यों येषां ते एते आथर्वणाचार्याः। तथोक्तं वैष्णवे। 'सैन्धवा मुञ्जकेशाश्च भिन्नवेदा द्विधा पुनः। नक्षत्रकल्पो वेदानां संहितानां तथैव च। चतुर्थः स्यादाङ्गिरसः शान्तिकल्पश्च पञ्चमः।' इति। एतट्टीकायां नक्षत्रकल्पोनक्षत्रादिपूजाविधिः, संहिताकल्पः संहिताविधिः, आङ्गिरसः कल्पोऽभिचारादिर्विधिः, शान्तिकल्पः गजाद्यष्टादशमहाशान्त्यादिविधिरिति नक्षत्रकल्पाद्या ग्रन्थविशेषास्तन्नाम्ना ग्रन्थकर्त्तारोऽत्राभिहिता इति बोध्यम्। हे मुने, अथ पौराणिकान् शृणु॥ ४॥ के पुनस्ते इत्यत्राह। त्रय्यारुणिरिति। त्रय्यारुणिः, कश्यपः, सावर्णिः, अकृतव्रणः, शिंशिपायनश्च हारीतश्च तौ च, इमे षट् पौराणिकाः वै॥ ५॥ अधीयन्तेति। एते व्यासशिष्यात् व्यासशिष्यस्येत्यर्थः। मत्पितुः रोमहर्षणस्य मुखात्, एकैकां संहितां पुराणसंहितां अधीयन्त। मत्पितुर्मुखादित्यनेन तावद्बादरायणो रोमहर्षणाय प्रोवाच तस्मादेते षडधीयन्त इति सूच्यते। अहं तु एतेषां षण्णां शिष्यो भूत्वा सर्वाः षडपि संहिताः समध्यगामधीतवानस्मि॥ ६॥ काश्यप इति। काश्यपः, अहमुग्रश्रवाख्यः सूतः, सावर्णिः, रामशिष्यः, अकृतव्रणश्च एते चत्वारो वयं, व्यासशिष्यात् श्रीशुकात् चतस्रः मूलसंहिताः अधीमहि। मूलसंहिता इत्यनेन पुराणसंहिताबाहुल्यं सूच्यते॥ ७॥ अग्रे पुराणानि नाम्ना स्पष्टीकरिष्यंस्तावच्छुकपरीक्षित्संवादे निरूपितमपि पुराणलक्षणं तद्बदकथनाय दर्शयति पुराणेत्यादिना पुराणेति। हे ब्रह्मन, ब्रह्मर्षिभिः वेदशास्त्रानुसारतः वेदशास्त्रानुसारेण, निरूपितं पुराणलक्षणं बुद्धिं आश्रित्य शृणु। अवहितमनाः सन्नाकर्णयेत्यर्थः॥ ८॥

## हिन्दी अनुवाद

### अथर्ववेद की शाखाएँ और पुराणों के लक्षण

श्रीसूतजी कहते है—शौनकादि ऋषियो! मैं कह चुका हूँ कि अथर्ववेद के ज्ञाता सुमन्तु मुनि थे। उन्होंने अपनी संहिता अपने प्रिय शिष्य कबन्ध को पढ़ायी। कबन्ध ने उस संहिता के दो भाग करके पथ्य और वेददर्श को उसका अध्ययन कराया॥ वेददर्श के चार शिष्य हुए—शौक्लायनि, ब्रह्मबलि मोदोष और पिप्पलायनि। अब पथ्य के शिष्यों के नाम सुनो॥ २॥ शौनक जी! पथ्य के तीन शिष्य थे—कुमुद, शुनक और अथर्ववेत्ता जाजलि। अङ्गिरा गोत्रोत्पन्न शुनक के दो शिष्य थे—बभ्रु और सैन्धवायन। उन लोगों ने दो संहिताओं का अध्ययन किया। अथर्ववेद के आचार्यों में इनके अतिरिक्त सैन्धवायनादि के शिष्य सावर्ण्य आदि तथा नक्षत्रकल्प, शान्ति, कश्यप आङ्गिरस आदि कई विद्वान् और भी हुए। अब मैं तुम्हें पौराणिकों के सम्बन्ध में सुनाता हूँ॥ ३–४॥ शौनकजी! पुराणों के छः आचार्य प्रसिद्ध हैं—त्रय्यारुणि, कश्यप, सावर्णि, अकृतव्रण, वैशम्पायन और हारीत॥ ५॥ इन लोगों ने मेरे पिता जी से एक-एक पुराण-संहिता पढ़ी थी और मेरे पिताजी ने स्वयं भगवान् व्यास से उन संहिताओं का अध्ययन किया था। मैंने उन छहों आचार्यों से सभी संहिताओं का अध्ययन किया॥६॥ उन छः संहिताओं के अतिरिक्त और भी चार मूल संहिताएँ थीं। उन्हें भी कश्यप, सावर्णि, परशुरामजी के शिष्य अकृतव्रण और उन सबके साथ मैंने व्यासजी के शिष्य श्रीरोमहर्षणजी से, जो मेरे पिता थे, अध्ययन किया था॥ ७॥ शौनकजी! महर्षियोंने वेद और शास्त्रों के अनुसार पुराणों के लक्षण बतलाये हैं। अब तुम स्वस्थ होकर सावधानी से उनका वर्णन सुनो॥ ८॥

सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च। वंशो वंशानुचरितं संस्था हेतुरुपाश्रयः॥ ९॥

दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः। केचित् पञ्चविधं ब्रह्मन् महदल्पव्यवस्थया॥ १०॥

अव्याकृतगुणक्षोभान्महतस्त्रिवृतोऽहमः। भूत[1]सूक्ष्मेन्द्रियार्थानां सम्भवः सर्ग उच्यते॥ ११॥

पुरुषानुगृहीतानामेतेषां वासनामयः। विसर्गोऽयं समाहारो बीजाद् बीजं चराचरम्॥ १२॥

---

१. भूतमात्रे।

### कृष्णप्रिया व्याख्या

अन्वयः—अथ अस्य सर्गः विसर्गः वृत्तिः रक्षान्तराणि वंशः वंशानुचरितं संस्था हेतुः अपाश्रयः ( इति ) दशभिः लक्षणैः युक्तं पुराणं तद्विदः विदुः ब्रह्मन् केचित् महदल्पव्यवस्थया पञ्चविधं ( विदुः ) ॥ ९-१० ॥ अव्याकृतगुणक्षोभात् महतः त्रिवृतोऽहमः भूतसूक्ष्मेन्द्रियार्थानां सम्भवः सर्गः उच्यते ॥ ११ ॥ पुरुषानुगृहीतानाम् एतेषां वासनामयः अयं समाहारः चराचरं बीजात् बीजं ( इव ) विसर्गः ( उच्यते ) ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अस्य विश्वस्य। "अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वंतरेशानुकथा निरोधो मुक्तिराश्रयः" इत्यत्रोक्ते स्थानपोषणे वृत्तिरक्षाशब्दाभ्यामुच्येते। अंतराणि मन्वंतराणि वंशो वंश्यानुचरितमितीशानुकथाः। संस्था निरोधः। अनेनैवात्यंतिकलयरूपा मुक्तिरप्युक्ता। हेतुशब्देन जीवाश्रयवासनाशब्दवाच्या ऊतयो गृहीताः ॥ ९ ॥ दशभिरेतैर्लक्षणैरर्थैर्युक्तं महापुराणं विदुः। केचित्पंचविधम्। "सर्गश्च प्रतिसर्गश्च वंशो मन्वंतराणि च। वंश्यानुचरितं चेति पुराणं पंचलक्षणम्।" इति महत्पुराणमल्पं चेति व्यवस्थया। यत्र दशापि लक्षणानि पृथक्पृथङ् निरूप्यन्ते तन्महापुराणम्। यत्र त्वन्येषां पंचस्वेवांतर्भावस्य विवक्षा तदल्पमिति व्यवस्थयेत्यर्थः ॥ १० ॥ सर्गादिलक्षणानि व्याचष्टे अव्याकृतेत्यादिना। अव्याकृतस्य प्रधानस्य गुणानां क्षोभाद्यो महांस्तस्मात्त्रिवृदहंकारस्तस्माद्भूतमात्राणां सूक्ष्माणामिंद्रियाणां च तदर्थानां च स्थूलानां देवतानां च संभवः सर्गः कारणसृष्टिसर्ग इत्यर्थः। उच्यत इति यथाऽपेक्षमुत्तरत्राप्यनुषंगः ॥ ११ ॥ विसर्गं व्याचष्टे। पुरुषेणेश्वरेणानुगृहीतानामेतेषां महदादीनां पूर्वकर्मवासनाप्रधानोऽयं समाहारः। कार्यभूतश्चराचरप्राणिरूपो बीजाद्बीजमिव प्रवाहापन्नो विसर्ग उच्यत इत्यर्थः ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'पोषणं तदनुग्रहः' इति पूर्वंलक्षितं पोषणमेवात्र रक्षाशब्देनोच्यते, तां व्याचष्टे ॥ ९ ॥ इत्यर्थः इति—अंतर्भावस्तु स्वबुद्ध्यैव सर्गे रक्षायाः, प्रतिसर्गे संस्थाया इत्येवं रीत्या यथायथमनुसंधेयमिति वंशवंशानुचरितयोरीशकथायामन्तर्भावमिति भावः ॥ १० ॥ इत्यर्थं इति—विसर्गस्य पृथगुपादानात्सर्गपदेन कारणसृष्टिरेवात्र ज्ञेयेति भावः ॥ ११ ॥ इत्यर्थं इति—विशिष्टः सर्गो विसर्ग इति भावः ॥ १२ ॥

### अन्वितार्थप्रकाशिका

सर्ग इति। अस्य विश्वस्य अत्र सर्गो विसर्गश्च वृत्तिः स्थानं रक्षा पोषणम्। अन्तराणि मन्वन्तराणि। वंशो वंश्यानुचरितमिति च द्वयम्। ईशानुकथाः संस्थानिरोधः अनेनैवात्यन्तलयरूपा मुक्तिरप्युक्ता। हेतुशब्देन जीवाश्रयवासनाशब्दवाच्या ऊतयो गृहीताः इति अत्र सर्गो विसर्गश्चेत्यादिद्वितीयस्कन्धानुसारेण ज्ञेयम् ॥ ९ ॥ दशभिरिति। दशभिरेतैर्लक्षणैर्युक्तं तत्पुराणं पुराणविदो महापुराणं विदुः। हे ब्रह्मन्! केचित्तु पञ्चविधं पुराणलक्षणमाहुः। 'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं चेति पुराणं पञ्चलक्षणम्।' इति तच्च महदल्पं च पुराणमिति। व्यवस्थयेति। यत्र दशापि लक्षणानि पृथक् निरूप्यन्ते तन्महापुराणम्। यत्र त्वन्येषां पञ्चस्वेवान्तर्भावस्य विवक्षा तदल्पपुराणमिति व्यवस्थया ज्ञेयमित्यर्थः ॥ १० ॥ सर्गादिस्वरूपं निरूपयति—अव्याकृतेत्यादिना। अव्याकृतस्य प्रधानस्य गुणानां क्षोभात् यो महान् महत्तत्त्वं तस्मात् यस्त्रिवृत् त्रिविधोऽहङ्कारस्तस्मात् भूतसूक्ष्माणां शब्दादितन्मात्राणामिन्द्रियाणां च तदर्थानां स्थूलानां पृथिव्यादिमहाभूतानां तद्देवतानां संभवश्च कारणसृष्टिः सर्ग उच्यते ॥ ११ ॥ पुरुषेति। पुरुषेण परमेश्वरेणानुगृहीतानामाहितसृष्टिसामर्थ्यानामेतेषां महदादीनां वासनामयः पूर्वकर्मसदसद्वासनाप्रधानः योऽयं समाहारः सङ्घातकार्यभूतश्चराचरशरीरात्मकः समष्टिव्यष्टिजीवोपाधिरूपः बीजाद्बीजमिव प्रवाहापन्नः स विसर्ग उच्यते। ऊतयः कर्मवासना इति पूर्वं लक्षिता या ऊतिः साऽत्र विसर्ग एवान्तर्भाविता ॥ १२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अव्याकृतगुणक्षोभात् मूलप्रकृतेर्गुणक्षोभात् अहमः अहङ्कारस्य ॥ ११ ॥ विसर्गोऽमिति तत्त्वसमुदायात्मकं बीजात् बीजकारणादिति कारणरूपेण सन्तन्यमानं स्थावरजङ्गमात्मकं च यत्कार्यजातं स विसर्ग इत्यर्थः ॥ १२ ॥

### श्रीमद्वीरराघवव्याख्या

किन्तदित्यत्राह—सर्गश्चैवेति दशभिः। सर्गादिभिर्लक्षणैर्युक्तं तदेव पुराणमिति तद्विदः पुराणलक्षणविदः विदुः अवस्थानपोषणे वृत्तिरक्षाशब्दाभ्यामुच्येते अन्तराणि मन्वन्तराणि वंशो वंश्यानुचरितं च संस्था निरोधः अनेनैवात्यन्तिकप्रलयरूपा

मुक्तिरप्युक्ता हेतुशब्देनोतयः पृथग्गृहीताः क्वचिदिति ब्रह्मन्! महदल्पव्यवस्थया क्वचित्पञ्चविधश्च लक्षणम्, महापुराणस्योक्तानि दशलक्षणानि अल्पपुराणन्तु—

"सर्गश्च प्रतिसर्गश्च वंशोमन्वन्तराणि च। वंश्यानुचरितञ्चैव पुराणं पञ्चलक्षणम्"॥

इत्युक्तविधमित्यर्थः॥ ९–१०॥ क्रमेण सर्गादीनां स्वरूपं निरूपयति, अव्याकृतेत्यादिना। अव्याकृतस्य मूलप्रकृतेर्गुणानां सत्त्वरजस्तमसां क्षोभाद्यो महान् गुणत्रयपरिणामरूपः तस्मादहङ्कारः तथाभूतः तस्माच्च भूतानामाकाशादीनां तत्सूक्ष्माणां शब्दादीनां इन्द्रियाणां चेत्यर्थानां वस्तूनां सम्भवः स सर्ग इत्युच्यते॥ ११॥ विसर्गं निरूपयति—पुरुषानुगृहीतानामिति। पुरुषेण परमपुरुषेणानुगृहीतानामाहितसृष्टिसामर्थ्यानाम् एतेषां महदादितत्त्वानां यः समाहारः सङ्घातपरिणामः स विसर्गः इत्यर्थः। कोऽसौ समाहारः इत्यतस्तं दर्शयति, चराचरात्मकमिति। चराचरात्मकं जगदेव तत्समाहारः इत्यर्थः। तत्र दृष्टान्तः बीजाद्बीजमिति। कारणबीजात् कार्यबीजमिव कारणादव्याकृतान्महदादिक्रमेण चराचरात्मकं यत्कार्यजातं स विसर्ग इत्यर्थः। विसर्गस्य जीवकर्मवासनाप्रयुक्तत्वात् वासनामयत्वम्॥ १२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वृत्तिश्च रक्षा च अन्तराणि च वृत्तिरक्षान्तराणि॥ ९॥ पुराणस्य महदल्पव्यवस्थया क्वचित्स्थले पञ्चविधं पञ्चलक्षणप्रकारोपेतम्॥ १०॥ तत्र सर्गादिकं क्रमेण लक्षयति—अव्याकृतेति। अव्याकृतगुणक्षोभात्प्रकृतिगुणानामन्योन्यसंयोगलक्षणसङ्कलनान्महतः महत्तत्त्वस्य वैकारिकादिभेदेन त्रिवृत्तोऽहमः अहङ्कारस्य भूतसूक्ष्मेन्द्रियार्थानां पञ्चभूतसूक्ष्मेन्द्रियविषयाणां सम्भवो जन्मभूतमात्रेन्द्रियथियां जन्मेत्यधस्तादुक्तम्॥ ११॥ पुरुषेण भगवतानुगृहीतानामनुप्रवेशलक्षणानुग्रहवतामेतेषां तत्त्वानां सकाशाद्वासनामयो यः समाहारस्तत्तत्कर्मवासनानुसृतिः सृष्टिः सविसर्गो जीवः अजीवश्च चेतनाचेतनलक्षणः चराचरः चराचरात्मको ब्रह्माण्डसर्गः "ब्रह्मणो गुणवैषम्याद्विसर्गः पौरुषः स्मृतः" इति॥ १२॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सर्गोऽस्येत्यादिकं द्वितीयस्कन्ध एव व्याख्यातम्॥ ९–१५॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

केचित् पञ्चविधमिति—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं चेति पुराणं पञ्चलक्षणम्"॥

इति। महत् अल्पं चेति व्यवस्थया यत्र दशापि लक्षणानि पृथङ् निरूप्यन्ते तन्महापुराणं यत्र त्वन्येषां पञ्चस्वेवान्तर्भावो विवक्षितस्तदल्पमिति व्यवस्थयेत्यर्थः॥ १०॥ तत्र सर्गं व्याचष्टे—अव्याकृतस्य प्रधानस्य गुणानां क्षोभात् यो महान् तस्मात् यस्त्रिवृदहङ्कारस्तस्मात् भूतमात्रादीनां सम्भवः सर्गः अत्रार्थशब्देन देवताः ज्ञेयाः कारणसृष्टिः सर्ग इत्यर्थः। उच्यत इति यथापेक्षमुत्तरत्राप्यनुषङ्गः॥ ११॥ विसर्गं व्याचष्टे, पुरुषेणेश्वरेणानुगृहीतानामेतेषां यः समाहारः कार्य्यभूतः समष्टिव्यष्टिजीवोपाधिरूपः, कीदृशः? वासनामयः सदसद्वासनाप्रधानः स विसर्गः तत्र चराचरं जङ्गमस्थावरात्मकं जगदिदं बीजाद्बीजमिव प्रवाहापन्नं भवति ऊतयः कर्मवासनाः इति पूर्वंलक्षिता या ऊतिः सात्र विसर्ग एवान्तर्भाविता॥ १२॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

अस्य विश्वस्य सर्गः॥ १॥ विसर्गः॥ २॥ वृत्तिस्थितिः॥ ३॥ रक्षा पोषणलक्षणा॥ ४॥ अन्तराणि मन्वन्तराणि॥५॥ वंशवंश्यानुचरितमितीशानुकथा॥ ६॥ संस्था निरोधः॥ ७॥ संस्थाशब्देनात्यन्तिकप्रलयरूपामुक्तिरप्युक्ता॥ ८॥ हेतुशब्देन जीवाश्रयवासनाशब्दवाच्याः ऊतयो गृहीताः॥ ९॥ अपाश्रयो दशमः॥ १०॥ ९॥ एतैर्दशभिः सर्गादिभिर्लक्षणैर्युक्तं तद्विदः पुराणलक्षणविदः पुराणं विदुः केचित्तु—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंश्यानुचरितं चेति पुराणं पञ्चलक्षणम्"॥

इति पञ्चविधं पुराणं विदुः एतदुभयं महदल्पव्यवस्थयाबोध्यं दशलक्षणयुक्तं महापुराणं यत्र तु पञ्चस्वेवान्येषां यथायथमन्तर्भावस्तत्पञ्चलक्षणयुक्तमल्पपुराणमित्यर्थः॥१०॥ सर्गं विवृणोति—अव्याकृतेति। अव्याकृतस्य भगवच्छक्तेः प्रकृतेर्गुणक्षोभात्

त्रिवृत् महान् महतः त्रिवृदहं त्रिवृतोऽहमः भूतसूक्ष्मेन्द्रियरूपाणाम् आकाशादिभूतानां सूक्ष्माणां तन्मात्राणामेकादशेन्द्रियाणां च अर्थानां पदार्थानां सम्भवः सर्गः उच्यते ॥ ११ ॥ विसर्गं विवृणोति—पुरुषानुगृहीतानामिति। पुरुषेण परमेश्वरेण अनुगृहीतानां तत्प्रसादाल्लब्धसृष्टिसामर्थ्यानामेतेषां जीवानां वासनामयः पूर्वकर्मवासनाप्रधानः अयं समाहारः कार्यभूतः चराचरं जङ्गमाजङ्गम-रूपः बीजाद्बीजमिव प्रवाहरूपो विसर्गो ज्ञेयः ॥ १२ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अस्य विश्वस्य 'अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः। इत्यत्रोक्तेः स्थान-पोषणे वृत्तिरक्षाशब्दाभ्यामुच्येते। अन्तराणि मन्वन्तराणि। वंशो वंश्यानुचरितमिति च ईशानुकथाः। संस्था निरोधः। अनेनैवात्यन्तिकलयरूपा मुक्तिरप्युक्ता हेतुशब्देन जीवाश्रयवासनाशब्दवाच्या ऊतयो गृहीताः ॥ ९ ॥ दशभिरेतैर्लक्षणैरर्थैर्युक्तं पुराणविदो महापुराणं विदुः। हे ब्रह्मन् केचित्तु पञ्चविधं पुराणलक्षणमाहुः—'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं चेति पुराणं पञ्चलक्षणम्' इति। ननु लक्षणद्वयं कथं सङ्गच्छते तत्राह महदल्पं पुराणं चेति व्यवस्थयेति। यत्र दशापि लक्षणानि पृथक् निरूप्यन्ते तन्महापुराणम्। यत्र त्वन्येषां पञ्चस्वेवान्तर्भावस्य विवक्षा तदल्पपुराणमिति व्यवस्थयेत्यर्थः ॥ १० ॥ सर्गादिस्वरूपं निरूपयति—अव्याकृतेत्यादिना। अव्याकृतस्य प्रधानस्य गुणानां क्षोभात् यो महान् तस्मात् यस्त्रिवृत् त्रिविधोऽहङ्कारस्तस्मात् भूतसूक्ष्माणां शब्दादितन्मात्राणामिन्द्रियाणां च तदर्थानां स्थूलानां पृथिव्यादिमहाभूतानां तद्देवतानां च सम्भवः सर्ग उच्यते ॥११॥ विसर्गं निरूपयति—पुरुषेति। पुरुषेण परमेश्वरेणानुगृहीतानामाहितसृष्टिसामर्थ्यानामेतेषां महदादीनां वासनामयः पूर्वकर्मवासना-प्रधानः योऽयं समाहारः सङ्घातभूतः चराचरशरीरात्मकः बीजाद्बीजमिव प्रवाहापन्नः स विसर्ग उच्यते ॥ १२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

किं तदित्यत्राह सर्गश्चेति दशभिः। सर्ग इति। अस्य विश्वस्य, सर्गश्च विसर्गश्च अथ वृत्तिश्च रक्षा च अन्तराणि चेतीत-रेतरद्वन्द्वः। चोऽप्यर्थे, तान्यपीत्यर्थः। वृत्तिरक्षाशब्दाभ्यां स्थानपोषणे उक्ते। अन्तराणि मन्वन्तराणि, वंशोऽन्वयः, वंशानुचरितं वंशभवानां चरितोक्तिः, वंशवंश्यानुचरितशब्दाभ्यामीशानुकथा उक्ता। ततो द्वयं मिलित्वैकं लक्षणम्। संस्था निरोधः, अनेनै-वात्यन्तिकप्रलयरूपा मुक्तिरप्युक्ता। हेतुः अत्र हेतुशब्देनोतय उक्ताः। अपाश्रयः ॥ ९ ॥ दशभिरिति। एभिः दशभिः लक्षणैः युक्तं, तद्विदः पुराणविदः पुराणं विदुः। महत् पुराणमिति जानन्तीत्यर्थः हे ब्रह्मन्, केचित् पञ्चविधं पञ्चलक्षणं पुराणं विदुः। तच्च द्वैविध्यं महदल्पव्यवस्थया बोध्यम्। 'अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः। मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः।' इति महापुराणलक्षणम्। 'सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च। वंशानुचरितं चैव पुराणं पञ्चलक्षणम्'। इति अल्पपुराण-लक्षणम् ॥ १० ॥ क्रमेण सर्गादीनां स्वरूपं निरूपयति। अव्याकृतस्य मूलप्रकृतेः, गुणानां सत्त्वरजस्तमसां क्षोभात् जातात् महतः, त्रिवृतः त्रिविधः अहमोऽहंकारः अभूत्, भूतान्याकाशादीनि च सूक्ष्माणि शब्दादीनि च इन्द्रियाणि श्रोत्रादीनि च अर्था वस्तूनि च तेषां संभवः उत्पत्तिः सर्गः उच्यते ॥ ११ ॥ विसर्गं निरूपयति। पुरुषेति। पुरुषेण परमपुरुषेणानुगृहितानामाहितसृष्टिसामर्थ्यानां एतेषां महदादीनां, वासनामयः पूर्वकर्मवासनाप्रधानः, योऽयं समाहारः संघातपरिणामः सः विसर्गः। कोऽसौ समाहारस्तं दर्शयति। बीजात् बीजं इव, प्रवाहापन्नं चराचरं चराचरात्मकं जगदेव तत्समाराह इत्यर्थः। बीजाद्बीजमिव कारणादव्याकृतान्महदादिक्रमेण चराचरात्मकं यत् कार्यं जातं, स विसर्ग इत्यर्थः ॥ १२ ॥

## हिन्दी अनुवाद

शौनकजी ! पुराणों के पारदर्शी विद्वान् लक्षण बतलाते हैं कि पुराणों के दस लक्षण हैं—विश्व-सर्ग, विसर्ग, वृत्ति, रक्षा, मन्वन्तर, वंश, वंशानुचरित, संस्था ( प्रलय ), हेतु ( ऊति ) और अपाश्रय। कोई-कोई आचार्य पुराणों के पाँच ही लक्षण मानते हैं। दोनों ही बातें ठीक हैं, क्योंकि महापुराणों में दस लक्षण होते हैं और छोटे पुराणों में पाँच। विस्तार करके दस बतलाते हैं और संक्षेप करके पाँच ॥ ९–१० ॥ ( अब इनके लक्षण सुनो ) जब मूल प्रकृति में लीन गुण क्षुब्ध होते हैं, तब महत्तत्त्व की उत्पत्ति होती है। महत्तत्त्वसे तामस, राजस और वैकारिक ( सात्त्विक )—तीन प्रकार के अहङ्कार बनते हैं। त्रिविध अहङ्कार से ही पञ्चतन्मात्रा, इन्द्रिय और विषयों की उत्पत्ति होती है। इसी उत्पत्ति-क्रम का नाम 'सर्ग' है ॥ ११ ॥ परमेश्वर के अनुग्रह से सृष्टि का सामर्थ्य प्राप्त करके महत्तत्त्व आदि पूर्वकर्मों के अनुसार अच्छी और बुरी वासनाओं की प्रधानता से जो यह चरा-चर शरीरात्मक जीव की उपाधि की सृष्टि करते हैं, एक बीज से दूसरे बीज के समान, इसी को विसर्ग कहते हैं ॥ १२ ॥

वृत्तिर्भूतानि भूतानां चराणामचराणि च । कृता स्वेन नृणां तत्र कामाच्चोदनयापि वा ॥ १३ ॥
रक्षाच्युतावतारेहा विश्वस्यानु युगे युगे । तिर्यङ्मर्त्यर्षिदेवेषु हन्यन्ते यैस्त्रयीद्विषः ॥ १४ ॥
मन्वन्तरं मनुर्देवा मनुपुत्राः सुरेश्वरः । ऋषयोंऽशावताराश्च हरेः षड्विधमुच्यते ॥ १५ ॥
राज्ञां ब्रह्मप्रसूतानां वंशस्त्रैकालिकोऽन्वयः । वंशानुचरितं तेषां वृत्तं वंशधराश्च ये ॥ १६ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—चराणां भूतानाम् अचराणि च (चराणि) वृत्तिः तत्र नृणां स्वेन कामात् चोदनया वा कृता ॥ १३ ॥ युगे युगे अनु तिर्यङ्मर्त्यर्षिदेवेषु अच्युतावतारेहा विश्वस्य रक्षा यैः त्रयीद्विषः हन्यन्ते ॥ १४ ॥ मनुः देवाः मनुपुत्राः सुरेश्वरः ऋषयः अंशावताराः हरेः षड्विधं मन्वन्तरम् उच्यते ॥ १५ ॥ ब्रह्मप्रसूतानां राज्ञां त्रैकालिकः अन्वयः वंशः (तेषां) ये वंशधराः तेषां वृत्तं वंश्यानुचरितम् ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चराणां भूतानां सामान्यतोऽचराणि । चकाराच्चराणि च वृत्तिः । तत्र नृणां स्वेन स्वभावेन कामाच्चोदनयाऽपि वा या नियता वृत्तिर्जीविका कृता सा वृत्तिरुच्यत इत्यर्थः ॥ १३ ॥ तिर्यङ्मर्त्यर्षिदेवेषु येऽच्युतावतारास्तेषामीहा लीला सा विश्वस्य रक्षोच्यत इत्यर्थः । यैरवतारैरिति समासान्निष्कृष्य कथंचित्संबंधः । त्रयीद्विषो दैत्याः ॥ १४ ॥ षड्विधं मन्वंतरमुच्यते । षड्विधत्वमेवाह । मनुरिति । मन्वादयः षडेते वर्गाः स्वस्वाधिकारेण यदा प्रवर्तंते तन्मन्वंतरमित्यर्थः ॥१५॥ वंशमाह । राज्ञामिति । ब्रह्मणः सकाशात्प्रसूतिर्येषां शुद्धानामित्यर्थः । तेषामन्वयो वंशः तेषां वृत्तम् । ये च तद्वंशधरास्तेषां च वृत्तं वंशानुचरितमुच्यते ।१६।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत्र सर्वजीवेषु । स्वभावेन व्रीह्यादीनि कामनया, फलादीनि चोदनया, विधिना पुरोडाशादीनि । इत्यर्थ इति—न तु सामान्यतोऽभक्ष्यभक्षणमपीति भावः । तत्र काम्या वृत्तिर्गर्ह्या, मांसाशनलशुनपलांड्वादिष्वपि तद्गुणश्रवणेन कामनोत्पत्तेः ॥ १३ ॥ इत्यर्थ इति—न तु गवाश्वादिरक्षणमात्रमेव रक्षापदार्थ इति भावः । अवतारेहाऽवतारकारणं सैव रक्षा । कुत इत्यत आह—यैरिति । समासान्निष्कृत्य कथंचिदगत्या । यथा—"भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम्" इत्यत्र प्रमुखत इत्यस्य विवक्षावशान्महीक्षितामित्यनेन संबंधस्तद्वदत्रापि । यद्वा—"यस्यैते राजमातंगास्तस्यैवैते तुरंगमाः" इति बुद्धिस्थग्राहकत्वमपि त्यदादीनामिति ज्ञेयम् । हन्यत इति—दुष्टनिग्रहात्स्वभक्तरक्षणमेव रक्षेत्यागतम् । उपलक्षणमेतदन्यदापि महाभयात्स्वभक्तरक्षणं रक्षोच्यतेऽत एव षष्ठेऽजामिलादिभक्तानां रक्षोक्ता ॥ १४ ॥ इत्यर्थ इति—एषां प्रवृत्तिकाल एव मन्वंतरमिति भावः ॥ १५ ॥ इत्यर्थ इति—इदं चकारेण ज्ञेयमिति भावः । वृत्तं शीलम् । तद्वंशधराः प्रियव्रतध्रुवपृथ्वादयः ॥ १६ ॥

### अन्वितार्थप्रकाशिका

पूर्वोक्तं स्थानं पालनमेवात्र वृत्तिशब्देनोच्यते तां व्याचष्टे—वृत्तिरिति । चराणां भूतानां सामान्यतः अचराणि व्रीहिफलादीनि चकारात् चराणि गोमहिषीवृषादीनि च जीविकासाधनं वृत्तिरित्युच्यते । तत्रापि नृणां स्वेन स्वभावेन कामात् तथा चोदनया शास्त्रविध्यनुसारेण वा कृता जीविका वृत्तिर्भवति । तेषां चराणामाश्रयः सर्वैव पृथ्वीति वृत्तिप्रसङ्ग एव भूगोलचक्रं पञ्चमस्कन्धे निरूपितम् ॥ १३ ॥ रक्षेति युग्मम् । युगे युगे तिर्यङ्मर्त्यर्षिदेवेषु येऽच्युतावतारास्तेषां या ईहा लीला सा विश्वस्य रक्षोच्यते । यैरवतारैः इति उपसर्जनभूतस्याप्यवतारस्य परामर्शः प्रकरणबलात् त्रयीद्विषो वेदविरोधिनः असुराः हन्यन्त इति अतो दुष्टनिग्रहात् स्वभक्तरक्षणमेव रक्षेत्यर्थः । उपलक्षणमेतत् । अजामिलादीनामभक्तानां रक्षापि रक्षोच्यते । मनुरित्यादिषड्विधं मन्वन्तरमुच्यते । एते मन्वादयः षड्वर्गाः स्वस्वाधिकारे यदा प्रवर्त्तन्ते स कालः मन्वन्तरमित्युच्यत इत्यर्थः ॥१४–१५॥ राज्ञामिति । ब्रह्मणः सकाशात् प्रसूतिर्येषां तेषां शुद्धानां राज्ञां यस्त्रैकालिकोऽन्वयः स वंश इत्युच्यते । तेषां मध्ये ये वंशधराः राज्यवंशादिनिर्वाहकास्तेषां वृत्तं वंश्यानुचरितमुच्यते । एतद्द्वयमपि पूर्वमीशकथायामन्तर्भावितम् ॥ १६ ॥

१. राः ।

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

वृत्तिरिति। चराणां भूतानाम् अचराणि भूतानि वृत्तिर्जीवनोपाय इत्यर्थः। कृतेति सा च वृत्तिः केवलं रागप्राप्ता शास्त्राविरुद्धा चेत्यर्थः॥ १३॥ अवतारेहा अवतारचेष्टा यैः अवतारैः॥ १४॥ मन्वन्तरमेव मन्वादिभिः षड्विधं वंशधराः पुत्रपौत्रादयः॥ १५–१८॥

## श्रीमद्वीरराघवव्याख्या

वृत्तिं निरूपयति–वृत्तिरिति। चराणां भूतानामचराणि भूतानि वृत्तिर्जीवनोपाय इत्यर्थः। सा चेशेनेश्वरेण कृता सा च नृणां कामाद्रागात्तत्रापि चोदनया विधिना न केवलं रागप्राप्ता शास्त्राविरुद्धा चेत्यर्थः। कृता स्वेनेतिपाठे स्वेनेश्वरेणैव कृतेत्यर्थः॥१३॥ अथ रक्षामाह—प्रतियुगं तिर्यगादिष्वच्युतस्यावतारस्तच्चेष्टा विश्वस्य रक्षेत्यर्थः। अवतारतच्चेष्टितानां विश्वरक्षारूपत्वं दर्शयति, हन्यन्त इति। यैरवतारचेष्टितैस्त्रयीद्विषः वैदिकधर्मविरोधिनः हन्यन्ते॥ १४॥ अन्तराणि लक्षयति, मन्वन्तरमिति। षड्विधं मन्वन्तरमुच्यते इति सम्बन्धः। मन्वादयः षडेते यत्र तन्मन्वन्तरम् उच्यतेत्यर्थः। षड्विधत्वमेवाह, मनुरिति। हरेरंशावताराश्चेति सम्बन्धः सुरेश्वरा इन्द्राः॥ १५॥ वंशमाह–राज्ञामित्यर्द्धेन। मनोः प्रसूतानां राज्ञां यः त्रैकालिकः कालत्रयगोचरोऽन्वयः स वंशः इत्यर्थः। तदनुचरितमेवाह, वंशानुचरितमिति। ये च वंशधराः वंशनिर्वाहकाः तेषां वृत्तं वंशानुचरितम् उच्यत इत्यर्थः॥ १६॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पञ्चानां भूतानां पञ्चभूतान्येवान्योन्यं वृत्तिर्जीवनमन्नमित्यर्थः। तेजोवृत्तिः पार्थिवानि दारूणीत्यादि। यद्वा, भूतानां पिशाचानां भूतानि मनुष्यलोकस्थानि शरीररुधिराणि 'पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः' इत्यमरः। चराणां गतिमताम् अचराणि स्थावरतुल्यानि व्रीह्यादीनि वृत्तिः ईशेन हरिणा कृता कल्पिता—

'अहस्तानि सहस्तानां सहस्तानां सहस्तानि चतुष्पदाम्। अणूनि तात! महतां जीवो जीवस्य जीवनम्'॥

इत्युक्तम्। तत्रैवं स्थितिर्नृणां वृत्तिः कामादिच्छातः फलमूलादीनि चोदनया विधिना तत्तत्क्रियानुसारेण विहिता चरुपुरोडाशादिलक्षणा॥ १३॥ युगेयुगे विश्वस्य अनुयोग्या अच्युतावतारेहा हरेरवतारेण चेष्टापरिरक्षणं रक्षा 'यदा यदा हि धर्मस्य' इति गीतायां कुत्रेति तत्राह–तिर्यगिति। यैरवतारैस्त्रयीद्विषः वेदवैरिणोऽसुरा हन्यन्ते तेषां चरितवर्णनं रक्षणमित्यर्थः। 'स्थितिर्वैकुण्ठविजयः' इति पोषणं तदनुग्रह इति च॥ १४॥ एतन्मन्वन्तरं षड्विधमुच्यते षण्णां कथाकथनं मन्वन्तरमित्यर्थः। तत्रांशकानामिति शेषः। मन्वन्तरेषु तद्धर्मा इति मन्वादिधर्मकथनमित्यर्थः॥ १५॥ मनुप्रसूतानां राज्ञामन्वयो वंश इत्युच्यते कीदृशस्त्रैकालिको भूतभविष्यद्वर्तमानविषयः एतत्कथनमत्रेति वंशस्यानुचरितं नाम तेषां राज्ञां वृत्तिकथनं ये वंशधरा उत्सन्नवंशं धृतवन्तस्तेषां च वृत्तम्॥ १६॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ब्रह्मप्रसूतानां ब्रह्मत आरब्धानामित्यर्थः॥ १६॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

पूर्वोक्तं स्थानं पालनमेवात्र वृत्तिशब्देनोच्यते तां व्याचष्टे वृत्तिरिति। चराणां भूतानां सामान्यतोऽचराणि चकाराचराणि च कामाद्वृत्तिः तत्र नृणां स्वेन स्वभावेन कामात् चोदनयापि वा या नियता वृत्तिर्जीविका कृता सा वृत्तिरुच्यत इत्यर्थः। तेषां चराचराणान्त्वाश्रयः सर्वैव पृथ्वीति वृत्तिप्रसङ्ग एव भूगोलचक्रं पञ्चमस्कन्धे निरूपितम्॥ १३॥ 'पोषणं तदनुग्रहः' इति पूर्वलक्षितं पोषणमेवात्र रक्षाशब्देनोच्यते तां व्याचष्टे–रक्षेति। तिर्यगादिषु या अच्युतस्यावतारेहा अवतारकरणं सैव रक्षा कुत इत्यत आह, यैरवतारैस्त्रयीद्विषो हन्यन्ते इत्यतो दुष्टनिग्रहात् स्वभक्तरक्षणमेव रक्षेत्यर्थ आयातः। उपलक्षणमेतदन्यदापि महाभयात् स्वभक्तरक्षणं रक्षोच्यते अत एव षष्ठे अजामिलादिभक्तानां रक्षोक्ता॥ १४॥ मन्वन्तराणि सद्धर्म इति पूर्वलक्षितं मन्वन्तरं व्याचष्टे–मन्वन्तरमिति। विदधति स्वस्वकृत्यं कुर्वन्तीति विधा मन्वादयस्ते षट् यत्र तत् षड्विधं षडङ्गमित्यर्थः। मन्वादयः षडेते स्वस्वाधिकारेण यत्र प्रवर्त्तन्ते तन्मन्वन्तरमित्यर्थः॥ १५॥ वंशं व्याचष्टे राज्ञामिति। ब्रह्मणः सकाशात् प्रसूतिर्येषां तेषामन्वयो वंशः वंशानुचरितं व्याचष्टे—तेषां मध्ये ये वंशधराः प्रसिद्धाः प्रियव्रतध्रुवपृथ्वादयस्तेषां वृत्तं चरित्रं वंशानुचरितमुच्यते एतद्वयं पूर्वमंशानुकथायामेवान्तर्भावितम्॥ १६॥

### श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

वृत्तिं विवृणोति—वृत्तिरिति। चराणामचराणि चकाराच्चराण्यपि स्वेन स्वकीयेन कर्मफलदात्रा कृता वृत्तिर्ज्ञेया तत्र नृणां कामात् रागतः चोदनयापि वा प्रवृत्तिरिति शेषः ॥ १३ ॥ रक्षां विवृणोति—रक्षेति। अच्युतावतारशब्दस्येहाशब्देन समासः छन्दोभङ्गभयात्कृतः पादयोजनायान्तु समासो विवक्षितः तथा च अनु युगेयुगे प्रतियुगं तिर्यङ्मर्त्यादिषु वर्तमानैः यैरच्युतावतारैः त्रयीद्विषः हन्यन्ते तेषामच्युतावताराणां ईहा लीला अस्य विश्वस्य रक्षेति पदयोजना ॥ १४ ॥ अन्तराणि एकमन्वन्तरकथनेन विवृणोति—मन्वन्तरमिति ॥ १५ ॥ वंशं वंश्यानुचरितं च विवृणाति—राज्ञामिति। ब्रह्मणः सकाशात् प्रसूतिर्येषां तेषां राज्ञां त्रैकालिकोऽन्वयः वंशः तत्र भवा वंशधराः वंश्याः तेषां वृत्तं वंश्यानुचरितम् एतदुभयमीशानुकथेत्युच्यते ॥ १६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

वृत्तिं निरूपयति—वृत्तिरिति। चराणा भूतानां सामान्यतः अचराणि व्रीहिफलादीनि चकारात् चराणि गोमहिषीवृषादीनि च जीविकासाधनं वृत्तिरुच्यते। तत्रापि नृणां स्वेन स्वभावेन कामात्। तथा चोदनया शास्त्रविध्यनुसारेण वा कृता वृत्तिर्भवति ॥ रक्षां निरूपयति—युगे युगे तिर्यगादिषु येऽच्युतावतारास्तेषामीहा लीलाश्च सा विश्वस्य रक्षोच्यते। रक्षामेव स्पष्टयति—यैरवतारैस्तच्चेष्टितैः त्रयीद्विषो वेदविरोधिन आसुरा हन्यन्त इति ॥ १४ ॥ मन्वन्तरं निरूपयति—षड्विधं मन्वन्तरमुच्यते—षड्विधत्वमेवाह—मनुरिति। एते मन्वादयः षड्वर्गाः स्वस्वाधिकारे यदा प्रवर्त्तन्ते स कालः, मन्वन्तरमित्युच्यत इत्यर्थः ॥१५॥ वंशमाह—राज्ञामिति। ब्रह्मणः सकाशात् प्रसूतिर्येषां तेषां शुद्धानां राज्ञां यस्त्रैकालिकोऽन्वयः स वंश इत्युच्यते। तेषां मध्ये ये वंशधराः राज्यवंशादिनिर्वाहकास्तेषां वृत्तं वंश्यानुचरितमुच्यते ॥ १६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

वृत्तिं निरूपयति। वृत्तिरिति। चराणां भूतानां अचराणि भूतानि च, वृत्तिर्जीवनोपायः। तत्र नृणां सा च काचित् स्वेन कामात् अपि कृता। काचित् चोदनया वा कृता। स्वेन कामात् कृता अहितावहा नोदनयेश्वराज्ञया कृता च हितावहेत्यर्थः। तत्र कामकृतवृत्तौ विधिप्राप्तवृत्तौ च हिंसादिप्रधाना नरकायान्येहामुत्रसुखायेति पूर्वं प्रपञ्चितमस्ति ॥ १३ ॥ अथ रक्षामाह। रक्षेति। अनुयुगे युगे प्रतियुगमित्यर्थः। यैरवतारतच्चेष्टितैः, त्रयीद्विषः वैदिकधर्मविरोधिनः हन्यन्ते, तथाभूता तिर्यङ्मर्त्यर्षिदेवेषु ताः अच्युतावतारेहाः अच्युतस्य अवताराः तच्चेष्टाश्चेत्यर्थः। विश्वस्य रक्षा उच्यते। अनेन भगवदवतारतच्चेष्टितानां च विश्वरक्षारूपत्वं दर्शितम् ॥ १४ ॥ अन्तराणि लक्ष्यति। मन्वन्तरमिति। मनुः, देवाः, मनुपुत्राः, सुरेश्वर इन्द्रः, ऋषयः सप्तर्षयः, हरेः अंशावतारश्च, इत्येतत् षड्विधं मन्वन्तरं उच्यते। मन्वादयः षडेते यत्र तन्मन्वन्तरमित्यर्थः ॥ १५ ॥ वंशमाह राज्ञामित्यर्द्धेन। राज्ञामिति मनोः प्रसूतानां राज्ञां, यः त्रैकालिकः कालत्रयरचितः अन्वयः सः वंशः। उक्तः इति शेषः। ब्रह्मप्रसूतानामिति पाठे, ब्रह्मणः सकाशात् प्रसूतिर्येषां तेषां राज्ञां, अन्वयः वंशः, वंश्यानुचरितमेवाह। ये च वंशधराः वंशनिर्वाहकाः तेषां वृत्तं वंश्यानुचरित, उच्यते इति शेषः ॥ १६ ॥

### हिन्दी अनुवाद

चर प्राणियों की अचर-पदार्थ 'वृत्ति' अर्थात् जीवन-निर्वाह की सामग्री है। चर प्राणियों के दुग्ध आदि भी। इनमें से मनुष्यों ने कुछ तो स्वभाववश कामना के अनुसार निश्चित कर ली है और कुछ ने शास्त्र के आज्ञानुसार ॥ १३ ॥ भगवान् युग-युग में पशु-पक्षी, मनुष्य, ऋषि, देवता आदि के रूप में अवतार ग्रहण करके अनेकों लीलाएँ करते हैं। इन्हीं अवतारों में वे वेदधर्म के विरोधियों का संहार भी करते हैं। उनकी यह अवतार-लीला विश्व की रक्षा के लिये ही होती है, इसीलिये उसका नाम 'रक्षा' है ॥ १४ ॥ मनु, देवता, मनुपुत्र, इन्द्र, सप्तर्षि और भगवान् अंशावतार—इन्हीं छः बातों की विशेषता से युक्त समय को 'मन्वंतर' कहते हैं ॥ १५ ॥ ब्रह्माजी से जितने राजाओं की सृष्टि हुई है उनको भूत, भविष्य और वर्तमानकालीन सन्तानपरम्परा को 'वंश' कहते हैं। उन राजाओं के तथा उनके वंशधरों के चरित्र का नाम 'वंशानुचरित' है ॥ १६ ॥

नैमित्तिकः प्राकृतिको नित्य आत्यन्तिको लयः। संस्थेति कविभिः प्रोक्ता चतुर्धास्य स्वभावतः ॥ १७ ॥
हेतुर्जीवोऽस्य सर्गादेरविद्याकर्मकारकः। यं चानुशयिनं प्राहुरव्याकृतमुतापरे ॥ १८ ॥
व्यतिरेकान्वयो यस्य जाग्रत्स्वप्नसुषुप्तिषु। मायामयेषु तद् ब्रह्म जीववृत्तिष्वपाश्रयः ॥ १९ ॥
पदार्थेषु यथा द्रव्यं सन्मात्रं रूपनामसु। बीजादिपञ्चतान्तासु ह्यवस्थासु युतायुतम् ॥ २० ॥

## कृष्णप्रिया व्याख्या

अन्वयः—नैमित्तिकः प्राकृतिकः नित्यः आत्यन्तिकः अस्य स्वभावतः चतुर्धा कविभिः संस्था इति प्रोक्ता ॥ १७ ॥ अविद्याकर्मकारकः ( जीवः ) अस्य सर्गादेः हेतुः यम् अनुशायिनम् अपरे अव्याकृतम् उत वा प्राहुः ॥ १८ ॥ जाग्रत्स्वप्नसुषुप्तिषु जीववृत्तिषु मायामयेषु यस्य व्यतिरेकान्वयः तत् ब्रह्म अपाश्रयः ( उच्यते ) ॥ १९ ॥ रूपनामसु पदार्थेषु सन्मात्रं द्रव्यं यथा ( युतायुतं ) बीजादिपञ्चतान्तासु अवस्थासु युतायुतं ( तद्ब्रह्म ) अपाश्रयः ॥ २० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अस्य विश्वस्य । स्वभावतो मायातो निष्पन्नस्य । यद्वा मायातो यश्चतुर्विधो लय इति ॥ १७ ॥ अस्य जगतः सर्गादेर्हेतुर्निमित्तं जीवः । सोऽत्र हेतुरुच्यत इत्यर्थः । तस्य निमित्ततामाह । अविद्यया कर्मकारकः कर्मकर्ता । जीवादृष्टप्रयुक्तत्वाद्विश्वसर्गादेः स तु तत्र हेतुरित्यर्थः । नन्वनुशायी निमित्तमिति केचित् । अव्याकृतमित्यपरे । तत्राह । यमिति । चैतन्यप्राधान्येनानुशयिनमुपाधिप्राधान्यविवक्षयाऽव्याकृतम् ॥ १८ ॥ अपाश्रयमाह । व्यतिरेकेति । जाग्रदादिष्ववस्थासु जीवतया वर्तंत इति जीववृत्तयो विश्वतैजसप्राज्ञास्तेषु मायाभयेषु साक्षितयाऽन्वयः समाध्यादौ च व्यतिरेको यस्य तद्ब्रह्म संसारप्रतीतिवाधयोरधिष्ठानावधिभूतमपाश्रय उच्यत इत्यर्थः ॥ १९ ॥ एतदेव सदृष्टांतं प्रपंचयति । पदार्थेषु घटादिषु द्रव्यं मृदादि यथा युतमन्वितमयुतं च बहिरप्यवस्थानात् । रूपनामसु च सन्मात्रं सत्तामात्रं यथा । एवं बीजं गर्भाधानमादि यासां पंचतांतो यासां तासु देहावस्थासु नवस्वप्यधिष्ठानत्वेन साक्षित्वेन च युतमयुतं च यत्तदपाश्रय इति ॥ २० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्वस्यैव शक्तिरूपेण भवनं स्वभावो माया न केवलं मायातो लय एव किन्तु प्रलयोऽपीत्याह—यद्वेति । 'अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव' इति श्रीमुखोक्तेः ॥ १७ ॥ इत्यर्थ इति—जीव एव स्वकर्मद्वारा सृष्टिकारणमिति भावः । तस्य जीवस्य । इत्यर्थ इति—जीवसमुदायसुखदुःखप्राप्तये तं हेतुं कृत्वा जगतः सृष्ट्यादिकमस्तीति भावः । अत्राशंकते—नन्विति । यं जीवम् । उपाधिः प्रकृतिः । चक्रवर्तिकारस्तु—अस्य सर्गादेर्जीवः कारणं स चाविद्यया कर्म कर्ता जीवार्थमेव भगवता विश्वस्य कृतत्वाज्जीवो निमित्तमिति भावः । अत एव यमनुशयिनं मायिकोपाधिमनुशयानं मायिकशरीरवरमेवैके प्राहुः । अपरभक्तास्तु—आविद्यककर्मकर्तारं जीवं साधुसंगवशाद्भक्तिमार्गस्थत्वे सति अव्याकृतं चिन्मयपार्षदशरीरवन्तमप्याहुः । अप्यर्थे उत् शब्दः । तदुक्तं नारदेन—'शुद्धां भागवती तनुम् । आरब्धकर्मनिर्वाणो न्यपतत्पांचभौतिकः' इति । वेदस्तवारंभेपि—'बुद्धीन्द्रियमनःप्राणाञ्जनानामसृजत्प्रभुः । मात्रार्थं च भवार्थश्च आत्मने कल्पनाय च' । इति । आत्मनेऽकल्पनाय बुद्धीन्द्रियमनःप्राणान्संप्रापयितुमिति तत्रार्थः । एतन्मत एव नवमं लक्षणं पूर्वत्रोक्तम् । 'मुक्ति र्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिः' इति विशेषेण चिद्घनशरीरत्वेनावस्थितिरिति तत्र व्याख्येति विश्वनाथः ॥ १८ ॥ समाध्याद्यादिना मूर्च्छाग्रहः । समाधौ स्वरूपावस्थानेन मूर्च्छायां प्रतीत्यभावेन च व्यतिरेकः ॥ १९ ॥ एतदेवाऽन्वयव्यतिरेकत्वमेव । रूपनामस्विति—समीपस्थे मेरुरयमित्युक्ते मेरुरूपे सत्तान्वयः, दूरस्थेन मेरुरित्युक्ते तु मेरुदर्शनाभावान्मेरुनाम्न्येव सत्तान्वयः । यद्वा—रूपनामयुक्तेषु पदार्थेष्विति योज्यम् । नवावस्थास्तु—'निषेकगर्भजन्मानि बाल्यकैशोरयौवनम् । वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव' । इत्येकादशस्कंधे स्वयं भगवतैवोक्ताः । अधिष्ठानत्वेन युतं साक्षित्वेनायुतम् ॥ २० ॥

## अन्वितार्थप्रकाशिका

नैमित्तिक इति । स्वभावतः मायातो निष्पन्नस्य कालकर्मगुणाधीनत्वात् अस्य विश्वस्य यो नैमित्तिकादिचतुर्धा लयः । यद्वा । मायातो यश्चतुर्धा लय इति स संस्थेति कविभिः प्रोक्तः ॥ १७ ॥ हेतुरिति । यः अविद्यया मोहितः कर्मकारकः कर्मकर्ता तत्कर्मप्रयुक्तत्वात्स जीव एवास्य विश्वस्य सर्गादेर्हेतुः । नन्वनुशायी निमित्तमिति केचित् । अव्याकृतमित्यपरे । तत्राह । कर्मकर्तृत्वादेव चैतन्यप्राधान्यविवक्षया यं जीवमनुशयिनमाहुः । अनुशयः अभुक्तफलकर्मविशेषस्तद्वाननुशयी । उत त्वर्थे । अपरे तु उपाधिप्राधान्यविवक्षया सृष्टेः पूर्वं नामरूपविशेषाकृतिरहितत्वात् यमव्याकृतमाहुः ॥ १८ ॥ व्यतिरेकेति । जाग्रदादिष्ववस्थासु जीवतया वर्तन्त इति जीववृत्तयो विश्वतैजसप्राज्ञास्तेषु वृत्तिषु मायामयेषु अविद्याकल्पितेषु यस्य साक्षितया कारणतया चान्वयः समाध्यादौ च व्यतिरेकस्तत्पृथक्तया स्वरूपेणावस्थानं च तद्ब्रह्म संसारप्रतीतिबाधयोरधिष्ठानमवधिभूतम् अपाश्रय उच्यते । यद्वा । जाग्रदादिष्ववस्थासु तथा मायामयेषु सर्वेषु पदार्थेषु यस्य हेतुतयाऽन्वयः तेभ्यः व्यतिरेकश्चेति ॥ १९ ॥ पदार्थेष्विति । रूपनामसु स्वरूपनामवत्सु पदार्थेषु कार्येषु घटादिषु सन्मात्रं कारणं द्रव्यं महदादि यथा युतमयुतं तद्व्यतिरेकेणावस्थितं च एवं बीजं गर्भाधानमादिर्यासां पञ्चतामरणमन्ते च यासां तासु देहावस्थास्वप्यधिष्ठानत्वेन साक्षित्वेन कारणत्वेन च युतमयुतं च यद्ब्रह्म तदपाश्रयः ।२०।

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

व्यतिरेकेति। मायामयेषु प्रकृतिसम्बन्धः कार्येषु जाग्रदाद्यवस्थाविशेषेषु यस्य ब्रह्मणो जीववृत्त्या अन्वयव्यतिरेकौ अवस्थानिर्वाहकतया अवस्थानादन्वयः अवस्थाभिरस्पृष्टत्वात् व्यतिरेकः सर्वाधारत्वात् व्यपाश्रय इत्यर्थः॥ १९॥ ब्रह्मणस्तत्तच्चिद्-चिद्विशिष्टस्वरूपेण सर्वावस्थान्वयः। स्वेन रूपेण ताभिर्व्यतिरेकश्चेत्युक्तं भवति। पदार्थेष्विति बीजादिपञ्चतान्तासु जन्मादिविशा-रणान्तावस्थानामरूपान्वितेषु घटपटादिपदार्थेषु द्रव्यमात्रं जन्माद्यवस्थाभिः युतायुतं द्रव्यं घटत्वादि विशिष्टरूपेण जन्मादियुतं तद्विग्रहाणदशायां विशेष्यमात्ररूपेण जन्मादिरहितत्वं तद्वदित्यर्थः। नहि कटकविनाशे कनकोत्पत्तिविनाशः॥ २०॥

## श्रीमद्वीरराघवव्याख्या

संस्थामाह, नैमित्तिक इति। स्वभावतः कालकर्मस्वभावादस्य विश्वस्य सर्गादेः चतुर्द्धा चतुर्विधः नैमित्तिकादिरूपो लयः संस्थेति कविभिः प्रोक्तः॥ १७॥ हेतुं निरूपयति, हेतुरिति। अविद्याकर्मकारकः अज्ञानमूलकं पुण्यापुण्यात्मकं कर्म करोतीति तथा स जीवः एकत्वे जात्यभिप्रायकमर्हं अस्य विश्वस्य सर्गादेर्हेतुर्जीवस्य कर्मफलानुभावार्थत्वात्सर्गादेस्तन्निमित्तत्वं तस्यातः स हेतु-रित्यर्थः। हेतुत्वख्यपनाय जीवं विशिनष्टि, यमिति। अनुशयो भुक्तफलकर्मावशेषः सोऽस्यास्तीति अनुशयी तथाभूतं यं जांवं प्राहुः भुक्तावशेषकर्मवासनाप्रयुक्तं प्राहुः उतापि चापरेयमव्याकृतं देवादिनामरूपरहितं प्राहुः सृष्टेः पूर्वं देवादि [ वासना ] नाम-रूपरहितं प्राहुः सृष्टेः पूर्वं देवादिनामरूपरहिता वासनायुक्ताः जीवा अस्य सर्गादेर्निमित्तामिति सहेतुरित्यर्थः॥ १८॥ अथापाश्रय-माह—द्वाभ्याम्। व्यतिरेकान्वयाति मायामयेषु प्रकृतिकार्येषु शरीरेषु जाग्रदादिषु जीवस्य वृत्तिषु यस्यान्वयव्यतिरेकौ तद्ब्रह्मा-पाश्रयः सर्वाधारत्वादपाश्रय इत्युच्यत इत्यर्थः ब्रह्मणो जीववृत्तिनिर्वाहकतयाऽवस्थानात्तास्वान्वयः। अवस्थाभिरपृष्टत्वाद्व्यतिरेकश्च भवति, ब्रह्मणस्तत्तच्चिदचिद्विशिष्टतारूपेण सर्वावस्थान्वयः स्वेन रूपेण ताभिर्व्यतिरेकश्चेत्युक्तं भवति॥ १९॥ अत्र दृष्टान्तमाह—पदार्थेष्विति। बीजादिपञ्चत्वान्तास्ववस्थासु जन्मादिविनाशान्तासु अवस्थासु रूपनामसु नामरूपवत्सुपदार्थेषु घटपटादिषु यद्द्रव्यं तन्मात्रं तद्द्रव्यमात्रं जन्माद्यवस्थाभिर्युतायुतं तत्वादिविशिष्टतारूपेण जन्मादियुतं तत्प्रहाणदशाय विशेष्यमात्ररूपेण जन्मादिरहितं च तद्वदित्यर्थः॥ २०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्य जगतः स्वभावतश्चतुर्धा लयः संस्थेति कविभिः प्रोक्ता॥ १७॥ यं च प्रलये परमात्मानमनुविश्य शायिनं स्वपन्त-माहुः अपरे अव्याकृतम् अव्याकृताकाशवन्निर्विकारं प्राहुः सोऽविद्यया कर्मकारकः कर्मकर्ता अस्य जगतः सर्गादिनिमित्तभूतो जीवो हेतुरित्युच्यते जीवसमुदायः सुखदुःखप्राप्तये तं हेतुं कृत्वा जगतः सृष्ट्यादिकं प्रवर्तत इति "निरोधोऽस्यानुशयनमात्मनः सह-शक्तिभिः" इति॥ १८॥ अपाश्रयं लक्ष्यति—व्यतिरेकान्वयाविति। अपगत आश्रयो यस्य स तथा अद्वितीय इत्यर्थः। अद्वितीयत्वं कथमुच्यते अन्वयव्यतिरेकाभ्यां ज्ञायत इति यस्य हरेर्जीववृत्तिषु जीवानां जीवनोपायभूतासु जाग्रत्स्वप्नसुषुप्तिषु व्यतिरेकान्वयौ स्तः जाग्रदाद्यभावेपि विद्यत इति व्यतिरेकः तद्भावेऽप्यस्तीत्यन्वयः। मायामयीसु श्रीहरीच्छारचितासु तद्ब्रह्मव्यपाश्रय इत्युच्यते॥१९॥ प्रकारान्तरेण आश्रयं लक्षयति—पदार्थेष्विति। रूपनामयुक्तेषु पदार्थेषु तद्द्रव्यमुपादानादिकारणभूतं प्रकृत्याख्यन्तन्मात्रं पदार्थस्वरूपं तस्मिन् द्रव्ये बीजादिपञ्चतान्तासु जन्मादिमरणावसानास्वस्थासु युतायुतम् अन्वयव्यतिरेकाभ्यां यद्वर्तते तद्ब्रह्मापाश्रयम् यद्वा, रूपनामप्रपञ्चपदार्थेषु युतायुतमन्वयव्यतिरेकलक्षणानुमानेन यत्तन्मात्रं विज्ञानानन्दमात्रं द्रव्यं द्रुतं ज्ञेय यत् बीजत्वाद्यवस्थासु वस्तुनः पञ्चत्वावसानलक्षणावस्थासु युतायुतं वर्तते तद्ब्रह्मेति॥ २०॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

स्वभावतो मायाख्यस्वाभाविकशक्तितः॥ १७–२२॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

पूर्वोक्तनिरोधशब्दवाच्यां संस्थां व्याचष्टे—नैमित्तिक इति। अस्य विश्वस्य स्वभावतः स्वस्य भावेषु कारणेषु पृथिव्यादि-तत्त्वेषु क्रमेण लयः संस्थोच्यते॥ १७॥ हेतुं व्याचष्टे—अस्य जगतः सर्गादेर्हेतुर्निमित्तं जीवः सच अविद्याकर्मकारकः अविद्यया कर्मकर्त्ता जीवार्थमेव भगवता विश्वस्य सर्गादेः कृतत्वात् जीवो निमित्तमिति भावः। अत एव यम् अनुशयिनं मायिकोपाधिमनुशा-यानं मायिकशरीरवन्तमेवैके प्राहुः अपरे भक्तास्तु अविद्यककर्म कर्त्तारं जीवं साधुसङ्गवशाद्भक्तिमार्गस्थत्वे सति अव्याकृतम् अप्राकृतं चिन्मयपार्षदशरीरवन्तमपि प्राहुः अप्यर्थे उतशब्दः यदुक्तं नारदेन—

"प्रयुज्यमाने मयि तां शुद्धां भगवतीं तनुम्। आरब्धकर्मनिर्वाणो न्यपतत्पाञ्चभौतिकः" ॥ इति।

अत एवोक्तं वेदस्तवारम्भे—

बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः। मात्रार्थं च भवार्थञ्च आत्मने कल्पनाय च ॥ इति ॥

आत्मने कल्पनाय बुद्धीन्द्रियमनःप्राणान् संप्रापयितुमिति तत्रार्थः एतन्मत एव नवमं लक्षणं पूर्वोक्तं "मुक्तिर्हित्वाऽन्यथा रूपं स्वरूपेण व्यवस्थितिः" इति विशेषेण चिद्घनशरीरत्वेनावस्थितिरिति तत्र व्याख्या ॥ १८ ॥ अपाश्रयं व्याचष्टे—व्यतिरेकेति। जाग्रत्स्वप्नसुषुप्तिष्ववस्थासु तथा मायामयेषु सर्वेष्वेव पदार्थेषु यस्य हेतुतया अन्वयः तेभ्यो व्यतिरेकश्च तद्ब्रह्माऽपाश्रय उच्यते ॥१९॥ एतदेव सदृष्टान्तं प्रपञ्चयति—पदार्थेषु घटादिषु द्रव्यं मृदादियथायुतम् अन्वितम् अयुतं च बहिरवस्थानात् रूपनामसु वाच्यवाचकवस्तुषु यथा तन्मात्रं [ गर्भादिकञ्च ] तन्मात्रकारणं तामसाहङ्कारश्च तथैव बीजादिपञ्चतान्तासु बीजगर्भाधानमादियासा पञ्चता अन्तो यासां तासु देहावस्थासु अधिष्ठितत्वेन साक्षित्वेन च युतमयुतं च यत्तदपाश्रयः ॥ २० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

संस्थां विवृणोति—नैमित्तिक इति। स्वभावतः स्वकीयो यो भावः "सदेव सौम्येदमग्र आसीत्" इत्यादिषु सदादिशब्दनिर्दिष्टः परमकारणभूतः परमात्मा तस्माद्धेतुभूतात् अस्य कार्यजातस्य चतुर्धा लयः कविभिः संस्था प्रोक्ता ॥ १७ ॥ हेतुं विवृणोति—हेतुरिति। अस्य विश्वस्य सर्गादेः जीवो हेतुर्निमित्तम्—

"बुद्धीन्द्रियमनःप्राणान् जनानामसृजत्प्रभुः। मात्रार्थं च भवार्थञ्च आत्मने कल्पनाय च"

इत्यादौ जीवानामेवोपकारार्थं भगवान् विश्वं करोतीति प्रपञ्चितम् जीव इत्यत्र एकवचनं जातौ "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इत्यादि बहुत्वश्रवणात् जीवस्य सर्गादिनिमित्तत्वं हेतुगर्भेण विशेषणेन दर्शयति, अविद्याकर्मकारक इति। विशेषणेन तद्भिन्नो मुमुक्षुः सूचितस्तम् अविद्याकर्मकारक इति अविद्यया अज्ञानेन पुनः पुनर्जन्ममरणप्रदानि कर्माणि करोतीति तथा अज्ञानमूलकर्मकर्तृत्वेन हेतुमाह—यमनुशयिनं प्राहुरिति। अनुशयशब्देन जीवविमोहहेतुभूता नानावासनाप्रदा अनाद्यविद्योच्यते तद्वन्तं यं बद्धजीवम् अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः' इत्यादिना प्राहुः अविद्याकर्मकारकविशेषणेन तद्भिन्नो मुमुक्षुः सूचितस्तम् अपरे अव्याकृतं प्राकृतप्रपञ्चरहितं "निरञ्जनः परमं साम्यमुपैति" इत्यादिना प्राहुः बुभुक्षुर्मुमुक्षुश्च विश्वसर्गादौ हेतुरित्यर्थः ॥ १८ ॥ अथाश्रयमाह—व्यतिरेकान्वयाविति द्वाभ्याम्। यस्य जाग्रदादिषु जीववृत्तिषु जीवविषयास्ववस्थासु जीवाख्यशक्त्या मायामयेषु महदादिस्तम्बपर्यन्तेषु च मायाख्यशक्त्यान्वयः स्वरूपेण व्यतिरेकोऽनन्वयश्च तद्ब्रह्म बृहत्स्वरूपगुणशक्त्याद्याश्रयो भगवान् श्रीपुरुषोत्तमः अपाश्रयः स्वयं सर्वाश्रयः आश्रयान्तरशून्यः स्वाश्रय इत्यर्थः ॥ १९ ॥ उक्तार्थं दृष्टान्तेन स्पष्टयति—पदार्थेष्विति। यथा पदार्थेषु वृक्षादिषु बीजादिभस्मान्तासु तत्तदवस्थासु च तन्मात्रं तत्तत्पदार्थमात्रं द्रव्यं महदादियुतं समन्वितम् अयुतं च वृक्षे उत्पन्ने विनष्टे च मृदोऽनुत्पन्नत्वादविनष्टत्वात् आधारत्वादिना बहिरप्यवस्थानाच्च तथा रूपनामसु वाच्यवाचकेषु कार्यरूपेषु चिदचिच्छक्तिभ्यां युतमन्वितं स्वरूपेणायुतं तत्तद्विलक्षणं यत्तद्ब्रह्म अपाश्रयः जगद्भिन्नाभिन्नं श्रीपुरुषोत्तमाख्यं ब्रह्मानन्याश्रयमित्यर्थः ॥ २० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

संस्थां निरूपयति—नैमित्तिक इति। स्वभावतः कालकर्मगुणाधीनत्वादस्य विश्वस्य यो नैमित्तिकादिचतुर्धा लयः स संस्थेति कविभिः प्रोक्तेत्यन्वयः ॥ १७ ॥ हेतुमाह—हेतुरिति। यः अविद्यया मोहितः कर्मकारकः कर्मकर्त्ता तत्कर्मप्रयुक्तत्वात् स जीव एव अस्य विश्वस्य सर्गादेर्हेतुः। कर्मकर्तृत्वादेव यं जीवमनुशयिनमाहुः। अनुशयः अभुक्तफलकर्मविशेषस्तद्वाननुशयी। उत त्वर्थे। अपरे तु सृष्टेः पूर्वं नामरूपविशेषाकृतिरहितत्वात् यमव्याकृतमाहुः ॥ १८ ॥ आश्रयं निरूपयति—व्यतिरेकेति। जीववृत्तिषु जाग्रदाद्यवस्थासु यस्य साक्षितया कारणतया चान्वयः। व्यतिरेकः तत्पृथक्तया स्वरूपेणावस्थानं च तद्ब्रह्म अपाश्रय उच्यते। ननु जाग्रदाद्यवस्थानां बुद्धिवृत्तित्वेनोक्तत्वात्कथं जीववृत्तित्वमित्याशङ्क्याह— मायामयेष्विति, अविद्यया जीवेषु कल्पितास्वित्यर्थः ॥ १९ ॥ एतदेव सदृष्टान्तमाह—पदार्थेष्विति। रूपनामसु स्वरूपनामवत्सु पदार्थेषु कार्येषु घटादिषु सन्मात्रं कारणं द्रव्यं महदादि यथा युतमयुतं तद्व्यतिरेकेणावस्थितं च एवं बीजं गर्भाधानमादियासां पञ्चता मरणमन्ते च यासां तासु देहावस्थास्वप्यधिष्ठानत्वेन साक्षित्वेन कारणत्वेन च युतमयुतं च यद्ब्रह्म तदपाश्रयः। अपशब्दः तस्य स्वाश्रयत्वमेव न तस्याश्रयान्तरमस्तीति सूचनार्थः ॥ २० ॥

भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

संस्थामाह। नैमित्तिक इति। कालकर्मस्वभावात्, इति शेषः। अस्य विश्वस्य नित्यः, नैमित्तिकः, प्राकृतिकः, आत्यन्तिकः, इत्येवं, यः चतुर्धा लयः सः कविभिः संस्था इति प्रोक्ता ॥१७॥ हेतुं निरूपयति। हेतुरिति। अविद्या अज्ञानमूलकं कर्म पुण्यापुण्यात्मकं करोतीति अविद्याकर्मकारकः जीवः चेत्रज्ञ इत्यर्थः। एकत्वं जात्यभिप्रायम्। अस्य विश्वस्य, सर्गादेः हेतुः। सर्गादेः जीवस्य कर्मफलानुभवार्थत्वात्, तस्य जीवस्य तन्निमित्तत्वमतः स हेतुरित्यर्थः। हेतुत्वख्यापनाय जीवं विशिनष्टि। यमिति। यं जीवं च, अनुशयो भुक्तफलकर्मावशेषः सोऽस्यास्तीति तथाभूतं प्राहुः। अपरे उत अपरे चापीत्यर्थः। अव्याकृतं देवादिनामरूपरहितं सवासनं च प्राहुः। सृष्टेः पूर्वं देवादिनामरूपरहिता वासनायुक्ता जीवा अस्य सर्गादेर्निमित्तमिति स हेतुरित्यर्थः ॥ १८ ॥ अथापाश्रयमाह द्वाभ्याम्। व्यतिरेकेति। मायामयेषु प्रकृतिकार्येषु शरीरेषु, जाग्रत्स्वप्नसुषुप्तिषु जीववृत्तिषु जीवस्यावस्थासु यस्य व्यतिरेकान्वयौ अन्वयव्यतिरेकावित्यर्थः। भवतः, तत् ब्रह्म, अपाश्रय सर्वाधारत्वोदपाश्रय इत्युच्यते इत्यर्थः। ब्रह्मणो जीववृत्तिनिर्वाहकतयाव-स्थानात्तास्वन्वयः। अवस्थाभिरस्पृष्टत्वाद्व्यतिरेकश्च भवति। ब्रह्मणश्चिदचिद्विशिष्टतारूपेण सर्वावस्थासु वर्त्तनमन्वयः। स्वेन रूपेण ततः रूपेण ततः पृथक्तयावस्थानं व्यतिरेकश्चेत्युक्तं भवति ॥ १९ ॥ अत्र दृष्टान्तमाह। पदार्थेष्विति। बीजादिपञ्चवतां तासु जन्मादि-विनाशान्तासु अवस्थासु, रूपनामसु, नामरूपवत्सु, पदार्थेषु घटपदादिषु, यत् द्रव्यं मृदादि यथा तन्मात्रं सत् युतायुतं, तथा हि, अयं भावः। एकं कार्यात्मकं द्रव्यमपरं कारणात्मकं द्रव्यं तत्र कार्यं कारणव्यतिरिक्तं न तिष्ठति अवस्थाभाजा कार्येण सह वर्त्तमानं कारणं युतमिच्यते, कार्यात्पृथक्स्थितत्वेनाऽयुतमित्युच्यते। एवं युतायुतपर्यायभूतान्वयव्यतिरेकाभ्यां बोध्यं परमात्मस्वरूपमाश्रय-शब्दवाच्यं भवतीति ॥ २० ॥

हिन्दी अनुवाद

इस विश्वब्रह्माण्ड का स्वभाव से ही प्रलय हो जाता है। उसके चार भेद हैं—नैमित्तिक, प्राकृतिक, नित्य और आत्यन्तिक। तत्त्वज्ञ विद्वानों ने इन्हीं को 'संस्था' कहा है ॥ १७ ॥ पुराणों के लक्षण में 'हेतु' नाम से जिसका व्यवहार होता है, वह जीव ही है; क्योंकि वास्तव में वही सर्ग-विसर्ग आदिका हेतु है और अविद्यावश अनेकों प्रकार के कर्मकलाप में उलझ गया है। जो लोग उसे चैतन्यप्रधान की दृष्टि से देखते हैं, वे उसे अनुशयी अर्थात् प्रकृति में शयन करनेवाला कहते हैं; और जो उपाधि की दृष्टि से कहते हैं, वे उसे अव्याकृत अर्थात् प्रकृतिरूप कहते हैं ॥ १८ ॥ जीव की वृत्तियों के तीन विभाग हैं—जाग्रत्, स्वप्न और सुषुप्ति। जो इन अवस्थाओं में इनके अभिमानी विश्व, तैजस और प्राज्ञ के मायामय रूपों में प्रतीत होता है और इन अवस्थाओं से परे तुरीयतत्त्व के रूप में भी लक्षित होता है, वही ब्रह्म हैं; उसी को यहाँ 'अपाश्रय' शब्द से कहा गया है ॥ १९ ॥ नामविशेष और रूपविशेष से युक्त पदार्थों पर विचार करें, तो वे सत्तामात्र वस्तु के रूप में सिद्ध होते हैं। उनकी विशेषताएँ लुप्त हो जाती हैं। असल में वह सत्ता ही उन विशेषताओं के रूप में प्रतीत भी हो रही है और उनसे पृथक् भी है। ठीक इसी न्याय से शरीर और विश्वब्रह्माड की उत्पत्ति से लेकर मृत्यु और महाप्रलयपर्यन्त जितनी भी विशेष अवस्थाएँ हैं, उनके रूप में परम सत्यस्वरूप ब्रह्म ही प्रतीत हो रहा है और वह उनसे सर्वथा पृथक् भी है। यही वाक्य-भेद से अधिष्ठान और साक्षी के रूप में ब्रह्म ही पुराणोक्त आश्रयतत्त्व है ॥ २० ॥

**विरमेत यदा चित्तं हित्वा वृत्तित्रयं स्वयम्। योगेन वा तदाऽऽत्मानं वेदेहाया निवर्तते ॥ २१ ॥**
**एवंलक्षणलक्ष्याणि पुराणानि पुराविदः। मुनयोऽष्टादश प्राहुः क्षुल्लकानि महान्ति च ॥ २२ ॥**
**ब्राह्मं पाद्मं वैष्णवं च शैवं लैङ्गं सगारुडम्। नारदीयं भागवतमाग्नेयं स्कान्दसंज्ञितम् ॥ २३ ॥**
**भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनम्। वाराहं मात्स्यं कौर्मं च ब्रह्माण्डाख्यमिति त्रिषट् ॥ २४ ॥**
**ब्रह्मन्निदं समाख्यातं शाखाप्रणयनं मुनेः। शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविवर्धनम् ॥ २५ ॥**

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

कृष्णप्रिया व्याख्या

अन्वयः—यदा चित्तं स्वयं योगेन वा वृत्तित्रयं हित्वा विरमेत तदा आत्मानं वेद ईहायाः निवर्तते ॥ २१ ॥ एवं लक्षण-लक्ष्याणि पुराणानि क्षुल्लकानि महान्ति च पुराविदः मुनयः अष्टादशं प्राहुः ॥ २२ ॥ ब्राह्मं पाद्मं वैष्णवं शैवं लैङ्गं सगारुडं

१. ह्मन्नेतत्समा०। २. न्वे वेदशाखाप्रणयनं।

नारदीयं भागवतम् आग्नेयं स्कान्दसंज्ञितं भविष्यं ब्रह्मवैवर्तं मार्कण्डेयं सवामनं वाराहं मात्स्यं कौर्मं ब्रह्माण्डाख्यं च इति त्रिषट् ॥ २३–२४ ॥ ब्रह्मन् मुनेः शिष्यशिष्यप्रशिष्याणां ब्रह्मतेजोविवर्धनम् इदं शाखाप्रणयनं ( मया ) समाख्यातम् ॥ २५ ॥

इति श्रीमद्भागवत द्वादशस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एवं दशापि लक्षणानि व्याख्याय 'दशमस्य विशुद्धयर्थं नवानामिह लक्षणम्। वर्णयंति महात्मानः' इति यदुक्तं तदाह। विरमेतेति। यदा सर्गादीनां मायामयत्वानुसंधानेन वामदेवादेरिव स्वयमेव चित्तं विरमेत। इहैवानुष्ठितेन योगेन वा देवहूत्यादिवत् तदा विक्षेपाभावादात्मानं वेद। तदा चाविद्यानि वृत्तरीहायाः संसाररूपाया निवर्तत इत्यर्थः ॥ २१ ॥ पुराणविभागप्रस्तावेन तल्लक्षणादिप्रासंगिकमुक्त्वा प्रस्तुतमाह। एवंविधैर्लक्षणैर्लक्ष्याणि ॥ २२–२३ ॥ त्रिषडष्टादश ॥ २४ ॥ उपसंहरति। ब्रह्मन्निति। मुनेर्व्यासस्य शिष्यादीनां च ब्रह्मतेजो ब्रह्मवर्चसं तद्विवर्धनम्। श्रोतॄणामिति शेषः ॥ २५ ॥

इति श्रीमद्भागवते द्वादशस्कंधे टीकायां सप्तमोऽध्यायः ॥ ७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

वृत्तित्रयं जाग्रदादित्रयम्। वामदेव ऋषिविशेषः। आदिना दत्तात्रेयादिग्रहः। द्वितीयादिनाऽऽसुर्यादिग्रहः। इत्यर्थ इति–ईहानिवृत्तेरेव मोक्षत्वात् 'यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतोऽभवत्यत्र ब्रह्म समश्नुते।' इति श्रुतेरयं भावः ॥ २१ ॥ पुराविदः अतीतानागतविदो व्यासादयो मुनयः। क्षुल्लकानि श्लोकसंख्या परिमितानि न त्वर्थतः, कानिचिदर्थतः शब्दतः फलतश्च महांति ॥ २२–२३ ॥ त्रिरावृत्ताः षट् त्रिषट्। शैवे तु—'ब्राह्मं पुराणं तत्राद्यं संहितायां विभूषितम्। श्लोकानां दशसाहस्रं नाना पुण्यकथायुतम्। पाद्मं द्वितीयं कथितं तृतीयं वैष्णवं स्मृतम्। चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम्। ततो भागवतं प्रोक्तं भागद्वयविभूषितम्। चतुर्भिः पर्वभिः प्रोक्तं भविष्यं तदनंतरम्। मार्कंडेयमथाग्नेयं नारदीयं ततः परम्। दशमं ब्रह्मवैवर्तं लिंगमेकादशं स्मृतम्। भागद्वयेन लिंगं च ततो वाराहमुत्तमम्। संयुक्तमष्टभिः खंडैः स्कांदं चैवातिविस्तरम्। ततस्तु वामनं कौर्मं भागद्वयविराजितम्। मात्स्यं च गारुडं प्रोक्तं ब्रह्मांडं च ततः परम्। भागद्वयेन कथितं ब्रह्मांडमपि शब्दितम्। इदं ब्रह्मपुराणस्य खिलं सौरमनुत्तमम्। संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम्। आद्या सनत्कुमारोक्ता द्वितीया सूर्यभाषिता।' इति। कौर्मे तु–'अन्यान्युपपुराणानि मुनिभिः कथितान्यपि' मात्स्ये तु–'अष्टादशभ्यस्तु पृथक्पुराणं यत्प्रदृश्यते। विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतम्। पंचांगवत्पुराणं स्यादाख्यानमितरत्स्मृतम्। पाद्मे पुराणे या प्रोक्ता नारसिंहोपवर्णना। तदष्टादशसाहस्रं नारसिंहमिहोच्यते। यच्च सांबं पुरस्कृत्य भविष्येपि कथानकम्। प्रोच्यते तत्पुनर्लोके सांबमेव मुनीश्वरैः। एवमादित्यसंज्ञं च तत्रैव परिभाषितम्।' इति संदर्भः ॥ २४ ॥ ब्रह्मन्निति–व्याख्यातचरी संबुद्धिः। ब्रह्मवर्चसं यद्यपि ब्राह्मण एवास्ति तथापीतरेषामपि वेदोक्तकर्मकारित्वेन यथाकथंचित्तदस्त्येव, तत्तत्कर्मफलाधिक्यं भवतीति भावः ॥ २५ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे सप्तमोऽध्यायः ॥ ७ ॥

### अन्वितार्थप्रकाशिका

दशमस्य विशुद्धयर्थं नवानामिह लक्षणमिति यदुक्तं तदाह—विरमेतेति। वाशब्दः एवकारार्थे। यदैव सर्गादीनां मायामयत्वानुसन्धानेन वामदेवादेरिव स्वयमेव चित्तं विरमेत निश्चलं भवति अथवा इहैवानुष्ठितेन योगेन देवहूत्यादेरिव चित्तं विरमेत तद्भावः। तदा विक्षेपाभावादविद्याया निवृत्तेरयमात्मानं वेद तं ज्ञात्वा वृत्तित्रयं जाग्रदाद्यवस्थात्रयं हित्वा स्वयमेवेहायाः संसाररूपाया निवर्त्तते ॥ २१ ॥ एवमिति। एवं त्रिविधैर्लक्षणैर्लक्ष्याणि। स्फुटमन्यत् ॥ २२ ॥ ब्राह्ममिति युग्मम्। त्रिषट् अष्टादश। स्फुटमन्यत् ॥ २३–२४ ॥ ब्रह्मन्निति। हे ब्रह्मन्! श्रवणादिपराणां ब्रह्मतेजोविवर्धनमिदं मुनेर्व्यासस्य तच्छिष्यादीनाम्। कर्त्तरि षष्ठी। शाखाप्रणयनं संहिताप्रवर्त्तनं मया समाख्यातम् ॥ २५ ॥

इति श्रीभागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायां सप्तमोऽध्यायः ॥ ७ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

वृत्तित्रयं स्वयम् अयत्नतः योगेन योगाभ्यासयत्नेन वा वैदेहाय विदेहभावाय मोक्षाय ॥ २१–२५ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धव्याख्याने श्रीसुदर्शनसूरिकृतशुकपक्षीये सप्तमोऽध्यायः ॥ ७ ॥

### श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिका

यदुक्तं 'दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्' इति ।तदाह विरमेतेति। वृत्तित्रयाश्रयमिति भावप्रधानो निर्देशः यदा चित्तं जाग्रदादिवृत्तित्रयाश्रयत्वं हित्वा स्वयमयत्नतः योगेन योगाभ्यासयत्नेन वा विरमेत विषयेभ्य इति शेषः। तदात्मानमाश्रयाख्यं वेद आत्मा चित्तं तत् ततः निवर्त्तते वेदेहाया निवर्तते इति पाठन्तरं तदात्मानं वेद ततः ईहायाः संसाररूपायाः निवर्त्तेत इत्यर्थः। वैदेहाया निवर्त्तेत इति पाठान्तरं तदायस्य चित्तं विरमेत स आत्मानं वेदेति शेषः। ततः वैदेहाय विदेहभावाय प्राकृतदेहाभावायेति यावत् निवर्तते संसार बन्धान्निवर्त्तते मुच्यत इत्यर्थः ॥ २१ ॥ तदेवं पुराणसंहिताविभागप्रसङ्गेन तल्लक्षणान्यभिधाय प्रस्तुतमाह–एवमिति। एवंविधैः दशभिः पञ्चभिर्वा लक्षणैः लक्ष्याणि महान्ति क्षुल्लकानि अल्पानि च अष्टादशपुराणानि पुराविदः पूर्वकालाभिज्ञा मुनयो विदुः ॥ २२ ॥ कानि पुनस्तान्यष्टादशेत्यत्राह–ब्राह्ममितिद्वाभ्याम्। मात्स्यकौर्म्यमिति समाहारद्वन्द्वः मात्स्यं कौर्म्यं चेत्यर्थः। इतीत्थं त्रिषट् अष्टादश ॥ २३–२४ ॥ पुराणवेदसंहिताविभागोपपादनं निगमयति–ब्रह्मन्निति। हे ब्रह्मन्! मुनेर्बादरायणस्य शिष्याणां प्रशिष्याणां शाखाप्रणयनं वेदपुराणसंहिताप्रवर्त्तनं तच श्रोतॄणां ब्रह्मतेजसः ब्रह्मवर्चसः विदीपनमुद्दीपनमिति फलकीर्तनमिति ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां सप्तमोऽध्यायः ॥ ७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एतादृशब्रह्मप्राप्तिः कदा स्यादिति तत्राह–विरमेतेति। वृत्तित्रयाश्रयं जाग्रत्स्वप्नसुषुप्तिलक्षणवृत्तित्रयविरूढं चित्तं हित्वा वृत्तित्रयाद्विरमेत उपरतं भवति तदा योगेन ध्यानलक्षणयोपासनया निरन्तरं श्रीनारायणकथाश्रवणलक्षणोपासनया चात्मानं परमात्मानं वेद जानाति लभते प्राप्नोति च ततः किमत्राह–नेति। आत्मा जीवः पुनर्निवर्तते नैव 'न च पुनरावर्तते न च पुनरावर्तते' इति श्रुतेः ॥ २१ ॥ उपसंहरन्नेव पुराणानां क्षिप्रप्रवृत्तये संख्यामाह–एवमिति। क्षुल्लकानि लोकसङ्ख्यापरिमितानि नत्वर्थतः कानिचिदर्थतः शब्दतः फलतोऽपि महान्ति ॥ २२ ॥ तानि क्रमेण निर्दिशति–ब्राह्ममित्यादिना ॥ २३ ॥ त्रिषट् अष्टादश ॥ २४ ॥ अत्र शिष्यप्रशिष्यैः शाखाप्रणयनं वेदपुराणकर्तुर्ब्रह्मणोऽनभिमतं कृतमिति माशङ्कीत्याह–ब्रह्मणेति। शिष्यादीनामेतच्छाखाप्रणयनं ब्रह्मणैव समाख्यातं कथितं कीदृशं ब्रह्मतेजो विदीपनं ब्रह्मतेजसः प्रकाशकं निरर्थकं प्रणयनं किमर्थकं प्रणयनं किमर्थं कृतमित्यतो वाह–ब्रह्मेति ब्रह्मणः परमात्मनस्तेजसः प्रभावस्य विदीपनं प्रकाशनकरम् ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां सप्तमोऽध्यायः ॥ ७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तथा च वाराहे—

ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा। तथान्यं नारदीयं च मार्कण्डेयं च सप्तमम् ॥
आग्नेयमष्टमं प्रोक्तं भविष्यं नवमं तथा। दशमं ब्रह्मवैवर्त्तं लिङ्गमेकादशं तथा ॥
वाराहं द्वादशं प्रोक्तं स्कान्दं चात्र त्रयोदशम्। चतुर्दशं वामनं च कौर्मं पञ्चदशं तथा ॥
मात्स्यं च गारुडं चैव ब्रह्माण्डाष्टादशं तथा।

शैवपुराणे—

ब्राह्मं पुराणं तत्राद्यं संहितायां विभूषितम्। श्लोकानां दशसाहस्रं नानापुण्यकथायुतम् ॥
पाद्मं द्वितीयं कथितं तृतीयं वैष्णवं स्मृतम्। चतुर्थं वायुना प्रोक्तं वायवीयमिति स्मृतम् ॥
ततो भागवतं प्रोक्तं भागद्वयविभूषितम्। चतुर्भिः पञ्चभिः प्रोक्तं भविष्यं तदनन्तरम् ॥
मार्कण्डेयमथो ज्ञेयं नारदीयमतः परम्। दशमं ब्रह्मवैवर्त्तं लिङ्गमेकादशं स्मृतम् ॥
भागद्वयेन लिङ्गं च ततो वाराहमुत्तमम्। संयुक्तमष्टभिः खण्डैः स्कान्दं चैवात्र विस्तरम् ॥
ततस्तु वामनं कौर्मं भागद्वयविराजितम्। मात्स्यं च गारुडं प्रोक्तं ब्रह्माण्डं च ततः परम् ॥
भागद्वयेन कथितं ब्रह्माण्डमपि संज्ञितम्। इदं ब्रह्मपुराणस्यखिलं सौरमनुत्तमम् ॥
संहिताद्वयसंयुक्तं पुण्यं शिवकथाश्रयम्। आद्या सनत्कुमारोक्ता द्वितीया सूर्य्यभाषिता ॥

कूर्मपुराणे—

अन्यान्युपपुराणानि मुनिभिः कथितान्यपि ।

मात्स्ये—

अष्टादशभ्यस्तु पृथक् पुराणं यत्प्रदृश्यते । विजानीध्वं द्विजश्रेष्ठास्तदेतेभ्यो विनिर्गतः ॥
पञ्चाङ्गवत्पुराणं स्यादाख्यानमितरं स्मृतम् । पाद्मे पुराणे या प्रोक्ता नरसिंहोपवर्णना ॥
तदष्टादशसाहस्रं नारसिंहमिहोच्यते । यच्च साम्बं पुरस्कृत्य भविष्येऽपि कथानवम् ॥
प्रोच्यते तत्पुनर्लोके साम्बमेव मुनिव्रतैः । एवमादित्यसंज्ञं च तत्रैव परिपठ्यते ॥ २३–२४ ॥

शाखाप्रणयनमिति पुराणेतिहासानां शाखास्थानीयत्वादित्यभिप्रायः शिष्याः साक्षादुपदेश्याः शिष्यप्रशिष्याः शिष्याणां शिष्यपरम्पराः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे सप्तमोऽध्यायः ॥ ७ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

एवं दशलक्षणानि व्याख्यायेदानीं 'दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयन्ति महात्मानः' इति यदुक्तं तदाह विरमेतेति 'जरयत्याशु या कोषं निगीर्णमनलो यथा' इति न्यायेन केवलया श्रवणकीर्त्तनादिभक्त्यैव स्वयमेव वृत्तित्रयं हित्वा चित्तं स्वयमेव विरमेत गुणेभ्यो विरतं स्यात् भगवच्चरणारविन्दे विशेषेण रमेत वा योगेनाष्टाङ्गयोगेन वा विरमेत चित्तं निर्वाणं स्यात्तदा आत्मानं वेद परमात्मानमनुभवति तदैव ईहायाः वैषयिकात् कामात् निवर्त्तते ॥ २१–२२ ॥ त्रिषद् अष्टादश ॥ २३ ॥ मुनेर्व्यासस्य शिष्याणां शिष्यास्तेषामपि प्रशिष्यास्तेषां शाखाप्रणयनं ब्रह्मतेजो विवर्द्धनमिति श्रोतॄणामिति शेषः ॥ २४–२५ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । द्वादशे सप्तमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ७ ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

एवं दशलक्षणानि व्याख्याय यदुक्तं 'दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम् । वर्णयन्ति महात्मानः' इति तदाह विरमेतेति वाशब्द एवमर्थे एवमुक्तसर्गादिनवलक्षणानां योगेन चिन्तनेन आत्मानं दशममाश्रयं तत्तन्निर्वाहकत्वादिना प्रधानभूतं परमात्मानं यदा चित्तं वेद वृत्तित्रयं हित्वा तस्मिन्नेव विशेषतो रमेत च तदा ईहायाः संसाररूपायाः निवर्त्तते इत्यर्थः सर्गादिश्रवणेन परमात्मज्ञानं तदनन्तरं तस्मिन् रुचिस्तदनन्तरं संसारनिवृत्तिरिति फलितोर्थः ॥ २१ ॥ एवमुक्तप्रकारैर्लक्षणैर्लक्ष्याणि पुराणानि पुराविदः पुराणज्ञाः अष्टादशसंख्याकान्याहुः ॥ २२ ॥ त्रिषद् अष्टादश ॥ २३-२४ ॥ उपसंहरति—ब्रह्मन्निति । मुनेः श्रीवेदव्यासस्य ब्रह्मतेजोविवर्द्धनं श्रोतृश्रावयित्रोरिति शेषः ॥ २५ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे सप्तमाऽध्यायार्थप्रकाशः ॥ ७ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं दशापि पुराणलक्षणानि व्याख्याय तत्प्रयोजनमाह—विरमेतेति । वाशब्दः एवकारार्थे । योगेन सर्गादिश्रवण-कीर्त्तनादिना जातेन भक्तियोगेन चित्तं यदैव विरमेत विषयासक्तिं परित्यजेत् तदाऽयमात्मानं वेद तं ज्ञात्वा वृत्तित्रयं जाग्रदाद्य-वस्थात्रयं हित्वा स्वयमेवेहायाः संसाररूपाया निवर्त्तते ॥ २१ ॥ एवं पुराणविभागप्रस्तावेन तल्लक्षणादिप्रासङ्गिकमुक्त्वा प्रस्तुतमाह—एवंविधैर्लक्षणैर्लक्ष्याणि ॥ २२–२३ ॥ त्रिषट् अष्टादश ॥ २४ ॥ उपसंहरति—हे ब्रह्मन् श्रवणादिपराणां ब्रह्मतेजोविवर्द्धनमिदं मुनेर्व्यासस्य तच्छिष्यादीनां च शाखाप्रणयनं संहिताप्रवर्त्तनं मया समाख्यातमित्यन्वयः ॥ २५ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता द्वादशे तत्र सर्वाश्रयनिरूपणे । सप्तमो विवृतोऽध्यायः पुराणाङ्गनिरूपकः ॥ ३ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

यदुक्तं "दशमस्य विशुद्ध्यर्थं नवानामिह लक्षणम्" इति तदाह । विरमेतेति । यदा चित्तं वृत्तित्रयाश्रयं हित्वा वृत्तित्रया-श्रयमिति भावप्रधानो निर्देशः । ततो जाग्रदादिवृत्तित्रयाश्रयत्वं परित्यज्येत्यर्थः । योगेन वा योगाभ्यासबलेन वा विरमेत । विषयेऽस्य

इति शेषः। तदा आत्मानमाश्रयाख्यं परमात्मानं वेद विक्षेपाभावात् तदा ईहायाः निवर्त्तते, अत्र प्रथमार्द्धे 'हित्वा वृत्तित्रयं स्वयम्' इति द्वितीयार्द्धे 'वेदेहाया निवर्त्तते' इति पाठे, वेदेहाया इत्येकपदत्वे चापि, वृत्तित्रयभावं वृत्तित्रयाभिमानितामित्यर्थः। हित्वा, योगेन देवहूत्यादेरिव वा स्वयं वामदेवादेरिवाऽयत्नतः चित्तं विरमेद्विषयेभ्यो विरामं प्राप्नुयात्, तदा वेदेहाया वेदोक्तकाम्यकर्मादितृष्णायाः निवर्त्तते निवृत्तिं प्राप्नोति। यदा तदित्थंभूतं भवेत्तदा सः आत्मानं जानीयादिति शेषः। इत्थंभावता तु सम्यगुपासित भगवद्ध्यानदृढतासंप्रीतभगवत्कृपया भवेदिति भावः। तथा चोक्तम्। 'यदा समनुगृह्णाति भगवानात्मभावितः। स जहाति गतिं लोके वेदे च परिनिष्ठिताम्' इति ॥ २१ ॥ एवं पुराणविभागप्रस्तावेन तल्लक्षणानि प्रसङ्गादुक्त्वा प्रस्तुतमाह। एवमिति। एवमित्थं, लक्षणैः लक्ष्याणि पुराणानि दशलक्षणैः महान्ति पञ्चलक्षणैः क्षुल्लकान्यल्पानि च, पुराविदः पूर्वकालाभिज्ञाः मुनयः, अष्टादश प्राहुः। तत्र महान्त्यप्यष्टादश, क्षुल्लकान्यप्यष्टादश सन्त्यथापि दशलक्षणानि महान्ति पुराणानि, पञ्चलक्षणान्युपपुराणानीति व्यवह्रियते इति भावः॥ २२ ॥ कानि पुनस्तान्यष्टादशेत्यत्राह ब्राह्ममिति द्वाभ्याम्। ब्राह्ममिति। ब्राह्मं, पाद्मं, वैष्णवं, शैवं, सगारुडं, लैङ्गं च, नारदीयं, भागवतम्, आग्नेयं, स्कान्दसंज्ञितम्॥ २३ ॥ भविष्यमिति। भविष्यं, ब्रह्मवैवर्त्तं, मार्कण्डेयं, सवामनं, वाराहं, मात्स्यकौर्ममिति समाहारद्वन्द्वः। मात्स्यं कौर्मं चेत्यर्थः। ब्रह्माण्डाख्यम्, इत्येवं त्रिषट् अष्टादशेत्यर्थः। इमानि महान्ति पुराणानि। चकारात् सानत्कुमारं, नान्दं च, नारसिंहं च, कापिलं, दौर्वाससं, नारदीयं, शैवधर्मं च, मानवं, ब्रह्माण्डाख्यं, च औशनसं, वारुणं, कापिलाह्वयं, वासिष्ठलिङ्गं वासिष्ठं, तथा माहेश्वराभिधं, पाराशरं, साम्बसौरे इत्यष्टादश। भूपते एवं सानत्कुमारादीनि क्षुल्लकानि ज्ञेयानि॥ २४ ॥ वेदसंहितापुराणविभागोपाख्यानं निगमयति। ब्रह्मन्निति। हे ब्रह्मन्, मुनेः बादरायणस्य शिष्यशिष्यप्रशिष्याणाम्, इदं शाखाप्रणयनं वेदपुराणसंहिताप्रवर्त्तनमित्यर्थः। समाख्यातं. तच्च ब्रह्मतेजोविवर्द्धनं श्रोतॄणामिति शेषः। इत्येतत्फलकीर्त्तनम्॥२५॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचिताया-
मन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे सप्तमोऽध्यायः॥ ७॥

## हिन्दी अनुवाद

जब चित्त स्वयं आत्मविचार अथवा योगाभ्यास के द्वारा सत्त्वगुण-रजोगुण-तमोगुणसम्बन्धी व्यावहारिक वृत्तियों और जाग्रत्स्वप्न आदि स्वाभाविक वृत्तियों का त्याग करके उपराम हो जाता है, तब शान्तवृत्ति में 'तत्त्वमसि' आदि महावाक्यों के द्वारा आत्मज्ञान का उदय होता है। उस समय आत्मवेत्ता पुरुष अविद्याजनित कर्म-वासना और कर्मप्रवृत्ति से निवृत्त हो जाता है॥ २१॥ शौनकादि ऋषियो! पुरातत्त्ववेत्ता ऐतिहासिक विद्वानों ने इन्हीं लक्षणों के द्वारा पुराणों की यह पहचान बतलायी है। ऐसे लक्षणों से युक्त छोटे-बड़े अठारह पुराण हैं॥ २२॥ उनके नाम ये हैं—ब्रह्मपुराण, पद्मपुराण, विष्णुपुराण, शिवपुराण, लिङ्गपुराण, गरुडपुराण, नारदपुराण, भागवतपुराण, अग्निपुराण, स्कन्दपुराण, भविष्यपुराण, ब्रह्मवैवर्तपुराण, मार्कण्डेयपुराण, वामनपुराण, वराहपुराण, मत्स्यपुराण, कूर्मपुराण और ब्रह्माण्डपुराण यह अठारह हैं॥ २३–२४॥ शौनकजी! व्यासजी की शिष्य-परम्परा ने जिस प्रकार वेदसंहिता और पुराणसंहिताओं का अध्ययन-अध्यापन, विभाजन आदि किया वह मैंने तुम्हें सुना दिया। यह प्रसङ्ग सुनने और पढ़नेवालों के ब्रह्मतेज की अभिवृद्धि करता है॥ २५॥

इति द्वादशस्कन्धे सप्तमोऽध्यायः॥ ७॥

# अथाष्टमोऽध्यायः

## शौनक उवाच

सूत जीव चिरं साधो वद नो वदतां वर। तमस्यपारे भ्रमतां नृणां त्वं पारदर्शनः ॥ १ ॥

आहुश्चिरायुषमृषिं मृकण्डतनयं जनाः। यः कल्पान्ते उर्वरितो येन ग्रस्तमिदं जगत् ॥ २ ॥

स वा[1]अस्मत्कुलोत्पन्नः कल्पेऽस्मिन् भार्गवर्षभः। नैवाधुनापि भूतानां सम्प्लवः कोऽपि जायते ॥ ३ ॥

एक एवार्णवे भ्राम्यन् ददर्श पुरुषं किल। वटपत्रपुटे तोकं शयानं त्वेकमद्भुतम् ॥ ४ ॥

एष नः संशयो भूयान् सूत कौतूहलं यतः। तं नश्छिन्धि महायोगिन् पुराणेष्वपि सम्मतः ॥ ५ ॥

## सूत उवाच

प्रश्नस्त्वया महर्षेऽयं कृतो लोकभ्रमापहः। नारायणकथा यत्र गीता कलिमलापहा ॥ ६ ॥

प्राप्तद्विजातिसंस्कारो मार्कण्डेयः पितुः क्रमात्। छन्दांस्यधीत्य धर्मेण तपःस्वाध्यायसंयुतः ॥ ७ ॥

बृहद्व्रतधरः शान्तो जटिलो वल्कलाम्बरः। बिभ्रत् कमण्डलुं दण्डमुपवीतं समेखलम् ॥ ८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—शौनकः उवाच—सूत साधो वदतां वर चिरं जीव अपारे तमसि भ्रमतां नृणां त्वं पारदर्शनः (अतः) नः (यच्छुश्रषितं तत्) वद ॥ १ ॥ जनाः मृकण्डतनयम् ऋषिं चिरायुषम् आहुः येन इदं जगत् ग्रस्तं कल्पान्ते यः उर्वरितः ॥ २ ॥ भार्गवर्षभः सः अस्मिन् कल्पे अस्मत्कुलोत्पन्नः अधुना अपि भूतानां कः अपि सम्प्लवः न एव जायते ॥ ३ ॥ एक एव अर्णवे भ्राम्यन् वटपत्रपुटे शयानं पुरुषं तु एकम् अद्भुतं तोकं ददर्श किल ॥ ४ ॥ सूत महायोगिन् एषः भूयान् नः संशयः यतः कौतुहलं (त्वं) पुराणेषु अपि सम्मतः (अतः) नः तं (संशयं) छिन्धि ॥ ५ ॥ सूतः उवाच—महर्षे त्वया लोकभ्रमापहः अयं प्रश्नः कृतः यत्र कलिमलापहा नारायणकथा गीता ॥ ६ ॥ मार्कण्डेयः पितुः क्रमात् प्राप्तद्विजातिसंस्कारः धर्मेण छन्दांसि अधीत्य तपःस्वाध्याय-संयुतः बृहद्व्रतधरः शान्तः जटिलः वल्कलाम्बरः कमण्डलुं दण्डं समेखलम् उपवीतं बिभ्रत् ॥ ७–८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

अष्टमे तु तपश्चर्या मार्कंडेयस्य मोहकैः। कामादिभिरसंमोहो नरनारायणस्तुतिः ॥ १ ॥

पुराणविभागप्रसंगेन पुराणकर्तुर्मार्कंडेयस्य चरितप्रश्नमाह। सूतेति। त्वमेव वक्तुं योग्य इत्याह। तमसि संसारे भ्रमतां पारदर्शनस्तन्निवर्तकः ॥ १ ॥ वक्तव्यमाह। आहुरिति। उर्वरितोऽवशिष्टः। येन कल्पांतेन। एतत्कथं घटत इत्येकः प्रश्नः ॥ २ ॥ प्रलयाभावादप्येतन्न घटत इत्याह। स वा इति। यतो भार्गवर्षभः। कोऽपि प्राकृतिको नैमित्तिको वा ॥ ३ ॥ अन्यदप्यघटितमेवेत्याह। एक एवेति। तोकं बालकम् ॥ ४ ॥ कौतूहलमौत्सुक्यम्। तं संशयम्। न केवलं त्वं महायोगी किंतु पुराणेष्वपि ज्ञातृत्वेन संमतः ॥ ५ ॥ प्रश्नमभिनंदति। हे महर्षे अयं प्रश्नः। तत्र हेतुः। नारायणेति। यत्र प्रश्नविषये ॥ ६ ॥ तत्र मार्कंडेयस्तपसा भगवंतमाराध्य मायाप्रदर्शनं वव्रे ततश्च तेनैव भगवन्मायया सप्तकल्पा दृष्टा नान्यैरित्युत्तरं वक्तुमादित आरभ्य तस्य चरितमाह। प्राप्त इत्यादिना। मार्कंडेयो मृत्युं जिग्ये इति पंचमश्लोकेनान्वयः। मध्यमग्रंथेन तस्य धर्मः कथ्यते। प्राप्तो द्विजातिसंस्कार उपनयनाख्यो येन सः। पितुः सकाशाद्गर्भाधानादिक्रमात् छंदांसि वेदान् ॥ ८ ॥ बृहद्व्रतधरो नैष्ठिको ब्रह्मचारी सन् ॥ ८ ॥

---

१. वोत्तमः।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

जगतो मोहकैरपि (१)। 'मार्कंडेयं सवामनम्' इति श्रुतत्वेनाद्भुतनामत्वेन स्मृतिपथमारूढस्य मार्कण्डेयस्य चरितं पृच्छति। वक्तुः कथनोत्साहवर्द्धनार्थं संबुद्धित्रयम्। सूतेति सामान्यत उक्ते प्रातिलोम्यभ्रांतिवारणाय-साधो इति, तत्समर्थनाय-वदतां वरेति ॥ १ ॥ आहुः पौराणिकाः। कल्पांतत्वं दुर्घटमेव ॥ २ ॥ ननु 'काश्यः कुशो गृत्समदः' इति सुहोत्रनृपस्यात्मजाद्गृत्समदाच्छुनकस्तस्माच्छौनकोत्पत्तिश्रुतेः कथमुक्तं श्रीशौनकेन-स वा अस्मत्कुलोत्पन्न इति, तत्रेदं बोध्यम्-गृत्समदोऽरिनृपभीतो भार्गवाश्रममित्वा तं नत्वा च भगवन्मां पाहि रिपोरिति प्रोवाच, स च तं मा भैरित्याश्वास्याश्रमाद्बहिरागत्य तद्वैरिणमिह सर्वे ब्राह्मणाः संति न कोपि क्षत्रिय इत्युवाच। तदाकर्ण्य जितं मयेत्युक्त्वा स गतस्तदा भार्गवोऽभूदिति महाभारते। सति प्रलयेऽस्मत्कुलं कथमवशिष्टमिति प्रश्नांतरम् ॥ ३-४ ॥ पुराणेषु प्राचीनवृत्तप्रतिपादिकेषु श्रीव्यासर्षिप्रणीतशास्त्रेषु। 'अनागतमतीतं च वर्तमानमतीन्द्रियम्। सन्निकृष्टं व्यवहितं सम्यक्पश्यंति योगिनः।' इत्युक्तेर्योगिनामेतत्कथनसामर्थ्यमस्ति किं पुनर्महायोगिनः तवेति। संबुद्ध्यभिप्रायः ॥ ५ ॥ हे महर्षे इति संबुद्ध्या तत्तादृशज्ञानवत्त्वं सूचयति। ऋषय एव त्रिकालज्ञा भवंति किं पुनर्महर्षिः भवानिति भावः। 'ऋषिस्त्रैकालिकज्ञानी विप्रो वेदस्तथा ऋषिः' इति संहितोक्तेः। तत्र लोकभ्रमावहत्वे। लोकभ्रमः संसारे भ्रमणं तमपहंतीति तथा ॥ ६ ॥ तत्रोपस्थितप्रकृते। अथ प्रसंगागतमाह-विदुषां मुदे। पितुरित्युक्तेर्नात्र पितैवोपनयेत्पुत्रमिति नियमः, किन्तु पितेत्युपलक्षणं पितामहादेः तदुक्तं गर्गेण-'पिता पितामहो भ्राता ज्ञातयो गोत्रजाग्रजाः। उपनायेऽधिकारी स्यात्पूर्वाभावे परः परः।' इति। उक्ताधिकार्यभावे व्यासः-'वेदैकनिष्ठं धर्मज्ञं कुलीनं श्रोत्रियं शुचिम्। स्वशाखीयमनालस्यं विप्रमाचार्यमाश्रयेत्।' इति। 'आचार्यं हि क्षत्रवैश्यौ वृणुयातां पुरोहितम्। तदभावेऽन्यविप्रं हि गृहस्थं वेदपारगम्। त्यक्तगोत्राभिमानं तु यो विप्रमपि धारयेत्। वदकर्मण्यथाचार्यं पतितः सोऽभिधीयते। तत्कारितं तत्कृतञ्च शुभं कर्माखिलं वृथा। प्रायश्चित्तं ततः कृत्वा तत्कर्म पुनराचरेत्।' प्रायश्चित्तं तूक्तं वारतांतविना-'विप्रेभ्यो दश गा दद्याद्वा कृच्छ्राणि दशाऽऽचरेत्। कारयेत्संहितापाठं गायत्र्या वा दशायुतम्। ततस्तूपनयेद्विप्रो विप्रक्षत्रविशः सुधीः।' इति। क्रमादिति-गर्भाधानाद्याः षोडशसंस्काराः पूर्वमुक्ताः ॥ ७ ॥ मेखला मौञ्जी तत्सहितम् ॥ ८ ॥

## अन्वितार्थप्रकाशिका

मार्कण्डेयस्याष्टमे तु तपःकामाद्यजेयता। नरनारायणस्तोत्रं तत्र श्लोका नवान्वयः (४९) ॥
उवाचत्रितयं (३) सार्द्धाः सप्तवाणाः (५७) अनुष्टुभः ॥ ८ ॥

पुराणविभागप्रसङ्गेन मार्कण्डेयं सवामनमिति श्रुत्वा स्वकुलश्रेष्ठस्य पुराणकर्त्तुर्मार्कण्डेयस्य स्मृत्वा चरितं प्रष्टुमाह-सूतेति हे सूत! हे साधो! हे वदतांवर! त्वं चिरञ्जीव। यतः अपारे तमसि संसारे भ्रमतां नृणां त्वमेव पारदर्शनः तन्निवर्त्तकः अतो नोऽस्माकं यच्छुश्रूषितं तद्वद ॥ १ ॥ आहुरिति। मृकण्डतनयमृषिं मार्कण्डेयं जनाश्चिरायुषमाहुः। येन कल्पान्तेन प्रलयेनेदं जगत् ग्रस्तं तस्मिन् कल्पान्ते य उर्वरितः अवशिष्ट एतत्कथं घटत इत्येकः प्रश्नः ॥ २ ॥ प्रलयाभावादप्येतन्न घटत इत्याह-स वै इति। भार्गवर्षभः स अस्मिन्नेव कल्पे तत्राप्यस्मत्कुल एवोत्पन्नः तत्रास्मिन् कल्पे तु प्राकृतिको नैमित्तिको वा कोऽपि भूतानां सम्प्लवः प्रलयो नैव जायते न जातः॥३॥ एक इति। एक एवार्णवे प्रलयार्णवे भ्राम्यन् वटपत्रपुटे शयानं पुरुषं पुरुषाकारमेकमद्भुतं तोकं बालं च ददर्शेत्यपि प्राहुस्तदपि कथं जातमिति शेषः ॥४॥ एष इति। हे सूत! हे महायोगिन्! एष तदवशेषादिविषयको नोऽस्माकं भूयान् महासंशयो वर्तते। यतः संशयात् कौतूहलं श्रवणौत्सुक्यं च वर्त्तते। न केवलं त्वं महायोगी किन्तु पुराणेष्वपि ज्ञातृत्वेन संमतः। अतस्त्वमस्मत्संशयं छिन्धि ॥ ५ ॥ प्रश्न इति। हे महर्षे! त्वया कृतोऽयं प्रश्नः लोकस्य भ्रममपहन्तीति तथाभूतः। यत्र तव प्रश्नसमाधाने कलिमलापहा नारायणस्य कथा गीता भविष्यतीति ॥ ६ ॥ प्राप्तेति। मार्कण्डेयः क्रमात् गर्भाधानादिसंस्कारक्रमात् पितुः सकाशात्प्राप्तो द्विजातिसंस्कार उपनयनाख्यो येन सः धर्मेण शास्त्रोक्तविधिना छन्दांसि वेदानधीत्य तपसा स्वोचितधर्मेण स्वाध्यायेन वेदाध्ययनेन च संयुतोऽभूत् ॥७॥ बृहदिति त्रिकम्। नियमस्य धर्मस्य ऋद्धये वृद्धये बृहद्व्रतधरः नैष्ठिकब्रह्मचर्यधरः शान्तः जटिलो वल्कलाम्बरः कमण्डलुं दण्डं समेखलमुपवीतं च अक्षरसूत्रं माला तत्सहितं कृष्णाजिनं कुशांश्च बिभ्रत्सायं प्रातश्चेति सन्ध्ययोः अग्न्यर्कादिषु पञ्चसु हरिमर्चयन् भैक्षमाहृत्य गुरवे समर्प्य तेनानुज्ञातश्चेत्तर्हि वाग्यतो मौनो सकृदेकवारं बुभुजे। नोचेदनुज्ञातश्चेदुपोषितोऽभूत् ॥ ८-१० ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

मार्कण्डेयस्य एतत्कुलप्रसूतत्वे शास्त्रान्तरे परिहारो द्रष्टव्यः एतत्कल्पप्रसूतो मार्कण्डेयोऽन्यो वा स्यादित्यविरोध उर्वरितः आपदो निर्मुक्तः ॥ १-१५ ॥

## श्रीमद्वीरराघवव्याख्या

पुराणगणनायां मार्कण्डेयपुराणमित्युक्तं तत्र तत्पुराणकर्तुः मार्कण्डेयस्य मुनेश्चरितं बुभुत्सुस्तत्कथनाय सूतं स्तौति शौनकः–सूतेति। हे सूत ! हे साधो ! हे वदतां वर ! चिरञ्जीव नोऽस्मभ्यं वद यदन्यच्छुश्रूषितं तद्वदेत्यर्थः। यतस्त्वमपारे तमसि अज्ञाने तत्कार्ये संसारे वा भ्रमतां जनानां नृणां तत्पारं दर्शयतीति तथाभूतस्त्वमेवातो वदेत्यर्थः॥ १॥ किं तच्छुश्रूषितमित्यत्राह आहुरिति। चिरायुषमेव दर्शयितुं विशिनष्टि–यः कल्पान्तेप्युर्वरितः अवशिष्टः येन भगवतेदं जगद्ग्रस्तं तं च ददर्शेति शेषः। यद्वा, येनेदं जगत्कल्पान्ते ग्रस्तं तेनोर्वरितोऽवशेषितो य इति सम्बन्धः। मार्कण्डेयस्य एतत्कल्पप्रसूतत्वे शास्त्रान्तरविरोधपरिहारो द्रष्टव्यः एतत्कल्पप्रसूतो मार्कण्डेयोऽन्यो वा स्यादित्यविरोधः॥ २॥ तत्र आत्मनः संशयमुद्धाटयति–स वा इति। हे भार्गवर्षभ सवै मार्कण्डेयः अस्मिन्नेव कल्पे (स्व) अस्मत्कुलोत्पन्नः ततः किमत आह, नैवेति। अद्युमापि भूतानां सम्प्लवः प्रलयः कोपि नैव जायते अस्मिन्नेव कल्पे जातः कथमसञ्जातं सम्वर्त्तमद्राक्षीदिति संशय इत्यर्थः॥ ३॥ उर्वरितमेव प्रपञ्चयति–एक एवेति। अर्णवे प्रलयार्णवे भ्राम्यन् वटपत्रस्य पुटे तले शयानं तोकम् अर्भकं बालकं पुरुषं ददर्श बालस्याल्पत्वसूचनाय तोकमित्युक्तमतो न पौनरुक्त्यम्॥ ४॥ इत्थं संशयमाविष्कृत्य तन्निरासाय चोदयति–एष इति। एषः "स वा आत्मकुलोत्पन्नः" इत्यादिनोक्तः यतः संशयान्महत्कौतूहलं तद्वृत्तान्तश्रवणौत्सुक्यं भवति तन्नोऽस्माकं संशयं छिन्धि न केवलं त्वं योगी किन्तु पुराणेष्वपि ज्ञातृत्वेन सम्मतः॥ ५॥ इत्थमापृष्टस्तच्चरित्रं विस्तरतो विवक्षुस्तावत्प्रश्नमभिनन्दति, सूतः–प्रश्न इति। हे महर्षे ! त्वया कृतोऽयं प्रश्नः लोकस्य मलमपहन्तीति तथा तत्र हेतुः यत्र यत्प्रश्नोत्तरे कलिमलं कलियुगप्रयुक्तं मलमपहन्तीति तथाभूता नारायणकथा गीता भविष्यति॥ ६॥ आदितस्तच्चरित्रं वर्णयति-प्राप्तेत्यादिना यावदध्यायसमाप्ति। मार्कण्डेयो मृत्युं विजिग्ये इति पञ्चमेनान्वयः क्रमाद्गर्भाधानादिसंस्कारक्रमात्प्राप्तः द्विजातिसंस्कारः उपनयनसंस्कारो येन सः धर्मेण शास्त्रोक्तविधिना छन्दांसि वेदानधीत्य तपसा स्ववर्णाश्रमोचितेन स्वाध्यायेन वेदेन च संयुक्तः॥ ७॥ बृहद्व्रतधरः नैष्ठिकब्रह्मचर्य्यव्रतधरः नियमर्द्धये नियमस्य स्वधर्मस्य वृद्धिस्तस्यै कमण्डल्वादिकं बिभ्राणः सन्ध्ययोस्सायम्प्रातः सन्ध्ययोरग्न्यादिषु हरिमर्चयन् तत्रात्मा स्वहृदयं गुर्वर्थं भैक्षमाहृत्य तेनानुज्ञातश्चेत्तर्हि बुभुजे सकृदेकवारं नो चेदननुज्ञातश्चे दुपोषितो भवति॥ ८-१०॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अस्मिन्नध्याये मार्कण्डेयकथाव्याजेन हरेर्निरतिशयमाहात्म्यं ब्रूते पुराणविभागप्रसङ्गेन पुराणकर्तुर्मार्कण्डेयस्य चरितं तत्र शौनकः सूतं पृच्छति–सूतेति। वद भगवत्कथाद्योतिनीं कथामिति शेषः॥ १॥ येन कल्पान्तेन इदं जगद्ग्रस्तं तस्मिन् कल्पान्तेऽप्युर्वरितः अवशिष्टः॥ २॥ अस्मत्कुलसम्बधित्वात्तच्चरितमवश्यं श्रवणार्हमित्याशयवानाह–स वा इति। तस्य भूतानां मध्ये कोपि सम्प्लवो लयो न जायते लुङ्त्वे लट् पञ्चभूतानां कोपि सम्प्लवो नाश इति वा॥ ३॥ तस्यामवस्थायां प्रलय इवार्णवे पुरुषं ददर्श किलेति वा॥ ४॥ यतः संशयान्महाकौतूहलविषयोऽर्थः मम संशयच्छेदनं कथमुपपद्यत इति तत्राह–पुराणेष्विति। ज्ञातृत्वेन सम्मतो भवानिति॥ ५॥ मार्कण्डेयकथाया लोकाज्ञाननिवारणसामर्थ्यं कुतः ? इत्यत्राह, नारायणेति। यत्र मार्कण्डेयकथायां तत्कथाविषयः प्रश्नः॥ ६॥ पितुर्मृकण्डोः प्राप्तद्विजातिसंस्कारः अन्नप्राशनोपनयनान्तब्राह्मणसंस्कारान्प्राप्तः॥ ७॥ बृहद्व्रतधरः ब्रह्मचारिव्रतधरः॥ ८॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तदेवं नानाप्रभावानां कथामयं पुराणमिदं समाप्यमानं वितत्त्यं तत्र निजकुलावतंसतादृशमार्कण्डेयकथामप्रस्तुतां प्रस्तावयति–सूत जीवेत्यादिना॥ १॥ कल्पस्यान्ते उर्वरितः अवशिष्टत्वेन दृष्टः॥ २॥ कल्पान्तत्वं न घटत इत्याह–स वा इति। कथमस्मिन्नेव कल्प इति ज्ञायते तत्राह–नैवेति। कल्पान्ते सम्प्लवस्यावश्यं भावित्वाद्भूतपरम्परायाश्चाविच्छेदेन सम्प्रति प्राप्तत्वादिति भावः॥ ३॥ कल्पान्ते उर्वरितत्वे किं प्रमाणं तदाह–एक एवार्णव इति। किल प्रसिद्धौ॥ ४-५॥ इह खलु कल्पे मन्वन्तराण्येवोच्यन्ते सम्प्लवश्च तदन्ते प्रक्षालनमेव यत्तु एक एवार्णवे भ्राम्यन्नित्यादि भवता पृष्टं तत्खलु मायिकमेव सप्तानामपि कल्पानां मायिकत्वे तु क्षणमात्रत्वेन सम्भवाच्चिरजीवित्वविघातः स्यादित्युत्तरयितुमाह–प्रश्न इति॥ ६॥ प्राप्तेति पञ्चकम्॥ ७-९॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अष्टमेऽत्र तपोभङ्गाशक्तिः स्वर्य्योषितोच्यते। मार्कण्डेयस्य तेनाऽथ नरनारायणस्तुतिः॥

मार्कण्डेयं सवामनमिति मार्कण्डेयपुराणश्रुत्यैव स्मृतिपथमारूढस्य मार्कण्डेयस्य चरितं प्रष्टुमाह–सूतेति। तमसि संसारे॥ १॥ उर्वरितः अवशिष्टः येन कल्पान्तेन॥ २॥ स कल्पान्ते उर्वरित इति प्रसिद्धिः किन्तु अधुनापि सम्प्लवः प्रलयो

नास्तीति संशयः ॥ ३ ॥ अन्यदप्यघटितमाह—एक एवेति ॥ ४ ॥ यतः संशयादेव कौतूहलं कौतुकं तं संशयं छिन्धि न केवलं त्वं महायोगी किन्तु पुराणेष्वपि ज्ञातृत्वेन सम्मतः ॥ ५–१२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मार्कण्डेयं सवामनमिति मार्कडेयपुराणाचार्यताश्रवणेन स्वकुलोत्पन्नत्वेन च तच्चरितश्रवणे जातश्रद्धः शौनकस्तच्चरितं पृच्छति—सूतेति। नोऽस्मभ्यं वद ॥ १ ॥ वक्तव्यमेवाह—आहुरिति। येन कल्पान्तेन इदं जगत् ग्रस्तं तस्मिन् कल्पान्ते यः उर्वरितः एतत् कथं घटते इत्येकः संशयः ॥ २ ॥ स अस्मिन् कल्पेऽस्मत्कुले भृगुवंशे उत्पन्नः सम्प्लवस्तु अस्मिन् कल्पे कोऽपि प्राकृतिको नैमित्तिको वा नैवातः क्रमप्राप्तं सम्प्लवमद्राक्षीदिति द्वितीयः संशयः। उत्पत्तिस्तु भृगुपुत्रो धाता तत्पुत्रो मृकण्डुस्तत्पुत्रो मार्कण्डेयः तथा भृगुपुत्रश्च्यवनस्तत्पुत्रः प्रमतिस्ततो रुरुशुनकादिक्रमेण शौनक इति ॥ ३ ॥ अत्यद्भुतमाश्चर्यमस्तीत्याह—एक एवेति। यतः संशयतः कौतूहलमौत्सुक्यं तत्संशयं छिन्धि ॥ ४–५ ॥ तत्प्रार्थितेन भगवता स्वयोगमायां तस्मै दर्शयता प्रलयः प्रकाशितस्ततो रक्षितश्च शिववरंण अजरामरत्वादिकं च तस्य जातमित्युत्तरं विवक्षुः प्रश्नमभिनन्दति—प्रश्न इति। तव तु का कथा लोकानामप्यन्येषां भ्रममपहन्तीति स तथा प्रश्नः कृतः किञ्च यत्र प्रश्नविषये कलिमलापहा नारायणकथा गीता भविष्यतीति शेषः ॥ ६ ॥ तच्चरितमाह—यावदध्यायसमाप्ति, प्राप्तेत्यादिना। मार्कण्डेयः मृत्युं जिग्ये इति पञ्चमेन सम्बन्धः ॥ ७ ॥ बृहद्व्रतधरो नैष्ठिकव्रतधरः ॥ ८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अष्टमे तु तपश्चर्यामोहकैरविमोहनम्। नारायणस्तुतिश्चापि मार्कण्डेयस्य वर्ण्यते ॥ १ ॥

पुराणगणनायां मार्कण्डेयपुराणं नाम श्रवणेनोपस्थितं मार्कण्डेयचरितं सूतस्तुतिपूर्वकं पृच्छति—सूतेत्यादिभिःपञ्चभिः। तदादरार्थं बहुधा सम्बोधयति—हे सूत हे साधो हे वदतां वर त्वं चिरं जीव। यतः अपारे दुस्तरे तमसि अज्ञानान्धकारपूर्णे संसारे भ्रमतां नृणां त्वमेव पारदर्शनः तन्निवर्त्तकः। अतो नोऽस्माकं यच्छुश्रूषितं तद्वदेत्यन्वयः ॥ १ ॥ किं शुश्रूषितं तत्राह—आहुरिति। चिरायुष्ट्वे हेतुमाह—य इति। येन कल्पान्तेन प्रलयेनेदं जगत् ग्रस्तं तस्मिन् कल्पान्ते यः उर्वरितः अवशिष्टः। एतत्कथं घटत इत्याशयः ॥ २ ॥ अवशिष्टत्वं तु न सम्भवति यतः सोऽस्मिन्नेव कल्पे तत्राप्यस्मत्कुल एवोत्पन्नः। तत्रास्मिन्कल्पे तु प्राकृतिको नैमित्तिको वा कोऽपि भूतानां सम्प्लवः प्रलयो नैव जातः। अतः प्रलयाभावादप्यवशिष्टत्वकथनमनुपपन्नमित्याशयः। स्वकुलोत्पन्नत्वे प्रमाणमाह—भार्गवर्षभ इति ॥ ३ ॥ किञ्च एक एवार्णवे प्रलयार्णवे भ्राम्यन् वटपत्रपुटे शयानं पुरुषं पुरुषाकारमेकमद्भुतं तोकं बालं च ददर्शेत्यपि प्राहुस्तदपि कथं जातमिति शेषः ॥ ४ ॥ एष तदवशेषादिविषयको नोऽस्माकं भूयान् महान् संशयो वर्त्तते यतः संशयात् हे सूत कौतूहलं श्रवणौत्सुक्यं च वर्त्तते। हे महायोगिन् बहुज्ञ यतस्त्वं पुराणेष्वपि ज्ञातृत्वेन सम्मतः अतस्त्वमस्मत्संशयं छिन्धि उपपत्तिकथनेनापाकुरु ॥ ५ ॥ एवम्पृष्टः सूतः प्रथमं प्रश्नमभिनन्दति—प्रश्न इति। हे महर्षे त्वया कृतोऽयं प्रश्नः लोकस्य भ्रममपहन्तीति तथाभूतः। तत्र हेतुमाह—यत्र तव प्रश्नसमाधाने कलिमलापहा नारायणस्य कथा गीता भविष्यतीति ॥ ६ ॥ तत्र मार्कण्डेयस्तपसा भगवन्तमाराध्य मायादर्शनं वव्रे ततश्च तेनैव भगवन्मायया सप्त कल्पा दृष्टा नान्यैरित्युत्तरं वक्तुमादित आरभ्य तस्य चरितमाह—प्राप्तेत्यादिना यावदध्यायसमाप्ति। मार्कण्डेयो मृत्युं जिग्य इति पञ्चमेनान्वयः। मध्यमग्रन्थेन तस्य धर्मः कथ्यते क्रमात् गर्भाधानादिसंस्कारक्रमात् पितुः सकाशात् प्राप्तो द्विजातिसंस्कार उपनयनाख्यो येन सः। धर्मेण शास्त्रोक्तविधिना छन्दांसि वेदान् अधीत्य तपसा स्वोचितधर्मेण स्वाध्यायेन वेदाध्ययनेन च संयुतः ॥ ७ ॥ बृहद्व्रतधरः नैष्ठिकः ब्रह्मचर्यधरः। नियमर्द्धये धर्मवृद्धये कमण्डल्वादिकं बिभ्राणः ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तपश्चर्याष्टमे प्रोक्ता मार्कण्डेयस्य मोहनैः। असंमोहः स्मराद्यैश्च नरनारायणस्तवः ॥ १ ॥

पुराणगणनायां मार्कण्डेयमित्युक्तं तत्र तत्पुराणकर्त्तुर्मार्कण्डेयस्य चरितं बुभुत्सुस्तत्कथनाय सूतं प्रस्तौति शौनकः। सूतेति हे सूत, हे साधो, हे वदतां वर, चिरं जीव। अपारे तमसि संसारे भ्रमतां नृणां त्वं पारदर्शनः तन्निवर्त्तकः, तव योग्यत्वात्, अतः नोऽस्मभ्यं वद। यदस्मच्छुश्रूषितं तत् कथयेत्यर्थः ॥ १ ॥ यद्वक्तव्यं तदाह। आहुरिति। येन कल्पान्तेन इदं जगत् ग्रस्तं, कल्पान्ते तस्मिन् कल्पान्तेऽपीत्यर्थः। योऽयं मार्कण्डेयमुनिः उर्वरितः अवशिष्टः। तं मृकण्डतनयं मृकण्डस्य मुनेः पुत्रं, ऋषिं मार्कण्डेयं मुनिं जनाः द्विजाः चिरायुषं चिरजीविनं, आहुः। एतत् कथं घटते इत्येकः प्रश्नः ॥ २ ॥ जन्मानन्तरं प्रलयाभावादप्येतन्न घटत इत्यर्थः। स वा इति। स मार्कण्डेयः, अस्मत्कुलोत्पन्नः वै। यतः भार्गवर्षभः भृगुकुलश्रेष्ठः, अपि च अस्मिन् कल्पे अधुनापि, कोऽपि

भूतानां संप्लवः प्रलयः प्राकृतिको नैमित्तिको वा प्रलय इत्यर्थः। नैव जायते नैव जातोऽस्तीत्यर्थः। लुङ्त्वे लट्। येनैतस्य तथानुभवो जात इत्यघटितमिति भावः ॥ ३ ॥ एक इति। एक एव मार्कण्डेयः अर्णवे प्रलयाब्धौ भ्राम्यन् सन्, पुरुषं परमात्मानं वटपत्रपुटे शयानं, तोकं एकं अद्भुतं यथा स्यात्तथा तु ददर्श किल ॥४॥ एष इति। हे सूत, एषः न भूयान् संशयः। यतः संशयात् कौतूहलमेतत्प्रश्नोत्तरश्रवणे औत्सुक्यं जायते अतः हे महायोगिन्, नः तं संशयं छिन्धि निराकुरु। न केवलं त्वं महायोगी एव किं तु पुराणेष्वपि संमतः ज्ञातृत्वेन संमानार्ह इत्यर्थः ॥ ५ ॥ इत्थमापृष्टस्तच्चरितं विस्तरतो विवक्षुस्तावत् प्रश्नमभिनन्दति सूतः। प्रश्न इति। हे महर्षे, त्वया कृतः अयं प्रश्नः, लोकस्य भ्रममपहन्तीति तथाभूतः अस्ति। यतः यत्र यस्मिन्नेतस्मिन् प्रश्ने कलिमलापहा नारायणकथा गीता, भविष्यतीति शेषः॥६॥ आदित आरभ्य तच्चरितं वर्णयति प्राप्तेत्यादि यावदध्यायसमाप्ति। प्राप्तेति। क्रमात् गर्भाधानादिक्रमात् पितुः सकाशात्, प्राप्तः समधिगतः द्विजातिसंस्कारः उपनयनसंस्कारो येन सः, मार्कण्डेयः धर्मेण शास्त्रोक्तविधिना, छन्दांसि वेदान् अधीत्य, तपसा स्ववर्णाश्रमोपचितेन तपसा, स्वाध्यायेन वेदेन च संयुतः संयुक्तः ॥ ७ ॥ बृहदिति। बृहद्व्रतधरः नैष्ठिकब्रह्मचर्यव्रतधरः, शान्तः जटिलो जटाधरः, वल्कलाम्बरः, कमण्डलुं दण्डं समेखलं उपवीतं च बिभ्रत् ॥ ८ ॥

## हिन्दी अनुवाद

## मार्कण्डेयजी की तपस्या और वर-प्राप्ति

**शौनकजी ने कहा—**साधुशिरोमणि सूतजी! आप आयुष्मान् हों। सचमुच आप वक्ताओं के सिरमौर हैं। जो लोग संसार के अपार अन्धकार में भूल-भटक रहे हैं, उन्हें आप वहाँ से निकालकर प्रकाशस्वरूप परमात्मा का साक्षात्कार करा देते हैं। आप कृपा करके हमारे एक प्रश्न का उत्तर दीजिये ॥ १ ॥ लोग कहते हैं कि मृकण्ड-ऋषिके पुत्र मार्कण्डेय ऋषि चिरायु हैं और जिस समय प्रलय ने सारे जगत् को निगल लिया था, उस समय भी वे बचे रहे ॥ २ ॥ परन्तु सूतजी! वे तो इसी कल्प में हमारे ही वंश में उत्पन्न हुए एक श्रेष्ठ भृगुवंशी हैं और जहाँतक हमें मालूम है, इस कल्प में अबतक प्राणियों का कोई प्रलय नहीं हुआ है ॥ ३ ॥ ऐसी स्थिति में यह बात कैसे सत्य हो सकती है। कि जिस समय सारी पृथ्वी प्रलयकालीन समुद्र में डूब गयी थी, उस समय मार्कण्डेयजी उसमें डूब-उतरा रहे थे और उन्होंने अक्षयवट के पत्ते के दोने में अत्यन्त अद्भुत और सोये हुए बालमुकुन्द का दर्शन किया ॥ ४ ॥ सूतजी! हमारे मन में बड़ा सन्देह है और इस बात को जानने की बड़ी उत्कण्ठा है। आप बड़े योगी हैं, पौराणिकों में सम्मानित हैं। आप कृपा करके हमारा यह सन्देह मिटा दीजिये ॥ ५ ॥

**श्रीसूतजी ने कहा—**शौनक जी! आपने बड़ा सुन्दर प्रश्न किया। इससे लोगों का भ्रम मिट जायगा। और सबसे बड़ी बात तो यह है कि इस कथा में भगवान् नारायण की महिमा है। जो इसका गान करते हैं, उसके सारे कलिमल नष्ट हो जाते हैं ॥ ६ ॥ शौनकजी! मृकण्ड ऋषि ने अपने पुत्र मार्कण्डेय के सभी संस्कार समय-समय पर किये। मार्कण्डेयजी विधिपूर्वक वेदों का अध्ययन करके तपस्या और स्वाध्याय से सम्पन्न हो गये थे ॥ ७ ॥ उन्होंने आजीवन ब्रह्मचर्य का व्रत ले रक्खा था। शान्तभाव से रहते थे। सिर पर जटायें बढ़ा रक्खी थीं। वृक्षों की छाल का ही वस्त्र पहनते थे। वे अपने हाथों में कमण्डलु और दण्ड धारण करते, शरीर पर यज्ञोपवीत और मेखला शोभायमान रहती ॥ ८ ॥

कृष्णाजिनं साक्षसूत्रं कुशांश्च नियमर्द्धये। अग्न्यर्कगुरुविप्रात्मस्वर्चयन् सन्ध्ययोर्हरिम् ॥ ९ ॥

सायं प्रातः स गुरवे भैक्ष्यमाहृत्य वाग्यतः। बुभुजे गुर्वनुज्ञातः सकृन्नो चेदुपोषितः ॥ १० ॥

एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम्। आराधयन् हृषीकेशं जिग्ये मृत्युं सुदुर्जयम् ॥ ११ ॥

ब्रह्मा भृगुर्भवो[1] दक्षो ब्रह्मपुत्राश्च ये परे। नृदेवपितृभूतानि तेनासन्नतिविस्मिताः ॥ १२ ॥

इत्थं बृहद्व्रतधरस्तपःस्वाध्यायसंयमैः। दध्यावधोक्षजं योगी ध्वस्तक्लेशान्तरात्मना ॥ १३ ॥

तस्यैवं युञ्जतश्चित्तं महायोगेन योगिनः। व्यतीयाय महान् कालो मन्वन्तरषडात्मकः ॥ १४ ॥

एतत् पुरन्दरो ज्ञात्वा सप्तमेऽस्मिन् किलान्तरे। तपो विशङ्कितो ब्रह्मन्नारेभे तद्विघातनम् ॥ १५ ॥

गन्धर्वाप्सरसः कामं वसन्तमलयानिलौ। मुनये प्रेषयामास रजस्तोकमदौ तथा ॥ १६ ॥

---

१. भवो भृगुः।

### कृष्णप्रिया व्याख्या

अन्वयः—नियमर्द्धये कृष्णाजिनं साक्षसूत्रं कुशान् च (बिभ्रत्) सन्ध्ययोः अग्न्यर्कगुरुविप्रात्मसु हरिम् अर्चयन् सायं प्रातः भैक्ष्यम् आहृत्य गुरवे (समर्प्य) गुर्वनुज्ञातः सकृत् वाग्यतः बुभुजे नो चेत् उपोषितः ॥ ९–१० ॥ एवं तपःस्वाध्यायपरः वर्षाणाम् अयुतायुतम् हृषिकेशम् आराधयन् सुदुर्जयं मृत्युं जिग्ये ॥ ११ ॥ ब्रह्मा भृगुः भवः यक्षः ब्रह्मपुत्राः ये परे नृदेवपितृभूतानि तेन अतिविस्मिताः आसन् ॥ १२ ॥ इत्थं तपःस्वाध्यायसंयमैः बृहद्व्रतधरः योगी ध्वस्तक्लेशान्तरात्मना अधोक्षजं दध्यौ ॥ १३ ॥ एवं महायोगेन चित्तं युञ्जतः योगिनः मन्वन्तरषडात्मकः महान् कालः व्यतीयाय ॥ १४ ॥ ब्रह्मन् अस्मिन् सप्तमे किलान्तरे पुरन्दरः एतत् ज्ञात्वा तपोविशङ्कितः तद्विधातनम् आरेभे ॥ १५ ॥ मुनये गन्धर्वाप्सरसः कामं वसन्तमलयानिलौ तथा रजस्तोकमदौ प्रषयामास ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

नियमर्द्धये धर्मवृद्धये । अग्न्यादिषु पंचसु हरिमर्चयन् ॥९॥ भैक्ष्यं गुर्वर्थमाहृत्य तेनानुज्ञातश्चेत्तर्हि बुभुजे नोचेत्सकृत्कदाचिदुपोषितो भवति ॥ १०–११ ॥ तेन मृत्युजयेन वर्णयति ॥ १२ ॥ ध्वस्ताः क्लेशा रागादयो यस्य तेनांतरात्मना प्रत्याहृतमनसा ॥ १३–१४ ॥ तस्य तपोनिष्ठामितिहासेन एतदित्यादिना । अस्मिन्सप्तमे मन्वंतरे । तपसा मत्पदं ग्रहीष्यतीति विशंकितः ॥ १५ ॥ मुनये मुनिं भ्रंशयितुम् । रजसस्तोकमतिप्रियमपत्यं लोभो मदश्च तौ ॥ १६–१७ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अक्षसूत्रमक्षमाला 'आदिक्षान्तगतैर्वर्णैर्जपमालाऽक्षमालिका' इति तंत्रोक्तेः । गौतमीये च–'पञ्चाशन्मणिभिर्माला विहिता सर्वकर्मसु । अकारादिक्षाकारांता ह्यक्षमाला प्रकीर्तिता' । इति । 'रुद्राक्षशंखपद्माक्षपुत्रजीवकमौक्तिकैः । स्फाटिकैर्मणिरत्नैश्च सौवर्णैर्विद्रुमैस्तथा । राजतैः कुशमूलैश्च गृहस्थस्याक्षमालिका । अंगुलीगणनादेकं पर्वण्यष्टगुणं भवेत् । पुत्रजीवैर्दशगुणं शतं शंखैः सहस्रकम् । प्रवालैर्मणिरत्नैश्च दशसाहस्रिकं फलम् । तदेव स्फाटिकैः प्रोक्तं मौक्तिकैर्लक्षमुच्यते । पद्माक्षैर्दशलक्षं स्यात्सौवर्णैः कोटिरुच्यते । कुशग्रंथ्या कोटिशतं रुद्राक्षैः स्यादनन्तकम्' । इति । कुशांश्चेत्युक्तेः कुशत्रयपवित्रादि ज्ञेयम् । विप्रोऽत्र गुरुभिन्नो ज्ञेयः । अत्र विप्रपदस्य पृथगुक्तेर्विप्रेतरस्य गुरुत्वं न शंकनीयम्, 'जन्मना ब्राह्मणो गुरुः' इति श्रीगर्गं प्रति नंदोक्तेः 'वर्णानामाश्रमाणाञ्च मुख्योऽभूद्ब्राह्मणो गुरुः' इति मैत्रेयोक्तेश्च ॥ ९ ॥ नो चेत् कदाचिद्गुर्वनुज्ञाभावे उपोषितः कृतोपवास एव भवतीत्यर्थः ॥ १० ॥ स्वाध्यायो वेदाभ्यासः । अयुतायुतं कोटिः, असंख्यातान्येव वर्षाणि जग्मुरित्यर्थः ॥ ११ ॥ तेन मृत्युञ्जयरूपकर्मणा ॥ १२ ॥ आदिना द्वेषादिग्रहः । 'अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः' इति पतञ्जलिसूत्रात् ॥ १३ ॥ षडित्यस्य पूर्वनिपाताभावो विशेषणविशेष्यभावव्यत्यासात् ॥ १४ ॥ अस्मिन्वैवस्वताख्ये । एतन्मार्कंडेयतपस आधिक्यम् । तद्विघातनं तपोनाशनम् । हे ब्रह्मन्निति वर्णिताभिप्रायम् ॥ १५–१६ ॥

### अन्वितार्थप्रकाशिका

एवमिति । जिग्ये जिगाय । तङार्षः । शेषं स्पष्टम् ॥ ११ ॥ ब्रह्मेति । ये परे श्रेष्ठाः ब्रह्माद्यास्तथा नृदेवादीनि तेन मृत्युजयेनातिविस्मिता आसन् एकशेषे पुंस्त्वमार्षम् ॥ १२ ॥ इत्थमिति । इत्थं तपःस्वाध्यायसंयमैः बृहद्व्रतधरः योगी जितेन्द्रियः ध्वस्ताः क्लेशा रागादयो यस्य तेनान्तरात्मना प्रत्याहृतेन मनसा अधोक्षजं परमात्मानं भगवन्तं दध्यौ ॥ १३ ॥ तस्येति । योगिनस्तस्य एवं महायोगेन एकाग्रेण चित्तं परमात्मनि युञ्जतो मन्वन्तरषडात्मको महान् कालो व्यतीयाय व्यतिक्रान्तोऽभूत् ॥१४॥ एतदिति । हे ब्रह्मन् ! अस्मिन् सप्तमे मन्वन्तर एतत्तस्य तपश्चरणं पुरन्दरो ज्ञात्वा तपसा मत्पदं ग्रहीष्यतीति विशङ्कितस्तस्य तपसो विघातनं कर्त्तुमारेभे ॥ १५ ॥ गन्धर्वेति । तदा मुनये मुनिं भ्रंशयितुं गन्धर्वादीन् प्रेषयामास । रजस्तोकमतिप्रियमपत्यं लोभाख्यं मदश्च तौ च प्रेषयामास ॥ १६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

रजस्तोक इति कस्यचिन्नाम ॥ १६–२९ ॥

### श्रीमद्वीरराघवव्याख्या

एवमिति सुदुर्जयं सुतरां दुःखेनापि जेतुमशक्यं मृत्युं जिग्ये जितवानित्यर्थः ॥ ११–१२ ॥ इत्थमिति । योगेन ध्वस्ताः क्लेशाः रागादयो यस्य तेनान्तरात्मना प्रत्याहृतेन मनसा ऽधोक्षजं दध्यो ध्यातवान् ॥ १३ ॥ तस्येति । युञ्जतः समादधतः सतः

महान्भूयान् तदेवाह मन्वन्तरषडात्मकः व्यतीयाय व्यतिक्रान्तो ऽभूत् ॥ १४ ॥ तस्य तपोनिष्ठादार्ढ्यम् इतिहासेन वर्णयति–एतदित्यादिना । पुरन्दर इन्द्रः एतत्तपश्चरणं ज्ञात्वा सप्तमेऽस्मिन्मन्वन्तरे वैवस्वतमन्वन्तरे हे ब्रह्मन् तपसा विशङ्कितः किं वायं मत्पदं जिघृक्षेदिति संशयं प्राप्तः तद्विघातनं तपोविघातमारब्धवान् ॥१५॥ गन्धर्वाश्चाप्सरसश्च ताः मुनये मुनिं भ्रंशयितुं गन्धर्वादीन् प्रेषयामास स्वयं रजस्तोकमदौ रजस्तोको लोभस्तस्य रजोगुण प्रभवत्वात्तं च मदं च तौ च प्रेषयामास ॥ १६ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

हरिं स्मरन्नितिशेषः ॥ ९ ॥ नोचेदनुज्ञाभावे ॥ १०–११ ॥ तेन कर्मणा ॥ १२ ॥ मनोयोगादन्तरात्मनान्तर्यामिणा ध्वस्तक्लेशः ॥ १३–१४ ॥ अस्मिन् सप्तमे मन्वन्तरे तपसो विशङ्कितस्तद्विघातनं तस्य तपसो विघ्नम् ॥ १५ ॥ रजोगुणं स्तोभमदौ व्यर्थकर्मदर्पौ च अत्र कामादयो मूर्तिमन्तो निर्दिश्यन्ते ॥ १६–१७–१८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सायं प्रातरिति समावर्त्तनात् पूर्वावस्थायामेव गेयं वर्षाणामयुतायुतमिति कल्पाभिप्रायेण कल्पजीवित्वात् यावज्जीवमेवाराधयतस्तस्य मृत्युर्न छिद्रं प्रापेत्यर्थः । तस्यैवं युञ्जत इति वक्ष्यमाणपद्यद्वयात् ॥ १०–२० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ध्वस्ताः क्लेशा रागादयो यस्य तेन अन्तरात्मना मनसा ॥ १३–१४ ॥ तपसा तत्पदं ग्रहीष्यतीति विशङ्कितः ॥ १५ ॥ रजसस्तोकमपत्यं लोभश्च मदश्च तौ ॥ १६–२० ॥

## श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः

नियमर्द्धये धर्मवृद्धये अग्न्यादिषु हरिमर्चयन् ॥ ९ ॥ सायं प्रातश्च भैक्ष्यं गुरवे गृर्वर्थमाहृत्य गुर्वनुज्ञातश्चेत्तर्हि बुभुजे सकृदेकदा नो चेदनुज्ञातस्तदोपोषितो भवति ॥ १० ॥ एवमिति । इत्थं तपःस्वाध्यायप्रधानः सुदुर्जयमपि मृत्युं जिग्ये जीतवान् ॥११॥ तेन मृत्युजयेन ॥ १२ ॥ ध्वस्ताः क्लेशा यस्य तेनान्तरात्मना निर्जितेनान्तःकरणेन ॥ १३ ॥ व्यतीयाय व्यतिक्रान्तः ॥ १३–१४ ॥ तपसा मदीयं पदं ग्रहीष्यतीत्येवं विशङ्कितः अतस्तद्विघातनं तपसो विघ्नमारेभे आरब्धवान् ॥ १५ ॥ रजसस्तोकमपत्यं लोभः स च मदश्च तौ ॥ १६–१७ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सायम्प्रातः सन्ध्ययोरग्न्यादिषु हरिमर्चयन् भैक्ष्यमाहृत्य गुरवे समर्प्यते । सोऽनुज्ञातश्चेत्तर्हि बुभुजे सकृदेकवारं नोचेदननुज्ञातश्चेदुपोषितो भवति ॥ ९–११ ॥ तेन मृत्युजयेन सुविस्मिता आसन् ॥ १२ ॥ योगी जितेन्द्रियः ध्वस्ताः क्लेशारागादयो यस्य तेनान्तरात्मना प्रत्यादत्तेन मनसा अधोक्षजं परमात्मानं भगवन्तं दध्यौ ॥ १३ ॥ तस्यैवं महायोगेन एकाग्रेण चित्तं परमात्मनि युञ्जतो मन्वन्तरषडात्मको महान्कालो व्यतीयाय व्यतिक्रान्तोऽभूत् ॥ १४ ॥ तस्य तपोनिष्ठामितिहासेन वर्णयति—एतदित्यादिना । अस्मिन् सप्तमे मन्वन्तर एतत् तस्य तपश्चरणं पुरन्दरो ज्ञात्वा तपसा मत्पदं ग्रहीष्यतीति विशङ्कितः तस्य तपसो विघातनं कर्त्तुमारेभे ॥ १५ ॥ मुनये मुनिं भ्रंशयितुं गन्धर्वादीन्प्रेषयामास । रजसस्तोकमतिप्रियमपत्यं लोभः मदश्च तौ ॥ १६–१७ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

कृष्णाजिनमिति । साक्षसूत्रं कृष्णाजिनं कुशांश्च नियमर्द्धये धर्मस्य वृद्ध्यर्थं, दधदिति शेषः । संध्ययोः सायंप्रातः संध्ययोः, अग्निश्च अर्कश्च गुरुश्च विप्रश्च आत्मा च तेषु हरिं परमेश्वरं अर्चयन् पूजयन्, तत्रात्मा स्वहृदयम् ॥ ९ ॥ सायमिति । सायं प्रातः भैक्ष्यं आहृत्य, स्वगुरवे निवेद्य, गुर्वनुज्ञातः गुरुणा तद्भोजनार्थं कृताज्ञश्चेत्तदा त्वित्यर्थः । वाग्यतः सन्, तत् सकृत् बुभुजे । नोचेदननुज्ञातश्चेत् उपोषितः भवति ॥ १० ॥ एवमिति । एवं तपः स्वाध्यायपरः मार्कण्डेयः, वर्षाणां अयुतायुतं दशकोटिवर्षपर्यन्तमित्यर्थः हृषीकेशं भगवन्तं आराधयन् सन्, सुदुर्जयं सुतरां दुःखेन जेतुमशक्यमित्यर्थः । मृत्युं जिग्ये जितवानित्यर्थः । पूर्वपादेऽक्षराधिक्यमार्षम् ॥ ११ ॥ ब्रह्मेति । तेन मृत्योर्जयेन, ब्रह्मा, भृगुः, भवः शिवः, दक्षः ये परे ब्रह्मपुत्रास्ते च, नृदेवपितृभूतानि च, अतिविस्मिताः आसन् ॥ १२ ॥ इत्थमिति । इत्थं बृहद्व्रतधरः योगी मार्कण्डेयः, तपः स्वाध्यायसंयमैः ध्वस्ताः क्लेशा रागादयो यस्य स चासावन्तरात्मा च तेन, क्लेशरहितप्रत्याहृतेन मनसेत्यर्थः । अधोक्षजं दध्यौ ध्यातवान् ॥ १३ ॥ तस्येति । एवं महायोगेन चित्तं युञ्जतः योगिनः तस्य मार्कण्डेयस्य, महानतिदीर्घः मन्वन्तरषडात्मकः कालः, व्यतीयाय व्यतिक्रान्तः समभूत् ॥१४॥

तस्य तपोनिष्ठादार्ढ्यमितिहासेन वर्णयति एतदित्यादिना। एतदिति। हे ब्रह्मन् शौनक, पुरन्दरः पुरन्दरनामेन्द्रः, एतत्तपश्चरणं ज्ञात्वा, सप्तमे अस्मिन् अन्तरे वैवस्वतमन्वन्तरे इत्यर्थः। तपोविशङ्कितः मार्कण्डेयतपसा संजातशङ्कः किमयं मत्पदं जिघृक्षतीति संशयं संप्राप्तः सन्नित्यर्थः। तद्विघातनं मार्कण्डेयतपोविघातं आरेभे आरब्धवान्॥ १५॥ गन्धर्वेति। गन्धर्वाश्च अप्सरसश्च ताः, कामं, तथा वसन्तश्च मलयानिलश्च तौ, रजस्तोकः रजसो बालकः लोभः मदश्च तौ च, मुनये मुनिं भ्रंशयितुं प्रेषयामास॥ १६॥

## हिन्दी अनुवाद

काले मृग का चर्म, रुद्राक्षमाला और कुश—यही उनकी पूँजी थी। यह सब उन्होंने अपने आजीवन ब्रह्मचर्यव्रत की पूर्ति के लिये ही ग्रहण किया था। वे सायङ्काल और प्रातःकाल अग्निहोत्र, सूर्योपस्थान, गुरुवन्दन, ब्राह्मणसत्कार, मानस-पूजा और 'मैं परमात्मा का स्वरूप ही हूँ' इस प्रकार की भावना आदि के द्वारा भगवान् की आराधना करते॥ ९॥ सायं-प्रातः भिक्षा लाकर गुरुदेव के चरणों में निवेदन कर देते और मौन हो जाते। गुरुजी की आज्ञा होती तो एक बार खा लेते, अन्यथा उपवास कर जाते॥ १०॥ मार्कण्डेयजी ने इस प्रकार तपस्या और स्वाध्याय में तत्पर रहकर करोड़ों वर्षोंतक भगवान् की आराधना की और इस प्रकार उस मृत्युपर भी विजय प्राप्त कर ली, जिसको जीतना बड़े-बड़े योगियों के लिये भी कठिन है॥ ११॥ मार्कण्डेयजी की मृत्यु-विजय को देखकर ब्रह्मा, भृगु, शङ्कर, दक्ष प्रजापति, ब्रह्माजी के अन्यान्य पुत्र तथा मनुष्य, देवता, पितर एवं अन्य सभी प्राणी अत्यन्त विस्मित हो गये॥ १२॥ आजीवन ब्रह्मचर्य-व्रतधारी एवं योगी मार्कण्डेयजी इस प्रकार तपस्या, स्वाध्याय और संयम आदि के द्वारा अविद्या आदि सारे क्लेशों को मिटाकर शुद्ध अन्तःकरण से इन्द्रियातीत परमात्मा का ध्यान करने लगे॥ १३॥ योगी मार्कण्डेयजी महायोग के द्वारा अपना चित्त भगवान् के स्वरूप में जोड़ते रहे। इस प्रकार साधन करते-करते बहुत समय—छः मन्वन्तर व्यतीत हो गये॥ १४॥ ब्रह्मन्! इस सातवें मन्वन्तर में जब इन्द्र को इस बात का पता चला, तब तो वे उनकी तपस्या से शंकित और भयभीत हो गये। इसलिये उन्होंने उनकी तपस्या में विघ्न डालना आरम्भ कर दिया॥ १५॥ शौनकजी! इन्द्र ने मार्कण्डेयजी की तपस्या में विघ्न डालने के लिये उनके आश्रमपर गन्धर्व, अप्सराएँ, काम, वसन्त, मलयानिल, लोभ और मद को भेजा॥ १६॥

ते वै तदाश्रमं जग्मुर्हिमाद्रेः पार्श्व उत्तरे[1]। पुष्पभद्रा नदी यत्र चित्राख्या च शिला विभो॥ १७॥

तदाश्रमपदं पुण्यं पुण्यद्रुमलताञ्चितम्। पुण्यद्विजकुलाकीर्णं पुण्यामलजलाशयम्॥ १८॥

मत्तभ्रमरसङ्गीतं मत्तकोकिलकूजितम्। मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलम्॥ १९॥

वायुः प्रविष्ट आदाय हिमनिर्झरशीकरान्। सुमनोभिः परिष्वक्तो ववावुत्तम्भयन् स्मरम्॥ २०॥

उद्यच्चन्द्रनिशावक्त्रः प्रवालस्तबकालिभिः। गोपद्रुमलताजालैस्तत्रासीत् कुसुमाकरः॥ २१॥

अन्वीयमानो गन्धर्वैर्गीतवादित्रयूथकैः। अदृश्यतात्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः॥ २२॥

हुत्वाग्निं समुपासीनं ददृशुः शक्रकिङ्कराः। मीलिताक्षं दुराधर्षं मूर्तिमन्तमिवानलम्॥ २३॥

ननृतुस्तस्य पुरतः स्त्रियोऽथो गायका जगुः। मृदङ्गवीणापणवैर्वाद्यं चक्रुर्मनोरमम्॥ २४॥

## कृष्णप्रिया व्याख्या

अन्वयः—विभो हेमाद्रेः पार्श्वे उत्तरे यत्र पुष्पभद्रा नदी चित्राख्या शिला ते तदाश्रमं जग्मुः॥ १७॥ पुण्यं पुण्यद्रुमलताञ्चितं पुण्यद्विजकुलाकीर्णं पुण्यामल जलाशयं मत्तभ्रमरसंगीतं मत्तकोकिलकूजितं मत्तबर्हिनटाटोपं मत्तद्विजकुलाकुलं तदाश्रमपदं हिमनिर्झरशीकरान् आदाय प्रविष्टः सुमनोभिः परिस्वक्तः वायुः स्मरम् उत्तम्भयन् ववौ॥१८–२०॥ उद्यच्चन्द्रनिशावक्त्रः प्रवालस्तबकालिभिः गोपद्रुमलताजालैः तत्र कुसुमाकरः आसीत्॥ २१॥ गीतवादित्रयूथकैः गन्धर्वैः अन्वीयमानः आत्तचापेषुः स्वःस्त्रीयूथपतिः स्मरः अदृश्यत॥ २२॥ मूर्तिमन्तम् अनलम् इव दुराधर्षं मीलिताक्षं अग्निं हुत्वा समुपासीनं (तं) शक्रकिंकराः ददृशुः॥ २३॥ तस्य पुरतः स्त्रियः ननृतुः अथ गायकाः जगुः मृदङ्गवीणापणवैः मनोरमं वाद्यं चक्रुः॥ २४॥

१. रम्। २. तत्वा०। ३. स्सुषमा०। ४. तमुपा०।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तदाश्रमपदं प्रविष्टो वायुर्ववाविति तृतीयेनान्वयः। पुण्यैर्द्रुमैर्लताभिश्चांचितं पूजितम्। पुण्यद्विजानामृषीणां कुलैराकीर्णम्। पुण्या अमला जलाशाया यस्मिन्॥ १८॥ मत्तभ्रमराणां संगीतं यस्मिन् मत्तकोकिलानां कूजितं यस्मिन् मत्ता बर्हिण एव नटास्तेषामाटोपो नृत्यसंभ्रमो यस्मिन्। मत्तानां द्विजानां पक्षिणां कुलैराकुलं व्याप्तम्॥ १९॥ एवंभूतं तदाश्रमपदं प्रविष्टः सन्वायुर्मलयानिलो ववौ प्रससार। उत्तंभयन्नुद्दीपयन्। तत्र वृक्षेषु प्रवेशान्मांद्यं हिमनिर्झरकणानामादानाच्छैत्यं पुष्पपरिष्वंगात्सौगंध्यं चोक्तम्॥ २०॥ किंच। उद्यंश्चंद्रो यस्मिंस्तन्निशावक्त्रं रजनीमुखं यस्मिन्सः। प्रवालस्तबकानामालयः श्रेणयो येषु तैः। गुप्यंति विटपैः संश्लिष्यंतीति गोपा द्रुमा लताश्च तेषां जालैः समूहैरुपलक्षित आविर्बभूव॥२१॥ किंच। तदा गीतवादित्रयूथकैर्गायकादिसमुदायिभिर्गंधर्वैरन्वीयमानः। तथा स्वःस्त्रियोऽप्सरसस्तासां यूथस्य पतिः। आत्तं चापमिषुश्च येन स स्मरश्च तत्रादृश्यत॥ २२॥ दुराधर्षमभिभवितुमशक्यम्॥ २३–२४॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

ते गंधर्वाद्याः। तदाश्रमं मार्कंडेयाश्रमम्॥ १७॥ पुण्यद्रुमा अश्वत्थादयः, पुण्यलता विष्णुक्रांताद्याः, पुण्यद्विजाः शुकसारसादयः। जलाशयाः सरोवराः॥ १८॥ आटोपो नृत्यसंभ्रमः॥ १९॥ तत्र चायौ॥ २०॥ अन्यदाह—किञ्चेति। कुसुमाकरो वसंतः। गां पृथ्वीं फलपुष्पाद्यैः पांति तर्पयंतीति गोपा आम्रादयः। यद्वा—गाः किरणानि पान्ति रक्षंति पत्रादिषु प्रकटयंतीति गोपा अश्वत्थादयस्ते च ते द्रुमाश्चेति गोपद्रुमाः॥ २१॥ अन्यदाह—किंचेति। स्मरः कामः। तत्राऽऽश्रमे॥ २२॥ अनलमग्निम्॥२३॥ तस्य मुनेः॥ २४–२५॥

## अन्वितार्थप्रकाशिका

ते इति। स्फुटम्॥ १७॥ तदाश्रमेति त्रिकम्। पुण्यं पुण्यैर्द्रुमैर्लताभिश्चाञ्चितं पूजितं पुण्यद्विजानामृषीणां कुलैराकीर्णं पुण्या अत्यमला जलाशय यस्मिन् मत्तभ्रमराणां सङ्गीतं यस्मिन् मत्तकोकिलानां कूजितं यस्मिन् मत्तबर्हिण एव नटास्तेषामाटोपः संभ्रमो यस्मिन् मत्तद्विजानां पक्षिणां कलैराकुलं व्याप्तम् एवंभूतं तदाश्रमपदं प्रविष्टो वायुर्मलयानिलः स्मरमुत्तम्भयन्नुद्दीपयन् ववौ प्रससार। तत्र वृक्षेषु प्रवेशान्मान्द्यं हिमनिर्झरकणादानात् शैत्यं पुष्पपरिष्वङ्गात् सौगन्ध्यं चोक्तम्॥ १८–२०॥ उद्यदिति। उद्यंश्चन्द्रो यस्मिन् तन्निशावक्त्रं रजनीमुखं यस्य सः प्रवालस्तबकानामालयः श्रेण्यो येषु तैः गुप्यन्ति विटपैः संश्लिष्यन्तीति गोपाः। यद्वा। गाः किरणान् पिबन्ति गोभ्यः किरणेभ्यः पान्ति वा गोपाः द्रुमाः लताश्च तेषां जालैः समूहैश्च सह तत्र कुसुमाकरः आसीत् आविर्बभूव॥ २१॥ अन्विति। तदा गीतवादित्रयूथिकैः गायकादिसमुदायिभिः। मत्वर्थीयष्ठन्। गन्धर्वैरन्वीयमानः तथा स्वःस्त्रियोऽप्सरसस्तासां यूथस्य पतिः आत्तं चापमिषुश्च येन स स्मरश्च तत्रादृश्यत। यद्वा। अदृश्यत मुनिमनसि स्वयमेव किंचिदन्वभूयतेति व्यकम्पयन्निति प्रबोध्याहिमिति धर्षितोऽपीत्यग्रिमवाक्यादवगम्यते॥ २२॥ हुत्वेति शक्रकिङ्कराः अग्निं हुत्वा उपासीनं मीलिताक्षं दुराधर्षमभिभवितुमशक्यं मूर्तिमन्तमनलमिवासीनं तं ददृशुः॥ २३॥ ननृतुरिति। स्फुटम्॥ २४॥

## श्रीमद्वीरराघवव्याख्या

ते वा इति। गन्धर्वादयः हिमाचलस्योत्तरे पार्श्वे तत्रापि यत्र पुष्पभद्रा नाम नदी तत्रापि यत्र च चित्राख्या शिला तत्र तदाश्रमं मार्कण्डेयाश्रमं जग्मुः हे विभो! इति सम्बोधनम्॥ १७॥ गत्वेति। तस्य मार्कण्डेयस्याश्रमपदं प्रविष्टो वायुर्ववाविति तृतीयेनान्वयः। आश्रमपदं विशिनष्टि—पुण्यं पुण्यावहं पुण्यैर्द्रुमैर्लतादिभिश्चाञ्चितं पूजितम् आकुलमिति पाठान्तरं पुण्यानां द्विजानामृषीणां कुलैः समूहैराकीर्णं पुण्या अमलाश्च जलाशया यस्मिंस्तत्॥ १८॥ मधुपानमत्तानां भ्रमराणां सङ्गीतं यस्मिन् मत्तकोकिलानां कूजितं यस्मिन् मत्ता बर्हिणो मयूरा एव नटास्तेषामाटोपः सम्भ्रमो यस्मिन् मत्तानां द्विजानां पक्षिणां कुलैः आकुलं व्याप्तम्॥ १९॥ इत्थम्भूतं तदाश्रमपदं मलयानिलः शातलगिरिनदीशीकरानादाय सुमनोभिः कुसुमैः परिष्वक्तः स्मरं काममुत्तम्भयन्नुद्दीपयन् ववौ प्रससार एवं मलयानिलस्य व्यापार उक्तः॥ २०॥ अथ वसन्तस्य तमाह-उद्यदिति। उद्यंश्चन्द्रो यस्मिंस्तन्निशावक्त्रं रजनीमुखं यस्मिन् प्रवालानां पल्लवानां स्तबकानां गुच्छानां चालयः श्रेणयो येषु तैः गोपद्रुमलताजालैः गुप्यन्ते विटपैः संश्लिष्यन्ते इति गोपाः द्रुमाः लताश्चेति तेषां जालैः समूहैरुपलक्षितः कुसुमाकरो वसन्तः तत्र प्रादुर्बभूव॥ २१॥ अथ कामस्य तमाह—अन्वीयमान इति। गीतवादित्राणां मृदङ्गादीनां यूथं येषामस्तीति तथा तैः मत्वर्थीयष्ठन् गन्धर्वैरन्वीयमानः युज्यमानः गृहीतधनुर्बाणः स्वर्गस्त्रीणाम् अप्सरसां यूथस्य पतिः स्मरः काम अदृश्यताऽलक्ष्यत॥ २२॥ हुत्वेति। उपासानं तं मार्कण्डेयं मूर्तिमन्तं पुंविग्रहधारिणम् अनलमिव स्थितं ददृशुः॥ २३॥ ननृतुरिति तस्य मार्कण्डेयस्य अथो अथ वाद्यं स्तुतिसूचकं ध्वनिं चक्रुः॥ २४॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

आटोपं सविलासनृत्यम् ॥ १९ ॥ उत्तम्भयन्वर्द्धयन् ॥ २० ॥ उद्यंश्चन्द्रो यस्य स तथा स च निशावक्त्रः प्रदोषो यस्य स तथा कुसुमाकरः वसन्तः प्रवालस्तबकालिभिः भृङ्गैर्गायन् द्रुमलतामुकुलैः सहासीदाविरिति शेषः ॥ २१ ॥ आत्तचापेषुर्धनुर्ज्या-सहितबाणः स्वःस्त्रीयूथपतिः स्वर्गस्त्रीगणनाथः ॥ २२ ॥ अग्निं हुत्वोपासीनमग्निसमीपे तिष्ठन्तं दुराधर्षं चलितेन्द्रियं कर्तुमशक्यम् ॥ २३—२५ ॥

**श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः**

उद्यदिति । गां पृथ्वीं फलपुष्पादिभिः यान्तीति गोपाः सर्वसन्तर्पका ये द्रुमा इत्यर्थः ॥ २१–२५ ॥

**श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी**

उद्यंश्चन्द्रो यस्मिंस्तादृशं निशावक्त्रं निशामुखं यस्मिन सः प्रवालानां स्तवकानामालयो यत्र तैः गाः किरणान् पान्ति रक्षन्ति ये द्रुमा लताश्च तेषां जालैः सह कुसुमाकरो वसन्तः ॥ २१ ॥ गीतवादित्रयूथकैः गीतवादित्रयूथवद्भिः अदृश्यत मुनिमनसि स्वयमेव किञ्चिदन्वभूयतेति व्यकम्पयन्निति प्रबोध्यर्षाहमिति धर्षितोपीत्यग्रिमवाक्यादवगम्यते मत्वर्थीयष्ठन् ॥ २२ ॥ समुपासीनं मुनिम् ॥ २३–२४ ॥

**श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपः**

तदाश्रमपदं प्रविष्टो वायुर्ववौ इति तृतीयेन सम्बन्धः पुण्यैर्द्रुमैर्लताभिश्च अञ्चितं पूजितम् ॥ १८ ॥ मत्ता बर्हिण एव नटाः तेषामाटोपः सम्भ्रमो यत्र ॥ १९–२० ॥ उद्यच्चन्द्रो यस्मिन् तादृक् निशामुखं यस्मिन् सः प्रवालानां पल्लवानां स्तवकानां गुच्छाना-मालयो येषु तैः गाः भ्रमरादिवाणीरूपाः प्रतिध्वनिरूपाश्च पान्तीति गोपाः द्रुमाः लताश्च तेषां जालैः समूहैरुपलक्षितः कुसुमाकरो वसन्तः आसीदाविर्बभूव ॥ २१ ॥ गीतवादित्रयूथकैः गीतवादित्रसमूहवद्भिः ॥ २२–३४ ॥

**गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी**

तदाश्रमपदं प्रविष्टो वायुर्ववाविति तृतीयेनान्वयः । पुण्यैर्द्रुमैर्लताभिश्चाञ्चितं पूजितं पुण्यद्विजानामृषीणां कुलैराकीर्णं पुण्या अत्यमला जलाशया यस्मिन् ॥ १८ ॥ मत्तभ्रमराणां सङ्गीतं यस्मिन् । मत्तकोकिलानां कूजितं यस्मिन् । मत्तबर्हिण एव नटास्तेषा-माटोपः सम्भ्रमो यस्मिन् । मत्तद्विजानां पक्षिणां कुलैराकुलं व्याप्तम् ॥ १९ ॥ एवम्भूतं तदाश्रमपदं प्रविष्टो वायुर्मलयानिलः स्मरमुत्तम्भयन्नुद्दीपयन् ववौ प्रससार । तत्र वृक्षेषु प्रवेशान्मान्द्यं हिमनिर्झरकणादानात् शैत्यं पुष्पपरिष्वङ्गात् सौगन्ध्यं चोक्तम् ॥२०॥ किञ्च उद्यंश्चन्द्रो यस्मिंस्तन्निशावक्त्रं रजनीमुखं यस्य सः । प्रवालस्तबकानामालयः श्रेणयो येषु तैः । गुप्यन्ति विटपैः संश्लिष्यन्तीति गोपा द्रुमाः लताश्च तेषां जालैः समूहैश्च सह तत्र कुसुमाकरः आसीत् आविर्बभूव ॥ २१ ॥ किञ्च तदा गीतवादित्रयूथिकैः गायकादिसमुदायिभिः गन्धर्वैरन्वीयमानः तथा स्वस्त्रियोऽप्सरसस्तासां यूथस्य पतिः आत्तं चापमिषुश्च येन स स्मरश्च तत्रा-दृश्यत ॥ २२ ॥ दुराधर्षमभिभवितुमशक्यम् । तत्र हेतुः मूर्त्तिमन्तमनलमिवासीनं ददृशुः ॥ २३ ॥ तस्य मार्कण्डेयस्य पुरतः नृत्यादि चक्रुः ॥ २४ ॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

ते वा इति । हे विभो, ते गन्धर्वादयः वै निश्चितमेव, हिमाद्रेर्हिमाचलस्य उत्तरे पार्श्वे, यत्र पुष्पभद्रा नदी यत्र चित्राख्या शिला च, तत्र वर्त्तमानं तदाश्रमं मार्कण्डेयाश्रमं जग्मुः ॥ १७ ॥ आश्रमं विशिनष्टि द्वाभ्याम् । तदाश्रमेति । पुण्यं पुण्यावहं पुण्यैः द्रुमैः लताभिश्च अञ्चितं पूजितं । पुण्यानां द्विजानामृषीणां कुलैः समूहैः आकीर्णं, पुण्याः अमलाः जलाशया यस्मिंस्तत् ॥ १८ ॥ मत्तेति । मत्तानां भ्रमराणां संगीतं यस्मिन्, मत्तानां कोकिलानां कूजितं यस्मिन्, मत्ता बर्हिणो मयूरास्त एव नटास्तेषामाटोपः संभ्रमो यस्मिन्, मत्तानां द्विजानां पक्षिणां कुलैः समूहैराकुलमाकीर्णं, तदाश्रमपदम् ॥ १९ ॥ वायुरिति । वायुर्मलयानिलः हिमनिर्झर-शीकरान् आदाय प्रविष्टः सन्, सुमनोभिः कुसुमैः परिष्वक्तः स्मरं कामं उत्तम्भयन्नुद्दीपयन् संश्च, ववौ संप्रससार । इति त्रयाणामेकसंबन्धः ॥ २० ॥ एवं मलयानिलस्य व्यापार उक्तोऽथ वसन्तस्य तमाह । उद्यदिति । उद्यच्चन्द्रो यस्मिंस्तथाभूतं निशावक्त्रं रजनीमुखं यस्मिन्सः, प्रवालानां पल्लवानां स्तबकानां गुच्छानां चालयः श्रेण्यो येषु तैः, गुप्यन्ते विटपैः श्लिष्यन्ते इति गोपा द्रुमाः लताश्च तासां जालानि समूहास्तैरुपलक्षितः कुसुमाकरो वसन्तः, तत्र मुन्याश्रमपदे आसीत् प्रादुर्बभूव ॥ २१ ॥ एवं

वसन्तव्यापारमुक्त्वा कामस्य तमाह । अन्वीयमान इति । गीतवादित्राणां गायनोपयोगिमृदङ्गादीनां यूथं येषां तैः, गन्धर्वैः अन्वीयमानो युज्यमानः, आत्तं चापं इषवो बाणाश्चो येन धृतधनुर्बाण इत्यर्थः । स्वःस्त्रीयूथपतिः स्वर्गाङ्गनागणनाथः स्मरः, अदृश्यत तत्रालक्ष्यत ॥ २२ ॥ हुत्वेति । ततः शक्रकिंकराः, तं मार्कण्डेयं, अग्निं हुत्वा समुपासीनमग्निसंनिधावेवावस्थितं, मीलिताक्षं निमीलितनयनयुगलं, दुराधर्षं समभिभवितुमशक्यं, मूर्त्तिमन्तं पुंविग्रहधारिणं अनलं वह्निमिव स्थितं, ददृशुः ॥ २३ ॥ ननृतुरिति । ततः तस्य मार्कण्डेयस्य पुरतः, स्त्रियोऽप्सरसः ननृतुः, अथो गायका गन्धर्वाः जगुः, मृदङ्गवीणापणवैः मनोरमं वाद्यं च चक्रुः ॥ २४ ॥

## हिन्दी अनुवाद

भगवन्! वे सब उनकी आज्ञा के अनुसार उनके आश्रम पर गये। मार्कण्डेयजी का आश्रम हिमालय के उत्तर की ओर है। वहाँ पुष्पभद्रा नाम की नदी बहती है और उसके पास ही चित्रा नाम की एक शिला है ॥ १७ ॥ शौनकजी! मार्कण्डेयजी का आश्रम बड़ा ही पवित्र है। चारों ओर हरे-भरे पवित्र वृक्षों की पंक्तियाँ हैं, उन पर लताएँ लहलहाती रहती हैं। वृक्षों के झुरमुट में स्थान-स्थान पर पुण्यात्मा ऋषिगण निवास करते हैं और बड़े ही पवित्र एवं निर्मल जल से भरे जलाशय सब ऋतुओं में एक-से ही रहते हैं ॥ १८ ॥ कहीं मतवाले भौंरे अपनी सङ्गीतमयी गुंजार से लोगों का मन आकर्षित करते रहते हैं तो कहीं मतवाले कोकिल पञ्चम स्वर में 'कुहू–कुहू' कूकते रहते हैं; कहीं मतवाले मोर अपने पंख फैलाकर कलापूर्ण नृत्य करते रहते हैं तो कहीं अन्य मतवाले पक्षियों का झुंड खेलता रहता है ॥ १९ ॥ मार्कण्डेय मुनि के ऐसे पवित्र आश्रम में इन्द्र के भेजे हुए वायु ने प्रवेश किया। वहाँ उसने पहले शीतल झरनों की नन्हीं–नन्हीं फुहियाँ संग्रह कीं। इसके बाद सुगन्धित पुष्पों का आलिङ्गन किया और फिर कामभाव को उत्तेजित करते हुए धीरे–धीरे बहने लगा ॥ २० ॥ कामदेव के प्यारे सखा वसन्त ने भी अपनी माया फैलायी। सन्ध्या का समय था। चन्द्रमा उदित हो अपनी मनोहर किरणों का विस्तार कर रहे थे। सहस्र–सहस्र डालियों वाले वृक्ष लताओं का आलिङ्गन पाकर धरती तक झुके हुए थे। नयी–नयी कोंपलों, फलों और फूलों के गुच्छे अलग ही शोभायमान हो रहे थे ॥ २१ ॥ वसन्त का साम्राज्य देखकर कामदेव ने भी वहाँ प्रवेश किया। उसके साथ गाने–बजाने वाले गन्धर्व झुंड-के-झुंड चल रहे थे। उसके चारों ओर बहुत सी स्वर्गीय अप्सराएँ चल रही थीं और अकेला काम ही सबका नायक था। उसके हाथ में पुष्पों का धनुष और उस पर सम्मोहन आदि बाण चढ़े हुए थे ॥ २२ ॥ उस समय मार्कण्डेय मुनि अग्निहोत्र करके भगवान् की उपासना कर रहे थे। उनके नेत्र बंद थे। वे इतने तेजस्वी थे, मानो स्वयं अग्निदेव ही मूर्तिमान् होकर बैठे हों! उनको देखने से ही मालूम हो जाता था कि इनको पराजित कर सकना बहुत ही कठिन है। इन्द्र के आज्ञाकारी सेवकों ने मार्कण्डेय मुनि को इसी अवस्था में देखा ॥ २३ ॥ अब अप्सराएँ उनके सामने नाचने लगीं। कुछ गन्धर्व मधुर गान करने लगे तो कुछ मृदङ्ग, वीणा, ढोल आदि बाजे बड़े मनोहर स्वर में बजाने लगे ॥ २४ ॥

सन्दधेऽस्त्रं स्वधनुषि कामः पञ्चमुखं तदा । मधुर्मनो रजस्तोक इन्द्रभृत्या व्यकम्पयन् ॥ २५ ॥
क्रीडन्त्याः पुञ्जिकस्थल्याः कन्दुकैः स्तनगौरवात् । भृशमुद्विग्नमध्यायाः केशविस्रंसितस्रजः ॥ २६ ॥
इतस्ततो भ्रमद्दृष्टेश्चलन्त्या अनुकन्दुकम् । वायुर्जहार तद्वासः सूक्ष्मं त्रुटितमेखलम् ॥ २७ ॥
विससर्ज तदा बाणं मत्वा तं स्वजितं स्मरः । सर्वं तत्राभवन्मोघमनीशस्य यथोद्यमः ॥ २८ ॥
त इत्थमपकुर्वन्तो मुनेस्तत्तेजसा मुने । दह्यमाना निववृतुः प्रबोध्याहिमिवार्भकाः ॥ २९ ॥
इतीन्द्रानुचरैर्ब्रह्मन् धर्षितोऽपि महामुनिः । यन्नागादहमो भावं न तच्चित्रं महत्सु हि ॥ ३० ॥
दृष्ट्वा निस्तेजसं कामं सगणं भगवान् स्वराट् । श्रुत्वानुभावं ब्रह्मर्षेर्विस्मयं समगात् परम् ॥ ३१ ॥
तस्यैवं युञ्जतश्चित्तं तपःस्वाध्यायसंयमैः । अनुग्रहायाविरासीन्नरनारायणो हरिः ॥ ३२ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—तदा कामः स्वधनुषि पञ्चमुखम् अस्त्रं सन्दधे मधुः रजस्तोकः इन्द्रभृत्याः (तस्य मुनेः) मनः व्यकम्पयन् ॥२५॥ कन्दुकैः क्रीडन्त्याः पुञ्जिकस्थल्याः स्तनगौरवात् भृशम् उद्विग्नमध्यायाः केशविस्रंसितस्रजः अनुकन्दुकम् इतस्ततः भ्रमद्दृष्टेः चलन्त्याः त्रुटितमेखलं सूक्ष्मं तद्वासः वायुः जहार ॥ २६–२७ ॥ तदा स्मरः तं स्वजितं मत्वा बाणं विससर्ज अनीशस्य उद्यमः

यथा (तथा) तत्र सर्वं मोघम् अभवत् ॥ २८ ॥ मुने इत्थम् अपकुर्वन्तः ते मुनेः तत्तेजसा दह्यमानाः अहिं प्रबोध्य अर्भकाः इव निववृतुः २९ ॥ ब्रह्मन् इति इन्द्रानुचरैः धर्षितः अपि महामुनिः यत् अहमः भावं न अगात् तत् महत्सु चित्रं न ॥ ३० ॥ भगवान् स्वराट् सगणं कामं निस्ते जसं दृष्ट्वा ब्रह्मर्षेः अनुभावं श्रुत्वा परं विस्मयं समगात् ॥ ३१ ॥ एवं तपःस्वाध्यायसंयमैः चित्तं युञ्जतः तस्य अनुग्रहाय नरनारायणः हरिः आविरासीत् ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

शोषणदीपनसंमोहनतापनोन्मादनाख्यानि पंचमुखानि यस्य तदस्त्रं संदधे। तदैव मधुर्वसंतः। रजस्तोकश्च। पुंस्त्वमार्षम्। अन्ये चेंद्रभृत्यास्तस्य मनो व्यकंपयन् ॥ २५–२६ ॥ किंच। वायुर्मलयानिलः पुंजिकस्थल्यास्तत्सूक्ष्मं वासो जहार ॥ २७ ॥ सर्वं तेषां कर्म। तत्र तस्मिन्। मोघं व्यर्थम्। अनीशस्य निर्दैवस्य ॥ २८ ॥ मुनेरपकुर्वतः प्रतिकूलमाचरंतः। हे मुने ॥ २९ ॥ अहमोऽहंकारस्य। भावं विकारम् ॥ ३० ॥ निस्तेजसं म्लानवदनम्। स्वराडिंद्रः ॥ ३१ ॥ नरनारायणरूपो हरिः ॥ ३२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

केशेभ्यो विस्रंसिता अधः पतिता स्रक् पुष्पमाला यस्यास्तस्याः ॥ २६–२७ ॥ तत्र मुनौ। अनीशो भाग्यरहितः ॥ २८ ॥ हे मुने इति—मननशीला हि कोमलस्वभावत्वात्प्रतीकारं न कुर्वंतीति—भावः। प्रबोध्याहिमिति न जानीमहेऽद्य किं भावीति भीताः। अत्राहिदृष्टांतेन प्रथमं कामं प्रति किञ्चित्क्रोधोऽपि जातः पश्चाद्विवेकेन कामक्रोधयोर्द्वयोरेवोपरामः कृत इत्यवसीयते ॥ २९ ॥ धर्षितो विप्रकृतः ॥ ३०–३१–३२ ॥

### अन्वितार्थप्रकाशिका

संदध इति। शोषणमोहनसंदीपनतापनोन्मादनाख्यानि पञ्च मुखानि यस्य तदस्त्रं कामः धनुषि सन्दधे तदैव मधुर्वसन्तः रजस्तोको लोभः। पुंस्त्वमार्षम्। अन्ये च ये इन्द्रभृत्याः ते सर्वे तस्य मनो व्यकम्पयन् अक्षोभयन् ॥ २५ ॥ क्रीडन्त्या इति युग्मम्। क्रीडन्त्याः पुञ्जिकस्थलीनामाप्सरा तस्याः स्तनगौरवाद्भृशमुद्विग्नमध्यायाः केशेभ्यो विस्रंसिताः स्रजो यस्यास्तस्याः कन्दुकमनुसृत्येतस्ततो भ्रमन्त्यौ दृष्टी यस्याश्चलन्त्याः अत एव त्रुटिता मेखला यस्मिस्तत्सूक्ष्मं वासो वस्त्रं वायुर्व्याजहार ॥ २६–२७ ॥ विससर्जेति। तदा तं मुनिं स्वेन जितं मत्वा स्मरः बाणं विससर्ज। सर्वं तेषां कर्म तत्र तस्मिन् मोघं व्यर्थमभवत्। यथा अनीशस्य भाग्यहीनस्योद्यमो व्यर्थो भवति तद्वत् ॥ २८ ॥ ते इति। हे मुने! तस्यैवमपकुर्वन्तः प्रतिकूलमाचरन्तस्तस्य मुनेस्तेजसा दह्यमानास्ते कामादयः न जानीमहे। अद्य किं भविष्यतीति भीताः निववृतुः। तद्भाव आर्षः। यथाऽर्भकाः अहिं सर्पं प्रबोध्य ततो निवर्त्तन्ते तद्वदिति। अत्राहिदृष्टान्तेन प्रथमं किंचिदुद्भूतं कामं प्रति क्रोधोऽभूत् पश्चाद्विवेकेन कामक्रोधयोरुपशमः कृत इति निश्चीयते ॥ २९ ॥ इतीति। हे ब्रह्मन्! इत्येवमिन्द्रानुचरैर्धर्षितोऽपि महामुनिः यदहमोऽहङ्कारस्य भावं क्रोधमोहादिविकारं नागात्तदेतद्धि महत्सु चित्रं न भवति ॥ ३० ॥ दृष्ट्वेति। भगवान् स्वराट् इन्द्रः सगणं कामं निस्तेजसं परिम्लानवदनं दृष्ट्वा तथा ब्रह्मर्षेर्मार्कण्डेयस्य प्रभावं च श्रुत्वा परं भृशं विस्मयमगात् ॥३१॥ तस्येति। एवं तपआद्यैः चित्तं युञ्जतस्तस्यानुग्रहाय नरनारायणरूपो हरिः आविरासीत् ॥ ३२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अहमो भावं अहङ्कारं रागात् न प्राप्तः ॥ ३०–३९ ॥

### श्रीमद्वीरराघवव्याख्या

सन्दध इति। पञ्चारविन्दादीनि मुखानि यस्य तदस्त्रं स्वे धनुषि सन्दधे मधुर्वसन्तः रजस्तोको लोभो मदश्चेति एते इन्द्रभृत्याः व्यकम्पयन्नक्षोभयन् ॥ २५ ॥ क्रीडन्त्या इति पुञ्जिकस्थलीनामाप्सरा तस्याः कन्दुकैः क्रीडन्त्याः स्तनभाराद्भृशमुद्विग्नमध्यायाः चलन्मध्यायाः केशेभ्यो विस्रंसिता स्रग्यस्यास्तस्याः ॥ २६ ॥ कन्दुकमनुसृत्य इतस्ततो भ्रमन्त्यौ दृष्टी यस्याश्चलन्त्याः अतएव त्रुटिता मेखला यस्मिन् तत्सूक्ष्मं वासो वस्त्रं वायुर्जहार ॥ २७ ॥ विससर्जेति। तदा पुञ्जिकस्थल्याः नग्नतादशायां तत्र तस्मिन् मुनौ सर्वमेतत्कृत्यं मोघं व्यर्थमभवत् यथाऽनीशस्य निर्धनस्योद्यमस्तद्वत् ॥ २८ ॥ त इति। हे मुने मुनेः मुनये इत्थमपकुर्वन्तस्तस्य मुनेस्तेजसा दह्यमाना निवव्रुतुर्निवृत्ता बभूवुः यथार्भकोऽहिं सर्पं प्रबोध्य ततो निवर्त्तते तद्वत् ॥ २९ ॥ चित्रमेतदहो तस्य जितेन्द्रियत्वमिति विस्मयमानमालोक्याह—इतीति। हे ब्रह्मन् धर्षितः प्रलोभितोपि यदहमोऽहङ्कारस्य भावं विकारं मोहं नागादिति न प्रापेत्येतन्महत्सु न चित्रम् ॥ ३० ॥ दृष्ट्वेति। स्वराडिन्द्रः निस्तेजसं परिम्लानवदनं कामं दृष्ट्वा ब्रह्मर्षेः मार्कण्डेयस्य प्रभावं श्रुत्वा च परं भृशं विस्मयमगात् ॥ ३१ ॥ तस्येति नरनारायणो नरसहितः श्रीनारायणः ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पुञ्जिकस्थल्याः अप्सरसां प्रधानायाः कस्याश्चिदप्सरसः केश विभ्रंशितस्रजः केशभागात् विभ्रंशिता विभ्रष्टा स्रक् यस्याः सा तथा तस्याः ॥ २६ ॥ अनुकन्दुकम् उत्पतत् कन्दुकानुकूलं यथा भवति तथा चलन्त्याः सूक्ष्ममणुतरं त्रुटितमेखलं त्रुटिता छिन्ना मेखला काञ्ची यस्याः तत्तथा तत् ॥ २७ ॥ स्वेनात्मना जितम् ॥ २८ ॥ अर्भका अहिं प्रबोध्येव ॥ २९ ॥ अहमोऽहङ्कारस्य भावं नागात् कपालमुक्तनारिकेलफलवद्देहाभिमानरहित इत्यर्थः ॥ ३० ॥ निस्तेजसं दुर्वलं स्वराडिन्द्रः ॥ ३१ ॥ नरेण युक्तो नारायणः नरनारायणः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

व्यकम्पयन् विकम्पयितुमारब्धाः ॥ २५ ॥ पुञ्जिकस्थल्यास्तन्नाम्न्याः ॥ २६–२७ ॥ अनीशस्य अनीश्वरवादिनः उद्यमः पारलौकिकप्रयत्नः ॥ २८–२९ ॥ धर्षितोपि धर्षितुमारब्धोपि ॥ ३०–३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

शोषणमोहनसन्दीपनतापनमादनाख्यानि पञ्चमुखानि यस्य तत् मधुर्वसन्तः रजस्तोकश्च पुंस्त्वमार्षं व्यकम्पयन् मनश्चालयामासुः ॥ २५–२७ ॥ अनीशस्य भाग्यरहितस्य ॥ २८ ॥ प्रबोध्याहिमिति न जानीमहे अद्य किं भविष्यतीति भीताः अत्राहिदृष्टान्तेन प्रथमं किंचिदुद्भूतं कामं प्रति क्रोधोऽभूत् पश्चाद्विवेकेन कामक्रोधयोरुभयोरप्युपशमः कृत इत्यवसीयते ॥ २९ ॥ अहमोऽहङ्कारस्य ॥ ३० ॥ स्वराट् इन्द्रः ॥ ३१–३२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

शोषणदीपनसम्मोहनतापनोन्मादनानि पञ्चमुखानि यस्य तत्पञ्चमुखम् तस्य मनः व्यकम्पयन् मधुर्वसन्तः रजस्तोकश्च पुंस्त्वमार्षम् आत्मइन्द्रभृत्याः मदादयः ॥ २५–२९ ॥ अहमः अहङ्कारस्य भावं विकारं मोहम् ॥ ३०–३१ ॥ नरनारायणो नरेण सहितो नारायणः ॥ ३२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

शोषणमोहनसन्दीपनतापनोन्मादनाख्यानि पञ्च मुखानि यस्य तदस्त्रं धनुषि सन्दधे। तदैव मधुर्वसन्तः रजस्तोको लोभः। पुंस्त्वमार्षम्। अन्ये च ये इन्द्रभृत्याः ते सर्वे तस्य मनो व्यकम्पयन् अक्षोभयन् ॥ २५ ॥ पुञ्जिकस्थलीनामाप्सरास्तस्याः स्तनगौरवात् भृशमुद्विग्नमध्यायाः केशेभ्यो विस्रंसिताः स्रजो यस्यास्तस्याः ॥ २६ ॥ कंदुकमनुसृत्येतस्ततो भ्रमन्त्यौ दृष्टीर्यस्याश्चलन्त्याः अत एव त्रुटिता मेखला यस्मिंस्तत्सूक्ष्मं वासो वस्त्रं वायुर्जहार ॥ २७ ॥ सर्वं कर्म तेषां तत्र तस्मिन्मोघं व्यर्थम्। अनीशस्य भाग्यहीनस्य ॥ २८ ॥ हे मुने तस्यैवमपकुर्वन्तस्तस्य मुनेस्तेजसा दह्यमानानि ववृतुः। भयान्निवृत्तौ दृष्टान्तमाह—यथा अर्भका अहिं सर्पं प्रबोध्य ततो निवर्त्तन्ते तद्वदिति ॥ २९ ॥ तत्तत्राश्चर्यं मन्यमानमालक्ष्याह—इतीति। हे ब्रह्मन्नित्येवं धर्षितोऽपि यदहमोऽहङ्कारस्य भावं क्रोधमोहादिविकारं नागात्तदेतद्धि महत्सु चित्रं न भवति शान्तत्वादित्याशयः ॥ ३० ॥ स्वराट् इन्द्रः कामं निस्तेजसं परिम्लानवदनं दृष्ट्वा तथा ब्रह्मर्षेर्मार्कण्डेयस्य प्रभावं च श्रुत्वा परं भृशं विस्मयमगात् ॥ ३१ ॥ नरनारायणः नरसहितो नारायणः ॥ ३२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

संदध इति। पञ्च अरविन्दादीनि उन्मादनादीनि वा मुखानि यस्य तत्, 'अरविन्दमशोकं च चूतं च नवमल्लिका। नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः' इति रेवामाहात्म्ये। 'उन्मादनस्तापनश्च शोषणः स्तम्भनस्तथा। संमोहनश्च कामस्य पञ्च बाणाः प्रकीर्त्तिताः' इति व्याख्यासुधायाम्। अस्त्रं कामः, स्वधनुषि। संदधे। तदा मधुर्वसन्तः, रजस्तोको लोभः, पुंस्त्वमार्षम्। मदश्च एवंविधा इन्द्रभृत्याः, व्यकम्पयन् मुनिमक्षोभयन् ॥ २५ ॥ क्रीडन्त्या इति। इत इति च। कन्दुकैः क्रीडन्त्याः स्तनगौरवात् स्तनयोर्भारात् भृशं उद्विग्नमध्यायाश्चलन्मध्यायाः, केशेभ्यः विस्रंसिता स्रग्यस्यास्तस्याः, कन्दुकं अनु अन्वनु इत्यर्थः। चलन्त्याः इतस्ततः भ्रमन्ती दृष्टिर्यस्यास्तस्याः पुञ्जिकस्थल्याः एतन्नामाप्सरसः, त्रुटिता मेखला यस्मिंस्तत्, सूक्ष्मं तत्प्रसिद्धं वासो वस्त्रं वायुः जहार। इति द्वयोरेकान्वयः ॥ २६–२७ ॥ विससर्जेति। तदा पुञ्जिकस्थल्या नग्नतादशायां, स्मर कामः तं मुनिं स्वजितं मत्वा बाणं विससर्ज। परं सर्वं तेषां कर्म तत्र मार्कण्डेयमुनौ, मोघं व्यर्थं अभवत्। कथमिव। अनीशस्य निर्दैवस्य निर्धनस्येति यावत्। उद्यमः यथा निर्दैवस्य यावन्त उद्यमास्ते यथा वृथा भवन्ति, तथैतेषां कृतं कर्म व्यर्थमेवाभवदित्यर्थः ॥ २८ ॥ त इति। हे मुने, मुनेः मुनये इत्यर्थः। इत्थमुक्तप्रकारेण। अपकुर्वन्तः ते कामादय इन्द्रप्रेषिताः सर्वे, तत्तेजसा मुनेरेव महामहसा दह्यमानाः सन्तः, अहिं सर्पं प्रबोध्य, ततः स्थानात् अर्भका इव निववृतुः पलायनं चक्रुः ॥२९॥ अहो तस्यैतज्जितेन्द्रियत्वं चित्रमिति विस्मयमानमालक्ष्याह। इतीति। हे ब्रह्मन्, इतीत्थं, इन्द्रानुचरैः धर्षितः अपि, महामुनिः अहमः अहंकारस्य भावं विकारं मोहमिति यावत्, न अगात्।

यत् तत् महत्सु चित्रं न हि ॥ ३० ॥ दृष्ट्वेति । भगवान् स्वराडिन्द्रः, पुनः स्वर्गं प्रत्यागतमिति शेषः । सगणं स्वकीयगणसहितं कामं मदनं, निस्तेजसं म्लानवदनं दृष्ट्वा, तन्मुखादिति शेषः । ब्रह्मर्षेर्मार्कण्डेयस्य अनुभावं महिमानं श्रुत्वा, परं विस्मयं समगात् ॥ ३१ ॥ तस्येति । तपःस्वाध्यायसंयमैः एवं चित्तं युञ्जतः तस्य मार्कण्डेयस्य अनुग्रहाय, नरनारायणः हरिः, आविरासीत् ॥ ३२ ॥

## हिन्दी अनुवाद

शौनकजी ! अब कामदेव ने अपने पुष्पनिर्मित धनुषपर पञ्चमुख बाण चढ़ाया। उसके बाण के पाँच मुख हैं—शोषण, दीपन, सम्मोहन, तापन और उन्मादन । जिस समय वह निशाना लगाने की ताक में था, उस समय इन्द्र के सेवक वसन्त और लोभ मार्कण्डेय मुनि का मन विचलित करने के लिये प्रयत्नशील थे ॥ २५ ॥ उनके सामने ही पुञ्जिकस्थली नाम की सुन्दरी अप्सरा गेंद खेल रही थी। स्तनों के भार से बार बार उसकी कमर लचक जाया करती थी। साथ ही उसकी चोटियों में गुँथे हुए सुन्दर-सुन्दर पुष्प और मालाएँ बिखरकर धरती पर गिरती जा रही थीं ॥ २६ ॥ कभी-कभी वह तिरछी चितवन से इधर-उधर देख लिया करती थी उसके नेत्र कभी गेंद के साथ आकाश की ओर जाते, कभी धरती की ओर और कभी हथेलियों की ओर । वह बड़े हाव-भाव के साथ गेंद की ओर दौड़ती थी। उसी समय उसकी करधनी टूट गयी और वायु ने उसकी झीनी-सी साड़ी को शरीर से अलग कर दिया ॥ २७ ॥ कामदेव ने अपना उपयुक्त अवसर देखकर और यह समझ कर कि अब मार्कण्डेय मुनि को मैंने जीत लिया, उनके ऊपर अपना बाण छोड़ा। परन्तु उसकी एक न चली । मार्कण्डेय मुनि पर उसका सारा उद्योग निष्फल हो गया—ठीक वैसे ही, जैसे असमर्थ और अभागे पुरुषों के प्रयत्न विफल हो जाते हैं ॥ २८ ॥ शौनकजी ! मार्कण्डेय मुनि अपरिमित तेजस्वी थे। काम, वसन्त आदि आये तो थे इसलिये कि उन्हें तपस्या से भ्रष्ट कर दें, परंतु अब उनके तेज से जलने लगे और ठीक उसी प्रकार भाग गये, जैसे छोटे-छोटे बच्चे सोते हुए साँप को जगाकर भाग जाते हैं ॥ २९ ॥ शौनकजी ! इन्द्र के सेवकों ने इस प्रकार मार्कण्डेय जी को पराजित करना चाहा, परंतु वे रत्तीभर भी विचलित न हुए। इतना ही नहीं उनके मन में इस बात को लेकर तनिक भी अहङ्कार का भाव न हुआ। सच है, महापुरुषों के लिये यह कौन-सी आश्चर्य की बात है ॥ ३० ॥ जब देवराज इन्द्र ने देखा कि कामदेव अपनी सेना के साथ निस्तेज हतप्रभ होकर लौटा है और सुना कि ब्रह्मर्षि मार्कण्डेय जी परम प्रभावशाली हैं, तब उन्हें बड़ा ही आश्चर्य हुआ ॥ ३१ ॥ शौनकजी ! मार्कण्डेय मुनि तपस्या, स्वाध्याय धारणा, ध्यान और समाधि के द्वारा भगवान् में चित्त लगाने का प्रयत्न करते रहते थे। अब उन पर कृपाप्रसाद की वर्षा करने के लिये मुनिजन-नयन मनोहारी नरोत्तम नर और भगवान् नारायण प्रकट हुए ॥ ३२ ॥

तौ शुक्लकृष्णौ नवकञ्जलोचनौ चतुर्भुजौ रौरवल्कलाम्बरौ ।
पवित्रपाणी उपवीतकं त्रिवृत् कमण्डलुं दण्डमृजुं च वैणवम् ॥ ३३ ॥
पद्माक्षमालामुत जन्तुमार्जनं वेदं च साक्षात्तप एव रूपिणौ ।
तपत्तडिद्वर्णपिशङ्गरोचिषा प्रांशू दधानौ विबुधर्षभार्चितौ ॥ ३४ ॥

ते वै भगवतो रूपे नरनारायणावृषी । दृष्ट्वोत्थायादरेणोच्चैर्ननामाङ्गेन दण्डवत् ॥ ३५ ॥
स तत्सन्दर्शनानन्दनिर्वृतात्मेन्द्रियाशयः । हृष्टरोमाश्रुपूर्णाक्षो न सेहे तावुदीक्षितुम् ॥ ३६ ॥
उत्थाय प्राञ्जलिः प्रह्व औत्सुक्यादाश्लिषन्निव । नमो नम इतीशानौ बभाषे गद्गदाक्षरः ॥ ३७ ॥
तयोरासनमादाय पादयोरवनिज्य च । अर्हणेनानुलेपेन धूपमाल्यैरपूजयत् ॥ ३८ ॥
सुखमासनमासीनौ प्रसादाभिमुखौ मुनी । पुनरानम्य पादाभ्यां गरिष्ठाविदमब्रवीत् ॥ ३९ ॥

### मार्कण्डेय उवाच

किं वर्णये तव विभो यदुदीरितोऽसुः संस्पन्दते तमनु वाङ्मनइन्द्रियाणि ।
स्पन्दन्ति वै तनुभृतामजशर्वयोश्च स्वस्याप्यथापि भजतामसि भावबन्धुः ॥ ४० ॥

---

१. वीक्ष्यो० । २. रम् ।

## कृष्णप्रिया व्याख्या

अन्वयः—शुक्लकृष्णौ नवकञ्जलोचनौ चतुर्भुजौ रौरववल्कलाम्बरौ पवित्रपाणी त्रिवृत् उपवीतकं कमण्डलुम् ऋजुं वैणवं दण्डम् उत पद्माक्षमालां जन्तुमार्जनं वेदं दधानौ साक्षात् तपः एव रूपिणौ तपत्तडिद्वर्णपिशङ्गरोचिषा ( युक्तौ ) विबुधर्षभार्चितौ ते वै भगवतः रूपे नरनारायणौ ऋषी दृष्ट्वा ( मुनिः ) आदरेण उत्थाय उच्चैः दण्डवत् अङ्गेन ननाम ॥ ३३–३५ ॥ तत्सन्दर्शनानन्दनिर्वृतात्मेन्द्रियाशयः हृष्टरोमाश्रुपूर्णाक्षः सः तौ उदीक्षितुं न सेहे ॥ ३६ ॥ प्राञ्जलिः प्रह्वः औत्सुक्यात् आश्लिषन् इव उत्थाय गद्गदाक्षरः नमः नमः इति ईशानौ बभाषे ॥३७॥ तयोः आसनम् आदाय पादयोः अवनिज्य अर्हणेन अनुलेपेन धूपमाल्यैः अपूजयत् ॥ ३८ ॥ सुखम् आसनम् आसीनौ प्रसादाभिमुखौ मुनी पादाभ्यां पुनः आनम्य गरिष्ठौ इदम् अब्रवीत् ॥ ३९ ॥ मार्कण्डेयः उवाच—विभो तव किं वर्णये यदुदीरितः तनुभृताम् अजशर्वयोः च स्वस्य अपि ) असुः संस्पन्दते तम् अनुवाङ्मनइन्द्रियाणि स्पन्दन्ति वै अथ अपि भजतां ( त्वं ) भावबन्धुः असि ॥ ४० ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तावनुवर्णयति द्वाभ्याम् । ताविति । रौरवं कृष्णाजिनं वल्कलं चांबरं ययोस्तौ पवित्रे पाण्योर्ययोस्तौ । त्रिवृत्त्रिगुणं नवतंतुकमिति वा त्रिवृद्भिःपवमानमित्यादौ नवके प्रयोगात् । उपवीतकादीन्दधानौ ॥ ३३ ॥ वेदं दर्भमुष्टिम् । किंच साक्षात्तप एव तौ । तत्र हेतुः । तपत्तडिद्वर्णं देदीप्यमानविद्युत्संकाशं यत्पिशंगं रोचिस्तेन रूपिणौ मूर्तिमंतौ । तादृक् तेजोयुक्तमूर्तिभ्यां तपोमयत्वेन प्रकाशमानावित्यर्थः । प्रांशू उन्नतौ ॥ ३४ ॥ उच्चैर्महताऽऽदरेण ॥ ३५ ॥ तयोः संदर्शनेन य आनंदस्तेन निर्वृता उपशांता आत्मेंद्रियाशया देहेंद्रियमनांसि यस्य सः । न सेहे नाशक्नोत् ॥ ३६ ॥ आश्लिषन्नालिंगन्निव ॥ ३७ ॥ पादयोरवनिज्य पादौ प्रक्षाल्य । अर्हणेनार्घ्येण ॥ ३८ ॥ पादाभ्यां पादावानम्य गरिष्ठौ पूज्यतमौ तौ प्रति ॥ ३९ ॥ अंतर्यामिणस्तस्यैव प्राणादिप्रवर्तकत्वाद्आत्मनस्तत्स्तुतावस्वातंत्र्यं पश्यन्नाह किमिति । तव त्वां किमहं वर्णये कथं स्तौमि । यद्येन त्वयैवोदीरितः प्रेरितोऽसुः प्राणः संस्पंदते प्रवर्तते तमनु च वागादयः स्पंदंति । अत्र हेतुः । वै अन्वयव्यतिरेकाभ्यां श्रोत्रमित्यादि श्रुतिभिश्चैतत्प्रसिद्धमित्यर्थः । न केवलं प्राकृतानां तनुभृतां किंत्वजशर्वयोश्चातः स्वस्य ममापि तथैव । एवं यद्यपि न कस्यापि स्वातंत्र्यमथापि दारुयंत्रवत्त्वत्प्रवर्तितैरपि वागादिभिः भजतां पुंसां भावबंधुरात्मबंधुरसि न तु पित्रादिवद्देहमात्रबंधुः । अहो कृपालुता तवेत्यर्थः ॥ ४० ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

त्रिगुणमिति—'यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि । तृतीयमुत्तरीयार्थं वस्त्राभावे तदिष्यते ।' इति हेमाद्र्युक्तेरज्ज्युपवीतमित्यर्थः । यद्वा–त्रिवृदिति यज्ञोपवीत स्वरूपकथनमनेनेत्याह–नवतंतुकमिति । अत्र प्रमाणमाह–त्रिवृद्भिरिति । पवित्रे द्वित्रिकुशनिर्मिते पाण्योर्दक्षवामकरानामिकयोर्ययोस्तौ । यद्वा–सौवर्णे पवित्रे प्राह्ये । तदुक्तमथर्वषष्ठानुवाके–'नैनं रक्षांसि न पिशाचाः सहंते देवानामोजः प्रथमं ह्ये तत् । यो बिभर्ति दाक्षायणं हिरण्यं स जीवेषु कृणुते दीर्घमायुः' इति । कृणुते प्राप्नोति । 'कृवि–गतौ' तदर्थः ॥३३॥ पद्मानामक्षमालेति वैष्णवमालात्वबोधनायैव । जंतुमार्जनं सूक्ष्मकीटपिपीलिकादिमार्जनम्, तच्च नानातन्तुखण्डनिर्मितश्चामरविशेष इति केचित् । अपरे तु वस्त्रखंडमिति । अन्ये तु जंतूनां मार्जनं येन तथाविधं वेदं चेति वेदविशेषणतया व्याचख्युः । पिशंगं पीतम् । इत्यर्थं इति–तेजोविशेषेण मूर्तिधारि तप एवेमाविति प्रतीयमानाविति भावः ॥ ३४ ॥ दंडवत् साष्टांगम् ॥ ३५–३९ ॥ हे विभो इति–वर्णनं हि परिच्छिन्नवस्तुनो भवति विभोस्तु तद्धास्यायैवेति भावः । अत्र वागादिस्पंदकत्वे । अन्वयव्यतिरेकौ च यत्र श्रोत्रादिमत्त्वं तत्र तत्प्रवर्तकत्वं यथाऽस्मदादिषु, यत्र तन्न तत्र न तत्प्रवर्तकत्वं यथा घटादाविति ज्ञेयौ । इत्यर्थं इति–श्रुतिभिरयमर्थः स्फुटतया प्रतिपादित इति भावः । इत्यर्थं इति–अहो निर्निमित्तकृपालुता तवैवास्ति न देहबंधूनामिति भावः । विश्वनाथस्तु—यद्यप्येवं बंधुरसि तथापि भजतां जनानां भावेन प्रेम्णा बंधुर्बंधुरिव वश्योसि प्राणेंद्रियादिभिस्त्वमेव स्वभजनं कारयसि पुनस्तादृशभजनस्य प्रत्युपकारासमर्थ ऋणीव भूत्वा प्रेमवश्यो भवसीत्यद्भुतं तव कृपावैभवमिति भावः ॥ ४० ॥

## अन्वितार्थप्रकाशिका

ताविति त्रिकम् । शुक्लकृष्णौ नरः शुक्लः नारायणः कृष्णः नवकञ्जलोचनौ चतुर्भुजौ रौरवं कृष्णाजिनं वल्कलं च ते अम्बरे ययोस्तौ पवित्रे कुशनिर्मिते पाण्योर्ययोस्तौ त्रिवृत्त्रिगुणं नवतन्तुकमिति वा त्रिवृद्भिः पवमानमित्यादौ नवके प्रयोगदर्शनादिति उपवीतकं कमण्डलुम् ऋजुमवक्रं वैणवं दण्डं पद्माक्षानां पद्मबीजानां मालाम् उत जन्तुमार्जनम् पिपीलिकादिजन्तूनामपनोदकं वस्त्रं वेदं दर्भमुष्टिं वेदशास्त्रं वा दधानौ साक्षात्तप एव रूपं मूर्त्तिरनयोरस्तीति तथाभूतौ तपत्तडिद्वर्णं दीप्यमानविद्युत्संकाशं यत्पिशङ्गरोचिस्तेन युक्ताविति शेषः । तादृक्तेजोयुक्तमूर्त्तिभ्यां तपोमयत्वेन प्रकाशमानावित्यर्थः । प्रांशू उन्नतौ

विबुधर्षभैः ब्रह्मादिभिरर्चितौ वै प्रसिद्धे भगवतो रूपे नरनारायणावृषी दृष्ट्वा उत्थाय उच्चैर्महता आदरेण दण्डवत्पतितेन अङ्गेन ननाम ॥ ३३–३४–३५ ॥ स इति। तयोः सन्दर्शनेन य आनन्दस्तेन निर्वृता उपशान्ता आत्मेन्द्रियाशया देहेन्द्रियमनांसि यस्य सः हृष्टानि पुलकितानि रोमाणि यस्य सः मुनिस्तावुदीक्षितुमपि न सेहे नाशक्नोत् ॥ ३६ ॥ उत्थायेति। प्राञ्जलिः प्रह्वो नम्रः औत्सुक्यात् आश्लिषन् इव उत्थाय गद्गदाक्षरः सन् ईशानौ तौ नमो नम इति बभाषे ॥ ३७ ॥ तयोरिति। आसनमादाय तयोः पादयोरवनिज्य पादौ प्रक्षाल्यार्हणमर्घं तदादिभिरपूजयत् ॥ ३८ ॥ सुखमिति। पूर्वार्द्धं स्फुटम्। पादाभ्यामानम्य पादयोः प्रणिपत्य गरिष्ठौ पूज्यतमौ तौ प्रतीदमब्रवीत् ॥ ३९ ॥ किमिति। हे विभो! तव त्वां किमहं वर्णये कथं स्तौमि। यत् येन त्वयैव उदीरितः तनुभृतामजशर्वयोश्च तथाऽस्य ममापि असुः प्राणः संस्पन्दते प्रवर्त्तते। तं स्पन्दमानं प्राणमनुसृत्यवागादीनीन्द्रियाणि स्पन्दन्ति स्वस्वव्यापारे प्रवर्त्तन्ते। तङ्भाव आर्षः। यद्यप्येवं न कस्यापि स्वातन्त्र्यमथापि दारुयन्त्रवत्स्वप्रवर्त्तितैरपि वागादिभिर्भजतां पुंसां त्वं भावबन्धुरसि भावेन बध्यते वशीभवति तथाभूतोऽसि। यद्वा। भावबन्धुः न तु पित्रादिवत् देहमात्रबन्धुः। अहो! तव कृपालुतेति भावः ॥ ४० ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

यदुदीरितो येन प्रेरितः असुः प्राणः स्वस्यापि तथापि सर्वस्मात्परोपि ॥ ४०–४२ ॥

## श्रीमद्वीरराघवव्याख्या

ताविति। तौ नरनारायणौ वीक्ष्य उत्थायेत्युपरिष्टात्सम्बन्धः कथम्भूतौ शुक्लकृष्णौ तत्र नरः शुक्लः श्रीनारायणः कृष्णवर्णः रौरवं कृष्णाजिनं वल्कलं च ते अम्बरे ययोस्तौ पवित्रे पाण्योः ययोस्तौ त्रिवृत् त्रिगुणं नवतन्तुकमिति वा तदुपवीतं द्वितीयान्तानां दधानावित्युपरिष्टात्सम्बन्धः ऋजुमवक्रं वैणवं दण्डम् ॥ ३३ ॥ पद्माक्षाणां मालाम् उतापि च जन्तुमार्जनं मशकादिजन्त्वपनोदनवस्त्रं वेदं दर्भमुष्टिं च दधानौ साक्षात्तप एव एकं रूपं मूर्त्तिरनयोरस्तीति तथा तपत्तडिद्वर्णं दीप्यमानतडिद्वर्णसदृशं यत्पिशङ्गरोचिस्तेन प्रांशू प्रगता व्याप्ता अंशवो ययोस्तौ विबुधश्रेष्ठैर्ब्रह्मादिभिरर्चितौ ॥ ३४ ॥ ते इति। रूपापेक्षया नपुंसकनिर्देशः वीक्ष्येति उच्चैर्महताङ्गेन देहेन ॥३५॥ स मार्कण्डेयस्तयोः सन्दर्शनेन यो आनन्दस्तेन निर्वृताः सुखिताः शान्ता वा आत्मेन्द्रियाशयाः देहेन्द्रियमनांसि यस्य सः हृष्टानि उत्पुलकितानि रोमाणि यस्य सः तावत्तौ नरनारायणौ द्रष्टुमपि न सेहे न शशाक ॥ ३६ ॥ उत्थायेति। प्रह्वः नम्रः आश्लिषन्निव परिरम्भमाण इव केवलं गद्गदाक्षरं नमो नम इति वाक्यम् ईश्वरौ प्रत्यावभाषे गद्गदाक्षरमिति क्रियाविशेषणम् ।३७। तयोरिति। आधाय निधाय पादयोरवनिज्य पादौ प्रक्षाल्यार्हणेन योग्येनानुलेपनेन चन्दनेन धूपैर्माल्यैः कुसुमैश्च अपूजयत् ॥ ३८ ॥ सुखं यथा तथा आसीनः गरिष्ठौ पूज्यतमौ प्रतीदं वक्ष्यमाणमब्रवीत् ॥ ३९ ॥ उक्तिमेवाह—किमित्यादिना, यावदध्यायसमाप्ति। युवयोर्दर्शनं न मे तपःफलं तस्यापि सर्वेन्द्रियप्राणप्रचोदयित्रा त्वयैव कारितत्वादतः केवलं त्वत्कृपाफलमेवेत्यभिप्रेत्याह—किमिति। हे विभो! तव त्वां किम्वर्णये कथं स्तौमि यतः स्वस्य मम तनुभृतां किम्बहुना अजशर्वयोः ब्रह्मरुद्रयोश्चासुः प्राणः यतो येन त्वयोदीरितः प्रेरितः संस्पन्दते चलति स्वव्यापारक्षमो भवति तं स्पन्दमानं प्राणमनुसृत्य वागादीनि स्पन्दन्ति अनुदात्तत्वलक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदं यद्यवं तर्हि सर्वेपि त्वमिव किं न मामुपासते इत्यत्राह—अथापीति। प्राणिमात्रस्य प्राणादिप्रचोदयितृत्वेपि भजतां पुंसामेव भावबन्धुर्भावस्त्वदुपासनरूपोभिप्रायविशेषः तं बध्नाति स्थिरीकरोतीति तथा त्वयि किंचिदानुकूल्ययुक्तानामेव भावबन्धुत्वमिति भावः ॥ ४० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

रुरोर्विद्यमानं रौरवं वल्कलं चाम्बरं वा ययोस्तौ ॥ ३३ ॥ जन्तुमार्जनं पिञ्छरचितपुञ्जिं चामरविशेषमित्यर्थः। वेदं दर्भमुष्टिं तपती प्रकाशमाना तडित्तपत्तडित् तद्वद्वर्णेन पिशङ्गरोचिषा कपिलप्रभया तप एकरूपिणौ प्रांशू अत्युच्छ्रितौ दधानौ जग्मतुरिति शेषः। उपवीतादिकं च दधानौ रूपविशेषणम् ॥ ३४ ॥ तौ नरनारायणावृषी वीक्ष्य ननाम नमने हेतुमाह—ते इति। ते हरे रूपे वै यस्मात्तस्मात् ॥ ३५ ॥ तयोः सन्दर्शनादुत्पन्नेनाऽऽनन्देन नियतात्मेन्द्रियाशया यस्य स तथा ॥ ३६ ॥ गद्गदाक्षरं वचः ॥ ३७–३८ ॥ पादाभ्यां पादावुद्दिश्य गरिष्ठौ गुरूणां ब्रह्मादीनामपि गुरुः ॥३९॥ अपरिमितमहिम्नोर्युवयोः पुरतो यत्किञ्चिद्वर्णनं कि वर्णये न किमपि माहात्म्यानामनन्तत्वात्तदेकदेशमपि वर्णयितुं न शक्तोस्मि वागादीन्द्रियाणान्त्वन्नियततत्वेन त्वत्प्रसादायत्तत्वादिति शेषः। एतत्कथमित्याशङ्क्य सर्वेन्द्रियनायकः प्राणोपि भगवन्नियत एव चेष्टते किमुतान्यानीति भावेनाह—यदुदीरित इति। येन त्वयोदीरितः प्रेरितोऽसुः प्राणः तमनु प्राणमनु तनुभृतां मन इन्द्रियाणि मत्प्रेरितानि स्पन्दन्ति चेष्टन्ते किञ्च अजशर्वयोश्चेन्द्रियाणि येन प्रेरितानि अनेनाजशर्वयोः समत्वेन त्वदप्रेरितानि विषयेषु प्रवर्त्तन्ते अतो व्यभिचीर्णो हेतुरिति निरस्तम् अथापि त्वदिन्द्रिय-

प्रवृत्तौ हेतोर्व्यभिचारस्तदवस्थ इति मन्दाशङ्कां परिहरति—स्वस्येति। स्वस्येन्द्रियाण्यपि त्वत्प्रेरितानि यद्यप्येवं स्वतन्त्रोऽसि स त्वमथापि भजतां पुंसां भावबद्धोसि भक्तिबद्धोसि तस्मात्परतन्त्र इव प्रतीयसे मादृशानामित्यर्थः ॥ ४० ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

उपवीतादिकं दधानौ ॥ ३३–३९ ॥ किं वर्णय इति। तथापि भक्त्या बन्धुः स्निग्धोऽसि ॥ ४०–४१–४२–४३ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

रौरवं कृष्णाजिनं वल्कलम् अम्बरं ययोस्तौ त्रिवृत् त्रिगुणं नवतन्तुकम् उपवीतं दधानौ कमण्डल्वादिकं हस्तेषु दधानौ वेदं वेदशास्त्रं जन्तूनां मार्जनं शुद्धिर्यतस्तं वेदं दर्भमुष्टिमिति केचित् तप एव रूपिणौ तपोमूर्त्ती इत्यर्थः। तपत्तडिद्वर्णं दीप्यमान-विद्युत्सङ्काश यत् पिशङ्गं रोचिस्तेन प्रांशू अत्युन्नतौ ॥ ३३–३४–३५ ॥ न सेहे न शशाक ॥ ३६ ॥ प्रह्वो नम्रः ॥ ३७–३९ ॥ येन त्वयैव उदीरितः प्रेरितोऽसुः प्राणः स्पन्देत प्रवर्त्तते तमनु च वागादीनि स्पन्देत 'श्रौत्रम्' इत्यादिश्रुतिभिर्वै निश्चितमेवेत्यर्थः। न केवलं प्राकृतानां तनुभृतामपि त्वजशर्वयोश्च अतः स्वस्य ममापि यद्यप्येवम् अथापि भजतां जनानां भावेन प्रेम्णा बन्धुर्बन्धुरिव वश्योऽसि प्राणबुद्धीन्द्रियादिभिस्त्वमेव स्वभजनं कारयसि पुनस्तादृशभजनस्य प्रत्युपकारे असमर्थो ऋणीव भूत्वा तत् प्रेमवश्यो भवसीत्यद्भुतं तव कृपावैभवमिति भावः ॥ ४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

नरः शुक्लः श्रीनारायणः कृष्णः रौरवं कृष्णाजिनं ते अम्बरे ययोस्तौ त्रिवृत् त्रिगुणं नवतन्तुकं वा उपवीतकं कम-ण्डल्वादिकं च दधानावित्युत्तरेणान्वयः ऋजुमवक्रं दण्डम् ॥ ३३ ॥ जन्तुमार्जनं पिपीलिकामशकादिजन्त्वपनोदकम् तपत् दीप्यमानं तडिद्वर्णसदृशं यत्पिशङ्गरोचिस्तेन साक्षात्तप एव रूपिणौ मूर्तिमन्तौ ॥ ३४ ॥ उच्चैर्महता आदरेण ॥ ३५ ॥ तयोः सन्दर्शनानन्देन निर्वृताः आनन्दिताः आत्मेन्द्रियाशयाः देहेन्द्रियमनांसि यस्य सः ॥ ३६ ॥ आश्लिषन् आलिङ्गयन् इव ॥ ३७–३९ ॥ सर्वचेतना-चेतननियन्तारं भगवन्त स्तोतुं प्रवृत्तस्तास्तुतौ आत्मनः सामर्थ्याभावं प्रथमं दर्शयति—किमिति। हे विभो! सर्वव्यापक। तव अहं किं वर्णये न किमपि वर्णयितुं शक्नोमीत्यर्थः। यथा व्यापकस्य वह्न्यादेः सकाशात् जातो विस्फुलिङ्गादि किमपि न कर्त्तुं शक्नोति तद्वादतिभावः किञ्च स्वस्य मम तथाऽन्येषामपि तनुभृतां किम्बहुना अजशर्वयोश्च असुः यमनु वाङ्मनइन्द्रियाणि स्पन्दन्ति एवम्भूतः सर्वेन्द्रियनायकः प्राणः येन त्वयैवोदीरितः स्पन्दते प्रवर्त्तते अथापि भगवत्प्रवर्त्तितप्राणादिमतां भवद्व्याप्यानामंशभूतानां भजता-मस्माकं भावबन्धुः भावेन स्वसाधारणेन भक्तप्रियस्वभावेनैवबन्धुर्वश्योपि ॥ ४० ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तावनुवर्णयति—द्वाभ्याम् तौ शुक्लकृष्णाविति। तत्र नरः शुक्लः नारायणः कृष्णः। रौरवं कृष्णाजिनं वल्कलं च ते अम्बरे ययोस्तौ। पवित्रे पाण्योर्ययोस्तौ। त्रिवृत्त्रिगुणं नवतन्तुकमिति वा। त्रिवृद्बहिः पावमानमित्यादौ नवके प्रयोगदर्शनादिति। उपवीत-मृजुमवक्रं वैणवं दण्डम् ॥ ३३ ॥ जन्तुमार्जनं पिपीलिकामशकादिजन्तूनामपनोदकं वस्त्रं वेदं दर्भमुष्टिं च दधानौ। साक्षात्तप एव रूपं मूर्त्तिरनयोरस्तीति तथाभूतौ। तत्र हेतुः—तपत्तडिद्वर्णं दीप्यमानविद्युत्सङ्काशं यत्पिशङ्गरोचिस्तेन युक्ताविति शेषः। तादृक् तेजोयुक्तमूर्तिभ्यां तपोमयत्वेन प्रकाशमानावित्यर्थः। प्रांशू उन्नतौ। विबुधर्षभैर्ब्रह्मादिभिरर्चितौ ॥ ३४ ॥ उच्चैर्महता आदरेण ॥ ३५ ॥ तयोः सन्दर्शनेन य आनन्दस्तेन निवृत्ता उपशान्ता आत्मेन्द्रियाशया देहेन्द्रियमनांसि यस्य सः। हृष्टानि पुलकितानि रोमाणि यस्य सः मुनिस्तावुदीक्षितुमपि न सेहे नाशक्नोत् ॥ ३६ ॥ प्रह्वो नम्रः आश्लिष्यन् आलिङ्गयन् इवोत्थाय नमोनम इति बभाषे ॥ ३७ ॥ तयोः पादयोरवनिज्य पादौ प्रक्षाल्यार्हणमर्घं तदादिभिरपूजयत् ॥ ३८ ॥ पादाभ्यां पादावानम्य गरिष्ठौ पूज्यतमौ प्रतीदमब्रवीत् ॥ ३९ ॥ तदुक्तिमेव दर्शयति—यावत्समाप्ति। तत्रान्तर्यामिणस्तस्यैव प्राणादिप्रवर्त्तकत्त्वादात्म-नस्तत्स्तुतावस्वातन्त्र्यं पश्यन्नाह—किमिति। हे विभो तव त्वां किमहं वर्णये कथं स्तौमि यत् येन त्वयैव उदीरितः तनुभृतामज-शर्वयोश्च तथा स्वस्य ममापि असुः प्राणः संस्पन्दते तं स्पन्दमानं प्राणमनुसृत्य वागादीनीन्द्रियाणि प्रचलन्ति स्वस्वव्यापारे प्रवर्त्तन्ते। अन्वयव्यतिरेकाभ्यां श्रोत्रमित्यादिश्रुतिभिश्च प्रसिद्धमेतदिति सूचयन्नाह—वै इति। यद्यप्येवं न कस्यापिस्वातन्त्र्यमथापि दारुयन्त्र-वत्स्वप्रवर्त्तितैरपि वागादिभिर्भजतां पुंसां त्वं भावबन्धुरसि भावेन बध्यते वशीभवतीति तथाभूतोऽसि। अहो तव कृपालुतेति भावः ॥ ४० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तावनुवर्णयति द्वाभ्याम्। ताविति। शुक्लकृष्णौ तत्र नरः शुक्लः, नारायणः कृष्णवर्णः, नवकञ्जलोचनौ नूतनकमलसमाननयनयुगलौ, चतुर्भुजौ रौरवं कृष्णाजिनं वल्कलं तरुविशेषत्वक् च ते एव अम्बरे ययोस्तौ, पवित्रे दर्भपवित्रे पाण्योर्ययोस्तौ, त्रिवृत् त्रिगुणं नवतन्तुकमिति वा, उपवीतकं ब्रह्मसूत्रं, कमण्डलुं, ऋजुमवक्रं वैणवं दण्डं च, द्वितीयान्तानां दधानावित्युपरिष्टाद्वक्तिना संबन्धः ॥ ३३ ॥ पद्मे ति। पद्माक्षानां माला तां जन्तुमार्जनं उत जन्त्वपनोदकं वस्त्रमपि, वेदं दर्भमुष्टिं च दधानौ, साक्षात् प्रत्यक्ष तप एव रूपिणौ एकं तपः एतयोर्मूर्त्तिद्वयत्वेन यथा स्थितं भवेत्तथा प्रतीयमानावित्यर्थः। तेजोयुक्तमूर्त्तिभ्यां तपोमयत्वेन प्रकाशमानविति भावः। तपद्दीप्यमानं तडिद्वर्णसदृशं यत्पिशङ्गरोचिस्तेन, प्रांशू प्रगता व्याप्ता अंशवो ययोस्तौ, विबुधर्षभैर्देवश्रेष्ठैः ब्रह्मादिभिरर्चितौ ॥ ३४ ॥ ते इति। भगवतः रूपे ते वै तावेव, रूपापेक्षया नपुंसकनिर्देशः। ऋषी ऋषिरूपौ नरनारायणौ दृष्ट्वा, उत्थाय उच्चैर्महता इत्यर्थः। आदरपूर्वमित्यर्थः। अङ्गेन दण्डवत् ननाम ॥ ३५ ॥ स इति। तयोर्नरनारायणयोः संदर्शनेन य आनन्दस्तेन निर्वृताः सुखिताः शान्ता वा आत्मेन्द्रियाशाया देहेन्द्रियमनांसि यस्य सः, हृष्टान्युत्पुलकितानि रोमाणि यस्य सः, अश्रुभिरानन्दजनेत्रजलैः पूर्णे अक्षिणी यस्य सः, स मार्कण्डेयः, तावत् ईक्षितुं तौ समीक्षितुं, पाठान्तरेऽपि स एवार्थः। न सेहे नाशक्नोत् ॥ ३६ ॥ उत्थायेति। ततः उत्थाय पुनरुत्थानं कृत्वा, प्रह्वो नम्रः, प्राञ्जलिः संश्च, औत्सुक्यात् आश्लिषन्नालिङ्गयन्निव नमो नमः इति ईशानावीश्वरमूर्त्ती नरनारायणौ प्रति, गद्गदाक्षरः सन्, पाठान्तरे क्रियाविशेषणं, बभाषे ॥ ३७ ॥ तयोरिति। तयोस्ताभ्यां षष्ठीद्विवचनं वा। आसनं आदाय दत्त्वा, पाठान्तरे निधायेत्यर्थः। पादयोः अवनिज्य पादौ प्रक्षाल्य, अर्हणेन अर्घ्येण योग्येन वा अनुलेपेन चन्दनेन धूपमाल्यैः धूपैः कुसुमैश्च अपूजयत् ॥ ३८ ॥ सुखमिति। मुनिर्मार्कण्डेयः, सुखं यथा तथा आसनं आसीनौ प्रसादाभिमुखौ, गरिष्ठौ पूज्यतमौ तौ प्रति, पुनः पादाभ्यां पादौ पादयोर्वेत्यर्थः। आनम्य इदं अब्रवीत् ॥ ३९ ॥ उक्तिमेवाह किमित्यादिना यावदध्यायसमाप्ति अन्तर्यामिणस्तस्यैव स्वप्रवर्त्तकत्वादात्मनस्तत्स्तुतावस्वातन्त्र्यं पश्यन्नाह। किमिति। हे विभो, तव त्वां किं वर्णये कथं स्तौमि। यतः इवस्य मम तनुभृतामन्येषां प्राणिनां, किं बहुना अजशर्वयोर्ब्रह्मरुद्रयोश्चापि, असुः प्राणः यदुदीरितः येन प्रेरितः सन् संस्पन्दते चलति। स्वव्यापारक्षमो भवतीत्यर्थः। तमनु स्पन्दमानं प्राणमनुसृत्य, वाङ्मनइन्द्रियाणि स्पन्दन्ति वै। अनुदात्तत्त्व लक्षणस्यात्मनेपदस्यानित्यत्वात्परस्मैपदम्। यद्येवं तर्हि सर्वेऽपि त्वमिव मां किं नोपासते इत्यत्राहाथापीति। अथापि तव प्राणिमात्रस्य प्राणप्रचोदयितृत्वेऽपि, भजतां पुंसामेव भावस्त्वदुपासनरूपोऽभिप्रायविशेषस्तं बध्नाति स्थिरीकरोतीति भावबन्धुः, असि वस्तुतो जीवबन्धुस्त्वं न पित्रादिवद् हमात्रबन्धुस्ततस्त्वयि किंचिदानुकूल्ययुक्तानामेव भावबन्धुस्त्वमसीति भावः ॥ ४० ॥

### हिन्दी अनुवाद

उन दोनों में एक का शरीर गौरवर्ण था और दूसरे का श्याम। दोनों के ही नेत्र तुरंत के खिले हुए कमल के समान कोमल और विशाल थे। चार-चार भुजाएँ थीं। एक मृगचर्म पहने हुए थे, तो दूसरे वृक्ष की छाल। हाथों में कुश लिये हुए थे और गले में तीन-तीन सूत के यज्ञोपवीत शोभायमान थे। वे कमण्डलु और बाँस का सीधा दण्ड ग्रहण किये हुए थे ॥ ३३ ॥ कमलगट्टे की माला और जीवों को हटाने के लिये वस्त्र की कूँची भी रक्खे हुए थे। ब्रह्मा, इन्द्र आदि के भी पूज्य भगवान् नर नारायण कुछ ऊँचे कद के थे और वेद धारण किये हुए थे। उनके शरीर से चमकती हुई बिजलि के समान पीले-पीले रंग की कान्ति निकल रही थी। वे ऐसे मालूम होते थे, मानो स्वयं तप ही मूर्तिमान् हो गया हो ॥ ३४ ॥ जब मार्कण्डेय मुनि ने देखा कि भगवान् के साक्षात् स्वरूप नर-नारायण ऋषि पधारे हैं, तब वे बड़े आदर भाव से उठकर खड़े हो गये और धरती पर दण्डवत् लोटकर साष्टाङ्ग प्रणाम किया ॥ ३५ ॥ भगवान् के दिव्य दर्शन से उन्हें इतना आनन्द हुआ कि उनका रोम-रोम, उनकी सारी इन्द्रियाँ एवं अन्तःकरण शान्ति के समुद्र में गोता खाने लगे। शरीर पुलकित हो गया। नेत्रों में आँसू उमड़ आये, जिनके कारण वे उन्हें भर आँख देख भी न सकते ॥ ३६ ॥ तदनन्तर वे हाथ जोड़कर उठ खड़े हुए। उनका अङ्ग-अङ्ग भगवान् के सामने झुका जा रहा था। उनके हृदय में उत्सुकता तो इतनी थी, मानो वे भगवान् का आलिङ्गन कर लेंगे। उनसे और कुछ तो बोला न गया, गद्गद वाणी से केवल इतना ही कहा—'नमस्कार! नमस्कार' ॥ ३७ ॥ इसके बाद उन्होंने दोनों को आसन पर बैठाया, बड़े प्रेम से उनके चरण पखारे और अर्घ्य, चन्दन, धूप और माला आदि से उनकी पूजा करने लगे ॥ ३८ ॥ भगवान् नर-नारायण सुखपूर्वक आसनपर विराजमान थे और मार्कण्डेयजी पर कृपाप्रसाद की वर्षा कर रहे थे। पूजा के अनन्तर मार्कण्डेय मुनि ने उन सर्वश्रेष्ठ मुनि वेषधारी नर-नारायण के चरणों में प्रणाम किया और यह स्तुति की ॥ ३९ ॥ मार्कण्डेय मुनिनें कहा—भगवन्! मैं अल्पज्ञ जीव भला, आप की अनन्त महिमा का कैसे वर्णन करूँ? आप की प्रेरणा से ही सम्पर्ण प्राणियों—ब्रह्मा, शङ्कर तथा मेरे शरीर में भी प्राणशक्ति का सञ्चार होता है और फिर उसी के कारण वाणी, मन

तथा इन्द्रियों में भी बोलने, सोचने-विचारने और करने-जानने की शक्ति आती है। इस प्रकार सबके प्रेरक और परम स्वतन्त्र होनेपर भी आप अपना भजन करने वाले भक्तों के प्रेम-बन्धन में बँधे हुए हैं॥ ४०॥

मूर्ती इमे भगवतो भगवंस्त्रिलोक्याः क्षेमाय तापविरमाय च मृत्युजित्यै।
नाना बिभर्ष्यवितुमन्यतनूर्यथेदं सृष्ट्वा पुनर्ग्रससि सर्वमिवोर्णनाभिः॥ ४१॥
तस्यावितुः स्थिरचरेशितुरङ्घ्रिमूलं यत्स्थं न कर्मगुणकालरुजः स्पृशन्ति।
यद् वै स्तुवन्ति निनमन्ति यजन्त्यभीक्ष्णं ध्यायन्ति वेदहृदया मुनयस्तदाप्त्यै॥ ४२॥
नान्यं तवाङ्घ्र्युपनयादपवर्गमूर्तेः क्षेमं जनस्य परितोभिय ईश विद्मः।
ब्रह्मा बिभेत्यलमतो द्विपरार्ध्य[1]धिष्ण्यः कालस्य ते किमुत तत्कृतभौतिकानाम्॥ ४३॥
तद् वै भजाम्यृतधियस्तव पादमूलं हित्वेदमात्म[2]च्छदि चात्मगुरोः परस्य।
देहाद्यपार्थमसदन्त्यमभिज्ञमात्रं विन्देत ते तर्हि सर्वमनीषितार्थम्॥ ४४॥

## कृष्णप्रिया व्याख्या

अन्वयः—भगवन् भगवतः इमे मूर्ती त्रिलोक्याः क्षेमाय तापविरमाय मृत्युजित्यै च यथा इदम् अवितुं नाना अन्यतनूः बिभर्षि ऊर्णनाभिः इव सृष्ट्वा पुनः सर्वं ग्रससि॥४१॥ तस्य अवितुः स्थिरचरेशितुः अङ्घ्रिमूलं (भजामि) यत्स्थं कर्मगुणकालरुजः न स्पृशन्ति यत् वेदहृदयाः मुनयः तदाप्त्यै अभीक्ष्णं स्तुवन्ति निनमन्ति यजन्ति ध्यायन्ति वै॥ ४२॥ ईश परितोभियः जनस्य अपवर्गमूर्तेः तव अङ्घ्र्युपनयात् अन्यं क्षेमं न द्विपरार्ध्यधिष्ण्यः ते कालस्य ब्रह्मा अलं बिभेति अतः तत्कृतभौतिकानां किमुत॥४३॥ एवम् आत्मच्छदि अपार्थम् असत् अन्त्यं देहादि हित्वा अमृतधियः आत्मगुरोः परस्य तव तत् पादमूलं भजामि अभिज्ञमात्रम् अनीषितार्थं सर्वं ते विन्देत॥ ४४॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु कथमावां प्राणादिप्रवर्तकौ धर्मपुत्रत्वादावयोरिति चेत्तत्राह। मूर्ती इति। हे भगवन् भगवतस्तव इमे मूर्ती त्रिलोक्याः क्षेमाय पालनाय तापविरमायच दुःखनिवृत्त्यै मृत्युजित्यै मोक्षाय। न तु त्वं कस्यापि पुत्र इत्यर्थः। अत्र दृष्टांतः। यथेदं विश्वमवितुमन्यास्तनूर्मत्स्यकूर्मादिलक्षणा नाना अनेकप्रकारा बिभर्षि तद्वत्। न केवलं पालनमात्रं तव कर्म किंतु सृष्टिलयावपीत्याह। सृष्ट्वेति। तत्राप्यन्यनिरपेक्षत्वे दृष्टांतः। ऊर्णनाभिरिवेति॥ ४१॥ यस्मादेवंभूतस्त्वं तस्मात्त्वांघ्रिमूलं भजामीत्याह। तस्येति। तस्यावितुः पालकस्य स्थावरजंगमानामीश्वरस्यांघ्रिमूलं भजामीति तृतीयश्लोकस्थस्यानुषंगः। कथंभूतमंघ्रिमूलम्। यत्स्थं यत्र स्थितम्। कर्मगुणकालानां रजो मलम्। अन्ये च पूर्वोक्तास्तापादयो न स्पृशंति। रुज इति वा पाठः। यतो वेदो हृदये येषां ते वेदतात्पर्यविदो मुनयो यदेव स्तुवंति नितरां नमंति तदाप्त्यै तत्प्राप्तये एव स्तवनादि कुर्वंति॥ ४२॥ यतोऽन्यः पुरुषार्थो नास्तीत्याह नान्यमिति। अंघ्रयुपनयाच्छ्रीमच्चरणप्राप्तेरन्यं क्षेमं न विद्मः। परितः सर्वेष्वपि लोकेषु भीर्यस्य तस्य जनस्य। तदेवाह। द्विपरार्धं धिष्ण्यं स्थानं यस्य स ब्रह्माऽपि ते कालस्य त्वद्भ्रविजृंभरूपात्कालादलं बिभेति। अतः किमुत वक्तव्यं तेन ब्रह्मणा कृतानां भौतिकानां प्राणिनां भयमिति॥ ४३॥ यस्मादेवं तत्तस्मात्तव पादमूलं भजामि। कथंभूतस्य। ऋतधियः सत्यज्ञानस्वरूपस्य। यद्वा सत्या धीर्यस्य यस्मिन्वा तस्यात्मगुरोर्जीवनियंतुरतः कारणात्परस्य। किं कृत्वा। आत्मच्छदि स्वात्मावरकमपार्थं च निष्फलमसच्च तुच्छमंत्यं च नश्वरमिदं देहादि हित्वा देहादिभजनं त्यक्त्वा। असच्चेत्कथं प्रतीयेत तत्राह। अभिज्ञमात्रम्। न ह्यत्यंतमसत्किंत्वात्ममात्रम्। न ततः पृथगस्तीत्यर्थः। नन्वपवर्गाय भवतु मद्भजनं फलांतरार्थं त्वन्यभजनं कार्यमेव तत्राह। तर्हीति। यदि त्वां भजति पुरुषस्तर्हि ते त्वत्त एव सर्वं मनीषितमर्थं विंदेतेति॥ ४४॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

न केवलं स्वभजनं कारयितुं भक्तिपरिपाके च तद्वश्यो भवितुं तवावतारः किन्तु जगत्पालनार्थमपीत्याह—मूर्ती इति। अत्राक्षिपति—नन्विति। हे भगवन्निति—त्वं तु साक्षाद्भगवानेव लोकहिताय प्रादुष्कृतमूर्तिरिति भावः। इत्यर्थ इति—भक्ताभीष्ट-

१. द्विप्रराधं। २. हित्वेदमात्म।

संपादनायैव पुत्रादिभावेन प्रतीयसे न त्वं साक्षात्पुत्रादिरिति भावः। न 'न माता न पिता तस्य' इत्यादिश्रीदशमोक्तेः। अत्र जगद्धिताय धृतमूर्तित्वे। तत्रापि सृष्ट्यादावपि। ऊर्णनाभिर्लूतातंतुर्यथाऽन्यमनपेक्ष्यैव स्वेनैव तंतुवितानं कृत्वा तत्र विहृत्य च पुनः संहरति तथा त्वमपीत्यर्थः॥ ४१॥ अन्ये चेति बहुवचनोपपत्तये पूरितमिति। 'रुजः' इति पाठस्तु सुगमः। एवं कर्मादयो रुजः क्लेशाः यत्स्थं यदंघ्रितलस्थं भक्तजनं रजः दुराचारादिभवं मालिन्यञ्च न स्पृशन्तीत्यद्भुतं तव भक्तिवैभवमिति। कर्मेति—दुष्कृतं सुकृतं प्राचीनमप्राचीनं वा कृतं न स्पृशति पुष्करपलाशं जलमिवेति भावः। बहुत्वमार्षमिति विश्वनाथः॥ ४२॥ यतोंघ्रिभजनात्। तदेव सर्वलोकभयत्वमेव। यतो ब्रह्मापि बिभेत्यतो हेतोः॥ ४३॥ ज्ञानरूपस्य पादकल्पनमयुक्तं मत्वाह—यद्वेति। इत्यर्थ इति—न हि चेतनाधिष्ठानं विनाऽचितः प्रतीतिरुपपद्यत इति भावः। अत्राक्षिपति—नन्विति। 'अकामः सर्वकामो वा मोक्षकाम उदारधीः' इत्युक्तेस्त्वत्त एव सर्वाभीष्टाप्तिर्भवतीति भावः॥ ४४॥

## अन्वितार्थप्रकाशिका

मूर्ती इति। हे भगवन्! भगवतः इमे मूर्ती अवतारौ त्रिलोक्याः क्षेमाय पालनाय आध्यात्मिकादितापत्रयविरमाय मृत्युजित्यै मोक्षाय च यथेदं विश्वमवितुमन्या नानाविधा मत्स्यादितनुर्बिभर्षि तद्वत् इमे मूर्ती इति तथा ऊर्णनाभिरिव सृष्ट्वा पुनः सर्वं ग्रससि। तङ्भाव आर्षः॥ ४१॥ तस्येति। तस्योक्तविधस्य अवितुः पालकस्य स्थिरचरेशितुः स्थावरजङ्गमानां नियन्तुः अङ्घ्रिमूलं भजामीति तृतीयस्थस्यापकर्षः। यत्स्थं यदुपासकं जनं कर्मगुणकालानां रजो मलं पापं पूर्वोक्तास्तापादयश्च न स्पृशन्ति इति अध्याहारेण कथंचिद्बहुत्वम्। वस्तुतस्त्वार्षमेव। रुज इति पाठे बहुत्वमपि नानुपपन्नम्। अत एव वेदो हृदये येषां ते वेदतात्पर्यविदो मुनयस्तदाप्त्यै यदङ्घ्रिमूलं वै स्तुवन्ति नितरां नमन्ति यजन्ति अभीक्ष्णं ध्यायन्ति चेति॥ ४२॥ नेति। हे ईश! परितः सर्वेष्वपि लोकेषु भीर्यस्य तस्य जनस्य अपवर्गमूर्तेः मोक्षरूपस्य तव अङ्घ्र्युपनयनाच्छ्रीमच्चरणप्राप्तेरन्यं क्षेमं न विद्मः। द्विपरार्ध्यं द्विपरार्धकालावस्थायि धिष्ण्यं स्थानं यस्य ब्रह्मणोऽपि ते कालस्य त्वद्भ्रूविजृम्भरूपात् कालात् यतः अलं बिभेति। अतः किमु वक्तव्यम्। तेन ब्रह्मणा कृतानां भौतिकानां प्राणिनां भयमस्तीति॥ ४३॥ तदिति। यस्मादेवं तत्तस्मात् आत्मच्छदि स्वात्मावरकमपार्थं निष्फलं च असत् तुच्छं दुःखप्रदं च अन्त्यं नश्वरं चेदं देहादि आदिपदेन गृहपुत्रकलत्रधनादि सर्वं हित्वा देहादिभजनं त्यक्त्वा ऋतधियः सत्यसंकल्पस्य आत्मनो जीवस्य गुरोः नियन्तुः अन्तर्यामितया साधु कर्म कारयितुः परस्परम् ईश्वरस्य तव पादमूलमहं भजामि। यदि त्वभिज्ञमात्रं ज्ञानस्वरूपं केवलं त्वामेव पुरुषो भजति तर्हि ते त्वत्त एव मनीषितं स्वसंकल्पितं सर्वमेव फलं विन्देत। न तव भक्तस्य फलान्तरार्थमप्यन्यभजनापेक्षेत्यर्थः। यद्वा। अभिज्ञमात्रं प्रतीतिमात्रमात्समात्रं न ततः पृथगिति देहादिविशेषणम्॥ ४४॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

परितोभियः सर्वमुखभयस्य जनस्य द्विपरार्द्धकालस्यापि लोकाः कालस्य कालरूपस्य ते त्वत्तः॥ ४३॥ ऋतधियः सत्यसङ्कल्पस्य परस्यात्मगुरोस्तव पादमूलम् आत्माभिमतं मूलं भजामि सर्वाभीष्टपुरुषार्थरूपं यत्पादं मुमुक्षुः जनो देहादिकमपास्य विन्देत॥ ४४॥

## श्रीमद्वीरराघवव्याख्या

ननु प्राणादीनामुद्दीपयितेश्वरः नाहमित्यत्र भगवदवतारभूतावेव युवामित्यभिप्रयन्नवतारप्रयोजनमाह—मूर्त्ती इति। हे भगवन्! भगवतः षाड्गुण्यपूर्णस्यैव इमे मूर्त्ती अवतारौ किमर्थं त्रिलोक्याः क्षेमाय सुखाय तापविरमाय ज्ञानोपदेशेनाध्यात्मिकादितापविघाताय मृत्युजित्यै मृत्युजयाय मोक्षायेति यावत्। अत्र दृष्टान्तान्तरालाभात्तदवतारानेव दृष्टान्तयति। नानाबिभर्षि इति यथा नानाविधा अन्यतनूः रामकृष्णादितनूः इदं जगदवितुं रक्षितुं बिभर्षि तद्वत् न केवलं जगद्रक्षैव त्वद्व्यापारः किन्तु सृष्टिसंहारावपीत्याह सर्वं इदं जगत्सृष्ट्वा पुनर्ग्रससि ननु किं त्वय्येकस्यैव स्रष्टृत्वं पुनरत्तृत्वं दृष्टम् इत्यतो दृष्टान्तमाह—इवोर्णनाभिरिति। ऊर्णनाभिरिवेत्यर्थः॥ ४१॥ यतः सर्वंजगत्कारणभूतोऽतस्त्वामेव "कारणं तु ध्येयः" इत्यादि वेदार्थतात्पर्यज्ञा ध्यायन्तीत्याह—तस्येति। तस्य सृष्टिसंहारकर्त्तुरवितुः स्वावतारैः रक्षितुः चराचराणामन्तः प्रविश्य धारणेन नियन्तुश्च तव यत्पादमूलं तद्धै भजामीत्युपरिष्टात् सम्बन्धः कथम्भूतं यस्माद्यदुपासनादित्यर्थः। न कर्मगुणकालरजः स्पृशन्ति कर्मगुणकालानां रजोमलं यदुपासकान् न स्पृशन्ति रुज इति पाठे तथा कर्मादयो यदुपासकं न स्पृशन्ति यदुपासका कर्मादीन्न स्पृशन्तीति वा तत्र कर्म पुण्यपापात्मकं तस्य कर्मणो रजः रजोवत् ज्ञानावारकत्वात्सुखदुःखे गुणरजःशब्देन रजआदि गुणकार्यं कामक्रोधादिकं विवक्षितं कालशब्देन तत्प्रयुक्तशीतातप-

वर्षादयो विवक्षिताः रुज इति पाठे रुजो रोगाः किञ्च वेदहृदयाः वेदा हृदये येषां ते वेदतात्पर्यविदो मुनयः इत्यर्थः। यजन्त्याराधयन्ति तदाप्त्यै तत्पादमूलप्राप्त्यै॥ ४२॥ किं तदाप्त्येत्यतः तस्या एव निरतिशयपुरुषार्थरूपतामाह, नान्यमिति। अभिय इति छेदः हे अपवर्गमूर्त्ते। निरतिशयपुरुषार्थरूप ! हे ईश ! परितो न भीर्भयं यस्मात्त्वदङ्घ्र्युपनयात्त्वदङ्घ्रिप्राप्तेरन्यं क्षेमं श्रेयो न विद्मः भिय इति छेदः परितोभिय इति समस्तं पदं जनस्य विशेषणं ननु, चतुर्मुखलोकप्राप्तिरपि क्षेम एवेत्यत आह—आब्रह्मेति। अलं नितरां कालस्य कालरूपस्य ते त्वत्तः बिभेति कुतः यतः सोपि द्विपरार्द्धधिष्ण्यः द्विपरार्द्धकालावस्थायिलोकः अतो बिभेतीति सम्बन्धः। यतो ब्रह्मण एवं भयं किमुत तत्कृतानां तत्सृष्टानां भौतिकानां भूतपरिणामात्मकदेहभाजाम्॥ ४३॥ यतस्त्वदङ्घ्र्युपनय एव क्षेमः ततस्तवपादमूलमेव तत्प्राप्तये भजामीत्याह—तद्वा इति। ऋतधियः सत्यसङ्कल्पस्य परमात्मनो गुरोश्च परस्य सर्वस्मात्परस्य च तवात्महितं तदेतत्पादमूलं भजामि ऋतधिय इत्यनेन 'तेषामहं समुद्धर्ता मृत्युसंसारसागरात्' इत्युक्तविधसत्यसकल्पत्वं विवक्षितम् आत्मगुरोरित्यनेनान्तः प्रविश्य नियममेन साधुकर्मकारयितृत्वं ज्ञानोपदेशेन उपकर्तृत्वं च प्राप्यत्वोपयुक्तं तथोक्तम् "हित्वैतदात्मछि-दमात्मगुरोः परस्य देहाद्यपार्थमसदत्यमभिज्ञमात्रम्" इति पाठे अत्यमत्यन्तमसदृदृष्टमपार्थं निष्फलं च देहादि हित्वा अपास्यात्महितं पादमूलं भजामीति सम्बन्धः। हित्वेदमात्मछदिमात्मगुरोरिति पाठे तु आत्मछदिमात्मज्ञानावरकं देहादि हित्वा भजामीत्यर्थः। देहाद्यपार्थमसदित्यनभिज्ञमात्रमिति च क्वचित्पाठः तदा अपार्थमसदिति च न भवत्यभिज्ञमात्रम् यस्मात्तद्देहादि हित्वेत्यर्थः। ज्ञान-शब्दस्यार्षो ह्रस्वः यद्येवं ते त्वां यो भजेदितिशेषः। तर्हि स एव सर्वं मनीषितार्थमभिमतं सर्वं पुरुषार्थं विन्देत लभेत आद्यपाठे तु यस्येति शेषः। यस्य ते अभिज्ञमात्रं त्वत्पादमूलविषयकज्ञानमात्रमस्ति तर्हि स एव सर्वमनीषितार्थं विन्देत "विन्दन्ति ते सर्वमनीषि-तार्थम्" इति च पाठो दृश्यते तदाभिज्ञमात्रमित्यस्य येषामित्यादिः ते विन्दन्ति लभन्त इति सम्बन्धः॥ ४४॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

भावबद्धत्वं दर्शयति—मूर्त्ती इति। हे भगवन्! भक्तवत्सलस्य भगवत इमे मूर्ती नरनारायणसंज्ञे त्रिलोक्याः क्षेमाय रक्षायै शत्रुकृतसन्तापनाशाय मृत्युजित्यै संसाराख्यशत्रुजयाय भवतः किञ्च, त्वं नाना अनुपमान्यतनूर्नानाविधा अनुपमा असदृशी-रन्या अनयोरितरास्तनूर्मूर्त्तीर्बिभर्षि त्रिलोकीक्षेमादिकार्यायेति शेषः। किञ्च, ऊर्णनाभिरिव इदं सर्वं यथापूर्वं सृष्ट्वा पुनर्यथा पूर्वं ग्रससि अनेन मायाविवृतबहुरूपग्रहणं न चित्रं स्यादिति शङ्का परिहृता सत्यप्रपञ्चस्रष्टुरीश्वरस्य तन्नियमनार्थं तावद्रूपग्रहणोपपत्तेः "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः। यद्वा, अतनूरप्राकृतशरीरस्त्वं यथा सर्वमिदं सृष्ट्वा पुनर्ग्रससि तथानुपमानि नानाविधानि शरीराणि बिभर्षि ग्रससि अन्तर्गतानि करोषि। त्रिलोकिक्षेमोदये भरणं क्षेमाद्यनन्तरमेकीकरणमिति विशेषः। भगवत इमे मूर्त्ती च तयेति॥ ४१॥ एतमर्थं प्रमाणयति—तस्येति। यत्स्थं यस्मिन्पादमूले स्थितं पुरुषं कर्मगुणकालरजः दुष्कर्मगुणाः सत्त्वादयः कालो जन्मादिहेतुः रजः आर्त्तवम् शुक्रशोणिताख्यम् एकवद्भावविवक्षयैकवचनं न स्पृशन्ति नोत्तपन्ति न दुःखमापादयन्ति वेदस्य हृदयम् येषां ते वेदहृदयाः वेदतात्पर्यज्ञा मुनयो ब्रह्मादयः स्थिरचरेशितुरवितुः पालकस्य तव अङ्घ्रिमूलं स्तुवन्ति 'पादोऽस्य-विश्वाभूतानि त्रिपादस्यामृतं दिवि" इति नितरां नमन्ति नमो विष्णवे महते करोमीति यजन्ति "त्र्यम्बकम् यजामहे सुगन्धि— पुष्टिवर्धनम्"इति ध्यायन्त्यात्मानमेव लोकमुपास्त इति यद्यस्मात्तस्मात्त्वदङ्घ्रिसेवायां तदेवमानं वा इत्यर्थः। तस्य यदङ्घ्रिमूलं यत्स्थं कर्मादयो न स्पृशन्ति तत्तव पादमूलं भजामीत्येकवाक्यं वा॥ ४२॥ किमर्थमेतदेव स्तुवन्ति निर्दुःखसुखावाप्तये अन्यत्किं न स्यादिति तत्राह—नेति। ईश ! अपवर्गमूर्त्ते ! पुरुषार्थस्वरूप ! यस्त्वं परितोऽभयः सर्वस्मादभयः जनस्य तवाङ्घ्र्युपनयादङ्घ्रि-शरणप्राप्तेरन्यत् क्षेमं न विद्मः परितो भिय इति वा पाठः जनस्येति विशेषणं सर्वस्माद्भीर्भयम् यस्य स तथा तस्य। ननु, त्वदन्यः क्षेमकर्त्ता ब्रह्मास्ति "प्रजापते न त्वदेतान्यन्य" इति श्रुतेः। अत्राह ब्रह्मेति यतः परितोभयः अतो द्विपरार्द्धसम्बन्धि धिष्ण्यं यस्य स तथा स ब्रह्मा कालस्य ते तव सकाशाद्बिभेति "यन्मां निशम्य सदनादुरुकम्पमानम्, यो अस्कभायदुत्तरं सधस्थं विचक्रमागास्त्रेधो-रुगाय" इति श्रुतेः। भूतग्रामस्य विचित्रादृष्टत्वात्कस्यचिन्निर्भयत्वोपपत्तेर्ब्रह्मणस्तु लोकविडम्बनत्वेन तथाभावः किं न स्यादिति मन्दाशङ्कां कैमुत्यन्यायेन परिहरति, किमुतेति। अत इत्युत्तरत्रापि सम्बद्ध्यते ब्रह्माप्यलं बिभेति यतोऽतस्तत्कृतभौतिकानां तेन ब्रह्मणा कृतानि भौतिकानि शरीराणि येषां ते तथा तेषां प्राणिनां भयमस्तीति किमुतेत्यन्वयः॥ ४३॥ सेवायामित्थं भावमाह—तद्वै इति। ऋतधियः एकप्रकारबुद्धेर्निश्चलबुद्धेरित्यर्थः। आत्मगुरोः जीवगुरोः परस्य परमात्मनस्तव पादमूलमेनद्देहाद्यभिमानं हित्वा यदि भजामि तर्हि ते तव प्रसादात्सर्वं मनीषितार्थं विन्देय इत्यन्वयः। कीदृशम् आत्मच्छिदम् आत्मनाशहेतुम् अत एवापार्थं पुरुषार्थलक्षणप्रयोजनशून्यम् असदभद्रम् अनभिज्ञमात्रं केवलाज्ञाननिर्मितं केवलाविद्वत्कृतं वा अनेन देहेऽहंभावो मुक्तिहेतुरिति कथितं भवति॥ ४४॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तद्धै इति तैः अभिज्ञमात्रमित्यस्य टीकायामात्ममात्रमिति आत्मन्यधिष्ठाने भ्रमादेव प्रतीतिर्यस्य तदित्यर्थः।

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तस्मात् स्वभजनं कारयितुं भजनपरिपाके च तद्भक्तप्रेमवशो भवितुं च तवावतारः न केवलमेतदेव निमित्तं जगत्पालनार्थमपीत्याह्—मूर्त्ती इमे इति। मृत्युजित्यै मोक्षाय च यथा नाना ऽन्यतनूर्मत्स्यकूर्माद्या विभर्षि तथेमामपि तनूं बिभर्षि किञ्च सृष्ट्वा यस्य पालनार्थं तनूं बिभर्षि तत्सर्वं पुनर्ग्रससि च ऊर्णनाभिरिवेत्यद्भुतं तव लीलावैभवमपीति भावः ॥ ४१ ॥ तस्य तवाङ्घ्रिमूलं भजामीति तृतीयश्लोकस्थस्यानुषङ्गः यत्स्थं यदङ्घ्रितलस्थं भक्तजनं कर्मगुणकालाः रजः दुराचारत्वादिभवं मालिन्यं च न स्पृशन्तीति अद्भुतं तव भक्तिवैभवमिति कर्मेति दुष्कृतं सुकृतं प्राचीनमर्वाचीनं वा कृतमपि न स्पृशतीति पुष्करपलाशे जलमिवेति भावः। बहुत्वमार्षं यद्भक्ता अभीक्ष्णं स्तुवन्ति मुनयो मौनशीला वेदहृदया वेदार्थतात्पर्यज्ञाः तत्प्राप्त्यर्थं ध्यायन्ति ॥ ४२ ॥ अङ्घ्र्युपनयात् चरणप्राप्तेरन्यत् क्षेमं कुशलं परितो भियः संसाराद्बिभ्यतो जनस्य न विद्मः यतो ब्रह्मेत्यादि ते कालस्य कालस्वरूपत्वात् इतः अस्मात् किमुत वक्तव्यं तत् कृतानां ब्रह्मकृतानां भौतिकानां प्राणिनां भयमिति ॥ ४३ ॥ ऋतधियः सत्यज्ञानस्य आत्मच्छदि हित्वा आत्माच्छादकं देहादि देहगेहादिममत्वं त्यक्त्वा अपार्थं निष्फलम् असत् तुच्छम् अन्त्यं नश्वरम् एवमन्योऽपि यो भजति स ते त्वामभिज्ञमात्रं भक्तसेवाभिज्ञमेव प्राप्नोति। ननु, तर्हि निष्काम एव मां भजतु सकामस्त्वन्यं तत्राह—तर्हीति। यदि त्वां विन्देत तर्हि सर्वमनीषितार्थं वाञ्छितार्थं विन्देतैव ॥ ४४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ननु, प्राणप्रवर्त्तको भगवानावान्तु तापसावित्यत आह—मूर्त्ती इति। हे भगवन्! नारायण! इमे नरनारायणाख्ये मूर्त्ती भगवत एवाविर्हिसि आविर्भावप्रयोजनमाह, त्रिलोक्याः क्षेमाय रक्षायै तापविरमाय त्रिविधतापनिवृत्त्यै मृत्युजित्यै संसारनिवृत्तये च तत्र दृष्टान्तमाह, यथेदं विश्वमवितुमन्यत्तनूः मत्स्यकूर्मादिरूपाः नाना बिभर्षि तद्वत् विश्वनिर्गमनप्रवेशस्थानत्वप्रतिपादनेन भगवत्तां दर्शयति, सर्वं विश्वं सृष्ट्वा पुनर्ग्रससीति जगत्कारणत्वेपि निर्विकारित्वं दृष्टान्तेन द्योतयति ऊर्णनाभिरिति ॥ ४१ ॥ एवम्भूतस्य तवाङ्घ्रिं भजामीत्याह—तस्येति। तस्य अङ्घ्रिमूलं भजामीति तृतीयश्लोकादानीतेनाध्याहृतेन वा क्रियापदेनान्वयः तदाप्त्यै अङ्घ्रिमूलप्राप्तये ॥ ४२ ॥ अङ्घ्रिप्राप्तेरन्यत्क्षेमं नेत्याह—नान्यमिति। परितो भीर्यस्य तस्य जनस्य यद्वा, परितः सर्वत्र नास्ति भीर्यस्मात्तस्य तव अङ्घ्र्युपनयात् श्रीमत्पादपद्मप्राप्तेः अन्यत्क्षेमं न विद्मः भगवच्चरणप्राप्तिरेवोपादेयपदार्थ इति द्रढयितुं सर्वं ब्रह्मादिस्तम्बपर्यन्तं कालग्रस्तत्वादनुपादेयमित्याह, ब्रह्मेति। द्विपरार्द्धकालस्थायिधिष्ण्यं स्थानं यस्य सोपि ते तव शक्तिरूपस्य कालस्य वेगादितिशेषः। अलं नितरां बिभेति तत्कृतभौतिकानां तेन कृतानां भौतिकानां प्राणिनां भयमिति का कथा ॥ ४३ ॥ तत्तदर्थं पादमूलप्राप्त्यर्थं ऋता धीर्यस्मात्तस्य तव धीप्रेरकस्य वेदमात्रार्थभूतस्य आत्मनां ब्रह्मादिसर्वजीवानां गुरोः परस्य पूर्णस्य तव पादमूलं भजामि नन्वन्यासक्तस्य नो भजनेकोऽधिकार इत्यत आह, हित्वेति। इदं दृश्यमानमैहिकम् अन्त्यं पारलौकिकम् असदयुक्तम् अत एवापार्थं निष्फलम् आत्माच्छदि आत्माच्छादकं हित्वा उपेक्ष्ययित्वेत्यर्थः। भगवत्प्राप्तिकामो भगवन्तं भजेदिति फलितोर्थः। यदि क्षेत्रज्ञस्वरूपमात्रप्राप्तिकामः अर्थप्राप्तिकामो वा तर्हि ते त्वत्त एव अभिज्ञमात्रं क्षेत्रज्ञस्वरूपमात्रं मनीषितार्थं वा विन्देतैव तद्दातापि त्वमेव नान्यः क्षेत्रज्ञस्य त्वदंशत्वात् अर्थस्य सर्वस्य त्वदचिच्छक्तिमयत्वाच्चेति भावः ॥ ४४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ननु प्राणादिप्रवर्त्तकोऽन्तर्यामीश्वर एव नावां धर्मपुत्रत्वादावयोरित्याशङ्क्य तयोरीश्वरावतारतामाह—मूर्त्ती इति। हे भगवन् भगवतः षाड्गुण्यपरिपूर्णस्यैवेमे मूर्त्ती अवतारौ। तत्प्रयोजनमाह—त्रिलोक्याः क्षेमाय पालनाय आध्यात्मिकादितापत्रयविरमाय मृत्युजित्यै मोक्षाय च यथायथं धर्मज्ञानादिप्रवर्त्तनायेति ज्ञेयम्। तत्र दृष्टान्तमाह—यथेदं विश्वमवितुमन्या नानाविधा मत्स्यादितनूर्बिभर्षि तद्वदिति। न केवलं पालनादिमात्रं तव कर्म किन्तु सृष्टिप्रलयावपीत्याह—सृष्ट्वा पुनर्ग्रससि सर्वमिति। तत्राप्यन्यनिरपेक्षत्वे दृष्टान्तमाह—ऊर्णनाभिरिवेति ॥ ४१ ॥ यस्मादेवम्भूतस्त्वं तस्मात्तवाङ्घ्रिमूलं भजामीत्याह—तस्येति। तस्योक्तविधस्य अवितुः पालकस्य स्थिरचरेशितुः स्थावरजङ्गमानां नियन्तुः अङ्घ्रिमूलं भजामीति तृतीयेनान्वयः। तद्भजनफलमाह—यत्स्थं यदुपासकं कर्म गुणकालानां रजोमलं पापं न स्पृशन्ति। रुज इति वा पाठः। अत एव वेदो हृदये येषां ते वेदतात्पर्यविदो मुनयस्तदाप्त्यै तत्प्राप्तये ह्रे स्तुवन्ति नितरां नमन्ति यजन्ति अभीक्ष्णं ध्यायन्ति चेति ॥ ४२ ॥ यतोऽन्यः पुरुषार्थो नास्तीत्याह—

हे ईश परितः सर्वेष्वपि लोकेषु भीर्यस्य तस्य जनस्य अपवर्गमूर्तेः मोक्षरूपस्य तव अङ्घ्र्युपनयाच्छ्रीमच्चरणप्राप्तेरन्यं क्षेमं न विद्मः। अन्यस्य ब्रह्मलोकपर्यन्तस्याक्षमत्वमेव स्पष्टयति—ब्रह्मेति। द्विपरार्द्धयं द्विपरार्द्धकालावस्थायि धिष्ण्यं स्थानं यस्य ब्रह्मापि ते कालस्य त्वद्भ्रूविजृम्भरूपात् कालात् यतः अलं बिभेति अतः किमु वक्तव्यं तेन ब्रह्मणा कृतानां भौतिकानां प्राणिनां भयमस्तीति ॥ ४३ ॥ यस्मादेवं तत्तस्मात् आत्माच्छदि स्वात्मावरकमपार्थं निष्फलं च असत् तुच्छं दुःखप्रदं च अन्त्यं नश्वरं चेदं देहादि आदिपदेन गृहपुत्रकलत्रधनादि सर्वं हित्वा देहादिभजनं त्यक्त्वा ऋतधियः 'तेषां सततयुक्तानां योगक्षेमं वहाम्यहम्। तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्' इत्यादि। सत्यसङ्कल्पस्य आत्मगुरोः जीवस्य नियन्तुः अन्तर्यामितया साधु कर्म कारयितुः। परस्परमेवेश्वरस्य तव पादमूलमहं भजामीत्यन्वयः। नन्वपवर्गाय भवतु मद्भजनं नान्यर्थमतः फलान्तरार्थं त्वन्यभजनं कार्यमेवेत्याशङ्क्याह—तर्हीति। यदि तु अभिज्ञमात्रं ज्ञानस्वरूपं केवलं त्वामेव पुरुषो भजति तर्हि ते त्वत्त एव मनीषितं स्वसङ्कल्पितं सर्वमेव फलं विन्देत न तव भक्तस्य फलान्तरार्थमप्यन्यभजनापेक्षेत्यर्थः ॥ ४४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ननु कथमावां प्राणादिप्रवर्त्तकौ यत आवयोर्धर्मपुत्रत्वादिति चेत्तत्राह। मूर्त्ती इति हे भगवन्, भगवतः षाड्गुण्यपूर्णस्य तवैव इमे मूर्त्ती अवतारौ, त्रिलोक्याः क्षेमाय सुखाय, तापविरमाय ज्ञानोपदेशेनाध्यात्मिकादितापविघाताय, मृत्युजित्यै मृत्योर्जयाय मोक्षाय चेति यावत्, भवतः। अत्र दृष्टान्तान्तरालाभात्तदवतारानेव दृष्टान्तयति। नाना बिभर्षीति। यथा, इदं जगत् अवितुं रक्षितुं, नाना नानाविधाः अन्यतनूर्मत्स्यकूर्मादिलक्षणाः मूर्त्तीः बिभर्षि, तद्वत्। न केवलं जगतः संरक्षणादिमात्रमेव त्वत्कर्म, किं तु सृष्टिसंहारावपि त्वत्कर्मैवेत्याह। हे भगवन्तौ, सर्वं इदं विश्वं त्वमेव सृष्ट्वा पुनः ग्रससि। ननु त्वया किमेकस्यैव स्रष्टृत्वं पुनरत्तृत्वं च कुत्रापि दृष्टमित्यत्राह। ऊर्णनाभिः इव ऊर्णनाभिर्यथा स्वमुखतस्तन्तुजालं सृष्ट्वा तत्र विहारं कृत्वा ग्रसति तद्वदिति भावः ॥ ४१ ॥ यतस्त्वमेव सर्वजगत्कारणभूतोऽतः 'कारणं तु ध्येयः इत्यादिवेदार्थतात्पर्यज्ञाः ये ते त्वामेव ध्यायन्तीत्याह। तस्येति। अवितुः स्वावतारैश्चराचराणां रक्षितुः स्थिरचरेशितुः स्थिरचरेषु अतः प्रविश्य धारणेन नियन्तुश्च, तस्य सृष्टिसंहारकर्त्तुस्तव अङ्घ्रिमूलं पादमूलं यत्, तत् भजामीति शेषः। वै एव। कथंभूतं पादमूलं यत्स्थं यस्मिन्ध्यानेन स्थितं जनं कर्मगुणकालरजःकर्मणां गुणानां कालस्य च रजः मलः, अन्ये पूर्वोक्ताः तापादयश्चेति शेषः। न स्पृशन्ति। रुज इति पाठेपि कर्मादयो यत्स्थं न स्पृशन्तीति। तत्र कर्म पुण्यपापात्मकं गुणशब्देन रजआदिगुणकार्यं कामक्रोधादिकं, कालशब्देन तत्प्रयुक्तशीतातपवर्षादयः, रुजो रोगाः, किं च वेदहृदयाः वेदतात्पर्यविदः मुनयः, तदाप्त्यै तस्य त्वत्पादमूलस्य प्राप्त्यै यत् स्तुवन्ति, विनमन्ति, यजन्ति, अभीक्ष्णं मुहुर्मुहुः ध्यायन्ति च, तद्भजामीति सम्बन्धः ॥ ४२ ॥ किं तदाप्त्येति चेत्तस्या एव निरतिशयपुरुषार्थरूपत्वात् सैव युक्तेत्यत आह। नान्यमिति। हे अपवर्गमूर्त्ते निरतिशयपुरुषार्थरूप हे ईश, परितः न भीर्यस्मादभियः तव अङ्घ्र्युपनयात्त्वदङ्घ्रिप्राप्तेः, अन्यं जनस्य क्षेमं श्रेयः, न विद्मः। अनन्पूर्वभीशब्दच्छेदे परितोभिय इति समस्तं पदं, तथात्वे त्वेतज्जनविशेषणं, ननु चतुर्मुखलोकप्राप्तिरपि क्षेम एवेत्यत आह। ब्रह्मेति। यतः द्विपरार्द्धधिष्ण्यः द्विपरार्द्धकालावस्थायिलोकः अतः ब्रह्मापि कालस्य कालरूपस्य ते त्वत्त इत्यर्थः। अलमतिशयेन, बिभेति तर्हि तत्कृतभौतिकानां ब्रह्मसृष्टभूतपरिणामात्मकदेहभाजां किमुत, तेषां भयभाक्त्वे किं वक्तव्यमित्यर्थः। अतस्त्वदाप्तिरेव श्रेयस्करीति भावः ॥ ४३ ॥ यतस्त्वदङ्घ्र्युपनय एव क्षेमस्ततस्तव पादमूलमेव क्षेमप्राप्तये भजामीत्याह। तद्वा इति। आत्मच्छदि आत्मावरकम्, अपार्थं निष्फलम्, असत्तुम्, अति अत्यन्तम्, अनभिज्ञमात्रं ज्ञानावरकमित्यर्थः। इदं देहादि हित्वा, देहादिभजनं त्यक्त्वेत्यर्थः। आत्मगुरोः सकलजीवानामेकगुरोः, ऋतधियः सत्यसंकल्पस्य, परस्य परमात्मनः सर्वेभ्यः परस्य वा तव पादमूलं, कर्म भजामि। नन्वेवं निष्कामस्य तव भक्तत्वेवं सकामस्य का गतिरित्यत्राह। अन्योऽपि ते तव तत्पादमूलं भजेत्, तर्हि सोऽपि सर्वं मनीषितार्थमभिमतं सर्वं पुरुषार्थमित्यर्थः। विन्देत लभेत वै ॥ ४४ ॥

## हिन्दी अनुवाद

प्रभो ! आपने केवल विश्व की रक्षा के लिये ही जैसे मत्स्य-कूर्म आदि अनेकों अवतार ग्रहण किये हैं, वैसे ही आपने ये दोनों रूप भी त्रिलोकी के कल्याण, उसकी दुःख-निवृत्ति और विश्व के प्राणियों को मृत्यु पर विजय प्राप्त कराने के लिये ग्रहण किया है। आप रक्षा तो करते ही हैं, मकड़ी के समान अपने से ही इस विश्व को प्रकट करते हैं और फिर स्वयं अपने में ही लीन भी कर लेते हैं ॥ ४१ ॥ आप चराचर का पालन और नियमन करनेवाले हैं। मैं आपके चरणकमलों में प्रणाम करता हूँ। जो आप के चरणकमलों की शरण ग्रहण कर लेते हैं, कर्म, गुण और कालजनित क्लेश स्पर्श भी नहीं कर सकते। वेद के मर्मज्ञ ऋषि-मुनि आपकी प्राप्ति के लिये निरन्तर आप का स्तवन, वन्दन, पूजन और ध्यान किया करते हैं ॥ ४२ ॥

प्रभो! जीव के चारों ओर भय-ही भय का बोलबाला है। औरों की तो बात ही क्या, आप के कालस्वरूप से स्वयं ब्रह्मा भी अत्यन्त भयभीत रहते हैं; क्योंकि उनकी आयु भी सीमित—केवल दो परार्ध की है। फिर उनके बनाये हुए भौतिक शरीरवाले प्राणियों के सम्बन्ध में तो कहना ही क्या है। ऐसी अवस्था में आप के चरणकमलों की शरण ग्रहण करने के अतिरिक्त और कोई भी परम कल्याण तथा सुख-शान्ति का उपाय हमारी समझ में नहीं आता; क्योंकि आप स्वयं ही मोक्षस्वरूप हैं ॥ ४३ ॥ भगवन् आप समस्त जीवों के परम गुरु, सबसे श्रेष्ठ और सत्य ज्ञानस्वरूप हैं। इसलिये आत्मस्वरूपको ढक देनेवाले देह-गेह आदि निष्फल, असत्य, नाशवान् और प्रतीतिमात्र पदार्थों को त्यागकर मैं आप के चरणकमलों की ही शरण ग्रहण करता हूँ। कोई भी प्राणी यदि आप की शरण ग्रहण कर लेता है, तो वह उससे अपने सारे अभीष्ट पदार्थ प्राप्त कर लेता है ॥ ४४ ॥

सत्त्वं रजस्तम इतीश तवात्मबन्धो मायामयाः स्थितिलयोदयहेतवोऽस्य।
लीला धृता यदपि सत्त्वमयी प्रशान्त्यै नान्ये नृणां व्यसनमोहभियश्च याभ्याम् ॥ ४५ ॥
तस्मात्तवेह भगवन्नथ तावकानां शुक्लां तनुं स्वदयितां कुशला भजन्ति।
यत् सात्वताः पुरुषरूपमुशन्ति सत्त्वं लोको यतोऽभयमुतात्मसुखं न चान्यत् ॥ ४६ ॥
तस्मै नमो भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे परदेवतायै।
नारायणाय ऋषये च नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय ॥ ४७ ॥
यं वै न वेद वितथाक्षपथैर्भ्रमद्धीः सन्तं स्वखेष्वसुषु हृद्यपि दृक्पथेषु।
तन्माययाऽऽवृतमतिः स उ एव साक्षादाद्यस्तवाखिलगुरोरुपसाद्य वेदम् ॥ ४८ ॥
यद्दर्शनं निगम आत्मरहःप्रकाशं मुह्यन्ति यत्र कवयोऽजपरा यतन्तः।
तं सर्ववादविषयप्रतिरूपशीलं वन्दे महापुरुषमात्मनि गूढबोधम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—ईश आत्मबन्धो अस्य स्थितिलयोदयहेतवः मायामयाः सत्त्वं रजः तमः इति लीलाधृताः यदपि सत्त्वमयी नृणां प्रशान्त्यै अन्ये न याभ्यां व्यसनमोहभियः च (भवन्ति) ॥ ४५ ॥ अथ तस्मात् तव इह भगवन् तापकानां स्वदयितां शुक्लां तनुं कुशलाः भजन्ति यत् सत्त्वं (तत्) पुरुषरूपं सात्वताः उशन्ति यतः लोकः अभयम् उत आत्मसुखं अन्यत् न ॥ ४६ ॥ भगवते पुरुषाय भूम्ने विश्वाय विश्वगुरवे परदेवतायै नारायणाय ऋषये नरोत्तमाय हंसाय संयतगिरे निगमेश्वराय तस्मै नमः ॥ ४७ ॥ तन्मायया आवृतमतिः वितथाक्षपथैः भ्रमद्धीः (पुमान्) स्वखेषु असुषु हृदि आप दृक्पथेषु यं वै न वेद सः उ एव साक्षात् आद्यः अखिलगुरोः तव वेदम् उपसाद्य (त्वां वेद) ॥ ४८ ॥ आत्मरहःप्रकाशं यत् दर्शनं निगमे (भवति) अजपराः कवयः यत्र यतन्तः मुह्यन्ति तं सर्ववादविषयप्रतिरूपशीलम् आत्मनि गूढबोधं महापुरुषं वन्दे ॥ ४९ ॥

इति द्वादशस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

ननु ब्रह्मरुद्रावपि ममैव मूर्ती अतो मामेव किमत्यंतमाद्रियसे तत्राह। सत्त्वमिति। यदपि यद्यपि तवैव मायया कृता एता लीलास्त्वयैव धृतास्तथापि या सत्त्वमयी सैव प्रशांत्यै मोक्षाय न केवलमस्य प्रशांत्यभावमात्रमन्यभजने किंत्वनिष्टं च भवेदित्याह। व्यसनेति ॥ ४५ ॥ तदेव सदाचारेण द्रढयति। तस्मादिति। हे भगवन् तव शुक्लां तनुं श्रीनारायणाख्याम्। अथ तावकानां च शुक्लां तनुं नराख्याम्। यद्यस्मात्सात्वताः सत्त्वमेव पुरुषस्येश्वरस्य रूपमुशंति मन्यंते न त्वन्यद्रजस्तमश्चेति। अत्र हेतुः। यतः सत्त्वाल्लोको वैकुंठाख्यः लोकत्वे सत्यप्य भयं च भोगे सत्यप्यात्मसुखं च ॥ ४६ ॥ अतस्तं प्रणमति। तस्मै नम इति। हंसाय शुद्धाय। संयतगिरे

१. सुखेष्व० । २. दन्यस्तवा० । ३. पा० । ४. जप० ।

नियतवाचे। अथ च निगमेश्वराय वेदमार्गप्रवर्तकाय ॥ ४७ ॥ वेदार्थसंप्रदायप्रवर्तने हेतुत्वं वदन्स्तौति। यमिति। वितथाक्षपथैः कपटेंद्रियमार्गैर्भ्रमद्धीर्विक्षिप्तबुद्धिः पुमान्स्वेंद्रियादिषु नियंतृत्वेन संतमपि यं त्वां न वेद। इक्पथेषु विषयेषु। बुद्धिविक्षेपे हेतुः। तन्मायया तस्य तवैव मायया आवृता आत्मनिष्ठा मतिर्यस्य स उ सोऽपि आद्य एव पूर्वमविद्वानेवाखिलगुरोस्तव त्वत्प्रवर्तितं वेदमुपसाद्य प्राप्य तं त्वां साक्षाद्वेद ॥ ४८ ॥ वेदेनैव त्वज्ज्ञानमित्युपपादयन्प्रणमति। यस्य तव दर्शनं निगमे भवति। कथंभूतम्। आत्मनस्तव रहो रहस्यं तस्य प्रकाशकम्। अन्यथा दुर्ज्ञेयतामाह। अजपरा ब्रह्ममुख्याः कवयोऽपि सांख्ययोगादिभिर्यतमाना यत्र त्वयि मुह्यन्ति। कुत इत्यत आह। सर्वेषां सांख्यादिवादिनां ये वादास्तेषां विषया भेदादयस्तेषां प्रतिरूपं तत्तदनुसारि शीलं स्वभावो यस्य तम्। कुतः आत्मना देहादिसंघातेन निगूढो बोधो यस्य तम्। एवंभूतं महापुरुषं त्वां वंदे ॥ ४९ ॥

इति श्रीमद्भागवते म० द्वादशस्कंधे टीकायामष्टमोऽध्यायः ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

पुनराक्षिपति—नन्विति। हे ईशेति—हे आत्मबंधो इति सम्बुद्धिद्वयेन हरेरेव भजनीयत्वमाह। यद्यप्युभयविधत्वं ब्रह्मरुद्रयोरप्यस्ति तथापि शुद्धसत्त्वप्रधानस्य तवैव कल्याणहेतुत्वं संगच्छते 'श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः' इत्याद्युक्तेरिति संबुद्धयभिप्रायः। एता ब्रह्मरुद्रादिलक्षणाः। अन्ये रजस्तमोमय्यौ लीले प्रशांत्यै नेत्यर्थः। अस्य रजस्तमोमय्यौ लीले भजतः पुंसः किन्त्वन्यस्य शुद्धसत्त्वेतरस्य भजनेऽनिष्टं च स्यात्, किं तदनिष्टं भवेत्तत्राह—व्यसनेति। व्यसनं विपत्, मोहोऽज्ञानम्, भीः संसारभयञ्च याभ्यां रजस्तमोमयीलीलाभ्यां स्युरित्यर्थः। यद्वा—अन्ये सत्त्वादन्ये रजस्तमसी प्रशांत्यै न स्यातां, याभ्यां रजस्तमोभ्यां व्यसनादयः स्युः। च एवार्थे। विश्वनाथस्तु—सकामत्वे सति देवांतरमपि भजन्तु तद्भजनमेव यतो देवा मन्मूर्तय एवेत्यत आह—सत्त्वमिति। हे आत्मबंधो प्राणनाथ अस्येंद्रचंद्रदेवमनुष्यादिमयस्य जगतः स्थित्यादिहेतवः सत्त्वादयो ये गुणास्तेऽपि मायामया एव किं पुनस्तत्कार्या इंद्राद्या नश्वराः। तेषां भजने मायातीतं त्वां कथं विंदेतेति भावः। यद्यप्यासु लीलासु मध्ये सत्त्वमयी लीला प्रशांत्यै धृता न त्वन्ये रजस्तमोमय्यौ याभ्यां व्यसनादयः संति तदप्येतास्तिस्रोऽपि लीला मायामय्य एवेति ॥ ४५ ॥ तदेव सत्त्वमयभजनमेव। यत सत्त्वमेव प्रशांतिहेतुस्तस्माद्धेतोः हे भगवन्निति। भजनार्हतामाह। अत्र सत्त्वस्य पुरुषरूपत्वे। अतस्तव मायामयीमिंद्रादिमूर्तिमशुद्धां विहाय शुद्धसत्त्वरूपा एव तव त्वद्भक्तानां च मूर्तिरभिज्ञा उपासत इत्याह—तस्मादिति। यद्यतः सात्वता नारदाद्याः पुरुषरूपं सत्वमुशंति। ननु कीदृशं सत्त्वं तत्राह—यतो लोकः स्वर्गादिकः न यत्राभयं पातहेतुकभयाभावः, आत्मसुखमात्मभूतं सुखं च न तु कर्मफलं स लोको वैकुंठः। यतस्तत् शुद्धसत्त्वं न चान्यत्प्राकृतं सत्त्वम् ॥४६॥ अतः सात्वतोपास्यत्वात्। विश्वाय विश्वनाम्ने 'विश्वं विष्णुर्वषट्कारः' इति सहस्रनामसूक्तेः। सर्वनामसंज्ञा त्वत्राभिधात्वादेव। न नियता वेदलक्षणा वाग्यस्य तस्मै, तदेवाह—अथ चेति। अत एव विश्वगुरवे सर्वहितोपदेष्ट्रे। परा सर्वोत्कृष्टा चासौ देवता च परमात्मैव तद्रूपाय। नारायणाय सर्वप्रेरकाय। ऋषये सर्वज्ञाय। नराज्जीवाजीवादर्थात्क्षराक्षराद्युत्तमाय पुरुषोत्तमायेत्यर्थः। 'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः।' इति गीतासूक्तेः। 'नरो जीवे शरीरे च घोटके च कपिध्वजे। धर्मात्मजे' इत्यभिधानात् पुरुषाय पुरुषाकारत्वेपि भूम्ने सर्वव्यापकाय, तदपि विश्वाय देवमनुष्यतिर्यगादिसर्वरूपाय। आविर्भावप्रयोजनमाह—विश्वगुरवे भक्तिज्ञानवैराग्याणामुपदेष्ट्रे। न केवलमुपदेष्टैवापि तु भजनीयश्चेत्याह—परदेवतायै इष्टदेवाय। द्वाभ्यामेकाकारत्वमाह—ऋषये ऋषिरूपनारायणाय ऋषिरूपनरोत्तमाय च। त्यक्तपरिग्रहत्वमाह—हंसाय। मौनशालित्वमाह—संयतगिरे, तदपि निगमाय वेदप्रवर्तकाय ॥ ४७ ॥ जगदपेक्षयाऽऽदिभवत्वादाद्यो ब्रह्मा त्वत्तः सर्वगुरोर्वेदं प्राप्यापि न वेद, अन्येषां का वार्त्तेति भावः। स उ सोऽपि, उरप्यर्थे। पूर्वं वेदप्राप्तेः पूर्वावस्थायामविद्वान् तव सकाशाद्वेदमवसाद्यैव यमिंद्रियविक्षिप्तधीर्न वेद तं वेदेत्यन्वयः। स्वामिचरणैराद्य एव, अविद्वानेवेति योर्थो गृहीतस्तत्र ब्रह्मापेक्षलब्ध इति ध्येयम् ॥ ४८ ॥ निगमो वेदः। 'निगमो वाणिजे पुर्यां कटे वेदे वणिक्पथे' इति मेदिनी। अजो ब्रह्मा पर उत्कृष्टो येषु ते तथा। कुतो मुह्यंति—वादाः सिद्धांताः 'सिद्धांते च विवादे च वादस्तोमे च वादिनाम्' इति निरुक्तिः। सर्ववादानुसारिशीलत्वे हेतुं पृच्छति—कुत इति। देहाद्यात्मवादनिरासेन यज्ज्ञानं जायते तं वंदे। बोधोऽत्र प्रत्यक्स्वरूपमेव देहाद्यात्मवादनिरासश्चाद्यपद्यव्याख्याशतके निरूपित एव। वेदशास्त्रज्ञेयत्वेऽपि दुर्ज्ञेयत्वमाह—यस्य तव दर्शनं ज्ञानं निगमं वेदशास्त्र एव। कीदृशम्—आत्मनस्तव रहस्यस्य प्रकाशकम्। तर्हि वेदज्ञा एव मां जानन्तु तत्र नेत्याह—मुह्यंतीति। यत्र वेदे ब्रह्ममुख्या अपि मुनयो यततोऽपि भवत्तत्त्वाज्ञानान्मुह्यंति वेदस्य परोक्षवादित्वाद्धवन्मात्रज्ञेयत्वमिति भावः। अत एव हेतुगर्भं विशिनष्टि—सर्वे वादाविवर्तादयो निगमोक्तास्तेषां विषयाश्च ये तेषां प्रतिरूपमेव न त्वनुरूपं शीलं चरित्रं यस्य तमत एव गूढो गुप्तीकृतो बोधस्तत्स्वतत्त्वं येन तम् ॥ ४९ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधेऽष्टमोऽध्यायः ॥ ८ ॥

## अन्वितार्थप्रकाशिका

सत्त्वमिति हे ईश ! आत्मबन्धो जीवहितचिन्तक ! यद्यप्यस्य विश्वस्य स्थित्यादिहेतवो मायामयाः सत्त्वादयो गुणाः सृष्ट्यादिलीलार्थं त्वया धृता अङ्गीकृताः। अतस्त्वैव ब्रह्मादि मूर्तित्रयं तथापि या तव सत्त्वमयी मूर्त्तिः सैव नृणामुपासकानां शान्त्यै मोक्षाय भवति। अन्ये ब्रह्मरुद्रमूर्त्ती तथा न भवतः। प्रत्युत याभ्यां व्यसनं दुःखं मोहः भीश्चेति भवन्ति ॥४५॥ तस्मादिति। यस्मात्सत्त्वतनुरेव श्रेयस्करी तस्मात् हे भगवन् ! अथ विवेकानन्तरं तावकानां त्वद्भक्तानां स्वदयितां मनसः प्रियां शुक्लां शुद्धसत्त्वमयीं तव तनुम् इह लोके कुशला निपुणबुद्धयो भजन्ति। यत्सत्त्वं तदेव पुरुषस्य भगवतो रूपमिति सात्वताः भक्ता उशन्ति मन्यन्ते। यतश्च सत्त्वात् उपासकानां वैकुण्ठलोको भवति। अभयं सर्वभयनिवृत्तिश्च भवति। आत्मसंबन्धि सुखं च भवति। अन्यत् रजस्तमश्चैवंभूतं न भवतीत्यर्थः ॥४६॥ तस्मै इति। भगवते पुरुषाय सर्वान्तर्यामिणे भूम्ने व्यापकाय सर्वात्मने विश्वस्य विश्वाय गुरवे हितोपदेष्ट्रे परदेवतायै ऋषये ऋषिरूपाय नारायणाय नरेपूत्तमाय नराय च हंसाय शुद्धाय संयतगिरे नियतवाचे निगमेश्वराय वेदप्रवर्त्तकाय तस्मै ते तुभ्यं नमः ॥ ४७ ॥ यमिति। यस्य तव मायया आवृत्ता आत्मविषया मतिर्यस्य वितथैः निष्फलैः अक्षपथैः इन्द्रियमार्गैः भ्रमद्धीः विक्षिप्तबुद्धिः पुमान् स्वखेषु स्वेन्द्रियेषु हृद्यपि दृक्पथेषु च विषयेषु नियन्तृतया सन्तमपि यं त्वां नैव वेद। स उ सोऽपि आद्य एव पूर्वमज्ञातैव अखिलगुरोस्तव त्वत्प्रवर्त्तितं वेदमुपसाद्य प्राप्य त्वां वेद। यद्वा। यस्त्वाद्यो मुख्यस्तव भक्तः स तु वेदमुपसाद्य अखिलगुरोस्तव स्वरूपं साक्षाद् वेद। यद्वा स उ प्रसिद्धम्। आद्यो ब्रह्माऽपि तेऽखिलगुरोः साक्षाद्वेदमुपसाद्यापि न वेद ॥ ४८ ॥ यदिति। आत्मनः तव रहः रहस्यप्रकाशरूपं यस्य तव दर्शनं ज्ञानं निगमे वेदे भवति। अजो ब्रह्मा परो मुख्यो येषां ते कवयोऽपि यतन्तः साङ्ख्ययोगादिभिः प्रयतमाना अपि। शाता आर्षैः। यत्र त्वज्ज्ञाने मुह्यन्ति तं महापुरुष सर्वपा साङ्ख्ययोगादिविषयाणां ये विषयाः मतभेदास्तेषां प्रतिरूपं तत्तदनुसारि शीलं स्वभावो यस्य तम्। आत्मना देहादिसङ्घातेन निगूढो बोधः प्रकाशो यस्य तं त्वां वन्दे ॥ ४९ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। गङ्गासहायो विवृतिं द्वादशस्याष्टमे व्यधात्

इति श्रीभागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायाम् अष्टमोऽध्यायः ॥ ८ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

मायामयाः प्रकृतिसम्बन्धिन्यस्तनव इत्यध्याहारः शुक्लां तनुमित्यनन्तरोक्तेः लीलाधृता लीलया धृता अन्ये रजस्तमसी न प्रशान्त्यै याभ्यां व्यसनादिः स्यात् ॥ ४५ ॥ यत्सत्त्वं ते रूपं सात्वता उशन्ति तल्लोकाय आत्मज्ञानाय ज्ञानप्रदमित्यर्थः ॥ ४६ ॥ आत्मसुखम् आत्मानुभवमेव चाभयं नान्यत् अन्यत् सुखं भयमिश्रमित्यर्थः ॥ ४७ ॥ यं वं इति वितयाक्षपथैः भ्रमद्धीः मौर्वैरिन्द्रियैः विषयेषु भ्रान्तमनाः जन्तुः सर्वपदार्थेषु सन्तमपि न वेद तं त्वामन्यो विलक्षणाधिकारी तवाङ्घ्रिमुपसाद्य त्वां वेद अङ्घ्रिमित्यध्याहारेण योजना। यद्वा, अखिलगुरोरिति द्वितीयार्थे षष्ठी ॥ ४८ ॥ यद्दर्शनमिति यस्य दर्शनोपायभूतो वेदः आत्मरहः प्रकाशमिति निगमविशेषणम् अजो ब्रह्मा येषां परस्तेऽजपराः निगूढबोधं अपरिच्छेद्यज्ञानवैभवम् ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये अष्टमोऽध्यायः ॥ ८ ॥

## श्रीमद्वीरराघवव्याख्या

ननु, ब्रह्मरुद्रावपि ममैव मूर्त्ती अतस्तौ हित्वा मामेव किमिति भजसे इत्यत आह—सत्त्वमिति। हे ईश ! हे आत्मबन्धो ! जीवसखे ! यदपि यद्यपि अस्य जगतः स्थितिलयोदयहेतवः तव विद्धः रुद्रब्रह्मतनव इति विशेष्यमध्याहर्त्तव्यं शुक्लां तनुम् इत्यग्रे दर्शनात्ताश्च सत्त्वं रजस्तम इति या तव माया तथैव कृताः लीलाधृताः लीलयैव धृता लीलापदेन विष्णवाद्याख्यतनुसम्बन्धस्य कर्ममूलत्वव्यावृत्तिः तथापि तत्र सत्त्वमयी या तनुः सैव नृणामुपास्यमाना शान्त्यै मोक्षोपयुक्तशान्तये भवति नान्ये अन्ये ब्रह्मरुद्राख्ये तन्वौ न प्रशान्त्यै भवतः प्रत्युत ताभ्याम् उपासयव्यसनमोहभियो भवेयुः व्यसनं दुःखं भीर्भयं यद्यप्यत्र स्थितिहेतुभूताया विष्णवाख्यतनोरपि मायाकृतत्वोक्त्याऽप्राकृतसत्त्वगुणपरिणामरूपत्वमवगम्यते तच्च 'सत्त्वादयो न सन्तीशे यत्र च प्राकृता-गुणाः' इति श्रीभगवद्भिर्ग्रहे प्रतिषिद्धं तथाप्यत्र सत्त्वमिति या माया रजस्तमश्चेति च या माया ताभ्यां मायाभ्यां कृता इति योज्यम् तत्र सत्त्वशब्देन स्वसत्ताभासकं सत्त्वं गुणसत्त्वाद्विलक्षणमित्युक्तं शुद्धसत्त्वमयं त्रिगुणात्मकप्रकृतिद्रव्यविलक्षणं विवक्षितम् इत्थं योजनार्थमेव सत्त्वं रजस्तम इति व्यस्तनिर्देशः कृतः प्रबन्धोपक्रमेपि 'सत्त्वं रजस्ताम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहाऽस्य धत्ते' इत्यत्रायमेवार्थः रजस्तमःशब्दाभ्यां सपत्त्वमिश्रौ तौ विवक्षतौ ॥ ४५ ॥ यतः सत्त्वमय्येव प्रशान्त्यै न त्वन्ये तस्मान्निपुणबुद्धयस्तामेव उपासते तस्मादिति। अथ ननु, हे भगवंस्तावकानां त्वद्भक्तानां स्वदयिता स्वस्य तव च दयितां शुक्लां शुद्धसत्त्वमयीं तनुं कुशला भजन्ति काऽसौ शुक्ला तव तनुरित्यत्राह, यत्सात्वताः पुरुषरूपमुशन्ति सत्त्वं लोका इति सात्वताः पञ्चरात्रसिद्धान्ततत्त्वाभिज्ञा लोका जना नरनारायणाख्यं यत्पुरुषरूपं पुरुषाकृत्यावस्थितं रूपं पुरुषस्य तव रूपं वा सत्त्वं

विशुद्धं सत्त्वं मुशन्ति उपास्यत्वेनेच्छन्ति सैव शुक्ला तनुरित्यर्थः। तद्विशिनष्टि–यतः पुरुषरूपात्सत्त्वादुपास्यमानादभयं संसृति-भयाभावः उतापि चात्मसुखम् आत्मानुभवसुखं नचान्यदन्यद्भयमिश्रसुखं नास्ति ॥ ४६ ॥ इत्थमनन्तकल्याणगुणगणं स्तोतुमहं न शक्नोमीत्यभिप्रेत्योपस्थितैर्गुणैर्विशिंषन् प्रणमति–तस्मा इति। पुरुषाय पुरुषिणोसि ददासीति तथा चतुर्विधपुरुषार्थप्रदायेत्यर्थः। भूम्ने सर्वान्तरात्मत्वेन भूमगुणविशिष्टायेति एव विश्वाय विश्वरूपेणावस्थितायात एव विश्वगुरवे विश्वस्य हितकरायात्मनः शरीर-हिताचरणशीलत्वादिति भावः। परदेवतायै इत्यनेन ततोऽधिकदेवतान्तरव्यावृत्तिः नारायणायेत्यनेन प्राप्यत्वं च विवक्षितम् ऋषय इत्यनेन सर्वज्ञत्वं नारायणपदसमभिव्याहृतनरोत्तमशब्देन शिष्याचार्यरूपेणाखिलाध्यात्मविद्याप्रवर्त्तनद्वारा जगदुज्जीवयितृत्वं विवक्षितम्। हंसायेत्यनेनाश्रितदोषनिराकर्तृत्वं संयतगिर इत्यनेन 'सर्वमिदमभ्यात्तोऽवाक्य नारद इत्यत्रेव परिपूर्णताप्रयुक्तम-जल्पाकत्वं निगमेश्वरायेत्यनेन वेदाऽऽचार्यत्वं च विवक्षितमिति ॥ ४७ ॥ ननु, त्वम् इव माम् इत्थंभूतं सर्वेऽपि किं न विदन्ति अत आह यं वा इति। त्वन्माययाऽवृता मूतिर्यस्यात एव वितथैर्निरर्थकैरक्षपथैरिन्द्रियमार्गैभ्रमन्ती धीर्यस्य सः देहात्माभिमानिनी धीर्यस्येत्यर्थः। भ्रमद्भिरिति पाठे विषयप्रावण्येन चलद्भिवितथाक्षपथैर्यं त्वां न वेद कथम्भूतमपि स्वखेषु स्वेन्द्रियादिषु स्वकेष्वसुषु प्राणेषु हृदि हृदये हक्पथेषु विषयेषु नियन्तृतया सन्तमपि तर्हि न कोपि वेदेत्यत्राह–यस्तवाखिलगुरोराद्यः प्रथमं त्वत्प्रवर्त्तितः यः तं वेदमुपसाद्य स्थित इति शेषः स उ एव स ह्यव त्वां साक्षाद्वेद वेदान्तविहितोपासनाविशुद्धमनसा वेदेत्यर्थः॥ ४८ ॥ वेदेनैव ज्ञानमित्युपपादयन्प्रणमति–यदिति। यस्य दर्शनोपायभूतो निगमो वेद आत्मरहस्यप्रकाशकः अन्यथा दुर्ज्ञेयतामाह–अजपरा इति। अजो ब्रह्मा पर उत्कृष्टः प्रधानो येषां ते ब्रह्ममुख्याः कवयो यतन्तः साङ्ख्ययोगादिभिर्यतमाना अपि। यद्वा, हिरण्यगर्भकपिलादयः योगसाङ्ख्यादितन्त्रप्रणयनेन त्वत्स्वरूपविमर्शनाय यतमाना अपि यत्र त्वयि विषयभूते मुह्यन्ति तमित्थंभूतं सर्ववादविषयप्रतिरूप-शीलं सर्वेषां वादा योगसाङ्ख्यादिवादाः प्रकृत्युपादानत्वपुरुषनिमित्तत्वादिवादास्तेषां प्रतिक्षेपकं रूपं स्वरूपं शीलं स्वभावः सार्वज्ञ-सर्वशक्तित्वादिः प्रकृतिपुरुषादिष्वसम्भावितो यस्य तमात्मनि स्वस्मिन् गूढस्तैरविज्ञातः बोधः अपरिच्छेद्यज्ञानवैभवो यस्य तं महापुरुषं वन्दे॥ ४९ ॥

इतिश्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् अष्टमोध्यायः ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

देहाहंभावस्य निमित्ते रजस्तमसी तदभावस्य सत्त्वं त्वन्नियतमिति भावेनाह—सत्त्वमिति। हे ईश! आत्मबन्धो! सत्त्वं रजस्तम इति गुणास्त्वया लीलाधृताः जगन्निर्माणक्रीडायै धृताः अङ्गीकृताः। ननु, जीववदनिष्टं किञ्चित् शक्ता येन धार्याः स्युरिति तत्राह, स्थितीति। अस्य जगतः स्थित्यादिहेतवः किमात्मका इति तत्राह, मायामया इति। इच्छात्मकाः यदपि यद्यपि तथापि सत्त्व-मयः सात्त्विकः प्रशान्त्यै मुक्तये भवति अन्ये राजसतामसाः प्रशान्त्यै न स्युः किन्तु देहादभावेन संसाराय स्युरित्यर्थः। यद्वा, सत्त्वादन्ये रजस्तमसी शान्त्यै न स्यातां पुनः कस्मै भवत इति तत्राह, नृणामिति। याभ्यां रजस्तमोभ्यां नृणां व्यसनादयः स्युः च एवार्थे त्रिविधानां नृणां मध्ये सत्त्वमय एव इति वा ॥ ४५ ॥ उपसंहरन्नेव सत्त्वं स्तौति—तस्मादिति। यस्मात्सत्त्वमेव निः-श्रेयसहेतुस्तस्मादिह कुशलाः भगवन्नथ कल्याणानां तावकानाम् उपासायोग्यां स्वतो दयितां शुक्लां तव तनुं भजन्ति तावकानामिति किं विशिष्योच्यत इति तत्राह, यत्सात्त्वता इति सात्त्वताः साधुगुणयुक्ताः पुरुषाः सत्त्वं सत्त्वगुणप्रवर्त्तकं पुरुष इति रूपं शब्दा यस्य तत्तथा पुरुषशब्दवाच्यमित्यर्थः। उशन्ति कामयन्त इति यद्यस्मात्तस्माद्विशेषवचनम् यतः पुरुषरूपात् लोकोऽभयं विन्दति आत्म-सुखभूतापि लभते तस्मादन्यदभयादिदं न यद्वा, यतः सत्त्वाल्लोको रक्षितो भवति अभयमुतात्मसुखमाप्नोति अन्यद्रजस्तम इति यद्वयं स्वरूपसुखादिहेतुर्न भवति॥ ४६ ॥ निरन्तरध्यानासमर्थस्योपास्तिप्रकारमाह—तस्मा इति। विश्वाय विश्वनाम्ने अस्य सर्वनामसंज्ञा नास्ति अर्थान्तरत्वात्तत्प्रेक्षणशीलत्वेन संयतगिरे मितभाषणाय ॥ ४७ ॥ भवत्साक्षात्कारो भवत्प्रसादायत्तो न स्वप्रयत्नसाध्य इत्याह, यमिति। हे वितत! यः पुरुषोक्षपथैः शब्दादिभिः भ्रमद्धीर्यं त्वां न वेद कीदृशं स्वखेषु स्वेन्द्रियेषु असुषु प्राणेषु हृद्यपि हक्पथेषु हग्विषयेषु वसन्तं निर्दोषत्वेन वर्त्तमानं ज्ञापकाभावान्न जानन्तीति नेत्याह, तवेति। अखिलगुरोस्तव वेदं ज्ञापकप्रमाणम् उपपद्यापि सः साक्षादद्यः अदनयोग्यः विषयः भोगशीलः तस्य तव मायया बन्धकशक्त्या आवृत्तमतिः आच्छादितज्ञानस्तस्मात्त्व-त्प्रसादेन त्वज्ज्ञानं सुलभमित्यर्थः॥ ४८ ॥ त्वज्ज्ञानस्य किं माहात्म्यं येन त्वदनुग्रहेण सर्वथापाद्यं स्यादिति तत्राह—यद्दर्शनमिति। यस्य तव दर्शनं ज्ञाननिगमे तत्त्वनिर्णायके वेदे प्रतिपादितम् आत्मरहःप्रकाशो यस्मात्तत्तथा तत् अजपराः विष्णुपरायणा यतन्तः कृतोपास्तिप्रयत्नाः कवयो यत्र परमात्मरहस्ये मुह्यन्ति इदमित्थमिति ज्ञातुम् उपदेष्टुं च न शक्नुवन्ति तं भगवन्तं वन्दामह इत्यन्वयः। सर्ववादानां सर्वसिद्धान्तानां विषयाणां प्रतिपाद्यानाम् अर्थानां प्रतिरूपशीलं विरुद्धस्वभावं तदुक्तान्यथास्थितस्वभाव-मित्यर्थः। आत्मनि जीवविषये गूढबोधं जीवेनाज्ञातस्वरूपमित्यर्थः। आत्मना स्वेनेति वा॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् अष्टमोऽध्यायः॥ ८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

सत्त्वं रज इति द्वयम ॥ ४५–४७ ॥ यं वै इति । स्वेन्द्रियेषु सन्तमपि एषामेव विवरणम् असुषु कर्मेन्द्रियेषु दृक्पथेषु ज्ञानेन्द्रियेषु हृद्युभयात्मके 'नाहं प्रकाशः सर्वस्य योगमायासमावृतः" इति श्रीगीतोपनिषद्भ्यः ॥ ४८–४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे अष्टमोऽध्यायः ॥ ८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ननु, सकामत्वे सति देवतान्तरमपि भजतु तत्तद्भजनमपि मद्भजनमेव यतो देवा मन्मूर्त्तय एव ते इति तत्राह—सत्त्वमिति । आत्मबन्धो ! हे प्राणनाथ ! अस्य इन्द्रचन्द्रादि देवमनुष्यादिमयस्य जगतः स्थित्यादिहेतवः सत्त्वादयो गुणास्तेपि मायामया एव किं पुनस्तत्कार्य्या इन्द्राद्या नश्वरास्तेषां भजने मायातीतं त्वां कथं विन्दतेति भावः । यद्यप्यासु लीलासु मध्ये सत्त्वमयी लीला प्रशान्तौ धृता न त्वन्ये रजस्तमोमय्यौ याभ्यां व्यसनमोहभियो भवन्ति तदप्येतास्तिस्रोपलीला मायामय्य एवेत्यन्वयः ॥४५॥ अतस्तव मायामयीमिन्द्रादिमूर्त्तिमशुद्धां विहाय शुद्धसत्त्वस्वरूपा एव तत्त्वद्भक्तानां च मूर्त्तीरभिज्ञा उपासते इत्याह, तस्मादिति यत् यतः सात्त्वता नारदाद्याः पुरुषरूपं विष्णस्वरूपं सत्त्वम् उशन्ति । ननु, कीदृशं सत्त्वं तत्राह, यतो लोकः किं स्वर्गादिकः न यत्र अभयं पातहेतुकभयाभावः आत्मसुखम् आत्मभूतं सुखं च न तु कर्मफलं स लोको वैकुण्ठो यतस्तत् शुद्धसत्त्वं न चान्यत् प्राकृतं सत्त्वम् ॥ ४६ ॥ पुरुषाय पुरुषाकारत्वेपि भूम्ने सर्वव्यापकाय तदपि विश्वाय देवमनुष्यतिर्य्यगादिसर्वरूपाय आविर्भाव-प्रयोजनमाह—विश्वगुरवे भक्तिज्ञानवैराग्याणामुपदेष्ट्रे न केवलमुपदेष्टैव त्वमपि तु भजनीयश्चेत्याह, परदेवतायै अभीष्टदेवाय द्वाभ्यामेकावतारत्वमाह, ऋषये ऋषिस्वरूपनारायणाय ऋषिस्वरूपनरोत्तमाय च त्यक्तपरिग्रहत्वमाह हंसाय मौनशालित्वमाह संयतगिरे तदपि निगमेशाय वेदप्रवर्त्तकाय ॥ ४७ ॥ सर्वदुर्ज्ञेयत्वमाह—यं वै इति । वितथाक्षिपथैः कपटेन्द्रियमार्गैर्भ्रमद्धीः विक्षिप्त-बुद्धिः पुमान् स्वखेषु स्वेन्द्रियेषु असुषु प्राणेषु हृद्यपि नियन्तृत्वेन सन्तमपि यं त्वां न वेद सम्प्रत्यवतारसमयं दृक्पथेषु सन्तमपि त्वां तन्मायया तथा प्रसिद्धया मायया आवृतमतिर्न वेद अन्येषां का वार्त्ता ? स उ प्रसिद्धः आद्यो ब्रह्मापि तेऽखिलगुरोः साक्षाद्वेद-मुपसाद्य प्राप्यापि यं त्वां नैव वेद ॥ ४८ ॥ वेदशास्त्रज्ञेयत्वेपि दुर्ज्ञेयत्वमाह—यस्य तव दर्शनं ज्ञाने निगमे वेदशास्त्र एव, कीदृशम् आत्मनस्तव रहस्यस्य प्रकाशकं ननु, तर्हि वेददर्शिन एव मां जानन्तु, तत्र नेत्याह, मुह्यन्तीति । यत्र वेदे अजपराः अजो ब्रह्मा परः श्रेष्ठो येषां ते मुनयोपि यजन्तोपि भवत्तत्त्वज्ञानान्मुह्यन्ति निगमस्य परोक्षवादित्वाद्भवन्मात्रज्ञेयत्वमिति भावः । अत एव हेतुगर्भं विशिनष्टि—सर्वे वादा विवर्त्तादयो निगमोक्तास्तेषां विषयाश्च तेषां प्रतिरूपमेव नत्वनुरूपं शीलं चरित्रं यस्य तम् अत एव आत्मन्येव गूढो गुप्तीकृतो बोधः स्वतत्त्वं येन तम् ॥ ४९ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । द्वादशेऽत्राष्टमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

ननु, ब्रह्मशिवयोरपि भवन्मूर्त्तितया भजनीयत्वे सत्यहमेवैको भजनीयः कुतः ? इत्यत्राह—सत्त्वमिति । ईश ! हे सर्वनियन्तः ! आत्मबन्धो ! आत्मनां ब्रह्मादीनामंशभूतानां बन्धुः आश्रयः असि तस्य सम्बोधने हे आत्मबन्धो ! अस्य विश्वस्य यथायथं हेतवः सत्त्वं रजस्तम इति यदपि तव मायामयाः लीलाः लीलोपलक्षणमूर्त्तयः मायामय्यः यदपि यद्यपि तवैव त्वयैवांशाभ्यां स्वतश्च धृताः तथापि सत्त्वमयी प्रशान्त्यै मुक्तये भवति, नान्ये रजस्तमोमय्यौ शान्त्यै न भवत इत्यर्थः । प्रत्युत याभ्यां नृणां व्यसनादयो भवन्ति सत्त्वमयीत्यनेन स्थित्यर्थं सत्त्वगुणप्रवर्त्तनपरा अप्राकृतसत्त्वमयी बोध्या नतु प्राकृतसत्त्वगुणकार्यभूतेति बोध्यम् "सत्त्वादयो न सन्तीशे यत्रच प्राकृता गुणाः" इत्यादि वचनात् मायामया इति छत्रिणो यान्तीतिवदुक्तम् ॥ ४५ ॥ यस्मादेवं तस्मात् हे भगवन् ! इह भजनभूमौ स्वदयितां भगवत्प्रियां तावकानां भवदीयानां च दयितां शुक्लां शुद्धां तमःशब्दवाच्यप्रधान-विलक्षणां तव तनुं कुशलाः भजन्ति, यत् यतः सात्वताः सत्त्वं शुद्धमप्राकृतं सत्त्वं पुरुषस्य परमपुरुषस्वरूपं विग्रहम् उशन्ति मन्यन्ते भजनफलमाह यतः शुक्लतनुभजनतः भजनकाले एव आत्मसुखम् अत्र "ब्रह्म समश्नुते" इति ध्येयप्राप्तिसुखम् अभयं सर्वतो हि भयाभावः चरमकलेवरत्यागानन्तरं लोको भगवल्लोको लभ्यते अन्यत्संसारो नेत्यन्वयः ॥ ४६ ॥ नमस्करोति —तस्मा दिति ॥४७॥ नन्वेवम्भूतमन्यः कुतो न जानातीत्यत्राह—यमिति । वितथाक्षपथैर्निरर्थकेन्द्रियमार्गैर्भ्रमद्धीः भ्रमन्ती धीर्यस्य सः यतस्त्वन्मायया आवृता मतिर्यस्य सः सदेहात्माभिमानीयं स्वखेषु खेन्द्रियेषु असुषु प्राणेषु हृद्यपि नियन्तृतया अवतारवेलायां दृक्पथेष्वपि सन्तं न वेद किं बहुना उ प्रसिद्धो यः स आद्यो ब्रह्मापि साक्षात्स्वातन्त्र्येण नैव वेद पुनः अखिलगुरोस्तव वेदमासाद्य वेदेतियोजना ॥४८॥ वेदद्वारा यत्किञ्चिद्ब्रह्मापि जानातीत्युक्तमियत्तावच्छिन्नतया तु ब्रह्मादयो नैव त्वां जानन्ति तं त्वां वन्दे इत्याह—यदिति । यस्य तव

२९

दर्शनं ज्ञानं निगमे एव कीदृशम् आत्मरहःप्रकाशम् आत्मनः परमात्मनस्तव रहस्यप्रकाशकम् यत्र दर्शने त्वयि वा अजपराः ब्रह्मप्रधानाः यतन्तोपि मुह्यन्ति अत एव सर्वे वेदाः हैरण्यगर्भपाशुपतादयस्तेषां ये विषयास्तत्प्रतिरूपं प्रतिकूलं नत्वनुकूलं शीलं यस्य तत्त्वम् आत्मन्येव गूढो बोध इयत्तानवच्छिन्नज्ञानवैभवलक्षणः प्रबोधो यस्य तं महापुरुषं वन्दे ॥ ४९ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे अष्टमाऽध्यायार्थप्रकाशः ॥ ८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

ननु ब्रह्मरुद्रावपि ममैव मूर्त्ती अतो मामेव किमत्यन्तमाद्रियत इत्याशङ्क्याह—सत्त्वमिति। हे ईश हे आत्मबन्धो जीवहितचिन्तक यद्यपि अस्य विश्वस्य स्थित्यादिहेतवः मायामयाः प्रकृतिविभागकृताः सत्त्वादयो गुणाः सृष्ट्यादिलीलार्थं त्वया धृता अङ्गीकृता अतस्तवैव ब्रह्मादिमूर्तित्रयं तथापि नृणामुपासकानां शान्त्यै मोक्षाय तु या सत्त्वमयी मूर्तिः सैव भवति अन्ये ब्रह्मरुद्रमूर्त्ती तथा न भवतः प्रत्युत याभ्यां व्यसनं दुःखं मोहः भीश्च भवति ॥ ४५ ॥ एतदेव सदाचारेण दृढयति–तस्मादिति। यस्मात् सत्त्वतनुरेव श्रेयस्करी तस्मात् हे भगवन् अथ विवेकानन्तरं तावकानां त्वद्भक्तानां स्वदयिता मनसः प्रियां शुक्लां शुद्धसत्त्वमयीं तव तनुं इह लोके कुशला निपुणबुद्धयो भजन्ति। भक्तप्रियत्वमेव स्पष्टयति–यदिति। यत्सत्त्वं तदेव पुरुषस्य भगवतो रूपमिति सात्त्वता भक्ता उशन्ति मन्यन्ते। श्रयोहेतुत्वं स्पष्टयति—यतश्च सत्त्वात् उपासकानां वैकुण्ठलोको भवति अभयं सर्वभयनिवृत्तिश्च भवति आत्मसम्बन्धि सुखं च भवति, अन्यत् रजस्तमश्चैवम्भूतं न भवतीत्यर्थः ॥ ४६ ॥ अत आनन्दपरिपूर्णविग्रहे त्वयि किमप्युपकारं कर्त्तुमहं न शक्त इति सूचयन्प्रणमति—तस्मै भगवते नमः। पुरुषाय सर्वसाक्षिणे च तथापि भूम्ने व्यापकाय विश्वाय सर्वात्मने विश्वस्य गुरवे हितोपदेष्ट्रे तत्र हेतुः—निगमेश्वराय वेदप्रवर्त्तकाय। हंसाय शुद्धाय। संयतगिरे नियतवाचे ॥४७॥ नन्वेवं मां सर्वोऽपि कथं न वेद तत्राह—यमिति। वितथैः निष्फलैः अक्षपथैः इन्द्रियमार्गैः भ्रमद्धीः विक्षिप्तबुद्धिः पुमान् स्वखेषु स्वेन्द्रियेषु हृद्यपि दृक्पथेषु विषयेषु च नियन्तृतया सन्तमपि यं त्वां नैव वेद। बुद्धिविक्षेपे हेतुमाह—तस्य तव मायया आवृत्ता आत्मविषया मतिर्यस्य सः। यस्त्वाद्यः मुख्यस्तव भक्तः स एवाखिलगुरोस्तव स्वरूपं साक्षाद्वेद, ज्ञाने द्वारमाह—वेदमुपसाद्य प्राप्येति ॥ ४८ ॥ वेदेनैव त्वज्ज्ञानमित्युपपादयन् प्रणमति—यद्दर्शनमिति। यस्य तव दर्शनं निगमे वेदे भवति दर्शनमेव विशिनष्टि–आत्मनस्तव रहः रहस्यप्रकाशरूपम्। अन्यथा तस्य दुर्ज्ञेयतामाह–अजो ब्रह्मा परो मुख्यो येषां ते कवयोऽपि यतन्तः साङ्ख्ययोगादिभिः प्रयतमाना अपि यत्र त्वज्ज्ञाने मुह्यन्ति तं महापुरुषं त्वां वन्द इत्यन्वयः। मोहे हेतुमाह—सर्वेषां साङ्ख्ययोगादिवादानां ये विषया मतभेदास्तेषां प्रतिरूपं तत्तदनुसारि शीलं स्वभावो यस्य तम्। तत्रापि हेतुमाह—आत्मना देहादिसङ्घातेन निगूढो बोधः प्रकाशो यस्य तम् ॥ ४९ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता द्वादशे तत्र सर्वाश्रयनिरूपणे। मार्कण्डेयतपश्चर्याबोधको ह्यष्टमो गतः ॥ ३ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ननु ब्रह्मरुद्रावपि ममैव मूर्त्ती अतस्तौ हित्वा मामेव किमिति भजस इत्यत आह। सत्त्वमिति। हे ईश, हे आत्मबन्धो सकलजीवसख, यदपि यद्यपि अस्य जगतः स्थितिलयोद्भवहेतवः, सत्त्वं रजस्तम इति सत्त्वरजस्तमआत्मिकाः विष्णुरुद्रब्रह्माख्याः, तव याः तनवः इति शेषः। भवन्ति। ताश्च मायामयाः क्वचिन्मायाकृता इत्यपि पाठः। लीलाधृतास्त्वया लीलामात्रेणोपात्ताः, तथापि सत्त्वमयी या तनुः सैव नृणां प्रशान्त्यै उपास्यमानानां मोक्षोपयुक्तशान्तये भवति। अन्ये रजस्तमोमय्यौ न प्रशान्तये न भवतः। न केवलमन्ययोस्तयोर्भजने प्रशान्त्यभावमात्रं किं त्वन्यदपि भवतीत्याह। याभ्यामन्याभ्यां तनुभ्यां नृणां व्यसनमोहभियश्च भवन्ति। यद्यप्यत्र स्थितिहेतुभूताया विष्णवाख्यतनोरपि मायाकृतत्वोक्त्या प्रकृतिसम्बन्धिसत्त्वगुणपरिणामरूपत्वमवगम्यते, तथ 'सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः' इति वचनेन भगवद्विग्रहे प्रतिषिद्धमस्ति, अत्र सत्त्वशब्देन स्वसत्ताभासकं सत्त्वं गुणात्मकसत्त्वाद्विलक्षणमेतच्छुद्धसत्त्वशब्देनोच्यते, अत्रैकादशेऽपि 'मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम्। सुहृदं प्रियमात्मानं साम्यासङ्गादयोऽगुणाः' इत्यत्रापि अगुणा गुणपरिणामरूपा न भवन्ति, किं तु नित्या इति श्रीधरस्वामिभिर्व्याख्यातत्वात् न भगवतः सत्त्वस्य प्राकृतत्वम्। भगवतः सत्त्वस्याप्राकृतत्वात्, अत्रापि विष्णुतन्वाः न मायामयत्वमिति ज्ञेयम् ॥ ४५ ॥ यतः सत्त्वमय्येव त्वत्तनुः प्रशान्त्यै न त्वन्या तस्मान्निपुणबुद्धयस्तामेवोपासत इत्याह। तस्मादिति। तस्मात्त्वत्तनोरेव प्रशान्तिहेतुत्वात्, हे भगवन्, तावकानां त्वद्भक्तानां दयितामिति शेषः। अथ स्वदयितां स्वस्य तव च दयितां प्रियामित्यर्थः। शुक्लां शुद्धसत्त्वमयीं तव तनुम्, इह लोके, कुशलाः भजन्ति। काऽसौ शुक्ला तनुरित्यत्राह। सात्त्वताः पञ्चरात्रसिद्धान्ताभिज्ञा लोकाः, यत् सत्त्वं विशुद्धं सत्त्वं पुरुषरूपं पुरुषाकृत्यावस्थितं रूपम्, उशन्ति समुपास्यत्वेनेच्छन्ति, सैव शुक्ला तनुरित्यर्थः। तद्विशिनष्टि। यतः पुरुषरूपात् समुपास्यमानात्,

लोकः अभयं संसृतिभयाभावम्, उताऽप्यर्थे। आत्मसुखं चापि लभते इति शेषः। अन्यत् न भयमिश्रसुखं न लभते इत्यर्थः ॥ ४६ ॥ इत्थमनन्तकल्याणगुणगणं त्वां स्तोतुमहं न शक्नोमि इत्यभिप्रेत्य उपस्थितैर्गुणैर्विशिंषन् प्रणमति। तस्मा इति। पुरु सनोति ददातीति पुरुषस्तस्मै, चतुर्विधपुरुषार्थप्रदायेत्यर्थः। भूम्ने सर्वान्तरात्मने, भूमगुणविशिष्टाय वा, अत एव विश्वाय विश्वप्रकाशकत्वेनावस्थिताय, अत एव विश्वगुरवे विश्वस्य हितकराय, परदेवतायै स्वतोऽधिकदेवतान्तरवर्जिताय, नारायणाय प्राप्यत्वप्रापकत्वधारकत्वगुणवते, ऋषये सर्वज्ञाय, नरोत्तमाय हंसाय स्वाश्रितदोषनिरासकाय, संयतगिरे पूर्णत्वेन अवहुजल्पकाय, निगमेश्वराय वेदाचार्याय च तस्मै भगवते नमः ॥ ४७ ॥ ननु भवानिव मामित्थंभूतं सर्वेऽपि किं न विदन्ति तत्राह। यं वा इति। त्वन्मायया वृता मतिर्यस्य सः, अलुक्समासः। अत एव वितथा निरर्थका अक्षपथा इन्द्रियमार्गास्तैः भ्रमन्ती धीर्यस्य सः देहाभिमानी पुमानित्यर्थः। भ्रमद्भिरिति पाठे विषयप्रावण्येन चलद्भिः वितथाक्षपथैरिति संबन्धः। स्वकेषु स्वकीयेषु असुषु प्राणेषु, हृदि हृदये दृक्पथेषु विषयेषु सन्तं नियन्तृतया विद्यमानमपि, यं त्वां न वेद, तर्हि कोऽपि वेद न वेत्यत्राह। आद्यः च पूर्वमज्ञाता सन्नपि, अखिलगुरोः ते तव अखिल-गुरुणा त्वया प्रवर्त्तितमित्यर्थः। वेदम् उपसाद्य स्थित इति शेषः। स एव उ इति सम्बोधने। हे हरे. त्वां साक्षात् वेद वै वेदान्तविहि-तोपासनाविशुद्धमनसा वेदेत्यर्थः ॥ ४८ ॥ वेदेनैव ज्ञानमित्युपपादयन् प्रणमति। यदिति। आत्मरहःप्रकाशः आत्मरहस्यस्य प्रकाशकः, निगमः वेदः, यद्दर्शनं यस्य ज्ञानोपायभूतः, एव। अन्यथा दुर्ज्ञेयतामाह। अजपरा इति। अजो ब्रह्मा पर उत्कृष्टो येषां ते, ब्रह्मप्रमुखा इत्यर्थः। कवयः यतन्तः सांख्ययोगादिभिर्यतमानाः सन्तोऽपि, यद्वा। कवयः हिरण्यगर्भकपिलादयो यागसांख्यादि-तत्त्वप्रणयनेन त्वत्स्वरूपविमर्षणाय यतमानाः सन्तोऽपि, यत्र त्वयि मुह्यन्ति, तमित्थंभूतं सर्ववादा सर्वेषां योगसांख्यादीनां वादाः प्रकृत्युपादानत्वपुरुषनिमित्तत्वादिरूपाः तेषां विषयस्य प्रति प्रतिगमकं रूपं स्वरूपं शीलं स्वभावश्च यस्य तम्, आत्मनि स्वस्मिन् गूढस्तैरविज्ञातबोधोऽपरिच्छेद्यज्ञानवैभवो यस्य तं, महापुरुषं वन्दे। केचित्तु निगम इति सप्तम्यन्तम्, आत्मरहःप्रकाशमिति दर्शन-विशेषणं चामनन्ति। तन्मते आत्मरहःप्रकाशं यस्य तव दर्शनं निगमे वेदे भवति, यत्र वेदे अजपराः कवयः यतन्तोऽपि, मुह्यन्ति, अन्यत्पूर्ववदेव ॥ ४९ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचिताया-मन्वयार्थविबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

## हिन्दी अनुवाद

जीवों के परम सुहृद् प्रभो ! यद्यपि सत्त्व, रज और तम—ये तीनों गुण आप की ही मूर्ति हैं—इन्हीं के द्वारा आप जगत् की उत्पत्ति, स्थिति, लय आदि अनेकों मायामयी लीलाएँ करते हैं फिर भी आप की सत्त्वगुणमयी मूर्ति ही जीवों को शान्ति प्रदान करती है। रजोगुणी और तमोगुणी मूर्तियों से जीवों को शान्ति नहीं मिल सकती। उनसे तो दुःख, मोह और भय की वृद्धि ही होती है ॥ ४५ ॥ भगवन् ! इसलिये बुद्धिमान् पुरुष आप की और आप के भक्तों की परम प्रिय एवं शुद्ध मूर्ति नर-नारायण की ही उपासना करते हैं। पाञ्चरात्र-सिद्धान्त के अनुयायी विशुद्ध सत्त्व को ही आप का श्रीविग्रह मानते हैं। उसी की उपासना से आप के नित्यधाम वैकुण्ठ की प्राप्ति होती है। उस धाम की यह विलक्षणता है कि वह लोक होने पर भी सर्वथा भयरहित और भोगयुक्त होने पर भी आत्मानन्द से परिपूर्ण है। वे रजोगुण और तमोगुण को आप की मूर्ति स्वीकार नहीं करते ॥ ४६ ॥ भगवन् ! आप अन्तर्यामी, सर्वव्यापक, सर्वस्वरूप, जगद्गुरु, परमाराध्य और शुद्धस्वरूप हैं। समस्त लौकिक और वैदिक वाणी आप के अधीन है। आप ही वेदमार्ग के प्रवर्तक हैं। मैं आप के इस युगलस्वरूप नरोत्तम नर और ऋषिवर नारायण को नमस्कार करता हूँ ॥ ४७ ॥ आप यद्यपि प्रत्येक जीव की इन्द्रियों तथा उनके विषयों में, प्राणों में तथा हृदय में भी विद्यमान हैं तो भी आप की माया से जीव की बुद्धि इतनी मोहित हो जाती है—ढक जाती है कि वह निष्फल और झूठी इन्द्रियों के जाल में फँसकर आप की झाँकी से वञ्चित हो जाता है; किन्तु सारे जगत् के गुरु तो आप ही हैं। इसलिये पहले अज्ञानी होने पर भी जब आप की कृपा से उसे आप के ज्ञान-भण्डार वेदों की प्राप्ति होती है, तब वह आप के साक्षात् दर्शन कर लेता है ॥ ४८ ॥ प्रभो ! वेद में आप का साक्षात्कार करानेवाला वह ज्ञान पूर्णरूप से विद्यमान है जो आप के स्वरूप का रहस्य प्रकट करता है। ब्रह्मा आदि बड़े-बड़े प्रतिभाशाली मनीषी उसे प्राप्त करने का यत्न करते रहने पर भी मोह में पड़ जाते हैं। आप भी ऐसे लीलाविहारी हैं कि विभिन्न मतवाले आप के सम्बन्ध में जैसा सोचते-विचारते हैं, वैसा ही शील-स्वभाव और रूप ग्रहण करके आप उनके सामने प्रकट हो जाते हैं। वास्तव में आप देह आदि समस्त उपाधियों में छिपे हुए विशुद्ध विज्ञानघन ही हैं। हे पुरुषोत्तम ! मैं आप की वन्दना करता हूँ ॥ ४९ ॥

इति द्वादशस्कन्धे अष्टमोऽध्यायः ॥ ८ ॥

# अथ नवमोऽध्यायः

सूत उवाच

संस्तुतो भगवानित्थं मार्कण्डेयेन धीमता । नारायणो नरसखः प्रीत आह भृगूद्वहम् ॥ १ ॥

श्रीभगवानुवाच

भो भो ब्रह्मर्षिवर्यासि सिद्ध आत्मसमाधिना । मयि भक्त्यानपायिन्या तपःस्वाध्यायसंयमैः ॥ २ ॥

वयं ते परितुष्टाः स्म त्वद्बृहद्व्रतचर्यया । वरं प्रतीच्छ भद्रं ते वरदेशादभीप्सितम् ॥ ३ ॥

ऋषिरुवाच

जितं ते देवदेवेश प्रपन्नार्तिहराच्युत । वरेणैतावतालं नो यद् भवान् समदृश्यत ॥ ४ ॥

गृहीत्वाजादयो यस्य श्रीमत्पादाब्जदर्शनम् । मनसा योगपक्वेन स भवान् मेऽक्षगोचरः ॥ ५ ॥

अथाप्यम्बुजपत्राक्ष पुण्यश्लोकशिखामणे । द्रक्ष्ये मायां यया लोकः सपालो वेद सद्भिदाम् ॥ ६ ॥

सूत उवाच

इतीडितोऽर्चितः काममृषिणा भगवान् मुने । तथेति स स्मयन् प्रागाद् बदर्याश्रममीश्वरः ॥ ७ ॥

तमेव चिन्तयन्नर्थमृषिः स्वाश्रम एव सः । वसन्नग्न्यर्कसोमाम्बुभूवायुवियदात्मसु ॥ ८ ॥

ध्यायन् सर्वत्र च हरिं भावद्रव्यैरपूजयत् । क्वचित् पूजां विसस्मार प्रेमप्रसरसम्प्लुतः ॥ ९ ॥

कृष्णप्रिया व्याख्या

अन्वयः—सूतः उवाच—नरसखः नारायणः भगवान् धीमता मार्कण्डेयेन इत्थं संस्तुतः प्रीतः (सन्) भृगूद्वहम् आह ॥ १ ॥ श्रीभगवान् उवाच—भोः भोः ब्रह्मर्षिवर्य (त्वम्) आत्मसमाधिना मयि अनपायिन्या भक्त्या तपःस्वाध्यायसंयमैः सिद्धः असि ॥ २ ॥ त्वद्बृहद्व्रतचर्यया ते वयं परितुष्टाः स्म ते भद्रं (भवतु) वरदेशात् अभीप्सितं वरं प्रतीच्छ ॥ ३ ॥ ऋषिः उवाच—देवदेवेश प्रपन्नार्तिहर अच्युत ते जितं यत् भवान् नः समदृश्यत एतावता वरेण अलम् ॥ ४ ॥ यस्य श्रीमत्पादाब्जदर्शनं योगपक्वेन मनसा गृहीत्वा अजादयः (कृतार्थाः) सः भवान् मे अक्षगोचरः (जातः) ॥ ५ ॥ अम्बुजपत्राक्ष पुण्यश्लोकशिखामणे अथापि यया सपालः लोकः सद्भिदां वेद (तां) मायां द्रक्ष्ये ॥ ६ ॥ सूतः उवाच—मुने इति ऋषिणा कामम् ईडितः अर्चितः सः भगवान् तथा इति स्मयन् ईश्वरः बदर्याश्रमं प्रागात् ॥ ७ ॥ स्वाश्रमे एव वसन् सः ऋषिः तम् एव अर्थं चिन्तयन् अग्न्यर्कसोमाम्बुभूवायुवियदात्मसु ॥ ८ ॥ सर्वत्र च हरिं ध्यायन् (तं) भावद्रव्यैः अपूजयत् क्वचित् प्रेमप्रसरसम्प्लुतः पूजां विसस्मार ॥ ९ ॥

श्रीधरस्वामिविरचिता भावार्थदीपिका

नवमे भगवन्मायादिदृक्षोर्दर्शने मुहुः । मायाशिशोर्लयाब्धौ च मुनेर्निर्वेशनिर्गमैः ॥ १ ॥

भगवतः परितोषपूर्वकं तदपेक्षितवरदानं कथयितुमाह संस्तुत इत्यादिना ॥ १ ॥ आत्मसमाधिना चित्तैकाग्र्येण ॥ २ ॥ वयं ते परितुष्टाः स्मेति बहुवचनं सर्वदेवाभिप्रायेण । वरदेशादित्येकवचनं द्वयोरैक्याभिप्रायेण प्रतीच्छ गृहाण ॥ ३ ॥ वरेण

१. वीक्ष्यो० । २. रम् ।

च्छंदयता त्वया जितमुत्कर्षो दर्शितः। मम तु वराकांक्षा नास्तीत्याह। वरेणेति॥ ४॥ यस्य तव श्रीमत्पादाब्जदर्शनं मनसाऽपि गृहीत्वा प्राप्य कृतार्थो अजादयो भवंति स भवान्मेऽक्षगोचरो जातोऽस्ति किमतः परं वरेणेत्यर्थः॥ ५॥ द्रक्ष्ये द्रष्टुमिच्छामि। लोकपालैर्ब्रह्मादिभिः सहितोऽयं लोको जनो यया सद्भिदां सति वस्तुनि भेदम्॥ ६॥ तथेति द्रक्ष्यसीति। स ईश्वरः स्मयन्प्रागात्। पाठांतरे क्रियाविशेषणम्॥ ७॥ तमेवार्थं मायादर्शनरूपम्। अग्न्यादिमूर्तिषु॥ ८॥ भावद्रव्यैर्मनोमयैर्द्रव्यैः। क्वचित्कदाचित्प्रेमप्रसरसंप्लुतः प्रेमोद्रेकं प्राप्तः॥ ९॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

मुनेर्लयाब्धौ प्रलयकालिकसमुद्रे, मायया कृपया, शिशोः शिशुरूपस्य। निर्वेशः प्रवेशः, निर्गमो बहिरागमनम् (१)। भृगूद्वहं मार्कंडेयम्॥ १॥ भो भो इति वीप्साऽऽदरे। हे ब्रह्मर्षिवर्येति-ब्रह्मर्षयो मद्दर्शनार्थं यतंत्येव न तु प्राप्नुवंति त्वया तत्प्राप्तमतस्तेषु त्वमेव श्रेष्ठोऽसीति भावः॥ २-३॥ ते जितं तवोत्कर्षोऽस्त्येव स्वोत्कर्षेणैव ममाज्ञानमपहृतम्। देवा इंद्राद्यास्तेषां देवो ब्रह्मा तस्यापि त्वमेवेशोसीति भावः। प्रपन्नानां मादृशानामार्ति संसृतिदुःखं हरतीति तादृशोऽपि त्वमेव। च्युतिर्नाशस्तद्रहितोऽपि त्वमेव, अहो एतादृशस्य तव दर्शने किमहं तुच्छं वरं याच इति भावः। एतावता एतत्प्रमाणेन। एतावता कियतेति चेत्तत्राह-यदिति॥ ४॥ इत्यर्थं इति--तव दर्शनात्परो न कोपि वरोऽधिकोऽस्तीति भावः॥ ५॥ हे अंबुजपत्राक्षेति--तव स्वाभाविकतापहरदृष्टेर्न किञ्चिद्वक्तव्यमस्तीति भावः। पुण्यश्लोका अपि स्वयशोरक्षणाय विनैवान्यप्रेरणां परकार्यं कुर्वंति त्वं तु तेषां शिखामणिः परममुख्य इति भावः॥ ६॥ पाठांतरे 'सस्मयम्' इति पाठे॥ ७-१०॥

### अन्वितार्थप्रकाशिका

मृकण्डपुत्रो नवमे हरेर्मायामलोकत। सेहे भूरीणि कष्टानि तत्र श्लोकश्चतुर्गुणाः (३४)॥
उवाचत्रितयं (३) सार्धा नवत्रिंशदनुष्टुभः (३९॥)॥ ९॥

संस्तुत इति। स्फुटम्॥ १॥ भो भो इति। भो भो ब्रह्मर्षिवर्य! आत्मसमाधिना चित्तैकाग्र्येण अनपायिन्या मयि भक्त्या तपआदिभिश्च त्वं सिद्धः कृतार्थोऽसि॥ २॥ वयमिति। वयं सर्वे देवाः। यद्वाऽग्रे प्रस्तोष्यमाणशिवोमाद्यभिप्रायेण त्वद्बृहद्व्रतचर्यया परितुष्टाः स्मः ते भद्रं भवतु। त्वं वरदानामीशात्सर्वदेवात्मकान्मत्तः अभीप्सितं वरं प्रतीच्छ गृहाण॥ ३॥ जितमिति। हे देवदेवेश! प्रपन्नानामार्त्तिं हरतीति तथाभूत हे अच्युत! ते तव जितं तवोत्कर्षोऽस्त्येव। यद्भवान्नोऽस्माभिः सम्यगदृश्यत। एतावतैव वरेणालं मम वराकाङ्क्षा नास्ति॥ ४॥ गृहीत्वेति यस्य तव श्रीमत्पादाब्जदर्शनं योगशुद्धेन मनसा मनोमात्रेण गृहीत्वा प्राप्याप्यजादयः कृतार्था भवन्ति। स भवान् मेऽक्षगोचरो जातोऽस्ति। किमतः परं वरेणेत्यर्थः॥ ५॥ अथेति। हे अम्बुजपत्राक्ष! हे पुण्यश्लोकशिखामणे अथापि वरानभिलाषेऽपि यया मायया लोकपालैर्ब्रह्मादिभिः सहितो लोकः सर्वोऽपि जनः सद्भिदां सच्छब्दवाच्ये त्वयि भिदां देवतिर्यङ्मनुष्यादिभेदं वेद पश्यति तां तव मायां द्रक्ष्ये द्रष्टुमिच्छामि। तङ्आर्षः॥ ६॥ इतीति। हे मुने! इत्येवमीडितः स्तुतोऽर्चितश्च स भगवान् तथेति द्रक्ष्यसीत्युक्त्वा स्मयन् मन्दहासं कुर्वन्। शता आर्षः। सस्मयमिति पाठे क्रियाविशेषणम्। बदर्याश्रमं प्रति प्रागात्॥ ७॥ तमिति युग्मम्। स्वाश्रम एव वसन् स्थितः स ऋषिस्तमेव मायादर्शनरूपमर्थं कदा द्रक्ष्यामीति चिन्तयन् अग्न्यादिषु सर्वत्र च हरिं ध्यायन् भावद्रव्यैः मनोमयैर्गन्धपुष्पनैवेद्यादिभिः पूजासाधनैरपूजयत्। क्वचित्कदाचित्तु प्रेमप्रसरेण प्रेमप्रवाहाधिक्येन संप्लुतो व्याप्तः संस्तां पूजामपि विसस्मार विस्मृतवान्॥ ८-९॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

१-५ मायाम् आश्चर्यशक्तिम्॥ ६-१२॥

### श्रीमद्वीरराघवव्याख्या

इत्थं संस्तुतस्तदभिमतं प्रायच्छदित्याह—संस्तुत इत्यादिना। हे भृगूद्वह! द्वितीयान्तपाठे भृगूद्वहं मार्कण्डेयमित्याह॥१॥ उक्तिमेवाह-भोभो इति द्वाभ्याम्। आत्मसमाधिना चित्तैकाग्र्येणानपायिन्याऽविच्छिन्नाया मयि भक्त्या च तपआदिभिश्च सिद्धो ब्रह्मर्षिश्रेष्ठश्चासि॥२॥ तव बृहद्व्रतचर्यया नैष्ठिकाकामधर्मचर्यया वयं परितुष्टाः स्मः वयमिति बहुवचनं सर्वदेवाभिप्रायकं वरदानामीशान्मत्तः वरं प्रतीच्छ वृणीहि ते तुभ्यं भद्रं शुभमस्तु॥ ३॥ इत्थं वराय प्रचोदितः प्राह-जितं त इति त्रिभिः। देवदेवो ब्रह्मा तस्यापीश! प्रपन्नानामार्त्ति क्लेशं हरतीति तथाभूत! आश्रितान्न च्यावयतीति तथा नोऽस्मभ्यं भवान् सम्यगदृश्यतेति यदेतावतैव वरेणालम्॥ ४॥ तत्र हेतुतया तद्दर्शनस्य दुर्लभतामाह-वाञ्छन्तीति। अजादयो ब्रह्मादयः योगपक्वेन योगविशुद्धेन मनसा यस्य श्रीमत्पादाब्जदर्शनं

केवलं वाञ्छन्ति नतु पश्यन्ति स भवान् ममाक्षिगोचरोसि ॥५॥ अथापीति । यद्यपि त्वद्दर्शनमेव वरस्तथापि तव माया आश्चर्यशक्तिं द्रक्ष्ये द्रष्टुमिच्छामि इत्यर्थः । तां विशिनष्टि यया मायया लोकपालैर्ब्रह्मादिभिः सहितो लोको जनसद्भिदां सच्छब्दवाच्ये त्वयि भिदां भेदं देवतिर्यङ् मनुष्यस्थावरभेदं वेद यया कृतां भिदां वेद तां मायामित्यर्थः ॥ ६ ॥ इतीति । ईडित उक्तोर्चितश्च भगवान् हे मुने ! स्मयो मन्दहासस्तेन सहितं यथा तथा तथेति द्रक्ष्यसीत्यनुगृह्य बदर्याश्रमं प्रति प्रागात् ॥ ७ ॥ तमेवेति । तमेवार्थं मायादर्शनरूपमर्थं चिन्तयन् कदा द्रक्ष्यामीति चिन्तयन्नित्यर्थः । अग्न्यादिष्वष्टसु तत्रात्महृदयम् ॥ ८ ॥ सर्वत्र गोविप्रादिषु हरिं ध्यायन् भावद्रव्यैर्मनोमयैर्द्रव्यैरपूजयत् मानसोपचारैः अपूजयदित्यर्थः । क्वचिदिति । भक्तिप्रसरेण प्रीत्यात्मकभक्तिपरीवाहेण सम्प्लुतः व्याप्तः तां पूजामपि विस्मृतवान् ॥ ९ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

संस्तुत इति ॥ १ ॥ आत्मनो हरेः समाधिनोपासनाजन्यज्ञानेन सिद्धः कृतकृत्यः ॥ २ ॥ प्रतीच्छ स्वीकुरु ॥ ३ ॥ भवन्माहात्म्यप्रकटनं वरं वरयिष्यन्नपि भगवद्दर्शनादितरो वरोऽनभीष्टो मुमुक्षोरिति हृदि कृत्वा प्रतिवक्ति—जितमिति ॥ ४ ॥ यदाकाङ्क्षापूरकं प्रायस्तदेव साध्यमस्य तदभावात्पथि तृणमिवेदमपि वन्ध्यमिति तत्राह—वाञ्छन्तीति । भक्तियोगपक्वेन भक्त्युपासनाभ्यां परिपाकं प्राप्तेन वाऽक्षगोचरो ऽभूदिति शेषः ॥ ५ ॥ ननूक्तं सत्यं तथापि भवत्समाधेरेतदेव फलं नान्यदस्तीति किमत्राह—अथापीति । मायाघटमानघटकशक्तिलक्षणां लोकोपकारकयथार्थज्ञानजनकत्वेनेन्द्रजाललक्षणा नेति भावेनाह, ययेति सतः परब्रह्मणः सर्वस्मात् भिदां वैलक्षण्यं वेद तादृशीं द्रष्टुमिच्छामि नेन्द्रजाललक्षणामित्यर्थः ॥ ६ ॥ सस्मयं सस्मितं तथा द्रक्ष्यसीत्युक्त्वा ॥ ७ ॥ आत्मनि स्वस्मिन् ॥ ८ ॥ किम्बहुना सर्वत्र च व्याप्तं भावद्रव्यैः मनःकल्प्यपुष्पादिद्रव्यैः अहिंसाद्यैरित्यर्थः । क्वचित्कदाचित् विस्मरणे कारणं भक्तिप्रसरसंप्लुत इति ॥ ९ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

॥ १ ॥ तपस्स्वाध्यायसंयमैर्यैः आत्मसमाधिश्चित्तैकाग्र्यं तेन या अनपायिनी भक्तिः तया सिद्धोऽसीत्यन्वयः ॥ २–३ ॥ एतावता वरेणैवालं पर्य्याप्तिर्जाता किं तत् यद्भवानिति ॥ ४ ॥ यतो गृहीत्वेति । अजाद्योपि कृतार्था भवन्तीति शेषः ॥ ५ ॥ अथापि प्रारब्धमयकौतुकवशतयेति भावः । ननु जगत्पश्यन् मम मायां पश्यन्नेवासि, तत्राह ययेति । अन्तः सतो बहिर्भिदां विदारणं प्रलयं यया मद्भिदितया सत्या मद्द्वारा अन्योपि सपालो लोको वेद जानीयात् ॥ ६–७ ॥ तमेव श्रीहरिमेव अर्थं परमार्थरूपं चिन्तयन् नतु मायादर्शनमित्यर्थः । स्वकर्मफलनिर्दिष्टमिति न्यायेन ॥ ८–१८ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मायादर्शनजं दुःखं नवमे तु मुनेः शिशौ । प्रवेशो निष्क्रमः पातो लयाब्धौ वर्ण्यते मुहुः ॥

॥१–२॥ वयमिति बहुवचनमग्रे प्रस्तोष्यमाणशिवोमाद्यभिप्रायेण ॥३॥ जितन्ते तव सर्वोत्कर्षोऽस्त्येव ॥४॥ गृहीत्वा कृतार्थी भवन्तीति शेषः ॥ ५ ॥ द्रक्ष्ये दिदृक्षे सतः कारणस्य भिदां कार्य्याकारेण नानाभेदं यद्वा सतो द्वैतप्रपञ्चस्य भिदां प्रलये सति विदारणम् ॥ ६ ॥ स्मयन्निति । मायादर्शनं दुःखानुभवहेतुरेव केवलं स एव वरो व्रियते चेद्दत्त एव वरस्यावश्यदेयत्वात् किन्तु मायादर्शनकौतुकं मायानास्वादितमित्यन्यथास्य तदनुबुभूषा नैव निवर्त्तिष्यते तस्माद्दुःखमनुभूयैव ततो निवर्त्ततां यथा स्वदुःखहेतावपि कर्मणि क्वचित्प्रवर्त्तमाने हठिनि स्वसुते निवर्त्तयितुमसमर्थस्य पितुरप्यनुज्ञाप्रदानमेवेति किन्तु भक्तस्यास्य निवृत्यर्थं शिशुरूपेण तन्मध्येपि स्वदर्शनानन्दो दास्यत एवेत्यभिप्रायव्यञ्जकं स्मितम् ॥७॥ तमेवार्थं मायादर्शनरूपम् ॥८॥ भावद्रव्यैर्मनोमयैः ॥९॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं संस्तुताद्भगवतः सकाशात् मायादर्शनविषयकं वरं लब्ध्वा मुनिना यदनुभूतं तन्नवमे वर्ण्यते—संस्तुत इति । भृगूद्वहं मार्कण्डेयम् ॥ १ ॥ आत्मसमाधिनाऽऽत्मविषयकसमाधिना ॥ २ ॥ प्रतीच्छ गृहाण ॥ ३ ॥ ते तव जितमुत्कर्षो वर्त्तते ॥ ४ ॥ यस्य तव श्रीमत्पादाब्जदर्शनं मनसापि गृहीत्वा अजाद्यो भवन्ति चतुर्मुखत्वादिभावं प्राप्नुवन्ति यद्वा, अजादयः कृतार्था भवन्तीत्यध्याहारः स भवान् मे अक्षगोचरः प्रत्यक्षो जातः किमतः परं वरेणेत्यर्थः ॥ ५ ॥ यद्यपि भवदीयं दर्शनमेव वरः अथापि तव मायामाश्चर्यरूपां शक्तिं द्रक्ष्ये द्रष्टुमिच्छामि यया स पालो लोकपालैर्ब्रह्मादिभिः सहितो लोको जनः सद्भिदां सतः कारणस्य नानावस्थारूपं भेदं वेद तां तव मायावैभवदर्शनेन त्वच्छरणो भविष्यामीति भावः—"स एवमनुभूयेदं नारायणविनिर्मितम् । वैभवं योगमायायाः तमेव शरणं ययुः" । इतिवक्ष्यमाणात् ॥६॥ स भगवान् स्मयन् मन्दहासं कुर्वन् तथेतिस्वीकृत्य प्रागात् ॥७–८॥ भावद्रव्यैर्मनोमयद्रव्यैः ॥९–१०॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

नवमे भगवन्मायादर्शनं वाञ्छतो मुनेः । दर्शिता प्रलयाब्धौ सा हरिणेति निरूप्यते ॥ १ ॥

एवं तपआदिभिः सन्तुष्टो भगवांस्तस्मै वरं प्रायच्छदित्याह—संस्तुत इत्यादिना ॥ १ ॥ भो भो ब्रह्मर्षिवर्य आत्मसमाधिना चित्तैकाग्र्येण भक्त्यादिभिश्च त्वं सिद्धः कृतार्थोऽसीत्यन्वयः ॥ २ ॥ वयं ते परितुष्टाः स्मेति बहुवचनं सर्वदेवाभिप्रायेण । वरदेशादित्येकवचनं तु द्वयोरैक्याभिप्रायेण प्रतीच्छ गृहाण ॥ ३ ॥ देवदेवो ब्रह्मा तस्यापीश प्रपन्नानां शरणमागतानामार्तिक्लेशं हरतीति तथाभूत आश्रिता न च्यवन्ति यस्य सः हे अच्युत वरेण च्छन्दयता त्वया जितमुत्कर्षो दर्शितः । वरस्तु मम नाकाङ्क्षित इत्याह—यद्भवान्नोऽस्मभ्यं सम्यगदृश्यत एतावतैव वरेणालम् ॥ ४ ॥ तत्र हेतुतया तद्दर्शनस्य दुर्लभतामाह—गृहीत्वेति । यस्य तव श्रीमत्पादाब्जदर्शनं योगशुद्धेन मनसा गृहीत्वा प्राप्याप्यजादयः कृतार्था भवन्ति स भवान्मेऽक्षगोचरो जातोऽस्ति, किमतः परं वरेणेत्यर्थः ॥ ५ ॥ यद्यपि त्वद्दर्शनादेव कृतार्थोऽहं तथापि हे अम्बुजपत्राक्षेत्यनेन तव कृपादृष्ट्यैव मोहनिवृत्त्या संसारतापनिवृत्तिर्नान्यथेति सा न त्याज्येति सूचयति अतएव तव सुयशःप्रसार इत्याशयेन पुनः सम्बोधयति—पुण्यश्लोकशिखामण इति । यया मायया लोकपालैर्ब्रह्मादिभिः सहितो लोकः सर्वोऽपि जनः सद्भिदां सच्छब्दवाच्ये त्वयि भिदा देवतिर्यङ्मनुष्यादिभेदं वेद पश्यति तां तव मायां द्रक्ष्ये द्रष्टुमिच्छामीत्यन्वयः ॥ ६ ॥ इत्येवमीडितः स्तुतो भगवान् हे मुने तथेति । द्रक्ष्यसीत्युक्तो स्मयन् मंदहासं कुर्वन् बदर्याश्रमं प्रति प्रागात् ॥ ७ ॥ तमेव मायादर्शनरूपं कदा द्रक्ष्यामीति चिन्तयन् अग्न्यादिषु सर्वत्र च हरिं ध्यायन् भावद्रव्यैः मनोमयैर्गन्धपुष्पनैवेद्यादिभिः पूजासाधनैरपूजयदिति द्वयोरन्वयः । क्वचित् कदाचित्तु प्रेमप्रसरेण प्रेमप्रवाहाधिक्येन सम्प्लुतो व्याप्तः संस्तां पूजामपि विसस्मार विस्मृतवान् ॥ ८–९ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

दिदृक्षोर्भगवन्मायां लयाब्धौ दर्शनं मुहुः । मायाशिशोस्तु नवमे निर्वेशनिर्गमैर्मुनेः ॥ १ ॥

नरनारायणयोः परितोषपूर्वकं तदपेक्षितवरप्रदानं कथयितुं प्राह संस्तुत इत्यादिना । संस्तुत इति । इत्थं धीमता मार्कण्डेयेन संस्तुतः भगवान्, नरसखः नारायणः प्रीतः सन्, भृगूद्वहं मार्कण्डेयं आह । शौनकसंबोधनं, मार्कण्डेयमित्यस्याध्याहारः ॥ १ ॥ भो भो ब्रह्मर्षिवर्य, त्वं आत्मसमाधिना चित्तैकाग्र्येण, तपःस्वाध्यायसंयमैः अनपायिन्या मयि भक्त्या च, सिद्धः, कृतार्थः असि ॥ वयमिति । वयं ते तुभ्यं, तद्बृहद्व्रतचर्यया नैष्ठिकब्रह्मचर्येण परितुष्टाः स्म । बहुवचनं सर्वदेवाभिप्रायेण । ते भद्रं अस्तु । वरदेशात् वरदानामीशान्मत्तः, अभीप्सितं वरं प्रतीच्छ गृहाण । एकवचनं द्वयोः सर्वेषां वा स्वेनैक्यतोक्त्यभिप्रायेण ॥ ३ ॥ एवं वराय प्रणोदितः प्राह । जितमिति । देवानां देवो ब्रह्मा तस्यापीशस्तत्संबोधनं, प्रपन्नानामार्त्तिं क्लेशं हरतीति तत्संबोधनं, न च्यावयत्याश्रितान्न पातयतीत्यच्युतस्तत्संबोधनं, ते त्वया जितं सर्वोत्कर्षो दर्शितः । मम तु वराकाङ्क्षा नास्तीत्याह । नोऽस्मभ्यं, भवान् समदृश्यत सम्यग्दृग्विषयतां प्राप्तः यत्, एतावता वरेण एव अलम् ॥ ४ ॥ तत्र हेतुतया तद्दर्शनस्य दुर्लभतामाह । वाञ्छन्तीति । अजादयो ब्रह्मादयः, योगपक्वेन योगविशुद्धेन मनसा यस्य श्रीमत्पादाब्ज दर्शनं वाञ्छन्ति केवलमिति शेषः । न तु पश्यन्ति । सः भवान् मम अक्षिगोचरः नेत्रविषयः जातः अस्ति ॥ ५ ॥ अथापीति । हे अम्बुजपत्राक्ष कमलदलनयन, हे पुण्यश्लोक शिखामणे, अथापि यद्यपि त्वद्दर्शनमेव वरस्तथापीत्यर्थः । तव मायां मायाश्रयां शक्तिं, द्रक्ष्ये द्रष्टुमिच्छामि । तां विशिनष्टि । यया मायया सपालः ब्रह्मादिलोकपालसहितः लोको जनः, सद्भिदां सति सच्छब्दवाच्ये त्वयि भिदादेवतिर्यङ्मनुष्यस्थावरभेदस्तां वेद यया कृतं भेदं वेद तां मायाम् ॥ ६ ॥ इतीति । इतीत्थं ईडित उक्तः, कामं यथेष्टं अर्चितः पूजितः ईश्वरः भगवान् स नरनारायणः, हे मुने स्मयन् तथेति द्रक्ष्यसीत्यनुगृह्येत्यर्थः । बदर्याश्रमं प्रागात् । पाठान्तरे क्रियाया विशेषणम् ॥ ७ ॥ तमेवेति । ध्यायन्निति । तं एव अर्थं मायादर्शनरूपमेवार्थमित्यर्थः । चिन्तयन् कदा द्रक्ष्यामीति विचिन्तयन्नित्यर्थः । स्वाश्रमे एव वसन् सः ऋषिः अग्निश्च अर्कश्च सोमश्च अम्बु जलं च भूः पृथिवी च वायुश्च वियदाकाशं च आत्मा हृदयं च तेषु, सर्वत्र गोविप्रादिषु च हरिं ध्यायन्, भावद्रव्यैर्मनोमयैरुपचारैः अपूजयत् । क्वचित् कदाचित् भक्तिप्रसरसंप्लुतः प्रीत्यात्मकभक्तिप्रवाहेण व्याप्तः सन्, पूजामुक्तप्रकारां पूजामपि विसस्मार । इति द्वयोरेकान्वयः ॥ ८–९ ॥

### हिन्दी अनुवाद

## मार्कण्डेयजीका माया-दर्शन

श्रीसूतजी कहते हैं—जब ज्ञानसम्पन्न मार्कण्डेय मुनि ने इस प्रकार स्तुति की, तब भगवान् नर-नारायण ने प्रसन्न होकर मार्कण्डेयजी से कहा ॥ १ ॥ भगवान् नारायण ने कहा—सम्मान्य ब्रह्मर्षिशिरोमणि ! तुम चित्त की एकाग्रता, तपस्या, स्वाध्याय,

संयम और मेरी अनन्य भक्ति से सिद्ध हो गये हो ॥ २ ॥ तुम्हारे इस आजीवन ब्रह्मचर्यव्रत की निष्ठा देखकर हम तुम पर बहुत ही प्रसन्न हुए हैं। तुम्हारा कल्याण हो! मैं समस्त वर देनेवालों का स्वामी हूँ। इसलिये तुम अपना अभीष्ट वर मुझसे माँग लो ॥ ३ ॥ मार्कण्डेय मुनिने कहा—देवदेवेश! शरणागत भयहारी अच्युत! आप की जय हो! जय हो! हमारे लिये बस इतना ही वर पर्याप्त है कि आपने कृपा करके अपने मनोहर स्वरूप का दर्शन कराया ॥ ४ ॥ ब्रह्माशङ्कर आदि देवगण योग साधना के द्वारा एकाग्र हुए मन से ही आप के परम सुन्दर श्रीचरणकमलों का दर्शन प्राप्त करके कृतार्थ हो गये हैं। आज उन्हीं आपने मेरे नेत्रों के सामने प्रकट होकर मुझे धन्य बनाया है ॥ ५ ॥ पवित्रकीर्ति महानुभावों के शिरोमणि कमलनयन! फिर भी आप की आज्ञा के अनुसार मैं आप से वर माँगता हूँ। मैं आप की वह माया देखना चाहता हूँ, जिससे मोहित होकर सभी लोक और लोकपाल अद्वितीय वस्तु ब्रह्म में अनेकों प्रकार के भेद-विभेद देखने लगते हैं ॥ ६ ॥ सूतजी कहते हैं—शौनकजी! जब इस प्रकार मार्कण्डेय मुनि ने भगवान् नर-नारायण की इच्छानुसार स्तुति-पूजा कर ली एवं वरदान माँग लिया, तब उन्होंने मुसकराते हुए कहा—'ठीक है, ऐसा ही होगा।' इसके बाद वे अपने आश्रम बदरीवन को चले गये ॥ ७ ॥ मार्कण्डेय मुनि अपने आश्रमपर ही रहकर निरन्तर इस बात का चिन्तन करते रहते कि मुझे माया के दर्शन कब होंगे। वे अग्नि, सूर्य, चन्द्रमा, जल, पृथ्वी, वायु, आकाश एवं अन्तःकरण में ॥ ८ ॥ और तो क्या, सर्वत्र भगवान् का ही दर्शन करते हुए मानसिक वस्तुओं से उनका पूजन करते रहते। कभी-कभी तो उनके हृदय में प्रेम की ऐसी बाढ़ आ जाती कि वे उसके प्रवाह में डूबने उतराने लगते, उन्हें इस बात की भी याद न रहती कि कब कहाँ किस प्रकार भगवान् की पूजा करनी चाहिये ॥ ९ ॥

तस्यैकदा भृगुश्रेष्ठ पुष्पभद्रातटे मुनेः। उपासीनस्य सन्ध्यायां ब्रह्मन् वायुरभून्महान् ॥ १० ॥

तं चण्डशब्दं समुदीरयन्तं बलाहका अन्वभवन् करालाः।
अक्षस्थविष्ठा मुमुचुस्तडिद्भिः स्वनन्त उच्चैरभिवर्षधाराः ॥ ११ ॥

ततो व्यदृश्यन्त चतुःसमुद्राः समन्ततः क्ष्मातलमाग्रसन्तः।
समीरवेगोर्मिभिरुग्रनक्रमहाभयावर्तगभीरघोषाः ॥ १२ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—भृगुश्रेष्ठ मुने एकदा पुष्पभद्रातटे उपासीनस्य तस्य सन्ध्यायां ब्रह्मन् महान् वायुः अभूत् ॥ १० ॥ चण्डशब्दं समुदीरयन्तं तं अनु करालाः बलाहकाः अभवन् ( ते ) तडिद्भिः उच्चैः स्वनन्तः अक्षस्थविष्ठाः वर्षधाराः अभि मुमुचुः ॥११॥ ततः चतुः समुद्राः समन्ततः समीरवेगोर्मिभिः क्ष्मातलम् आग्रसन्तः उग्रनक्रमहाभयावर्तगभीरघोषाः ( ते ) व्यदृश्यन्त ॥ १२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

मायादर्शनमाह तस्येत्यादिना ॥ १० ॥ तं वायुमनु बलाहका मेघा अभवन्नाविर्बभूवुः। ते च तडिद्भिः सहिताउच्चैः स्वनंतो गर्जंतः। अक्षो रथांगं तद्वत्स्थविष्ठा अभितो वर्षधारा मुमुचुः ॥ ११ ॥ चतुर्दिक्षु वर्तमानाः समुद्राः समीरवेगेनोर्मयस्तैर्भूतलं ग्रसंतः। उग्रा नक्रा येषु महाभया आवर्ता येषु गभीरो घोषो येषु ते च ते च ते च ॥ १२ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अक्षः रथांगं चक्रम्। स्थविष्ठाः स्थूलाः ॥ ११ ॥ ततो महावृष्ट्यनंतरम् ॥ १२ ॥

### अन्वितार्थप्रकाशिका

मायादर्शनमारभते—तस्येति। स्फुटम् ॥ १० ॥ तमिति। चण्डशब्दं समुदीरयन्तं कुर्वन्तं तं वायुमनु कराला भयङ्करा बलाहका मेघा अभवन् आविर्बभूवुः। ते च तडिद्भिः सहिता उच्चैः स्वनन्तो गर्जन्तोऽक्षः रथाक्षस्तद्वत्स्थविष्ठाः अतिस्थूला वर्षधारा अभितो मुमुचुः ॥ ११ ॥ तत इति। चतसृषु दिक्षु वर्तमानाः समुद्राः परितः क्ष्मातलं भूमण्डलं समीरवेगोत्थितैरूर्मिभिरासमन्तात् ग्रसन्तः। शता आर्षः। उग्रा नक्रा येषु तैः महाभयाः भयानका आवर्त्ता येषु गभीरो घोषो येषु ते च ते व्यदृश्यन्त ॥ १२ ॥

१. मुनि०। २. रविद्यु०।

### श्रीमद्वीरराघवव्याख्या

मायादर्शनमुपवर्णयति—तस्येत्यादादिना यावदध्यायसमाप्ति। हे भृगुश्रेष्ठ! तस्य मुनेः मार्कण्डेयस्य उपासीनस्य सतः हे ब्रह्मन्! महान् वायुरभूत्॥ १०॥ तमिति। तं वायुमनु बलाहका मेघाः करालाः भयङ्कराः अभवन्नाविर्बभूवुः ते च तडिद्भिः सहिता उच्चैर्ध्वनन्तो गजन्तः अक्षः शकटाक्षः तद्वत्स्थविष्ठाः अतिस्थूला अभितो वर्षधारा मुमुचुः॥ ११॥ तत इति। चतुर्दिक्षु वर्तमानाः समुद्राः परितः क्ष्मातलं भूमण्डलम् उग्रा नक्रा येषु तैः समीरवेगोत्थितैरूर्मिभिः ग्रसन्तः भयानका आवर्त्ता येषु गभीरो घोषो येषु ते च व्यदृश्यन्त॥ १२॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

वरदानफलं वक्तुमुपक्रमते—तस्येति। तस्याश्रमे महान् वायुरभूत्॥ १०॥ तं वायुमन्वनन्तरं ते बलाहकाः अभ्यभितः अक्षस्थविष्ठाः अक्षो रथाङ्गनीपो दण्डस्तद्वत्स्थूलतमा वर्षधारा मुमुचुः तडिद्भिः सह॥ ११॥ समीरवेगेनोन्नतोर्मिभिः सह उग्र-नक्रैर्भयानकस्य भयङ्करस्यावर्त्तस्य गभीरा गम्भीरा घोषा येषां ते तथा॥ १२॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मायादर्शनमाह—तस्येत्यादिना॥ १०॥ अक्षो रथाङ्गे तद्वदतिस्थूलाः॥ ११-१२॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तं वायुमनु बलाहकाः मेघा अभवन् ते च तडिद्भिः सहोच्चैर्गर्जन्तः अक्षवद्रथाङ्गवत् स्थविष्ठाः वर्षधाराः मुमुचुः॥ ११॥ उग्रनक्राश्च महाभयावर्ताश्च गभीरघोषाश्च ते तथा चतुर्दिक्षु वर्तमानाः समुद्राः समीरवेगोर्मिभिः समन्ततः क्ष्मातलमाग्रसन्तो व्यदृश्यन्त॥ १२॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

मायादर्शनमाह—तस्येत्यादिना॥ १०॥ चण्डशब्दं समुदीरयन्तं कुर्वन्तं तं वायुमनु कराला भयङ्करा बलाहका मेघा अभवन् आविर्बभूवुः ते च तडिद्भिः सहिता उच्चैः स्वनन्तो गर्जन्तोऽक्षः—स्थाक्षस्तद्वत्स्थविष्ठाः अतिस्थूला वर्षधारा अभितो मुमुचुः॥ ११॥ चतुर्दिक्षु वर्त्तमानाः समुद्राः परितः क्ष्मातलं भूमण्डलम् उग्रा नक्रा येषु तैः समीरवेगोत्थितैरूर्मिभिर्ग्रसन्तः भयानका आवर्त्ता येषु गभीरो घोषो येषु ते च ते व्यदृश्यन्त॥ १२॥

### [भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

मायादर्शनमुपवर्णयति तस्येत्यादिना यावदध्यायसमाप्ति। तस्यैकदेति। हे भृगुश्रेष्ठ हे ब्रह्मन्, पुष्पभद्रातटे उपासीनस्य तस्य मुनेः, एकदा कदाचित् संध्यायां महान् वायुः अभूत्॥ १०॥ तमिति। चण्डशब्दं समुदीरयन्तं तं वायुं अनु पश्चात्, कराला भयंकराः बलाहका मेघाः अभवन्। सहसाऽऽविर्बभूवुः। ते च तडिद्भिः सहिताः उच्चैः स्वनन्तो गर्जन्तः अक्षः शकटाक्षस्तद्वत् स्थविष्ठाः स्थूलाः, वर्षधाराः अभ्यभितः मुमुचुः॥ ११॥ तत इति। ततः चतुःसमुद्राः चतुर्दिक्षु वर्त्तमाना अम्बुधयः, समन्ततः परितः क्ष्मातलं, भूमण्डलं उग्रा नक्रा येषु तैः समीरवेगोर्मिभिः वायुवेगोत्थितमहाकल्लोलैः आग्रसन्तः महाभया अतिभयानकाः आवर्त्ता अम्भोभ्रमा येषु गभीरो घोषो येषु ते च ते च, व्यदृश्यन्त॥ १२॥

### हिन्दी अनुवाद

शौनकजी! एक दिन की बात है, सन्ध्या के समय पुष्पभद्रा नदी के तट पर मार्कण्डेय मुनि भगवान् की उपासना में तन्मय हो रहे थे। ब्रह्मन्! उसी समय एकाएक बड़े जोर की आँधी चलने लगी॥ १०॥ उस समय आँधी के कारण बड़ी भयंकर आवाज होने लगी और बड़े विकराल बादल आकाश में मँडराने लगे। बिजली चमक-चमक कर कड़कने लगी और रथ के धुरे के समान जल की मोटी-मोटी धाराएँ पृथ्वी पर गिरने लगीं॥ ११॥ यही नहीं, मार्कण्डेय मुनि को ऐसा दिखायी पड़ा कि चारों ओर से चारों समुद्र समूची पृथ्वी को निगलते हुए उमड़े आ रहे हैं। आँधी के वेग से समुद्र में बड़ी-बड़ी लहरें उठ रही हैं। बड़े भयङ्कर भँवर पड़ रहे हैं और भयङ्कर ध्वनि कान फाड़े डालती है। स्थान-स्थान पर बड़े-बड़े मगर उछल रहे हैं॥ १२॥

अन्तर्बहिश्चाद्भिर[1]तिद्युभिः खरैः शतह्रदाभीरुपतापितं जगत् ।
चतुर्विधं वीक्ष्य सहात्मना मुनिर्ज[2]लाप्लुतां क्ष्मां विमनाः समत्रसत् ॥ १३ ॥
तस्यैवमुद्वीक्षत ऊर्मिभीषणः प्रभञ्जनाघूर्णितवार्महार्णवः ।
आपूर्यमाणो व[3]रषद्भिरम्बुदैः क्ष्मामप्यधाद् द्वीपवर्षाद्रिभिः समम् ॥ १४ ॥
सक्ष्मान्तरिक्षं सदिवं सभागणं त्रैलोक्यमासीत् सह दिग्भिराप्लुतम् ।
स एक एवो[4]र्वरितो महामुनिर्बभ्राम विक्षिप्य जटा जडान्धवत् ॥ १५ ॥
क्षुत्तृट्परीतो मकरैस्तिमिङ्गिलैरुपद्रुतो वीचिनभस्वता हतः ।
तमस्यपारे प[5]तितो भ्रमन् दिशो न वेद खं गां च परिश्रमेषितः ॥ १६ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—अन्तर्बहिः अद्भिः अतिद्युभिः खरैः शतह्रदाभिः महात्मना उपतापितं चतुर्विधं जगत् वीक्ष्य जलाप्लुतां क्ष्मां (च वीक्ष्य) विमनाः मुनिः समत्रसत् ॥ १३ ॥ तस्य एवम् उद्वीक्षतः वर्षद्भिः अम्बुदैः आपूर्यमाणः प्रभञ्जनाघूर्णितवाः ऊर्मिभीषणः अर्णवः द्वीपवर्षाद्रिभिः समं क्ष्माम् अप्यधात् ॥ १४ ॥ सक्ष्मान्तरिक्षं सदिवं सभागणं दिग्भिः सह त्रैलोक्यम् आप्लुतम् आसीत् एकः एव उर्वरितः सः महामुनिः जटाः विक्षिप्य जडान्धवत् बभ्राम ॥ १५ ॥ क्षुत्तृट्परितः मकरैः तिमिङ्गिलैः उपद्रुतः वीचिनभस्वता हतः अपारे तमसि पतितः भ्रमन् परिश्रमेषितः दिशः खं गां च न वेद ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

आत्मना सह जरायुजादिचतुर्विधं जगदंतर्बहिश्चोपतापितं वीक्ष्य क्ष्मां जलाप्लुतां वीक्ष्य मुनिः समत्रसद्भयं प्राप । केनोपतापितम् । अद्भिः । कथंभूताभिः । अतिद्युभिरतिक्रांता द्यौर्याभिः खरैश्च सूर्यरश्मिभिर्वायुभिर्वेति शेषः । शतह्रदाभिश्च विद्युद्भिः । दीर्घत्वमार्षं छंदोऽनुसारेण ॥ १३ ॥ प्रभंजनेनाघूर्णितं प्रकंपितं वाः उदकं यस्मिन् सः । अप्यधाच्छादयामास । समं सह ॥ १४ ॥ सक्ष्मांतरिक्षं भूम्यंतरिक्षस्थप्राणिसहितम् । सदिवं स्वर्गस्थदेवसहितम् । भागणा ज्योतिर्गणास्तैः सहितम् । जटां विक्षिप्य विकीर्य ॥ १५ ॥ परिश्रमेण इषितो गतः प्राप्त इत्यर्थः । 'इषु-सर्पणे' इत्यणात् ॥ १६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'शंपाशतह्रदाह्रादिन्यैरावत्यः क्षणप्रभा । तडित्सौदामनी विद्युत्' इत्यमरः ॥ १३ ॥ प्रभंजनो वायुः । वरषद्भिरिति वर्णविभागश्छांदसः ॥ १४ ॥ उर्वरितः अवशिष्टः ॥१५॥ क्षुत्तृड्भ्यां परीतो व्याप्तः । मकरतिमिंगिलौ पादो भेदौ 'तिमिश्शतयोजनो मत्स्यः' इति कोशात् । इत्यर्थं इति-धातोः सर्पणार्थत्वात्सर्पणं प्रसरणमिति व्याख्येयम् ॥ १६ ॥

### अन्वितार्थप्रकाशिका

अन्तरिति । अन्तर्बहिश्चातिक्रान्ता द्यौर्याभिस्ताभिरद्भिः जलैः खरैः दुःसहैः सूर्यरश्मिभिः वायुभिर्वेति शेषः । शतह्रदाभिः विद्युद्भिश्च । दीर्घत्वमार्षं छन्दोऽनुसारेण । एवमात्मना सह जरायुजादिचतुर्विधं जगदन्तर्बहिश्चोपतापितं वीक्ष्य तथाक्ष्मां च जलाप्लुतां वीक्ष्य मुनिर्विमनाः सन् समत्रसत् भयं प्राप ॥ १३ ॥ तस्येति । तस्य मुनेरेवमुद्वीक्षतः सतः । शता आर्षः । वर्षद्भिरम्बुभिरापूर्यमाणः प्रभञ्जनेन वायुना घूर्णितं भ्रमितं वार्जलं यस्मिन् सः अत ऊर्मिभिर्भीषणश्चार्णवः द्वीपवर्षादिभिः समं सह क्ष्मां भूमिमप्यधात् छादयामास ॥ १४ ॥ सेति । सक्ष्मान्तरिक्षं भूम्यन्तरिक्षस्थप्राणिसहितं सदिवं स्वर्गस्थदेवसहितम् । अदन्तदिवशब्देन विग्रहः । भागणाः ज्योतिर्गणास्तैश्च सहितं दिग्भिश्च सहितं त्रैलोक्यमद्भिराप्लुतमासीत् । एक एवोर्वरितः स महामुनिर्जटा विक्षिप्य विकीर्य जडान्धवत् बभ्राम ॥ १५ ॥ क्षुदिति । क्षुत्तृड्भ्यां परीतो मकरैस्तिमिङ्गिलैर्महामत्स्यैरुपद्रुतः क्लेशितः वीचिभिस्तरङ्गैर्नभस्वता वायुना च हतः ताडितः अपारे तमसि पतितो भ्रमन् सन् अत एव परिश्रमेणेषितो व्याप्तः । "ईष गत्यादौ" दिशः खमाकाशं गां भूमिं च न वेद ॥ १६ ॥

---

१. रविद्यु० । २. जलप्लु० । ३. वर्षद्भि० । ४. वोद्वरि० । ५. परितो ।

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

चतुर्विधं देवतिर्यङ्मनुष्यस्थावरात्मकं मनाक् ईषत् ॥ १३ ॥ वाताघूर्णितजलमध्ये तिरश्चकार ॥ १४ ॥ सभागणं ज्योतिर्गणसहितम् उर्वरितः अवशिष्टः ॥ १५–१७ ॥

### श्रीमद्वीरराघवव्याख्या

अन्तर्बहिरिति। खरैरित्यस्य सूर्यरश्मिभिरिति शेषः। शतह्रदादिभिर्विद्युद्भिश्छन्दोनुसारेण दीर्घत्वमार्षम् अतित्युभिरतिक्रान्ता द्यौर्याभिस्ताभिरद्भिर्जलैश्चान्तर्बहिरुपितापितं चतुर्विधं देवतिर्यङ्मनुष्यस्थावरात्मकं जगज्जलाप्लुतां क्ष्मां भूमिं च वीक्ष्य मुनिर्विमनाः समत्रसदभैषीत् ॥ १३ ॥ तस्येति। तस्य मुनेरित्थमुद्वीक्षतस्सतः वर्षद्भिरम्बुदैरापूर्यमाणः प्रभञ्जनेन वायुना आघूर्णितं भ्रामितं वाः उदकं यस्मिन् ऊर्मिभिर्भीषणश्चार्णवः द्वीपवर्षादिभिस्समं सह सहितामित्यर्थः क्ष्मामप्यधात् छादयामास ॥१४॥ सक्ष्मान्तरिक्षमिति। भूम्यन्तरिक्षसहितं सदिवं सर्गसहितं सभागणं नक्षत्रगणसहितं त्रैलोक्यमद्भिः आप्लुतमासीत्तदा स मुनिरेक एव उर्वरितः अवशेषितः विक्षिप्ताः जटाः येन सः जडवदन्धवच्च विचचाल ॥ १५ ॥ किञ्च क्षुत्तड्भ्यां परितो व्याप्तः तृतीयान्तपाठे मकरादीनां विशेषणं वीचिभिस्तरङ्गैर्नभस्वता वायुना च हतः ताडितः अत एव परिश्रमेणोषितो व्याप्तः दिवमन्तरिक्षं खमाकाशं गां भूमिं च न वेद ॥१६॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

घनैर्मेघैरभिवृष्टाभिरद्भिरुपतापितमाप्लावितमभितो द्युतिमतीभिः शतह्रदाभिस्तडिद्भिश्चोपतापितं दग्धवत्कृतं क्ष्मामब्धिजलाप्लुतां वीक्ष्य ॥ १३ ॥ अप्यधात् छादितवांस्तस्य मुनेरुद्वीक्षतः ॥ १४ ॥ सदिवं स्वर्गेण सहितं सभागणं सनक्षत्रगणं जडवत् अन्धवत् ॥ १५ ॥ वीचिनभस्वता तरङ्गवायुना भ्रमन्त्या दिशो यस्य स तथा वृष्टिभागुरिरल्लोपमिति वचनात् टावन्तो दिशाशब्दः परिश्रमोषितः दुःखसमुद्रवासी ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अतिक्रान्ता द्यौर्याभिस्ताभिरद्भिः खरैः सूर्यरश्मिभिः शतह्रदाभिर्विद्युद्भिः दीर्घत्वमार्षम् ॥१३–१४॥ सभागणं ज्योतिर्गणसहितम् ॥ १५ ॥ वीचियुक्तेन नभस्वता आहतः प्राप्ताघातः परिश्रमेण ईषितः व्याप्तः "इष गतौ" इत्यस्मात् ॥ १६–१९ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अतिद्युभिः अतिक्रान्ता द्यौर्याभिस्ताभिरद्भिः खरैर्वायुभिरिति शेषः शतह्रदाभिर्विद्युद्भिः दीर्घत्वं छान्दसं सहात्मना जरायुजादिचतुर्भेदं जगदन्तर्बहिरुपतापितं जलाप्लुतां क्ष्मां च वीक्ष्य विमनाः सन् समत्रसत् ॥ १३ ॥ समं सह अप्यधात् आच्छादयामास ॥ १४ ॥ जटा विक्षिप्य विकीर्य ॥ १५ ॥ परिश्रमेण ईषितः व्याप्तः ॥ १६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अतिद्युभिः अतिक्रान्ता द्यौर्याभिस्ताभिरद्भिः जलैः खरैः दुःसहैः सूर्यरश्मिभिः वायुभिर्वेति शेषः। शतह्रदाभिः विद्युद्भिश्च दीर्घत्वमार्षं छन्दोनुसारेण। एवमात्मना सह जरायुजादिचतुर्विधं जगदन्तर्बहिश्चोपतापितं वीक्ष्य तथा क्ष्मां च जलाप्लुतां वीक्ष्य मुनिर्विमनाः सन् समत्रसत् भयं प्राप ॥ १३ ॥ तस्य मुनेरेवमुद्वीक्षतः सतः वर्षद्भिरम्बुदैरापूर्यमाणः प्रभञ्जनेन वायुना घूर्णितं भ्रामितं वार्जलं यस्मिन्सः अत ऊर्मिभीषणश्चार्णवः द्वीपवर्षादिभिः समं सह क्ष्मां भूमिमप्यधात् छादयामास ॥ १४ ॥ सक्ष्मान्तरिक्षं भूम्यन्तरिक्षस्य प्राणिसहितं सदिवं स्वर्गस्थदेवसहितं भागणाः ज्योतिर्गणास्तैश्च सहितं दिग्भिश्च सहितं त्रैलोक्यमद्भिराप्लुतमासीदित्यन्वयः। जटा विक्षिप्य विकीर्य जडान्धवत् बभ्राम ॥ १५ ॥ वीचिभिस्तरङ्गैर्नभस्वता वायुना च हतः ताडितः अत एव परिश्रमेणोषितो व्याप्तः दिशः खमाकाशं गां भूमिं च न वेद ॥ १६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अन्तरिति। ततः अत्यतिक्रान्ता द्यौर्याभिस्ताभिरतिद्युभिः, अद्भिः खरैरतितीक्ष्णैः सूर्यरश्मिभिः वायुभिर्वा, शतह्रदाभिः विद्युद्भिः अन्तः बहिश्च उपतापितं आत्मना सह चतुर्विधं जरायुजादिभेदेन चतुष्प्रकारं जगत्, जलाप्लुतां जलेनाप्लाविता क्ष्मां भूमिं च वीक्ष्य, मुनिः विमनाः सन् समत्रसत् भयं प्राप ॥ १३ ॥ तस्येति। तस्य मुनेः एवं उद्वीक्षतः सतः, वरषद्भिर्वर्षद्भिः। वरषद्भिरित्यार्षम् अम्बुदैर्मेघैः आपूर्यमाणः, प्रभञ्जनेन वायुना आघूर्णितं भ्रामितं वारुदकं यस्मिन्, ऊर्मिभीषणः महार्णवः द्वीपाश्च वर्षाणि

चाद्रयश्च तैः, समं सहितामित्यर्थः। क्ष्मां भूमिं अप्यधादाच्छादयामास ॥ १४ ॥ सक्ष्मान्तरिक्षमिति। सक्ष्मान्तरिक्षं भूम्यन्तरिक्षसहितं, सदिवं स्वर्गसहितं, सभागणं नक्षत्रसहितं त्रैलोक्यं, दिग्भिः सह अद्भिः आप्लुतं आसीत्। तदा सः महामुनिः एकः एव उर्वरितः अवशेषितः सन्, जटाः विक्षिप्य, जडान्धवत् जडवदन्धवच्चेत्यर्थः। बभ्राम ॥ १५ ॥ क्षुदिति। किं च क्षुच्च तृट् च ताभ्यां परीतो व्याप्तः, पाठान्तरे मकरादिनां विशेषणम् मकरैः, तिमिंगिलैः उपद्रुतः वीचिनभस्वता वीचिभिस्तरङ्गैः नभस्वता वायुना च आहतस्ताडितः, अत एव परिश्रमेण ईषिता व्याप्तः, अपारे तमसि पतितः भ्रमन् मुनिः, दिशः खमाकाशं गां भूमिं च न वेद ॥१६॥

## हिन्दी अनुवाद

उस समय बाहर-भीतर, चारों ओर जल-ही-जल दीखता था। ऐसा जान पड़ता था कि उस जलराशि में पृथ्वी ही नहीं, स्वर्ग भी डूबा जा रहा है, ऊपर से बड़े वेग से आँधी चल रही है और बिजली चमक रही है, जिससे सम्पूर्ण जगत् संतप्त हो रहा है। जब मार्कण्डेय मुनि ने देखा कि इस जल-प्रलय से सारी पृथ्वी डूब गयी है, उद्भिज्ज, स्वेदज, अण्डज और जरायुज—चारों प्रकार के प्राणी तथा स्वयं वे भी अत्यन्त व्याकुल हो रहे हैं, तब वे उदास हो गये और साथ ही अत्यन्त भयभीत भी ॥ १३ ॥ उनके सामने ही प्रलय समुद्र में भयङ्कर लहरें उठ रही थीं, आँधी के वेग से जलराशि उछल रही थी और प्रलयकालीन बादल बरस-बरस कर समुद्र को और भी भरते जा रहे थे। उन्होंने देखा कि समुद्र ने द्वीप, वर्ष और पर्वतों के साथ सारी पृथ्वी को डुबा दिया ॥ १४ ॥ पृथ्वी, अन्तरिक्ष, स्वर्ग, ज्योतिर्मण्डल ( ग्रह, नक्षत्र एवं तारों का समूह ) और दिशाओं के साथ तीनों लोक जल में डूब गये। बस, उस समय एकमात्र महामुनि मार्कण्डेय ही बच रहे थे। उस समय वे पागल और अंधे के समान जटा फैलाकर यहाँ से वहाँ और वहाँ से यहाँ भाग-भागकर अपने प्राण बचाने की चेष्टा कर रहे थे ॥ १५ ॥ वे भूख प्यास से व्याकुल हो रहे थे। किसी ओर बड़े-बड़े मगर तो किसी ओर बड़े-बड़े तिमिङ्गिल मच्छ उन पर टूट पड़ते। किसी ओर से हवा का झोंका आता तो किसी ओर से लहरों के थपेड़े उन्हें घायल कर देते। इस प्रकार इधर-उधर भटकते-भटकते वे अपार अज्ञानान्धकार में पड़ गये—बेहोश हो गये और इतने थक गये कि उन्हें पृथ्वी और आकाश का भी ज्ञान न रहा ॥ १६ ॥

[1]क्वचिद् गतो महावर्ते तरलैस्ताडितः क्वचित्। यादोभिर्भक्ष्यते क्वापि स्वयमन्योन्यघातिभिः ॥ १७ ॥
क्वचिच्छोकं क्वचिन्मोहं क्वचिद् दुःखं सुखं भयम्। क्वचिन्मृत्युमवाप्नोति व्याध्यादिभिरुतार्दितः ॥ १८ ॥
अयुतायुतवर्षाणां सहस्राणि शतानि च। [3]व्यतीयुर्भ्रमतस्तस्मिन् विष्णुमायावृतात्मनः ॥ १९ ॥
स कदाचिद् भ्रमंस्तस्मिन् पृथिव्याः ककुदि द्विजः। न्यग्रोधपोतं ददृशे फलपल्लवशोभितम् ॥ २० ॥
प्रागुत्तरस्यां शाखायां तस्यापि ददृशे शिशुम्। शयानं पर्णपुटके ग्रसन्तं प्रभया तमः ॥ २१ ॥
महामरकतश्यामं श्रीमद्वदनपङ्कजम्। कम्बुग्रीवं महोरस्कं सुनासं सुन्दरभ्रुवम् ॥ २२ ॥
श्वासैजदलकाभातं कम्बुश्रीकर्णदाडिमम्। विद्रुमाधरभासेषच्छोणायितसुधास्मितम् ॥ २३ ॥
पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनम्। [4]श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरम् ॥ २४ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—क्वचित् महावर्ते गतः क्वचित् तरलैः ताडितः क्व अपि अन्योन्यघातिभिः यादोभिः स्वयं भक्ष्यते ॥ १७ ॥ क्वचित् शोकं क्वचित् मोहं क्वचित् दुःखं सुखं भयं उत व्याध्यादिभिः अर्दितः क्वचित् मृत्युम् अवाप्नोति ॥ १८ ॥ विष्णुमायावृतात्मनः तस्मिन् भ्रमतः ( तस्य ) अयुतायुतवर्षाणां सहस्राणि शतानि च व्यतीयुः ॥ १९ ॥ भ्रमन् सः द्विजः तस्मिन् कदाचित् पृथिव्याः ककुदि फलपल्लवशोभितं न्यग्रोधपोतं ददृशे ॥ २० ॥ तस्य प्रागुत्तरस्यां शाखायां पर्णपुटके शयानं प्रभया तमः ग्रसन्तं शिशुम् अपि ददृशे ॥ २१ ॥ महामरकतश्यामं श्रीमद्वदनपङ्कजं कम्बुग्रीवं महोरस्कं सुनासं सुन्दरभ्रुवं श्वासैजदलकाभातं कम्बुश्रीकर्णदाडिमं विद्रुमाधरभासेषच्छोणायितसुधास्मितं पद्मगर्भारुणापाङ्गं हृद्यहासावलोकनं श्वासैजद्वलिसंविग्ननिम्ननाभिदलोदरं ( शिशुम् अपि ददृशे ) ॥ २२–२४ ॥

१. क्वचिन्मायामहावर्ते। २. रुपद्रुतः। ३. अतीयु०। ४. श्वासोज्जद्वलि०।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अन्योन्यघातिभिस्तद्भक्षणाय परस्परं युध्यद्भिः ॥ १७–१८ ॥ विष्णुमायावृतात्मन इति । स तथा दृष्टवानित्यर्थः ॥ १९ ॥ ककुद्युन्नतप्रदेशे न्यग्रोधपोतं कोमलवटम् ॥ २० ॥ तस्यैशानदिक्शाखायां शिशुमपि ॥ २१ ॥ श्रीमद्रम्यं वदनपंकजं यस्य तम् । कंबुर्वात्त्ररेखावृता ग्रीवा यस्य तम् । महोरस्कं विशालवक्षसम् । सुनासं शोभना नासा यस्य तम् । सुंदरे भ्रुवौ यस्य तम् ॥ २२ ॥ श्वासैरेजंतः कंपमाना अलकास्तैराभातं शोभितम् । कंबुवदंतर्वलयेन श्रीर्ययोस्तौ कंबुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य तम् । विद्रुमतुल्याधरभासा ईषच्छोणायितं सुधातुल्यं स्मितं यस्य तम् ॥ २३ ॥ पद्मगर्भवत् आ ईषदरुणावपांगौ नेत्रप्रान्तौ यस्य तम् । हृद्यो हासो यस्मिंस्तदवलोकनं यस्य तम् । श्वासैरजंत्यश्चलन्त्यो वलयस्तिर्यङ्निम्नरेखास्ताभिः संविग्ना चंचला निम्ना गंभीरा नाभिर्यस्मिंस्तद्दलवदश्वत्थपत्रसंकाशमुदरं यस्य तम् ॥ २४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'यादांसि जलजंतवः' इत्यमरः ॥ १७ ॥ आदिनाऽऽधिग्रहः । अर्दित उपद्रुतः ॥ १८ ॥ इत्यर्थ इति–क्षणिकेऽपि कालेऽघटनघटनापटीयस्या विष्णुमायया तस्यानंताब्दप्रतीतिरभूदिति भावः । एतच्च ज्योतिःशास्त्रे प्रतिदिनं चंद्रादिगतौ मेषादिलग्नभोगे चावगम्यते । तथाहि–'खखाभ्राष्टवेदा ४८००० भभोगेन भक्ताः' इहोक्तघट्यात्मिका षष्टिगुणिता २८८०००० चंद्रगतिर्हि प्रत्येकं विभिन्नभभोगभक्ता ७९६।३५ पञ्चत्रिंशत्पलाधिकषण्णवत्युत्तरसप्तशतघट्यात्मिकायाति । सा च षष्टिघट्यात्मकेऽहोरात्रे कथं मायां विना संगच्छेत । एवं प्रत्येकं मेषादिलग्नं किञ्चित्पलाधिकत्र्यादिघट्यात्मकं भवति तत्र प्रत्येकं षटिघट्यात्मकत्रिंशांशाः कथं संगच्छेरन्, त्रिंशांशानां ह्यष्टादशशत १८०० घट्यः संति विनाऽघटनघटनापटीयसीं मायामेतत्कदाचिदपि न संगतं स्यादित्यलमप्रकृतचिंतया ॥ १९ ॥ 'ककुदस्त्री ककुदोऽपि वृषांगे राजलक्ष्मणि । उच्चे वरे प्रधाने च' इति कोशात् । 'पोतः शिशौ वहित्रे च गृहे वाससि कोमले' इत्यभिधानात् ॥ २० ॥ प्रागुत्तरयोर्मध्ये या दिक् सा प्रागुत्तरा तस्याम् । तस्य न्यग्रोधपोतस्य । 'पुटः संपुटिते पत्रपात्रे चक्रनिर्मिते' इति निरुक्तिः ॥ २१ ॥ भ्रुवौ नेत्रोर्ध्वभागौ ॥ २२ ॥ कर्णयोर्दाडिमपुष्पे तदाकारे भूषणे इति व्याख्येयम्, अन्यथा कर्णे पुष्पं कटौ सूत्रं वेणीं शिरसि धारयन् । तावद्भवति चांडालो यावद्गंगां न मज्जति । इति स्मृतिविरोधः स्यात् ॥ २३–२४ ॥

## अन्वितार्थप्रकाशिका

क्वचिदिति । क्वचिन्महावर्त्ते गतः क्वचित् तरलैस्तरङ्गैस्ताडितः क्वचिच्च मुनिभक्षणार्थम् अन्योन्यघातिभिः परस्परं युध्यमानैर्यादोभिर्मत्स्यादिभिर्जलचरैः क्वापि स्वयं भक्ष्यते च ॥ १७ ॥ क्वचिदिति । स्फुटम् ॥ १८ ॥ अयुतेति । विष्णुमायाऽऽवृतात्मनः भ्रमतस्तस्य अयुतायुतवर्षाणां सहस्राणि शतानि च व्यतीयुः । स एतदमन्यत न तु तस्मिन् कालेऽन्ये इति ॥ १९ ॥ स इति । भ्रमन् स द्विजः तस्मिन् प्रलये कदाचित्काले पृथिव्याः ककुदि उन्नतप्रदेशे फलपल्लवशोभितं न्यग्रोधपोतं कोमलं वटं ददर्श । तच्चार्षः ॥२०॥ प्रागिति अर्द्धम् । तस्य वटस्य प्रागुत्तरमीशानदिक्छाखायां शिशुमपि ददर्श । तच्चार्षः ॥ २१ ॥ शयानमित्यादिस्तद्र्धचतुष्कम् । पर्णस्य पुटके शयानं प्रभया तमोऽन्धकारं ग्रसन्तं निराकुर्वन्त महामरकतमिव श्यामं श्रीमत् रम्यं वदनपङ्कजं यस्य तं कम्बुवत्त्रिरेखावृता ग्रीवा यस्य तं महोरस्कं विशालवक्षसं सुनासं शोभना नासा यस्य तं सुन्दरे भ्रुवौ यस्य तम् ॥ २२ ॥ श्वासैरेजन्तः कम्पमाना ये अलकास्तैराभातं शोभितं कम्बुवदन्तर्वलयेन श्रीर्ययोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमे दाडिमपुष्पे तत्सदृशे भूषणे वा यस्य तं विद्रुमतुल्याधरभासा ईषत् शोणायितं सुधातुल्यं स्मितं यस्य तम् ॥ २३ ॥ पद्मगर्भौ इव आ ईषत् अरुणावपाङ्गौ नेत्रान्तौ यस्य तं हृद्यो हासो यस्मिंस्तत् अवलोकनं यस्य तं श्वासैरेजन्त्यश्चलन्त्यो वलयस्तिर्यक् निम्नरेखास्ताभिः संविग्ना चञ्चलनिम्ना गम्भीरा नाभिर्यस्मिंस्तत् दलवदश्वत्थपत्रसंकाशमुदरं यस्य तम् ॥ २४ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम् ।

मृत्युमिव ॥ १८–१९ ॥ पृथिव्याः ककुदि उन्नतस्थले फलपुष्पाकरम् आभरणमासीनम् ॥ २० ॥ अन्तरिदं जगत् अल्पदेशे विपुलदेशान्तर्भावोऽल्पकाले बहुकालान्तर्भावः तदितरजनात् तद्व्यतिरिक्तमुक्ति पदार्थभेदतत्कालावसायि सलिलादिसृष्टिरीश्वरस्य सवशक्तित्वादुपपन्ना ॥ २१–२४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये नवमोऽध्यायः ॥ ९ ॥

## श्रीमद्वीरराघवव्याख्या

क्वचिदिति। तरलैस्तरङ्गैरन्योन्यघातिभिरन्योन्यं युद्ध्यमानैर्यादोभिः जलजन्तुभिः स्वयम् भक्षितश्च ॥ १७ ॥ क्वचिन् मोहमिति— मृत्युं मृत्युमिव ॥ १८ ॥ अयुतायुतवर्षाणामिति। विष्णोर्मायया हृतः आत्मा मनो यस्य तस्य मुनेः तस्मिन् जले भ्रमतः सतः महान् कालो व्यतीयायेत्यर्थः ॥ १९ ॥ स इति। पृथिव्याः ककुदि तद्वदुन्नतस्थले फलैः पल्लवैश्च शोभितं न्यग्रोधपोतं कोमलवटवृक्षं ददृशे पश्यति स्म ॥ २० ॥ प्रागिति। तस्य न्यग्रोधपोतस्य प्रागुत्तरस्यामीशान्यां दिशि या शाखा तस्यां शिशुमपि ददृशे, तं विशिनष्टि—शयानमित्यादिना। तमोऽन्धकारं ग्रसन्तं निराकुर्वन्तम् ॥ २१ ॥ इन्द्रनीलवच्छ्यामं श्रीमद्रम्यं वदनपङ्कजम् यस्य तं कम्बुवच्छङ्खवत्त्रिरेखावृता ग्रीवा यस्य तम् महोरस्कं विशालवक्षसम् शोभना नासा यस्य तम् सुन्दरे भ्रुवौ यस्य तम् ॥ २२ ॥ निःश्वासैरेजन्तः कम्पमानाः ये अलकास्तैरामातम् ( शोभमानम् ) शोभितं कम्बुवदन्तर्वलयेन श्रीर्ययोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पसदृशमाभरणं यस्य तम् विद्रुमवद्योधरस्तस्य भासा ईषच्छोणायितं शुचि शुभ्रं स्मितम् यस्य तम् ॥ २३ ॥ पद्मगर्भाविवारुणावपाङ्गौ नेत्रान्तौ यस्य तम् हृद्यम् हासयुक्तम् अवलोकनम् यस्य श्वासैरेजन्त्यश्चलन्त्यः वलयः तिर्यङ् निम्नरेखा यास्ताभिः सम्विग्ना चञ्चला निम्ना च नाभिर्यस्मिन् तदश्वत्थस्य पत्रसङ्काशाम् उदरम् यस्य तम् ॥ २४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तरलैस्तरङ्गैः ॥ १७–१९ ॥ ककुदि उन्नतस्थले ॥ २० ॥ तस्य वटस्य ॥ २१–२२ ॥ श्वासेन मुखवायुना एजतां कम्पमानानामलकानां व्रातेन मिश्रया श्रिया युक्तं कर्णदाडिमं कर्णाभरणं यस्य स तथा तम् ईषच्छोणाश्लिष्टा ॥ २३ ॥ पद्मगर्भवत् अरुणावपाङ्गौ नेत्रान्तौ यस्य तं श्वासैरेजन्त्यश्चलन्त्यो वलयस्तिर्यग्रेखास्ताभिः सम्विग्नगम्भीरा नाभिर्यस्य स तथा चलमुदरं यस्य स तथा श्वासैजद्वलिसम्विग्ननिम्ननाभिश्चलोदरश्च स तथा तं दलोदरमिति वा पाठः दलवदश्वत्थदलवत् पत्रवत् उदरं यस्येति ॥ २४ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

अयुतायुतवर्षाणामिति तस्य भानं जातमित्यर्थः ॥ १९–३१ ॥ सद्यस्तदन्तर्धाने दृष्टान्तः यथेहेति अनीश ईहायामसमर्थः तेन निर्मिता ईहा वाञ्छा यथा सद्योन्तर्धत्तेतथा तस्मादृषेस्तादृशवाञ्छाविषयोपि भगवानंस्तर्दध इत्यर्थः ॥ ३२–३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे नवमोऽध्यायः ॥ ९ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ककुदि उन्नतप्रदेशे ॥ २०–२२ ॥ श्वासैरेजन्तः कम्पमाना अलकास्तैराभातं कम्बुवदन्तर्वलयेन श्रीर्ययोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य तम् ॥ २३ ॥ श्वासैरेजन्त्यश्चलन्त्यो वलयस्तिर्यग्निम्नरेखास्ताभिः सह संविग्नं चञ्चलं निम्ननाभिगभीरनाभिदलोदरं दलमश्वत्थपत्रं तद्वदुदरं यस्य तम् ॥ २४ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अन्योन्यघातिभिस्तद्भक्षणार्थं परस्परं युध्यद्भिः ॥ १७ ॥ मृत्युं विस्मृतिम् ॥ १८ ॥ विष्णुमायया आवृतः आत्मा मनो यस्य ॥ १९ ॥ ककुदि उन्नतप्रदेशे न्यग्रोधपोतं कोमलं वटम् ॥ २० ॥ तस्य न्यग्रोधपोतस्य ॥ २१–२२ ॥ श्वासैरेजद्भिः कम्पमानैरलकैराभातम् शोभितम् कम्बुवत् श्रीर्ययोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य त विद्रुमवद्योऽधरस्तद्भासया शोणायितं सुधासदृशं स्मितं मन्दहसितम् यस्य तम ॥ २३ ॥ पद्मगर्भवत् किञ्चिदरुणौ अपाङ्गौ नयनप्रान्तौ यस्य तम् हृद्यं हृदयप्रिये हासावलोकने यस्य तम् श्वासैजद्वलिभिः प्राणसञ्चारेण कम्पमानाभिस्तिर्यग्रेखाभिः सम्विग्नाऽस्थिरा निम्ना नाभिर्यस्मिन् तदश्वत्थदलनिभमुदरं यस्य तम् ॥ २४ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अन्योन्यघातिभिः परस्परं युध्यद्भिर्यादोभिर्मत्स्यादिभिर्जलचरैः क्वापि स्वयं भक्ष्यते च ॥ १७–१८ ॥ विष्णुमायावृतात्मन इत्यनेन स एव तथा दृष्टवान्नान्य इति सूचितम् ॥ १९ ॥ पृथिव्याः ककुदि उन्नतप्रदेशे न्यग्रोधपोतं कोमलं वटं ददृशे ॥ २० ॥ तस्य वटस्य प्रागुत्तरस्यामीशानदिक्शाखायां शिशुमपि ददृशे। तं विशिनष्टि—शयानमित्यादिना। तमोऽन्धकारं ग्रसन्तं निराकुर्वन्तम्।२१। इन्द्रनीलवच्छ्यामम्। श्रीमत् रम्यं वदनपङ्कजं यस्य तम्, कम्बुवत् त्रिरेखावृता ग्रीवा यस्य तम्। महोरस्कं विशालवक्षसम्। सुनासं शोभना नासा यस्य तम् सुन्दरे भ्रुवौ यस्य तम् ॥ २२ ॥ श्वासैरेजन्तः कम्पमाना ये अलकास्तैराभातं शोभितम् कम्बुवत् अन्तर्वलयेन

श्रीर्ययोस्तौ कम्बुश्रियौ तयोः कर्णयोर्दाडिमपुष्पे यस्य तम्। विद्रुमतुल्याधरभासा ईषत् शोणायितं सुधातुल्यं स्मितं यस्य तम्॥ २३॥ पद्मगर्भवत् आ ईषत् अरुणवदपाङ्गौ नेत्रान्तौ यस्य तम्। हृद्यो हासो यस्मिंस्तदवलोकनं यस्य तम्। श्वासैरेजन्त्यश्चलन्त्यो वलयस्तिर्यक् निम्नरेखास्ताभिः संविग्ना चञ्चला निम्ना गम्भीरा नाभिर्यस्मिंस्तत् दलवदश्वत्थपत्रसङ्काशमुदरं यस्य तम्॥ २४॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

क्वचिदिति। स्वयं मुनिः, क्वचित् कदाचित्तु, महावर्त्ते महति जलभ्रमे गतः, क्वचित् तरलैस्तरङ्गैः ताडितः, क्वापि अन्योन्यघातिभिः तद्भक्षणाय परस्परं युध्यद्भिः यादोभिर्जलचरैः भक्ष्यते च। भक्षितोऽभवदित्यर्थः॥ १७॥ क्वचिदिति। क्वचित् मोहं प्राप्तः अभवत्, क्वचित् शोकं प्राप्तः अभूत्, क्वचित् दुःखं प्राप्तः, क्वचित् सुखं प्राप्तः अभूत्, क्वचिद्भयं प्राप्तः क्वचित् मृत्युं अवाप्नोति, मृत्युं प्राप्त इवाभवदित्यर्थः। क्वचित् व्याध्यादिभिः अर्दितः उत्पीडित इवाभवदित्यर्थः॥ १८॥ अयुतेति। एवं विष्णुमायावृतात्मनः तस्मिन् प्रलयोदधौ भ्रमतः मुनेः वर्षाणां अयुतायुतेति, अयुतायुतानित्यर्थः। विभक्तिलोप आर्षः। सहस्राणि शतानि च व्यतीयुः। महान् कालो व्यतीयायेत्यर्थः। विष्णुमायावृतत्वात् स तत् सर्वं तथा दृष्टवानिति भावः॥ १९॥ स इति। तस्मिन् प्रलयाब्धौ भ्रमन् सः द्विजो मुनिः, कदाचित् पृथिव्याः ककुदि भुव उन्नतप्रदेश इत्यर्थः। फलैः पल्लवैश्च शोभितस्तं, कोमलवटं ददृशे॥ २०॥ प्रागिति तस्य न्यग्रोधपोतस्य प्रागुत्तरस्यामीशान्यां दिशि वर्त्तमानायामिति शेषः। शाखायां शाखाधिकरणके इत्यर्थः। पर्णपुटके पुटसदृशतामापन्ने तत्पुटके इत्यर्थः। शयानं, प्रभया स्वकान्त्या तमोऽन्धकार ग्रसन्तं शिशुं अपि, ददृशे॥ २१॥ तं विशिनष्टि महेत्यादिना। महामरकतेति। महामरकतश्याममिन्द्रनीलवच्छ्यामं श्रीमद्रमणीयं वदनपङ्कजं मुखकमलं यस्य तं, कम्बुग्रीवं शङ्खवत्त्रिरेखोपेतग्रीवायुतं, महोरस्कं विशालवक्षसं, सु शोभना नासा यस्य तं, सुन्दरे भ्रुवौ यस्य तम्॥ २२॥ श्वासेति। श्वासैर्निःश्वासैः एजन्तः कम्पमाना येऽलकास्तैराभातस्तं, कम्बुवदन्तर्वलयेन श्रीर्ययोस्तौ यौ कर्णौ तयोर्दाडिमं दाडिमपुष्पसदृशमाभरणं यस्य तम्। विद्रुमवत् प्रवालसदृशो योऽधरस्तस्य भा दीप्तिस्तया ईषच्छोणायितं किंचिद्रक्तं, सुधातुल्यं स्मितं यस्य तम्॥ २३॥ पद्मेति। पद्मगर्भाविव आ ईषदरुणौ अपाङ्गौ नेत्रप्रान्तौ यस्य तं, हृद्यो हृदयंगमो यो हासस्तद्युक्तमवलोकनं यस्य तं, श्वासैरेजन्त्यश्चलन्त्यो वलयस्तिर्यङ् निम्नरेखास्ताभिः संविग्नाश्चञ्चला निम्ना गभीरा नाभिर्यस्मिंस्तद्दलवदश्वत्थपत्रसंकाशमुदरं यस्य तम्॥ २४॥

## हिन्दी अनुवाद

वे कभी बड़े भारी भँवर में पड़ जाते, कभी तरल तरङ्गों की चोट से चञ्चल हो उठते। जब कभी जलजन्तु आपस में एक दूसरे पर आक्रमण करते, तब ये अचानक ही उनके शिकार बन जाते॥ १७॥ कहीं शोकग्रस्त हो जाते, तो कहीं मोहग्रस्त। कभी दुःख-ही दुःख के निमित्त आते, तो कभी तनिक सुख भी मिल जाता। कभी भयभीत होते, कभी मर जाते, तो कभी तरह-तरह के रोग उन्हें सताने लगते॥ १८॥ इस प्रकार मार्कण्डेय मुनि विष्णु भगवान् की माया के चक्कर में मोहित हो रहे थे। उस प्रलयकाल के समुद्र में भटकते-भटकते उन्हें सैकड़ों हजारों ही नहीं, लाखों करोड़ों वर्ष बीत गये॥ १९॥ शौनकजी! मार्कण्डेय मुनि इसी प्रकार प्रलय के जल में बहुत समय तक भटकते रहे। एक बार उन्होंने पृथ्वी के टीले पर एक छोटा-सा बरगद का पेड़ देखा। उसमें हरे-हरे पत्ते और लाल-लाल फल शोभायमान हो रहे थे॥ २०॥ बरगद के पेड़ में ईशानकोण पर एक डाल थी, उसमें एक पत्तों का दोना-सा बन गया था। उसी पर एक बड़ा सुन्दर नन्हा-सा शिशु लेट रहा था। उसके शरीर से ऐसी उज्ज्वल छटा छिटक रही थी, जिससे आस पास का अँधेरा दूर हो रहा था॥ २१॥ वह शिशु मरकतमणि के समान साँवला-साँवला था। मुखकमल पर सारा सौन्दर्य फूटा पड़ता था। गरदन शङ्ख के समान उतार चढ़ाववाली थी। छाती चौड़ी थी। तोते की चोंचके समान सुन्दर नासिका और भौंहें बड़ी मनोहर थीं॥ २२॥ काली-काली घुँघराली अलकें कपोलों पर लटक रही थीं और श्वास लगने से कभी-कभी हिल भी जाती थीं शङ्ख के समान घुमावदार कानों में अनार के लाल-लाल फूल शोभायमान हो रहे थे। मूँगे के समान लाल-लाल होठों की कान्ति से उनकी सुधामयी श्वेत मुसकान कुछ लालिमा मिश्रित हो गयी थी॥ २३॥ नेत्रों के कोने कमल के भीतरी भाग के समान तनिक लाल-लाल थे। मुसकान और चितवन बरबस हृदय को पकड़ लेती थी। बड़ी गम्भीर नाभि थी। छोटी-सी तोंद पीपल के पत्ते के समान जान पड़ती और श्वास लेने के समय उस पर पड़ी हुई बलें तथा नाभि भी हिल जाया करती थी॥ २४॥

चार्वङ्गुलिभ्यां पाणिभ्यामुन्नीय चरणाम्बुजम् । मुखे नि¹धाय विप्रेन्द्रो धयन्तं वीक्ष्य विस्मितः ॥ २५ ॥

तद्दर्शनाद् वीतपरिश्रमो मुदा प्रोत्फुल्लहृत्पद्मविलोचनाम्बुजः ।
प्रहृष्टरोमाद्भुतभावशङ्कितः प्रष्टुं पु²रस्तं प्रससार बालकम् ॥ २६ ॥

तावच्छिशोर्वै श्वसितेन भार्गवः सोऽन्तःशरीरं मशको यथाविशत् ।
तत्राप्यदो न्यस्तमचष्ट कृत्स्नशो यथा पुरामुह्यदतीव विस्मितः ॥ २७ ॥

खं रोदसी भगणानद्रिसागरान् द्वीपान् सवर्षान् ककुभः सुरासुरान् ।
वनानि देशान् सरितः पुराकरान् खेटान् व्रजानाश्रमवर्णवृत्तयः ॥ २८ ॥

महान्ति भूतान्यथ भौतिका³न्यसौ कालं च नानायुगकल्पकल्पनम् ।
यत् किञ्चिदन्यद् व्यवहारकारणं ददर्श विश्वं सदिवावभासितम् ॥ २९ ॥

हिमालयं पुष्पवहां च तां नदीं निजा⁴लयं तत्र⁵ ऋषीनपश्यत् ।
विश्वं विपश्यञ्छ्वसिताच्छिशोर्वै बहिर्निरस्तो न्यपतल्लया⁶ब्धौ ॥ ३० ॥

तस्मिन् पृथिव्याः ककुदि प्ररूढं वटं च तत्पर्णपुटे शयानम् ।
तोकं च तत्प्रेमसुधास्मितेन निरीक्षितोऽपाङ्गनिरीक्षणेन ॥ ३१ ॥

अथ तं बालकं वीक्ष्य नेत्राभ्यां धि⁷ष्ठितं हृदि । अभ्ययादतिसंक्लिष्टः परिष्वक्तुमधोक्षजम् ॥ ३२ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—चार्वङ्गुलिभ्यां पाणिभ्यां चरणाम्बुजम् उन्नीय मुखे निधाय धावन्तं (शिशुं) वीक्ष्य विप्रेन्द्रः विस्मितः बभूव ॥ २५ ॥ तद्दर्शनात् वीतपरिश्रमः मुदा प्रोत्फुल्लहृत्पद्मविलोचनाम्बुजः प्रहृष्टरोमाद्भुतभावशङ्कितः तं बालकं प्रष्टुं पुरः प्रससार ॥ २६ ॥ सः भार्गवः (यावत् प्रसरति) तावत् शिशोः श्वसितेन अन्तःशरीरं मशकः यथा अविशत् तत्र अपि अदः (जगत्) यथा पुरा कृत्स्नशः न्यस्तम् अचष्ट (तद्दृष्ट्वा) सः अतीव विस्मितः (सन्) अमुह्यत् ॥ २७ ॥ खं रोदसी भगणान् अद्रिसागरान् सवर्षान् द्वीपान् ककुभः सुरासुरान् वनानि देशान् सरितः पुराकरान् खेटान् व्रजान् आश्रमवर्णवृत्तयः अथ महान्ति भूतानि भौतिकानि नानायुगकल्पकल्पनं कालं च यत् किञ्चित् अन्यत् व्यवहारकारणं सदिवावभासितं विश्वं असौ ददर्श ॥२८–२९॥ हिमालयं पुष्पवहां च तां नदीं निजालयं तत्र ऋषीन् अपश्यत् विश्वं विपश्यन् श्वसितात् शिशोः वै बहिः निरस्तः लयाब्धौ न्यपतत् ॥ ३० ॥ तस्मिन् पृथिव्याः ककुदि प्ररूढं वटं तत्पर्णपुटे शयानं तोकं तत्प्रेमसुधास्मितेन अपाङ्गनिरीक्षणेन निरीक्षितः अथ तं बालकं नेत्राभ्यां वीक्ष्य हृदि धिष्ठितम् अधोक्षजम् अतिसंक्लिष्टः (सन्) परिष्वक्तुम् अभ्ययात् ॥ ३२ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

चार्वोंगुलयो ययोस्ताभ्यामुन्नीयाकृष्य धयंतं पिबंतम् ॥ २५ ॥ हृत्पद्मं च विलोचनांबुजे च प्रोत्फुल्लानि तानि यस्य सः । अद्भुतभावोऽत्याश्चर्यरूपं तेन शंकितः सन्नपि तं प्रष्टुं पुरा प्रससार समीपं गतः ॥ २६ ॥ अदः इदं जगद्यथा पुरा प्रलयात्पूर्वं न्यस्तं विन्यस्तं दृष्ट्वा चातीव विस्मितः सन्नमुह्यत् ॥२७॥ कृत्स्नशो दर्शनं प्रपंचयति खमित्यादिना । ककुभो दिशः । पुराण्याकरांश्च । खेटान्कर्षकग्रामान् । व्रजान्गोकुलानि । आश्रमांश्च वर्णांश्च तेषां वृत्तीश्चेत्यर्थः ॥ २८ ॥ नानायुगानि कल्पांश्च कल्पयति तैर्वा कल्प्यत इति तथा तं कालं च । सदिव परमार्थं इवावभासितं तेनैव ॥ २९–३० ॥ वटं च तोकं च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेनापागनिरीक्षणेन निरीक्षितः सन् ॥ ३१ ॥ अथ तं बालकमधोक्षजं परिष्वक्तुमभ्ययादिति । द्वयोरन्वयः । कथंभूतम् । नेत्राभ्यां हृदि धिष्ठितमधिष्ठितम् ॥ ३२ ॥

---

१. विधाय । २. पुनरुग्रम् । ३. कानि कालम् । ४. निजाश्रमं । ५. यत्र । ६. तद्भवाब्धौ । ७. हृदि धिष्ठितम् ।

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

चार्विति—"करारविंदेन पदारविंदं मुखारविंदे विनिवेशयंतम्। वटस्य पत्रस्य पुटे शयानं बालं मुकुंदं प्रणतोऽस्मि नित्यम्" । इति ग्रन्थांतरोक्तध्यानमंत्राऽसूचि। मञ्चरणारविन्दं कीदृशं—मधु यतो बह्वो मद्भक्ता एतदास्वादाय यतंतेऽतोऽहमप्येत-दास्वादयिष्यामीतीव पिबंतम् ॥२५॥ भाव्यते चिंत्यतेऽनेनेति भावो रूपम् ॥२६॥ यावत्तत्समीपं गतस्तावदेव। श्वसितेनोच्छ्वासेन। भार्गवो मार्कंडेयः। मशकोऽतिसूक्ष्मो रक्तपजीवविशेषः। तत्राप्यंतश्शरीरेऽपि ॥ २७ ॥ सवर्पान् सखंडान्। इत्यर्थं इति—वर्णाश्रमवृत्तीर्भिक्षाकृष्यादिरूपा इति भावः ॥ २८ ॥ तेनैव भगवतैवावभासितं विश्वं स मार्कंडेयो दिवा दिवस इवावभासितं प्रकाशयुक्तं ददर्शेति वार्थः। दिवा तेजसा वा "यद्भासा सर्वमिदं विभाति" इति श्रुतेः ॥ २९ ॥ तत्र निजाश्रमे। शिशोर्मायाशिशोः। श्वसिताच्छ्वसितेन बहिर्निरस्तो पुनः लयाब्धौ दर्शितप्रलयाब्धौ न्यपतत् ॥ ३० ॥ तस्मिन् पूर्वदर्शित एव ॥ ३१ ॥ अथातोऽनंतरम्। धिष्ठितं स्थापितम्। अध्यकारलोपस्त्वार्षः। नेत्राभ्यां नेत्रद्वारा ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

चारवः अङ्गुलयो ययोस्ताभ्यां पाणिभ्यां चरणाम्बुजमुन्नीय आकृष्य मुखे निधाय तदङ्गुष्ठं धयन्तं पिबन्तं शिशुं विलोक्य विप्रेन्द्रो विस्मितो बभूवेति शेषः ॥ २५ ॥ तदिति। तस्य शिशोर्दर्शनात् वीतो गतः परिश्रमो यस्य सः मुदा प्रोत्फुल्लानि हृत्पद्मविलोचनाम्बुजानि यस्य सः प्रहृष्टानि रोमाणि यस्य सः अद्भुतभावमत्याश्चर्यकरूपं तेन शङ्कितोऽपि तं बालकं प्रष्टुं पुरः प्रससार समीपं गतः ॥ २६ ॥ तावदिति। स भार्गवः मार्कण्डेयः यावद्बालसमीपं प्रसरति तावदेव तस्य शिशोः श्वसितेन अन्तः-शरीरं शरीरस्यान्तर्मशक इवाविशत्। तत्र गर्भेऽपि अदः इदं जगत् तथा पुरा प्रलयात्पूर्वं न्यस्तं विन्यस्तं तथाऽऽचष्ट। दृष्ट्वा चातीव विस्मितः सन् अमुह्यत् ॥ २७ ॥ खमिति युग्मम्। खमन्तरिक्षं रोदसी द्यावा पृथिव्यौ भगणान् ककुभो दिशः पुराणि च आकरांश्च खेटान् कर्षकग्रामान् आश्रमाश्च वर्णाश्च तेषां वृत्तीश्चेत्यर्थः। नानायुगानि कल्पांश्च कल्पयति तैर्वा कल्प्यत इति कल्पनं कालं च सदिव यथार्थमिवावभासितं स ददर्श। स्पष्टशेषम् ॥ २८–२९ ॥ हिमालयमिति स्फुटम् ॥३०॥ तस्मिन्निति युग्मम्। तस्मिन् पृथिव्याः ककुदि उन्नतप्रदेशे प्ररूढमाविर्भूतं वटं च तोकं बालं च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितेन च युक्तेनापाङ्गनिरीक्षणेन निरीक्षतः सन् अथानन्तरम् अतिसंश्लिष्टः स मुनिः अधोक्षजमूर्तिं तं बालकं वीक्ष्य नेत्राभ्यां हृदि धिष्ठितं स्थापितमपि। अलोप आर्षः। बहिरपि तं परिष्वक्तुमभ्ययात् अभिमुखं जगाम। पुनरपि तदीयश्वासेन तत्प्रवेशनिर्गमौ अभूताम्। एवमेव सप्तकृत्वः प्रवेशनिर्गमौ ज्ञेयौ ॥ ३१–३२ ॥

### श्रीमद्वीरराघवव्याख्या

चारवः सुन्दर्यः अङ्गुलयो ययोस्ताभ्यां पाणिभ्यां चरणाम्बुजम् उन्नीय उद्धृत्य मुखे निधाय तदङ्गुष्ठं धयन्तं पिबन्तम् इत्थम्भूतं शिशुं विलोक्य विस्मितो बभूवेत्यर्थः ॥ २५ ॥ तद्दर्शनादिति। तस्य शिशोर्दर्शनात् वीतो गतः परिश्रमो यस्य सः प्रोत्फुल्लानि हृत्पद्मं विलोचनाम्बुजं च यस्य स अद्भुतभावेनात्याश्चर्यरूपेण शङ्कितोपि तं बालकं द्रष्टुं पुरः संसारसमीपं गतः इत्यर्थः ॥ २६ ॥ तावत्तदा हे भार्गव ! स मुनिः शिशोः श्वसितेन मशकवदन्तःशरीरमाविशत् शिशोः श्वासवातेन तच्छरी-रान्तः प्राविशदित्यर्थः। तत्रापि तद्गर्भेप्यदोऽन्यम् अमुष्मादन्यं तं तथाविधं शिशुमचष्ट यथा पुरा तच्छरीरान्तःप्रवेशात्पूर्वं यथा कृत्स्नशः कृत्स्नमाचष्ट तद्वत् एव दृष्ट्वाऽतीव विस्मितोऽमुह्यत् ॥ २७ ॥ कृत्स्नशो दर्शनं प्रपञ्चयति—खमिति। खम् आन्तरिक्षं रोदसी द्यावापृथिव्यौ भगणान्नक्षत्रगणानद्रींश्च सागरांश्च ककुभोदिशः सुरांश्चासुरांश्च तान् पुराणि दृष्टादिमन्ति आकारान् रत्नाद्युत्पत्ति-स्थानानि खेटान् कर्षकग्रामान् व्रजान् गोष्ठानि आश्रमांश्चतुरो वर्णान् तेषां वृत्तीश्चेत्यर्थः ॥ २८ ॥ महान्ति भूतान्याकाशादीनि पञ्चभौतिकानि देवमनुष्यादीनसौ मुनिः नानायुगानि कल्पांश्च कल्पयतीति तथा तं कालं च किं बहुना यत्किञ्चिद्व्यवहारकारणं व्यवहारविषयं विषयस्यापि व्यवहारं प्रति कारणत्वात्कारणमित्युक्तम् स दिवाविभासितमज्ञानां नित्यमिव प्रतीयमानं विश्वं तत्सर्वं ददर्श ॥ १९ ॥ किञ्च। हिमालयमिति। ऋषी नरनारायणौ इत्थं विश्वं विपश्यन् शिशोः श्वसितात् श्वासाद्बहिर्निरस्तः निष्कासितः पुनः प्रलयाब्धौ न्यपतत् ॥ ३० ॥ पश्यन्निति। तत्पर्णपुटे शयानम् इति वटपत्रपुटे शयानं तोकं शिशुं च पश्यन् तस्य शिशोः प्रेम्णा सुधास्मितेन च युक्तेनापाङ्गनिरीक्षणेन निरीक्षितो बभूवेति शेषः ॥ ३१ ॥ अथेति। नेत्राभ्यां हृदि वेष्टितमालिङ्गितं बालकमधोक्षजं पुनर्बहिः परिष्वक्तुमभ्ययादभिमुखं जगाम ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

धयन्तं पिबन्तम् ॥ २५ ॥ अद्भुतभावेनाश्चर्यलीलाचेष्टया शङ्कितः सन्नपि पुरः प्रससार समीपङ्गतः ॥ २६ ॥ स भार्गवः मार्कण्डेयः तावत्ततः पूर्वमेव श्वसितेनान्तर्गच्छता सह शिशोरन्तःशरीरं मशको यथा तथाविशदित्यन्वयः। तत्रोदरान्ते विन्यस्तमदो

विश्वं कृत्स्नशोऽचष्ट दृष्टवान् दृष्ट्वा च पुरा यथा बहिर्विस्मितो मुमुहे तथामुह्यदित्यन्वयः। अत्र मोहो नामाश्चर्यबुद्धिरेव नत्वन्यथाज्ञानं तथात्वे प्राचीनाचीर्णपुण्यराशेर्वैयर्थ्यापत्तेरिति ॥ २७ ॥ विश्वं विशिनष्टि—खं रोदसी इत्यादिना। आश्रमवर्णवृत्तयो यास्ताश्च ॥२८॥ महान्ति भूतानि पञ्चभूतानि नानायुगकल्पनं येन स तथा तं कालं च अन्यत्किञ्चिद्व्यवहारकारणं हानोपादानादिसमर्थं तच्चाद्राक्षीत् सदिवसत्वेन यथार्थत्वेनैवावभासतं प्रकाशितं मिथ्याभूतत्वेन ॥ २९ ॥ पुनः किमभूदत्राह—विश्वमिति। बहिः श्वसतः शिशोः श्वासेन बहिर्निरस्तो नुन्नः प्रलयाब्धौ न्यपतत् ॥ ३० ॥ वटं च तोकं च वीक्ष्य तस्य शिशोः प्रेमसुधायाः प्रेमामृताद्भुद्भूतस्मितसहितेनापाङ्गनिरीक्षणेन निरीक्षितो ऽभूदित्यन्वयः ॥ ३१ ॥ अथ तं बालकं परिष्वक्तुमभ्यगात् ॥ ३२ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

मच्चरणाम्बुजे कीदृशं मधु वर्तते यत एतदास्वदनार्थं बहवो मद्भक्ता यतन्ते तस्मादिदमहमप्यास्वाद्य परिचेष्य इतीव धयन्तं पिबन्तम् ॥ २५ ॥ अद्भुतभावेन अत्याश्चर्य्यस्वरूपेण शङ्कितः नायं प्राकृतो बालक इति प्राप्ताशङ्कोपि प्रष्टुम् ॥ २६ ॥ अदः जगत् यथा पुरा प्रलयात्पूर्वम् ॥ २७–२८ ॥ स मार्कण्डेयः दिवा दिवस एव अवभासितं प्रकाशयुक्तं ददर्श पुष्पवह्वां पुष्पभद्राम् ॥ २९ ॥ लयाब्धौ निपत्य पुनरप्ययुतायुतवर्षपर्यन्तं कष्टमनुभूय पृथिव्याः ककुदि वटपत्रशायिनं बालं ददर्श तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेनापाङ्गनिरीक्षणेन निरीक्षितः सन् पुनरपि तदीयश्वासेन पूर्ववत् प्रवेशनिर्गमौ एवमेव सप्तकृत्वः प्रवेशनिर्गमावप्रियवाक्यदृष्टया ज्ञेयौ ॥ ३०–३२ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

धयन्तं पिबन्तम् ॥ २५ ॥ प्रोत्फुल्लानि हृत्पद्मविलोचने च यस्य सः अद्भुतेनात्याश्चर्येण भावेन शङ्कितः किमयमीश्वर इति शङ्का प्राप्ता यस्य सः तं प्रष्टुम् पुरः समीपं प्रससार ॥२६॥ तत्रापि तच्छरीरमध्येपि अदः इदं विश्वं यथा पुरा प्रलयात्पूर्वम् तथैवाचष्ट अतोऽतीव विस्मितः ॥ २७–२८ ॥ नानायुगानि कल्पांश्च कल्पयतीति स तथा तं च इवशब्दः एवार्थे सदेवकारणभूतं वस्त्वेव तत्तदाकारेण च भासितं ददर्श भगवत्कृतं सर्वं सत्यमेव सर्वस्य तदात्मकत्वात् ॥ २९–३० ॥ तस्मिन् लयाब्धौ पृथिव्याः ककुदि वटं तत्पर्णपुटे तोकं च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितयुक्तेन अपाङ्गनिरीक्षणेन निरीक्षितः सन् तं बालं नेत्राभ्यां हृदि धिष्ठितमपि पुनर्बहिरपि परिष्वक्तुमभ्ययादिति द्वयोरन्वयः ॥ ३१–३२ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

चारवः अङ्गुल्यो ययोस्ताभ्यां पाणिभ्यां चरणाम्बुजमुन्नीय आकृष्य मुखे निधाय तदंगुष्ठं धयन्तं पिबन्तं शिशुं विलोक्य विप्रेन्द्रो विस्मितो बभूवेतिः शेषः ॥ २५ ॥ तस्य शिशोर्दर्शनाद्वीतो गतः परिश्रमो यस्य सः मुदा हर्षेण प्रोत्फुल्लानि हृत्पद्मविलोचनाम्बुजानि यस्य सः प्रहृष्टानि रोमाणि यस्य सः अद्भुतभावमत्याश्चर्यरूपं तेन शङ्कितोऽपि तं बालकं प्रष्टुं पुरः प्रससार समीपं गतः ॥ २६ ॥ तत्र गर्भेऽपि अदः इदं जगत् यथा पुरा प्रलयात्पूर्वं न्यस्तं विन्यस्तमचष्ट। दृष्ट्वा चातीव विस्मितः सन्नमुह्यत् ॥ २७ ॥ कृत्स्नशो दर्शनं प्रपञ्चयति—खमित्यादिना। खमन्तरिक्षं भगणान् नक्षत्रगणान् ककुभो दिशः पुराणि च आकारांश्च। खेटान् कर्षकग्रामान् आश्रमांश्च वर्णांश्च तेषां वृत्तीश्चेत्यर्थः ॥ २८ ॥ नाना युगानि कल्पांश्च कल्पयति तैर्वा कल्प्यत इति कल्पनं कालं च। सदिव यथार्थमिव तस्यावभासितं स ददर्श ॥ २९–३० ॥ वटं च तोकं बालं च वीक्ष्य तस्य प्रेम्णा सुधातुल्यस्मितेन च युक्तेनापाङ्गनिरीक्षणेन निरीक्षतः सन् ॥ ३१ ॥ अथानन्तरं तं बालकं वीक्ष्य नेत्राभ्यां हृदि अधिष्ठितं स्थापितमपि बहिरपि तं परिष्वक्तुमभ्ययात् अभिमुखं जगामेत्यन्वयः। एवं परिष्वङ्गेच्छायां हेतुमाह—अतिसंक्लिष्ट इति। स च हृदि चिन्तनयोग्य एव न परिष्वङ्गयोग्यः अतीन्द्रियत्वादित्याशयेनाह—अधोक्षजमिति ॥ ३२ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

चार्विति। चारवः सुन्दरा अङ्गुल्यो ययोस्ताभ्यां पाणिभ्यां चरणाम्बुजं उन्नीयोद्धृत्य, मुखे निधाय तदङ्गुष्ठं धयन्तं वीक्ष्योक्तविधं शिशुं निरीक्ष्य, विप्रेन्द्रः विस्मितः बभूव ॥ २५ ॥ तदिति। तस्य शिशोर्यद्दर्शनं तस्मात् वीतो गतः परिश्रमो यस्य सः, मुदा तद्दर्शनसंजातानन्देन, प्रोत्फुल्लानि हृत्पद्मं विलोचनाम्बुजे च यस्य सः, प्रहृष्टानि रोमाणि यस्य सः, अद्भुतभावेनात्याश्चर्यरूपेण शङ्कितः संजातशङ्कः सन्नपि, तं बालकं प्रष्टुं पुरस्तदीयपुरःप्रदेशे, प्रससार गतः ॥ २६ ॥ तावदिति। तावत्तदा भार्गवः स मुनिः, शिशोः श्वसितेन मशकः यथा मशकवदेवेत्यर्थः। अन्तःशरीरं शिशोः शरीरान्तःप्रदेशे, आविशत् नासारन्ध्रद्वारेण संप्रविष्टोऽभूत्। तत्रापि तद्गर्भेऽपि, अदः इदं विश्वं यथा पुरा न्यस्तं, तथा अचष्ट। ततः कृत्स्नशः दृष्ट्वा अतीव विस्मितः सन्, अमुह्यत् मोहं प्राप। अत्र मोहो नामाश्चर्यबुद्धिरेव बोध्या ॥ २७ ॥ कृत्स्नशो दर्शनं प्रपञ्चयति। खमिति। खमन्तरिक्षं रोदसी द्यावापृथिव्यौ, भगणान्नक्षत्रगणान्, अद्रयश्च सागराश्च तान्. सवर्षान् सखण्डान् द्वीपान्, ककुभो दिशः, सुराश्च असुराश्च तान्, वनानि अरण्यानि, देशान् सकलजनपदान्, सरितो नदीः, पुराणि च आकराश्च तान्, तत्र पुराणि हट्टादिमन्ति आकरा रत्नाद्यु-

त्पत्तिस्थानानि। खेटान् कर्षुकग्रामान्, व्रजान् गोष्ठान् आश्रमवर्णवृत्तयः चतुर आश्रमान् चतुरो वर्णान् तेषां वृत्तीश्चेत्यर्थः ॥ २८ ॥ महान्तीति। महान्ति भूतानि आकाशादीनि पञ्च महाभूतानीत्यर्थः। अथ भौतिकानि भूतसङ्घान् देवमनुष्यादीनित्यर्थः। नानायुगानि च कल्पांश्च तान् कल्पयतीति तं कालं च, किं बहुना। अन्यत् यत् किंचित् व्यवहारकारणं व्यवहारविषयं, विषयस्यापि व्यवहारं प्रति कारणत्वात् कारणमित्युक्तम्। सदिव अवभासितमज्ञानां नित्यमिव प्रतीयमानं विश्वं तत् सर्वमित्यर्थः। असौ मुनिः ददर्श ॥ २९ ॥ हिमालयमिति। हिमालयं हिमाचलं, तां प्रसिद्धां पुष्पवहां नदीं, निजाश्रमं च, तत्र ऋषींश्च सः अपश्यत्। इत्थं विश्वं विपश्यन् शिशोः श्वसितात् बहिः निरस्तः। शिशुनैव निःश्वसितद्वारा बहिर्निष्कासित इत्यर्थः। लयाब्धौ न्यपतत् वै ॥ ३० ॥ तस्मिन्निति। तस्मिन् लयाब्धौ पृथिव्याः ककुदि प्ररूढं वटं च, तत्पर्णपुटके शयानं तोकं बालं च, वीक्ष्येति शेषः। तस्य शिशोः प्रेम्णा यत् सुधातुल्यं स्मितं तेन युक्तेनेति शेषः। अपाङ्गनिरीक्षणेन निरीक्षितः, बभूवेति शेषः। तेन शिशुना स मुनिरपाङ्गसंवीक्षित आसीदिति भावः ॥ ३१ ॥ अथेति। अथ तं बालकं वीक्ष्य, नेत्राभ्यां हृदि धिष्ठितं स्थिरीकृतमपि तं अधोक्षजं अतिसंक्लिष्टः सन्, पाठान्तरे अतिसंहृष्टः सन्। परिष्वक्तुं अभ्ययात्, बहिः परिष्वक्तुमभिमुखं जगामेत्यर्थः ॥ ३२ ॥

### हिन्दी अनुवाद

नन्हें-नन्हें हाथों में बड़ी सुन्दर-सुन्दर अँगुलियाँ थीं। वह शिशु अपने दोनों करकमलों से एक चरणकमल को मुख में डालकर चूस रहा था। मार्कण्डेय मुनि यह दिव्य दृश्य देखकर अत्यन्त विस्मित हो गये ॥ २५ ॥ शौनक जी! उस दिव्य शिशु को देखते ही मार्कण्डेय मुनि की सारी थकावट जाती रही। आनन्द से उनके हृदय-कमल और नेत्र कमल खिल गये। शरीर पुलकित हो गया। उस नन्हे-से शिशु के इस अद्भुत भाव को देखकर उनके मन में तरह-तरह की शङ्काएँ—'यह कौन है' इत्यादि—आने लगी और वे उस शिशु से ये बातें पूछने के लिये उसके सामने सरक गये ॥ २६ ॥ अभी मार्कण्डेयजी पहुँच भी न पाये थे कि उस शिशु के श्वास के साथ उसके शरीर के भीतर उसी प्रकार घुस गये, जैसे कोई मच्छर किसी के पेट में चला जाय। उस शिशु के पेट में जाकर उन्होंने सब-की-सब वही सृष्टि देखी, जैसी प्रलय के पहले उन्होंने देखी थी। वे वह सब विचित्र दृश्य देखकर आश्चर्यचकित हो गये। वे मोहवश कुछ सोच-विचार भी न सके ॥ २७ ॥ उन्होंने उस शिशु के उदर में आकाश, अन्तरिक्ष, ज्योतिर्मण्डल, पर्वत, समुद्र, द्वीप, वर्ष, दिशाएँ, देवता, दैत्य, वन, देश, नदियाँ, नगर, खानें, किसानों के गाँव, अहीरों की बस्तियाँ, आश्रम, वर्ण, उनके आचार-व्यवहार, पञ्चमहाभूत, भूतों से बने हुए प्राणियों के शरीर तथा पदार्थ, अनेक युग और कल्पों के भेद से युक्त काल आदि सब कुछ देखा। इतना ही नहीं; जिन देशों, वस्तुओं और कालों के द्वारा जगत् का व्यवहार सम्पन्न होता है, वह सब कुछ वहाँ विद्यमान था। कहाँ तक कहें, यह सम्पूर्ण विश्व न होने पर भी वहाँ सत्य के समान प्रतीत होते देखा ॥ २८–२९ ॥ हिमालय पर्वत, वही पुष्पभद्रा नदी, उसके तट पर अपना आश्रम और वहाँ रहने वाले ऋषियों को भी मार्कण्डेय जी ने प्रत्यक्ष ही देखा। इस प्रकार सम्पूर्ण विश्व को देखते-देखते ही वे उस दिव्य शिशु के श्वास के द्वारा ही बाहर आ गये और फिर प्रलय कालीन समुद्र में गिर पड़े ॥ ३० ॥ अब फिर उन्होंने देखा कि समुद्र के बीच में पृथ्वी के टीले पर वही बरगद का पेड़ ज्यों-का-त्यों विद्यमान है और उसके पत्तों के दोने में वही शिशु सोया हुआ है। उसके अधरों पर प्रेमामृत से परिपूर्ण मन्द-मन्द मुसकान है और अपनी प्रेमपूर्ण चितवन से वह मार्कण्डेय जी की ओर देख रहा है ॥ ३१ ॥ अब मार्कण्डेय मुनि इन्द्रियातीत भगवान् को जो शिशु के रूप में क्रीडा कर रहे थे और नेत्रों के मार्ग से पहले ही हृदय में विराजमान हो चुके थे, आलिङ्गन करने के लिये बड़े श्रम और कठिनाई से आगे बढ़े ॥ ३२ ॥

तावत् स भगवान् साक्षाद् योगाधीशो गुहाशयः। अन्तर्दध[1] ऋषेः सद्यो यथेहानीशनिर्मिता ॥ ३३ ॥

तमन्वथ वटो ब्रह्मन् सलिलं लोकसम्प्लवः। तिरोधायि क्षणादस्य स्वाश्रमे पूर्ववत् स्थितः ॥ ३४ ॥

**इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे मायादर्शनं नाम[2] नवमोऽध्यायः ॥ ९ ॥**

### कृष्णप्रिया व्याख्या

अन्वयः—तावत् सः भगवान् साक्षात् योगाधीशः गुहाशयः सद्यः अन्तर्दधे अनीशनिर्मिता ईहा यथा (तथा) ऋषेः (ईहा निष्फला जातेति शेषः) ॥ ३३ ॥ तम् अनु ब्रह्मन् वटः सलिलं लोकसम्प्लवः अस्य क्षणात् तिरोधायि (सः) पूर्ववत् स्वाश्रमे स्थितः ॥ ३४ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे नवमोऽध्यायः ॥ ९ ॥

१. धे च सद्योऽसौ यथे० । २. मार्कण्डेयोपाख्याने नव० ।

## श्रीधरस्वामिविरचिता भावार्थदीपिका

तावत्परिष्वंगलाभात्पूर्वमेव ऋषेस्तस्यांतर्हितो बभूव। तदुद्यमवैफल्ये दृष्टांतः। अनीशो निर्दैवस्तेन निर्मिता ईहा क्रीडा यथेति ॥ ३३ ॥ अंतर्हितं भगवंतमनु वटः सलिलं लोकसंप्लवश्च तिरोधाय्यंतर्हितः। स च स्वाश्रम एव यथापूर्वं स्थित इति ॥ ३४ ॥

इति श्रीमद्भागवते म० द्वादशस्कंधे श्रीटीकायां नवमोऽध्यायः ॥ ९ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'अनीशो भाग्यरहिते सर्वेशे दुर्बलेऽपि च' इति निरुक्तिः ॥ ३३–३४ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे नवमोऽध्यायः ॥ ९ ॥

## अन्वितार्थप्रकाशिका

तावदिति। तावत्परिष्वङ्गलाभात्पूर्वमेव योगाधीशः गुहाशयः साक्षाद्भगवान् स बालकः सद्योऽन्तर्दधे तिरोहितः यथाऽनीशस्य भाग्यहीनस्य पुरुषस्य निर्मिता कृता ईहा इच्छा निष्फला भवति तथा ऋषेः मार्कण्डेयस्याप्यालिङ्गनेच्छा निष्फला जाता ॥ ३३ ॥ तमिति। तमन्तर्हितं भगवन्तमनु वटः सलिलं लोकसप्लवश्च क्षणादेव तिरोधायि अन्तर्हितः। कर्मणि कर्मकर्त्तरि वा प्रयोगः मम त्वार्षो भाति। अन्तर्भावितण्यर्थात् कर्मकर्त्तरि इत्येके। सोऽपि मुनिः स्वाश्रम एव यथापूर्वं स्थितः क्षणादस्येति क्षणमात्र कालमध्य एव सप्तकल्पसङ्ख्यः कालो भगवतोऽतर्क्यया शक्त्यैव प्रविष्टोऽभूत् ॥ ३४ ॥

इति श्रीमद्भागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायां नवमोऽध्यायः ॥ ९ ॥

## श्रीमद्वीरराघवव्याख्या

तावदिति। तावद्भगवानचिन्त्यविविधविचित्रशक्त्यादिगुणगणपूर्णः योगाधीशः आश्चर्यशक्तियोगनिर्वाहकः गुहाशयः सर्वान्तरात्मा अन्तर्हितवान् तदा ऋषेरीहा आलिङ्गनेच्छा यथा अनीशनिर्मिता निर्द्धनेन कृता तद्वदासीदित्यर्थः ॥ ३३ ॥ तमिति। तं तिरोदधतं शिशुमनु लोकसंप्लव सलिलं तिरोधाय तत्क्षणात्तस्य मुनेः सकाशाद्वटोप्यन्तर्दधे इति पूर्वेण सम्बन्धः। यद्वा, भगवान् सलिलं तिरोधायान्तर्दधे तमनु वटोपि अन्तर्दधे इति सम्बन्धः मुनिस्तु स्वाश्रमे पूर्ववत्स्थितः अल्पदेशे विपुलदेशान्तर्भावः अल्पकाले बहुकालान्तर्भावः तदितरजनादृश्यतद्व्यतिरिक्तमूर्त्तामूर्त्तपदार्थत्रातहेतुतत्कालावसायिसलिलादिसृष्टिश्चेतिसर्वमीश्वरस्य सर्वशक्तित्वादुपपन्नम् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां नवमोध्यायः ॥ ९ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अनीशेनासमर्थेन निर्मिता ईहा मायालक्षणा चेष्टा यथा क्षिप्रमन्तर्दधाति तथेयमन्तर्धानशैध्र्यार्थे निदर्शनमिदं न तु मिथ्यात्वे ॥ ३३ ॥ अन्तर्हितं भगवन्तमनु लोकस्य सम्प्लवो यस्मात्तत्तथा तिरोधायि तिरोहितमभूत् ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां नवमोऽध्यायः ॥ ९ ॥

( विजयध्वजतीर्थरीत्याष्टमः ) ॥ ८ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

अनीशो दरिद्रस्तस्य ईहा धनादिवाञ्छा यथा सद्य एवोत्पद्य सद्य एव लीयते तद्वदित्यर्थः ॥ ३३ ॥ क्षणादस्येति। क्षणमात्रकालमध्ये एव सप्तकल्पसङ्ख्यः कालः प्रविष्टोऽभूदतर्क्यभगवच्छक्त्यैवेति भावः। तिरोधायीति कर्मकर्त्तरिच्चिण् ॥ ३४ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। द्वादशे नवमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ ९ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

यावत्परिष्वङ्गं कर्तुमुद्युक्तस्तावत्सद्य एवान्तर्दधे तदा ऋषेः ईहा परिष्वङ्गचेष्टा यथा अनीशेनासत्यसङ्कल्पेन जीवेन निर्मिता वृथा भवति तथा जाता ॥ ३३ ॥ तं सर्वशक्तिं भगवन्तं कारणमनु तदग्रे प्रकाशितं वटादि कार्यजातमन्तर्हितमासीदित्याह—तमन्विति। लोकस्य सम्प्लवः प्रलयश्च ॥ ३४ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे नवमोऽध्यायार्थप्रकाशः ॥ ९ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तावत् परिष्वङ्गलाभात्पूर्वमेव सद्यः सोऽन्तर्हितो बभूव। तत्र दृष्टान्तमाह—यथेति। यथानीशस्य भाग्यहीनस्य पुरुषस्य निर्मिता कृता ईहा इच्छा निष्फला भवति तथा ऋषेः मार्कण्डेयस्याप्यालिङ्गनेच्छा निष्फला जातेत्यर्थः। अन्तर्हितत्वं तु तस्य स्वभाव एवेत्याशयेनाह—गुहाशय इति। गुहास्वन्तःकरणेषु साक्षितया वर्तमानः। एवमन्तर्द्धाने सामर्थ्यमाह—योगाधीश इति। तत्र हेतुः—भगवानिति॥ ३३॥ तमन्तर्हितं भगवन्तमनु वटः सलिलं लोकसम्प्लवश्च तत्क्षणादेव तिरोधायि अन्तर्हितः सोऽपि मुनिः स्वाश्रम एव यथापूर्वं स्थितः॥ ३४॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता द्वादशे तत्र सर्वाश्रयनिरूपणे। नवमो मार्कण्डेययोगमायाप्रदर्शकः॥ ३॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तावदिति। तावत् योगाधीशः आश्चर्यशक्त्याद्यात्मकयोगनिर्वाहकः गुहाशय, सर्वान्तरात्मा, भगवानचिन्त्यविविधविचित्रशक्त्यादिगुणपूर्णः स शिशुः, सद्यः अन्तर्दधे। तदा ऋषेः ईहा शिश्वालिङ्गनेच्छा च अनीशनिर्मिता निर्धनेन कृता ईहा क्रीडा यथा तथा अन्तर्दधे॥ ३३॥ तमिति। तमन्तर्धानं प्राप्तं भगवन्तं अनु, वटः क्षणात् तिरोऽधायि। हे ब्रह्मन्, अथ तदनु लोकसंप्लवं सलिलं तिरोऽधायि। सः मुनिः अपि पूर्ववत् स्वाश्रमे स्थितः अभूत्। अल्पदेशे विपुलदेशान्तर्भावः अल्पकाले बहुकालान्तर्भावः तदितरजनादृश्यतत्तद्व्यतिरिक्तमूर्तामूर्तपदार्थव्रातहेतुतत्कालावसायिसलिलादिसृष्टिश्चे ति सर्वमीश्वरस्य सर्वशक्तित्वादुपपन्नम्॥ ३४॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचिताया-
मन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे नवमोऽध्यायः॥ ९॥

### हिन्दी अनुवाद

परन्तु शौनकजी! भगवान् केवल योगियों के ही नहीं, स्वयं योग के भी स्वामी और सबके हृदय में छिपे रहनेवाले हैं। अभी मार्कण्डेय मुनि उनके पास पहुँच भी न पाये थे कि वे तुरंत अन्तर्धान हो गये—ठीक वैसे ही, जैसे अभागे और असमर्थ पुरुषों के परिश्रमका पता नहीं चलता कि वह फल दिये बिना ही क्या हो गया? ॥ ३३॥ शौनकजी! उस शिशु के अन्तर्धान होते ही वह बरगद का वृक्ष तथा प्रलयकालीन दृश्य एवं जल भी तत्काल लीन हो गया और मार्कण्डेय मुनि ने देखा कि मैं तो पहिले के समान ही अपने आश्रम में बैठा हुआ हूँ॥ ३४॥

इति श्रीमद्भागवते द्वादशस्कन्धे नवमोऽध्यायः॥ ९॥

# अथ दशमोऽध्यायः

सूत उवाच

स एवमनुभूयेदं नारायणविनिर्मितम् । वैभवं योगमायायास्तमेव शरणं ययौ ॥ १ ॥

मार्कण्डेय उवाच

प्रपन्नोऽस्म्यङ्घ्रिमूलं ते प्रपन्नाभयदं हरे । यन्माययापि विबुधा मुह्यन्ति ज्ञानकाशया ॥ २ ॥

सूत उवाच

तमेवं निभृतात्मानं वृषेण दिवि पर्यटन् । रुद्राण्या भगवान् रुद्रो ददर्श स्वगणैर्वृतः ॥ ३ ॥

अथोमा तमृषिं वीक्ष्य गिरीशं समभाषत । पश्येमं भगवन् विप्रं निभृतात्मेन्द्रियाशयम् ॥ ४ ॥

निभृतोदझषव्रातो वातापाये यथार्णवः । कुर्वस्य तपसः साक्षात् संसिद्धिं सिद्धिदो भवान् ॥ ५ ॥

श्रीभगवानुवाच

नैवेच्छत्याशिषः क्वापि ब्रह्मर्षिर्मोक्षमप्युत । भक्तिं परां भगवति लब्धवान् पुरुषेऽव्यये ॥ ६ ॥

अथापि संवदिष्यामो भवान्येतेन साधुना । अयं हि परमो लाभो नृणां साधुसमागमः ॥ ७ ॥

सूत उवाच

इत्युक्त्वा तमुपेयाय भगवान् स सतां गतिः । ईशानः सर्वविद्यानामीश्वरः सर्वदेहिनाम् ॥ ८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—सूतः उवाच—सः नारायणविनिर्मितं योगमायायाः वैभवम् इदम् एवम् अनुभूय तम् एव शरणं ययौ ॥ १ ॥ मार्कण्डेयः उवाच—ज्ञानकाशया यन्मायया विबुधाः अपि मुह्यन्ति हरे प्रपन्नाभयदं ते अंघ्रिमूलं प्रपन्नः अस्मि ॥ २ ॥ सूतः उवाच—एवं निभृतात्मानं तं वृषेण दिवि पर्यटन् रुद्राण्या स्वगणैः वृतः भगवान् रुद्रः ददर्श ॥ ३ ॥ अथ तम् ऋषिं वीक्ष्य उमा भगवन् निभृतात्मेन्द्रियाशयम् इमं विप्रं पश्य ( इति ) गिरीशं समभाषत ॥ ४ ॥ वातापाये निभृतोदझषव्रातम् अर्णवं यथा ( तथा अयं मुनिः शान्तः ) अस्य तपसः संसिद्धिं साक्षात् कुरु ( यतः ) सिद्धिदः भवान् ॥ ५ ॥ श्रीभगवान् उवाच—ब्रह्मर्षिः क्वापि आशिषः न एव इच्छति मोक्षम् अपि उत ( नेच्छति हि ) अव्यये पुरुषे भगवति परां भक्तिं लब्धवान् ॥ ६ ॥ अथ अपि भवानि एतेन साधुना संवदिष्यामः अयं हि साधुसमागमः नृणां परमः लाभः ॥ ७ ॥ सूतः उवाच—इति उक्त्वा सतां गतिः सर्वविद्यानाम् ईशानः सर्वदेहिनाम् ईश्वरः सः भगवान् तम् उपेयाय ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

दशमे शिव आगत्य मुनेस्तुष्टो वरानदात् । तेन साकमतिप्रीत्या समामाष्य समाजयन् ॥ १–१ ॥

ज्ञानकाशया ज्ञानवत्प्रकाशमानया त्वद्भजनं विना विद्वांसोऽपि यस्य तव मायया ज्ञानिनो वयमित्यहंकारेण विमुह्यंतीत्यर्थः ॥ २ ॥ श्रीनारायण एव स्वमायादर्शनश्रांतं शिवरूपेण सान्त्वयामास । तमेवमित्यादिना निभृतात्मानं समाहित-

१. ऋषिरुवाच । २. कालकाश० । ३. तमित्थम् । ४. गिरिशं । ५. व्रातम् । ६. यथार्णवम् ।

चित्तम्। रुद्राण्या भवान्या ॥ ३ ॥ निभृता निश्चला आत्मेंद्रियाशाया देहेंद्रियमनांसि यस्य तम् ॥ ४ ॥ निभृतं निश्चलमुदकं झषव्रातश्च यस्मिंस्तम्। संसिद्धिं फलं साक्षात्कुरु प्रकटीकुरु। यतो भवान्सिद्धिदः ॥ ५ ॥ आशिषोऽभ्युदयलक्षणाः। उत निश्चितम्। अत्र हेतुः। भक्तिमिति ॥ ६ ॥ संवदिष्यामः संवादं करिष्यामः ॥ ७ ॥ सात्वतां सताम्। गतित्वे हेतुः। ईशानम् इति ॥ ८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तेन मुनिना। सभाजयन्सत्कुर्वन् (१)। स मार्कंडेयः। वैभवमुत्कर्षं प्रभावं वा। तमेव नारायणमेव। 'यस्यैते राजमातंगास्तस्यैवामी तुरंगमाः' इतिवत्समासांतर्गतस्यापि त्यदादिभिरामर्शं इति ध्वननान्नारायणविनिर्मितमित्यत्र समासांतर्गतोपि नारायणशब्दस्तमेवेति तच्छब्देन परामृश्यत इति ॥ १ ॥ हे हरे इति—मायातत्कार्यहर्ता त्वमेव 'मामेव ये प्रपद्यंते मायामेतां तरंति ते' इति गीतोक्तेरिति सम्बुद्ध्याभिप्रायः। इत्यर्थं इति—पुंसाहंकारनिवृत्त्यै सर्वत्र भगवद्दृष्टिरेव कार्या 'सर्वभूतेषु मद्भावं पुंसो भावयतोऽचिरात्। स्पर्द्धाऽसूयातिरस्काराः साहंकाराश्चियंति हि।' इति श्रीमुखोक्तेरयं भावः। ज्ञानकाशया ज्ञाने वर्तमानेपि काशया प्रकाशितुं समर्थया, तत्राहमेव प्रमाणमभूवमिति भावः ॥ २ ॥ तं मुनिम् ॥ ३ ॥ अथ रुद्रकर्तृकदर्शनानंतरम्। हे भगवन्निति—सर्वमनोरथसंपादनसमर्थोसीति भावः ॥ ४ ॥ यद्यपि प्रथमांतपाठः प्राचुर्येण दृश्यते बहु पुस्तकेषु तथापि स उपमानोपमेययोर्विरुद्धविभक्तिकत्वाद्विरुद्ध इव भाति 'पश्येमम्' इत्युपमेये द्वितीयादर्शनात्। क्वचित्तु निभृतोदझषव्रातमिति द्वितीयांत एव पाठो दृश्यते। संसिद्धिः फलम् 'संसिद्धिः प्रकृतौ फले' इति कोशात् ॥ ५ ॥ अत्राऽनिच्छायाम्। आशिषोऽणिमाद्याः सिद्धीः। तर्हि मोक्षं देहीति तत्राह—मोक्षमपीति। तर्हि भक्तिं देहीति तत्राह—भक्तिमिति विश्वनाथः ॥ ६ ॥ यद्यप्ययं न किञ्चिदिच्छति अथापि तथापि ॥ ७ ॥ सात्वतां वैष्णवानां गतिर्गम्यः सर्ववैष्णवमुख्यत्वात् 'वैष्णवानां यथा शंभुः' इत्यग्रे वक्ष्यमाणत्वात् 'स सतां गतिः' इति पाठे तु सतामभीप्सितगतिप्रदायित्वाद्भक्तिर्न केवलं सतामेव गतिरपि तु सकामानपीत्याह—ईशान इति। नात्र चित्रमित्याह—ईश्वर इति ॥ ८-९ ॥

### अन्वितार्थप्रकाशिका

दशमे शिव आगत्य मुनेस्तुष्टो वरान्ददात्। प्रीत्या समाजितस्तत्र श्लोका नयनसिन्धवः (४२)।
उवाचेत्येकादशात्रानुष्टुभः (११) सार्द्धद्वक्कृताः (४२॥) ॥ १० ॥

स इति। स मार्कण्डेयो नारायणविनिर्मितं योगमावैभवमेवमनुभूय तमेव नारायणं शरणं ययौ ॥ १ ॥ प्रपन्न इति। हे हरे! ज्ञानकाशया ज्ञानवत्प्रकाशमानया यस्य तव मायया विबुधा विद्वांसोऽपि वयमेव ज्ञानिन इत्यहङ्कारेण विमुह्यन्ति। तस्य ते तव प्रपन्नानामभयदमङ्घ्रिमूलं प्रपन्नोऽस्मि ॥ २ ॥ श्रीनारायण एव स्वमायादर्शनश्रान्तं शिवरूपेण सान्त्वयामास तदाह—तमिति। एवं निभृतात्मानं समाहितचित्तं तं मुनिं वृषेण दिवि पर्यटन् रुद्राण्या स्वगणैश्च वृतो भगवान् रुद्रो ददर्श ॥ ३ ॥ अथेति पूर्वार्द्धं स्पष्टम्। हे भगवन्! निश्चला आत्मेन्द्रियाशाया देहेन्द्रियमनांसि यस्य तमिमं विप्रं पश्य ॥ ४ ॥ निभृतेति वातस्यापाये निर्वाते निभृतं निश्चलमुदम् उदकं झषव्रातश्च यस्मिन् सोऽर्णवो यथा तथाऽयं शान्त इति शेषः। अस्य मुनेस्तपसः सिद्धिं फलं साक्षात्कुरु देहि यतो भवान् सिद्धिदः ॥ ५ ॥ नेति। अयं ब्रह्मर्षिः काप्याशिषो वरान् अणिमाद्याः सिद्धीः नैवेच्छति। उतेत्याश्चर्ये। मोक्षमपि नेच्छति। तत्र हेतुः। भक्तिमिति स्पष्टम् ॥ ६ ॥ अथेति। हे भवानि! अथापि साधुना एतेन सह संवदिष्यामः संवादं करिष्यामः। हि यस्मादयं साधुना सह समागमो मेलनमेव परमो लाभः फलम् ॥ ७ ॥ इतीति। इति पार्वतीं प्रत्युक्त्वा सात्वतां भगवद्भक्तानां गतिः परमोपकारी तत्र सर्वविद्यानामीशानः प्रवर्त्तकः उपदेष्टा सर्वदेहिनामीश्वरः अन्तर्यामी भगवान् रुद्रस्तं मुनिं प्रत्युपेयाय आगतः ॥ ८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

मार्कण्डेयस्य तत् कुलप्रसूतत्वे शास्त्रान्तरपरिहारो द्रष्टव्यः एतत् कल्पात् प्रसूतमार्कण्डेयो ऽन्यो वास्मादित्यविरोध उर्वरितः आपदो निर्मुक्तः ॥ १-१५ ॥

### श्रीमद्वीरराघवव्याख्या

इत्थं भगवता दत्तं तद्योगमायादर्शनात्मकं वरं प्राप्य ततो रुद्राद्भगवद्भक्तिस्थैर्यमाकल्पान्तमायुस्त्रैकालिकं ज्ञानं विरक्तं ब्रह्मवर्चस्विनां पुराणाचार्यत्वं च लेभ इति वक्तुं प्रस्तौति—स एवमित्यादिना। नारायणेन विनिर्मितमाश्चर्यंशक्तेर्वैभवमनुभूय तमेव नारायणमेव तन्मायातरणाय शरणं ययौ ॥ १ ॥ तदेवाह—प्रपन्नोस्मीति। प्रपन्नानामभयम् संसृतिभयाभावं प्रयच्छतीति तथा यस्य तव मायया हेतुभूतया यदज्ञानं तेन कातराः विक्षिप्तचित्ताः सन्तो मुह्यन्ति तां तर्त्तुं प्रपन्नोस्मीतिभावः ॥ २ ॥ तमिति। इत्थं निभृतात्मानं समाहितचित्तं मुनिं रुद्रो ददर्शेति सम्बन्धः दिव्यन्तरिक्षे ॥ ३ ॥ अथेति। उमा रुद्राणी उक्तिमेवाह—पश्येमेति। यथा

निभृतं निश्चलम् उदकम् झषव्रातश्च यस्मिन् पारावारोऽपारोर्णवः समुद्रः ( तथा क्षीरसागरो वा ) तथा निभृतात्मेन्द्रियाशयं निश्चलदेहेन्द्रियमानसं मुनिं पश्येम अस्य मुनेस्तपसः संसिद्धिं फलं कुरु यतो भवान् संसिद्धिदः ॥ ४–५ ॥ एवमुक्तः प्राह रुद्रः—नेति द्वाभ्याम्। आशिषः कामानुतापिच मोक्षमप्ययं ब्रह्मर्षिः नैवेच्छति तत्र हेतुः परामनन्यप्रयोजनां भगवति भक्तिं लब्धवान् न हि भगवदेकान्तभक्ताः किञ्चिदपि वाञ्छन्तीति भावः ॥ ६ ॥ तथापि यद्यप्येवं तथापि हे भवानि साधुनाऽनेन मुनिना सम्वदिष्यामः सम्वादं करिष्यामः किं तावन्मात्रेण तस्येत्यत्राह, अयं हीति। नृणामयम् अयमेव परमो लाभः कोसौ यस्साधुसमागमः न तस्य लाभः किन्त्वस्माकमेवेति भावः। यद्वा अन्योन्यस्य समागमोऽन्योन्यस्य लाभ इति भावः। नृणामिति पारोक्ष्यनिर्देशो लोकपरिपाटीप्रदर्शनाभिप्रायकः ॥ ७ ॥ इतीति। स भगवान् रुद्रः सताङ्गतित्वसर्वविद्यानिर्वाहकत्वसर्वदेहीश्वरत्वजगदात्मत्वान्यात्मभूतपरमपुरुषद्वारकाणीति विवक्षितानि "शास्त्रदृष्ट्यातूपदेशो वामदेववत्" ( १।१।३१ ) इति न्यायाद्भगवदंशावतारत्वाद्वा तानि विवक्षितानि ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

मार्कण्डेयः पुनः किमकार्षीद्यत्कथां शृण्वतां हरौ भक्तिसमुद्रेककरीति हार्दं शौनकादीनां चोद्यम् परिहरति, स एवमिति। यः पूर्ववत्स्वाश्रमे स्थितः सः योगमायायाः अणिमादिविभूतेः वैभव व्याप्तिं स्वरूपशक्तेः प्रभावं वा ॥ १ ॥ यस्य हरेर्मायया मोहनशक्त्या विबुधा अज्ञानकातरा इति पदद्वयेनान्योन्यविरुद्धेन मायाशब्दो व्याख्यात इति ज्ञातव्यम् ॥ २ ॥ निभृतात्मानं पूर्णमनसं हरावेव नितरां धृतमनसं वा दिवि व्योम्नि ॥ ३–४ ॥ निभृतो ननु, पूर्ण एव तपापाये वर्षाकाले ऋषीणां व्रातो व्रतसमूहो यस्य स तथा पूर्वविशेषणार्थे हेतुरयम् अस्य मुनेः ॥ ५ ॥ रुद्रः प्रतिवक्ति, नैवेति। मोक्षमपि नेच्छति किमुतान्या आशिषः तत्र हेतुमाह भक्तिमिति ॥ ६ ॥ यद्यप्येवं तथापि भक्त्या वचनगौरवाद्यतिष्यामह इत्याशयेनाह—अथापीति। हे भवानीति एतेन साधुना मुनिना सह सङ्कथनेन किं प्रयोजनमत्राह, भयं हीति। साधूनां समागमः सङ्गतिः ॥ ७ ॥ समुपेयाय सम्प्राप अयं साधारणो भगवान्न किन्तु वेदसिद्ध एवेत्याशयेनाह—ईशान इति। अनेन श्रीहरिज्ञानमपि रुद्रप्रसादात्फलवत्स्यादित्युक्तं भवति तत्कुत इत्यत्राह, ईश्वर इति श्रोत्रादीन्द्रियवतां जीवानां शिवाधीनत्वेन तत्तदिन्द्रियसाध्यस्य ज्ञानस्यापि तत्प्रसादायत्तत्वं युक्तम् ॥ ८ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सोमेशदर्शनं तस्य स्तुतिस्तेनाभिनन्दनम्। मुनेः स्वेष्टवरप्राप्तिस्तस्माद्दशम उच्यते ॥ १ ॥

ज्ञानकाशया ज्ञाने वर्त्तमानेपि काशया प्रकाशितुं समर्थयेत्यर्थः। तत्राहमेव प्रमाणमभूवमिति भावः ॥ २–४ ॥ निभृतानि निश्चलीभूतानि उदकानि झषव्रातश्च यत्र सः ॥ ५ ॥ मार्कण्डेयस्य एतत् कुलप्रसूतत्वे शास्त्रान्तरपरिहारो द्रष्टव्यः। आशिषोऽणिमाद्याः सिद्धीः तर्हि मोक्षं देहीति तत्राह—मोक्षमपीति तर्हि भक्तिं देहीतिं तत्राह भक्तिमिति ॥ ६–७ ॥ सताम् अभीप्सितभक्तिप्रदायित्वादगतिः न केवलं सतामेव गतिरपि तु सकामानामपीत्याह—ईशान इति। नात्र चित्रमित्याह—ईश्वर इति ॥ ८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवं भगवद्योगमायावैभवदर्शनं भगवत्प्रसादान्मार्कण्डेयेन लब्धम् अथ दशमे शिवप्रसादाद्यल्लब्धं तद्वक्तुं प्रस्तौति, स एवमित्यादिना। योगमायायाः अत्याश्चर्यरूपायाः भगवच्छक्तेः ॥ १ ॥ ज्ञानकाशया ज्ञाने सत्यपि प्रकाशमानया ज्ञानवतामपि मोहजनकया इत्यर्थः ॥ २ ॥ दिवि अन्तरिचे ॥ ३ ॥ निभृताः नियमिताः आत्मेन्द्रियाशयाः शरीरेन्द्रियमनांसि येन तम् ॥ ४ ॥ निभृतं निश्चलमुदकं झषव्रातः मीनसमूहो यस्मिन् सः संसिद्धिं साक्षात्कुरु प्रकटीकुरु ॥ ५ ॥ आशिषः सिद्धीः ॥ ६ ॥ संवदिष्यामः संवादं करिष्यामः ॥ ७ ॥ इत्युक्त्वेत्यादिग्रन्थे श्रीरुद्रस्य भगवत्त्वं सर्वदेहिनामीशत्वं सर्वात्मत्वादिकं च श्रीविष्णुप्रसादजं ज्ञेयम् सोऽब्रवीद्वरं वृणीष्व "अहमेव पशूनामधिपतिरसानी "अस्य चेदेव मीढुषोदयो विष्णोरेव" इत्यादिश्रुतेः "सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः" इत्यादिप्रागुक्तत्वाच्च भगवान्—

"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" ॥

स्मृत्युक्तलक्षणः सतां साधूनां हरिभक्तप्रदत्वाद्गतिः सर्वदेहिनां सुरासुरादीनामीश्वरो नियन्ता ॥ ८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

दशमे शिव आगत्य मृकण्डतनयाय वै। प्रीतो भक्तिप्रदानादि कृतवानिति वर्ण्यते ॥ १ ॥

तदनन्तरं यज्जातं तदाह—स एवमिति ॥ १ ॥ शरणगमनप्रकारं दर्शयति—प्रपन्न इति। हे हरे ज्ञानकाशया ज्ञानवत्प्रकाशमानया यस्य तव मायया विबुधा विद्वांसोऽपि यमेव ज्ञानिन इत्यहङ्कारेण विमुह्यन्ति तस्य ते तव प्रपन्नाभयदं प्रपन्नानां मायाकृत-

भयनिवर्त्तकमङ्घ्रिमूलं प्रपन्नोऽस्मि शरणमागतोऽस्मीत्यन्वयः ॥ २ ॥ श्रीनारायण एव स्वमायादर्शनश्रान्तं श्रीशिवरूपेण सान्त्वयामास तदाह—तमेवमित्यादिना। तं निभृतात्मानं समाहितचित्तं मुनिं दिवि अन्तरिक्षे पर्यटन् रुद्रो ददर्शेत्यन्वयः ॥ ३ ॥ निभृता निश्चला आत्मेन्द्रियाशाया देहेन्द्रियमनांसि यस्य तमिमं हे भगवन् पश्येत्यभाषतेति सम्बन्धः ॥ ४ ॥ निभृतं निश्चलमुदं झषव्रातश्च यस्मिन्सोऽर्णवो यथा तथा येषां त इति शेषः। अस्य मुनेस्तपसः सिद्धिफलं साक्षात्कुरु देहि यतो भवान् सिद्धिदः ॥ ५ ॥ आशिषः अभ्युदयलक्षणाः मोक्षमपि नेच्छति। उतेत्याश्चर्ये। तत्र हेतुमाह—भक्तिमिति ॥ ६ ॥ तथाप्येतेन सह संवदिष्यामः संवादं करिष्यामः। हि यस्मादयं साधुना सह समागमो मेलनमेव परमो लाभः फलम् ॥ ७ ॥ इति पार्वतीं प्रत्युक्त्वा भगवान् रुद्रस्तं मुनिं प्रत्युपेयाय आगतः। तत्र हेतुः सात्त्वतां भगवद्भक्तानां गतिः परमोपकारी। तत्र हेतुमाह—सर्वविद्यानामीशानः प्रवर्त्तकः उपदेष्टा तदुपदेशः सफल एव भवति यतः सर्वदेहिनामीश्वरः अन्तर्यामीति ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

आगत्य दशमे तुष्टः शिवोऽदान्मुनये वरान्। साकं तेन समाभाष्यातिप्रीत्या च सभाजयन् ॥ १ ॥

इत्थं भगवता दत्तं तद्योगमायादर्शनात्मकं वरमुपलभ्य ततो रुद्राद्भगवद्भक्तिस्थैर्यमाकल्पान्तमायुस्त्रैकालिकं ज्ञानं, प्रसङ्गप्राप्तं ब्रह्मवर्चस्विनां पुराणाचार्यत्वं च लेभे इति वक्तुं प्रस्तौति स एवमित्यादिना। स एवमिति। एवं नारायणनिर्मितं योगमायाया आश्चर्यशक्तेः इदं वैभवं अनुभूय, स मुनिः तं नारायणमेव शरणं ययौ। तन्मायातरणायेति शेषः ॥ तदेवाह। प्रपन्नोऽस्मीति। हे हरे, प्रपन्नानामभयं संसृतिभयाभावं ददतीति प्रपन्नाभयदं ते तव अङ्घ्रिमूलं प्रपन्नः अस्मि। यन्मायया यस्य तव मायया हेतुभूतया, विबुधाः अपि ज्ञानकातराः विक्षिप्तचित्ताः सन्त इत्यर्थः। मुह्यन्ति। ज्ञानकाशयेति पाठे ज्ञानवत् प्रकाशमानया मायया मुह्यन्ति। त्वद्भजनं विना विद्वांसोऽपि ज्ञानिनो वयमिति विमोहं प्राप्नुवन्तीत्यर्थः। अतस्तां तर्तुं त्वच्छरणं प्रपन्नोऽस्मीति भावः ॥ २ ॥ तमिति। रुद्राण्या सह वृषेण दिवि पर्यटन्, भगवान् रुद्रः, स्वगणैः वृतः सन्, निभृतात्मानं समाहितचित्तं एवमुक्तप्रकारं तमृषिं ददर्श ॥ ३ ॥ अथेति। अथ उमा भवानी, तं ऋषिं वीक्ष्य गिरिशं समभाषत। हे भगवन्, इम विप्रं, निभृता निश्चलाः आत्मेन्द्रियाशयाः देहेन्द्रिमनांसि यस्य तं पश्य ॥ ४ ॥ निभृतेति। निभृतं निश्चलं उदमुदकं झषव्रातो मीनसमूहश्च यस्मिन् सः, अर्णवः समुद्रः वातानां वायूनामपायस्तस्मिन्, यथा तथा वर्त्तते। अतः अस्य तपसः संसिद्धिं कुरु। यतः साक्षात् भवान् सिद्धिदः भवति। यद्वा। संसिद्धिं फलं साक्षात् कुरु। प्रकटीकुर्वित्यर्थः ॥ ५ ॥ एवमुमोक्तो रुद्रः प्राह द्वाभ्याम्। नैवेति। हे उमे, एषः ब्रह्मर्षिः, कापि कदाचिदपि आशिषोऽभ्युदयलक्षणाः नैव इच्छति। मोक्षं उत कैवल्यमोक्षं चापि नैवेच्छति। यतः अव्यये अविकारिणि भगवति पुरुषे परमात्मनि, परां मुक्तितोऽप्यतिश्रेष्ठां भक्तिं लब्धवान्। भगवदेकान्तिकभक्ता भगवद्भक्तिमृते कमप्यर्थं नैव वाञ्छन्तीति भावः ॥ ६ ॥ तथापीति। यद्यप्येवमस्यास्ति, तथापि हे भवानि, साधुना एतेन मुनिना संवदिष्यामः संवादं करिष्यामः। किं तावन्मात्रेणेत्यत्राह। नृणां यः साधुसमागमः अयं हि अयमेव, परमः लाभः अन्योन्यसमागमोऽन्योन्यस्य लाभ इति भावः। नृणामिति पारोक्ष्यनिर्देशो लोकपरिपाटीप्रदर्शनाभिप्रायकः ॥ ७ ॥ इतीति। सर्वविद्यानां ईशानः, सतां गतिः भगवान्, सर्वदेहिनां ईश्वरः स रुद्रः, इत्युक्तप्रकारेण उमां उक्त्वा, तं मुनिं उपेयाय ॥ ८ ॥

### हिन्दी अनुवाद

## मार्कण्डेयजीको भगवान् शङ्कर का वरदान

श्रीसूतजी कहते हैं—शौनकादि ऋषियो ! मार्कण्डेय मुनि ने इसप्रकार नारायण-निर्मित योगमाया-वैभव का अनुभव किया। अब यह निश्चय करके कि इस माया से मुक्त होने के लिये मायापति भगवान् की शरण ही एकमात्र उपाय है, उन्हीं की शरण में स्थित हो गये ॥ १ ॥ मार्कण्डेयजी ने मन-ही मन कहा—प्रभो ! आप की माया वास्तव में प्रतीतिमात्र होने पर भी सत्य ज्ञान के समान प्रकाशित होती है और बड़े-बड़े विद्वान् भी उसके खेलों में मोहित हो जाते हैं। आप के श्रीचरणकमल ही शरणागतों को सब प्रकार से अभयदान करते हैं। इसलिये मैंने उन्हीं की शरण ग्रहण की है ॥ २ ॥ सूतजी कहते है—मार्कण्डेयजी इस प्रकार शरणागतिकी भावना में तन्मय हो रहे थे। उसी समय भगवान् शङ्कर भगवती पार्वतीजी के साथ नन्दी पर सवार होकर आकाशमार्ग से विचरण करते हुए उधर आ निकले और मार्कण्डेयजी को उसी अवस्था में देखा। उनके साथ बहुत से गण भी थे ॥ ३ ॥ जब भगवती पार्वती ने मार्कण्डेय मुनि को ध्यान की अवस्था में देखा, तब उनका हृदय वात्सल्य स्नेह से उमड़ आया। उन्होंने शङ्करजी से कहा—'भगवन् ! तनिक इस ब्राह्मण की ओर देखिये। जैसे तूफान शान्त हो जाने पर समुद्र की लहरें और मछलियाँ शान्त हो जाती हैं और समुद्र धीर गम्भीर हो जाता है, वैसे ही इस ब्राह्मण का शरीर,

इन्द्रिय और अन्तःकरण शान्त हो रहा है। समस्त सिद्धियों के दाता आप ही हैं। इसलिये कृपा करके आप इस ब्राह्मण की तपस्या का प्रत्यक्ष फल दीजिये' ॥ ४-५ ॥ भगवान् शङ्कर ने कहा—देवि ! ये ब्रह्मर्षि लोक अथवा परलोक की कोई वस्तु नहीं चाहते। और तो क्या, इनके मनमें कभी मोक्ष की भी आकाङ्क्षा नहीं होती। इसका कारण यह है कि घट-घटवासी अविनाशी भगवान् के चरणकमलों में इन्हें परम भक्ति प्राप्त हो चुकी है ॥ ६ ॥ प्रिये ! यद्यपि इन्हें हमारी कोई आवश्यकता नहीं है, फिर भी मैं इनके साथ बातचीत करूँगा; क्योंकि ये महात्मा पुरुष हैं। जीवमात्र के लिये सबसे बड़े लाभ की बात यही है कि संत पुरुषों का समागम प्राप्त हो ॥ ७ ॥ सूतजी कहते हैं—शौनकजी ! भगवान् शङ्कर समस्त विद्याओं के प्रवर्तक और सारे प्राणियों के हृदय में विराजमान अन्तर्यामी प्रभु हैं। जगत् के जितने संत हैं, उनके एकमात्र आश्रय और आदर्श भी वही हैं। भगवती पार्वती से इस प्रकार कहकर भगवान् शङ्कर मार्कण्डेय मुनि के पास गये ॥ ८ ॥

तयोरागमनं साक्षादीशयोर्जगदात्मनोः। न वेद रुद्धधीवृत्तिरात्मानं विश्वमेव च ॥ ९ ॥
भगवांस्तदभिज्ञाय गिरीशो योगमायया। आविशत्तद्गुहाकाशं वायुश्छिद्रमिवेश्वरः ॥ १० ॥
आत्मन्यपि शिवं प्राप्तं तडित्पिङ्गजटाधरम्। त्र्यक्षं[1] दशभुजं प्रांशुमुद्यन्तमिव भास्करम् ॥ ११ ॥
व्याघ्रचर्माम्बरधरं शूलखट्वाङ्गचर्मभिः[2]। अक्षमालाडमरुककपालासिधनुः सह ॥ १२ ॥
बिभ्राणं सहसा भातं विचक्ष्य हृदि विस्मितः। किमिदं कुत एवेति समाधेर्विरतो मुनिः ॥ १३ ॥
नेत्रे उन्मील्य ददृशे सगणं सोमयाऽऽगतम्। रुद्रं त्रिलोकैक[3]गुरुं ननाम शिरसा मुनिः ॥ १४ ॥
तस्मै[4] सपर्यां व्यदधात् सगणाय सहोमया। स्वागतासनपाद्यार्घ्यगन्धस्रग्धूपदीपकैः ॥ १५ ॥
आह चात्मानुभावेन पूर्णकामस्य ते विभो। करवाणि[5] किमीशान येनेदं निर्वृतं जगत् ॥ १६ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—रुद्धधीवृत्तिः ( सः ) साक्षात् ईशयोः जगदात्मनोः तयोः आगमनम् आत्मानं विश्वम् एव च न वेद ॥ ९ ॥ तत् अभिज्ञाय भगवान् ईश्वरः गिरीशः योगमायया तद्गुहाकाशं वायु छिद्रम् इव आविशत् ॥ १० ॥ आत्मनि अपि प्राप्तं तडित्पिङ्ग-जटाधरं त्र्यक्षं दशभुजं प्रांशुम् उद्यन्तं भास्करम् इव ( स्थितं ) व्याघ्रचर्माम्बरधरं शूलखट्वाङ्गचर्मभिः अक्षमालाड्मरुककपाला-सिधनुः सह बिभ्राणं सहसा भातं शिव विचक्ष्य हृदि विस्मितः इदं किं कुतः एव इति मुनिः समाधेः विरतः ॥ ११–१३ ॥ ( सः ) नेत्रे उन्मील्यः सगणं सोमया आगतं त्रिलोकैकगुरुं रुद्रं मुनिः शिरसा ननाम ॥ १४ ॥ ( सः ) स्वागतासनपाद्यार्घ्यगन्ध-स्रग्धूपदीपकैः सगणाय सोमया ( आगताय ) तस्मै सपर्यां व्यदधात् ॥ १५ ॥ ईशान येन इदं जगत् निर्वृतम् आत्मानुभावेन पूर्ण-कामस्य ते विभो किं करवाणि ( इति ) आह ॥ १६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

रुद्धा धियोंतःकरणस्य वृत्तयो येन सः ॥ ९–१० ॥ न केवलं बहिरेवात्मन्यपि प्राप्तं शिवं विचक्ष्य विस्मितः। कथं प्राप्तम्। सहसाऽकस्मादेव हृदि भातम्। कथंभूतम्। तडिद्वत्पिशंगा जटा धारयतीति तथा तम्। त्रीण्यक्षीणि यस्य तम्। शूलादिभिः सहाक्षमालादीन्बिभ्राणमित्यन्वयः। अक्षमालादीनां द्वंद्वैक्यम् ॥ ११–१२ ॥ विस्मयपूर्वकं बहिर्दर्शनमाह। किमिदमिति ॥ १३ ॥ सोमया उमया सहागतं रुद्रं ददृशे। ततो ननाम ॥ १४–१५ ॥ पूर्णकामत्वं व्यनक्ति। येन त्वया जगन्निर्वृतं भवतीति ॥ १५ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

तत् तद्धीवृत्तिरोधनम्। तस्य गुहाकाशं हृदयाकाशम्। भगवांस्तदिति—स्वनिष्ठाभिव्यक्त्यर्थं स्वयं श्रीविष्णावंतर्हिते सतीति गिरिशस्य तद्भक्त्युदासायोगात्। यद्वा–श्रीभगवान्शिवाभिप्रायं विज्ञाय योगमायया गिरिशः सन् मार्कंडेयहृदाऽऽकाशमा-

१. त्र्यक्षमष्टभुजम्। २. तोमरैः। ३. त्रिलोक्यैक०। ४. प्राचीन प्रतिमें 'तस्मै······सहोमया' इस श्लोकार्धके स्थानमें 'विमुच्यात्मसमाधानं तपसा नियमैर्यमैः' ऐसा पाठ है। इसके सिवा वर्तमान प्रतिमें जो २५ वीं संख्याका 'श्रवणाद्दर्शना०······किन्तु सम्भाषणादिभिः' यह श्लोक है। इसको वहाँ न पढ़कर यहाँ ही ( 'विमुच्या०······यमैः' इसके बाद ) पढ़ा गया है। इसके पश्चात् 'स्वागतासन०······'इत्यादि श्लोकोंका पाठ है। ५. करवाम।

विशत्तत्र हेतुः—ईश्वर इति। इदमेवोक्तं स्वामिचरणैः-श्रीनारायण एव स्वमायादर्शनश्रांतं शिवरूपेण सांत्वयामासेति ॥ १०–११ ॥ अत्र द्वंद्वैक्ये पुंस्त्वमार्षम् ॥ १२–१३ ॥ स उभयेति छेदः। 'सोऽचि लोपे चेत्' इति सलोपः ॥१४–१५॥ विभो इति-विभुत्वादेव पूर्णकामोऽसीति भावः। ईशानेति—सर्वेश्वरस्य तव वयं किमपि कर्तुं न शक्ता इति भावः। निर्वृतं प्राप्तानंदम् ॥ १६ ॥

### अन्वितार्थप्रकाशिका

तयोरिति। रुद्धा धियोऽन्तःकरणस्य वृत्तयो येन स मुनिः साक्षादीशयोर्जगदात्मनोः तयोरागमनमात्मानं विश्वं च न वेद ॥ ९ ॥ भगवानिति। तत् तस्य चित्तैकाग्र्येण बहिरज्ञानमभिज्ञाय भगवानीश्वरो गिरिशो वायुश्छिद्रमिव योगमायया तस्य गुहावासमाविशत् ॥ १० ॥ आत्मनीति सार्द्धद्वयम्। न केवलं बहिरेव किन्तु आत्मनि स्वहृदयेऽपि प्राप्तं तडिदित्यादिविशेषण-विशिष्टम्। सहसाऽऽभातं शिवं विचक्ष्य हृदि चित्ते विस्मितोऽभूत्। शिवविशेषणानि स्पष्टानि। शूलादिभिः सहाक्षमालादीन् बिभ्राणम् अक्षमालादीनां द्वन्द्वैक्यम्। पुंस्त्वमार्षम्। "सर्वो द्वन्द्वो विभाषयैकवद्भवति" इति साधु वा ॥ ११–१२ ॥ किमिति अर्द्धम्। ततश्च मुनिः किमिदं भातं कुत एवागतमिति विचिन्त्य समाधेर्विरतोऽभूत्। यद्वा। विस्मितः सन् समाधेर्विरतोऽभूदिति पूर्वाभ्यां सहैकान्वयः ॥ १३ ॥ नेत्रे इति। ततश्च स मुनिः नेत्रे उन्मील्य सगणम् उमया सह आगतं त्रिलोकैकगुरुं रुद्रं ददृशे। तन्नार्षः। ततश्च शिरसा ननाम। सोमयेत्यत्र "सोऽचि लोपे" इति सुलोपः ॥ १४ ॥ तस्मै इति। सगणाय उमया सह आगताय तस्मै स्वागतप्रश्नादिभिः सपर्यां पूजां व्यदधात् ॥ १५ ॥ आह चेति। हे ईशान! येनानन्दरूपेण त्वया इदं जगन्निर्वृतमानन्दितं भवति तस्यात्मानन्दानुभवेनैव पूर्णकामस्य ते तव वयम् अल्पकाः किं करवाम न किमपि कर्तुं शक्ता इत्याह च ॥ १६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

सत्त्वाय ज्ञानवर्द्धकगुणशालिने प्रकर्षेण मृडयति सुखयतीति प्रमडः ॥ १६–२० ॥

### श्रीमद्वीरराघवव्याख्या

तयोरिति। तयोः शर्वशर्वाण्योरागमनमात्मानं देहं विश्वं च न वेद मार्कण्डेय इति कर्तृपदाध्याहारः अवेदने हेतुत्वेन मार्कण्डेयमेव विशिनष्टि—रुद्धधीवृत्तिः रुद्धाः धीवृत्तयः अन्तःकरणवृत्तयो येन सः ॥ ९ ॥ ततो रुद्रः किं चकारेत्यत आह—भगवानिति। योगमायया भगवदुपासनप्रभवया परकायप्रवेशसामर्थ्यात्मिकया आश्चर्यशक्त्या तस्य मुनेर्गुहाकाशं हृदयाकाशमा-विशद्यथा वायुः छिद्रमाविशति तद्वत् ॥ १० ॥ आत्मन्यपीति। अपिस्त्वर्थः आत्मशब्दो हृदयपरः निरुद्धधीवृत्तित्वाद्बहिस्तु न वेदात्मनि त्वचष्टेति सम्बन्धः। कथम्भूतं तडित इव पिङ्गा जटा धारयतीति तथा तम्। त्रीण्यक्षीणि यस्य अष्टौ भुजा यस्य तम् उद्यन्तं भास्करमिव स्थितं प्रांशुं प्रकृष्टरश्मिम् ॥ ११ ॥ व्याघ्रचर्मैवाम्बरम् शूलं च बाणखड्गखेटैश्च सः धनुश्चाक्षमालादींश्च ॥ १२ ॥ बिभ्राणं सहसा अकस्मादेव हृद्यवभातं स मुनिः व्यचष्टेति सम्बन्धः ततः किमिदं कुत एवेति विस्मितः समाधेरुपरतः ॥ १३ ॥ नेत्रे इति। स मुनिरुमया भवान्याऽन्वितम् सोमयेति सन्धिरार्षः सगणं रुद्रं ददृशे शिरसा ननाम च ॥ १४ ॥ तस्मा इति। स्वागतादिभिः सपर्यां व्यदधादकरोत् स्वागतं कुशलागमनप्रश्नः ॥ १५ ॥ आह चेति, उक्तिमेवाह—आत्मानुभावेनेत्यादिना। आत्मानुभावेन स्वप्रभावेन पूर्णाः समग्राः कामाः यस्य तस्य तव हे ईशान! किं करवाम किमिष्टं करवाम न किञ्चिदित्यर्थः। कर्त्तव्यम् इष्टम् हि सुखं सर्वस्य जगतः सुखमापादयितुः किमस्माभिः कर्त्तव्यमस्तीत्याह—येनेदमिति। येन त्वयेदं जगन्निर्वृतं सुखितम् पूर्ववत् "शास्त्र-दृष्ट्या तूपदेशो वामदेववत्" इति न्यायेनान्तरात्मभूतपरमपुरुषदृष्ट्या पूर्णकामत्वजगदानन्दकरत्वे विवक्षिते एवमग्रेपि द्रष्टव्यम् ॥१६॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

तदा मुनिना किमकारीति तत्राह—तयोरिति। अहङ्काररूपेण जगदात्मनारिति अज्ञाने किं कारणमत्राह, रुद्धधीवृत्तिरिति। धीपूर्वकत्वादिन्द्रियवृत्ते स्तद्रोधे सर्वेन्द्रियरोधो युक्त इति रुद्धधीवृत्तिरित्युक्तम् आत्मानं स्वं विश्वम् पुरोवर्त्ति सर्वम् ॥९॥ योगमायया अणिमादियोगसामर्थ्येन छिद्रं रोमकूपादिसुषिरम् ॥ १० ॥ न केवलं बहिरेव आत्मनि स्वस्मिन्नपि ॥ ११ ॥ इषुयुक्तं धनुश्च असिश्च चर्म च तानि तैर्युक्तं करे डमरुकम् अणुतरतन्तुपूर्वाढ्यं चर्म पिनद्धमुखं दारुवाद्यम् ॥ १२ ॥ व्यचष्ट अपश्यत् ॥ १३ ॥ सह उमया सोमामविन्ददित्यादेः ॥ १४–१५ ॥ पूर्णकामत्वं व्यनक्ति येन त्वया जगन्निर्वृतं भवति ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

भगवांस्तदभिज्ञायेति स्वनिष्ठाभिव्यक्त्यर्थं स्वयं श्रीविष्णावन्तर्हिते सतीति गिरिशस्य तदभ्युदाससामर्थ्यायोगात् यद्वा, श्रीभगवान् शिवाभिप्रायं विज्ञाय योगमायया गिरिशः सन् तद्रूपमाविष्टः पुनस्तस्य मार्कण्डेयस्य गुहाकाशं हृदयमाविशदित्यर्थः। तत्र हेतुरीश्वर इति एवमेवोक्तं तैः श्रीनारायण एव स्वमायया दर्शनभ्रान्तं शिवरूपेण सान्त्वयामासेति ॥ १०–१९ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

न केवलं तयोरागमनं वेद अपितु आत्मानमहन्तास्पदं विश्वमिदङ्कारास्पदं च ॥ ९—१३ ॥ सोमया स मार्कण्डेयः उमया सह "सोऽचिलोपेचेत्पादपूरणम्" ( ६।१।१३४ ; इति सोलोपः ॥ १४–१६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

जगदात्मनोः जगतामात्मप्रिययोः ॥ ९–११ ॥ शूलादिभिः सहाक्षमालादीन् ॥१२॥ बिभ्राणम् अक्षमालादीनां द्वन्द्वैक्यम् । सः मार्कण्डेयः उमया सह आगते ददृशे ॥ १३–१५ ॥ निर्वृतं सुखितम् ॥ १६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

यदा तयोरागमनमात्मानं विश्वं च स न वेद तदा तत् तस्य समाहितचित्तत्वेन बहिरज्ञानमभिज्ञाय भगवान् गिरिशो योगमायया तस्य गुहाकाशमाविशदिति द्वयोरन्वयः । तत्र दृष्टान्तमाह—वायुश्छिद्रमिवेति । तथा ज्ञाने प्रवेशे च सामर्थ्यमाह—ईश्वर इति । तयोर्दर्शनस्यावश्यकत्वमाह—साक्षादीशयोर्जगदात्मनोरिति । तथापि तददर्शने हेतुमाह—रुद्धा धियोऽन्तःकरणस्य वृत्तयो यस्य सः ॥ ९–१० ॥ अपिशब्दस्तु शब्दार्थकः । आत्मनि हृदये तु शिवं प्राप्तं विचक्ष्य दृष्ट्वा किमिदं हृदि सहसा भातं कुत एवागतमिति विस्मितः सन् समाधेर्विरतः उत्थितो मुनिर्नेत्रे उन्मील्य सगणं भूतादिगणसहितं सोमया उमया सहागतं ददृश इति त्रयाणामन्वयः । तडिद्वत्पिशङ्गा जटा धारयतीति तथा तम् । त्रीण्यक्षीणि यस्य तम् । प्रांशुमुन्नतम् ॥ ११ ॥ शूलादिभिः सहाक्षमालादीन् बिभ्राणमित्यन्वयः । अक्षमालादीनां द्वन्द्वैक्यम् ॥ १२–१३ ॥ स्वागतप्रश्नादिभिः सगणाय तस्मै सपर्यां पूजां व्यदधात् ॥ १४ ॥ हे ईशान येनानन्दरूपेण त्वया इदं जगन्निर्वृत्तमानन्दितं भवति तस्यात्मानन्दानुभावेनैव पूर्णकामस्य ते तव वयं अल्पकाः किं करवाम न किमपि कर्त्तुं शक्ता इत्याह चेत्यन्वयः ॥ १५ ॥ एवमात्मनोऽकिञ्चित्करत्वमुक्त्वा निर्गुणत्वेन त्रिगुणत्वेन च नमस्करोति—नम इति । शिवाय स्वरूपतः परमानन्दरूपाय सत्त्वाय सत्त्वाधिष्ठात्रे विष्णवे अतएव मृडयति सुखयतीति तथा तस्मै रजोजुषे ब्रह्मणे तमोजुषे घोराय भयङ्कराय रुद्राय तुभ्यं नमः ॥ १६ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तयोरिति । किं च रुद्धा धीवृत्तयोऽन्तःकरणवृत्तयो येन सः मार्कण्डेयः, जगदात्मनोः साक्षात् ईशयोः तयोः शिवयोः, आगमनं, आत्मानं देहं, विश्वं च न वेद एव ॥ ९ ॥ ततो रुद्रः किं चकार तदाह । भगवानिति । गिरिशः कैलासवासी भगवान्, ईश्वरः रुद्रः, तत्तस्यान्तर्वृत्तित्वं अभिज्ञाय विदित्वा, वायुः छिद्रं इव योगमायया भगवदुपासनसंजातपरकायप्रवेशसामर्थ्यात्मिकयाश्चर्यशक्त्या, तस्य मुनेः गुहाकाशं हृदयाकाशं आविशत् ॥ १० ॥ आत्मन्यपीति । अपि यद्यपि, स मुनिः रुद्रं बहिर्न दृष्टवांस्तथापीत्यर्थः । आत्मनि प्राप्तं शिवं विचक्ष्येति तृतीयश्लोकगतेनान्वयः । कथंभूतं, तडिद्वत् पिङ्गानां जटानां धरो धर्त्ता तम्, त्रीणि अक्षीणि यस्य तं, अष्टौ भुजा यस्य तं, दशभुजमित्यपि पाठः । उद्यन्तं भास्करं इव स्थितं, प्रांशुं प्रकृष्टरश्मिम् ॥ ११ ॥ व्याघ्रेति । व्याघ्रचर्मैवाम्बरं यस्य तं, इष्वासिचर्मभिः बाणसङ्गखेटैः सहः, शूलं धनुः अक्षमालाडमरुककपालपरशुं अक्षमालां डमरुकं कपालं परशुं चेत्यर्थः ॥ १२ ॥ बिभ्राणमिति । बिभ्राणं, सहसाऽकस्मादेव हृदि भातं विचक्ष्य, विस्मितः मुनिः, इदं किं, कुतः एव, इति विचार्य, समाधेः विरतः अभूत् । इति त्रयाणामेकसंबन्धः ॥ १३ ॥ नेत्रे इति । मुनिः नेत्रे उन्मील्य, सोमयागतमुमया सहागतं, सगणं स्वगणसहितं, त्रिलोकैकगुरुं रुद्रं ददृशे । ततः शिरसा ननाम ॥ १४ ॥ तस्मा इति । उमया सह आगताय सगणाय तस्मै रुद्राय, स्वागतं कुशलागमनप्रश्नश्च आसनमासनप्रदानं च पादार्घः पाद्यप्रदानं च गन्धो मलयागर्वादेर्गन्धार्पणं च स्रजो माल्यानामर्पणं च धूपश्च दीपश्च तयोरर्पणं च तैः, सपर्यां पूजां व्यदधात चकार ॥ १५ ॥ आहेति । हे विभो, हे ईशान, आत्मानुभावेन स्वप्रभावेण पूर्णकामस्य, येन त्वया इदं जगत् निर्वृतं सुखितं जायते तथाभूतस्य, ते तव किं करवाम, इति आह च ॥ १६ ॥

### हिन्दी अनुवाद

उस समय मार्कण्डेय मुनि की समस्त मनोवृत्तियाँ भगवद्भाव में तन्मय थीं। उन्हें अपने शरीर और जगत् का बिल्कुल पता न था। इस लिये उस समय वे यह भी न जान सके कि मेरे सामने सारे विश्वके आत्मा स्वयं भगवान् गौरी-शङ्कर पधारे हुए हैं ॥ ९ ॥ शौनकजी ! सर्वशक्तिमान् भगवान् कैलासपति से यह बात छिपी न रही कि मार्कण्डेय मुनि इस समय किस अवस्था में हैं। इसलिये जैसे वायु अवकाश के स्थान में अनायास ही प्रवेश कर जाती है, वैसे ही वे अपनी योगमाया से मार्कण्डेय मुनि के हृदयाकाश में प्रवेश कर गये ॥ १० ॥ मार्कण्डेय मुनि ने देखा कि उनके हृदय में तो भगवान् शङ्कर के दर्शन

हो रहे हैं। शङ्करजी के शिरपर बिजली के समान चमकीली पीली-पीली जटाएँ शोभायमान हो रही हैं। तीन नेत्र हैं और दस भुजाएँ। लंबा-तगड़ा शरीर उदयकालीन सूर्य के समान तेजस्वी है ॥ ११ ॥ शरीर पर बाघाम्बर धारण किये हुए हैं और हाथों में शूल, खट्वांग, ढाल, रुद्राक्षमाला, डमरू, खप्पर, तलवार और धनुष लिये हैं ॥ १२ ॥ मार्कण्डेय मुनि अपने हृदय में अकस्मात् भगवान् शङ्कर का यह रूप देख कर विस्मित हो गये। 'यह क्या है? कहाँ से आया?' इस प्रकार की वृत्तियों का उदय हो जाने से इन्होंने अपनी समाधि खोल दी ॥ १३ ॥ जब उन्होंने आँखें खोलीं, तब देखा कि तीनों लोकों के एकमात्र गुरु भगवान् शङ्कर श्रीपार्वती जी तथा अपने गणों के साथ पधारे हुए हैं। उन्होंने उनके चरणों में माथा टेक कर प्रणाम किया ॥ १४ ॥ तदनन्तर मार्कण्डेय मुनि ने स्वागत, आसन, पाद्य, अर्घ्य, गन्ध, पुष्पमाला, धूप और दीप आदि उपचारों से भगवान् शङ्कर, भगवती पार्वती और उनके गणों की पूजा की ॥ १५ ॥ इसके पश्चात् मार्कण्डेय मुनि उनसे कहने लगे—'सर्वव्यापक और सर्वशक्तिमान् प्रभो! आप अपनी आत्मानुभूति और महिमा से ही पूर्ण काम हैं। आप की शान्ति और सुख से ही सारे जगत् में सुख-शान्ति का विस्तार हो रहा है, ऐसी अवस्था में मैं आप की क्या सेवा करूँ? ॥ १६ ॥

नमः शिवाय [१]शान्ताय सत्त्वाय प्रमृडाय च। रजोजुषे[२]ऽति[३]घोराय नमस्तुभ्यं तमोजुषे ॥ १७ ॥

सूत उवाच

एवं स्तुतः स [४]भगवान्महादेवः सतां गतिः। [७]परितुष्टः प्रशान्तात्मा प्रहसंस्तमभाषत ॥ १८ ॥

श्री[९]भव उवाच

वरं वृणीष्व नः कामं वरदेशा वयं त्रयः। अमोघं दर्शनं येषां मर्त्यो यद् विन्दतेऽमृतम् ॥ १९ ॥

ब्राह्मणाः साधवः शान्ता निःसङ्गा भूतवत्सलाः। एकान्तभक्ता अस्मासु निर्वैराः समदर्शिनः ॥ २० ॥

सलोका लोकपाला[१०]स्तान् वन्दन्त्यर्चन्त्युपासते। अहं च भगवान् ब्रह्मा स्वयं च हरिरीश्वरः ॥ २१ ॥

न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षते। नात्मनश्च जनस्यापि यद् युष्मान् वयमीमहि ॥ २२ ॥

न ह्यम्मयानि तीर्थानि न देवाश्चेतनोज्झिताः। ते पुनन्त्युरुकालेन यूयं दर्शनमात्रतः ॥ २३ ॥

ब्राह्मणेभ्यो नमस्यामो येऽस्मद्रूपं त्रयीमयम्। बिभ्रत्यात्मसमाधानतपःस्वाध्यायसंयमैः ॥ २४ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—शिवाय शान्ताय सत्त्वाय प्रमृडाय रजोजुषे अतिघोराय तमोजुषे तुभ्यं नमः ॥ १७ ॥ सूतः उवाच—एवं स्तुतः सः सतांगतिः परितुष्टः प्रशान्तात्मा भगवान् महादेवः प्रहसन् तम् अभाषत ॥ १८ ॥ श्रीभवः उवाच—नः वरं वृणीष्व वयं त्रयः कामं वरदेशाः येषां दर्शनम् अमोघ मर्त्यः यत् अमृतं विन्दते ॥ १९ ॥ ब्राह्मणाः साधवः शान्ताः निःसङ्गाः भूतवत्सलाः एकान्तभक्ताः अस्मासु निर्वैराः समदर्शिनः तान् सलोकाः लोकपालाः वन्दन्ति अर्चन्ति उपासते अहं भगवान् ब्रह्मा स्वयम् ईश्वरः हरिः ( त्रयः अपि वन्दामहे अर्चामः उपास्महे ) च ॥ २०–२१ ॥ ते मयि अच्युते अजे आत्मनः जनस्य अपि च अणु अपि भिदां न चक्षते तत् युष्मान् वयम् ईमहि ॥ २२ ॥ अम्मयानि तीर्थानि चेतनोज्झिताः देवाः ( दर्शनमात्रतः ) न उरु कालेन ते पुनन्ति यूयं दर्शनमात्रतः ( पुनन्ति ) ॥ २३ ॥ ब्राह्मणेभ्यः नमस्यामः ये ( ब्राह्मणाः ) आत्मसमाधानतपःस्वाध्यायसंयमैः त्रयीमयम् अस्मद्रूपं बिभ्रति ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

निर्गुणत्वेन त्रिगुणत्वेन च नमस्करोति। नमः शिवाय निर्गुणाय। सत्त्वाय सत्त्वाधिष्ठात्रे। अत एव प्रमृडयति सुखयतीति तथा तस्मै ॥ १७–१८ ॥ नोऽस्मत्तः। त्रयो ब्रह्मविष्णुमहेश्वराः। यद्येभ्यः। ते वयम् ॥ १९ ॥ वरदानादिना भवत्सेवे-

---

१. देवाय नित्याय प्रमृ०। २. जुषेऽघ्य। ३. भगवानादिदेवः। ७. प्राचीन प्रति में 'परितुष्टः""भाषत। इस श्लोकार्ध के स्थान में 'उवाच""परवचो देवदेवो महेश्वरः।' ऐसा पाठ है। ९. श्रीभगवान् उवाच। १०. लाश्च न मा विन्दन्त्युपासितुम्।

वास्माभिः क्रियते न त्वनुग्रहो जगद्वंद्यत्वाद्भवतामिति ब्राह्मणान्स्तौति ब्राह्मणा इत्यादि। ये साधवः सदाचाराः। शांता मत्सरादिरहिताः। निःसंगा निष्कामाः ॥ २० ॥ न केवलं त एव किंत्वहं चेत्यादि ॥ २१ ॥ पूज्यतमत्वे हेत्वंतरमाह। नेति। अण्वप्यणुमात्रमपि न चक्षते न पश्यंति तत्तस्मादेवंभूतान्युष्मान् ईमहि भजेम ॥ २२–२३ ॥ ब्राह्मणेभ्यो बाह्मणान्। आत्मसमाधानं चित्तकाग्र्यम्। तप आलोचनम्। स्वाध्यायोऽध्ययनम्। संयमो वागादिनियमस्तैः ॥ २४ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अत एव सत्त्वाधिष्ठातृत्वादेव। मृडयति सुखयति 'मृड—सुखने' इति धातुः। अपिशब्दात्तमोजुषेऽप्यमूढायेत्यर्थः ॥ १७–१८ ॥ वरदानामिंद्रादिदेवानामीशाः स्वामिनः। अमोघं फलवत् ॥ १९ ॥ भूतवत्सला दयालवः, अत एव निर्वैराः। अस्मासु त्रिषु। समदर्शिनः अभेदबुद्धयः। क्रमसंदर्भस्तु—यतस्ते समदर्शिनस्तस्मान्मदादिषु या भिदा वर्तते तामण्वपि यथा स्यात्तथा नाचक्षत इति सत्यम्, तत्तेभ्योपि ह्यैकांतभक्तान्युष्मान्वयमीमहि प्रियत्वेन जानीम इत्यर्थः। तदुक्तं तेनैव चतुर्थे—"अथ भागवता यूयं प्रियाः स्थ भगवान्यथा। न मद्भागवतानां च प्रेयानन्योऽस्ति कर्हिचित्।" इति। अभेदश्चेत्तर्हि मार्कंडेयस्य समाधिविरतिर्न स्यात्तत्राभेददृष्टेरुद्रंकनेपि 'स्वयञ्च हरीरिश्वरः' इत्यनेन हरेरेव प्राधान्यमुक्तं, तस्यैव स्वयमीश्वरत्वोक्तेः। प्रथमेऽपि—'पार्थिवाद्दारुणो धूमः' इत्यादिना। ब्राह्मेऽपि शिवेन तथैवोक्तम्—"यो हि मां द्रष्टुमिच्छेत ब्रह्माणं वा पितामहम्। द्रष्टव्यस्तेन भगवान्वासुदेवः प्रतापवान्।" परब्रह्मस्वरूपस्य तस्य ज्ञानेन सर्वज्ञानसंभवादिति ॥ २० ॥ त एव लोकलोकपाला एव। वंदंतीत्यार्षं परस्मैपदम् ॥ २१ ॥ एवम्भूतान् अभेददर्शिनः ॥ २२ ॥ अम्मयानि जलस्वरूपाणि तीर्थानि पुष्करादीनि किं न पुनंति किन्तु पुनन्त्येव, चेतनोज्झिता मृत्पाषाणमया देवा न पुनंति किन्तु पुनंत्येव, तदाह—ते तीर्थदेवा उरुकालेन बहुसेवनेन। यूयं ब्राह्मणाः। क्वचित् 'दर्शनादेव साधवः' इति पाठोऽपि स्थानांतरे पठ्यते, तत्र साधुशब्देन भगवन्निष्ठावन्तो वेदानुयायिन एव ज्ञेया न तु त्रिवर्णेतरा अपीति ॥ २३ ॥ ब्राह्मणशब्देन पारिभाषिकब्राह्मणशब्दो—ब्रह्माधीते वेद वा ब्राह्मण इत्येवंरूपो न ग्राह्य इत्याह—येऽस्मद्रूपं मुख्यमस्माकं रूपं वेदत्रयीरूपमात्मसमाधानादिभिर्बिभ्रति। संयम इंद्रियजयः। स्वाध्यायपदेनाध्यापनमपि गृह्यते। तथा च क्षत्रियवैश्यौ न ग्राह्यौ किन्तु केवलं विप्र एव ब्राह्मण इति। ब्राह्मणताविवरणन्तु 'जन्माद्यस्य' इति व्याख्याशत्यां विशेषतः कृतमस्तीत्युपरम्यते ॥ २४ ॥

### अन्वितार्थप्रकाशिका

नम इति। शिवाय निर्गुणायापि सत्त्वाय सत्त्वाधिष्ठात्रे अत एव शान्ताय प्रमृणयति सुखयतीति तथा तस्मै रजोजुषे अपि अघोराय एवं तमोजुषेऽपि अमूढायेति शेषः। तुभ्यं नमः ॥ १७ ॥ एवमिति। स्फुटम् ॥ १८ ॥ वरमिति। नोऽस्मत्तः कामं यथेष्टं वरं वृणीष्व। यतो वयं ब्रह्मविष्णुरुद्रास्त्रयोऽपि वरदानामीशा इति येषामस्माकं दर्शनममोघं यत् येभ्यः मर्त्यः अमृतं मोक्षमपि विन्दते ॥ १९ ॥ ब्राह्मणा इति। ये ब्राह्मणाः साधवः सदाचारनिष्ठाः शान्ताः मत्सरादिरहिताः निःसङ्गाः निष्कामाः भूतेषु वत्सलाः कृपायुक्ताः अस्मासु त्रिषु एकान्तभक्ताः समदर्शिनश्च भवन्ति ॥ २० ॥ सलोकेति। ये एवंभूता ब्राह्मणास्तान् लोकैः जनैः सहिता लोकपाला वन्दन्ति प्रणमन्ति। तङभाव आर्षः। अर्चन्त्युपासते च तथाऽहं ब्रह्मा हरिश्च त्रयोऽपि वन्दामहे अर्चाम उपास्महे च ॥ २१ ॥ नेति। यतस्ते ब्राह्मणा अस्मासु त्रिषु तथात्मनश्च जनस्य चापि अणुमात्रमपि भिदां न चक्षते न पश्यन्ति। तत्तस्मादेवंभूतान् युष्मान् ब्राह्मणान् वयमीमहि भजेम ॥ २२ ॥ न हीति। अम्मयानि जलरूपाणि तीर्थानि चेतनोज्झिताः पाषाणमयाः देवाः दर्शनमात्रतो हि यस्मान्न पुनन्ति। किन्तु बहुकालेन ते सेविताः पुनन्ति। यूयं साधवस्तु दर्शनमात्रतः पुनीथ। अतो वयं कृतार्था इति शेषः ॥ २३ ॥ ब्राह्मणेभ्य इति। अतो ये आत्मसमाधानं चित्तैकाग्र्यं तपः आलोचनं स्वाध्यायः अध्ययनं संयमो वागादिनियमस्तैः त्रयीमयं वेदत्रयात्मकमस्मद्रूपं बिभ्रति। तेभ्यो ब्राह्मणेभ्यः तान् ब्राह्मणान् वयमपि नमस्यामः ॥ २४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्।

न ते मयीति अजे मयि चाच्युते ब्रह्मशरीरके मयि अच्युते इत्यर्थः "स ब्रह्मा स शिवः" इति श्रुतिः भगवतः सर्वान्तरात्मत्वात् भेदनिषेधस्यान्तरात्मत्वनिबन्धनत्वमेव स्फुटीकृतं नात्मनः जनस्यापीति नहिभेदं च वक्ष्यत इत्यन्वयः ॥ २१–२८ ॥

### श्रीमद्वीरराघवव्याख्या

यतो न किञ्चित्करवामातः केवलमञ्जलिमात्रं करवामेत्यभिप्रेत्य प्रणमति—नम इति शिवाय लोकमङ्गलकराय शान्तायोर्मिषट्करहिताय प्रमृडाय प्रकर्षेण मृडयति सुखयतीति प्रमृडस्तस्मै सत्त्वाय शुद्धसत्त्वमयशरीरविष्णुरूपायेत्यर्थः। रजोजुषे ब्रह्मरूपाय तमोजुषे प्रकृतरुद्ररूपाय अतएव घोराय घोररूपाय तुभ्यं नमस्करोमीत्यर्थः ॥ १७ ॥ इत्थं मार्कण्डेयेन स्तुतो रुद्रस्तं भाषत इत्याह

सूतः, एवमिति। प्रसन्नात्मा प्रसन्नचित्तः स भगवान् रुद्रः ॥ १८ ॥ भाषणमेवाह—वरमिति सन्नभिः। मत्मत्तः (नोऽस्मभ्यं) कामं यथेष्टं वरं वृणीष्व यतो वयं त्रयः ब्रह्मविष्णुरुद्राः वरदेशाः वरदश्रेष्ठाः न मे किञ्चिदपेक्षितमित्यत आह, अमोघमिति। येषां त्रयाणामस्माकं दर्शनममोघमव्यर्थम् अतो यत्किञ्चिद्वृणीष्वेति भावः। तर्हि अमृतत्वं दातुमर्हसि प्रभवसि किमित्यत्राह—मर्त्यो यद्विन्दते ऽमृतमिति। यत् येभ्यस्त्रिभ्योऽमृतं मोक्षं विन्दते सद्वारकोपासनाभ्यामिति भावः। साक्षाच्छ्रीभगवदुपासनस्यापि ब्रह्मरुद्रयोः श्रीभगवद्विभूतित्वानुसन्धानस्यावश्यकत्वात् ॥ १९ ॥ यथा मुनिः शास्त्रदृष्टया आत्मानं तुष्टाव तथा स्वयमपि तद्दृष्ट्या ब्राह्मणान्स्तौति—ब्राह्मणा इति द्वाभ्याम्। ये साधुत्वादिगुणयुक्ताः ब्राह्मणास्तान् सलोका लोकपाला इन्द्रादयः वन्दन्त्यर्चन्त्युपासते इति सम्बन्धः साधुलक्षणविवक्षया ब्राह्मणान् विशिनष्टि शान्ताः रागाद्यकलुषितचित्ताः निःसङ्गाः विषयसङ्गरहिता एकान्तभक्ता इत्यस्य भगवतीत्यादि ज्ञेयम् अस्मासु रुद्रादिषु निर्वैराः श्रीभगवद्विभूतित्वानुसन्धानेन वैररहिताः, कुतः ? भूतवत्सलाः सर्वभूतेषु वात्सल्ययुक्ताः किं बहुना समदर्शनाः कृत्स्नस्यापि जगतो भगवद्विभूतित्वानुसन्धानेन समबुद्धयः ॥ २० ॥ सलोका देवमनुष्यादि-जनसहिताः लोकपाला इन्द्रादयः किं बहुना वर्णनेनेत्याह—अहमिति। वयमपि त्रयः रुद्रादयः तान् वन्दामहे अर्चयामहे उपास्महे चेत्यर्थः ॥ २१ ॥ तत्र हेतुमाह—नैते इति। एते साधवा ब्राह्मणाः नते इति पाठे ते ब्राह्मणाः अजे अच्युते मयि चाच्युते चेत्यन्वयः। ब्रह्मशरीरके मच्छरीरके चाच्युते इत्यर्थः। अण्वपि ईषदपि यथातथा भिदां भेदं न चक्षते न पश्यन्त्यजं माञ्चाच्युतात्पृथक्सिद्धं न पश्यन्तीति विचिक्षितार्थः "स ब्रह्मा स शिवः सेन्द्रः" इत्यादिश्रुत्या श्रीभगवतो ब्रह्मादिशरीरकत्वेन शरीरात्मनिवन्धनसामानाधि-करण्यावगमात्परतन्त्रभेदस्यानिषेध्यत्वात्स्वतन्त्रभेददर्शनमेवात्र निषिध्यते इममर्थं स्वयमेव स्फुटीकुर्वन्नाह, नेति। आत्मनः स्वस्य जनस्य स्वेतरस्य चापि अच्युते भिदां न चक्षते इत्यन्वयः। आत्मजनशब्दाभ्याम् अचित्संसृष्टजीवा उच्यन्ते न हि तैः सह ब्रह्मणः स्वरूपाभेदो अभेदवादिनोपि सम्मतः अचिदंशेन तादात्म्यस्य तन्मतेऽप्यनिष्टत्वान्नहि जनशब्दश्चेतनस्वारसिकः येन तत् स्वरूपाभेदः सिद्ध्येत अतोत्राचिदंशेन यादृशो भेदनिषेधः स्वातन्त्र्यविषयस्तादृश एव चिदंशेनापीति दिक् यतो भिदां च न चक्षते तत्तस्मा-द्वयमपि युष्मानीमहि भजाम तत्र सलोका लोकपाला अहं ब्रह्मा चेति वयं भगवद्विशेषाधिष्ठानत्वबुद्ध्या युष्मान्भजाम अच्युतस्तु "ज्ञानी त्वात्मैव मे मतम्" इति "ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्" इत्युक्त्यभिसन्धिविशेषेण भजतीति विशेषण इति भावः ॥ २२ ॥ तद्दर्शनेनात्मनः कृतज्ञतामभिप्रेत्य स्तौति—नहीति। अम्मयानि जलमयानि तीर्थानि न दर्शनमात्रतः पुनन्ति किन्तु चिरं स्नानादिभिस्तानि पुनन्ति, तथा मृच्छिलामयाः देवता प्रतिकृतयश्च न दर्शनमात्रतः पुनन्ति चिरमावाहनादिषोडशोपचार-पूजादिभिरिति भावः। यूयं दर्शनमात्रादेव पुनीतेति विशिष्टास्तीर्थादिभ्यो यूयमिति भावः ॥ २३ ॥ यथा तेन "नमःशिवाय" इत्यादिना नमस्कृतं तथास्वयमेव प्रणमति ब्राह्मणेभ्य इति। नमस्यामः नमस्कुर्मः तान्विशिनष्टि, ये ब्राह्मणाः त्रयीमयं (वेद) त्रयीप्रचुरमात्मसमाध्यादिभिः सहितं रूपं बिभ्रति स्मेति विस्मये ॥ २४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सत्वाय पराक्रमयुक्ताय सद्ब्रह्म शरणं याति गच्छतीति सत्वस्तस्मै वा प्रमृडाय प्रकृष्टपालाय तत्तद्वस्तुयोग्यतानुसारेण रक्षाद्यर्थं सत्त्वादिगुणप्रवर्तकत्वात्सत्त्वाय रजोजुषे इत्युक्तम् ॥ १७–१८ ॥ त्रयो ब्रह्मादयो येषां त्रयाणां दर्शनममोघं तत्र हेतुमाह, मर्त्य इति। मर्त्योऽमृते मुक्तिं विन्दते यद्यस्माद्दर्शनात् यभ्योऽमृतं वा ॥ १९ ॥ ब्राह्मणभक्तिं दर्शयति—ब्राह्मणा इति। ब्राह्मणा ब्रह्मवादैकनिष्ठाः साधवो रागादिदोषविधुराः शान्ताः भगवन्निष्ठापारङ्गताः अत एव निःसङ्गाः दुष्टसङ्गरहिताः अत एव भूतेषु सज्जनेषु वत्सलाः स्निग्धा एकान्तेन विष्णुरेव सर्वोत्तमो नान्य इति निर्णयेनास्मासु भक्ताः योग्यतातिरेकेण वैरशून्याः समं ब्रह्म तद्दर्शनं येषां ते तथा ॥ २० ॥ य एवंविधास्तान्वदन्ति स्तुवन्तीत्यादिसपर्यां कुर्वन्त इत्यर्थः। अहं ब्रह्मा च हरेः पृथक् स्वतन्त्रौ न तदधीनावेव तत्र हेतुरीश्वर इति ईर्लक्ष्मीः शं रूपः शतानन्दस्तयोर्वर ईशादीशानाच्च वर इति यस्मात्तस्मात् द्वयोर्वर इत्युक्तम् यूयं के इत्यतो वाह, अहमिति। स्वयमित्यनेन हरेरेव स्वातन्त्र्यं नावयोरावां तदधीनाविति स्पष्टमुक्तम् अत्राप्ययमेव हेतुरीश्वर इति 'ईश ऐश्वर्ये' इति धातोरनुपहतैश्वर्यमूर्तित्वादीश्वर इत्युच्यते ॥ २१ ॥ इतोपि ब्राह्मणा एव पूज्या यत एवंविधं तत्त्वं त एव जानन्ती-त्याह—नत इति। ते ब्राह्मणा मयि स्थितत्वान्मयीत्युच्यमाने हरावजे च स्थितत्वादजशब्दवाच्ये च पृथक् स्थिते अच्युते च भिदा-मण्वपि परमाणुमात्रमपि न चक्षते न पश्यन्ति। किं च जनस्य जननवतः स्थावरजङ्गमरूपस्य प्रपञ्चस्यात्मनोन्तर्यामिणश्च भिदां न पश्यन्ति अपिशब्देन 'एको देवः' इति श्रुतिं प्रमाणयति। तत्तस्माद्वयम् युष्मानखिलैः पूज्यानीमहि बुध्यामहे यद्वा, मयि भिदामन्यथा-ज्ञानं विष्णुरयमिति किञ्चित्साम्येनापि न पश्यन्त्यपितु ततो विलक्षणत्वेन तत्कटाक्षाहितशक्तित्वेन जगत्संहर्तृत्वेन ततोऽनन्तां-शाहीनत्वेनैव मत्तत्त्वं पश्यन्ति चतुर्मुखे यथास्थितं पश्यन्ति। अच्युते च तथा यथाश्रुतिविहितमात्मनश्चेतनसमुदायस्य जन्यत इति जनो देहस्तदादिजडस्यापि तत्त्वं यथातथा अन्यथा न पश्यन्ति ॥ २२ ॥ सर्वस्माच्छुद्धिहेतुत्वाच्च ब्राह्मणा एव पूज्या इत्याह,

नहीति ॥ २३ ॥ अस्माभिश्च सम्भाव्यत्वाद्विप्रा एव श्रेयांस इत्याह, ब्राह्मणेभ्य इति । त्रयीमयं वेदमुख्यप्रतिपाद्यम् आत्मनि सम्यगाधानमवस्थानं सन्निधानलक्षणं यस्य तत्तथा तप आलोचनम् स्वाध्यायोऽध्ययने संयमो वागादिनियमस्तैर्बिभ्रति 'आचारहीनं न पुनन्ति वेदा' इत्यतस्तप इत्यादि ॥ २४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

ब्राह्मणा इति । यतस्ते समदर्शनास्तस्मात् मदादिषु या भिदा वर्त्तते तामण्वपि यथा स्यात्तथा न चक्षत इति सत्यमेव किन्तु, तत्तोभ्योपि युष्मान् हर्य्येकान्तभक्तान् वयमीमहि प्रियत्वेन जानीम इत्यर्थः । तदुक्तं तेनैव चतुर्थे 'अथ भागवता यूयं प्रियाः स्थ भगवान् यथा । न मद्भागवतानां च प्रेयानन्योस्ति कर्हिचित्' इति अभेदश्चेत्तर्हि मार्कण्डेयस्य तदनुभवे समाधिविरतिर्न स्यात् अत्राभेदद्दष्टैरुद्दङ्कनेपि स्वयञ्च हरिरीश्वर इत्यनेन हरेरेव प्राधान्यमुक्तं तस्यैव स्वयमीश्वरत्वं चोक्तं प्रथमस्कन्धे 'पार्थिवाद्दारुणो धूमः' इत्यादि ब्रह्मपुराणे शिववाक्यमपि तथा—

यो हि मां द्रष्टुमिच्छेत ब्रह्माणं वा पितामहम् । द्रष्टव्यस्तेन भगवान् वासुदेवः प्रतापवान् ॥

इति परब्रह्मरूपस्य तस्य विज्ञानेन सर्वविज्ञानादिति भावः ॥ २०–२२ ॥ नहीति । देवा इन्द्रादिप्रतिमा न तु भगवत्प्रतिमा युष्माभिरप्याराध्यत्वादिति भावः ॥ २३ ॥ नमस्कारे हेतुः—यस्मादिति । त्रयीमयं वेदलक्षणम् उपकारत्वादिति भावः ॥ २४–२५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

नोऽस्मत्तः यत् येभ्यः ॥ १७–१९ ॥ ये ब्राह्मणा अस्मास्वेकान्तभक्तास्तान् लोकपाला एव वन्दन्ते ॥ २० ॥ न केवलं लोकपाला एव वन्दन्ते किन्त्वहं चेत्यादि ॥ २१ ॥ अण्वपि अणुमात्रमपि न चक्षते न पश्यन्ति यथैवास्मासु भेदं न पश्यन्ति तथैवात्मनः स्वस्य जनस्यापि सुखदुःखादिषु भेदं न पश्यन्ति, तस्मादेवंभूतान् युष्मान् ईमहि भजेम ॥ २२–२३ ॥ आत्मसमाधानं विष्णुध्यानम् ॥ २४–२५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्रकर्षेण मृडयति सुखयतीति स तथा ॥ १७–१८ ॥ नोऽस्मत्तः यत् येभ्यः ॥ १९–२१ ॥ साधुत्वादयः समदर्शित्वान्ता ब्राह्मणानां सर्वपूज्यत्वे हेतवः उक्तास्तत्र समदर्शित्वं प्रपञ्चयति—नेति । ते ब्राह्मणाः साधुत्वादिधर्मवन्तः मयि अजे चकारादीन्द्रादिषु आत्मनः क्षेत्रज्ञस्य जनस्य अपि शब्दात्प्रकृतिकालयोः सर्वस्य कार्यकारणस्य च अच्युते जगत्कारणे भगवति अण्वपि भिदां न चक्षते पश्यन्ति चेतनाचेतनब्रह्मपदार्थानामल्पज्ञत्वजडत्वसर्वज्ञत्वादिभिः तत्तदसाधारणैर्धर्मैः स्वरूपेण भिन्नत्वेपि तत्पृथक् स्थितिप्रवृत्त्याद्यभावात् अभिन्नत्वमित्यर्थः 'स ब्रह्मा स शिवः सेन्द्रः' 'अयमात्मा ब्रह्म' सर्वं खल्विदं ब्रह्म' इत्याद्याः श्रुतयोऽत्रानुसन्धेयाः तत्तस्मात् वयं युष्मानीमहि भजेम ॥ २२–२५ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एवं स्तुतः स रुद्रस्तं मुनिमभाषत ॥ १७ ॥ तद्भाषणमाह—नोऽस्मत्तः कामं यथेष्टं वरं वृणीष्व । यतो वयं ब्रह्मविष्णुरुद्रास्त्रयोऽपि वरदेशा इति । तथापि मम न किञ्चिदपेक्षितमिति चेत्तत्राह—अमोघमिति । यत् येभ्योऽमृतं मोक्षमपि विन्दते ॥१८॥ वरदानादिनाऽस्माभिर्भवत्सेवैव क्रियते न त्वनुग्रहः । भवता जगद्वन्द्यत्वादित्याशयेन ब्राह्मणान्स्तौति—ब्राह्मण इत्यादिना । साधवः सदाचारनिष्ठाः । शान्ताः मत्सरादिरहिताः । निस्सङ्गा निष्कामाः । भूतेषु वत्सलाः कृपायुक्ताः । अस्मासु त्रिषु भक्ता यतः समदर्शिनः ॥ १९ ॥ एवम्भूता ब्राह्मणास्तान् लोकैः जनैः सहिता लोकपाला वन्दन्त्यर्चन्त्युपासते । तथाऽहं ब्रह्मा हरिश्च त्रयोऽपि वन्दाम अर्चाम उपास्महे ॥ २० ॥ पूज्यतमत्वे हेत्वन्तरत्वमप्याह—नेति । यतस्ते ब्राह्मणा अस्मासु त्रिषु तथाऽऽत्मनश्च जनस्य चापि अणुमात्रमपि भिदां न चक्षते न पश्यन्ति । तत्तस्मादेवम्भूतान् युष्मान् ब्राह्मणान वयमीमहि भजेम ॥ २१ ॥ युष्मद्दर्शनेनैव कृतार्था वयमित्याह—न हीति । तीर्थानि दर्शनमात्रतो हि यस्मान्न पुनन्ति किन्तु बहुकालेन ते सेविताः पुनन्ति यूयं साधवस्तु दर्शनमात्रतः पुनीथ अतो वयं कृतार्था इति शेषः ॥ २२ ॥ अतो ये आत्मसमाधानं चित्तैकाग्र्यं तपः स्वाध्यायः आलोचनं अध्ययनं संयमो वागादिनियमस्तैः त्रयीमयं वेदत्रयात्मकमस्मद्रूपं बिभ्रति तेभ्यो ब्राह्मणेभ्यः तान् ब्राह्मणान् नमस्याम इत्यन्वयः ॥ २३ ॥ किञ्च येषां श्रवणादितो महापातकिनोऽपि जात्यशुद्धा अन्त्यजाश्च शुद्ध्येरन् तेषां भाषणसत्कारादिभिः शुद्धौ किमु वक्तव्यमतो वयं तैः कृतार्था इत्यर्थः ॥ २४ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

यतो न किंचित् कर्तुं शक्नुमोऽतः केवलमञ्जलिमात्रं करवामेत्यभिप्रेत्य प्रणमति। नम इति। शिवाय लोकमङ्गलकराय, शान्तायोर्मिषट्करहिताय, प्रकर्षेण मृडयति सुखयतीति प्रमृडस्तस्मै, सत्त्वाय शुद्धसत्त्वमयशरीरविष्णुरूपाय, रजोजुषे ब्रह्मरूपाय, तमोजुषे रुद्ररूपाय तथापि, अघोराय तुभ्यं नमः नमः। मुहुर्मुहुर्नमस्करोमीत्यर्थः। 'अत्र शास्त्रदृष्ट्या तूपदेशो वामदेववादिवत्' इति न्यायेनान्तरात्मभूतपरमपुरुषदृष्ट्या पूर्णकामत्वजगदानन्दकरत्वमङ्गलकरत्वसत्त्वरूपत्वादीनि विवक्षितानि॥ १७॥ इत्थं मार्कण्डेयेन स्तुतो रुद्रस्तमभाषतेत्याह सूतः। एवमिति। एवं स्तुतः मार्कण्डेयेन कृतस्तवः, सतां सत्पुरुषाणां गतिः अत एव परितुष्टः, प्रसन्नात्मा प्रसन्नचित्तः, आदिदेवः भगवानैश्वर्ययुक्तः स रुद्रः, प्रहसन् हासं कुर्वन् सन्, तं मार्कण्डेयं प्रति अभाषत॥ १८॥ भाषणमेवाह वरमिति सप्तभिः। वरमिति। हे मुने, नोऽस्मभ्यं कामं यथेष्ट वरं वृणीष्व। यतः वयं त्रयः ब्रह्मविष्णुरुद्राः वरदेशाः वरदश्रेष्ठाः। न मे किंचिदपेक्षितमित्यत्राह। अमोघमिति। येषां त्रयाणामस्माकं दर्शनं, अमोघं व्यर्थं न भवति। अतो यत्किंचिद्वृणीष्वेति भावः। तर्हि अमृतत्वं दातुं प्रभवसि किमित्यत्राह। यद्येभ्यस्त्रिभ्यः, मर्त्याः अमृतं मोक्षमपि विन्दते॥ १९॥ यथा मुनिः शास्त्रदृष्ट्यात्मानं तुष्टाव, तथा स्वयं रुद्रोऽपि तद्दृष्ट्या ब्राह्मणान् स्तौति ब्राह्मणा इति द्वाभ्याम्। ब्राह्मणा इति ये शान्ताः रागाद्यकलुषितचित्ताः, निःसङ्गा विषयसङ्गरहिताः, भूतवत्सलाः सर्वभूतेषु वात्सल्ययुक्ताः, एकान्तभक्ताः भगवतीति शेषः। अस्मासु रुद्रादिषु, निर्वैरा भगवद्विभूतित्वाद्यनुसंधानेन वैररहिताः, किं बहुना समदर्शनाः कृत्स्नस्यापि जगतो भगवद्विभूतित्वानुसंधानेन समबुद्धयः, ब्राह्मणाः साधवः साधुगुणसंपन्ना ज्ञेयाः॥ २०॥ सलोका इति। तान् साधुगुणयुक्तान् ब्राह्मणान्, सलोका लोकैः सहिताः, देवमनुष्यादिजनसहिता इत्यर्थः। लोकपाला इन्द्रादयः, किं बहुना। अहं रुद्रः, ब्रह्मा विधिश्च, ईश्वरः हरिः स्वयं भगवांश्च, वन्दन्ति, अर्चन्ति, उपासते। सर्वे वयं तान् वन्दामहे अर्चयामहे उपास्महे चेत्यर्थः॥ २१॥ तत्र हेतुमाह। नैते इति। एते साधवो ब्राह्मणाः अजे ब्रह्मणि, अच्युते विष्णौ, मयि रुद्रे च, ब्रह्मशरीरके मच्छरीरके चाच्युते इत्यर्थः। अण्वपीषदपि, भिदां भेदं न चक्षते न पश्यन्ति। अजं मां चाच्युतात् पृथक्सिद्धं न पश्यन्तीति विवक्षितोऽर्थः। आत्मनः जनस्य चापि भिदां न चक्षते। शरीरशरीरित्वनिबन्धनोऽयं प्रपञ्च इति भावः। तत्तस्मात् वयमपि युष्मान् ईमहि भजाम॥ २२॥ तद्दर्शनेनात्मनः कृतकृत्यतामभिप्रेत्य प्रस्तौति। न हीति। अम्मयानि जलमयानि तीर्थानि दर्शनमात्रतः न पुनन्ति, किं तु चिरं स्नानादिभिः तानि पुनन्ति। तथा चेतनोज्झिताः चेतनावर्जिताः देवा देवताः, देवताप्रतिकृतय इत्यर्थः। दर्शमात्रतः न पुनन्ति, किं तु चिरमावाहनादिषोडशोपचारपूजादिभिः पुनन्ति ते। तास्तीर्थदेवता उरुकालेन पुनन्ति। यूयं तु दर्शनमात्रतः दर्शनमात्रादेव, पुनीथेति तीर्थादिभ्योऽपि यूयं विशिष्टा इति भावः। यद्वा। अम्मयानि तीर्थानि न पुनन्ति इति न, चेतनोज्झिताः देवाः न पुनन्ति इति न, किं तु ते द्वे उरुकालेन पुनन्ति। भवन्तस्तु प्रोक्तरीत्या साधुगुणयुक्ता अतो यूयं दर्शनमात्रतः पुनीथ। अयमेव सर्वप्रीतिकरोऽर्थोऽत एव साधीयान्॥ २३॥ यथा तेन नमः शिवायेत्यादिना नमस्कृतं, तथा स्वयं रुद्रोऽपि प्रणमति। ब्राह्मणेभ्य इति। अतः ब्राह्मणेभ्यः नमस्यामः। ये यूयं ब्राह्मणाः त्रयीमयं वेदत्रयीमयं, वेदत्रयीरूपं तत्प्रतिपाद्यं चेत्यर्थः। अस्मद्रूपं आत्मसमाधानचित्तैकाग्र्यं च तप आलोचनं च स्वाध्यायोऽध्ययनं च संयमो वागादिनियमश्च तैः बिभ्रति॥ २४॥

### हिन्दी अनुवाद

मैं आप के त्रिगुणातीत सदा शिव स्वरूप को और सत्त्वगुण से युक्त शान्तस्वरूप को नमस्कार करता हूँ। मैं आप के रजोगुणयुक्त सर्वप्रवर्तक स्वरूप एवं तमोगुणयुक्त अघोर स्वरूप को नमस्कार करता हूँ'॥ १७॥ श्रीसूतजी कहते हैं—शौनकजी! जब मार्कण्डेय मुनि ने संतों के परम आश्रय देवाधिदेव भगवान् शङ्कर की इस प्रकार स्तुति की, तब वे उनपर अत्यन्त सन्तुष्ट हुए और बड़े प्रसन्न चित्त से हँसते हुए कहने लगे॥ १८॥ भगवान् शङ्कर ने कहा—मार्कण्डेय जी! ब्रह्मा, विष्णु तथा मैं—हम तीनों ही वरदाताओं के स्वामी हैं, हमलोगों का दर्शन कभी व्यर्थ नहीं जाता। हम लोगों से ही मरणशील मनुष्य भी अमृतत्व की प्राप्ति कर लेता है। एसलिये तुह्मारी जो इच्छा हो, वही वर मुझसे माँग लो॥ १९॥ ब्राह्मण स्वभाव से ही परोपकारी, शान्तचित्त एवं अनासक्त होते हैं। वे किसी के साथ वैरभाव नहीं रखते और समदर्शी होनेपर भी प्राणियों का कष्ट देखकर उसके निवारण के लिये पूरे हृदय से जुट जाते हैं। उनकी सबसे बड़ी विशेषता तो यह होती है कि वे हमारे अनन्य प्रेमी एवं भक्त होते हैं॥ २०॥ सारे लोक और लोकपाल ऐसे ब्राह्मणों की वन्दना, पूजा और उपासना किया करते हैं। केवल वे ही क्यों; मैं, भगवान् ब्रह्मा तथा स्वयं साक्षात् ईश्वर विष्णु भी उनकी सेवा में संलग्न रहते हैं॥ २१॥ ऐसे शान्त महापुरुष मुझमें, विष्णुभगवान् में, ब्रह्मा में, अपने में और सब जीवों में अणुमात्र भी भेद नहीं देखते। सदा-सर्वदा, सर्वत्र और सर्वथा एकरस आत्मा का ही दर्शन करते हैं। इसलिये हम तुह्मारे-जैसे महात्माओं की स्तुति और सेवा करते हैं॥ २२॥ मार्कण्डेय जी! केवल जलमय तीर्थ ही तीर्थ नहीं होते तथा केवल जड मूर्तियाँ ही देवता नहीं होतीं। सबसे बड़े तीर्थ और

देवता तो तुम्हारे-जैसे संत हैं; क्यों कि वे तीर्थ और देवता बहुत दिनों में पवित्र करते हैं, परन्तु तुम लोग दर्शनमात्र से ही पवित्र कर देते हो ॥ २३ ॥ हम लोग तो ब्राह्मणों को ही नमस्कार करते हैं; क्यों कि वे चित्त की एकाग्रता, तपस्या, स्वाध्याय, धारणा, ध्यान और समाधि के द्वारा हमारे वेदमय शरीर को धारण करते हैं ॥ २४ ॥

श्रवणाद् दर्शनाद् वापि महापातकिनोऽपि वः । शुध्येरन्नन्त्यजाश्चापि किमु सम्भाषणादिभिः ॥ २५ ॥

सूत उवाच

इति चन्द्रललामस्य धर्मगुह्योपबृंहितम् । वचोऽमृतायनमृषिर्नातृप्यत् कर्णयोः पिबन् ॥ २६ ॥
स चिरं मायया विष्णोर्भ्रामितः कर्शितो[1] भृशम् । शिववागमृतध्वस्तक्लेशपुञ्जस्तमब्रवीत् ॥ २७ ॥

ऋषिरुवाच

अहो ईश्वरलीलेयं दुर्विभाव्या शरीरिणाम् । यन्नमन्तीशितव्यानि स्तुवन्ति जगदीश्वराः ॥ २८ ॥
धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम् । आचरन्त्यनुमोदन्ते क्रियमाणं स्तुवन्ति ते[2] ॥ २९ ॥
नैतावता भगवतः स्वमायामयवृत्तिभिः । न दुष्येतानुभावस्तैर्मायिनः[3] कुहकं यथा ॥ ३० ॥
सृष्ट्वेदं मनसा विश्वमात्मनानुप्रविश्य यः । गुणैः कुर्वद्भिराभाति कर्तेव स्वप्नदृग् यथा ॥ ३१ ॥
तस्मै नमो भगवते त्रिगुणाय गुणात्मने । केवलायाद्वितीयाय गुरवे ब्रह्ममूर्तये ॥ ३२ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—वः श्रवणात् दर्शनात् वा अपि महापातकिनः अपि अन्त्यजाः च अपि शुध्येरन् कि[illegible] सम्भाषणादिभिः ॥२५॥ सूतः उवाच—इति चन्द्रललामस्य धर्मगुह्योपबृंहितम् अमृतायनं वचः कर्णयोः पिबन् ऋषिः न अतृप्यत् ॥ २६ ॥ विष्णोः मायया चिरं भ्रामितः भृशं कर्शितः शिववागमृतध्वस्तक्लेशपुञ्जः सः तम् अब्रवीत् ॥ २७ ॥ ऋषिः उवाच—अहो इयम् ईश्वरलीला शरीरिणां दुर्विभाव्या यत् जगदीश्वराः ईशितव्यानि नमन्ति स्तुवन्ति ॥ २८ ॥ देहिनां प्रवक्तारः आचरन्ति अनुमोदन्ते क्रियमाणं स्तुवन्ति ते प्रायः ( अन्यान् ) धर्मं ग्राहयितुम् ॥ २९ ॥ एतावता स्वमायामयवृत्तिभिः तैः भगवतः मायिनः अनुभावः कुहकं यथा न दुष्येत ॥ ३० ॥ मनसा इदं विश्वं सृष्ट्वा आत्मना अनुप्रविश्य यः गुणैः कुर्वद्भिः यथा स्वप्नदृक् ( तथा ) कर्ता इव आभाति तस्मै त्रिगुणाय गुणात्मने केवलाय अद्वितीयाय गुरवे ब्रह्ममूर्तये भगवते नमः ॥ ३१–३२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

किंच श्रवणादित्यादि ॥ २५ ॥ चंद्रो ललाभो भूषणं यस्य तस्य धर्मरहस्ययुक्तममृतास्पदं वचः कर्णाभ्यां पिबन्नातृप्यद्-लमिति नामन्यत । कर्णयोरमृतायनमिति वाऽन्वयः ॥ २६ ॥ शिवस्य वागेवामृतं तेन ध्वस्तः क्लेशपुंजो यस्य सः ॥ २७ ॥ इयं लीला दुर्विभाव्याऽवितर्क्या । यद्यया ईशितव्यानि स्वनियम्यानि यानि भूतानि तानि जगदीश्वराः स्वयं नमंति स्तुवंति चेति ॥२८॥ अथवा लोकसंग्रहमात्रमेतदित्याह । धर्ममिति । प्रवक्तारोऽपि यत्स्वयं देहिनां धर्मं ग्राहयितुमाचरंति ॥ २९ ॥ नन्वेतत्स्वप्रभाव-तिरस्कारकं कथं मया क्रियते तत्राह । नैतावतेति एतावता लोकसंग्रहमात्रेण । तैर्नमनादिभिः । कथंभूतैः । स्वमायामयी वृत्तिर्येषु तैर्भगवतो मायिनस्तवानुभावो न दुष्येत । यतः प्रसिद्धस्य मायिनः कुहकं कपटं यथा तथा एतानि नमनादीनि । अतस्तस्य तथा कुहकैरात्मानुभावो न दुष्यति तद्वत् । प्रदुष्येतानुभाव इति पाठे नकारस्य दृष्टांतेऽप्यनुषंगः ॥ ३० ॥ मायाचेष्टितं प्रपंचयति । सृष्ट्वेति । स्वप्नदृग्यथेत्यविद्याचेष्टिते दृष्टांतः ॥ ३१ ॥ त्रिगुणत्वेऽपि न जीववत्तदभिभूताय किंतु गुणानामात्मने नियंत्र ॥ ३२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अन्यदाधिक्यमाह—किञ्चेति । महापातकिनो ब्रह्मघ्नादयः पञ्च, किं पुनरन्य इत्यपिशब्दार्थः । अंत्यजाः कैवर्तादयः, किं पुनः क्षत्रियादयः । संभाषणादेः का वार्तेत्याह—किम्विति । आदिना स्पर्शनस्तवनादिग्रहः । वा युष्माकं ब्राह्मणानामित्यर्थः । यत्र

१. कृषितो । २. स्तुवन्ति च । ३. यिनां ।

कुत्रचिन्महत्त्वं तत्र सर्वत्र ब्राह्मणप्रसादादावाप्तमेवेति 'विप्रप्रसादाद्धरणीधरोऽहं विप्रप्रसादात्कमलाकरोहम्' इत्यादिभगवदुक्तेः ॥२५॥ इतीत्थम्। पिबन्नादरेण शृण्वन्। तं शिवम्। धर्मस्य प्रवक्तारोऽपि अनुमोदन्तेऽन्यांस्तत्र प्रवर्तयन्ति–क्रियमाणं स्तुवन्ति–धन्योऽयं धर्मो यश्चैतादृशैर्महद्भिरपि क्रियत इति धर्मस्तुतिर्धर्मकर्तृ ष्वेव पर्यवस्यति। धर्मः–'एकान्तभक्तः' इत्यारभ्य 'नात्मनश्च जनस्य' इत्यादि, गुह्यम्-'तद्युष्मान्वयमीमहि' इत्यादि, ताभ्यामुपबृंहितम्। नातृप्यदिति—नायं स्वस्तुत्योत्थ आनन्दः किन्तु स्तुतिमिषेणाऽस्मान्धर्ममेवाशिक्षयत्तस्मादेतादृशधर्मवता मया भवितव्यमित्युपदेशप्राप्त्युत्थ एव ज्ञेयः ॥ २६-२९ ॥ अत्राक्षिपति—नन्विति। यत इति अत इत्यनेनान्वेति। मायिन ऐन्द्रजालिकादेः। अनुभावो निश्चयः। अन्येभ्यो धनादिग्रहलक्षणः। अत्र संदर्भः—तेषु मुख्यं भगवन्तमवलम्ब्य तत्र दोषान्तरं निरस्यति—नेतेति त्रिभिः। दोषाऽभावे हेतुः—स्वेषु भक्तेषु या माया कृपा तन्मयवृत्तिरिति मम भक्तपरम्परास्वेषा रीतिः प्रवर्तितेति कृपया प्रीतिवशतयेत्यर्थः अत्र व्यतिरेकेण दृष्टान्तः–मायिनः कुहकिनः कपटं यथा प्रदुष्यते तथा न दुष्यत इति। विश्वनाथस्तु—केनचिदैन्द्रजालिकेन स्वमुखात्कश्चिद्वानर उद्भाव्य स स्तूयते नमस्क्रियते च तेन तस्यानुभावो यथा न दुष्यते तथेति 'न दुष्यते' इति पाठे दृष्टान्ते नकारस्यानुषङ्गः। यद्यपि श्रीरुद्रेण तदीयस्तुत्यादयो न मायया कृतास्तदपि स्वस्तुत्या लज्जितेन मुनिना प्रयुक्तोऽयं दृष्टान्तो नानुपपन्नः ॥ ३० ॥ अविद्यया स्वप्नं सृजतो जीवस्यापि वस्तुतस्तत्सम्बन्धो नास्ति किमुतेश्वरस्येति तात्पर्यवानाह—स्वप्नदृग्यथेति। दोषास्पर्शमेवाह युग्मेन। इदं विश्वं मनसा सङ्कल्पेनैव निमित्तेन गुणैरुपादानैः सृष्ट्वापि ततश्चात्मना स्वयं तदनुप्रविश्य प्रवेशेन स्थापयित्वापि तत्तदुपलक्षणत्वेन संहृत्यापि कर्तृवदेवाभाति न तु कर्तैवेति। तत्र हेतुत्वेन गुणान् विशिनष्टि—कुर्वद्भिरिति। तत्सान्निध्यप्रभावेण चेतना इव गुणा एव सर्वं कुर्वन्ति न तु स्वयमिति सङ्कल्पस्याभासामात्रेण तदसम्भवात्। तत्राविद्यया स्वप्नं सृजतस्तदीयतटस्थांशस्य जीवस्यापि वस्तुतस्तत्सम्बन्धो नास्ति किमुत तस्येति दर्शयन्दृष्टान्तयति–स्वप्नदृग्यथेति ॥३१॥ गुरवे, किम्भूताय–ब्रह्ममूर्तये ब्राह्मणरूपाय। 'त्वं देवेषु ब्राह्मणोऽहं मनुष्येषु' इति जाबालश्रुतेः। एतेन ब्राह्मणस्यैव गुरुत्वं सूचितम्। केवलाय मुख्याय। अद्वितीयाय एकरूपाय। त्रयोऽमृताभयक्षेमरूपा गुणा यस्य तस्मै। गुणा ऐश्वर्यादयोऽप्यात्मानः स्वरूपभूता यस्य तस्मै। केवलाय प्रकृतिसङ्गशून्याय। अद्वितीयायतुल्यायातो गुरवे सर्वोपदेष्ट्रेऽतो वेदरूपायेति सन्दर्भः ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

श्रवणादिति। येषां वो युष्माकं श्रवणाद्दर्शनाद्वापि महापातकिनोऽपि जात्यशुद्धा अन्त्यजाश्चापि शुद्ध्येरन्। तद्भावः। तेषां भाषणसत्कारादिभिः शुद्धौ किमु वक्तव्यमतो वयं तैः कृतार्था इत्यर्थः ॥ २५ ॥ इतीति। चन्द्रो ललामं भूषणं यस्य तस्य धर्मस्य गुह्येन रहस्येन उपबृंहितं युक्तममृतस्यास्पदं वचः कर्णयोः कर्णाभ्यां पिबन् न्नद्यविनातृप्यत् अलमिति नामन्यत। कर्णयोरमृतायनमिति वाऽन्वयः ॥ २६ ॥ स इति। विष्णोर्मायया चिरं भ्रामितः। मित्त्वेऽपि ह्रस्वाभाव आर्षः। कर्षितश्च सः शिवस्य वागेवामृतं तेन ध्वस्तः क्लेशपुञ्जो यस्य स तं शिवमब्रवीत् ॥ २७ ॥ अहो इति। अहो आश्चर्यमीशवरस्येयं चर्या लीला दुर्विभाव्या अवितर्क्या। यत् यया ईशितव्यानि स्वनियम्यानि भूतानि मादृशानि कर्मभूतानि स्वयं जगदीश्वरा अपि नमन्ति स्तुवन्ति चेति ॥ २८ ॥ धर्ममिति। स्वयं देहिनां धर्मवक्तारोऽपि यत्स्वयं धर्ममाचरन्ति अन्यैः क्रियमाणमनुमोदन्ते च तत्कर्तॄन् स्तुवन्ति च। तत्प्रायोऽन्यान् धर्मं ग्राहयितुमेव स्वेषां पूर्णकामत्वेन तत्फलकामनाभावात्। अन्यथा प्रवृत्त्यसंभवाच्चेत्याशयः ॥ २९ ॥ नेति। एतावता लोकसंग्रहमात्रेण तैर्मायावृत्तिभिः स्वमायामयी वृत्तिर्येषु तैर्नमनादिभिर्भगवतो मायिनस्तवानुभावो न दुष्येत। तद्भावः। मायिनः प्रसिद्धस्य। यथा कुहकर्मिति धनप्राप्तिहेतुना ऐन्द्रजालिकेन केनचित्स्वमुखादुद्भावितो वानरो यथा स्तूयते नमस्क्रियते च तेन तस्यानुभावो न दुष्येतेति पाठे नकारस्य दृष्टान्तेनानुषङ्गः। यद्यपि श्रीरुद्रेण तदीयस्तुत्यादिकं मायया न कृतम्। तथापि स्वस्तुत्या लज्जितेन तेन मुनिना प्रयुक्तोऽयं दृष्टान्तो नानुपपन्नः ॥ ३० ॥ सृष्ट्वेति युग्मम्। मनसा संकल्पमात्रेणेदं विश्वं सृष्ट्वा आत्मना जीवात्मना तत्र प्रविश्य गुणैः कुर्वद्भिः यथा स्वप्नदृक् तथा यः कर्तृवदाभाति तस्मै। त्रिगुणायेत्यादिविशेषणविशिष्टाय भगवते नमः। विशेषणानि स्पष्टानि ॥ ३१-३२ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

मायामयवृत्तिभिः आश्चर्यचेष्टाभिः ॥ २९ ॥ शास्त्रदृष्ट्या भगवदात्मकत्वं मन्वान आह—सृष्ट्वेदमिति। ब्रह्मादिवत् स्वप्नदृगन्यथेति स्वाप्नस्पर्शादिकुर्वन्निव स्थितः कर्मानुगुणैः कर्मपरिणामिभिर्गुणैः विषमसृष्टिं कुर्वद्भिः कुर्वन्निवाभातीत्यर्थः ॥ ३० ॥ ब्रह्ममूर्त्तये वेदनिर्वाहकाय ज्ञानप्रवर्तकाय वा ॥ ३१-३३ ॥

### श्रीमद्वीरराघवव्याख्या

येषां च दर्शनश्रवणादर्शनाच्छ्रवणाच्च महापातकिनोऽन्त्यजाश्च विशुद्ध्येरन् सम्भाषणादिभिः विशुद्ध्येरन्निति किमु वक्तव्यम्। तेभ्यो ब्राह्मणेभ्यो नमस्याम इति सम्बन्धः ॥२५॥ इतीति चन्द्रो ललामं भूषणं यस्य तस्य रुद्रस्येत्थंभूतं धर्मगुह्योपबृंहितं

सत्सेवात्मकधर्मरहस्ययुक्तं कर्णयोरमृतायमानं वचः पिबन्नातृप्यत् कर्णाभ्यां पिबन्वा ॥ २६ ॥ स इति। स मुनिः विष्णोर्मायया आश्चर्यशक्त्या चिरं भ्रामितः अत एव नितरां कर्शितश्च शिवस्य वागेव अमृतं तेन ध्वस्तः क्लेशपुञ्जः भ्रमणप्रयुक्तक्लेशसमुदायो यस्य सः तं शिवम् इदं वक्ष्यमाणमब्रवीत् ॥ २७ ॥ तदेवाह—सप्तभिः अहो इति। यदुक्तं 'वरं वृणीष्व" अमोघं दर्शनं येषाम्' इति तत्र तद्बहुमानाय किञ्चित्प्रार्थयितुमिच्छुस्तावद्यथोक्तं "ब्राह्मणाः साधवः" इत्यादिना तथा 'परस्परं भावयन्तः श्रेयः परमवाप्स्यथ" इत्युक्तरीत्या स्वयमप्याह—अहो इति पञ्चभिः। इयमीश्वराणामीश्वरविभूतिभूतानां चर्या चेष्टा शरीरिणां दुर्विभाव्या दुर्विज्ञेया दुर्विभाव्यतामेव प्रकटयति यद्यतः स्वयं जगदीश्वराः जगत्प्रकृष्टाः अपीशितव्यान्यपकृष्टानि भूतानि नमन्ति स्तुवन्ति चेत्यात्मनो नैच्यमनुसंहितम् इत्थंभूतैव हि भागवतानां परिपाटी ॥ २८ ॥ कस्तर्हीशितव्यप्रणामादावभिप्राय इति विचार्य निश्चिन्त्य आह—धर्ममिति। देहिनां प्रवक्तारः धर्मोपदेष्टारोपि धर्मान् ग्राहयितुं प्रायशोऽनुतिष्ठन्ति क्रियमाणं धर्मं तत्कर्तारं वा अनुमोदन्ते अभिनन्दन्ति स्तुवन्त्यभिन्दन्तं सन्तोषः ॥ २९ ॥ नैतावतेति। यद्यप्येवमथाप्येतावता आचारानुमोदन स्तुतिमात्रेण तैरीशितव्यप्रणामस्तुत्यादिभिश्च कथम्भूतैः भगवतः पूज्यस्य स्वमायामयावृत्तिराश्चर्यमया चेष्टा येषु तैः प्रभावो न दुष्येत न विहन्येत यथा मायिनः लोकप्रसिद्धमायाविनः कुहकैश्छद्मव्यापारैस्तस्य प्रभावो न दुष्येत न विहन्येत प्रत्युत स्वमायाविश्वरूपप्रभावाविष्कारः तद्वत् ॥३०॥ शास्त्रदृष्टया भगवदात्मकत्वं मन्वानः सर्वकारणत्वादिभिर्विशिंषन्प्रणमति—सृष्ट्वेति द्वाभ्याम्। यो मनसा सङ्कल्पमात्रेणेदं जगत्सृष्ट्वा आत्मना स्वेनान्तःप्रविश्य कुर्वद्भिः पूर्वकर्मवासनानुगुणपरिणामाभिरुत्तरोत्तरपुण्यापुण्यात्मकविषमसृष्टिं कुर्वद्भिर्गुणैः स्वयं कर्त्तेवाभाति इवशब्देन परमार्थतः पुण्यापुण्यात्मककर्मकर्तृत्वाभावः परमात्मनि सूच्यते जीवस्यैव तत्र कर्तृत्वात् अकर्तुरपि कर्तृत्वाभासे दृष्टान्तः—स्वप्नदृग्यथेति। न हि स्वप्नार्थसृष्टिकर्त्ता स्वप्नं दर्शयितु तत्कर्मानुगुणतत्तद्देकानुभाव्यतत्कालमात्रावस्थायि स्वाप्नप्रपञ्चस्रष्टा परमपुरुषरूपः "न तत्र रथा न रथयोगा' इत्यारभ्य "सृजते स हि कर्त्तेति य एषु सुप्तेषु जागर्ति कामं पुरुषोनिर्मिमाणास्तद्ब्रह्म ' इति च श्रवणात् यथा स्वप्नार्थसृष्टिकर्मात्मकत्वेपि तदनभिज्ञानां तस्याजीवकर्तृकत्वाभिमानस्तथा पुण्यापुण्यकर्तृत्वादेर्जीवगततत्वमजानतां ब्राह्मण एव जीवभावेन तत्कर्तृत्वाभिमानमात्रमिति विवक्षितार्थः ॥ ३१ ॥ तस्मै इति। त्रिगुणाय त्रैगुण्यनियन्त्रे महात्मने अप्रतिहतसङ्कल्पाय केवलाय निरस्तनिखिलदोषायाद्वितीयाय स्वतुल्यवस्त्वन्तररहिताय ब्रह्ममूर्त्तये वेदनिर्वाहकाय रूपतोपि विभवे वा ॥ ३२ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

न केवलं दर्शनाच्छुद्धिरपि तु श्रवणादपीति समुचितत्वादाह—श्रवणादिति। तद्वधिकशुद्धिः कस्मादिति तत्राह किम्विति आदिपदेन नामस्मरणं गृह्यते ॥ २५ ॥ चन्द्रललामस्य चन्द्रशेखरस्य. धर्मगुह्योपबृंहितं धर्मरहस्यगूढम् अमृतायनम् अमृतवद्वर्त्तमानं कर्णयोर्हितम् ॥ २६ ॥ भ्रामितः समाधेः सञ्चालितः अतएव कर्शितः अनेन संयमिनां समाधेरन्यत्सुखं नास्तीति ज्ञापितम् ॥ २७ ॥ इयं वाग्लक्षणा चेष्टा ईशितव्यानि भवद्भिर्नियम्यानि ब्रह्मकुलानि स्तुवन्ति यद्यस्मात्तस्मात् ॥ २८ ॥ मुनिः स्वयमेव स्तवनादेरभिप्रायं वक्ति, धर्ममिति। न केवलं देहिनां धर्मस्य प्रवक्तारः आचरन्ति च आचरतोनुमोदन्ते क्रियमाणं धर्मं स्तुवन्ति च ॥ २९ ॥ ननु, विध्यादिवर्जितानां भवतां धर्माचरणादिना तेजःक्षतिः स्यादित्यत्राह—नेति। "वृत्तिस्तु ग्रन्थसन्दर्भे" इति वचनात् स्वमायामयवृत्तिभिः स्वेच्छया कृता वृत्तिर्येषां ते तथा तैः स्तवादिभिर्विवृतेनैतावता कर्मणा भगवतोनुभावः प्रभावो न प्रदुष्येत प्रदुष्टो न भवति कुहकैरिन्द्रजालव्यापारैर्मायिनोनुभावः निश्चयो यथा तथेति ॥ ३० ॥ प्रकारान्तरेण दोषाभावं वक्ति, सृष्ट्वेति। यो भगवान् मनसा स्वेच्छया इदं विश्वं सृष्ट्वान्तर्यामिरूपेणान्तःप्रविश्य - दर्शनादिकुर्वद्भिर्गुणैरिन्द्रियैरहङ्कृतेति निरूप्य जोव इवाभातीत्येतावता जीववत् दुष्टो न भवति, कथमिव स्वप्नदृग्भगवदिच्छयोद्बोधितमानसवासनया करितुरगादिपदार्थान् सृष्ट्वा यथा तद्वदेव लिप्तो न भवति ॥३१॥ तस्मै भगवते नम इत्यन्वयः त्रयः सत्त्वादयो गुणा यस्य स तथा तस्मै गुणित्वं दोषत्वेन व्याप्तं दृष्टत्वादत्राह केवलायेति निर्दोषाय निर्दोषत्वं मुक्तस्याप्यस्तीति तत्राह, अद्वितीयायेति। मुक्तनिर्दोषत्वं हरिप्रसादायत्त न हरेस्तथा तस्य समाधिकशून्यत्वात् कथमयमर्थः सम्पद्यत इत्यत्राह, गुरव इति। ब्रह्मादीनां स्वात्मरहस्योपदेष्टत्वेन गुरुत्वात्तेषां सिद्ध इत्यर्थः। निराकारस्योपदेष्टृत्वं कथं घटत इति तत्राह, ब्रह्मेति। ज्ञानादिगुणाकाराय बृहन्तो ह्यस्मिन् गुणा इति श्रुतावस्मिन्निति वचनादाकारः सिद्ध इति ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

धर्मगुह्यं भगवद्भक्तिलक्षणं तेनोपबृंहितम् अत एवामृतायनं परमानन्दस्याप्याश्रयरूपम् अत एव नातृप्यत् नतु स्वस्तुत्येत्यर्थः ॥२६॥ विष्णुमाययेति स्वेच्छयैवाङ्गीकृतयेत्यर्थः। शिवस्याप्यत्र विष्णवाविष्टत्वं व्याख्यातम् इति न भेदो मन्तव्यः ॥२७–२८॥ धर्ममित्यत्र प्राय इति कदाचित्तत्र निजरुच्या च देहिनामिति देहस्य यत्कर्म तदेवात्मन इति मन्यमानानामित्यर्थः। अत एव प्रवक्तारस्तद्व्यतिरिक्ताः ॥ तेषु मुख्यं भगवन्तमवलंब्य तत्र दोषान्तरं निरस्यति—नैतावतेति त्रिभिः। अप्रदोषे हेतुः। स्वेषु भक्तेषु या माया कृपातन्मयवृत्तिभिरिति मम भक्तपरम्परैषा रीतिः प्रवर्त्ततेति कृपया स्वप्रीतिविवशतयेत्यर्थः। तत्र व्यतिरेकेण दृष्टान्तः मायिनः कुहकं यथा प्रदुष्येत तथेति न दुष्येतेति पाठेपि मायिनः कुहकं यथा दुष्येत तथा न किन्तु न दुष्येतैवेत्यर्थः ॥ ३०–३२ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

धर्मः एकान्तभक्ता इति नात्मनश्च परस्येत्यादि गुह्यं तत् युष्मान् वयमीमहोत्यादिताभ्यामुपबृंहितं नातृप्यदिति नायं स्वतयोथ आनन्दः किन्तु स्तुतिमिषेणास्मान् धर्ममेवाशिक्षत्तस्मादेतादृशधर्मवता मया भवितव्यमित्युपदेशप्राप्त्युत्थ एव ज्ञेयः ।। २६–२७ ।। दुर्विभाव्या अ-कर्या ईशितव्यानि स्वनियम्यान्यपि भूतानि ।। २८ ।। अथवा लोकसङ्ग्रहमात्रमेतदित्याह–धर्ममिति । क्रियमाणं धर्मं स्तुवन्तोति धन्योयं धर्मः यः खल्वेतादृशैर्महद्भिः क्रियते इति धर्मस्तुतिर्धर्मकर्तृ ष्वेव पर्याप्नोति ।। २९ ।। एतावता लोकसङ्ग्रहमात्रेण तैर्नमनादिभिस्तवानुभावो न प्रदुष्यति कीदृशैः मायामय्येव वृत्तिश्चेष्टा येषु तैः मायिनः कुहकमिति धनप्राप्तिहेतुना ऐन्द्रजालिकेन केनचित् स्वमुखादुद्भावितः कश्चिद्वानरः स्तूयते नमस्क्रियते च तेन तस्यानुभावो न दुष्यतीति न दुष्येतेति पाठे नकारस्य दृष्टान्तेनानुषङ्गः । यद्यपि श्रीरुद्रेण तदीयस्तुत्यादयो न मायया कृतास्तदपि स्वस्तुत्या लज्जितेन मुनिना प्रयुक्तोऽयं दृष्टान्तो नानुपपन्नः ।। ३० ।। मनसा सङ्कल्पमात्रेण कुर्वद्भिर्गुणैः स्वीयैः स्त्रीयमकर्त्तापि कर्त्तेत्याभातीति न गुणलेप इति भावः । अविद्यया स्वप्नं सृजतो जीवस्यापि वस्तुतस्तत्सम्बन्धो नास्ति किमुत तस्येति दर्शयन् दृष्टान्तयति स्वप्नदृग् यथेति ।। ३१ ।। गुणात्मने गुणनियन्त्रे ।। ३२ ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

चन्द्रः ललामः शिरोभूषणं यस्य इति पूर्वोक्तम् धर्मेण साधवः शान्ता इत्यादि स्तुतिमिषेणोपदिष्टेन गुह्येन मय्यच्युते अजे चेत्यत्रोक्तेन तत्वसम्बन्धरूपरहस्येन च युक्तम् अत एवामृतायनममृतास्पदम् कर्णयोः कर्णाभ्यां पिबन्नपि नातृप्यत् ।। २६ ।। शिवस्य वागमृतेन ध्वस्तो निरस्तः क्लेशपुञ्जो यस्य सः ।। २७ ।। ईश्वरचर्या ईश्वराणां भवतेऽजस्याच्युतस्य च लीला दुर्विभाव्या दुर्वितर्क्या ईशितव्यानि स्वनियम्यानि ।। २८ ।। ईश्वराः सन्तोपीशितव्यानि नमन्तीत्यत्र तदभिप्रायमाविष्करोति धर्ममिति । देहिनां प्रवक्तारोपि धर्मश्रावयितारोपि स्वयं गुरवोपीत्यर्थः । तथापि धर्मं ग्राहयितुमाचरन्ति प्रायग्रहणेन 'आवृत्तिरसकृदुपदेशात्' (४।१।१) इति शास्त्राज्ञापालनार्थमप्याचरन्तीति द्योतितम् ।। २९ ।। एतावता धर्मग्राहयितृत्वेन हेतुना स्वमायामयास्वादया प्रधानावृत्तिर्येषु एवम्भूतैस्तैर्नमनादिभिः भगवतोऽनुभावो न प्रदुष्येत न विहन्येत तत्र दृष्टान्तमाह, मायिनः कुहक यथति मायिनो नटादेः कुहकं नाट्यादिकं तदनुभावं न दूषयति यथा तद्वत् ।। ३० ।। सामान्यतः ईश्वराणां स्तुतिं कृत्वा विशेषतो हरिं प्रणमति–सृष्ट्वति द्वाभ्याम् । यश्च सर्वोपास्यः स्वयं हरिरिति निर्दिष्टः मनसा सङ्कल्पमात्रेणेदं विश्वं सृष्ट्वाऽनुप्रविष्टः गुणैः प्राक्कर्मानुरूपैः सत्त्वादिभिः देवमनुष्यादिविषमसृष्टिं कुर्वद्भिः स्वयं विषमसृष्टिकर्त्रेवाभाति तस्मै नम इति द्वयोरन्वयः । अवैषम्यकर्तुरपि वैषम्य-कर्तृत्वावभासे दृष्टान्तमाह, स्वप्नदृग्यथेति 'य एव सुप्तेषु जागर्त्तिकामं कामं पुरुषो निर्मिमाण तद्ब्रह्म' इति श्रुतिप्रसिद्धः परमात्मा स्वप्नरथादिस्रष्टा भवति भ्रान्त्या तु स्वप्नदृक् जीवस्तत्कर्ता प्रतीयते तद्वदित्यर्थः ।। ३१ ।। अत्रिगुणाय त्रिगुणविग्रहादिसम्बन्ध-शून्याय गुणात्मने गुणनियन्त्रे केवलाय स्वाश्रयाय अद्वितीयाय निःसमानातिशयाय ब्रह्ममूर्तये बृहद्भिर्ग्रहाय ।। ३२ ।।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

चन्द्रो ललामो भूषणं यस्य तस्य धर्मरहस्ययुक्तममृतास्पदं वचः कर्णयोः कर्णाभ्यां पिबन् ऋषिर्नातृप्यत् अलमिति नामन्यत ।। २५ ।। शिवस्य वागेवामृतं तेन ध्वस्तः क्लेशपुञ्जो यस्य स तं शिवमब्रवीत् ।। २६ ।। अहो आश्चर्यमीश्वरस्येयं चर्या लीला दुर्विभाव्या अवितर्क्या यत् यया ईशित–व्यानि स्वनियम्यानि भूतानि स्वयं जगदीश्वरा अपि नमन्ति स्तुवन्ति चेति ।। २७ ।। एवं दुर्वितर्क्यत्वमुक्त्वा तत्र स्वनिश्चयमाह–धर्ममिति । स्वयं देहिनां धर्मवक्तारोऽपि यत् स्वयं धर्ममाचरन्ति अन्यैः क्रियमाणमनु-मादन्ते च तत्कर्तॄन् स्तुवन्ति च तत् प्रायोऽन्यान् धर्मं ग्राहयितुमेव स्वेषां पूर्णकामत्वेन तत्फलकामनाभावात् । अन्यथा प्रवृत्त्य-सम्भवाच्चेत्याशयः ।। २८ ।। नन्वेतस्य स्वप्रभावतिरस्कारकत्वात् परोपकारार्थमपि कथं युक्तमित्याशङ्क्याह–नैतेति । एतावता लोकसङ्ग्रहमात्रेण तैर्मायावृत्तिभिः स्वमायामयी वृत्तिर्येषु तैर्नमनादिभिर्भगवतो मायिनस्तवानुभावो न दुष्येत । तत्र दृष्टान्तमाह–मायिनः प्रसिद्धस्य यथा कुहकं तत्प्रभावं न दूषयति, तथैतान्यपीश्वप्रभावं न दूषयंतीत्यर्थः ।।२९।। आस्तां तावल्लोकसङ्ग्रहार्थं नमना-दिभिस्तिरस्काराशङ्का यतो जगज्जन्मादि कुर्वतोऽपि तव न कापि हानिरित्याह–सृष्ट्वेति मनसा सङ्कल्पमात्रेणेदं विश्वं सृष्ट्वा आत्मना जीवात्मना तत्र प्रविश्य गुणैः कुर्वद्भिः यथा स्वप्नदृक् तथा यः कर्तृवदाभाति ।।३०।। तस्मै भगवते नम इति द्वयोरन्वयः । गुणानां ततो भिन्नत्वमाशङ्क्याह–त्रिगुणायेति । अन्तर्यामित्वेन प्रणमति–गुणात्मने गुणनियन्त्र इति । एवं कथं तस्यैव सर्वात्मत्वं तत्राह–अद्विती-यायेति । वेदप्रवर्त्तकत्वेन नमस्यति–गुरव इति । एवं सति विकारित्वमाशङ्क्याह–केवलाय शुद्धाय ब्रह्ममूर्त्तये नम इति ।। ३१ ।। यदुक्तं वरं वृणुष्वेति तत्राह–कमिति । वरं दर्शनमेव यस्य तस्मात्त्वत् परमन्यं कं नु वरं वृणे । यत् यस्मात्त्वद्दर्शनात् पुमान् पूर्णकामो भवति तत्र हेतुमाह–सत्यकामः सत्यसङ्कल्पो भवति ।। ३२ ।।

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

श्रवणादिति। वो युस्माकं ब्राह्मणानां श्रवणादपि, दर्शनाद्वापि, महापातकिनः अन्त्यजाश्चापि, शुध्येरन्, तर्हि संभाषणादिभिः किमु संभाषणादिभिः शुद्ध्येरंस्तत्र किमु वक्तव्यं। इत्थंभूतेभ्यो नमस्याम इति संबन्धः॥ २५॥ इतीति। चन्द्रो ललामं भूषणं यस्य तस्य रुद्रस्य, इतीत्थंभूतं धर्मगुह्योपबृंहितं धर्मरहस्ययुक्तं, कर्णयोः अमृतायनं वचः पिबन् ऋषिः, न अतृप्यत्। कर्णयोः कर्णाभ्यां पिबन्निति वा॥ २६॥ स इति। सः ऋषिः, विष्णोः मायायाश्चर्यशक्त्या चिरं भ्रामितः, अत एव भृशमत्यन्तं कर्शितश्च सन्नपि, शिवस्य वागेवामृतं तेन ध्वस्तः क्लेशपुञ्जो भ्रमणप्रयुक्तक्लेशसमुदायो यस्य स एवंभूतः सन्, तं शिवं अब्रवीद्वक्ष्यमाण-प्रकारेणोवाच॥ २७॥ तदेवाहाहोइति सप्तभिः। अहो इति। अहो आश्चर्ये। इयं ईश्वरचर्या ईश्वरविभूतिभूतमहतां चेष्टा, शरीरिणां दुर्विभाव्या दुर्विज्ञेयाभिप्राया। दुर्विभाव्यतामेव प्रकटयति यद्यतः, स्वयं जगदीश्वराः जगत्युत्कृष्टाः सन्तोऽपि, ईशितव्यान्यपकृष्टानि भूतानि नमन्ति, स्तुवन्ति च॥ २८॥ कस्तर्हीशितव्यप्रमाणादावभिप्राय इति विचार्य निश्चयन्नाह। धर्ममिति। स्वयं प्रवक्तारः धर्मोपदेष्टारः सन्तश्चापि, देहिनां धर्मं ग्राहयितुं प्रायः प्रायशः आचरन्ति स्वयमनुतिष्ठन्ति। क्रियमाणं धर्मं स्तुवन्ति। अनुमोदन्ते च आचरितुमुद्युक्तमनुमोदं कुर्वन्ति॥ २९॥ नैतावतेति। एतावता। लोकसंग्रहमात्रेण, स्वमायामयी वृत्तिश्चेष्टा येषु तैः, तैर्नमनादिभिः, भगवतः अनुभावः न दुष्येत। कस्य कैरिव। मायिनः लोकप्रसिद्धमायाविनः अनुभावः, कुहकैश्छद्मव्यापारैः यथा तथा न दुष्येत॥ ३०॥ शास्त्रदृष्ट्या भगवदात्मकत्वं मन्वानः सर्वकारणत्वादिभिर्विशिंषन् प्रणमति सृष्ट्वेति द्वाभ्याम्। सृष्ट्वेदमिति। यो भवान् मनसा संकल्पमात्रेण, इदं जगत् सृष्ट्वा, आत्मना अनुप्रविश्य, स्वयं तदन्तराविश्येत्यर्थः। कुर्वद्भिः सृष्टिमिति शेषः। गुणैः जीवगतपूर्वकर्मवासनानुगुणपरिणामिभिरुत्तरोत्तरपुण्यापुण्यात्मकविषमसृष्टि कुर्वद्भिर्गुणैरित्यर्थः। स्वयं कर्तृवत् कर्त्तेव, आभाति। अत्र वच्छब्दाभिहितेवशब्देन परमात्मनि परमार्थतः पुण्यापुण्यात्मककर्मकर्तृत्वाभावः सूच्यते। जीवस्यैव तत्र कर्तृत्वात् अकर्तुरपि कर्तृत्वाभासे दृष्टान्तः। स्वप्नदृक् परमात्मा यथा जीवार्थं स्वाप्नप्रपञ्चं सृष्ट्वा, तं तं प्रदर्शयन् स्वाप्नभोक्तृवत् प्रतीयते तथेत्यर्थः। अयं भावः। स्वप्नार्थसृष्टिकर्त्ता स्वप्नदर्शी जीवो नहि भवति। अपि तु जीवकर्मानुगुणतदेकानुभाव्यतत्कालमात्रावस्थायिस्वाप्नप्रपञ्चं सृष्ट्वा परमपुरुषः 'न तत्र रथा न रथयोगाः' इत्यारभ्य 'सृजते स हि कर्त्तेति य एव सुप्तेषु जागर्ति कामं पुरुषो निर्मिमाणस्तत् ब्रह्म' इति च श्रवणात्, यथा स्वप्नार्थसृष्टेः परमात्मकर्तृत्वेऽपि तदनभिज्ञानां स्वाप्नसृष्टेः जीवकर्तृकत्वाभिमानस्तथा पुण्यापुण्य-कर्तृत्वादेर्जीवगतत्वमजानतां ब्रह्मण एव तत्कर्तृत्वाभिमानमात्रमिति विवक्षितार्थ इति॥ ३१॥ तस्मा इति। त्रिगुणाय त्रैगुण्य-नियन्त्रे महात्मनेऽप्रतिहतसंकल्पाय' भगवते ऐश्वर्यवते, केवलाय निरस्तनिखिलदोषाय, अद्वितीयाय स्वतुल्यवस्त्वन्तररहिताय, ब्रह्ममूर्त्तये वेदनिर्वाहकाय, गुरवे ब्रह्मादिभ्योऽपि स्वात्मरहस्योपदेष्ट्रे, तस्मै ते नमः॥ ३२॥

### हिन्दी अनुवाद

मार्कण्डेय जी! बड़े-बड़े महापापी और अन्त्यज भी तुम्हारे जैसे महापुरुषों के चरित्रश्रवण और दर्शन से ही शुद्ध हो जाते हैं; फिर वे तुम लोगों के सम्भाषण और सहवास आदि से शुद्ध हो जायँ, इसमें तो कहना ही क्या है॥ २५॥ श्रीसूतजी कहते हैं—शौनकादि ऋषियो! चन्द्रभूषण भगवान् शङ्कर की एक-एक बात धर्म के गुप्ततम रहस्य से परिपूर्ण थी। उसके एक-एक अक्षर में अमृत का समुद्र भरा हुआ था। मार्कण्डेय मुनि अपने कानों के द्वारा पूरी तन्मयता के साथ उसका पान करते रहे, परन्तु उन्हें तृप्ति न हुई॥ २६॥ वे चिरकाल तक विष्णु भगवान् की माया से भटक चुके थे और बहुत थके हुए भी थे। भगवान् शिव की कल्याणी वाणी का अमृत पान करने से उनके सारे क्लेश नष्ट हो गये। उन्होंने भगवान् शङ्कर से इस प्रकार कहा॥ २७॥ मार्कण्डेयजी ने कहा—सचमुच सर्वशक्तिमान् भगवान् की यह लीला सभी प्राणियों की समझ के परे है। भला, देखो तो सही—ये सारे जगत् के स्वामी होकर भी अपने अधीन रहनेवाले मेरे-जैसे जीवों की वन्दना और स्तुति करते हैं॥ २८॥ धर्म के प्रवचनकार प्रायः प्राणियों को धर्म का रहस्य और स्वरूप समझाने के लिये उसका आचरण और अनुमोदन करते हैं तथा कोई धर्म का आचरण करता है, तो उसकी प्रशंसा भी करते हैं॥ २९॥ जैसे जादूगर अनेकों खेल दिखलाता है और उन खेलों से उसके प्रभाव में कोई अन्तर नहीं पड़ता, वैसे ही आप अपनी स्वजनमोहिनी माया की वृत्तियों को स्वीकार करके किसी की वन्दना-स्तुति आदि करते हैं तो केवल इस काम के द्वारा आप की महिमा में कोई त्रुटि नहीं आती॥ ३०॥ आप ने स्वप्नद्रष्टा के समान अपने मन से ही सम्पूर्ण विश्व की सृष्टि की है और इसमें स्वयं प्रवेश करके कर्ता न होने पर भी कर्म करनेवाले गुणों के द्वारा कर्ता के समान प्रतीत होते हैं॥ ३१॥ भगवन्! आप त्रिगुणस्वरूप होने पर भी उनके परे उनकी आत्मा के रूप में स्थित हैं। आप ही समस्त ज्ञान के मूल, केवल, अद्वितीय ब्रह्मस्वरूप हैं। मैं आप का नमस्कार करता हूँ॥ ३२॥

कं वृणे नु परं भूमन् वरं त्वद् वरदर्शनात्। यद्दर्शनात् पूर्णकामः सत्यकामः पुमान् भवेत्॥ ३३॥
वरमेकं वृणेऽथापि पूर्णात् कामाभिवर्षणात्। भगवत्यच्युतां भक्तिं तत्परेषु तथा त्वयि॥ ३४॥

सूत उवाच

इत्यर्चितोऽभिष्टुतश्च मुनिना सूक्तया गिरा। तमाह भगवाञ्छर्वः शर्वया चाभिनन्दितः॥ ३५॥
कामो महर्षे सर्वोऽयं भक्तिमांस्त्वमधोक्षजे। आकल्पान्ताद्यशः पुण्यमजरामरता तथा॥ ३६॥
ज्ञानं त्रैकालिकं[1] ब्रह्मन् विज्ञानं च विरक्तिमत्। ब्रह्मवर्चस्विनो भूयात् पुराणाचार्यता च ते॥ ३७॥

### कृष्णप्रिया व्याख्या

अन्वयः—भूमन् वरदर्शनात् त्वत् कं परं वरं वृणे नु यद्दर्शनात् पुमान् पूर्णकामः सत्यकामः भवेत्॥ ३३॥ अथापि कामाभिवर्षणात् पूर्णात् ( एकं वरं वृणे ) भगवति अच्युतां भक्तिं तत्परेषु तथा त्वयि॥ ३४॥ सूतः उवाच—इति सूक्तया गिरा मुनिना अर्चितः अभिष्टुतः च शर्वया अभिनन्दितः भगवान् शर्वः तम् आह॥ ३५॥ महर्षे ब्रह्मन् त्वम् अधोक्षजे भक्तिमान् ( अतः ) सर्वः अयं कामः यशः पुण्यम् तथा आ कल्पान्तात् अजरामरता विरक्तिमत् त्रैकालिकं ज्ञानं विज्ञानं पुराणाचार्यता च ब्रह्मवर्चस्विनः ते भूयात्॥ ३६-३७॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

वरं वृणीष्वेति यदुक्तं तत्राह। कमिति। वरं दर्शनं यस्य तस्मात्। त्वत्तः परं कं नु वरं वृणे। यस्य तव दर्शनादवलोकनात्पूर्णकामः सर्वानंदसंदोहरूपः सत्यकामो यथेच्छं प्राप्तसर्वानंदः॥ ३३-३४॥ वरदानाय स्वयमेव प्रवृत्तः शर्वयोमया चाभिनंदितोऽनुमोदितः सन्नाह॥ ३५॥ कामाऽयं सर्वोऽप्यन्यच्च यत्पुण्यं यश इत्यादि ब्रह्मवर्चस्विनस्ते भूयादित्युत्तरेणान्वयः। यतस्त्वमधोक्षजे भक्तिमान्॥ ३६-३७॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

हे भूमन्निति—अनन्तफलदातुः सर्वेश्वरात्—कं वरं वृणोमि न कमपीति भावः। यद्वा—वरः सर्वोत्कृष्टवरो दर्शनं यस्य तस्मात्त्वत्तः किं परमपरं वरं वृणे। तत्र हेतुः—यद्दर्शनादिति॥ ३३॥ यदि वरदानेऽतीव हठस्तर्ह्येकं वरमपि वृणोमीति योज्यम्। भगवति श्रीहरौ त्वयि, तद्रूपे हरे च। यद्वा—मद्भक्तशिरोमणौ त्वयि परमतत्परे उपदेशगुरौ भक्तिं च वृणे, तत्परत्वं च स्वेनैव तेन षष्ठे चित्रकेतूपाख्यान उक्तम्—'अयं तस्य महाभागश्चित्रकेतुः प्रियोऽनुगः। सर्वत्र समदृक् शान्तो ह्यहञ्चैवाच्युतप्रियः।' इति। स्वयं मार्कण्डेयेनाप्युक्तम्—'किं वर्णये तव विभो यदुदीरितोऽसुः संस्पन्दते तमनु वाङ्मनइन्द्रियाणि। स्पन्दन्ति वै तनुभृतामजपूर्वयोश्च'—इत्यनेन नारायणर्षिं प्रति। किञ्च—'मुख्योऽभूद्ब्राह्मणो गुरुः' इति तृतीयस्कन्धे मैत्रेयेण विदुरं प्रत्युक्तम्। 'जन्मना ब्राह्मणो गुरुः' इति श्रीदशमे नन्दराजेनापि श्रीगर्गं प्रत्युक्तमिति॥ ३४-३५॥ अयं हरिहराभेदभक्तितद्भक्तभक्तिरूपो मनोरथः। हे महर्षे इति—महर्षित्वात्तुभ्यं वरदानं सिद्धसाधनमेवेति भावः। यद्वा—अहमधोक्षजे भक्तिमान्स्यामित्ययं ते कामोऽस्त्विति योज्यम्॥ ३६॥ ब्रह्मन्निति—वेदविद्ब्राह्मणत्वाद्बहुवरदानयोग्य एव त्वमिति भावः॥ ३७॥

### अन्वितार्थप्रकाशिका

कमिति। वरं दर्शनमेव यस्य तस्मात्त्वत्तः परमन्यं कं नु वरं वृणे। यत् यस्मात्त्वद्दर्शनात् पुमान् पूर्णकामः सत्यकामः सत्यसंकल्पश्च भवति॥ ३३॥ वरमिति। अथापि पूर्णात् भक्तानां कामाभिवर्षणात्त्वत्तो भगवति तथा तत्परेषु तद्भक्तेषु तथा त्वयि अच्युतामुज्ज्वलां भक्तिमेवैकं वरं वृणे॥ ३४॥ इतीति। इत्येवं मुनिना अर्चितः सूक्तया मधुरया गिरा वरदानाय स्वमेव प्रवृत्तो भगवान् शर्वः शर्वया उमया चाभिनन्दितः संस्तमाह स्म॥ ३५॥ काम इति युग्मम्। हे ऋषे! हे ब्रह्मन्! यतस्त्वम् अधोक्षजे भक्तिमानसि। अतः ब्रह्मणि वेदादौ वर्चस्विनः प्रकाशवतः ते मनसि स्थितः सर्वोऽपि कामः संकल्पः अन्यच्च पुण्यम् आकल्पान्ताद्यशः[2] अजरामरता च विरक्तिमत्[3] त्रैकालिकवस्तुविषयकं ज्ञानं च विज्ञानमपरोक्षानुभवश्च भूयात्तथा ते तव पुराणाचार्यताऽस्तु॥३६-३७॥

१. त्रिका०। २. यात्थ्य०। ३. क्ति०।

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

शर्वया शर्वपत्न्या ॥ ३४–३५ ॥ ज्ञानं तत्त्वज्ञानं ब्रह्मवर्चस्विनः ब्रह्मवर्चस्विनः ॥ ३६–४० ॥

### श्रीमद्वीरराघवव्याख्या

यदुक्तं वरं वृणीष्वेति तत्रोत्तरमाह—कमिति। हे भूमन्! वरदर्षभात् त्वत्तः अतः परमन्यं कं वरं वृणे वरिष्यमाणं दरं बुद्ध्या सन्निधाप्यत इति निर्देशः कृतः वरदर्शनादिति पाठे वरं श्रेष्ठं दर्शनं यस्य तस्मात्त्वत्तः अतश्शब्दविवक्षितं विशिनष्टि, यदीशानः पूर्णकामः इति। यत् यतः पुमान् ईशानः ईश्वरः स्वतन्त्रः अकर्मवश्य इति यावत् पूर्णकामः सत्यकामश्च भवेत्तस्मादत इति सम्बन्धः ॥ ३३ ॥ यद्यप्यतः परो वरणीयो वरो नास्ति तथापि पूर्णकामामिवर्षुकात्त्वत्त एतं वरं वृणे एनादेशाभाव आर्षः कोऽसौ भगवत्यच्युते तत्परेषु तद्भक्तेषु तथा त्वयि च भक्तिमित्यनेन वरमिति सम्बन्धः तत्परेष्वित्यनेन गतार्थत्वेपि पुनस्त्वयीत्युक्तिस्त-त्प्राधान्यविवक्षया गोबलीवर्दन्यायात्तत्र भगवद्भक्तेषु भक्तिर्नामभगवद्विभूतित्वानुसन्धानुसन्धानात्मिका ॥ ३४ ॥ इतीति। सूक्त्या मधुरया शर्वया शर्वाण्या अभिनन्दितस्तं मुनिमाह ॥ ३५ ॥ उक्तिमेवाह—द्वाभ्यां काममिति। विभौ भगवति कामं नितरां श्रोतॄणां पुण्यावहम् यशः ॥ ३६ ॥ त्रैकालिकं भूतादिकालत्रयगोचरवस्तुज्ञानं ब्रह्मविज्ञानं ब्रह्मस्वरूपरूपादिगोचरं विज्ञानं विरक्तिमत् विरक्तियुक्तम् ॥ ३७ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यत एवं निरूप्यमाणे हरेरधिकः समो वा नास्ति सर्वश्रेष्ठश्चातस्तद्भक्तिमन्तरेण त्वत्परमन्यं कं वरं वृणे वरं वरेण्यं दर्शनम् ज्ञानम् यस्य स तथा तस्मात् एतदेवाह—यद्दर्शनाद्येनोपदिष्टज्ञानाद्वा पुमान्न पूर्णकामः स्यात् अत एव सत्यकामश्च ॥ ३३ ॥ मद्दर्शनात्पूर्णकामत्वे वरं वृणीष्वेति मद्वचनं व्यर्थमभूदिति मा शङ्कीत्याह—वरमिति। यद्यपि वरो न प्रार्थनीयस्तथापि त्वद्वचन-साफल्यायैतं वरं वृणे पूर्णकामाभिवर्षणादिति शेषः कोऽसौ वर इति तत्राह—भगवतीति। तत्परेषु तद्भक्तश्रेष्ठे त्वयि च ॥ ३४ ॥ शर्वया पार्वत्या सह ॥ ३५ ॥ त्वम् अधोक्षजे भक्तिमान् भूया इति शेषः। आकल्पान्तं पुण्यम् यशोऽजरामरता च भूयात्तवेति शेषः ॥ ३६ ॥ किञ्च, वरान्तरं च स्यादित्याह—ज्ञानमिति ॥ ३७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

दोषास्पर्शमेव दर्शयति—सृष्ट्वेदमिति, युग्मकेन। इदं विश्वं मनसा सङ्कल्पेनैव निमित्तेन गुणैः उपादानैः सृष्ट्वापि ततश्चात्मना स्वयं तदनुप्रविश्य प्रवेशेन स्थापयित्वाऽपि तत्तदुपलक्षणत्वेन संहृत्यापि कर्तृवदेवाभाति नतु कर्त्तैवेति तत्र हेतुत्वाय गुणान् विशिनष्टि—कुर्वद्भिरिति। तत्सांनिध्यप्रभावेण चेतना इव गुणा एव सर्वं कुर्वन्ति नतु स्वयमिति सङ्कल्पस्याभासमात्रत्वेन तदसम्बन्धादित्यर्थः। तत्राविद्यया स्वप्नं सृजतस्तदीयतटस्थांशस्य जीवस्यापि वस्तुतस्तत्सम्बन्धो नास्ति किमुत तस्येति दर्शयन् दृष्टान्तयति—स्वप्नदृग्यथात। त्रयः अमृताभयक्षेमरूपा गुणा यस्य तस्मै गुणा ऐश्वर्य्यादयोऽपि आत्मानः स्वरूपभूता यस्य तस्मै केवलाय प्रकृतिसङ्गशून्याय अद्वितीयाय स्वतुल्यरहिताय अत एव गुरवे सर्वोपदेष्ट्रे ब्रह्मेति स्वोपदेश्यम् यद्ब्रह्मः वेदः तदपि मूर्त्तिः स्वरूपम् यस्य तस्मै ॥ ३१ ( क ) ३३ ॥ तथा त्वयीति त्वयि च तत्पर इत्यर्थः—

> "किं वर्णये तव विभो यदुदीरितोऽसुः। संस्पन्दते तमनुवाङ्मन इन्द्रियाणि ॥
> स्पन्दन्ति वै तनुभृतामजशर्वयोश्च"।

इत्यनेनैव श्रीनारायणर्षिं प्रत्युक्तत्वात् ॥ ३४–४० ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

वरं वृणुष्वेति यदुक्तं तत्राह—किमिति। वरो दर्शनम् यस्य तस्मात् सत्यकामः सत्यसङ्कल्प एव तत्परेषु तद्भक्तेषु तथा तद्भक्तश्रेष्ठे त्वयि भक्त्युपदेष्टरि गुरौ तेन त्वयि मे भक्तिस्तद्भक्तत्वेनैवास्तु नत्वीश्वरत्वेनेति भावः ॥ ३३–३५ ॥ अयं सर्वोऽपि कामस्ते अस्तु यतस्त्वमधोक्षजे भक्तिमान् ॥ ३६–४० ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

शिवं प्रत्याह—कमिति द्वाभ्याम्। यदुक्तं वरं वृणीष्व नः काममिति तत्र कं परं श्रेष्ठं वरं वृणे यत् यस्य ॥ ३३ ॥ भगवति श्रीहरौ तद्भक्तेषु त्वयि तद्भक्तमुख्ये च ॥ ३४ ॥ स्वत एव वरं दातुं प्रवृत्तः शर्वयोमया चाप्यभिनन्दितो ऽनुमोदितः सन् तं मुनिमाह ॥३५॥ अयं सर्वोपि कामस्तेस्तु यतस्त्वमधोक्षजे भक्तिमान् यश आदिच ब्रह्मवर्चस्विनस्ते भूयादित्यग्रिमेणान्वयः ॥३६–३७।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

यदुक्तममोघं दर्शनं येषामिति तत्राह—वरमिति। यद्यपि वरवरणाभावेऽपि स्वतस्सिद्धदर्शनप्रभावात्कृतार्थताया जातत्वाद्दर्शनस्यामोघत्वं सिद्धमेव तथापि यत्किञ्चिदवश्यं वरणीयमित्याग्रहश्चेत्तदा पूर्णात् अतएव भक्तेषु कामाभिवर्षणात् त्वत्तो वरमेकमहं वृणे। किं तदित्यपेक्षायामाह— भगवति तथा तत्परेषु तद्भक्तेषु तथा त्वयि चाच्युतामचलां भक्तिमिति। यद्यपि भगवति तद्भक्तेषु वा रुद्रस्यान्तर्भावसम्भवात्त्वयीति तस्य पृथग्ग्रहणप्रयोजनं नास्ति तथापि तस्य स्वस्मिंस्तदुभयव्यतिरिक्तशङ्का माभूदित्येतदर्थं तस्यापि पृथक्तया ग्रहणमिति ज्ञेयम् ॥ ३३ ॥ सूक्तया मधुरया। वरदानाय स्वयमेव प्रवृत्तो भगवान् शर्वः शर्वया उमया चाभिनन्दितः संस्तमाह ॥ ३४ ॥ तदुक्तिमाह—काम इति द्वाभ्याम्। हे ऋषे हे ब्रह्मन् अयं ते मनसि स्थितः सर्वोऽपि कामः सङ्कल्पः अन्यच्च पुण्यं यश आदि ब्रह्मवर्चस्विनस्ते भूयादित्युत्तरेणान्वयः। यतस्त्वमधोक्षजे भक्तिमान् ॥ ३५ ॥ त्रैकालिकवस्तुविषयकं ज्ञानम्। विज्ञानमात्मपरमात्मविषयकं ज्ञानम् ॥ ३६ ॥ तस्य कर्मैतत्तपआदि तथा यदमुना पुराऽनुभूतं भगवन्मायावैभवं तच्च देव्यै कथयन् त्र्यक्षः शिवोऽगात्। ईश्वरोऽप्याश्चर्येण कथयन्नगात्तत्तप आदेरतिशयो दर्शितः ॥ ३७ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

यदुक्तं वरं वृणीष्वेति तत्रोत्तरमाह। कमिति। हे भूमन्, वरदर्षभात् यद्दर्शनात् पुमान् पूर्णकामः भवेत्, तथाविधात् त्वत् त्वत्तः, कं नु परं वरं वृणे। त्वत्तोऽन्यद्वरणीयं नास्तीत्यर्थः ॥३३॥ वरमिति। यद्यप्यतः परो वरणीयोऽर्थो नास्ति, तथापि पूर्णात् स्वयं पूर्णात्, भक्तेषु कामाभिवर्षणात् कामाभिवर्षुकात्, त्वत्तः एतं वरं वृणे। एनादेशाभाव आर्षः। कोऽसौ वर इत्याकाङ्क्षायां तमाह। अच्युते भगवति, पाठान्तरे भक्तिविशेषणं, तथा तत्परेषु तद्भक्तेषु त्वयि च, भक्तिं एतं वरं वृणे इति संबन्धः। शिवस्य भागवतत्वात्तत्परेष्वित्यनेन स उक्त एव, तथापि त्वयीति पदेन पुनः तदुपादानं भागवतेषु तत्प्राधान्यविवक्षया गोबलीवर्दन्यायेन बोध्यम् ॥३४॥ इतीति। इति एवं सूक्तया गिरा, मुनिना अर्चितः पूजितः, अभिष्टुतश्च भगवान् स्वयं शर्वः रुद्रः, शर्वयोमया च अभिनन्दितोऽनुमोदितः सन्, तमृषिं आह ॥ ३५ ॥ उक्तिमेवाह द्वाभ्याम्। काम इति हे महर्षे, अयं ते तव कामः अस्तु। त्वं अधोक्षजे भक्तिमान् स्यात् आकल्पान्तात् ते तव पुण्यं यशः अस्तु। तथा अजरामरता च तवास्तु ॥३६॥ ज्ञानमिति। हे ब्रह्मन्, ब्रह्मवर्चस्विनः ते तव, त्रैकालिकं भूतादिकालत्रयगोचरं ज्ञानं, विरक्तिमत् विरक्तियुक्तं विज्ञानं ब्रह्मस्वरूपावबोधश्च स्यात्। पुराणाचार्यता च अस्तु ॥ ३७ ॥

### हिन्दी अनुवाद

अनन्त! आप के श्रेष्ठ दर्शन से बढ़कर ऐसी और कौन-सी वस्तु है, जिसे मैं वरदान के रूप में माँगूँ ? मनुष्य आप के दर्शन से ही पूर्णकाम और सत्यसङ्कल्प हो जाता है ॥ ३३ ॥ आप स्वयं तो पूर्ण हैं ही, अपने भक्तों की भी समस्त कामनाओं को पूर्ण करनेवाले हैं। इस लिये मैं आप का दर्शन प्राप्त कर लेनेपर भी एक वर और माँगता हूँ। वह यह कि भगवान् में, उनके शरणागत भक्तों में और आप में मेरी अविचल भक्ति सदा-सर्वदा बनी रहे ॥ ३४ ॥ श्रीसूतजी कहते हैं—शौनकजी! जब मार्कण्डेय मुनि ने सुमधुर वाणी से इस प्रकार भगवान् शङ्कर की स्तुति और पूजा की, तब उन्होंने भगवती पार्वती की प्रसाद-प्रेरणा से यह बात कही ॥ ३५ ॥ 'महर्षे! तुम्हारी सारी कामनाएँ पूर्ण हों। इन्द्रियातीत परमात्मा में तुम्हारी अनन्य भक्ति सदा-सर्वदा बनी रहे। कल्पपर्यन्त तुम्हारा पवित्र यश फैले और तुम अजर एवं अमर हो जाओ ॥ ३६ ॥ ब्रह्मन्! तुम्हारा ब्रह्मतेज तो सर्वदा अक्षुण्ण रहेगा ही। तुम्हें भूत, भविष्य और वर्तमान के समस्त विशेष ज्ञानों का एक अधिष्ठानरूप ज्ञान और वैराग्ययुक्त स्वरूपस्थिति की प्राप्ति हो जाय। तुम्हें पुराण का आचार्यत्व भी प्राप्त हो ॥ ३७ ॥

### सूत उवाच

एवं वरान् स मुनये दत्त्वागा[1]त्त्र्यक्ष ईश्वरः। देव्यै तत्कर्म कथयन्ननुभूतं पुरामुना ॥ ३८ ॥
सोऽप्यवाप्तमहायोगमहिमा भार्गवोत्तमः। विचरत्यधुनाप्यद्धा हरावेकान्त[2]तां गतः ॥ ३९ ॥
अनुवर्णितमेतत्ते मार्कण्डेयस्य धीमतः। अनुभूतं भगवतो मायावैभवमद्भुतम् ॥ ४० ॥
एतत् केचिदविद्वांसो मायासंसृतिमात्मनः। अनाद्यावर्तितं नृणां कादाचित्कं प्रचक्षते ॥ ४१ ॥
य एवमेतद् भृगुवर्य वर्णितं रथाङ्गपाणेरनुभाववितम्।
[3]संश्रावयेत् संशृणुयादु तावुभौ तयोर्न कर्माशयसंसृतिर्भवेत् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे दशमोऽध्यायः ॥ १० ॥

१. यात्त्य०। २. न्ति० ३. यः श्रा०।

### कृष्णप्रिया व्याख्या

अन्वयः—सूतः उवाच—त्र्यक्षः ईश्वरः सः एवं मुनये वरान् दत्त्वा पुरा अमुना अनुभूतं तत् कर्म देव्यै कथयन् अगात् ॥ ३८ ॥ अवाप्तमहायोगमहिमा भार्गवोत्तमः सः अपि हरौ एकान्ततां गतः अधुना अपि अद्धा विचरति ॥ ३९ ॥ धीमतः मार्कण्डेयस्य अनुभूतं भगवतः अद्भुतम् एतत् मायावैभवं ते अनुवर्णितम् ॥ ४० ॥ एतत् अविद्वांसः केचित् कादाचित्कं नृणाम् आत्मनः मायासंसृतिम् अनादि आवर्तितं प्रचक्षते ॥ ४१ ॥ भृगुवर्य रथाङ्गपाणेः अनुभावभावितं एतद् एवं वर्णितं यः संश्रावयेत् संशृणुयात् उत उभौ तयोः कर्माशयसंसृतिः न भवेत् ॥ ४२ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे दशमोऽध्यायः ॥ १० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तस्य कर्म तपआदि । मुनेः पुराऽनुभूतं यद्भगवन्मायावैभवं तच्च कथयन् ॥३८॥ अवाप्तो महायोगमहिमा येन सः ॥३९॥ एतन्मार्कंडेयस्य चरितं तेनानुभूतं च भगवन्मायावैभवं तेऽनुवर्णितम् ॥ ४० ॥ नन्वेवमप्यस्मत्कुलोत्पन्नस्यास्य सप्तकल्पायुष्ट्वं वृद्धैरुच्यमानं विरुद्धमेव तत्राह । एतन्मार्कंडेयेनानुभूतं भगवन्मायावैभवं नानाकल्परूपं कादाचित्कमीश्वरेच्छया तस्यैवाकस्मिकं न तु सर्वसाधारणम् । एतत्केचिदनादिबहुकालमावर्तितं दैवयुगसहस्रद्वयमानेन पुनःपुनः परिवर्तितं प्रचक्षते । के ते । नृणां संसृतिं सर्गप्रलयादिलक्षणामात्मनो भगवतो मायेत्येवमविद्वांसः विद्वांसस्तु मायाशिशोः श्वासोच्छ्वासाभ्यां सप्तकृत्वस्तदुदरप्रवेशनिर्गमतः सप्तकल्पत्वं तत्क्षणमात्रेणेति वदंत्यतो न विरोध इत्यर्थः ॥ ४१ ॥ संशृणुयात् । उ इति हर्षे । संश्रावयेद्वा । यौ तावुभौ तयोः कर्मवासनाकृता संसृतिर्न भवेदिति ॥ ४२ ॥

इति श्रीमद्भागवते म० द्वादशस्कंधे श्रीटीकायां दशमोऽध्यायः ॥ १० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

त्र्यक्षस्त्र्यंबकः ॥ ३८ ॥ महायोगस्य भक्तियोगस्य महिमाऽणिमादिसिद्धिपूर्वकं भगवत्साक्षात्कारलक्षणः । एकांततां नित्यभक्तिताम् ॥ ३९–४० ॥ अत्राक्षिपति—नन्विति ॥ ४१ ॥ तावुभौ श्रोतृवक्तारौ तुल्यफलभागिनाविति शेषः । तदेवाह—तयोरिति । हे भृगुवर्येति—अहो स एवैकोऽस्माकं कुलश्रेष्ठ आसीदहं तु न तादृगंशभागपीति विमृशंतं शौनकं सूतस्तमपि प्रोत्साहयति—त्वं तु बहुजन्मसुकृतलभ्यसर्वपुराणेतिहासश्रोतृत्वाद्भृगुवंशे वयं एवेति भावः ॥ ४२ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे दशमोऽध्यायः ॥ १० ॥

### अन्वितार्थप्रकाशिका

एवमिति । हे मुने ! ईश्वरः त्र्यक्षः शिवः मुनये एवं वरान् दत्त्वा तस्य कर्म तपआदि तथा यदमुना पुरानुऽभूतं भगवन्मायावैभवं तच्च देव्यै कथयन् अगात् ॥ ३८ ॥ स इति । अवाप्तो महायोगमहिमा येन सः हरौ एकान्ततां गतः भार्गवोत्तमो मार्कण्डेयः अधुनाऽपि अद्धा यथेच्छं विचरति ॥ ३९ ॥ अन्विति । एतत् धीमतो मार्कण्डेयस्य चरितं तेनानुभूतमद्भुतं भगवन्मायावैभवं च ते तुभ्यं मयाऽनुवर्णितम् ॥ ४० ॥ ननु मार्कण्डेयस्य सप्तकल्पायुष्ट्वं वृद्धैरुच्यमानं विरुध्येतेत्याशङ्क्याह—एतदिति । एतन्मार्कण्डेयेनानुभूतं भगवन्मायावैभवं नानाकल्परूपं कादाचित्कमीश्वरेच्छया तस्यैवाकस्मिकं न तु सर्वसाधारणम् । केचित्तु नृणां मध्ये आत्मनः भगवतो मायासंसृतिं सर्गप्रलयादिरूपां मार्कण्डेयायैव प्रदर्शिता न तु सर्वसाधारणेत्येवमविद्वांसः अजानन्तः एतत् अनादि सप्तकल्पपर्यन्तमावर्त्तितं प्रचक्षते । विद्वांसस्तु मायाशिशोः श्वासोच्छ्वासाभ्यां सप्तकृत्वस्तदुदरप्रवेशनिर्गमतः सप्तकल्पत्वं तत्क्षणमात्रेणैवेति वदन्त्यतो न विरोध इत्यर्थः ॥ ४१ ॥ य इति । हे भृगुवर्य ! एवमनेन प्रकारेण रथाङ्गपाणेः कालचक्रायुधस्यानुभावेन मायावैभवेन भावितं युक्तं यदेतन्मार्कण्डेयस्य चरितं मया वर्णितं तत् यः कश्चित् सम्यक् श्रद्धया श्रावयेत् श्रद्धया शृणुयाद्वा तयोः कर्मवासनाकृता संसृतिर्न भवेदिति ॥ ४२ ॥

इति श्रीमद्भागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायां दशमोऽध्यायः ॥ १० ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

एतदिति । केचन संसारानादित्वानभिज्ञाः कादाचित्कत्वमाहुरित्यर्थः ॥ ४१—४२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये दशमोऽध्यायः ॥ १० ॥

### श्रीमद्वीरराघवव्याख्या

एवमिति । सः त्र्यक्षस्त्रिलोचन ईश्वरः रुद्रः मुनये मार्कण्डेयाय वरान्दत्वाऽमुना मुनिना यत् पुरा अनुभूतं तत्कर्म भगवन्मायाप्रदर्शनात्मकं कर्म देव्यै शर्वाण्यै कथयन् अगात् जगाम ॥ ३८ ॥ सोपीति । भार्गवोत्तमो मार्कण्डेयः अवाप्तः महायोग-

वैभवो येन सः हरौ भगवति एकान्तिताम् अनन्यप्रयोजनभक्तिमत्त्वं गतः अधुनापि चरति अद्धा स्फुटं नात्र संशय इति भावः ॥ ३९ ॥ उपसंहरति—अनुवर्णितमिति यन्मार्कण्डेयस्य तेनानुभूतमद्भुतम् भगवतो मायाया आश्चर्यशक्तेर्वैभवं तत्त तुभ्यम् अनुवर्णितम् ॥ ४० ॥ प्रसङ्गान्मार्कण्डेयस्य कादाचित्कभायावैभवदर्शनवज्जीवस्यापि संसारः पूर्वमविद्यमान एव कदाचिच्छ्री-भगवन्मायया भवतीति केषाञ्चिन्मतं प्रतिक्षिपति—एतदिति। केचिद्विद्वांसः संसारानादित्वानभिज्ञाः नृणां जीवानामात्मना भगवतो मायया संसृतिं कादाचित्कं यथा तथा प्रचक्षते इत्यनुवादः तद्दर्शयति—एतदनाद्यावर्त्तितमिति। संसरणमित्यध्याहार्यम् एतत्संसरण-मनादितया आवर्त्तितं परिवर्त्तितं भवत्यन्यथा 'न कर्माविभागात्' (२।१।३५) इत्याद्यधिकरणविरोधात् इति ॥ ४१ ॥ प्रकृतमार्कण्डेय-चरित्रश्रवणश्रावणादिफलमाह—य इति। भृगुवर्यस्य मार्कण्डेयस्य वर्णितं वृत्तमित्यर्थः। कथंभूतं रथाङ्गपाणेर्भगवतः अनुभावेन भावितम् प्रकाशितम् यः संश्रावयेद्यः शृणुयात्तयोरुभयोः कर्माश्रया कर्मनिमित्ता संसृतिर्न भवेत् ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां दशमोऽध्यायः ॥ १० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अमुना मार्कण्डेयेन ॥ ३८ ॥ अवाप्तमहायोगमहिमा प्राप्तमहाज्ञानमहिमाप्राप्तमहाणिमादियोगमहिमा वा एकान्ततां नियतभक्तताम् ॥ ३९ ॥ ज्ञानवतो मार्कण्डेयस्य यदेतदनुभूतं हरेर्मायावैभवं तेनुवर्णितमेतन्नृणां मध्ये केचिदविद्वांस आत्मनो हरेर्मायाप्रसृतिं सामर्थ्यविस्तारं कादाचित्कं प्रचक्षते अकाले प्रदर्शितत्वेन कादाचित्कं किं न स्यादत्राह—अनादीति। अनादिकाल-वर्तिनं न नूतनं यद्वोपसंहरति अनुवर्णितमिति मार्कण्डेयस्यैतच्चरितं तेनानुवर्णितं किन्तच्चरितमत्राह अनुभूतमिति श्रद्धेयत्वे मतभेदमाह एतदिति ॥ ४०—४१ ॥ इतोप्येतच्छ्रद्धेयमिति फलमाह—य इति। अनुभावेन भावितं सम्वर्द्धितम् तयोरुभयोः श्रावयितृश्रोत्रोः कर्माशयसंसृति कर्मणामाशयः स्थान देयस्तन्निमित्तसंसारो न भवेदिति स्वरूपनाश एवोच्यते अस्य श्रीहरिभक्तिर्मुख्यहेतुरतोच्युतां भक्तिमित्याह ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां दशमोऽध्यायः ॥ १० ॥

( विजयध्वजतीर्थरीत्या नवमः )

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एतत् मार्कण्डेयदृष्टमात्मनो भगवतो मायासंसृतिस्तत्प्रार्थनया मायाप्रसार एव तदेतदपि केचिदविद्वांसः अनादित एवावर्त्तितं भगवता पुनः प्रापितं कादाचित्कं प्रलयं प्रचक्षते अन्ये तद्द्रष्टाः कल्पास्तु मन्वन्तराण्येवेति भावः ॥ ४१ ॥ उ इति पक्षान्तरे संश्रावयेद्वा तावुभौ तुल्यावित्यर्थः। फलमाह, तयोरिति ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे दशमोऽध्यायः ॥ १० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

एतन्मार्कण्डेयदृष्टम् आत्मनः परमेश्वरस्य मायासंसृतिर्वैभवमित्यर्थः। भगवतः शिशुस्वरूपस्य परमातर्क्यशक्त्या श्वासोच्छ्वासाभ्यां सप्तकृत्वस्तदुदरप्रवेशनिर्गमकालात्मकं कादाचित्कमेव केचिदविद्वांसो नृणामनाद्यावर्त्तितम् अज्ञानादिकं बहुकालत आवर्त्तितं तदैव युगसहस्रमानेन पुनः पुनरावर्त्तितं सप्तकल्पमेव प्रचक्षते ॥ ४१ ॥ हे भृगुवर्य्य ! अनुभावेन भावितं वासितं श्रावयेत् यश्च शृणुयात्तावुभौ तुल्यावेवेति शेषः अतस्तयोः कर्मवासनामयी संसृतिर्न भवेत् ॥ ४२ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। द्वादशे दशमोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १० ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तस्य मुनेः कर्मतप आदि यदमुनाऽनुभूतं भगवन्मायावैभवं तच्च कथयत् ॥ ३८ ॥ अवाप्तः संप्राप्तो महायोगमहिमा येन सः ॥ ३९—४० ॥ एतत् मार्कण्डेयेनानुभूतम् आत्मनः परमात्मनः मायासंसृतिः योगमायायाः वैभवं कादाचित्कं मार्कण्डेय-मनोरथपूर्णार्थं भगवता कादाचित्कम् प्रत्येव प्रवर्त्तितम् केचित्तु नृणाम् जीवानाम् हिताय अनादितः भगवता आवर्तितम् प्रचक्षतेऽ-विद्वांसः ॥ ४१ ॥ हे भृगुवर्य, शौनक ! एतन्मार्कण्डेयचरितं रथाङ्गपाणेः अनुभावेन भावितम् समर्थितम् यः संशृणुयात् उत संश्राव-येत् तावुभौ सफलितौ ज्ञेयौ इति शेषः। फलमाह—तयोः कर्माशयसंसृतिः कर्मवासनाकृतसंसृतिसंसारो न भवेदिति ॥ ४२ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे दशमोऽध्यायार्थप्रकाशः ॥ १० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अवाप्तो महायोगमहिमा येन सः ॥ ३८ ॥ एतन्मार्कण्डेयस्य चरितं तेनानुभूतं भगवन्मायावैभवं च तुभ्यं मयानुवर्णितम् ॥ नन्वेवमप्यसत्कुलोद्भवस्य सप्तकल्पायुष्ट्वं वृद्धैरुच्यमानविरुद्धमेव तत्राह-एतदिति। एतन्मार्कण्डेयेनानुभूतं भगवन्मायावैभवं

नानाकल्परूपं कादाचित्कमीश्वरेच्छया तस्यैवाकस्मिकं न तु सर्वसाधारणं केचित्तु नृणां मध्ये आत्मनः भगवतो मायासंसृतिं सर्गप्रलयादिरूपां मार्कण्डेयायैव प्रदर्शिता ननु सर्वसाधारणेत्येवमविद्वांसः अजानन्तः एतत् अनादिसप्तकल्पपर्यन्तमावर्त्तितं प्रचक्षते। विद्वांसस्तु मायाशिशोः श्वासोछ्वासाभ्यां सप्तकृत्वस्तदुदरप्रवेशनिर्गमतः सप्तकल्पत्वं तत्क्षणमात्रेणैवेति वदन्त्यतो न विरोध इत्यर्थः ॥ ४० ॥ एतत्कीर्त्तनश्रवणफलमाह—य इति। हे भृगुवर्य एवमनेन प्रकारेण रथाङ्गपाणेः कालचक्रायुधस्यानुभावेन मायावैभवेन भावितं युक्त यदेतन्मार्कण्डेयस्य चरितं मया वर्णितं तत् यः कश्चित् सम्यक् श्रद्धया श्रावयेत् श्रद्धया शृणुयाद्वा तावुभौ कृतार्थावेवेति शेषः। यतस्तयोः कर्मवासना कृता संसृतिर्न भवेदिति ॥ ४१ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता द्वादशे तत्र सर्वाश्रयनिरूपणे। दशम- शिवरूपेण भक्तिदाननिरूपकः ॥ ३ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एवमिति। त्र्यक्षस्त्रिनयनः ईश्वरः स रुद्रः, मुनये एवं वरान् दत्त्वा, अमुना पुरा यत् मायादर्शनात्मकं कर्म अनुभूतं तत्कर्म देव्यै कथयन् अगात्जगाम ॥ ३८ ॥ सोऽपीति। भार्गवोत्तमः अवाप्तो महान् योगमहिमा येन सः, हरौ भगवति एकान्ततामनन्यभक्तत्वं गतः सोऽपि मार्कण्डेयोऽपि, अधुनाऽपि अद्धा साक्षादेव, विचरति। नात्र संशय इत्यर्थः ॥ ३९ ॥ उपसंहरति। अनुवर्णितमिति। धीमतः मार्कण्डेयस्य धीमता मार्कण्डेयेनेत्यर्थः। अनुभूतं अद्भुतं भगवतः, मायावैभवमाश्चर्यशक्तवैभवं यत् एतत्, ते तुभ्यं अनुवर्णितम् ॥४०॥ मार्कण्डेयस्य मायादर्शनवैभवं यत्तत्तु कादाचित्कमेव तत्प्रसङ्गमनुसृत्य जीवस्य संसारोऽपि पूर्वमविद्यमान एव हि कदाचिद्भगवन्मायया भवतीति केचिद्वदन्ति तत्तन्मतमनुवादपूर्वं प्रतिक्षिपति। एतदिति। केचित् अविद्वांसः संसारानादित्वानभिज्ञाः, नृणां जीवानां, आत्मनो भगवतः मायासंसृतिं मायया संसरणमित्यर्थः। कादाचित्कं यथा तथा प्रचक्षते। कादाचित्कमिति यस्तदुक्त्यनुवादस्तं दूषयति। अनाद्यावर्त्तितमिति। एतत् संसरणमित्यध्याहार्यं, एवं सति एतत् संसरणमित्यर्थः फलितः। अनाद्यावर्त्तितमनादिकालपरिवर्त्तितं भवति। अन्यथा 'न कर्माविभागात्' इत्यधिकरणविरोधः। 'धाता यथापूर्वमकल्पयत्' इत्यादिश्रुतिव्याकोपः, अनाद्यविद्योपहतात्मसंविदः, अनाद्यविद्यायुक्तस्य 'अनादिकालतो जीवः संसारपदवीं गतः' इति पञ्चरात्रवाक्य 'बन्धोऽस्याविद्ययानादिः' इत्यादीनां वाक्यानां व्यर्थता च स्यात् ॥ ४१ ॥ प्रकृतमार्कण्डेयचरित्रश्रवणादिफलमाह। य इति। रथाङ्गपाणेः भगवतः अनुभावभावितं प्रभावेण कारितं, एतत् भृगुवर्यवर्णितं मार्कण्डेयस्य वर्णितं मार्कण्डेयस्य वृत्तमिति यावत्। एवमुक्तप्रकारेण, यः पुमान् संश्रावयेत् संशृणुयाच्च, तौ उभतः पूर्णौ भवत इत्युभौ, 'उभ पूरणे' अस्मात्पचाद्यच्। कृतार्थावित्यर्थः। तयोः तु कदाचिदपीत्यर्थः। निपातोपसर्गधातूनामनेकार्थत्वादयमर्थः। कर्माश्रयसंसृतिः कर्मनिमित्ता संसृतिः न भवेत्। कर्माशयसंसृतिरिति पाठे, कर्मवासनाकृता संसृतिरित्यर्थः ॥ ४२ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे दशमोऽध्यायः ॥ १० ॥

### हिन्दी अनुवाद

श्रीसूतजी कहते हैं—शौनकजी ! इस प्रकार त्रिलोचन भगवान् शङ्कर मार्कण्डेय मुनि को वर देकर भगवती पार्वती से मार्कण्डेय मुनि की तपस्या और उनके प्रलय सम्बन्धी अनुभवों का वर्णन करते हुए वहाँ से चले गये ॥ ३८ ॥ भृगुवंशशिरोमणि मार्कण्डेय मुनि को उनके महायोग का परम फल प्राप्त हो गया। वे भगवान् के अनन्यप्रेमी हो गये। अब भी वे भक्तिभावभरित हृदय से पृथ्वी पर विचरण किया करते हैं ॥ ३९ ॥ परम ज्ञानसम्पन्न मार्कण्डेय मुनि ने भगवान् की योगमाया से जिस अद्भुत लीला का अनुभव किया था, वह मैंने आप लोगों को सुना दिया ॥ ४० ॥ शौनक जी ! यह जो मार्कण्डेयजी ने अनेक कल्पों का सृष्टिप्रलयों का अनुभव किया, वह भगवान् की माया का ही वैभव था, तात्कालिक था और उन्हीं के लिये था, सर्वसाधारण के लिये नहीं। कोई-कोई इस माया की रचना को न जानकर अनादि काल से बार-बार होने वाले सृष्टि-प्रलय ही इसको भी बतलाते हैं। ( इसलिये आप को यह शङ्का नहीं करनी चाहिये कि इसी कल्प के हमारे पूर्वज मार्कण्डेयजी की आयु इतनी लंबी कैसे हो गयी ? ) ॥ ४१ ॥ भृगुवंशशिरोमणे ! मैंने आप को यह जो मार्कण्डेयचरित्र सुनाया है, वह भगवान् चक्रपाणि के प्रभाव और महिमा से भरपूर है। जो इसका श्रवण एवं कीर्तन करते हैं, वे दोनों ही कर्म-वासनाओं के कारण प्राप्त होने वाले आवागमन के चक्कर से सर्वदा के लिये छूट जाते हैं ॥ ४२ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे दशमोऽध्यायः ॥ १० ॥

# अथैकादशोऽध्यायः

### शौनक उवाच

अथेममर्थं पृच्छामो भवन्तं बहुवित्तमम् । समस्ततन्त्रराद्धान्ते भवान् भागवत तत्त्ववित् ॥ १ ॥

तान्त्रिकाः परिचर्यायां केवलस्य श्रियः पतेः । अङ्गोपाङ्गायुधाकल्पं कल्पयन्ति यथा च यैः ॥ २ ॥

तन्नो वर्णय भद्रं ते क्रियायोगं बुभुत्सताम् । येन क्रियानैपुणेन मर्त्यो यायादमर्त्यताम् ॥ ३ ॥

### सूत उवाच

नमस्कृत्य गुरून् वक्ष्ये विभूतीर्वैष्णवीरपि । या[2]ः प्रोक्ता वेदतन्त्राभ्यामाचार्यैः पद्मजादिभिः ॥ ४ ॥

मायाद्यैर्नवभिस्तत्त्वैः स विकारमयो विराट् । निर्मितो दृश्यते यत्र सचित्के भुवनत्रयम् ॥ ५ ॥

एतद् वै पौरुषं रूपं भूः पादौ द्यौः शिरो नभः । नाभिः सूर्योऽक्षिणी नासे वायुः कर्णौ दिशः प्रभो ॥ ६ ॥

प्रजापतिः प्रजननमपानो मृत्युरीशितुः । तद्बाहवो लोकपाला मनश्चन्द्रो भ्रुवौ यमः ॥ ७ ॥

लज्जोत्तरोऽधरो लोभो दन्ता ज्योत्स्ना स्मयो भ्रमः । रोमाणि भूरुहा भूम्नो मेघाः पुरुषमूर्धजाः ॥ ८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—शौनकः उवाच—भागवत भवान् समस्ततन्त्रराद्धान्ते तत्त्ववित् ( अतः ) बहुवित्तमं भवन्तम् अथ इमम् अर्थं पृच्छामः ॥ १ ॥ केवलस्य श्रियः पतेः परिचर्यायां तान्त्रिकाः यथा च यैः अङ्गोपाङ्गायुधाकल्पं कल्पयन्ति क्रियायोगं बुभुत्सतां नः तत् वर्णय ते भद्रं येन क्रियानैपुणेन मर्त्यः अमर्त्यतां यायात् ॥ २–३ ॥ सूतः उवाच—गुरून् नमस्कृत्य वैष्णवीः अपि विभूतीः वक्ष्ये याः पद्मजादिभिः आचार्यैः वेदतन्त्राभ्यां प्रोक्ताः ॥ ४ ॥ मायाद्यैः नवभिः तत्त्वैः सः विकारमयः विराट् निर्मितः सचित्के यत्र भुवनत्रयं दृश्यते ॥ ५ ॥ एतत् वै पौरुषं रूपं प्रभोः पादौ भूः द्यौः शिरः नभः नाभिः सूर्यः अक्षिणी नासे वायुः कर्णौ दिशः प्रजननं प्रजापतिः ईशितुः अपानः मृत्युः तद्बाहवः लोकपालाः मनः चन्द्रः भ्रुवौ यमः लज्जा उत्तरः अधरः लोभः दन्ताः ज्योत्स्ना स्मयः भ्रमः रोमाणि भूरुहाः भुम्नः पुरुषमूर्धजाः मेघाः ॥ ६–८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एकादशे तु पूजार्थं महापुरुषवर्णनम् । रवेर्व्यूहस्य चाख्यानं प्रतिमासं पृथक् पृथक् ॥ १ ॥
येनामर्त्यत्वमापन्नो मर्त्योऽसौ भार्गवोत्तमः । तं पृच्छति क्रियायोगं सांगोपांगादिकल्पितम् ॥ २ ॥

अथेति हे भागवत यतो भवान्समस्ततंत्रराद्धांते तत्त्वविद्रहस्यज्ञः ॥ १ ॥ प्रष्टव्यमाह तांत्रिका इति । परिचर्यायामुपासनायां विषये । केवलस्य चैतन्यघनस्य । अंगानि पादादीन्युपांगानि गरुडादीन्यायुधानि सुदर्शनादीन्याकल्पाः कौस्तुभादयस्तेषां द्वंद्वैक्यम् । तद्यथा कल्पयंति यैश्च तत्त्वैः कल्पयंति तन्नो वर्णयेति ॥ २–३ ॥ गुरूदेशगम्यत्वादस्यार्थस्य तन्नमस्कारपूर्वकमाह । नमस्कृत्येति । विभूतीर्विराड्विग्रहाद्याः ॥ ४ ॥ अंगादिकल्पनां भूरादिभिर्दर्शयितुं प्रथमं तावद्यथा कल्पयंतीति प्रश्नस्य वैराजरूपेणेत्युत्तरं वक्तुं विराड्विग्रहमाह । मायाद्यैः प्रकृतिसूत्रमहदहंकारपंचतन्मात्रैर्नवभिस्तत्त्वैः । विकारा एकादशेंद्रियाणि पंचमहाभूतानीति षोडश । तन्मयो विराट् स प्रसिद्धो निर्मितः । यत्र विराजि सचित्के चेतनाधिष्ठिते भुवनत्रयं दृश्यते । अनेनांगादिकल्पनासौलभ्यं दर्शितम् ॥ ५ ॥ एतद्वै पौरुषम् । पुरुषस्य वैराजस्य रुपमेवेश्वरेणाधिष्ठितत्वात्तदभेदविवक्षया तस्य रूपमुच्यते । अंगकल्पनामाह भूः पादादित्यादित्रिभिः । भूराद्यनुवादेन भगवत्पादादिभावना विधीयते ॥ ६ ॥ प्रजननं मेढ्रम् । अपानः पायुः ॥ ७–८ ॥

---

१. यथाचयैः । २. या वेदतन्त्राभ्यां प्रोक्ता आचा० ।

### श्रीगंगाधरकृतो भावार्थदीपिकाप्रकाशः

महापुरुषो विराट् । व्यूहो रचनाविशेषः ( १ ) । येन क्रियायोगेन । असौ बुद्धिसंनिहितो मार्कंडेयः । अमृतत्वं चिरजीवित्वम् । 'आभूतसंप्लवत्वं च ह्यमृतत्वं प्रभाषते' इति स्मृतेः ( २ ) । अथ सर्वशास्त्रश्रवणोत्तरम् । इमं बुद्धिस्थं क्रियायोगम् । हे भागवतेति—भागवता एवैतत्तत्त्वं जानंतीति भावः ॥ १ ॥ तांत्रिकाः पञ्चरात्राद्यागमनिपुणाः । केवलस्य पञ्चायतनपूजायां मुख्यस्य ॥ २ ॥ तदंगोपांगादिकल्पनम् । बुभुत्सतां बोद्धुमिच्छताम् ॥ ३ ॥ आदिना शंकरनारदादिग्रहः ॥ ४ ॥ अनेन विराड्विग्रहत्वकथनेन ॥ ५ ॥ एतत्प्रत्यक्षसिद्धम् । पुरुषस्य भगवतो मायिकं रूपं न तु स्वरूपमित्यर्थः । किमंगं कया विभूत्या कल्पितमिति चेत्तत्राह—भूरिति । सच्चिदानंदरूपस्य भगवतः पादयोर्या विभूतिर्भूस्तयास्य पादौ कल्पिताविति तदभेदनिर्देशाद्भूरेव पादावेवं सर्वत्र ज्ञेयम् । एवं च विराट्पुरुषस्य पादादिभावनया सच्चिदानंदपुरुषस्य पादादीनि स्मर्तव्यानि । यथा मत्प्रभुः स्वपादाभ्यां पृथिवीं बिभर्ति शिरसा दिवं तथान्यानि भगवदंगानि सर्ववस्तूनि, एवं सर्वभावनापि भगवद्भावनैवेति ज्ञेयम् ॥ ६ ॥ प्रजन्यतेऽनेनेति प्रजननम् ॥ ७ ॥ उत्तर उपरितनः । स्मयो हासः । भ्रमो भ्रमहेतुर्माया ॥ ८–९ ॥

### अन्वितार्थप्रकाशिका

एकादशे तु पूजार्थं हरेरङ्गादिवर्णनम् । प्रतिमासं रवेर्व्यूहः श्लोकाः सार्द्धाः खमार्गणाः ( ५० ) ॥
चत्वार्युवाचेति ( ४ ) सार्द्धद्विपञ्चाशदनुष्टुभः ( ५२ ) ॥ ११ ॥

अथेति । हे भागवत ! यतो भवान् समस्ततन्त्राणां राद्धान्ते तत्त्ववित् अतो बहुवित्तमं भवन्तमथेदानीमिमं वक्ष्यमाणमर्थं पृच्छामः ॥ १ ॥ तान्त्रिका इति युग्मम् । केवलस्य शुद्धसत्त्वमयदिव्यविग्रहस्य श्रियः पतेः परिचर्यायां तान्त्रिकाः तन्त्रमार्गेण भगवदाराधनपराः यथैव येन प्रकारेण यैश्च तत्त्वैः अङ्गानि पाणिपादादीनि उपाङ्गानि गरुडादीनि आयुधानि सुदर्शनादीनि आकल्पाः कौस्तुभादिभूषणानि तेषां द्वन्द्वैक्यं तत्कल्पयन्ति कल्पनया ध्यायन्ति । क्रियायोगं कर्मतत्त्वं बुभुत्सतां बोद्धुमिच्छताम् । शता आर्षः । नोऽस्माकं तत् वर्णय । तेन तव भद्रमस्तु । येन क्रियानैपुणेन मर्त्यः अमर्त्यतां मुक्तिं यायात् । मर्त्योऽपि मार्कण्डेयादिः अमर्त्यताममरतां यात इति वा ॥ २–३ ॥ नमस्कृत्येति । गुरून्नमस्कृत्य वैष्णवीरपि दुर्बोधा अपि विभूतीर्वक्ष्ये । याः पद्मजादिभिर्ब्रह्मादिभिः आचार्यैः वेदतन्त्राभ्यां प्रोक्ताः । नमस्कृत्वा इति क्वाचित्कः पाठस्तु आर्षः ॥ ४ ॥ मायाद्यैरिति । मायाद्यैः प्रकृतिसूत्रमहदहङ्कारपञ्चतन्मात्रैर्नवभिस्तत्त्वैः विकारा एकादशेन्द्रियाणि च महाभूतानीति षोडश तन्मयः स प्रसिद्धो विराट् निर्मितः । यत्र विराजि सचित्के चेतनाधिष्ठिते भुवनत्रयं दृश्यते । अनेनाङ्गादिकल्पनासौलभ्यं दर्शितम् । वैराजरूपेण कल्पयन्तीति उत्तरमपि ॥५॥ एतदिति । एतद्धि पौरुषं रूपं पुरुषस्य वैराजस्य रूपमेवेश्वरेणाधिष्ठितत्वात् तदभेदविवक्षया तस्य रूपमुच्यते । तत्र प्रभोः भूः पादावित्यादित्रिभिर्भगवतो विभूतिर्या भूः तयाऽस्य पादौ कल्पिताविति तदभेदाद्भूरेव पादौ । एवं सर्वत्र ज्ञेयम् । भूराद्यनुवादेन भगवत्पादादिभावना विधीयते ॥ ६ ॥ प्रजापतिरिति । ईशितुः परमेश्वरस्य प्रजापतिः प्रजननं मेढ्रं मृत्युरपानः पायुः । स्फुटमन्यत् ॥ ७ ॥ लज्जेति । भूम्नः प्रभोः लज्जा उत्तरः उत्तरोष्ठः लोभस्त्वधरोष्ठः ज्योत्स्ना दन्ताः भ्रमो भ्रमहेतुः माया स्मयः हासः ह्रासो जनोन्मादकरी च मायेत्युक्तत्वात् । भूरुहाः वृक्षाः रोमाणि इत्यादि स्फुटम् ॥ ८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

॥१–२॥ अमर्त्यतां जरामरणाद्यतीतत्वम् मुक्तिम् ॥३–४॥ मायाद्यैरिति मायासंज्ञा प्रकृतिः महानहङ्कारो भूतानि पञ्चकालश्च तव तत्त्वानि विराट् ब्रह्माण्डम् ॥ ५ ॥ पौरुषं भगवदीयं नभो नाभिः ॥ ६–७ ॥ स्मयः स्मितं भ्रमः भ्रमाभिमानी देवतात्मकः ॥८॥

### श्रीमद्वीरराघवव्याख्या

इत्थं परिपृष्टं मार्कण्डेयवृत्तान्तमनुवर्ण्य कृत्स्नप्रबन्धार्थमुपसञ्जिहीर्षुं सूतमालक्ष्य निमिजायन्तेय श्रीभगवदुद्धवसम्वादादिमुखेनोक्ते श्रीभगवत्पूजात्मककर्मयोगे समाराध्य श्रीभगवदङ्गोपाङ्गास्त्रभूषणाद्यभिमन्तव्यानि तत्त्वानि बुभुत्सुः पृच्छति—अथेत्यादिना । इमं वक्ष्यमाणमर्थं वस्तु बहुवित्तमत्वमेव प्रपञ्चयति—समस्ततन्त्रेत्यादि । हे भागवत ! भवान् समस्ततन्त्राणां पुराणपञ्चरात्रादीनां यो राद्धान्तस्तस्मिंस्तत्त्ववित् ॥ १ ॥ को ऽसावर्थ इत्यतस्तमाह—तान्त्रिका इति । केवलस्य केवलशुद्धसत्त्वमयदिव्यमङ्गलविग्रहस्य श्रियः पतेः परिचर्यायां तान्त्रिकाः श्रीभगवदाराधनात्मतन्त्रपरिनिष्ठाः यथैव यैस्तत्त्वैः अङ्गोपाङ्गायुधाकल्पम् अङ्गानि पाणिपादादीनि उपाङ्गानि हृदयादीनि आयुधानि सुदर्शनादीनि आकल्पा भूषणानि तेषां द्वन्द्वैक्यं तत्कल्पयन्ति यत्तत्त्वाभिमानिदेवतात्वेन ध्यायन्तीति यत् तदेतन्नोऽस्माकं वर्णयेत्युत्तरेण सम्बन्धः ॥ २ ॥ कथम्भूतानां क्रियायोगं श्रीभगवदाराधनात्मकक्रियायोगापेक्षितं बोद्धुमिच्छतां

किं तत इत्यत्राह—येनेति। येन क्रियानैपुणेन तत्त्वात्मकाङ्गादिकल्पनोपेतरूपेण क्रियाकौशलेनामर्त्यतां जरामरणाद्यतीततां मुक्तिं यायात्प्राप्नुयात्॥ ३॥ तद्वर्णयितु प्रतिजानीते—नमस्कृत्येति। वैष्णवीः विष्णवङ्गादिभिरभिमन्तव्याः विभूतीस्तद्विभूतीरहं वक्ष्ये ता विशिनष्टि—पद्मजादिभिः ब्रह्मनारदादिभिराचार्यैः वेदरूप आगमः तन्त्रं पञ्चरात्रं ताभ्यां पञ्चम्यन्तमिदम् याः विभूतयो विज्ञाता इति शेषः॥ ४॥ तावद्ब्रह्माण्डम् श्रीभगवद्विग्रहाभिमन्तव्यमित्याह, मायाद्यैरिति मायासंज्ञाप्रकृतिः महान् अहङ्कारः भूतानि पञ्च-कालश्चेति नवभिस्सविकारैः एतद्विकारसहितैः तत्त्वैः विकारशब्दनैकादशेन्द्रियाणि पञ्च तन्मात्राणि च विवक्षितानि निर्मिता यो विराट् ब्रह्माण्डं दृश्यते शास्त्रेण ज्ञायते यत्र यस्मिन् विराजि सचित्के सजीवे भुवनत्रयं दृश्यते॥ ५॥ एतद्ब्रह्माण्डं पौरुषं परम-पुरुषसम्बन्धिरूपम् सर्वत्र सामानाधिकरण्यमभिमन्तव्ययोरभेदविवक्षानिबन्धनम् श्रीभगवद्दिव्यमङ्गलविग्रहाभिमन्तव्यं ब्रह्माण्ड मित्यर्थः एवमग्रेऽपि एतदेव विभज्य दर्शयति—भूरित्यादिना। भूशब्देनाऽतलादिभिः सह सप्तलोकाविवक्षिताः नभो नाभिः हे शौनक!॥ ६॥ प्रजापतिः प्रजननं मेढ्रम् ईशितुः परमपुरुषस्य मृत्युरपानं गुदम् यमो भ्रुवौ भ्रूलते॥ ७॥ उत्तर उत्तरोष्ठः लोभस्त्वधरोष्ठः ज्योत्स्ना दन्ताः भ्रमः भूम्नः परमात्मनः स्मयः स्मितं भूरुहा वृक्षाः रोमाणि मेघाः पुरुषस्य परमपुरुषस्य मूर्द्धजाः केशाः॥ ८॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्थूलमतीनामुपासनार्थं पुरुषरूपस्य हरेर्यजनप्रकारं वदत्यस्मिन्नध्याये, तत्र तद्बुभुत्सया शौनकः पृच्छति—अथेति। बुद्धिसन्निहितत्वादिममित्युक्तं समस्ततन्त्रराद्धान्ते सर्वपञ्चरात्रतन्त्र लक्षणशास्त्रोक्तसिद्धान्ते उक्तं यद्भागवतम् भगवद्विषयम् तत्त्वं तद्वेत्तीति॥ १॥ तान्त्रिकाः श्रीनारायणपूजाविधायकशास्त्रपटवः श्रियः पतेः पत्युः प्रयोगरूढैः प्राबल्याद्विसञ्ज्ञा वैकल्पिका इति बोद्धव्यं परिचर्यायां पूजायाम् यैर्भूम्यादिपदार्थैः अङ्गोपाङ्गायुधाकल्पम् अङ्गानि पादादीनि उपाङ्गानि गरुडादीनि कल्पयत्याकल्प-माभरणं कौस्तुभादि॥ २॥ तान् पदार्थान् क्रियायोगम् पूजालक्षणम् बुभुत्सतां ज्ञातुकामानां क्रियानैपुण्येन क्रियापटुत्वेन अमर्त्यतां मरणराहित्यम् मुक्त्याख्यम्॥ ३॥ वेदागमतन्त्राभ्यां वेदाख्यागमेन तन्त्रशास्त्रेण च पद्मजादिभिराचार्यैः प्रतिपादिता यास्ता विभूतीः॥ ४॥ मायाप्रकृतिः आदिशब्देन महदहङ्कारमनांसि पञ्चभूतानि च गृह्यन्ते विकारा इन्द्रियादयः विराट् ब्रह्माण्डं सचित्के चेतनसहिते यस्मिन् ब्रह्माण्डं भुवनत्रयं दृश्यते॥५॥ एतद्ब्रह्माण्डं पौरुष रूपम् पुरुषसन्निधानयोग्यप्रतिमारूपं यदङ्गादिकं कल्पयन्ति तानाह—भूरिति। अत्र विवरणं पूर्ववदूह्यम्॥ ६॥ प्रजापतिर्दक्षः प्रजननमुपस्थम्॥ ७॥ उत्तरोष्ठो लोभः लज्जा अधरोष्ठो द्युतिः स्वरूपकान्तिः ज्योत्स्ना भ्रमो भ्रान्तिः स्मयो दर्पविशेषः एतावती अङ्गकल्पना॥ ८॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

केवलस्य स्वरूपभूताङ्गोपाङ्गादिलक्षणस्य श्रियः पतेः स्वरूपभूतत्वेन वक्ष्यमाणाया लक्ष्म्याः पत्युस्तस्याङ्गादिकैः कल्पयन्ति मायिकवैभवैरभिन्नतयोपासते तत्सर्वं नो वर्णय मर्त्यः प्रपञ्चाविष्टोऽपि॥ १–३॥ विष्णोरपि विभूतीः साधारणीस्तद्विभूतीर्वक्ष्ये तत्र वैष्णवीस्तत्स्वरूपभूता अपि वक्ष्य इत्यर्थः॥ ४॥ मायाद्यैरिति चतुष्टयमेकवाक्यम्। तत्र विराजि सचित्के समष्टिजीवचैतन्या-धिष्ठिते॥ ५॥ भूः पादावित्यादौ तत्पादादिशक्त्यैव भूरादीनां शक्तिरित्यभिन्नतयोपास्यत इत्यर्थः॥ ६–९॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

महापुरुषपूजार्थमङ्गोपाङ्गविभूतयः। एकादशे रविव्यूहकथा अपि निरूपिताः॥

स ह्यस्मत्पूर्वपुरुषो मार्कण्डेयस्तान्त्रिकं भगवत्पूजाविधौ विशारद आसीदतस्तं पूजाविवेकं जिज्ञासेत्याह—अथेति। येन पूजाप्रकारेण स मुनिर्भगवन्तमपरोक्षीचकार इममर्थं पृच्छामः राद्धान्ते सिद्धान्ते॥ १॥ अङ्गानि पाणिपादादीनि उपाङ्गानि गरुडादीनि आयुधानि सुदर्शनादीनि आकल्पाः कौस्तुभादयः तेषां द्वन्द्वैक्यं यत् यथा कल्पयन्ति येश्च तत्त्वैः कल्पयन्ति तन्नो वर्णय सच्चिदानन्दवपुषो भगवतो येषां येषामङ्गानां मायाविभूतयो मायिकप्रपञ्चोऽत्र दृश्यन्ते ताभिरेव पुनस्तत्तदङ्गान्युपासनार्थं कल्पयन्ति इत्यर्थः॥ २–३॥ गुरूपदेशगम्यत्वादस्यार्थस्य तन्नमस्कारपूर्वकमाह—नमस्कृत्येति॥ ४॥ भगवतो विभूतिभिः कल्पितो विग्रहो विराडेवास्तीत्याह, मायाद्यैः प्रकृतिसूत्रमहदहङ्कारपञ्चतन्मात्रैर्नवभिः विकारा एकादशेन्द्रियाणि पञ्चमहाभूतानि चेति षोडश तन्मयो विराट् स प्रसिद्धो निर्मितः यत्र विराजि सचित्के चेतनाधिष्ठिते भुवनत्रयं दृश्यते॥ ५॥ पौरुषं पुरुषस्य भगवता मायिकं रूपं नतु स्वरूपमित्यर्थः। कया कया विभूत्या किं किमङ्गं कल्पितं तदाह—भूरिति। सच्चिदानन्दवपुषो भगवतो पादयोर्या विभूतिर्भूः तयास्य पादौ कल्पिताविति तदभेदविनिर्देशाद्भूरेव पादौ एवं सर्वत्र ज्ञेयम् एवञ्च विराट् पुरुषस्य पादादिभावनया सच्चिदानन्दपुरुषस्य पादादीनि यथा स्मर्त्तव्यानि मत्प्रभुर्भगवान् स्वपादाभ्यां तद्विभूतिं पृथिवीं बिभर्त्ति शिरसा तद्विभूतिं दिवं बिभर्त्ति इत्येवं सर्वाण्येव

वस्तूनि नयनमनोगतानि भगवदङ्गान्येव तद्विभूतित्वादित्यतः सर्वभावनापि भगवद्भावनैवेति विवेकः ॥ ६ ॥ प्रजननं मेढ्रम् अपानः पायुः उत्तर ओष्ठो लज्जा अधर ओष्ठो लोभः स्मयो हासः भ्रमः माया ॥ ७–८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

भगवदाराधनेन मार्कण्डेयो भगन्तमपरोक्षीकृतवानतोऽतिहर्षेण भगवदाराधनप्रकारविशेषं पृच्छति—अथेति। इमं वक्ष्यमाणम्। हे भागवत ! ॥ १ ॥ केवलस्य वैराजमात्रस्य परिचर्यायां विषये तान्त्रिकाः अङ्गानि पाणिपादादीनि उपाङ्गानि गरुडादीनि आयुधानि सुदर्शनादीनि आकल्पाः कौस्तुभादयः तेषां द्वन्द्वैक्यम्। यैस्तत्त्वैर्यथा कल्पयन्ति भावयन्ति तथा नोऽस्माकं वर्णयेत्यग्रिमेणान्वयः ॥ २–३ ॥ गुरुपरम्परालभ्यत्वादस्याऽतो तत्प्रणामपूर्वकमाह—नमस्कृत्वेति। विभूतीर्विराड्विग्रहाद्याः पद्मजो ब्रह्मा आदिना श्रीसनत्कुमारनारदादयो बोध्यास्तैः ॥ ४ ॥ विराडवयवभूतैः भूरादिभिरङ्गादिकल्पनां निरूपयितुं विराड्विग्रहमाह—मायाद्यैः मायासूत्रमहदहङ्कारपञ्चतन्मात्ररूपैर्नवभिस्तत्त्वैः एकादशेन्द्रियपञ्चमहाभूतानीति षोडशविकारमयः यत्र सचित्के सजीवे भुवनत्रयं दृश्यते स विराट् निर्मितो भगवतेति शेषः ॥ ५ ॥ पुरुषस्य वैराजस्य विष्णोः एतन्मायामयं रूपम् शरीरम् अङ्गकल्पनामाह—भूःपादावित्यादिना ॥ ६ ॥ प्रजननं मेढ्रम् अपानं गुदम् ॥ ७ ॥ उत्तरः ओष्ठो लज्जाअधरः ओष्ठो लोभः स्मयः हास्यं भ्रमो विभ्रमो विलासविशेषः॥ ८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एकादशे तु पूजार्थं महापुरुषवर्णनम्। रवेर्व्यूहस्य चाख्यानं प्रतिमासं पृथक् पृथक् ॥ १ ॥

तदेव भगवदाराधनफलं यन्मार्कण्डेयेन लब्धं तच्छ्रुत्वोपस्थिते तदाराधने कञ्चिद्विशेषं पृच्छति–अथेति। हे भागवत यतो भवान् समस्ततन्त्राणां राद्धान्ते सिद्धान्ते तत्त्ववित् अतो बहुवित्तमं भवन्तमथेदानीमिमं वक्ष्यमाणमर्थं पृच्छाम इत्यन्वयः ॥ १ ॥ प्रष्टव्यमाह—तान्त्रिका इति। केवलस्य शुद्धसत्त्वमयदिव्यविग्रहस्य श्रियः पतेः परिचर्यायां पूजायां तान्त्रिकाः तन्त्रमार्गेण भगवदाराधनपराः यथैव येन प्रकारेण यैश्च तत्त्वैः अङ्गानि पाणिपादादीनि उपाङ्गानि गरुडादीनि आयुधानि सुदर्शनादीनि आकल्पाः कौस्तुभादिभूषणानि तेषां द्वन्द्वैक्यं तत्कल्पयन्ति कल्पनया ध्यायन्ति ॥ २ ॥ तत्तत्प्रकारादीनारमाकं क्रियायोगं बुभुत्सतां वर्णयेति द्वयोरन्वयः। हर्षेणाशिषमाह—ते भद्रं भवतु। पूजाफलमाह—येनेति। अमर्त्त्यतां मुक्तिम् ॥ ३ ॥ गुरूपदेशगम्यत्वादस्यार्थस्य तन्नमस्कारपूर्वकमाह—नमस्कृत्येति। विभूतीः विराट्विग्रहाद्याः। अपिशब्दस्तत्कथनस्य दुष्करत्वसूचकः ॥ ४ ॥ अङ्गादिकल्पनां भूरादिभिर्दर्शयितुं प्रथमं तावद्यथाकपयन्तीति प्रश्नस्य वैराजरूपेणेत्युत्तरं वक्तुं विराड्विग्रहमाह—मायाद्यैः प्रकृतिसूत्रमहदहङ्कारपञ्चतन्मात्रैर्नवभिस्तत्त्वैः विकार एकादशेन्द्रियाणि पञ्चमहाभूतानीति षोडशतन्मयः स प्रसिद्धो विराट् निर्मितः यत्र विराजि सचित्के चेतनाधिष्ठिते भुवनत्रयं दृश्यते। अनेनाङ्गादिकल्पनासौलभ्यं दर्शितम् ॥ ५ ॥ एतद्वै पौरुषं रूपं पुरुषस्य वैराजस्य रूपमेवेश्वरेणाधिष्ठितत्वात्तदभेदविवक्षया तस्य रूपमुच्यते। अङ्गकल्पनामाह–भूः पादावित्यादि त्रिभिः भूराद्यनुवादेन भगवत्पादादिभावना विधीयते ॥ ६ ॥ ईशितुः परमेश्वरस्य। प्रजापतिजननं मेढ्रम्। मृत्युरपानः वायुः ॥ ७ ॥ उत्तरः उत्तरोष्ठः। लोभस्त्वधरोष्ठः ज्योत्स्ना दन्ताः। भ्रमः भ्रमहेतुः माया। स्मयः हासः 'हासो जनोन्मादकरी च माया' इत्युक्तत्वात् ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

वर्णनं तु महापुं.सोऽर्चार्थमेकादशे रवेः। व्यूहाख्यानं पृथक् प्रोक्तं प्रतिमासं पृथग्यथा ॥ १ ॥

मर्त्योऽमर्त्यत्वमापन्नो येनासौ मार्गवोत्तमः। अप्राक्षीत्तं क्रियायोगमङ्गोपाङ्गादिसंयुतम् ॥ २ ॥

एवं स्वपरिपृष्टमार्कण्डेयवृत्तान्तमनुवर्ण्य कृत्स्नप्रबन्धार्थमुपसंजिहीर्षुः सूतमालक्ष्य निमिजायन्तेयभगवदुद्धवसंवादादिमुखेनोक्ते भगवत्पूजात्मककर्मयोगे समाराध्यभगवदङ्गोपाङ्गायुधभूषणाद्यभिमन्तव्यानि तत्त्वानि बुभुत्सुः पृच्छति शौनकोऽथेत्यादिना। अथेममिति। अथ हे भागवत हे भगवद्भक्त सूत, भवान् समस्तानां तन्त्राणां पुराणपञ्चरात्रादीनां यो राद्धान्तः सिद्धान्तः तस्मिन्, तत्त्ववित् अस्ति। अतः बहुवित्तमं भवन्तं इमं अर्थं पृच्छामः ॥ १ ॥ कोऽसावर्थ इत्यतस्तमाह। तान्त्रिका इति। तदिति च। केवलस्य केवलशुद्धसत्त्वमयदिव्यविग्रहस्य श्रियः पतेः, परिचर्यायामुपासनायां, तान्त्रिकाः भगवदाराधनात्मकतन्त्रपरिनिष्ठाः, यथा येन प्रकारेण एव, यैस्तत्त्वाभिमानिदेवैः, अङ्गानि पाणिपादादीनि च उपाङ्गानि हृदादीनि च आयुधानि सुदर्शनादीनि च आकल्पा भूषणानि च तेषां द्वन्द्वैक्यं कल्पयन्ति यत्, तत् तमित्यर्थः। क्रियायोगं भगवदाराधनात्मकक्रियायोगं बुभुत्सतां बोद्धुमिच्छतां नोऽस्माकं वर्णय। हे सूत ते तव भद्रं मङ्गलं, स्यादिति शेषः। किं तत इत्यत्राह। येन क्रियानैपुणेन तत्त्वात्मकाङ्गादिकल्पनोपेतरूपेण

क्रियाकौशलेन, मर्त्यः अमर्त्यतां जरामरणाद्यतीततां मुक्तिमित्यर्थः । यायात् प्राप्नुयात् द्वयोरेकसंबन्धः ॥ ३ ॥ अस्यार्थस्य गुरूपदेशगम्यत्वात्तं नमस्कुर्वन् तद्वर्णयितुं प्रतिजानीते । नमस्कृत्येति । गुरून् नमस्कृत्य पद्मजो ब्रह्मा आदिर्येषां नारदादीनां तैः आचार्यैः, वेदो निगमश्च तन्त्रं पञ्चरात्रं च ताभ्यां याः वैष्णवीः विष्णवङ्गादिभिरभिमन्तव्याः विभूतीः प्रोक्ताः ता अपि वक्ष्ये कथयिष्ये ॥ ४ ॥ अङ्गादिकल्पनां भूरादिभिर्दर्शयितुं प्रथमं तावद्यथा कल्पयन्तीति प्रश्नस्य वैराजरूपेणेत्युत्तरं वक्तुं ब्रह्माण्डं भगवद्विग्रह इत्यभिमन्तव्यमित्याह । मायाद्यैरिति । मायाद्यैः प्रकृतिसूत्रमहदहंकारपञ्चतन्मात्रात्मकैः नवभिः तत्त्वैः, विकाराः एकादशेन्द्रियाणि पञ्चमहाभूतानीति षोडश तत्प्रचुरः स प्रसिद्धः विराट् निर्मितः । सचित्के सजीवे यत्र यस्मिन् विराजीत्यर्थः । भुवनत्रयं दृश्यते ॥ ५ ॥ एतदिति । एतद्ब्रह्माण्डरूपं पौरुषं परमपुरुषसंबन्धि रूपं भवति । एतदेव विभज्य दर्शयति भूरित्यादिना । प्रभोः भूः भूशब्देनातलादयः सप्त लोकाः विवक्षिताः । पादौ, द्यौः शिरः, नभः नाभिः, सूर्यः अक्षिणी, वायुः नासे, दिशः कर्णौ, हे प्रभो शौनकेति संबोधनं वा ॥ ६ ॥ प्रजापतिरिति । ईशितुरस्येश्वरस्य प्रजापतिः प्रजननं मेढ्रं, मृत्युः अपानः पायुः, लोकपालाः तद्बाहवो भुजाः, चन्द्रः मनः, यमः भ्रुवौ ॥ ७ ॥ लज्जेति । लज्जा उत्तरः उत्तरोष्ठः, लोभः अधरोऽधरोष्ठः, ज्योत्स्ना चान्द्री प्रभा दन्ताः, भ्रमः भ्रान्तिः भूम्नः परमात्मनः स्मयः स्मितं, भूरुहा वृक्षाः रोमाणि, मेघाः पुरुषमूर्द्धजाः परमात्मनः केशाः ॥ ८ ॥

### हिन्दी अनुवाद

## भगवान् के अङ्ग, उपाङ्ग और आयुधों का रहस्य तथा विभिन्न सूर्यगणों का वर्णन

शौनकजी ने कहा—सूतजी ! आप भगवान् के परम भक्त और बहुज्ञों में शिरोमणि हैं। हमलोग समस्त शास्त्रों के सिद्धान्त के सम्बन्ध में आप से एक विशेष प्रश्न पूछना चाहते हैं, क्योंकि आप उसके मर्मज्ञ हैं ॥ १ ॥ हमलोग क्रियायोग का यथावत् ज्ञान प्राप्त करना चाहते हैं; क्योंकि उसका कुशलतापूर्वक ठीक-ठीक आचरण करने से मरणधर्मा पुरुष अमरत्व प्राप्त कर लेता है। अतः आप हमें यह बतलाइये कि पाञ्चरात्रादि तन्त्रों की विधि जाननेवाले लोग केवल श्रीलक्ष्मीपति भगवान् की आराधना करते समय किन-किन तत्त्वों से उनके चरणादि अङ्ग, गरुडादि उपाङ्ग, सुदर्शनादि आयुध और कौस्तुभादि आभूषणों की कल्पना करते हैं ? भगवान् आप का कल्याण करें ॥ २–३ ॥ श्रीसूतजी ने कहा—शौनकजी ! ब्रह्मादि आचार्यों ने, वेदों ने और पाञ्चरात्रादि तन्त्र-ग्रन्थों ने विष्णुभगवान् की जिन विभूतियों का वर्णन किया है, मैं श्रीगुरुदेव के चरणों में नमस्कार करके आपलोगों को वही सुनाता हूँ ॥ ४ ॥ भगवान् के जिस चेतनाधिष्ठित विराट् रूप में यह त्रिलोकी दिखायी देती है, वह प्रकृति, सूत्रात्मा, महत्तत्त्व, अहङ्कार और पञ्चतन्मात्रा—इन नौ तत्त्वों के सहित ग्यारह इन्द्रिय तथा पञ्चभूत—इन सोलह विकारों से बना हुआ है ॥ ५ ॥ यह भगवान् का ही पुरुषरूप है। पृथ्वी इसके चरण हैं, स्वर्ग मस्तक है, अन्तरिक्ष नाभि है, सूर्य नेत्र हैं, वायु नासिका है और दिशाएँ कान हैं ॥ ६ ॥ प्रजापति लिङ्ग है, मृत्यु गुदा है, लोकपालगण भुजाएँ हैं, चन्द्रमा मन है और यमराज भौंहें हैं ॥ ७ ॥ लज्जा ऊपर का होठ है, लोभ नीचे का होठ है, चन्द्रमा की चाँदनी दन्तावली है, भ्रम मुसकान है, वृक्ष रोम हैं और बादल ही विराट् पुरुष के सिरपर उगे हुए बाल हैं ॥ ८ ॥

यावानयं वै[1] पुरुषो यावत्या संस्थया मितः । तावानसावपि महापुरुषो लोकसंस्थया ॥ ९ ॥
कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः । तत्प्रभा व्यापिनी साक्षात् श्रीवत्समुरसा विभुः ॥ १० ॥
स्वमायां वनमालाख्यां नानागुणमयीं दधत् । वासश्छन्दोमयं पीतं ब्रह्मसूत्रं त्रिवृत् स्वरम् ॥ ११ ॥
बिभर्ति सांख्यं योगं च देवो[2] मकरकुण्डले । मौलिं पदं पारमेष्ठ्यं सर्वलोका[3]भयंकरम् ॥ १२ ॥
अव्याकृतमनन्ताख्यमासनं यदधिष्ठितः । धर्मज्ञानादिभिर्युक्तं सत्त्वं पद्ममिहोच्यते ॥ १३ ॥
ओजःसहोबलयुतं मुख्य[4]तत्त्वं गदां दधत् । अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनम् ॥ १४ ॥
नभोनिभं नभस्तत्त्वमसिं चर्म तमोमयम् । कालरूपं धनुः शार्ङ्गं तथा कर्ममयेषुधिम् ॥ १५ ॥
इन्द्रियाणि शरानाहुराकूतीरस्य स्यन्दनम् । तन्मात्राण्यस्याभिव्यक्तिं मुद्रयार्थक्रियात्मताम् ॥ १६ ॥

१. हि । २. दिव्ये । ३. मयंकरम् । ४. ख्यं तत्त्वं ।

## कृष्णप्रिया व्याख्या

अन्वयः—यावान् अयं वै पुरुषः यावत्या संस्थया मितः लोकसंस्थया तावान् असौ अपि महापुरुषः ॥ ९ ॥ अजः स्वात्मज्योतिः कौस्तुभव्यपदेशेन बिभर्ति विभुः तत्प्रभा व्यापिनी साक्षात् उरसा श्रीवत्सं ( बिभर्ति ) ॥ १० ॥ नानागुणमयीं स्वमायां वनमालाख्यां दधत् छन्दोमयं पीतं वासः त्रिवृत् स्वरं ब्रह्मसूत्रं ( बिभर्ति ) ॥ ११ ॥ देवः सांख्यं योगं मकरकुण्डले बिभर्ति सर्वलोकाभयंकरं पारमेष्ठ्यं पदं मौलिम् अव्याकृतम् अनन्ताख्यम् आसनं यदधिष्ठितः धर्मज्ञानादिभिः युक्तं सत्त्वम् इह पद्मम् उच्यते ॥ १२–१३ ॥ ओजः सहोबलयुतं मुख्यतत्त्वं गदां दधत् अपां तत्त्वं दरवरं तेजस्तत्त्वं सुदर्शनं दधत् ॥ १४ ॥ नभोनिभं नभस्तत्त्वम् असिं तमोमयं चर्म कालरूप शार्ङ्गं धनुः कर्ममयेषुधिं ( बिभर्ति ) ॥ १५ ॥ इन्द्रियाणि शरान् अस्य आकूतीः स्यन्दनम् आहुः तन्मात्राणि अस्य मुद्रयार्थक्रियात्मताम् अभिव्यक्तिम् ( आहुः ) ॥ १६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अनुक्तमन्यदप्येवमूह्यमित्याह । यावानयं व्यष्टिः पुरुषः स्वमानतः सप्तवितस्तिः संस्थयाऽवयवसन्निवेशेन मितः परिमितः ॥ भूषणादीन्याह कौस्तुभेत्यादिना । स्वात्मज्योतिः शुद्धं जीवचैतन्यम् । या तस्य कौस्तुभस्य प्रभा तामेव श्रीवत्सं बिभर्ति ॥ १० ॥ त्रिवृत्स्वरं त्रिमात्रं प्रणवम् ॥ ११ ॥ पारमेष्ठ्यं पदं ब्रह्मलोकम् ॥ १२ ॥ अव्याकृतं प्रधानम् । यदधिष्ठितोऽधिष्ठाय स्थितः । तदासनभूतं पद्मं सत्त्वं सत्त्वगुणः ॥ १३ ॥ मुख्यतत्त्वं प्राणतत्त्वम् । 'प्राणो वै मुख्यः' इति श्रुतेः । दरवरं शंखम् ॥ १४–१५ ॥ आकूतीः क्रियाशक्तियुक्तं मनः । अस्य रथस्याभिव्यक्तिं बहिरभिव्यक्तं रूपम् । मुद्रया धृतयाऽर्थक्रियात्मतां वरदाभयदादिरूपत्वं बिभर्ति । तत्तन्मुद्रया तथातथा भावयेदित्यर्थः ॥ १६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

व्यपदेशो मिषः 'व्यपदेशो मिषेऽस्थाने पक्षिवर्जिते' इति निरुक्तिः । अंगान्युक्त्वा भूषणान्याह—कौस्तुभस्वरूपेण शुद्धजीवचैतन्यं कौस्तुभस्यैव विभूतिं धत्ते । तथाहि—'अकारेणोच्यते विष्णुः श्रीरुकारेण कथ्यते । मकारस्तु तयोर्दासः पञ्चविंशः प्रकीर्तितः' । इति भक्तिविवेकोक्तेः । स्वदासं भगवान् हृदि धत्ते इत्यभिप्रेत्यैव 'साधवो हृदयं त्वहम्' भगवान्भक्तभक्तिमान्' इत्याद्युक्तम् । कौस्तुभस्यैव प्रभा व्यापिनी दक्षिणस्तनोद्र्ध्वपर्यंतगामिनी या तामेव श्रीवत्सं दक्षिणावर्त्तमृणालतंतुसूक्ष्मरोमावल्याकारं बिभर्ति, यस्य विभूतिर्धर्मः, 'तथैव वामस्तनादूर्ध्वलक्ष्मीरेखानिकषाश्मनि कानकी रेखेवानुक्तापि ज्ञेया, यस्या विभूतिश्च राजादिसंपत् ॥ १० ॥ त्रिगुणात्मिका माया वनमालाया विभूतिः, छंदांसि पीतांबरस्योपवीतस्य प्रणवस्त्रिमात्रश्च विभूतिरेवमेव सर्वत्र स्वविभूत्या सामानाधिकरण्यम् ॥११॥ सांख्यं ज्ञानम् । योगं कर्म ॥ १२ ॥ अव्याकृतं प्रधानमनंतस्यैव विभूतिस्तस्यैव विश्वहेतुत्वम् 'यमाहुरस्य स्थितिसर्गसंयमं त्रिभिर्विहीनं यमनंतमद्वयम्' इतिः 'उत्पत्तिस्थितिलयहेतवोस्य कल्पाः सत्त्वाद्याः प्रकृतिगुणा यदीक्षयाऽऽसन्' इति पंचमोक्तेः । वनमाला-विभूतिर्माया तु ततोपि मूलभूता ज्ञेया ॥ १३–१४ ॥ नभोनिभं नभोवन्निर्मलम् । असिं नंदकम् । तमोमयं तमोगुणवदाच्छादकम् । पुण्यकर्मस्वरूपे इषुधी ॥ १५ ॥ इत्यर्थ इति—वरदमुद्रया वरद त्वमभयदमुद्रयाऽभयदत्वं च भावयेदिति भावः । बाहुप्रसारणपूर्वकं दक्षहस्तस्य विस्तृतयोत्तानीकरणेनाश्वासनं वरमुद्रा भवति, तस्य तथैव न्युब्जीकरणेनाश्वासनसभयदमुद्रा भवतीति विवेकः । एवमन्या अपि ज्ञेयाः ॥ १६ ॥

## अन्वितार्थप्रकाशिका

अनुक्तमन्यदप्येवमूह्यमित्याह—यावानिति । अयं व्यष्टिपुरुषः यावत्या संस्थया अवयवसंनिवेशेन यावान् यावदवयववान् मितः असौ महापुरुषोऽपि लोकसंस्थया तावान् तावदवयववानित्यर्थः ॥९॥ कौस्तुभेति । अजो भवान् स्वात्मज्योतिः शुद्धजीवचैतन्यं कौस्तुभस्य व्यपदेशेन व्याजेन बिभर्त्ति । तस्य कौस्तुभस्य या व्यापिनी प्रभा तामेवोरसा श्रीवत्सं बिभर्त्ति ॥ १० ॥ स्वमायामिति । नानागुणाः सत्त्वादयः सूत्राणि च तन्मयीं मायां वनमालाख्यां बिभर्त्ति । छन्दोमयं पीतं वासश्च बिभर्त्ति । त्रिवृत्स्वरमकारादिवर्ण-त्रयात्मकं त्रिमात्रं च स्वरं प्रणवं ब्रह्मसूत्रं बिभर्त्ति ॥ ११ ॥ बिभर्त्तीति । पूर्वार्द्धं स्फुटम् । सर्वलोकानामभयङ्करं पारमेष्ठ्यं पदं ब्रह्मलोकं मौलिं मुकुटं बिभर्त्ति ॥ १२ ॥ अव्याकृतमिति । यत् अधिष्ठितः अधिष्ठाय स्थितस्तदनन्ताख्यमासनमव्याकृतं प्रधानं बिभर्त्ति । तथा धर्मज्ञानवैराग्यैश्वर्यश्रीयशोविमलोत्कर्षणीज्ञानाक्रियायोगाप्रह्वीसत्येशानानुग्रहाख्यशक्तिभिर्युक्तं सत्त्वं सत्त्वगुणः इह भगवदासने पद्ममुच्यते ॥ १३ ॥ ओज इति । ओजआदियुतं मुख्यतत्त्वं प्राणतत्त्वम् । "प्राणो वै मुख्यः" इति श्रुतेः । गदां दधत् वर्त्तते । एवमपां तत्त्वं चर्म खेटम् । तया कालरूपं शार्ङ्गं धनुः कर्ममयमिषुधिं वाणकोशं च दधद्वर्त्तते ॥ १४–१५ ॥ इन्द्रियाणीति । इन्द्रियाणि शरानाहुः । आकूतीः क्रियाशक्तियुक्तं मनः अस्य भगवतः स्यन्दनं रथम् आहुः । अस्य रथस्याभिव्यक्तरूपं मुद्रया धृतया अर्थक्रियात्मतां वरदाभयदादिरूपत्वं बिभर्त्ति तत्तन्मुद्रया तथा तथा भावयेदित्यर्थः ॥ १६ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

संस्थया अवयवसंस्थानेन ॥ ९ ॥ आत्मज्योतिः स्वशेषभूतम् ज्ञानाकारं जीवात्मरूपं कौस्तुभो जीववर्णाभिमानिनी देवतेत्यर्थः । तत्प्रभा जीवस्य ज्ञानप्रभा श्रीवत्सादिषु तत्त्वनिवासः पुराणान्तरप्रसिद्धोऽपि श्रुतिवैविध्यसम्भवात् तन्मूलतया परिहर्तव्यः ॥ १० ॥ नानागुणमयी मायां पञ्चभूताख्यकार्यावस्थां प्रकृतिं भूतपञ्चकमयीं वनमालामित्यर्थः । ब्रह्मसूत्रं त्रिवृत् स्वरम् उपवीताभिमानिनी देवतेत्यर्थः ॥ ११ ॥ पारमेष्ठ्यं पदं ब्रह्मलोकं मुख्यं तत्त्वं प्रथमोत्पन्नम् ॥ १२–१३ ॥ महत्तत्त्वं महान्वै बुद्धिलक्षणः बुद्धिश्च गदेति शास्त्राऽवगतं दरवरः शङ्खः ॥ १४–१५ ॥ आकूतिः स्यन्दनं देहाभिमानिनी देवता अभिव्यक्तिः अर्चावतारेषु आह्विकांशः मुद्राज्ञानमुद्राद्यभिमानिनी देवता अर्थक्रियाकारिताभिमानिनी ॥ १६ ॥

### श्रीमद्वीरराघवव्याख्या

अनुक्तमन्यदपि एवमूह्यम् इत्याह—यावानिति । अयं व्यष्टिपुरुषः यावान्यावदवयवान् यावत्या स्वमानतः सप्तवितस्तिपरिमाणया संस्थयाऽवयवसंस्थानेन मितः परिमितोऽसौ महान्पुरुषः परमपुरुषोपि लोकसंस्थया लोकाभिमानिदेवतात्मकपादाद्यवयवसंस्थानेन ( तावान ) तावदवयववान् मानं त्वाराधकबुद्ध्यनुगुणमिति भावः ॥ ९ ॥ तदेवमङ्गोपाङ्गाद्यभिमन्तव्यानि तत्त्वानीत्युक्त्वा ऽथ भूषणाद्यभिमानिदेवतात्मकमन्तव्यान्याह—कौस्तुभव्यपदेशेनेत्यादिना । अजः परमपुरुषः कौस्तुभव्याजेन स्वात्मज्योतिर्विभर्त्ति स्वात्मज्योतिः स्वशेषभूतं ज्ञानाकारं चिदात्मस्वरूपं कोस्तुभो जीववर्गाभिमानी देवतेत्यर्थः । तत्प्रभा जीवस्य प्रभा धर्मभूतज्ञानम् इत्यर्थः । व्यापिनी विभ्वी तां प्रभुर्भगवानुरसा श्रीवत्स विभर्त्ति श्रीवत्सस्तत्प्रभाभिमानिदेवतेत्यर्थः । पुराणान्तरविरोधस्तु श्रुतिवैविद्ध्यसम्भावनया तन्मूलतया परिहर्तव्यः ॥ १० ॥ नानागुणमयीं पञ्चभूताख्यकार्यावस्थां भूतपञ्चकमयीं स्वमायां वैषम्यावस्थसत्त्वादिगुणत्रयमयीं वा प्रकृतिं वनमालाख्यां दधद्विभ्राणः आख्याशब्दः पूर्ववद्भेदविवक्षाभिप्रायकः पीतं पिशङ्गं वासो वस्त्रं छन्दोमयं गायत्र्यादिच्छन्दोमयं वासः छन्दोभिमानिनीदेवतेत्यर्थः । त्रिवृत् त्रिमात्रमकारोकारमकारात्मकं वा स्वरं प्रणवं ब्रह्मसूत्रं विभर्त्ति ॥ ११ ॥ साङ्ख्यं च योगश्चेति द्वन्द्वैक्यं तद्वेदश्चेत्युभे मकरकुण्डले सर्वलोकोत्तरं पारमेष्ठ्यं पदं ब्रह्मलोकं मौलि किरीटं बिभर्ति ॥ १२ ॥ यद्येन परमपुरुषेणाधिष्ठितमनन्ताख्यं शेषाख्यमासनमव्याकृतं मूलप्रकृतिः यत्सत्त्वं विशुद्धं सत्त्वं तद्धर्मज्ञानादिभिर्युक्तम् पद्ममुच्यते आदिशब्देन वैराग्यैश्वर्य्याधर्माज्ञानावैराग्यानैश्वर्य्यविमलोत्कर्षिणीज्ञानाक्रियायोगाप्रह्वीसत्येशानानुग्रहाः संगृह्यन्ते ॥ १३ ॥ ओजः इन्द्रियशक्तिः सहो मनःशक्तिः बलं दैहिकं तैयुतं मुख्यं तत्त्वं मुख्यप्राणः "प्राणो वै मुख्यः" इति श्रुतेः । ओजआदीनां प्राणायत्तत्वात्तस्य तद्युक्तत्वम् । तदेव गदां दधत् यद्वा, मुख्यतत्त्वं प्रथमोत्पन्नतत्त्वं महत्तत्त्वं बुद्धिरिति यावत् "महान्वै बुद्धिलक्षणः" इत्यादिस्मृतेः तस्यां प्रसृतायामेवोजःप्रभृतीनि भवन्तीति तस्यास्तद्युक्तत्वम् अपां तत्त्वं जलतत्त्वं दरवरः शङ्खः ॥ १४ ॥ नभोनिभो नभोवन्नीलतनुभंगवान्नभस्तत्त्वम् असिं खड्गं तमोमयं चर्म खेटं च दधदित्यनुषक्तेनान्वयः । शार्ङ्गः नाम धनुः कालरूपं कालाभिमानिधनुरित्यर्थः । तथा कर्ममयः इषुधीर्बाणकोशो यस्य सः ॥ १५ ॥ इन्द्रियाणीति । हयान् अश्वानाकूतिर्मनः अस्य परमपुरुषस्य स्यन्दनं रथः यद्वा, आकूतिर्देहात्माभिमानो भगवद्रथ इत्यर्थः । अस्याभिव्यक्तिरर्चावतारेष्वाहितांशस्तन्मात्राणि इन्द्रियार्थाः इन्द्रियप्रयोजनानि इन्द्रियादिव्यापारा इति यावत् । तन्मात्राण्यस्याभिव्यक्तिरिति शब्दादीनामुक्तत्वात्त अस्य क्रियाः तत्क्रियाभिमन्तव्या इत्यर्थः । मुद्रात्वर्थक्रियात्मतेतिपाठे मुद्रा वरदाभयादिमुद्राभिमानिनी देवता अर्थक्रियात्मता प्रयोजनतत्क्रियास्वरूपतात्वभिमन्तव्या मुद्रयार्थाक्रियात्मताम् इति पाठे तया तां विभर्त्ति इति शेषः ॥ १६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सोऽयं पुरुषः ब्रह्माण्डाख्यः लोकसंस्थया यावत्या संस्थया मितः परिमितो ऽसौ महान्पुरुषस्तदन्तःस्थपुरुषो भगवानपि तावान् तावत्परिमाणोपेतः ॥ ९ ॥ उपाङ्गान्याह—कौस्तुभेति । अजो विष्णुः स्वात्मज्योतिः ज्योतिःस्वरूपः । यद्वा, स्वाधीनब्रह्माख्यज्योतिः श्रीरित्यध्याहार्यं साक्षाच्छ्रीस्तस्य श्रीवत्सस्य प्रभां व्याप्नोतीति तत्प्रभाव्यापिनीति तादृशं श्रीवत्समुरसा विभर्ति ॥ १० ॥ स्वां मायां श्रियम् नानावर्णगुणमयीं छन्दोमयम् वेदस्वरूपं त्रिवृत् त्रिवर्णात्मकं स्वरं प्रणवलक्षणं ब्रह्मसूत्रं दधत् ॥ ११ ॥ साङ्ख्यं ज्ञानं योगं कर्म एतद्द्वयाख्ये मकरकुण्डले पारमेष्ठ्यं पदं स्थानं मौलिं किरीटम् ॥ १२ ॥ यदधिष्ठितमासनं पीठ तदनन्ताख्यम् अव्याकृते विकाररहितं सत्त्वं सत्त्वगुणाभिमानिनी श्रीः पद्मम् ॥ १३ ॥ मुख्यतत्त्व मुख्यप्राणरूपं गदां दधत ॥ १४ ॥ नभोनिभमाकाशवन्नीलवर्णं नभस्तत्त्वरूपमसिं नन्दकं तमोमय तमोगुणवदाच्छादनकरं चर्म दधत् पुण्यकर्मस्वरूपे इषुधा च ॥ १५ ॥ अस्य हरः स्यन्दनमाकूतिः पृथिवी अस्याभिव्यक्तिः तन्मात्राणि शब्दादीनि इन्द्रियार्थाः कर्मेन्द्रियविषयाः क्रियामताः विसर्गादीनि कर्माणि ज्ञातव्यानि ॥ १६ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कौस्तुभेति। अत्र भूरादीनामिव जीवाख्यस्वात्मज्योतिरादीनामपि कौस्तुभादिभ्यो बहिरङ्गत्वं दर्शितं स्वात्मज्योतिष एवेन्द्रियद्वारा प्रकाशः श्रीवत्सतया कल्प्यत इत्यर्थः ॥ १०–१५ ॥ आकूतीरिति लक्षणया क्रियाशक्तियुक्तं मनो यस्य भगवतः स्वन्दनमाहुः तन्मात्राण्यस्य भगवतोऽभिव्यक्तिमाहुः तथास्वस्यार्थक्रियात्मतां वरदाभयदादिरूपतां मुद्रामाहुः मुद्रामेवाहुरित्यर्थः। गोत्रेण गार्ग्यं इतिवत्तृतीया ॥ १६ ॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

समष्टिव्यष्ट्योः प्रायेणैक्यात् व्यष्टिपुरुषस्य प्राकृतत्वान्मलिनस्य दर्शनयैव निर्मलं सच्चिदानन्दमयं पुरुषं परिचाययति—यावानयमिति। मितः परिमितः ॥ ९ ॥ अङ्गान्युक्त्वा भूषणान्याह—कौस्तुभस्य व्यपदेशेन स्वरूपेण स्वात्मज्योतिः शुद्धजीवचैतन्यं कौस्तुभस्यैव विभूतिं धत्त तथाहि—

"अकारेणोच्यते विष्णुः श्रीरुकारेण कथ्यते। मकारस्तु तयोर्दासः पञ्चविंशः प्रकीर्तितः" ॥

इत्यतः स्वदासं भगवान् हृदि धत्ते यदुक्तं "साधवो हृदयं मह्यं साधूनां हृदयं त्वहम्" इति भगवान् भक्तभक्तिमानिति च तत्प्रभा तस्य कौस्तुभस्यैव प्रभाव्यापिनी दक्षिणस्तनोर्द्ध्वपर्यन्तगामिनी या तामेव श्रीवत्सं दक्षिणावर्त्तशुभ्रमृणालतन्तुसूक्ष्मरोमावल्याकारं बिभर्ति यस्य विभूतिधर्मः तथैव वागस्तनार्द्धे लक्ष्मीरेखानिकषाश्मनि कानकीरेखेव अनुक्तापि ज्ञेया यस्या विभूती राज्यादिसम्पत् ॥ १० ॥ नानागुणमयीमिति—त्रिगुणात्मिका माया वनमालाया विभूतिः वास इति पीतवाससो विभूतिश्छन्दांसि ब्रह्मसूत्रमित्युपवीतस्य विभूतीस्त्रिवृत्स्वरः त्रिमात्रः प्रणवः ॥ ११ ॥ एवमेव सर्वत्र स्वविभूत्या सामानाधिकरण्यं पारमेष्ठ्यं ब्रह्मलोकम् ॥ १२ ॥ यत् अधिष्ठितः अधिष्ठाय स्थितः तदासनम् अनन्ताख्यम् अव्याकृत प्रधानमुच्यते इति अनन्तस्यैव विभूतिप्रधानं जगत् सृष्ट्यादिकारणीभूतं वनमालाविभूतिर्माया तु ततोपि मूलभूता ज्ञेया तत्र च धर्मादियुक्तमासनंपद्म तु सत्त्वं सत्त्वगुणः ॥१३॥ मुख्यतत्त्वं प्राणतत्त्वं "प्राणो वै मुख्यः" इति श्रुतेः। दरवरं शङ्खम् असिं नभस्तत्त्व नभानिभम् आकाशतुल्यं निर्मलं चर्म तमोमयं तमस्तत्त्वम् ॥१४–१५॥ आकूति क्रियाशक्तियुक्त मनः स्यन्दनं रथः रथस्य विभूतिर्मनः तन्मात्राणि शब्दादयो विषयाः अभिव्यक्तिः अस्य अभिव्यक्तेराविर्भावस्य विभूतयः विषयजिघृक्षारूपस्य मनोरथस्य बहिरभिव्यक्तिरूपा एव शब्दादयो विषयाः इन्द्रियग्राह्या इत्यर्थः। मुद्रया वरदाभयदानरूपया धृतया अर्थक्रिया बिभर्त्ति यात्मताम् अर्थक्रियालोकव्यवहारस्तत्स्वरूपतां धत्ते वरदत्वस्य अभयदत्वस्य विभूतयस्तास्ता अर्थक्रिया इत्यर्थः ॥ १६ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अनुक्तं लोकप्रसिद्धपुरुषवदूह्यमित्याह—यावानिति। अयं लोकप्रसिद्धः व्यष्टिपुरुषः यावान् सप्तवितस्तिपरिमाणवान् यावत्या संस्थया यावदवयवसंस्थानेन मितः परिमितः तावान् असौ अपि समष्टिरूपोऽपि ॥ ९ ॥ आकल्पोपाङ्गादीनाह—कौस्तुभेत्यादिना। अजः कर्मनिबन्धनजन्मरहितः भगवान् स्वकीयमशभूतमात्मज्योतिः जीवात्मतत्त्वं कौस्तुभव्यपदेशेन बिभर्त्ति तत् तस्य कौस्तुभस्य या प्रभा धर्मभूतज्ञानात्मिका तां श्रीवत्सं बिभर्ति ॥१०॥ त्रिवृत्स्वरम् त्रिमात्रम् प्रणवं नानागुणमयीं क्षुभितगुणाम् ॥११॥ पारमेष्ठ्यं चतुर्मुखलोकम् ॥ १२ ॥ यदधिष्ठितः अधिष्ठाय स्थितस्तदव्याकृतं गुणसाम्यावस्थापन्नं प्रधानमासनमुच्यते इह आसने धर्मज्ञानादिभिर्युतं सत्त्वं सत्त्वगुणः पद्ममुच्यते वैराग्यादिरापदार्थः ॥१३॥ मुख्यतत्त्वं "प्राणो वै मुख्यम्" इति श्रुतिप्रसिद्धम् ॥१४॥ नभोनिभम् नभोवन्निर्मलम् नभस्तत्त्वमेवासिम् ॥ १५ ॥ अस्य श्रीभगवतः आकूतिः क्रियाशक्तिः मनः स्यन्दनं रथः तन्मात्राणि शब्दादयो विषयाः अस्य रथस्याभिव्यक्तिमाहुः मुद्रया संकटमुद्रया धृतया अस्य रथस्य अर्थक्रियाणामर्थार्थगमनादिव्यापाराणाम् आत्मा आश्रयः तत्ताम् निग्रहानुग्रहरूपार्थार्थगमनादिव्यापाराश्रयत्वं रथस्य तन्मुद्रया भावयेदित्यर्थः ॥ १६ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अनुक्तमन्यदप्येवमूह्यमित्याह—अयं व्यष्टिपुरुषः यावत्या संस्थया अवयवसन्निवेशेन यावान् यावदवयववान् मितः असौ महापुरुषोऽपि लोककल्पितपादाद्यवयवसन्निवेशेन तावान् तावदवयववानित्यर्थः ॥ ९ ॥ भूषणादीन्याह—कौस्तुभेत्यादिना। स्वात्मज्योतिः शुद्धजीवचैतन्यं कौस्तुभव्याजेन बिभर्ति। तस्य कौस्तुभस्य या व्यापिनी प्रभा तामेवोरसा श्रीवत्सं बिभर्ति ॥ १० ॥ त्रिवृत्स्वरमकारादिवर्णत्रयात्मकं स्वरं प्रणवं ब्रह्मसूत्रं बिभर्ति ॥ ११ ॥ पारमेष्ठ्यं पदं ब्रह्मलोकं मौलिं बिभर्ति ॥ १२ ॥ यत् अधिष्ठितः अधिष्ठाय स्थितस्तदनन्ताख्यमासनमव्याकृतं प्रधानं बिभर्ति। तथा धर्मज्ञानवैराग्यैश्वर्यश्रीर्यशोविमलोत्कर्षिणी ज्ञान-

क्रियायोगा प्रह्वी सत्येशानानुग्रहादिशक्तिभिर्युक्तं सत्त्वमिह भगवदासने पद्ममुच्यते ॥ १३ ॥ मुख्यतत्त्वं प्राणतत्त्वम्। 'प्राणो वै मुख्य' इति श्रुतेः। दरवरं शङ्खम् ॥ १४ ॥ तमोनिभं श्यामरूपं नभस्तत्त्वमसिं खड्गम्। तमोमयं तमोगुणतत्त्वं चर्म खेटम्। तथा कर्ममयमिषुधिं बाणकाशम् ॥ १५ ॥ आकूतिः क्रियाशक्तियुक्तं मनः अस्य भगवतः स्यन्दनं रथम्। अस्य रथस्याभिव्यक्तिं बहिरभिव्यक्तरूपम्। मुद्रया धृतया अर्थक्रियात्मतां वरदाभयदादिरूपत्वं बिभर्त्ति, तत्तन्मुद्रया तथा तथा भावयेदित्यर्थः ॥ १६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अनुक्तमन्यदप्येवमूह्यमित्याह। यावानिति। अयं व्यष्टिरूपः पुरुषः, यावान् यावदवयववान्, यावत्या संस्थया स्वमानतः सप्तवितस्तिपरिमाणदेहसंस्थानेनेत्यर्थः। मितः परिमितः भवति, तद्वत् असौ महापुरुषः परमपुरुषः अपि, लोकसंस्थया लोकाभिमानिदेवतात्मकपादाद्यवयवसंस्थानेनेत्यर्थः। तावान् तावदवयववान् ॥ ९ ॥ तदेवमङ्गोपाङ्गाद्यभिमन्तव्यानि तत्त्वान्युक्त्वाऽथ भूषणाद्यभिमन्तव्यान्याह कौस्तुभव्यपदेशेनेत्यादिना। कौस्तुभेति। अजः परमपुरुषः, स्वात्मज्योतिः स्वशेषभूतं ज्ञानाकारं जीवस्वरूपं, कौस्तुभव्यपदेशेन कौस्तुभव्याजेन बिभर्त्ति। स्वात्मज्यातिरात्मना कौस्तुभं धारयतीति भावः। व्यापिनी विम्बी तत्प्रभा, ज्ञानरूपस्य जीवस्य धर्मभूतं ज्ञानं भवति। तद्रूपेण विभुः भगवान् श्रीवत्सं उरसा बिभर्त्ति। श्रीवत्सस्तत्प्रभाभिमानिनी देवतेत्यर्थः ॥ १० ॥ स्वमायामिति। नानागुणमयीं कार्यावस्थं यद्भूतपञ्चकं तन्मयीमित्यर्थः। वनमालाख्यां स्वमायां वैषम्यावस्थसत्त्वादिगुणत्रयमयीं प्रकृतिमित्यर्थः। दधत् प्रकृतिमेव वनमालाख्यया बिभ्राण इति भावः। छन्दोमयं गायत्र्यादिच्छन्दोरूपं पीतं पीतवर्णं, वासो वस्त्रं दधत्, गायत्र्यादिच्छन्दोभिमानिनीदेवतारूपेण वासो बिभ्राण इत्यर्थः। त्रिवृत् त्रिमात्रं, अकारोकारमकारात्मकमित्यर्थः। स्वरं प्रणवं ब्रह्मसूत्रं दधत्, प्रणवात्मना ब्रह्मसूत्रं बिभर्त्तीत्यर्थः ॥ ११ ॥ बिभर्त्तीति। देवो भगवान्, सांख्यं योगं च, एकत्वे द्वन्द्वैक्यम्। मकरकुण्डले बिभर्त्ति, मकराकृतिकुण्डलद्वयं सांख्ययोगात्मकशास्त्रद्वयरूपेण बिभर्त्तीत्यर्थः। सर्वलोकाभयंकरं पारमेष्ठ्यं पदं ब्रह्मलोकमित्यर्थः। मौलिं बिभर्त्ति, ब्रह्मलोकात्मना शिरसि किरीटं बिभर्त्तीत्यर्थः ॥ १२ ॥ अव्याकृतमिति। अव्याकृतं मूलप्रकृतिः यदधिष्ठितं येन परमपुरुषेण समाधिष्ठितमित्यर्थः। अनन्ताख्यं आसनं शेषाख्यं विष्टरमित्यर्थः। मूलप्रकृतिरेव शेषासनत्वेन वर्त्तते इत्यर्थः। यत् सत्त्वं विशुद्धं सत्त्वमित्यर्थः। तत् धर्मज्ञानादिभिः युक्तं इह पद्मं उच्यते। धर्मादियुक्तं सत्त्वं यदीयपद्मत्वेनोच्यते इति भावः। आदिशब्देन वैराग्यैश्वर्यादीनां संग्रहणम् ॥१३॥ ओज इति। ओज इन्द्रियशक्तिः, सहो मनसः शक्तिः, बलं दैहिकं, त्रयाणां द्वन्द्वः। तैः युतं मुख्यतत्त्वं प्राणं 'प्राणो वै मुख्यः' इति श्रुतेः। ओजआदीनां प्राणायत्तत्वात्तस्य तद्युक्तत्वं, गदां दधत् ओजआद्युपलक्षमुख्यतत्त्वात्मिकां गदां दधान इत्यर्थः। यद्वा, मुख्यतत्त्वं प्रथमोत्पन्नं महत्तत्त्वं बुद्धिरिति यावत्। 'महान् वै बुद्धिलक्षणः' इत्यादिस्मृतेः। तस्यां प्रसूतायामेवोजः प्रभृतीनि प्रभवन्तीति तस्यास्तद्युक्तं अपां तत्त्वं जलतत्त्वभूतमित्यर्थः। दरवरं शङ्खं दधत्, तेजस्तत्त्वं सुदर्शनं दधत् ॥ १४ ॥ नभ इति। नभोनिभमाकाशवन्नीलवर्णं नभस्तत्त्वमाकाशतत्त्वात्मकं असिं खड्गं दधदिति पूर्वश्लोकतोऽनुषञ्जनीयम्। निभ इति पाठान्तरे आकाशवन्नीलतनुर्भगवान्, तमोमयं तमोगुणवदाच्छादनकरं चर्म दधत् कालरूपं कालाभिमानि शार्ङ्गं धनुः दधत्। तथा कर्ममय इषुधिर्बाणकोशो यस्य तथाभूतः। पाठान्तरे कर्ममयौ जीवानां कर्मरूपौ इषुधी बाणकोशौ दधत् इत्यर्थः। तत्रापि पाठान्तरे जीवकर्मप्रधानं बाणकोशमित्यर्थः ॥ १५ ॥ इन्द्रियाणीति। इन्द्रियाणि शरान् आहुः। क्वचित्तु हयानाहुरिति पाठान्तरमस्ति। आकूतीः अस्य स्यन्दनं रथः, ज्ञानेन्द्रियाणि शराः कर्मेन्द्रियाणि त्वस्य रथ इत्यर्थः। यद्वा, पाठान्तरे आकूतिर्देहाभिमानः, स्यन्दनं रथः भगवद्रथ इत्यर्थः। तन्मात्राणि शब्दादयो विषयाः, अस्य रथस्य अभिव्यक्तिं बहिरभिव्यक्तं रूपमाहुः। यद्वा, अस्य भगवतः अभिव्यक्तिरर्चावतारेष्वाहितांशः, तन्मात्राणि इन्द्रियव्यापारान् आहुरित्यर्थः। मुद्रया धृतयेति शेषः। अर्थक्रियात्मतां वराभयदानादिक्रियारूपतां बिभर्त्ति, मुद्रया वराभयदातृत्वं भावयेदित्यर्थः ॥ १६ ॥

## हिन्दी अनुवाद

शौनकजी! जिस प्रकार यह व्यष्टि पुरुष अपने परिमाण से सात वित्तेका है उसी प्रकार वह समष्टि पुरुष भी इस लोकसंस्थिति के साथ अपने सात वित्तेका है ॥ ९ ॥ स्वयं भगवान् अजन्मा हैं। वे कौस्तुभमणि के बहाने जीव-चैतन्यरूप आत्मज्योति को ही धारण करते हैं और उसकी सर्वव्यापिनी प्रभाको ही वक्षःस्थलपर श्रीवत्सरूप से ॥ १० ॥ वे अपनी सत्त्व, रज आदि गुणोंवाली माया को वनमाला के रूप से, छन्द को पीताम्बर के रूप से तथा अ+उ+म्—इन तीन मात्रावाले प्रणव को यज्ञोपवीत के रूप में धारण करते हैं ॥ ११ ॥ देवाधिदेव भगवान् सांख्य और योगरूप मकराकृत कुण्डल तथा सब लोकों को अभय करनेवाले ब्रह्मलोक को ही मुकुट के रूप में धारण करते हैं ॥ १२ ॥ मूलप्रकृति ही उनकी शेषशय्या है, जिस पर वे विराजमान रहते हैं और धर्म-ज्ञानादियुक्त सत्त्वगुण ही उनके नाभिकमल के रूप में वर्णित हुआ है ॥ १३ ॥ वे मन, इन्द्रिय और शरीरसम्बन्धी शक्तियों से युक्त प्राणतत्त्वरूप कौमोद की गदा, जलतत्त्वरूप पाञ्चजन्य शङ्ख और तेजस्तत्त्वरूप सुदर्शन

चक्र को धारण करते हैं ॥ १४ ॥ आकाश के समान निर्मल आकाशस्वरूप खड्ग, तमोमय अज्ञानरूप ढाल, कामरूप शार्ङ्गधनुष और कर्म का ही तरकस धारण किये हुए हैं ॥ १५ ॥ इन्द्रियों को ही भगवान् के बाणों के रूप में कहा गया है। क्रियाशक्तियुक्त मन ही रथ है। तन्मात्रायें रथ के बाहरी भाग हैं और वर-अभय आदि मुद्राओं से उनकी वरदान, अभयदान आदि के रूप में क्रियाशीलता प्रकट होती है ॥ १६ ॥

मण्डलं देवयजनं दीक्षा संस्कार आत्मनः। परिचर्या भगवत आत्मनो दुरितक्षयः ॥ १७ ॥
भगवान् भगशब्दार्थं लीलाकमलमुद्वहन्। धर्मं यशश्च भगवांश्चामरव्यजनेऽभजत् ॥ १८ ॥
आतपत्रं तु वैकुण्ठं द्विजा धामाकुतोभयम्। त्रिवृद्वेदः सुपर्णाख्यो यज्ञं वहति पूरुषम् ॥ १९ ॥
अनपायिनी भगवती श्रीः साक्षादात्मनो हरेः।
विष्वक्सेनस्तन्त्रमूर्तिर्विदितः पार्षदाधिपः। नन्दादयोऽष्टौ द्वाःस्थाश्च तेऽणिमाद्या हरेर्गुणाः ॥ २० ॥
वासुदेवः सङ्कर्षणः प्रद्युम्नः पुरुषः स्वयम्। अनिरुद्ध इति ब्रह्मन्मूर्तिव्यूहोऽभिधीयते ॥ २१ ॥
स विश्वस्तैजसः प्राज्ञस्तुरीय इति वृत्तिभिः। अर्थेन्द्रियाशयज्ञानैर्भगवान् परिभाव्यते ॥ २२ ॥
अङ्गोपाङ्गायुधाकल्पैर्भगवांस्तच्चतुष्टयम्। बिभर्ति स्म चतुर्मूर्तिर्भगवान् हरिरीश्वरः ॥ २३ ॥
द्विजऋषभ स एष ब्रह्मयोनिः स्वयंदृक् स्वमहिमपरिपूर्णो मायया च स्वयैतत्।
सृजति हरति पातीत्याख्ययानावृताक्षो विवृत इव निरुक्तस्तत्परैरात्मलभ्यः ॥ २४ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—मण्डलं देवयजनं दीक्षा आत्मनः संस्कारः भगवतः परिचर्या आत्मनः दुरितक्षयः ॥ १७ ॥ भगवान् भगशब्दार्थं लीलाकमलम् उद्वहन् भगवान् धर्मं यशः च चामरव्यजने अभजत् ॥ १८ ॥ द्विजाः अकुतोभयं वैकुण्ठं धाम आतपत्रं त्रिवृद्वेदः सुपर्णाख्यः यज्ञं पुरुषं वहति ॥ १९ ॥ हरेः अनपायिनी साक्षात् आत्मनः श्रीः तन्त्रमूर्तिः विष्वक्सेनः पार्षदाधिपः विदितः अष्टौ अणिमाद्याः गुणाः हरेः द्वाःस्थाः नन्दादयः ॥ २० ॥ ब्रह्मन् वासुदेवः सङ्कर्षणः प्रद्युम्नः स्वयं पुरुषः अनिरुद्धः इति मूर्तिव्यूहः अभिधीयते ॥ २१ ॥ सः विश्वः तैजसः प्राज्ञः तुरीयः इति वृत्तिभिः अर्थेन्द्रियाशयज्ञानैः भगवान् परिभाव्यते ॥ २२ ॥ अङ्गोपाङ्गायुधाकल्पैः भगवान् हरिः ईश्वरः चतुर्मूर्तिः भगवान् तत् चतुष्टयं बिभर्ति ॥ २३ ॥ द्विजऋषभ सः एषः ब्रह्मयोनिः स्वयंदृक् स्वमहिमपरिपूर्णः स्वया मायया आख्यया एतत् सृजति पाति हरति (इत्येवम्) अनावृताक्षः विवृतः इव निरुक्तः तत्परैः आत्मलभ्यः ॥ २४ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

मंडलं देवयजनं देवपूजाभूमिं सूर्यमंडलत्वेन भावयेदित्यर्थः। अंतर्बहिर्मंडलं वा। दीक्षासंस्कार आत्मनो गुरुकृतां मंत्रदीक्षामेवात्मनस्तत्पूजायोग्यतां भावयेदित्यर्थः। परिचर्येति भगवतस्तां परिचर्यां स्वस्य सकलपापक्षयायेत्येवं भावयेदित्यर्थः ॥ १७ ॥ पूर्वमासनपद्ममुक्त्वेदानीं करस्थं पद्ममाह। भगवानिति। भगशब्दार्थमैश्वर्यादिषाड्गुण्यम् ॥ १८ ॥ हे द्विजाः एकवचनांतो वा पाठः। अकुतोभयं कैवल्यं धाम गृहमभजत्। यद्वा वैकुंठस्य विशेषणमकुतोभयं यद्धामेति। त्रिवृत् ऋग्यजुःसामरूपो वेदः। 'सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरः' इत्यादिमंत्रलिंगात्। यज्ञं यज्ञरूपं पुरुषम्। 'यज्ञो वै विष्णुः' इति श्रुतेः ॥ १९ ॥ अनपायिनी हरेः शक्तिः। तत्र हेतुः साक्षादात्मनः स्वरूपस्य चिद्रूपत्वात्तस्यास्तदभेदादित्यर्थः। तंत्रमूर्तिः पंचरात्राद्यागमरूपः येऽणिमादयोऽष्टौ गुणास्ते हरेर्द्वारपालाः नन्दादयः ॥२०॥ तस्यैव चतुर्व्यूहोपासनामाह—वासुदेवादिशब्दैः पुरुषः श्रीनारायण एव स्वयं मूर्तिभेदैरुपास्य इत्यभिधीयते ॥२१॥ तस्यैवाध्यात्मनि चतुर्धोपासनामाह। स एव भगवान्विश्वादिशब्दैर्वृत्तिभिर्जाग्रदाद्यवस्थाभिः परिभाव्यते। तद्वृत्त्युपाधीनाह अर्था बाह्याः इन्द्रियं मनः आशयस्तदुभयसंस्कारयुक्तमज्ञानम् ज्ञानं त्रितयसाक्षित्वैः ॥ २२ ॥ उक्तचतुर्व्यूहद्वयोपासनेऽपि पूर्वोक्तमङ्गाद्युपासनमाह—अङ्गेति। अङ्गादिभिरुपलक्षितो भगवान्हरिर्वासुदेवादिचतुर्मूर्त्तिः स विश्वादिचतुष्टयं बिभर्ति स्म

१. ब्रह्मन् मूर्ति। २. यः।

विश्वादिभावेऽपि तन्नियन्तुस्तस्य न जीवत्वमित्याह—विश्वादिचतुष्टयं बिभ्रदपि भगवानीश्वर एवेति ॥ २३ ॥ तस्यैव ब्रह्मादित्रिमूर्तितामाह–द्विजऋषभेति। स एष एव भगवान् ब्रह्मयोनिर्वेदस्य कारणमित्यादि हेतुत्रयम्। वस्तुतो भेदाभावेप्येतज्जगत्स्वगतमायया सृजति हरति पातीति कृत्वाऽऽख्यया ब्रह्मादिरूपयानावृताक्षाऽनाच्छन्नज्ञानोऽपि विवृत इव भिन्न इव निरुक्तः शास्त्रेषु नतु भिन्नः अत्र विद्वदनुभवं प्रमाणयति, यतस्तत्परैरात्मत्वेनैव लभ्यत इति ॥ २४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

इत्यर्थ इति—सूर्यमंडलं यथा—"ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः" इत्याद्युक्तेर्भगवद्ध्यानाधिष्ठानं, तथेदं चेत्रमपि मत्पूजाधिष्ठानमिति चिंतयेदिति भावः। यद्वा—एकादशस्कन्धोक्तरीत्या हृत्कंजकर्णिका मध्ये सोमसूर्याग्नीनामुत्तरोत्तरचिंतया 'वह्निमध्ये स्मरेद्रूपम्' इत्युक्तेस्तदेव वह्निमंडलं देवपूजाभूमिं चिंतयेदित्यर्थः। इत्यर्थ इति—अदीक्षितस्य पूजानर्हत्वादिति भावः। तदुक्तम्—"दिव्यं ज्ञानं यतो दद्यात्कुर्यात्पापस्य संक्षयम्। तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तंत्रवेदिभिः।" इति। किञ्च—सर्वाश्रमेषु दीक्षाया आवश्यकत्वमपि—"दीक्षामूली जपः सर्वो दीक्षामूलं परं तपः। दीक्षामाश्रित्य निवसेद्यत्र कुत्राश्रमे वसन्। अदीक्षिता ये कुर्वन्ति जपपूजादिकाः क्रियाः। न भवंति श्रियस्तेषां शिलायामुप्तबीजवत्। देवि दीक्षाविहीनस्य न सिद्धिर्न च सद्गतिः। तस्मात्सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत्। गुरोरभावे मंत्राणां पुस्तकं गुरुमाचरेत्। न चायोग्याद्गुरोर्दीक्षा ग्रहीतव्या कदाचन। दक्षिणामूर्तितो यद्वा दीक्षा ग्राह्या तथा घटात्।" इति। "अदीक्षितो हि मरणे रौरवं नरकं व्रजेत्" इति च। यत्तूक्तम् "कल्पे दृष्ट्वा तु यो मंत्रं गृह्णाति हि नराधमः। मन्वंतरसहस्रेषु निष्कृतिर्नैव विद्यते।" इति तत्सद्गुरुसत्त्वे पुस्तकादीक्षा न ग्राह्येतिपरमिति तंत्रसारे। सद्गुरुनिर्णयस्तु ब्रह्मवैवर्तीयकृष्णखंडत्र्यशीतितमाध्याये—"तेजीयांसं गुरुं कुर्यात्सर्वतो रक्षितुं क्षमम्। क्वयोयुक्तं च विद्वांसं विप्रं भार्यासमन्वितम्। वैष्णवं च कुलीनं च स्वाचारं बोधने क्षमम्।" इति। विपक्षे दोषोऽपि तत्रैवोक्तः—'विद्याहीनाद्भवेन्मूढो मंत्रग्राही ह्यपंडितात्। जातिहीनात्क्षयः प्रोक्तो व्याधितो व्याधियुक् तथा। वंशहीनाद्वंशहीनो भार्याहीनः स्त्रियारहात्। तस्मात्सर्वप्रयत्नेन विचार्य गुरुमाचरेत्।" इति। किञ्च—'प्रमादाद्यदि जायेत पुंसोऽयोग्यो गुरुर्मुने। तं त्यक्त्वाऽपचितिं कृत्वा कुर्याद्योग्यं गुरुं पुनः।" प्रायश्चित्तं तु—'विप्रस्य क्षत्रियगुरौ गायत्र्या लक्षमीरितम्। वैश्ये तु द्विगुणं शूद्रे दशलक्षं प्रकीर्तितम्। क्षत्रस्य तु गुरौ वैश्ये लक्षमेव प्रकीर्तितम्। शूद्रे तु दशलक्षं तद्वैश्यस्य शृणु भो मुने। शूद्रे गुरौ रुद्रलक्षं गायत्र्याः परिकीर्तितम्।" इति वारतांत्विः। इत्यर्थ इति—हरिपूजयैव सकलपापक्षयो भवत्यतः सैव कार्येति भावः। "पापौघानां प्रशमनं पूजनं सर्वदा हरेः" इत्याद्युक्तेः परिचर्यायां दुरितक्षय एव विभूतिरिति भावः ॥ १७ ॥ "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतींगना" इति स्मृत्युक्तमैश्वर्यादिषाड्गुण्यमित्यर्थः। उद्वहन् भवतीति शेषः। एवं सति भिन्नवाक्यत्वेन भगवच्छब्दपौनरुक्त्यं न भवतीति भगशब्दस्यार्थचतुष्कम्। लीलाकमलं दधदिति—ऐश्वर्यश्रीज्ञानवैराग्याणि प्राकृतानि लीलाकमलस्य विभूतयः, धर्मं यशश्च प्राकतं चामरव्यजनयोर्विभूती, परंन्तु प्राकृताप्राकृतयोरभेदमेव भावयेदिति तात्पर्यम् ॥ १८ ॥ हे द्विजा इति—गणापेक्षं बहुत्वं पूजायां वा। एकवचनांतपाठे तु गणमुख्यशौनकविषयैव संबुद्धिरिति मदुक्तपूजायां मुख्याधिकारो द्विजस्यैवेत्यभिप्रायः। 'ब्रह्मलोकः सनाऽतनः' इत्युक्तिमाश्रित्याह—यद्वेति। यद्यपि मंत्रे 'त्रिवृत्ते शिरः' इत्युक्तेस्त्रिवृतो वेदस्य गरुत्मच्छिरस्त्वमुक्तं तथापि "मुखमर्द्धं शरीरस्य सर्वं वा मुखमुच्यते" इति न्यायेन शिरसोऽपि सर्वशरीरत्वमायातीति। एतेन वेदोक्तयागादिर्गरुडस्यैव विभूतिरित्यर्थः। अकुतोभयं वैकुंठं छत्रं, लोके यन्निर्भयत्वं प्रतीयते तत्खलु छत्रस्यैव विभूतिरिति। छत्रवत्संसारतापवारकत्वाद्वैकुंठस्येत्यर्थः ॥ १९ ॥ विष्वक्सेन इति पचरात्राद्यागमो विष्वक्सेनस्य विभूतिः। अनपायिनी नित्ययोगिनी साक्षात्स्वरूपभूता शक्तिः आह्लादिनी शक्तेर्विभूतिर्लौकिकः स्वर्गाद्यानंद ऊह्यः। तत्राऽनपायिनीत्वे। इत्यर्थ इति—शक्तिशक्तिमतोरभेदोपचारादिति भावः ॥ २० ॥ यस्यांगोपांगान्युक्तानि तस्यैवेत्यर्थः। वासुदेव इत्यादिचतुष्टयगतश्चतुर्व्यूहः। स्वयं पुरुषो भगवानेवेत्यर्थः ॥ २१ ॥ अध्यात्मनि चक्षुरादिकरणाभिमानिनि जीवे। परिभाव्यते परिचिंत्यते। तद्वृत्त्युपाधीन् जाग्रदादिवृत्त्युपाधीन्। तथा चेन्द्रियैरर्थावभासकजाग्रदवस्थायां विश्व इति, मनोमात्रावभास्यस्वप्नावस्थायां तैजस इति 'अज्ञानोपलक्षितसुषुप्त्यवस्थायां प्राज्ञ इति त्रयस्य जाग्रदादित्रयस्य साक्षि यज्ज्ञानं तच्च चैतन्यं, स एव तुरीय इति एतैरित्यर्थः। चतुर्णां व्यूहानां विभूतीराह—उभयसंस्कारयुक्तम्। 'सुखमहमस्वाप्सम्' इति 'सुखम् न किञ्चिदवेदिषम्' इत्याकारकं ज्ञानञ्चेत्युभयं तैर्विश्व इत्याद्या वृत्तयस्ताभिर्भगवानेव परिचिन्त्यन्ते चतुर्णां व्यूहानामेव विश्वाद्याश्चतस्रो वृत्तयो नियम्या विभूतय इति भावः। तत्र वासुदेवस्य विश्वः, संकर्षणस्य तैजसः, प्रद्युम्नस्य प्राज्ञः, अनिरुद्धस्य तुरीयो ज्ञानमिति भेदः ॥ २२ ॥ तन्नियतुर्विश्वादिनियंतुः। अंगोपांगादिसहितस्य वासुदेवस्य विश्व इत्येव विभूतिः। संकर्षणादीनां तैजसाद्या विभूतयः। हरिर्भक्ताघहंता। ईश्वरो विश्वादिनियंता ॥ २३ ॥ हे द्विजऋषभेति—"ऋत्यकः" इति ह्रस्वे प्रकृतिभावः। भगवदुपासकत्वेन त्वं ब्राह्मणश्रेष्ठोऽसि "ब्राह्मणो जन्मना श्रेयान्किमु

मत्कलया पुनः" इतिः श्रीमुखोक्तेरिति संबुद्धेर्भावः। स्वशक्तिरूपेण स्वस्मिन्प्राप्तया मायया। त्वत्प्रसादव्लधज्ञानेन त्वत्परायणैः 'भक्त्याहमेकया लभ्यः' इत्याद्युक्तेरात्म रूपेणैव त्वं प्राप्यस इत्याशयः। चतुर्व्यूहमुक्त्वा त्रिमूर्तितामाह–योनिः प्रकाशकः। न चास्य कोऽपि प्रकाशक इत्याह–स्वयंदृक् स्वयंप्रकाशकः। न चास्य राज्ञश्चैश्वर्यार्थं प्रकृत्यपेक्षेत्याह–स्वमहिमपरिपूर्णः, किन्तु क्रीडार्थमेव स्वया शक्त्या मायया ब्रह्मादिनाम्ना सृजतीत्यादि, इत्येवमनावृताक्षोऽपि अपरिच्छिन्न ज्ञानोपि विवृत इव कृतविवरण इव निरुक्त इव। वस्तुतस्तु–निर्वक्तुं विवरितुं ब्रह्मादिभिरशक्य एव इति भावः। तर्हि किमर्थमेतावानायासः कृतस्तत्राह–तत्परैस्तद्भक्तैरेवात्मना मनसा लभ्य एतादृशध्यानेनेति भावः। तत्र तत्पादानां विभूतिभिः पृथिव्याद्यैर्दृष्टस्मृतादिभिरेव तत्पादादिस्मरणं सुखेन भवेत्। तथाहि–सदाध्येयस्य मत्प्रभोश्चरणस्यैव विभूतिरियं पृथ्वी सदा श्रयतेऽतः पृथ्व्याश्रिताः स्थिरजंगमा मत्प्रभोश्चरणा श्रिता एव, ते मया संमान्या एव न तु द्वेष्यास्तथा तद्वक्षस्थकौस्तुभस्य सर्वेऽपि जीवा विभूतयोऽतस्तेषामेकोऽपि मया द्वेष्टुं न युज्यत इत्येवं-भावनेवात्र फलं दृश्यमिति विश्वनाथः॥ २४॥

### अन्वितार्थप्रकाशिका

मण्डलमिति। मण्डलं सूर्यमण्डलं देवयजनं पूजाभूमिं तां सूर्यमण्डलत्वेन भावयेदित्यर्थः। अन्तर्वह्निमण्डलं वा दीक्षा आत्मनः संस्कारः स्यात्। गुरुकृतां मन्त्रदीक्षामेवात्मनस्तत्पूजा योग्यतां भावयेदित्यर्थः। भगवतः परिचर्या आत्मनो दुरितक्षयो ज्ञेयः। तां परिचर्यां स्वस्य सकलपापक्षयायेत्येवं भावयेदित्यर्थः॥ १७॥ पूर्वमासनपद्ममुक्तमथ हस्तस्थं पद्ममाह – भगवानिति। भगवान् भगशब्दार्थमैश्वर्यादिषाड्गुण्यं लीलाकमलमुद्वहन् बिभ्राणो भवति॥ १८॥ आतपत्रमिति। हे द्विजाः। द्विजेति वा पाठः। अकुतोभयं कालकर्मादिभयरहितं कैवल्यं धाम तत् आतपत्रं बिभर्त्ति। त्रिवृत् ऋग्यजुःसामरूपो यो वेदः वेदोक्तो यागादिः स एव सुपर्णाख्यः गरुडो भवति। "सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिरः" इत्यादिमन्त्रलिङ्गात्। यज्ञं पुरुषं विष्णुस्वरूपं वहति धत्ते। "यज्ञो वै विष्णुः" इति श्रुतेः॥ १९॥ अनपायिनीति सार्द्धम्। हरेः भगवतो या अनपायिनी अवियुक्ता साक्षात् आत्मनः स्वस्य शक्तिः सैव भगवती श्रीर्लक्ष्मीः स्वस्य चिद्रूपत्वात् श्रियश्च तदभेदात् तन्त्रमूर्त्तिः पञ्चरात्राद्यागमरूपः पार्षदाधिपतिः विदितः प्रसिद्धो विष्वक्सेनः येऽणिमादयोऽष्टौ गुणास्ते हरेः द्वारपाला नन्दादयः॥ २०॥ चतुर्व्यूहोपासनमाह– वासुदेव इति। हे ब्रह्मन्! वासुदेवादिशब्दैः पुरुषः श्रीनारायण एव स्वयं मूर्त्तिव्यूहो मूर्त्तिभेदैरुपास्य इत्यभिधीयते॥२१॥ तस्यैवाध्यात्मनि चतुर्द्धोपासनमाह–स इति। स एव भगवान् वृत्तिभिः जाग्रदाद्यवस्थाभिः अर्थेन्द्रियाशयज्ञानैः विश्वादिशब्दैः परिभाव्यते। तथा हि अर्था बाह्यविषयाः तेनेन्द्रियैरर्थावभासेन जाग्रदवस्थायां विश्व इति इन्द्रियं मनः मनोमात्रावभासस्वप्नावस्थायां तैजस इति आशयस्तदुभयसंस्कारयुक्त-मज्ञानं तदुपलक्षितसुषुप्तावस्थायां प्राज्ञ इति ज्ञानं तत्त्रितयसाक्षिचैतन्यमात्रं स एव तुरीय इति॥ २२॥ अङ्गेति। अङ्गोपाङ्गायुधा-कल्पैर्विशिष्टो भगवान् हरिरीश्वरः वासुदेवादिचतुर्मूर्त्तिः सन् तत् विश्वादिचतुष्टयं रूपं बिभर्त्ति स्म। ईश्वर इत्युक्त्या विश्वादिभावेऽपि तन्नियन्तुर्भगवतो न जीवत्वमिति सूचितम्॥ २३॥ अस्यैव ब्रह्मादित्रयमूर्तितामाह– द्विजेति। हे द्विजऋषभ! स एव भगवान् ब्रह्मयोनिः वेदप्रवर्त्तकः स्वयंदृक् स्वप्रकाशः स्वमहिम्ना निजानन्देनैव परिपूर्णः अपि क्रीडार्थमेव स्वशक्तिरूपया त्रिगुणात्मिकया मायया नानाख्यया ब्रह्मादिसंज्ञया एतद्विश्वं सृजति पाति हरति च। इत्येवम् अनावृताक्षः असङ्कुचितज्ञानः अपरिच्छिन्नज्ञानोऽपि सर्वात्मकत्वेन भेदरहितोऽपि च विवृत इव भिन्न इव शास्त्रे निरुक्तः। एवं सर्वात्मकत्वेऽपि तत्परैः तदुपासकैरेवात्मनि अन्तःकरणे आत्मनैव लभ्यो न त्वन्यैः। मालिनी छन्दः॥ २४॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

मण्डलं पद्माद्याकारं देवयजनं यजमानयागभूम्यभिमानिदेवता संस्कारः प्रोक्षणादिः दीक्षा यागदीक्षाभिमानिदेवता परिचर्या यागपरिचर्याभिमानिदेवता दुरितक्षयाभिमानिनी॥ १७–१८॥ द्विजा इति सम्बोधनम्॥ १९–२१॥ वृत्तिभिः स विश्वस्तैजसः प्राज्ञः तुरीय इति परिभाव्यते इत्यन्वयः। विश्वतैजसादि शब्दाअनिरुद्धादिष्वेव सृष्टिस्थितिसंहृतिमत्सु जाग्रत्स्वप्न-सुषुप्त्यभिमानिषु वर्त्तन्ते तुरीयशब्दो मुक्त्यभिमानिनि वासुदेवे वर्त्तते तदेवाह–अर्थेन्द्रियाशयज्ञानैरिति। अर्थशब्दो बाह्येन्द्रियार्थाव-भासलक्षणजाग्रदवस्थापरः इन्द्रियशब्देन मनोविषयेण स्वप्नहेतुना स्वप्नावस्थायैक्यं ज्ञाप्यते मनस्युपरते वासनामात्रावशेषा सुषुप्त्यवस्था आशयशब्देन प्राप्यते परिशुद्धाऽनवच्छिन्नज्ञानैकाकारावस्था ज्ञानशब्देन प्रदश्यते तत्तदभिमानी भगवान् परिभाव्यत इत्यर्थः॥ २२॥ अङ्गोपाङ्गेति अङ्गोपाङ्गायुधाकल्पैः विशिष्टो भगवान् चतुर्मूर्त्तिः वासुदेवादिरूपेण तच्चतुष्टयं बिभर्त्ति सृष्ट्यादि चतुष्टयं निर्वहतीत्यर्थः॥ २३॥ आख्येति उपलक्षितः अनावृत्ताक्षः असङ्कुचितज्ञानविवृत इव स्फुट इव निरुक्तः॥ २४॥

### श्रीमद्वीरराघवव्याख्या

मण्डलं तस्यासनस्थं पद्माकारं मण्डलं देवयजनं यज्ञभूम्यभिमानिदेवताः आत्मनः यजमानस्य दीक्षा यागदीक्षा संस्कारः प्रोक्षणावघातादिश्च भगवतः परिचर्या तयोरभिमानिदेवता परिचर्येत्यर्थः। सैव दुरितक्षयाभिमानिनीति॥ १७॥ भगवच्छब्दार्थं

भगवच्छब्दस्य यः शब्दो भगवश्शब्दस्तदवयवभूतस्तस्यार्थं ज्ञानादिषाड्गुण्यं तल्लीलार्थं कमलं तदभिमन्तव्यं लीलाकमलमित्यर्थः। लीलाकमलाभिमन्तव्यं षाड्गुण्यं वा उद्वहन्! बिभ्राणः हे भगवः। हे भगवन्। धर्मो यशश्चेत्येते चामरव्यजने अभजत् प्राप्तवान् भगवांश्चेति पाठान्तरम् ॥ १८ ॥ आतपत्रमिति। द्विजा इति सम्बोधनं द्विजेत्यपि क्वचित् पाठः, निजधामेत्यपि पाठः नास्ति कुतोपि भयं यस्मिंस्तद्वैकुण्ठं नाम यन्निजधाम तदातपत्रमभजदिति सम्बन्धः। वैकुण्ठाभिमानिनी देवता आतपत्रमित्यर्थः। यो यज्ञं यज्ञाराध्यं परमपुरुषं वहति तद्वाहनभूत इत्यर्थः। कोसौ सुपर्णाख्यो गरुडः स त्रिवृद्वेदः ऋग्यजुःसामात्मको वेदः वेदाभिमानिनी देवता गरुड इत्यर्थः ॥ १९ ॥ श्रीर्लक्ष्मीः हरेरनपायिनी शक्तिः तत्र हेतुः साक्षात्परमात्मनः आत्मभूतस्वभावः धर्मभूतेति यावत् प्रभेत्यस्य भास्करस्येत्यादिः स्वतन्त्र्यः यः पार्षदाधिपः सेनानीर्विष्वक्सेनः स तस्य मूर्त्तिर्विग्रहविशेष इत्यर्थः ॥ २० ॥ नन्दादयोऽष्टौ हरेर्द्वारपालाः अणिमाद्या गुणाः अणिमाद्यष्टैश्वर्याभिमानिन्यो देवता इत्यर्थः। वासुदेव इति यो वासुदेव इत्यादिमूर्त्तिव्यूहः मूर्त्तिसमूहः स परमपुरुषः स्वयमेवाभिधीयते न तत्राभिमान्यभिमन्तव्यभावोस्तीत्यर्थः। ब्रह्मन्निति सम्बोधनं स इति वासुदेवादिचतुर्मूर्त्तिव्यूहः वृत्तिभिः जागरस्वप्नसुषुप्तिमुक्त्यवस्थाभिर्यो विश्वस्तैजसः प्राज्ञस्तुरीयः मुक्त इति कथ्यते, जीवस्तदभिमानी विश्वादिशब्दैर्जागराद्यवस्थिता जीवा उच्यन्ते यद्यप्येकैकस्यैव जीवस्यावस्थाचतुष्टयान्वयस्तथापि एकैकस्यैव तत्तदवस्थायां विश्वादिशब्दैर्व्यवहारः जागराद्यवस्थाप्रयुक्तविश्वादिसंज्ञकजीवाभिमानिन्यो वासुदेवादय इत्यर्थः। क्रमस्त्वविवक्षितः तत्र मुक्त्यवस्थाभिमानिनी देवता वासुदेवः सङ्कर्षणस्तु स्वप्नावस्थस्य ( प्रद्युम्नोजाग्रदवस्थाभिमानी सुषुप्त्यवस्थाभिमानी वाऽनिरुद्ध इति ज्ञेयमिति भावः। ) इतरौ इतरयोरित्यूह्यम् ॥ २१ ॥ तदेवाह–अर्थेन्द्रिय इति। अर्थशब्दो बाह्येन्द्रियैरर्थावभासलक्षणजागरावस्थापरः इन्द्रियशब्देन मनोविषयेण स्वप्नहेतुना स्वप्नावस्था द्योत्यते मनस्युपरते वासनामात्रावशेषा सुषुप्त्यवस्था आशयशब्देन ज्ञाप्यते परिशुद्धानवच्छिन्नज्ञानं च मुक्त्यवस्थाज्ञानशब्देन प्रदर्श्यते तत्तदवस्थाभिमानी भगवान् परिभाव्यते इत्यर्थः ॥ २२ ॥ तदेवं तत्त्वाभिमानितया निरूपितैरङ्गादिभिर्विशिष्टमाह, अङ्गेति। अङ्गोपाङ्गायुधाकल्पैर्विशिष्टो भगवान् वासुदेवादिचतुर्मूर्त्तिधरः तत्प्रसिद्धं चतुष्टयं सृष्टिस्थितिसंहारमोक्षात्मकं बिभर्त्ति निर्वहति, तत्रानिरुद्धः सृजति प्रद्युम्नः पालयति सङ्कर्षणः संहरति वासुदेवो मोक्षयतीत्यर्थः ॥ २३ ॥ तस्यैतस्यैव ब्रह्मरुद्रान्तर्यामितया स्रष्टृत्वसंहर्तृत्वे स्वावताररूपेण रक्षितृत्वञ्चाह–द्विजऋषभेति। एष भगवान् कोसौ यः स्वमायया सृष्ट्यादिकं करोतीति हेतोः आख्यया ब्रह्मरुद्रादिसंज्ञया उपलक्षितः ब्रह्मरूपेण गुणैश्च निरतिशयबृहत्त्वयुक्तः योनिः सर्वकारणभूतः स्वयंदृक् स्वयं सर्वं युगपत्साक्षात्पश्यतीति तथा स्वयं प्रकाशो वा अनेनाचेतनव्यावृत्तिरुक्ता स्वमहिम्नैव पूर्णः अवाप्तसमस्तकामः अनेन मुक्तनित्यसिद्धजीवव्यावृत्तिः तयोः परिपूर्णतायाः भगवत्सङ्कल्पायत्तत्वेन स्वमहिमायत्तत्वाभावादितिभावः अनावृताक्षः असङ्कुचितज्ञानः अनेन बद्धजीवव्यावृत्तिः इत्थम्भूतं किं सर्वैर्न ज्ञायते इत्यत्राह, विवृत इव गूढ इव निरुक्तः 'तं दुर्दर्शं गूढमनुप्रविष्टम्। गूढात्मा न प्रकाशते' इत्यादिभिः शास्त्रैर्गूढत्वेनोक्त इत्यर्थः। तर्हि कैरपि दुर्दर्शः स्यादित्यत्राह–तत्परैरतदुपासकैरात्मना योगपरिशुद्धमनसा लभ्यते इति ॥ २४ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

देवयजनं हरेः पूजास्थानं चक्राब्जादिकं मण्डलम् आत्मनः परमात्मनः सकाशात्संस्कारः शरीरशुद्धिर्दीक्षा दीक्षया हि देहशुद्धिः भगवतः परिचर्या आत्मनः स्वस्य दुरितक्षयः पापनाशनम् ॥१७॥ भगवान्पूज्यः भगशब्दात्मा भगशब्दस्वरूप ऐश्वर्यादिगुणस्वरूप इत्यर्थः। धर्म यश आख्ये चामरव्यजने ॥१८॥ निजधाम तद्वैकुण्ठं तदभिमानिदेवता आतपत्रं त्रिवृत् त्रिविधो वेदः सुपर्णाख्यो यज्ञं पुरुषं यज्ञपुरुषं वहति ॥ १९ ॥ साक्षादनपायिनी नित्याबियोगिनी श्रीर्हरेरात्मभूताद्वदेहा नाम विष्वक्सेनः पार्षदाधिपो विदितः तन्त्रमूर्त्तिः तन्त्रग्रन्थाभिमानी ॥ २० ॥ अष्टौ नन्दादयो द्वाःस्थाः हरेरणिमाद्या गुणास्तदाश्रिताः मूर्तिव्यूहे मूर्तिस्थापने वासुदेवः सङ्कर्षणः प्रद्युम्नोऽनिरुद्धः स्वयमभिधायते ॥ २१ ॥ स भगवानेव विश्वादिशब्दवाच्य इति भाव्यते अर्थेन्द्रियाशयज्ञानैः वृत्तिभिः अर्थज्ञानलक्षणवृत्त्या जाग्रदवस्थया विश्वः मन अतीन्द्रियगतवासनालक्षणज्ञानवृत्त्या स्वप्नावस्थया तैजसः आशयः सुषुप्तिस्तदवस्थाज्ञानलक्षणवृत्त्या वर्त्तमानः प्राज्ञः एतावन्तं कालं सुखमस्वाप्सम् इत्यनुभवात् किमेते भिन्ना इत्यत्राह, तत इति। ततो व्याप्तोऽपरिच्छिन्न इत्यर्थः। बहुत्वसङ्ख्यामात्रयोगित्वं न तु मिथोभिन्नत्वम् ॥ २२ ॥ अङ्गादिकथनस्योपयोगमाह–अङ्गेति। अङ्गादिशब्दवाच्यवासुदेवाद्यावरणैर्भगवान्पूज्य इत्येतदर्थत्वेन कथनमित्यर्थः। अङ्गादिचतुष्टयस्यापि हरिरेवाधार इत्याह, तदिति। चतुर्मूर्त्तिर्भगवानङ्गादिचतुष्टयं बिभर्त्ति। तत्रायं विभागः अङ्गात्मकाः वासुदेवाद्याः स्वयमुपाङ्गादिषु ब्रह्मादिषु सन्निहितत्वेन पूजाकाले तथा स्मरणार्थं स्मेत्युक्तं भगवान्वसिष्ठाद्यन्यतमो नेत्याह–हरिरिति। हरिरपि पुरन्दराद्यन्यतमः किं न स्यादित्यत उक्तमीश्वर इति सोपि सदाशिवः स्यादत उक्तं चतुर्मूर्त्तिरिति सोष्टमूर्तिरिति प्रसिद्धः ॥ २२ ॥ यद्वेदान्तवेद्यं तदेवात्र पुरुषरूपेणोच्यते तस्मादिदं मुमुक्षुभिः श्रद्धयोपास्यमिति श्लोकद्वयेनाह–द्विजऋषभेति। हे द्विजऋषभ! तत्परैस्तद्भक्तैः आत्मलभ्यः आत्मनि मनसि लभ्यः प्रकाश्यो भवति यद्वा आत्मनैव स्वानुग्रहेणैव लभ्यः प्राप्यः 'यमेवैष वृणुते तेन लभ्यः' इति श्रुतेः। किं लक्षणकः कोयं पुरुष

इति तत्राह-माययेति। स्वया मायया स्वेच्छयैव सृजतीत्याद्याख्यया निरुक्तः कथं सृजतीति स्रष्टा हरतीति हरः पातीति पाता 'स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु' इत्यादेः अत्र किं प्रमाणम्? तत्राह–ब्रह्मेति। ब्रह्म वेदादिशब्दराशिर्योनिर्ज्ञप्तिकारणं यस्य स तथा वेदादिशब्दराशिरस्मिन्नर्थे मानमित्यर्थः। चतुर्मुखस्यापि सृष्ट्यादिकर्तृत्वस्य प्रमितत्वात्कथं हरेरेवेति निश्चीयते 'ब्रह्मा देवानां प्रथमः सम्बभूव' इति श्रुतिरित्यतो वाह–ब्रह्मेति। ब्रह्मणश्चतुर्मुखस्य योनिः कारणं 'यो ब्रह्माणं विदधाति' इति श्रुतेः लोकवत्परोपदेशेन कर्मणि न प्रवर्तते किन्तु स्वरूपज्ञानेनेत्यनेनेत्याशयेनाह–स्वयंदृगिति। स्वयं भूतज्ञानत्वेपि कर्मण्यपेक्षाविनाभूतं दृष्टमत्राह–स्वमहिमेति। स्वे महिम्नि' इति श्रुतेः। स्वयं प्रकाशमानस्य प्रद्योतमानस्य मेघाद्यावरणेनैव हरेर्ज्ञानस्यापि तत्स्यादित्यत्राह, अनावृताक्ष इति आवरणरहितदृष्टिः कथं प्रकाश्यत इत्यत्राह–विसृजत इति। स्रष्टा अयमित्युपासमानस्य विविधं सृजत इति प्रकाशते संहर्त्ता अयमिति ज्ञानवतः संहर्तेव रक्षतीव इतरस्य उपलक्षणमेतत् यान्यान् गुणानुपसंहृत्योपास्ते तत्तद्गुणत्वेन प्रकाशत इति॥ २४॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

देवस्य यजनं यत्र कुत्रचिद्भगवतः पूजास्थानमेव मण्डलं भगवतो निजस्थानवलयं संस्कारो भगवतः साक्षात्प्राप्तियोग्यता॥ १७॥ भगः प्रापञ्चिकस्तदतीतश्च लीलाकमलं तु तदतीतमयं तथापि द्वयोरभेदमयं भावयेदित्यर्थः॥ १८॥ वैकुण्ठं ब्रह्मलोकोपरिष्ठाद्विकुण्ठासुताविर्भावितं तत्पदमस्य विराडधिष्ठातुः श्रीनारायणस्यातपत्रं भावयेदित्यर्थः॥ १९॥ साक्षादात्मनः परमस्वरूपभूतस्य या हरेर्भगवती श्रीः सैव जगतः श्रीरिति भावनयेत्यर्थः॥ २०॥ वासुदेवादयः साक्षाच्चतुर्व्यूहरूपा इति वासुदेव इत्यादिपद्यद्वयार्थः॥ २२॥ तेषामर्थादीनां चतुष्टयमङ्गादिरूपेण विभर्त्तीति अङ्गाद्यभेदेनार्थादयोप्युपास्या इत्यर्थः॥ २३॥ यस्मै ते उपासनाभेदास्तन्माहात्म्यं दर्शयति, द्विजेति। ब्रह्मयोनित्वादित्रयेण स्वरूपशक्तिर्दर्शिता तत्र मायादोषेण लिप्तत्वमाशङ्क्याह, मायया चानावृताक्ष इति तत्र हेतुः स्वया स्वाधीनयेति। मायां विशिनष्टि–एतद्विश्वं सृजतीत्याद्या ख्यातिः विख्यातिर्यया एवम्भूताचिन्त्यमाहात्म्योपि तत्परैर्भक्तैर्विवृत इव करकलित इव निरुक्तः प्रतिपादितः। यतस्तैरात्मनि चित्ते लभ्यः अनुभवितुं शक्य इति॥ २४॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सूर्यस्यैव भगवद्विग्रहस्य यन्मण्डलं तत् देवयजनं देवपूजाभूमिं दीक्षा तन्मन्त्रोपदेश एव आत्मनो जीवस्य संस्कारः तन्मन्त्रप्रयोगस्य विभूतिर्जीवसंस्कार इत्यर्थः। परिचर्य्येति तत्परिचर्य्यया जीवदुरितक्षय एव विभूतिः॥ १७॥ भगशब्दस्यार्थम् अर्थचतु (ष्कं) ष्टयं लीलाकमलं दधति लीलाकमलस्य विभूतयः ऐश्वर्य्यश्रीज्ञानवैराग्याणि प्राकृतानि धर्म यशश्च प्राकृतं चामरव्यजनयोर्विभूती॥ १८॥ हे द्विजाः! अकुतोभयं धाम वैकुण्ठमेव आतपत्रं छत्रम् अभजदिति लोकगतं यत्किञ्चिन्निर्भयत्वं प्रतीयते तत् खलु छत्रस्यैव विभूतिरित्यर्थः। त्रिवृत् ऋग्यजुस्सामरूपो वेदः वेदोक्तो यागादिरित्यर्थः॥ १९॥ अनपायिनी एकरूपा साक्षात्स्वरूपभूता शक्तिः अस्याह्लादिनीशक्तेर्विभुतिर्लौकिकः स्वर्गाद्यानन्दः उद्धः तन्त्रमूर्त्तिः पञ्चरात्राद्यागमरूपः इति पञ्चरात्राद्यागमाः विष्वक्सेनस्य विभूतय इत्यर्थः। हरेर्द्वाःस्था ये नन्दादयस्तेऽणिमाद्या गुणा अन्यगता विभूतयः॥ २०॥ द्वाःस्थानुक्त्वा दिक्चतुष्टयगतांश्चतुरो व्यूहानाह–वासुदेव इत्यादि (व्यूह) मूर्त्तिसमूहः स्वयं पुरुषो भगवानेवेत्यन्वयः॥ २१॥ चतुर्णां व्यूहानां विभूतीराह–स इति। अर्थाद्या इन्द्रियं मनः आशयस्तदुभयसंस्कारयुक्तं सुखमहमस्वाप्समिति सुखं न किञ्चिदवेदिषमित्याकारकमज्ञानं च तथा ज्ञानं चेति तैर्या विश्व इत्याद्या वृत्तयस्ताभिः स भगवानेव परिभाव्यते परिचिन्त्यते चतुर्णां व्यूहानामेव विश्वाद्याश्चतस्रो वृत्तयो नियम्या विभूतय इति भावः। अत्र वासुदेवस्य विश्वः सङ्कर्षणस्य तैजसः प्रद्युम्नस्य प्राज्ञः अनिरुद्धस्य तुरीयो ज्ञानमिति विभूतयो विवेचनीयाः॥ २२॥ व्यञ्जितमेवार्थं स्पष्टयति–अङ्गादिभिः सहित एव चतुर्मूर्त्तिर्भगवान् (तत्) चतुष्टयं विश्वादिचतुष्कं नियामकतया विभर्ति अङ्गोपाङ्गायुधाकल्पसहितस्यैव वासुदेवस्य विभूतिर्विश्व इत्येवमेव सङ्कर्षणादीनां तैजसाद्या विभूतयः हरिरित्युपासकानां दुरितहर्ता ईश्वरो विश्वादीनां नियन्ता॥ २३॥ तस्य चतुर्मूर्त्तितामुक्त्वा त्रिमूर्त्तितामाह–हे द्विजऋषभ! एष भगवान् ब्रह्मणो वेदस्य योनिः प्रकाशकः न चास्य कोपि प्रकाशक इत्याह–स्वयंदृक् स्वप्रकाशः नचास्य राज्ञ इवैश्वर्य्यार्थं प्रकृत्यपेक्षेत्याह, स्वमहिमपरिपूर्णः किन्तु क्रीडार्थमेव स्वया स्वशक्त्या मायया मायाख्यया ब्रह्मादिनाम्ना सृजति हरति पाति इत्येवम् अनावृताक्षोपि अपरिच्छिन्नज्ञानोपि मायया विवृत इव कृतविवरण इव निरुक्त इव वस्तुतस्तु निर्वक्तुं विवरितुं ब्रह्मादिभिरप्ययमशक्य एवेति भावः। तर्हि, किमर्थमेतावानायासः कृतः तत्राह, तत्परैस्तद्भक्तजनैरात्मना मनसा एतादृशध्यानेन लभ्य इति अत्र तत्पादादीनां विभूतिभिः पृथिव्यादिभिर्दृष्टस्मृताभिरेव तत्पादादिस्मरणं सुखेन भवेत् तथाहि सर्वदा ध्येयस्य मत्प्रभोश्चरणस्यैव विभूतिरियं पृथ्वी सर्वदा दृश्यते अतः पृथ्वीमाश्रिताः स्थावरजङ्गमाः मत्प्रभोश्चरणाश्रिता एव ते मया सम्माननीया एव नतु द्वेष्टव्याः तथा मत्प्रभोर्वक्षसि धृतस्य कौस्तुभस्य विभूतयः सर्वेपि जीवाः अतस्तेषामेकोपि मया द्वेष्टुं निन्दितुं वा न युज्यत इत्येवं भावनैवात्र फलं द्रष्टव्यम्॥ २४॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

श्रीभगवतो मङ्गलमूर्तेः अङ्गोपाङ्गादिभावनास्थानादिकं सूचयति—मण्डलमिति। मण्डलं सूर्यमण्डलमुपलक्षणं चैतत् हृत्कमलादीनां सूर्यमण्डलहृत्पद्मादिक देवयजनं देवोपासनस्थानम् दीक्षा गुरुकृता मन्त्रदीक्षा आत्मनः उपासकस्य संस्कारः उपासनायोग्यता फलमाह भगवतः परिचर्या दुरितक्षय इति॥ १७॥ भगशब्दार्थम् ऐश्वर्यादिषाड्गुण्यम्॥ १८॥ आतपत्रं तु वैकुण्ठमभजत् द्विजाः मुनयः अकुतोभयं धामतद्वासस्थानं भवति त्रिवृद्वेदः ऋग्यजुःसामरूपः सुपर्णाख्यः सुपर्णं इत्याख्या यस्य सः गरुडः यज्ञं विष्णुं पुरुषं वहति॥ १९॥ आत्मनः परमात्मनोऽनपायिनी साक्षाद्भगवती धर्मभूता ज्ञानरूपा शक्तिः श्रीर्लक्ष्मीः चिन्तनीयाः तन्त्रमूर्त्तिः पञ्चरात्रागमरूपाः अणिमाद्याः गुणाः नन्दादयोऽष्टौ द्वाःस्थाः द्वारपालाः मन्तव्याः॥ २०॥ वासुदेवः सङ्कर्षणः प्रद्युम्नः अनिरुद्धः इति मूर्त्तिव्यूहः मूर्त्तिभेदः पुरुषो वैराजः स्वयमेवाभिधीयते॥ २१॥ अर्थो बाह्या इन्द्रियं मनः आशयः किञ्चिदात्मसुखसंस्पर्शी जाग्रत्स्वप्नपदार्थविस्मृतिलक्षणान्तःकरणवृत्तिभेदः ज्ञानं त्रिष्वनुगतम् तैर्विश्वस्तैजसः प्राज्ञस्तुरीय इति या वृत्तयोऽवस्थास्ताभिर्नियम्याभिर्नियन्ता स वैराजो भगवान् परिभाव्यते अनुभूयते॥ २२॥ अवस्थाभोक्ता स नेत्याह—अङ्गेति। चतुर्मूर्त्तिः चतुर्व्यूहयोपास्यः तत्तदवस्थानियन्तृतया चतुर्मूर्त्तिर्वा भगवान् एतच्चतुष्टयमवस्थाचतुष्टयं नियन्तृतया बिभर्त्ति पुष्णाति ननु भुङ्क्ते तत्र हेतुगर्भाणि विशेषणानि यतः भगवान् षाड्गुण्यनिधिः संसारहारिः ईश्वरः सर्वं कर्त्तुं समर्थः स अङ्गोपाङ्गायुधाकल्पैर्विभाव्यते इति पूर्वेणान्वयः जीवस्य विश्वाद्यवस्थानियन्ता भगवानित्यर्थः॥ २३॥ एवं परब्रह्मपुरुषोत्तमोपासनायामधिकारसिद्धये तदंशभूत वैराजोपासना श्रीशुकोक्तंत्र किञ्चिद्विशेषतयोक्त्वाथ तया स्थिरचित्तैर्भजनीयं प्राप्यं च सर्वशास्त्रार्थभूतमनन्ताखिलाद्भुतगुणशक्त्याद्याश्रयं भगवन्तं ब्रह्मादिपदाभिधेयं पुरुषोत्तमं प्रतिपादयन् तस्य सर्ववेदैकवेद्यत्वं स्वप्रकाशपरिपूर्णत्वविश्वजन्मादिहेतुत्वादीन् गुणानाह—द्विज इति। हे द्विजर्षभ ! शौनक ! योऽस्मिन् पुराणे वैराजादिरूपैः प्रतिपादितः स एव ब्रह्मयोनिः ब्रह्म वेदः योनिः ज्ञापकं प्रमाण यस्मिन् सः स्वयं दृक् स्वयंप्रकाशः स्वासाधारणेन महिम्ना परिपूर्णः एतत् विश्वं स्वया स्वकीयया शक्तिभूतया मायया सृजति पाति हरति च यतोऽनावृताक्षो ऽनाच्छन्नज्ञानः इतिशब्दः प्रसिद्धौ आख्यया जातावेकवचनम्। प्रसिद्धैर्ब्रह्माकाशप्राणादिनामभिः 'बृहत्वात् बृंहणत्वाच्च तस्मादुच्यते परं ब्रह्म" आ समन्तात् काशते इत्याकाशः प्रकर्षेण अणतीति प्राण इत्येवं विवृत इव निरुक्तो यः सः तत्परैः परमात्मोपासकैः आत्मनैव लभ्यः प्राप्यः "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः॥ २४॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

मण्डलं सूर्यमण्डलं देवयजनं, पूजाभूमिं तां सूर्यमण्डलत्वेन भावयेदित्यर्थः। दीक्षा संस्कार आत्मनः गुरुकृतां मन्त्रदीक्षामेवात्मनस्तत्पूजायोग्यतां भावयेदित्यर्थः। भगवतस्तां परिचर्यां, स्वस्य सकलपापक्षयायेत्येवं भावयेदित्यर्थः॥ १७॥ पूर्वमासनपद्ममुक्तमथ हस्तकमलमाह—भगवानिति। भगशब्दार्थमैश्वर्यादिषाड्गुण्यं लीलाकमलं बिभ्राणो भवति॥ १८॥ हे द्विजाः अकुतोभयं कालकर्मादिभयरहितं यद्वैकुण्ठाख्यं धाम तत् आतपत्रं बिभर्ति। त्रिवृत् ऋग्यजुःसामरूपो यो वेदः स एव सुपर्णाख्यः गरुडो भवति। 'सुपर्णोऽसि गरुत्मांस्त्रिवृत्ते शिर' इत्यादिमन्त्रलिङ्गात्। यज्ञं पुरुषं विष्णुस्वरूपं वहति धत्ते। 'यज्ञो वै विष्णुः' इति श्रुतेः॥ १९॥ हरेर्भगवतो या अनपायिनी अवियुक्ता साक्षात् आत्मनः स्वस्य शक्तिः सैव भगवती श्रीर्लक्ष्मीः तन्त्रमूर्तिः पञ्चरात्राद्यागमरूपः पार्षदाधिपतिः विदितः प्रसिद्धो विष्वक्सेनः। येऽणिमादयोऽष्टौ गुणास्ते हरेर्द्वारपाला नन्दादयः॥ २०॥ तस्यैव चतुर्व्यूहोपासनमाह—वासुदेव इति। हे ब्रह्मन् वासुदेवादिशब्दैः पुरुषः श्रीनारायण एव स्वयं मूर्तिव्यूहो मूर्त्तिभेदैरुपास्य इत्यभिधीयत इत्यन्वयः॥ २१॥ तस्यैवाध्यात्मनि चतुर्धोपासनमाह—स इति स एव भगवान् वृत्तिभिः जाग्रदाद्यवस्थाभिः विश्वादिशब्दैः परिभाव्यते व्यवह्रियत इत्यन्वयः। तद्वृत्त्युपाधीनाह—अर्थेति। अर्थो बाह्यविषयाः। तेनेन्द्रियैरर्थावभासेन जाग्रदवस्थायां विश्व इति। इन्द्रियं मनः मनोमात्रावभासस्वप्नावस्थायां तैजस इति। आशयस्तदुभयसंस्कारयुक्तज्ञानं तदुपलक्षितसुषुप्तावस्थायां प्राज्ञ इति। ज्ञानं तत्त्रित्रयसाक्षिचैतन्यमात्रं स एव तुरीय इति॥ २२॥ उक्तचतुर्व्यूहा द्वयोपासनेऽपि पूर्वोक्तमङ्गाद्युपासनमाह—अङ्गेति। अङ्गोपाङ्गायुधाकल्पैर्विशिष्टो भगवान् हरिर्वासुदेवादिचतुर्मूर्त्तिः सन् तत् विश्वादिचतुष्टयं रूपं बिभर्त्ति स। एवं मूर्तिभेदधारणे सामर्थ्यमाह—ईश्वर इति॥ २३॥ तस्यैव ब्रह्मादिमूर्तित्रयेण जगज्जन्मादिकर्तृत्वमाह—द्विजऋषभेति सम्बोधनेन श्रीभागवतश्रोतुस्तस्योत्कर्षं सूचयति—स एष भगवान् स्वशक्तिरूपया त्रिगुणात्मिकया मायया नानाख्यया ब्रह्मादिसञ्ज्ञया एतद्विश्वं सृजति पाति हरति चेत्यन्वयः। स एव ब्रह्मयोनिः वेदप्रवर्त्तकः। एवं सर्गादिकार्यार्थं गुणाङ्गीकारेऽपि न तस्य तत्पारवश्यमित्याशयेन तं विशिनष्टि—स्वयंदृक् स्वप्रकाशः स्वमहिम्ना निजानन्देनैव परिपूर्णः अनावृताक्षः असङ्कुचितज्ञानः इतीत्येवं सर्वात्मकत्वेन भेदरहितोऽपि विवृत इव भिन्न इव शास्त्रे निरुक्तः एवं सर्वात्मकत्वेपि तत्परैः तदुपासकैरेवात्मनि अन्तःकरणे लभ्यो न त्वन्यैः॥ २४॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

मण्डलमिति। मण्डलं चक्राब्जादिकं मण्डलं, देवयजनं हरेः पूजास्थानं, यद्वा, मण्डलं सूर्यमण्डलं देवयजनं देवपूजाभूमिं भावयेत्। दीक्षा आत्मनः स्वस्य संस्कारः भावयेत्। गुरुकृतां मन्त्रदीक्षां तु स्वस्य तत्पूजायोग्यतारूपां विभावयेदित्यर्थः। तथाभूत्वा कृता भगवतः परिचर्या आत्मनः दुरितक्षयः, भगवतस्तां परिचर्यां स्वस्य सकलपापक्षयाय भावयेदित्यर्थः॥ १७॥ पूर्वमासनपद्ममुक्तमिदानीं करस्थपद्ममाह। भगवानिति। भगवान् भगशब्दार्थमैश्वर्यादिषाड्गुण्यं, लीलाकमलं उद्वहन् वर्त्तते। 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इति। भगवान् धर्मं यशश्च धर्मयशोरूपे इत्यर्थः। चामरव्यजने अभजत् चामरव्यजनात्मना धर्मयशसी बिभर्त्तीत्यर्थः॥ १८॥ आतपत्रमिति। हे द्विजाः, द्विजेत्यपि क्वचित्पाठः। न विद्यते कुतोऽपि भयं यस्मिंस्तत्, एवंभूतं वैकुण्ठं धाम तु आतपत्रं वैकुण्ठधामाभिमानिनी देवता तु यदातपत्रत्वेन वर्त्तते इत्यर्थः। यज्ञं यज्ञाराध्यं पूरुषं त्रिवृत् ऋग्यजुःसामेति त्र्यात्मकः वेदः वेदमूर्त्तिः सुपर्णाख्यः सुपर्णशब्दवाच्यो गरुडः वहति। वेदाभिमानिदेवतारूपो गरुडः यज्ञमूर्त्तिं तं वहतीत्यर्थः॥ १९॥ अनपायिनीति। साक्षात् आत्मनः परमात्मनः, आत्मभूता धर्मभूता अनपायिनी श्रीर्लक्ष्मीः, प्रभा सूर्यस्य प्रभा यथा तथा स्थितास्तीत्यर्थः। पार्षदाधिपः सकलपार्षदेषु मुख्यः विष्वक्सेनः, तस्य परमात्मनः मूर्त्तिविग्रहविशेष इत्यर्थः। विदितः शास्त्रेणोक्तः॥ २०॥ नन्दादय इति। अनिरुद्ध इति च। ये अणिमाद्याः अष्टौ गुणाः, अणिमाद्यष्टैश्वर्याभिमानिन्यो देवताः, ते हरेः, नन्दादयोऽष्टौ द्वाःस्थाः द्वारपालत्वेन स्थिताः भवन्ति। हे ब्रह्मन्, वासुदेवः, संकर्षणः, प्रद्युम्नः, अनिरुद्धः, इत्येषः मूर्त्तिव्यूहः स्वयं पुरुषः परमपुरुष एव अभिधीयते। न तत्राभिमान्यभिमन्तव्यभावोऽस्तीत्यर्थः। सः वासुदेवादिचतुर्मूर्त्तिव्यूहः वृत्तिभिः जाग्रत्स्वप्नसुषुप्तिमुक्त्यवस्थारूपवृत्तिभिरित्यर्थः। विश्वः, तैजसः, प्राज्ञः, तुरीयो मुक्तः च, इति अभिधीयते। यद्यप्येक एव जीवश्चतसृष्ववस्थास्वन्वयं प्राप्तो भवति, तथाप्येकस्यैव तत्तदवस्थाप्राप्तिवेलायां विश्वादिसंज्ञाभाक्त्वं जायते तत्तदवस्थाभाजो विश्वादिशब्दवाच्या ये जीवास्तेषां तत्तदवस्थाप्रापकत्वाभिमानिनो वासुदेवादयोऽभिधीयन्ते इत्यर्थः। तत्र जीवस्य मुक्त्यवस्थाभिमानिनी देवता वासुदेवः, अस्य स्वप्नावस्थाभिमानिनी देवता संकर्षणः। इतरावितरयोरित्यूह्यम्। इति द्वयोरेकान्वयः॥ २१-२२॥ तदेव स्फुटतयाह। अर्थेति। अर्थाश्च इन्द्रियाणि च आशयश्च ज्ञानं च तैः, भगवान् परिभाव्यते बुध्यते। अत्रार्थशब्दो बाह्येन्द्रियैरर्थावभासलक्षणजागरावस्थापरः। स्वप्नहेतुना मनोविषयेणेन्द्रियशब्देन स्वप्नावस्था द्योत्यते। मनस्युपरते वासनामात्रावशेषा सुषुप्त्यवस्था आशयशब्देन ज्ञाप्यते। परिशुद्धानवच्छिन्नज्ञाना मुक्त्यवस्था ज्ञानशब्देन प्रदर्श्यते। एवं तत्तदभिमानिदेवतारूपो भगवान् परिबुध्यते इत्यर्थः। तदेवं तत्त्वाभिमानितया निरूपतैरङ्गादिभिर्वैशिष्ट्यमाह। अङ्गेति। अङ्गोपाङ्गायुधाकल्पैः विशिष्ट इति शेषः। भगवान् चतुर्मूर्त्तिः वासुदेवादिचतुर्व्यूहधरः ईश्वरः हरिः, तत् प्रसिद्धं चतुष्टयं सृष्टिस्थितिसंहारमोक्षात्मकं बिभर्त्ति निर्वहति स्म। तत्रानिरुद्धः सृजति, प्रद्युम्नः पालयति, संकर्षणः संहरति, वासुदेवो मोक्षयतीत्यर्थः॥ २३॥ तस्यैं तस्यैव ब्रह्मरुद्रान्तर्यामितया स्रष्टृत्वं संहार्यत्वे स्वावताररूपेण रक्षितृत्वं चाह। द्विजर्षभेति। हे द्विजर्षभ, यः स्वया स्वकीयया मायया इच्छया धृतयेति शेषः। आख्यया ब्रह्मविष्णुरुद्रसंज्ञया, एतत् विश्वं सृजति, पाति, हरति च। सः एषः भगवान् ब्रह्मरूपेण गुणैश्च निरतिशयबृहत्वयुक्तः, योनिः सर्वकारणभूतः स्वयंदृक् स्वयं सर्वं युगपत् साक्षात् पश्यति तथाभूतः स्वयंप्रकाशो वा। अनेनाचेतनव्यावृत्तिरुक्ता। स्वमहिमपरिपूर्णः अवाप्तसमस्तकामः अनेन मुक्तेभ्यो नित्यसिद्धजीवेभ्यश्च व्यावृत्तिरुक्ता। तयोः परिपूर्णताया भगवत्संकल्पायत्तत्वेन स्वमहिमायत्तत्वाभावादिति भावः। अनावृताक्षः असंकुचितज्ञानः, अनेन बद्धजीवव्यावृत्तिः। इत्थंभूतः सर्वैर्न ज्ञायत इत्यत्राह। विवृतः गूढः इव 'निरुक्तः, तं दुर्दर्शं गूढमनुप्रविष्टं' 'गूढोत्मा न प्रकाशते' इत्यादिभिः शास्त्रैः गूढत्वेनोक्त इत्यर्थः। तर्हि कैश्चिदपि दुर्दर्शः स्यादित्यत्राह। तत्परैस्तदुपासकैः, आत्मलभ्यः आत्मना लभ्यः, योगपरिशुद्धमनसा लभ्य इत्यर्थः॥ २४॥

## हिन्दी अनुवाद

सूर्यमण्डल अथवा अग्निमण्डल ही भगवान् की पूजा का स्थान है, अन्तःकरण की शुद्धि ही मन्त्रदीक्षा है और अपने समस्त पापों को नष्ट कर देना ही भगवान् की पूजा है॥ १७॥ ब्राह्मणो! समग्र ऐश्वर्य, धर्म, यश, लक्ष्मी, ज्ञान और वैराग्य—इन छः पदार्थों का नाम ही लीला-कमल है, जिसे भगवान् अपने करकमल में धारण करते हैं। धर्म और यश को क्रमश चँवर एवं व्यजन (पंखे) के रूप से तथा अपने निर्भय धाम वैकुण्ठ को छत्र रूप से धारण किये हुए हैं। तीनों वेदों का ही नाम गरुड़ है। वे ही अन्तर्यामी परमात्मा का वहन करते हैं॥ १८-१९॥ आत्मस्वरूप भगवान् की उनसे कभी न बिछुड़ने वाली आत्मशक्ति का ही नाम लक्ष्मी है। भगवान् के पार्षदों के नायक विश्वविश्रुत विष्वक्सेन पाञ्चरात्रादि आगमरूप हैं। भगवान् के स्वाभाविक गुण अणिमा, महिमा आदि अष्टसिद्धियों को ही नन्द-सुनन्दादि आठ द्वारपाल कहते हैं॥ २०॥ शौनकजी! स्वयं भगवान् ही वासुदेव, संकर्षण, प्रद्युम्न और अनिरुद्ध—इन चार मूर्तियों के रूप में अवस्थित हैं; इसलिये उन्हीं को चतुर्व्यूह के रूप में कहा जाता है॥ २१॥ वे ही जाग्रत् अवस्था के अभिमानी 'विश्व' बनकर शब्द, स्पर्श आदि

बाह्य विषयों को ग्रहण करते हैं और वे ही स्वप्नावस्था के अभिमानी 'तैजस' बनकर बाह्य विषयों के बिना ही मन-ही-मन अनेक विषयों को देखते और करते हैं। वे ही सुषुप्ति-अवस्था के अभिमानी 'प्राज्ञ' बनकर विषय और मन के संस्कारों से युक्त अज्ञान से ढक जाते हैं और वही सबके साक्षी 'तुरीय' रहकर समस्त ज्ञानों के अधिष्ठान रहते हैं ॥ २२ ॥ इस प्रकार अङ्ग, उपाङ्ग, आयुध और आभूषणों से युक्त तथा वासुदेव, संकर्षण प्रद्युम्न एवं अनिरुद्ध—इन चार मूर्तियों के रूप में प्रकट सर्वशक्तिमान् श्रीहरि ही क्रमशः विश्व, तैजस, प्राज्ञ एवं तुरीयरूप से प्रकाशित होते हैं ॥ २३ ॥ शौनकजी ! वही सर्वस्वरूप भगवान् वेदों के मूल कारण हैं, वे स्वयंप्रकाश एवं अपनी महिमा से परिपूर्ण हैं। वे अपनी माया से ब्रह्मा आदि रूपों एवं नामों से इस विश्व की सृष्टि, स्थिति और संहार सम्पन्न करते हैं। इन सब कर्मों और नामों से उनका ज्ञान कभी आवृत नहीं होता। यद्यपि शास्त्रों में भिन्न के समान उसका वर्णन हुआ है अवश्य, परन्तु वे अपने भक्तों को आत्मस्वरूप से ही प्राप्त होते हैं ॥ २४ ॥

श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहनानपवर्गवीर्य ।
गोविन्द गोपवनिताव्रजभृत्यगीततीर्थश्रवः श्रवणमङ्गल पाहि भृत्यान् ॥ २५ ॥
य इदं कल्य उत्थाय महापुरुषलक्षणम् । तच्चित्तः प्रयतो जप्त्वा ब्रह्म वेद गुहाशयम् ॥ २६ ॥

शौनक उवाच

शुको यदाह भगवान् विष्णुराताय शृण्वते । सौरो गणो मासि मासि नाना वसति सप्तकः ॥ २७ ॥
तेषां नामानि कर्माणि संयुक्तानामधीश्वरैः । ब्रूहि नः श्रद्दधानानां व्यूहं सूर्यात्मनो हरेः ॥ २८ ॥

सूत उवाच

अनाद्यविद्यया विष्णोरात्मनः सर्वदेहिनाम् । निर्मितो लोकतन्त्रोऽयं लोकेषु परिवर्तते ॥ २९ ॥
एक एव हि लोकानां सूर्य आत्माऽऽदिकृद्धरिः । सर्ववेदक्रियामूलमृषिभिर्बहुधोदितः ॥ ३० ॥
कालो देशः क्रिया कर्ता करणं कार्यमागमः । द्रव्यं फलमिति ब्रह्मन् नवधोक्तोऽजया हरिः ॥ ३१ ॥
मध्वादिषु द्वादशसु भगवान् कालरूपधृक् । लोकतन्त्राय चरति पृथग्द्वादशभिर्गणैः ॥ ३२ ॥

**कृष्णप्रिया व्याख्या**

अन्वयः—हे श्रीकृष्ण कृष्णसख वृष्ण्यृषभावनिध्रुग्राजन्यवंशदहन अनपवर्गवीर्य गोविन्द गोपवनिताव्रजभृत्यगीततीर्थश्रवः श्रवणमङ्गल ( त्वं ) भृत्यान् पाहि ॥ २५ ॥ कल्ये उत्थाय यः तच्चित्तः प्रयतः इदं महापुरुषलक्षणं जप्त्वा गुहाशयं ब्रह्म वेद ॥ २६ ॥ शौनकः उवाच—शृण्वते विष्णुराताय भगवान् शुकः मासि मासि नाना सप्तकः सौरः गणः वसति ( इति ) यत् आह अधीश्वरैः संयुक्तानां तेषां नामानि कर्माणि सूर्यात्मनः हरेः व्यूहं श्रद्दधानानां नः ब्रूहि ॥ २७-२८ ॥ सूतः उवाच—सर्वदेहिनाम् आत्मनः विष्णोः अनाद्यविद्यया निर्मितः अयं लोकतन्त्रः लोकेषु परिवर्तते ॥ २९ ॥ लोकानाम् आत्मा आदिकृत् हरिः ( सः ) सूर्यः एकः एव सर्ववेदक्रियामूलम् ऋषिभिः बहुधा उदितः ॥ ३० ॥ ब्रह्मन् हरिः ( एकोऽपि ) कालः देशः क्रिया कर्ता करणं कार्यम् आगमः द्रव्यं फलम् इति अजया नवधा उक्तः ॥ ३१ ॥ मध्वादिषु द्वादशसु कालरूपधृक् भगवान् लोकतन्त्राय पृथक् द्वादशभिः गणैः चरति ॥ ३२ ॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

यस्येदमुपासनमुक्तं तं श्रीकृष्णं प्रार्थयते—कृष्णसख अर्जुनस्य सखे ! वृष्णिश्रेष्ठ अवनिद्रुहो ये राजन्यास्तेषां वंशस्य दहन ! अनपवर्गमक्षीणं वीर्यं यस्य गोपवनितानां व्रजाः समूहाः भृत्या नारदादयस्तैर्गीतं तीर्थभूतं श्रवः कीर्तिर्यस्य श्रवणमेव मङ्गलं

१. वृष्ण्यृषभाव ।

यस्य ॥ २५ ॥ एतज्जपमात्रस्यापि ब्रह्मज्ञानं फलमित्याह य इति। कल्ये उषःकाले यस्तच्चित्तः प्रयतः शुचिश्च स जपित्वा गुहाशयं हृदिस्थं ब्रह्म पश्यति ॥ २६ ॥ मण्डलं देवयजनमित्युक्त्या बुद्धिमागतो मूर्तिव्यूहप्रसङ्गेन रविव्यूहोऽत्र पृच्छ्यते शुक इति। पञ्चमे यदाह तथाऽन्ये च ऋषयो गन्धर्वा अप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्तेत्यादिना सौरः सूर्यसम्बन्धी सप्तकः सप्तानां गणः ॥ २७ ॥ तेषां सप्तानामधीश्वरैस्तत्तत्पतिभिस्तत्तन्मासाधिकृतसूर्यैर्वा व्यूहं विभागम् ॥ २८ ॥ यत्र तावत् व्यूहं निरूपयितुं प्रथमं सूर्यस्वरूपमाह-अनाद्यविद्यया मायया अयं सूर्यः लोकतन्त्रो लोकयात्राप्रवर्त्तकः ॥ २९ ॥ अतस्तस्य क्रियाभेदोपाधिकमेव नानात्वं न स्वत इत्याह एक एवेति 'सूर्य आत्मा जगतस्तस्थुषश्च' इति श्रुतेः। जगदात्मा आदिकृत् सृष्टिकर्ता हरिरेव सूर्यः स च सर्वासां वेदोक्तक्रियाणां मूलं संस्तेनोपाधिना बहुधोक्तः ॥ ३० ॥ कालरूपधारिणो हरेर्द्वादशादित्यरूपं भेदं क्रियोपाधिकं दर्शयितुं प्रथमं सर्वकर्मप्रवृत्तये मायाकृतं नवधा भेदमाह। काल इति। कालः प्रातरादिः १। देशः समादिः २। क्रिया अनुष्ठानम् ३। कर्ता ब्राह्मणादिः ४। करणं स्रुगादिः ५। कार्यं यागादि ६। आगमो मन्त्रादिः ७। द्रव्यं व्रीह्यादि ८। फलं स्वर्गादि ९ ॥ ३१ ॥ तत्र च कालस्वरूपधारी भगवान् पृथक् चरति मध्वादिषु चैत्रादिषु लोकतन्त्राय लोकयात्रानिर्वाहाय ॥ ३२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

गोपवनितागीतं तु—'जयति तेऽधिकं जन्मना व्रजः' इत्यादिना, 'वामबाहुकृतवामकपोलः' इत्यादिना, 'बर्हापीडं नटवरवपुः' इत्यादिना। नारदगीतं सप्तमस्कन्धादिषु प्रसिद्धम्। आदिना सनकादिग्रहः। संबुद्ध्यभिप्रायाः कुंतीस्तुतौ प्रथमस्कन्धे वर्णिता अपि पुनरपि किञ्चिद्वर्ण्यन्ते—कृष्यते निजसमीपं प्राप्यते भक्तजनोऽनेनेति कृष्णः, श्रीः राधा तया सहितः श्रीकृष्णः। अहो स्वामिन् श्रीराधया सह त्वया विहारः केवलं मु (मु) क्तगोपीजनानां निजसमीपाकर्षणार्थमेव यथा कृतस्तथाऽधुना ममाऽप्याकर्षणं कुर्विति भावः। अत्र हेतुत्वेन संबुद्ध्यंतरमाह—यतस्त्वं कृष्णसखोसीति—कृष्यते विषयैरिति कृष्णो जीवस्तस्य सखा हितैषी अतो मां जीवमप्युद्धरेति भावः। तत्रैव हेत्वंतरम्—वृष्ण्यृषभेति। वर्षंति निजाभिलषितमिति वृष्णयो वदान्या देवास्तेषु श्रेष्ठोसीति विश्वाभिलषितपूरकस्य तव ममाभिलषितपूरणं न दुर्घटमिति भावः। अत्र हेतुत्वेन संबुद्ध्यंतरमाह—अवनिध्रुग्राजन्यवंशः। कंसनरकासुरादिसमूहस्तस्य दहनेऽक्षीणप्रभावोऽसीति सर्वलोकहितार्थं यथा त्वया दुंष्टा नाशितास्तथा मदज्ञानमपि नाशयेति भावः। शास्त्रप्रतिपाद्यं कमप्यन्यमाश्रयाहं तु वसुदेवनंदनोऽस्मीति चेत्तत्राह—गोविंदेति। गोभिर्गीर्भिर्वेदलक्षणाभिर्विद्यते विचार्यत इति गोविन्दः। "सर्वे वेदा यत्पदमामनंति" इति श्रुतेस्त्वमेव सर्वशास्त्रप्रतिपाद्योऽसीति भावः। यद्यप्यन्ये देवा अपि "होतारमिंद्रमवितारमिंद्रम्" इति, "अग्निमीळे पुरोहितम्" इत्यादिना वेदेन प्रतिपाद्यंते तथापि ते न किन्तु स्मरणादि मङ्गलाः श्रवणमंगला संति त्वन्तु श्रवणेनैव मंगलं करोषीति भावः। भृत्यान् भरितुं योग्यान्। विश्वंभरस्य ते सर्वे एव भृत्यास्तदंतर्गतोऽहमप्यतो मामपि पाहीति भावः। यदंशस्य "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति गीतोक्तेरुपासनमुक्तम्। तं श्रीकृष्णं स्वेष्टदेवं परिचाययन्प्रार्थयते—श्रीकृष्णेति। कृष्णस्यार्जुनस्य सखेति पाण्वेषु स्नेहः स्ववशीकारकः, वृष्ण्यृषभेति यादवेषु च, तत्र किं द्योतकं तत्राह—अवनिध्रुहो ये राजन्यास्तेषां वंशस्य दहनम्। यद्वा—त एव वंशास्तत्परस्परसंमर्दोत्थवह्नं, तेन पांडवानां यादवानां च वैरिणः संहृत्य तेषां पालक इति। अनपवर्गमक्षीणं वीर्यं पराक्रमो यस्मादिति पांडवान्यादवांश्च यो भवान्सर्वजयिनश्चकारेति भावः। गोविंदेति व्रजस्थलोकेषु ततोऽप्यतिस्नेहस्तत्र किं द्योतकं तत्राह—गोपवनितानां व्रजस्य समूहस्य यो भृत्यः 'आसामहो चरणरेणुजुषामहं स्याम्' इत्युक्त्यैवाभिप्सितभृत्यभाव उद्धवस्तेन गीतम्। 'ता नमस्यन्निदं जगौ' इति श्रीशुकोक्तेर्यद्गीतं तीर्थं जगत्पावनं श्रवो यशस्तदेव श्रवणमङ्गलं कर्णसुखदं यस्य हे तथाभूत ॥ २५ ॥ 'प्रत्यूषोऽहर्मुखं कल्यम्' इत्यमरः। अंतस्थवदिदं पदं न पवर्गवदिति। महापुरुषो विराट् तत्र लक्ष्यतेंतर्यामितयेति तथा। गुहायां हृदये शेते तिष्ठतीति गुहाशयम् "यो वेद निहितं गुहायाम्" इति श्रुतेः। प्रयतः पवित्रः सन् 'पवित्रः प्रयतः पूतः' इत्यमरः ॥ २६ ॥ सप्तानां संबंधी सप्तकः। अत्र संबंधे कः। हंतानेन शुकपरीक्षित्संवादमयं श्रीभागवतशास्त्रमसत्पूर्वपुरुषमार्कंडेयं तदनुष्ठितभगवत्पूजनतत्त्वं च मत्प्रश्नानुरोधादुक्तमिदानीमस्य श्रीभागवतस्य तद्विषयस्य भगवतश्च दृष्टांतः सूर्यः कृतः "कृष्णे स्वधामोपगते धर्मज्ञाना दिभिः सह। कलौ नष्टदृशामेषः पुराणार्कोऽधुनोदितः।" इति तदुक्त्या 'कृष्णद्युमणिनिम्लोचे' इत्युद्धवोक्त्या चावगतस्तं द्वादशात्मकं ग्रहराजमधुना द्वादशस्कन्धात्मकं पुराणराजसमाप्त्यवसरे प्रस्तावयितुमर्हामीति परामृश्याह शुक इति सर्वमन्यत्समम् ॥ २७ ॥ अधीश्वरैः संयुक्तानामित्यनेन तेषां प्रत्येकं स्वस्वपतिसाहित्येन द्वंद्वं ज्ञेयम्,। अत एव 'द्वादशः सप्त पृथक् चतुर्दश' इति पञ्चमस्कंधोक्तिः संगच्छते। सूर्यस्यापि स्वनियंत्रंतर्यामिसाहित्येन द्वंद्वं ज्ञेयमिति बालबोधिन्याम्। "यश्चासौ पुरुषे यश्चादित्ये" इत्यादिश्रुतेः। अधीश्वराप्रसिद्धिमालक्ष्याह--तत्तन्मासाधिकृतसूर्यैवेति। "व्यूहस्स्याद्बलविन्यासे निर्माणे तर्कवृंदयोः। विभागे निर्वितर्के च" इति कोशात् ॥ २८ ॥ अनाद्यविद्यया मायाकार्यत्वादविद्याया अपि मायात्वम्। 'विद्याऽऽविद्ये मम तनू' इत्यारभ्य 'मायया मे विनिर्मिते' इत्युक्तेः। लोकं तंत्रयति धारयतीति तथा। निर्मितः पृथक्त्वेन प्रकाशितः ॥ २९ ॥ यतः सूर्यो

वस्तुत एको हरिरूपत्वादतो हेतोस्तस्य सूर्यस्य क्रियाभेदो नानावैदिकक्रियाभेदस्तदुपाधिकमेव नानात्वम्। जगतो जंगमस्य तस्थुषः स्थावरस्यात्मेति श्रुतिपदार्थः। अजहल्लिंगत्वान्मूलशब्दस्य तत्पुरुषस्य परवल्लिंगत्वात्क्लीबत्वम्॥ ३०॥ आदिपदग्राह्यान् क्रमत आह– मध्याह्नादि १, शुच्यादि २, क्रिया अनुष्ठानम्, ३, क्षत्रियादि ४, स्रुवप्रणीतादि ५, इष्टिसत्रादि ६, ब्राह्मणादि—क्रमादि ७, गोधूमादि ८, चित्तशुद्ध्यादीति ९,॥ ३१॥ तत्र नवसु। भगवान्सूर्यः॥ ३२॥

## अन्वितार्थप्रकाशिका

श्रीकृष्णेति। हे श्रीकृष्ण! हे कृष्णस्यार्जुनस्य सखे! हे वृष्णिषु ऋषभ श्रेष्ठ! अवनिद्रुहो ये राजन्यास्तेषां वंशस्य दहन! अनपवर्गमक्षीणं वीर्यं यस्य स हे गोविन्द! गोपवनितानां व्रजाः समूहाः भृत्या नारदादयश्च तैर्गीतं तीर्थभूतं श्रवः कीर्त्तिर्यस्य श्रवणमेव मङ्गलं यस्य तथाभूत! भृत्यान् सेवकानस्मान् पाहि॥ २५॥ य इति। प्रातःकाले उत्थाय यस्तच्चित्तः तस्मिन्नुक्तविधे भगवति समाहितचित्तः स्नानादिना प्रयतः शुचिश्च सन् इदं महापुरुषस्य लक्षणानि यस्मिंस्तत्प्रकरणं जपेत् स जप्त्वा जपित्वैव। इडभाव आर्षः। गुहाशयं हृदिस्थं ब्रह्म वेद॥ २६॥ मण्डलं देवयजनमित्युक्त्या स्मृतिमागतं रविव्यूहं पृच्छति–शुक इति युग्मम्। मासि मासि नानानामा सप्तकः प्रत्येकं सप्तावयवप्रमाणः सौरः सूर्यसम्बन्धी गणः वसति इति पञ्चम-स्कन्धे शृण्वते विष्णुराताय शुको यदाह स्म। अधीश्वरैः तत्तत्पतिभिः संयुक्तानां तेषां नामानि कर्माणि चेत्येवम् ऋषिगन्धर्वाप्सरो-नागग्रामणीयातुधानदेवरूपं सूर्यात्मनो हरेः व्यूहं गणं श्रद्दधानानां नः अस्माकं ब्रूहि। स्वस्वपतिसंयुक्तत्वेन तेषां प्रत्येकं द्वन्द्वं ज्ञेयम्। अतः 'एव द्वन्द्वशः सप्त पृथक् चतुर्दश' इति पञ्चमोक्तिः सङ्गच्छते॥ २७–२८॥ अनादीति। सर्वदेहिनामात्मनो नियामकस्य पालकस्य विष्णोर्या अनादिः अविद्या मायाप्रकृतिस्तया निर्मितो लोकतन्त्रो लोकयात्रानिर्वाहकोऽयं सूर्यमण्डलो लोकेषु परिवर्त्तते॥ २९॥ एवं मण्डलदृष्ट्या प्राकृतत्वमुक्तं तदन्तर्यामिदृष्ट्या तस्य भगवत्त्वमाह–एक इति। यो हि सर्वलोकानामात्मा उपादानमन्तर्यामी च तथा आदिकृत् सृष्टिकर्त्ता हरिः स सूर्य एक एव। यतः सर्वासां वेदोक्तक्रियाणां मूलमतः क्रियोपाधिना ऋषिभिर्बहुधोक्तः॥ ३०॥ कालरूपस्य हरेः द्वादशादित्यभेदं क्रियोपायिकं दर्शयितु प्रथमं सर्वकर्मप्रवृत्तये मायाकृतं नवधा भेदमाह—काल इति। हे ब्रह्मन्! हरिरेकोऽपि कालादिरूपेण नवधोक्तः। कालः प्रातरादिः। देशः समादिः। क्रियाऽनुष्ठानम्। कर्त्ता ब्राह्मणादिः। करणं स्रुगादि। कार्यं यागादि। आगमो मन्त्रादिः। द्रव्यं व्रीह्यादि॥ ३१॥ मध्विति। मध्वादिषु चैत्रादिषु द्वादशसु मासेषु कालरूपधृग् भगवान् सूर्यो लोकतन्त्राय लोकयात्रानिर्वाहाय पृथक् पृथक् द्वादशभिर्गणैः सप्तकैः सह चरति॥ ३२॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अवनिध्रुग्राजन्यवंशदहन! भूमेरपकारिराजन्यकुलच्छेदनदहन! विनाशक अनपवर्गवीर्य अन्तरहिवीर्य इत्यर्थः। येन पावनकीर्त्तेः शौरेः स्यन्दन इत्यन्वयः॥ २५–२८॥ अविद्यया ज्ञानविरोधिन्या प्रकृत्या तस्य क्रियामूलत्वं कालावधिकतया कालो देशेत्यादि कार्यम् अपूर्वम् आगमः प्रमाणभूतो वेदः देशकालादिपर्यन्तम् सर्वं क्रिया इति सर्वसाधनत्वेन च क्रियान्तर्भूतम् एभि-र्विशिष्टा क्रिया इत्यर्थः यया क्रियया बहुधोक्तः तत्तद्देवताद्रव्यशरीरकत्वात् बहुधोक्त इत्यर्थः॥ २९–३१॥ मध्वादिषु चैत्रादि-मासेषु गणैः प्रत्येकं सप्तसङ्ख्यैः॥ ३२॥

## श्रीमद्वीरराघवव्याख्या

तदेवं तत्तत्तत्त्वात्मक श्रीभगवदङ्गादीनि निरूप्य कृत्स्नप्रबन्धार्थानुपसंहर्त्तुं, तावत्स्वेष्टदेवतां स्वभक्तरक्षायै प्रार्थयते—श्रीकृष्णेत्यादि—

'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते'॥

इति व्युत्पत्त्या तादृशार्थो ज्ञेय इत्यर्थः। इमानि नव सम्बोधनानि तत्राद्येन सर्वानन्दयितृत्वं द्वितीयेन सौशील्यं तृतीयेन सौलभ्यं तुरीयेन दुष्कृद्विनाशकत्वं पञ्चमेनापारवीर्यत्वं षष्ठेन सर्वाधारत्वं सप्तमेन साधुपरित्रातृत्वम् अष्टमेन पावन-कीर्तिमत्त्वं नवमेनात्यादरेण श्रोतव्यं विवक्षितम्। कृष्णोऽर्जुनस्तस्य सखे! तथा अवन्यैर्द्रुह्यन्तीति तथा ते राजन्या एव वंशा वेणवस्तेषां दहन नाशन! यद्वा, अवनिध्रुग्राजन्यानां वंशः सन्तानः तस्य दहन! अनपवर्गवीर्येति पाठः अमरवन्द्यवीर्येति पाठे परत्वं विवक्षितं गवां द्विजानां सुराणां चार्तिं हरतीति तथाभूतोऽवतारो यस्य तीर्थं पुण्यावहं श्रवः यशो यस्य श्रवणमात्रेण मङ्गलप्रद! भृत्यान् सेवकान् रक्ष॥ २५॥ प्रकृतभगवदङ्गादिनिरूपणप्रकरणकीर्तनफलमाह–य इति। कल्ये [ प्रातः ] प्रभाते उत्थाय इदं महापुरुषस्य लक्षणं चिह्नभूताङ्गोपायाङ्गादिनिरूपणपर प्रकरणं तस्मिन् परमपुरुष एव चित्तं यस्य सः समाहितेन्द्रियश्च यः स

जप्त्वा गुहाशयं हृदयगुहाशयस्थितं ब्रह्म वेद यथावद्विद्यादित्यर्थः ॥ २६ ॥ अत्र कचिदध्यायसमाप्तिर्दृश्यते कचिन्नेति द्रष्टव्यम् पुनरप सञ्जिहीर्षामालक्ष्य वासुदेवव्यूहप्रसङ्गात्स्मारितात्सूर्योपासकान् व्यूहान् पञ्चमे स्कन्धे दिङ्मात्रेण प्रदर्शितान् विस्तरतो बुभुत्सुः पृच्छति शौनकः—शुक इति द्वाभ्याम् । शृण्वते श्रवणं कुर्वते विष्णुरताय परीक्षिते श्रीशुको यदाह किन्तत् सौरः सूर्याराधको गुणः सप्तकः सप्तानामादित्यानां समूहात्मकः मासिमासि नानावहति नानाविधं कर्म वहतीति यत् यथाह्येवमुक्तं पञ्चमे 'तथान्ये च ऋषयो गन्धर्वा अप्सरसो नागा ग्रामण्यो यातुधाना देवाः इत्येकैकशो गणा सप्त चतुर्दश मासिमासि भगवन्तं सूर्यमात्मानं पृथक् नामानः पृथक् कर्मभिर्द्वन्द्वश उपासते' इति ॥ २७ ॥ तेषामिति सप्तानां सौरगणानाम् अधीश्वरैः नियुक्तानां तत्तत्पतिभिः तत्तन्मासाधिकृतसूर्यैर्नियुधानामित्यर्थः । प्रतिमासं सूर्यस्य नामभेदाभिप्रायकम् अधीश्वरैरिति बहुवचनं स्वान्तरात्मभूतपरमात्मोपासनार्थं सूर्यस्यापि तेषां नामान्तरेण गणमध्ये प्रविष्टत्वात्तदभिप्रायकं वा अतस्तेन सहैव सप्त वक्ष्यन्ते सूर्यात्मनः सूर्यशरीरस्य हररुपासकं तेषां गणानां व्यूहं तन्नामानि कर्माणि च श्रद्दधानानां नोऽस्माकं ब्रूहीति सम्बन्धः ॥ २८ ॥ तत्र व्यूहान्निरूपयितुं तावत्सूर्य्यस्य तत्त्वमाह—अनाद्येति । सर्वदेहिनामन्तरात्मनो विष्णोर्नियाम्यया अनाद्यविद्यया आदिरहितया ज्ञानविरोधिन्या प्रकृत्या निर्मितोऽयं सूर्य्यः लोकतन्त्रः लोकयात्राप्रवर्त्तकोऽत एव लोकेषु प्रवर्त्तते परिभ्रमति अनाद्यविद्यया निर्मित इत्यनेन सूर्यबिंबस्य प्रकृतिपरिणामविशेषात्मकत्वमुच्यते ॥ २९ ॥ तस्य भगवदात्मकत्वं वदन् लोकतन्त्रतामुपपादयति—एक एव हीति । यो लोकानामादिकृत् सृष्टिकर्ता एक अद्वितीयः स्वतुल्यवस्त्वन्तररहितः सर्वान्तरात्मा हरिः स एव सूर्य्यो हरिरेव सूर्यशरीरकत्वेनावस्थित इत्यर्थः । कथम्भूतः सर्वासां वेद क्रियाणां मूलभूतः वैदिकक्रियामूलत्वं कालावच्छेदकतया अवगन्तव्या ऋषिभिः पराशरादिभिर्बहुधा द्वादशधा उदितः उक्तः ॥ ३० ॥ तत्र दृष्टान्तमाह—काल इति । हे ब्रह्मन् ! यथा हरिरेक एव कालादिशरीरकत्वेन नवधा उक्तः तद्वदित्यर्थः । तत्र कालो वसन्तादिर्देशः 'समे यजेत' इत्याद्युक्तः क्रिया यागादिरूपा करणं साधनं कार्य्यं स्थायिकार्यमपूर्वाख्यं आगमः प्रमाणभूतो वेदः द्रव्यं चरुपुरोडाशादि फलं स्वर्गादि 'ययोक्तो बहुधा हरिः' इति पाठान्तरं देशकालादिफलपर्यन्तमिदं सर्वं साधनत्वेन साध्यत्वेन च क्रियान्तर्भूतम् एभिर्विशिष्टा क्रिया इत्यर्थः । यया क्रियया हरिर्बहुधोक्तः द्रव्यादिशरीरकत्वादिति भावः ॥ ३१ ॥ विवक्षितमर्थं तावत्सङ्ग्रहेणाह—मध्वादिष्विति । मध्वादिषु चैत्रादिषु द्वादशसु मासेषु कालरूपधृत् (क्) कालावच्छेदकरूपधृत् (क्) भगवान् सूर्यः लोकतन्त्राय लोकयात्रानिर्वाहकाय पृथग्द्वादशभिर्गणैः सह चरति एकैकस्मिन् मासे एकैको गणः प्रतिगणं गणिनस्तु सप्तसप्तेत्यर्थः । यद्यपि पञ्चमे स्कन्धे चतुर्दशोक्ताः तथापि तत्र प्रधानाः सप्त सप्तैवेति तत्र एवोच्यन्ते इति भावः ॥ ३२ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवमुपास्तिं कुर्वतः फलमाह—य इदमिति । कल्ये उषसि महापुरुषलक्षणं जपति स जप्त्वा हृदयगुहायां शेत इति हृदयगुहायं ब्रह्म जानाति कुशेशयमिति वत् ॥ २६ ॥ ( विजयध्वजतीर्थरीत्याऽत्रैव दशमाऽध्यायसमाप्तिः ) सर्वोपास्यत्वेप्यादित्यस्थस्यैव हरेर्गृहस्थैर्विशेषत उपास्तिः कर्तव्येति तत्स्थितिप्रकारं कथयत्यस्मिन्नध्याये; तत्र शौनकः पृच्छति—शुक इति । शुको भगवान्विष्णुराताय पृथङ्नामरूपादि सप्तको गणो मासिमासि नानानामानं सूयं भगवन्तं निषेवमाणः सौरेः सूर्यस्य विद्यमाने स्यान्दने रथे नाना वसति 'तथा अन्ये च ऋषयो गन्धर्वाप्सरसो नागाः' इत्यादि पञ्चमस्कन्धे यदाह ॥ २७ ॥ तदा तेषां पृथङ्नामानि पृथक्कर्माणि चानुरक्तान्यतः श्रद्दधानां नोऽस्माकं तानि ब्रूहीत्यन्वयः । सूर्यान्तर्यामिणो हरेर्व्यूहं स्थितिविशेषं च वद सूर्यात्मनो हरेः परितः स्थितं तेषां व्यूहं पृथक् पृथगिति शेष इति वा ॥ २८ ॥ अयं कल्पो हरेर्बुद्धिपूर्वं प्रणीतत्वान्न मिथ्याभूत इति भावेनाह—अनादीति । लोकं तन्त्रयति व्यापारयतीति लोकतन्त्रो लोकप्रवृत्तिहेतुरयं सूर्यादिः लोकेषु परितो वर्तते उदयादिनिमित्तव्यापाराय उदयादिकं गच्छतीत्यर्थः । कीदृशः सर्वदेहिनामात्मनो विष्णोः अनाद्यविद्यया कारणशून्येच्छया निर्मितः 'सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्' इति श्रुतेः ॥ २९ ॥ सरतीति सूर्य इति सूरिप्राप्यत्वात्सूर्य इति तच्छब्दप्रवृत्तिनिमित्तस्य तदेकाधीनत्वान्मुख्यकर्ता हरिः एक एवेत्याह, एक एवेति । लोकानामुभयेषाम् आत्मा 'सूर्य आत्मा जगतस्तस्थुषश्च' इतिश्रुतिः । दिनस्यादिकृत् 'कृतीच्छेदने' इतिधातोर्दिनादिच्छित् अस्तकर्ता च 'प्रातरुत्थायाथ सन्ध्यामुपासीत' इति श्रुतेः सर्ववेदोक्तक्रियामूलमत एव ऋषिभिर्बहुधोदितः उदितमिति पाठे तत्स्वरूपं नानात्वेन कथितम् अत्र द्वादशसूर्येष्वेकः स्वयं हरिरन्यत्रान्तर्यामित्वेनेति विशेषः ॥ ३० ॥ नानात्वमुपपादयति—काल इति । अजया माययाऽनाद्यविद्यया नवधोक्तः कालः प्रातरादिः देशः समादिः क्रिया अनुष्ठानं कर्ता ब्राह्मणादिः कारणमिन्द्रियं कार्यं देहः द्रव्यं चर्वादि भूतपञ्चकं वा आगमो वेदादिशास्त्रं फलं स्वर्गादि कालादिषु स्थित्वा तत्कर्मकारकत्वेन कालादिशब्दवाच्यत्वेन नवधा हरिरुक्तः इति ज्ञातव्यम् ॥ ३१ ॥ एक एव हरिः सर्वं प्रेरयतीत्युक्तं तत्प्रकारं दर्शयति—मध्वादिष्विति । कालरूपधृक् भगवान् लोकतन्त्राय लोकव्यापाराय मध्वादिषु चैत्रादिषु द्वादशगुणैर्द्वादशविधकालगुणैः पृथक्-पृथक् चरतीत्यन्वयः ॥ ३२ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तमेव नामादिग्रहणेन स्पष्टयन् प्रार्थयते। यद्वा, मम त्वीदृश एव स पुरुषार्थं इति व्यञ्जयंस्तादृशमेव तं प्रार्थयते—श्रीकृष्णेति। तत्र श्रीकृष्णसखेत्यादिना पुरलीला गोविन्देत्यादिना व्रजलीला तत्र व्रजलीलाया व्यत्ययेनान्ते निर्देशात्तत्रैव निजस्थितिर्दर्शिता तीर्थेत्यादिना तद्धर्मामे गोपाश्च वनितास्तदङ्गनाश्च व्रजस्तत्रस्था अन्ये च भृत्यास्तदुपासकाश्च तैर्गीतेति विग्रहः वर्त्तमाने क्तः भृत्यान् तन्मार्गे बद्धश्रद्धानस्मान् स्वयमेव तत् सिद्धिं संपादयेति एवं श्रीभागवतश्रवणेन कृतं साधनसाध्यनैयत्यं दर्शितम्॥ २५॥ ब्रह्म श्रीभगवत्तत्त्वं गुह्याशयं दुरूहमपि॥ २६॥ शुक इति युग्मकम्। ननु, श्रुतभागवततत्त्वस्य तव सूर्य्यगणश्रवणे कोऽयमाग्रहस्तत्राह—सूर्य्यस्यात्मा अन्तर्यामी हरिः तस्यैव व्यूहं तत्रैव पर्य्यवसानादिति भावः। इति गायत्र्युपासना तत्पर्य्यन्तं व्यञ्जितम्॥ २७–२८॥ अनादिरविद्या या तया मायया विष्णोरेव सकाशान्निर्गतोऽयं सूर्य्यः॥ २९॥ अतस्तदनन्यत्वन्यायेन हरिरेव सूर्य्यः हरेर्विशेषणं "लोकानामेक एवात्मा" इत्यादि अत एव सूर्य्योऽपि तेषामात्मादिरित्यर्थः॥ ३०–५०॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे एकादशोऽध्यायः॥ ११॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

यदंशस्येदमुपासनमुक्तं तं श्रीकृष्णं स्वेष्टदेवं परिचाययन् प्रार्थयते—श्रीकृष्णेति। कृष्णन्यार्जुनस्य सखे इति पाण्डवेषु स्नेहः स्ववशीकारकः वृष्ण्यृषभेति यादवेषु तत्र किं द्योतकमित्यत आह—अवनिध्रुहो ये राजन्यास्तेषां वंशस्य दहन! यद्वा, त एव वंशास्तत्परस्परसंमर्दोत्थवह्ने! केन पाण्डवानां यादवानां च वैरिणः संहृत्य तेषां पालक इति अनपवर्गमक्षीणं वीर्यं पराक्रमो यस्मादिति पाण्डवान् यादवांश्च यो भगवान् सर्वजयिनश्चकारेति भावः। गोविन्देति व्रजस्य लोकेषु ततोऽप्यतिस्नेहः स्वातिवशीकारकः तत्र किं द्योतकमित्यत आह—गोपवनितानां व्रजस्य समूहस्य यो भृत्यः "आसामहो चरणरेणुजुषामहं स्याम्" इत्युक्त्यैवाभीप्सितभृत्यभाव उद्धवस्तेन गीतं "ता नमस्यन्निदं जगौ" इति श्रीशुकोक्तेर्यद्गीतं तीर्थं जगत्पावनं श्रवो यशस्तदेव श्रवणमङ्गलं कर्णसुखप्रदं यस्य हे तथाभूत!॥ २५॥ य इदं महापुरुषलक्षणं ब्रह्मतत्त्वस्वरूपं जप्त्वा वेद स गुह्याशयं परमात्मानमेव वेदेत्यन्वयः॥ २६॥ हन्तानेन शुकपरीक्षित्सम्वादमयं श्रीभागवतशास्त्रमस्मभ्यं कथितं तदनन्तरमस्मत्पूर्वपुरुषस्य मार्कण्डेयस्य चरितं तदनुष्ठितभगवत्पूजनतत्त्वं चास्मत्प्रश्नानुबोधादुक्तम् इदानीम् यस्य श्रीभागवतस्य ( त ) यद्विषयस्य स्वयं भगवतश्च दृष्टान्तः श्रीसूर्य्यः "कृष्णे स्वधामोपगते धर्मज्ञानादिभिः सह। कलौ नष्टदृशामेष पुराणार्कोऽधुनोदितः" इत्येतदुक्त्या "कृष्णद्युमणिनिम्लोच" इत्युद्धवोक्त्या चावगतस्तं द्वादशात्मकम् सकलग्रहराजमधुना द्वादशस्कन्धात्मकपुराणराजसमाप्तिसमये प्रस्तावयितुमहमर्हामीति मनसि परामृश्याह—शुक इति। पञ्चमे यदाह "तथा अन्येच ऋषयो गन्धर्वाप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त" इत्यादिना सौरः सूर्य्यसम्बन्धी॥ २७॥ अधीश्वरैः अधीश्वरेण परमेश्वरेणेत्यर्थः। नन्वलं सूर्य्यविषयकेण प्रश्नेन तत्राह—सूर्य्यात्मनः सूर्य्यस्वरूपस्य हरेरेव व्यूहं ब्रूहि॥ २८॥ सच्चिदानन्दस्वरूपस्य स्वयं भगवतः कृष्णस्य श्रीभागवतस्य च दृष्टान्तीभूतोऽयं सूर्य्यः प्राकृतो भवितुं नार्हतीति मा संस्था इत्याह—अनाद्यविद्ययेति। सर्वदेहिनामात्मनो विष्णोरेवायं निर्मितः विष्णुनैवायं स्वतेजोमूर्त्तिः सूर्य्यो ऽनाद्यविद्यया मायया निर्मितः लोकतन्त्रः लोकयात्राप्रवर्त्तकः॥ २९॥ एक एव लोकानामात्मा हरिः सूर्य्यो बहुधा द्वादशधा उक्तः॥ ३०॥ न केवलं सूर्य्यरूपेण बहुधा कर्मप्रवर्त्तनार्थं कालादिरूपेणापि बहुधेत्याह—काल इति। कालः प्रातरादिः देशः वेदिकादिः क्रिया अनुष्ठानं कर्त्ता ब्राह्मणादिः करणं स्रुगादि कार्य्यं यागादि आगमः मन्त्रादिः द्रव्यं व्रीह्यादि फलं स्वर्गादि॥ ३१॥ कालरूपधारी भगवानेव सूर्य्यरूपः सन् लोकतन्त्राय लोकयात्रानिर्वाहणाय॥ ३२॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

एवंविधः कः इत्याकाङ्क्षायां तं प्रतिपादयन् तमेव स्वानन्यभक्तरक्षायै प्रार्थयते—श्रीकृष्ण इति। हे श्रीकृष्ण! श्रीयुक्तसदानन्द! हे कृष्णसख! अर्जुनसखे हे वृष्ण्यृषभ! हे अवनिध्रुग्राजन्यवंशदहन! अवनिध्रुहो ये राजन्यास्तद्वंशनिर्णाशक! हे अनपवर्गवीर्य नित्यवीर्य, गां वेदलक्षणां वाणीं विन्दते इति गोविन्दः तस्य सम्बोधने हे गोविन्द! गोपवनिताव्रजभृत्यगीततीर्थश्रवः गोपवनितानां व्रजैः समूहैः भृत्यैः श्रीनारदादिभिश्च गीतं तीर्थभूतं श्रवः कीर्त्तिर्यस्य हे श्रवणमङ्गल! श्रवणमेव मङ्गलं यस्य स तथाभूत! भृत्यान् पाहि रक्ष॥ २५॥ महापुरुषस्य वैराजस्य इदं लक्षणमङ्गोपाङ्गादिरूपं कल्ये उषःकाले उत्थाय जप्त्वा गुह्याशयं सर्वान्तरात्मानं ब्रह्म बृहत्स्वरूपगुणादिकं भगवन्तं परवासुदेवं विश्वकारणं द्विजऋषभमेति श्लोकद्वयोक्तं वेद॥ २६॥ पञ्चमस्कन्धे श्रीशुकेन संक्षेपत उक्तं सूतमुखाच्छ्रुतमपि मूर्त्तिव्यूहप्रसङ्गे न सूर्यव्यूहं विस्तरतो बुभुत्सुः पृच्छति—शुक इति द्वाभ्याम्। पञ्चमस्कन्धे "तथा अन्ये च ऋषयो गन्धर्वाप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त" इत्यादिना शुको यत्

यमाह सः सौरः सूर्यसम्बन्धी गणः सप्तकः सूर्योदिसप्तानां समूहः मासिमासि नाना पृथक् वसति ॥ २७ ॥ तेषामधीश्वरैस्तत्तद्गणमुखैः सूर्यैः सम्यक् युक्तानां स्वे स्वे कर्मणि योजितानां नामानि कर्माणि च ब्रूहि सूर्यात्मनः सूर्याख्यांशात्मना स्थितस्य व्यूहं विभागं च ब्रूहि ॥ २८ ॥ तत्र व्यूहमेव सूर्यस्वरूपनिरूपणपूर्वकमाह—अनादीत्यादिना। सर्वदेहिनामात्मनो विष्णोरेवायमंशभूतः सूर्यः, ननु अंशभूतस्य क्षेत्रज्ञमात्रस्य कथं लोकप्रकाशकत्वम्? तत्राह—अनाद्यविद्यया अनादिकर्मप्रवाहरूपया "अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते" इति श्रुतिप्रसिद्धया निर्मितः अतः लोकतन्त्रो लोकयात्रानिर्वाहकः सन् लोकेषु परिवर्तते लोकान्प्रकाशयतीत्यर्थः ॥ २९ ॥ आदिकृत् विश्वकर्ता लोकानां चेतनाचेतनानामात्मा हरिरेवैकोऽशात्मना सूर्यः सच सर्ववेदक्रियाणां प्रातरादिकालद्वारा मूलं मूलभूतः ऋषिभिर्बहुधा द्वादशधोदितः कथितः ॥ ३० ॥ न चैकः सूर्यः एव हर्य्यात्मकः सर्वकालादिकं हर्यात्मकमेवेत्याह—काल इति। अजया इत्युपलक्षणं चेतनाचेतनभूतानां शक्तीनां चेतनाचेतनभूताभिः शक्तिभिः कालादिरूपो नवधा हरिरेवोक्तः तत्र कालः प्रातरादिः देशः समादिः "समे यजेत" इति वचनात् क्रिया अनुष्ठानम् कर्ता ब्राह्मणादिः कारणं स्रुवादि कार्यं यागादि आगमः मन्त्रादिः द्रव्यं व्रीह्यादि फलं स्वर्गादि ॥ ३१ ॥ विवक्षितमाह—मध्वादिष्विति। कालं प्रानिरादिकरूपवतीति कालरूपो सूर्यस्तत्र धृष्णोति प्रगल्भते इति कालरूपधृक् भगवान् सूर्यात्मा हरिः मध्वादिषु चैत्रादिद्वादशसु मासेषु स्वात्मकैः द्वादशभिर्गणैः पृथक् पृथक् लोकतन्त्राय लोकयात्रानिर्वाहाय चरति ॥ ३२ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

यस्येदमुपासनमुक्तं तं श्रीकृष्णं प्रार्थयते सर्वानन्दयितृत्वं सूचयन् सम्बोधयति—श्रीकृष्णेति। सौशील्यं सूचयन् सम्बोधयति—कृष्णसख इति कृष्णस्यार्जुनस्य सखे। सौलभ्यं सूचयन्नाह—वृष्ण्यृषभेति। स्वजनदुःखविनाशकत्वेन सम्बोधयति—अवनिध्रुहो ये राजन्यास्तेषां वंशस्य दहनेति। तत्र सामर्थ्यं दर्शयन्सम्बोधयति—अनपवर्गमक्षीणं वीर्यं यस्य हे अनपवर्गवीर्येति। एश्वर्यादिदातृत्वं सूचयन्नाह—गोविन्देति। हे प्राप्तकामधेनो। सर्वगेयत्वमाह—गोपवनितानां व्रजाः समूहाः भृत्या नारदादयश्च तैर्गीतं तीर्थभूतं श्रवः कीर्तिर्यस्य हे तथाभूत आदरेण श्रोतव्यं दर्शयन्नाहश्रवणमेव मङ्गलं यस्य। भृत्यान्सेवकानस्मान्पाहीति ॥ २५ ॥ एतत्पाठस्यापि ब्रह्मज्ञानं फलमित्याह—य इति। कल्ये प्रातः काले उत्थाय यस्तच्चित्तः तस्मिन्नुक्तविधे भगवति समाहितचित्तः स्नानादिना प्रयतः शुचिश्च सन् इदं महापुरुषस्य लक्षणायस्मिंतत्प्रकरणं जपेत् स जप्त्वैव गुहाशयं हृदिस्थंब्रह्म वेद ॥ २६ ॥ एवं वासुदेवादिव्यूहश्रवणेन स्मारितान्। ऋषयो गन्धर्वाप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्तचतुर्दशमासि मासि भगवन्तं सूर्यमात्मानं नाना नामानं पृथक्कर्मभिर्द्वन्द्वश उपासत इति पञ्चमस्कन्धे सङ्क्षेपतः प्रदर्शितान् विस्तरतो बुभुत्सुः पृच्छति—शुक इति ॥ २७ ॥ तेषां सप्तानामधीश्वरैः तत्तत्पतिभिः संयुक्तानामित्यनेन तेषां प्रत्येकं स्वस्वपतिसाहित्येन द्वन्द्व ज्ञेयम्। अतएव द्वन्द्वशः सप्त पृथक् चतुर्दशेति पञ्चमोक्तिः सङ्गच्छते। सूर्यस्यापि स्वनियन्त्र्यन्तर्यामिसाहित्येन द्वित्वं ज्ञेयमतो न विरोधः। यद्यत्रानुक्तोऽपि पञ्चमोक्तो देवगणो ग्राह्यस्तेन सप्तकत्वं न चायं प्रश्नो भगवतो बहिर्मुखोऽतो नोत्तरयोग्य इति शङ्कनीयम्। सूर्यस्यापि भगवद्रूपतयोपासनीयत्वेनोक्तत्वादित्याशयेनाह—सूर्यात्मनो हरेरिति ॥ २८ ॥ तत्र तावद्व्यूहं निरूपयितुं प्रथमं सूर्यस्वरूपमाह—अनादीति। सर्वदेहिनामात्मनो नियामकस्य पालकस्य विष्णोर्या अनादिः अविद्या मायाप्रकृतिस्तया निर्मितो लोकतन्त्रो लोकयात्रानिर्वाहकोऽयं सूर्यमण्डलो लोकेषु परिवर्त्तते ॥ २९ ॥ एवं ब्राह्मदृष्टया प्राकृतत्वमुक्तं तदन्तर्यामिदृष्टया तस्य भगवत्वमाह—एक इति। यो हि सर्वलोकानामात्मा उपादानमन्तर्यामी च तथा आदिकृत् सृष्टिकर्त्ता हरिः स सूर्य एक एव। यतः सर्वासां वेदोक्तक्रियाणां मूलमतः क्रियोपाधिना ऋषिभिर्बहुधोक्तः ॥ ३० ॥ यथा कर्मप्रवृत्त्यर्थं कालादिरूपो जात इति दृष्टान्तमभिप्रेत्याह—काल इति। यथा हरिरेकोऽपि हे ब्रह्मन कालादिरूपेण नवधोक्तस्तथेत्यर्थः। कालः प्रातरादिः। देशः समादिः। क्रियानुष्ठानं कर्त्ता ब्राह्मणादिः करणं स्रुगादि। कार्यं यागादि। आगमो मन्त्रादि। द्रव्यं व्रीह्यादि। फलं स्वर्गादि ॥ ३१ ॥ मध्वादिषु चैत्रादिषु द्वादशसु मासेषु कालरूपधृग्भगवान्सूर्यो लोकतन्त्राय लोकयात्रानिर्वाहाय पृथक् पृथग्द्वादशभिर्गणैः सप्तकैः सह चरति। ॥ ३२ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

तदेवं तत्तत्तत्त्वात्मकभगवदङ्गादीनि निरूप्य कृत्स्नप्रबन्धार्थानुपसंहर्त्तुं तावत् स्वेष्टदेवतां स्वभक्तरक्षायै प्रार्थयते। श्रीकृष्णेति। हे श्रीकृष्णोऽर्जुनस्तस्य सखा तत्संबोधनं, वृष्णयो यादवास्तेषु ऋषभः श्रेष्ठस्तत्संबोधनं, अवन्यै द्रुह्यन्तीत्यवनिद्रुहस्ते च ते राजन्यास्त एव वंशा वेणवस्तेषां दहनो नाशनस्तत्संबोधनं, यद्वा। अवनिद्रुहां राजन्यानां वंशः संतानस्तस्य दहनस्तत्संबोधनं, अनपवर्गमक्षीणं वीर्यं यस्य तत्संबोधनं, क्वचित्तु अमरवन्द्यवीर्येत्यपि पाठः। हे गोविन्द गोभिः स्वेन्द्रत्वेन मानित, गवां द्विजानां सुराणां चार्त्ति हरतीति तथाभूतोऽवतारो यस्य तत्संबोधनं, तीर्थं पुण्यावहं श्रवो यशो यस्य तत्संबुद्धिः। गोपवनिताव्रजभृत्यगीतेति पाठे, गोपवनितानां व्रजाः समूहाश्च भृत्या नारदादयश्च तैर्गीतं तीर्थभूतं श्रवः कीर्त्तिर्यस्य तत्संबोधनम्। श्रवणं यदीयगुणादिश्रवणविधानं तन्मात्रे मङ्गलं मङ्गलप्रदस्तत्संबोधनं, श्रवणं मङ्गलं यस्येति वा। अत्र श्रीकृष्णादीनि नव संबोधनानि। तत्र

आद्येन सर्वानन्दयितृत्वं, द्वितीयेन सौशील्यं, तृतीयेन सौलभ्यं, चतुर्थेन दुष्कृतविनाशकत्वं, पञ्चमेन अपारवीर्यत्वं, अस्य पाठान्तरेण परत्वं, षष्ठेन सर्वाधारकत्वं सप्तमेन साधुपरित्राणत्वं, अष्टमेन पावनकीर्त्तिमत्त्वं, नवमेनात्यादरेण श्रोतव्यत्वं विवक्षितं बोध्यम्। एवंविध हे श्रीहरे, भृत्यान् पाहि रक्ष ॥ २५ ॥ प्रकृतभगवदङ्गादिनिरूपणप्रकरणकीर्त्तनफलमाह। य इति। यः कल्ये प्रभाते उत्थाय, इदं महापुरुषस्य लक्षणं चिह्नभूताङ्गोपाङ्गादिनिरूपणपरं प्रकरणं, तच्चित्तः परमपुरुषस्वरूपस्थिरीकृतचित्तः प्रयतः सन् जप्त्वा गुहाशयं हृदयगुहावस्थितं ब्रह्म वेद यथावद्विद्यादित्यर्थः ॥ २६ ॥ पुनरुपसंजिहीर्षामालक्ष्य वासुदेवादिव्यूहप्रसङ्गस्मारितान् सूर्योपासकान् व्यूहान् पञ्चमस्कन्धे दिङ्मात्रेण प्रदर्शितान् विस्तरतो बुभुत्सुः पृच्छति शौनकः। शुक इति द्वाभ्याम्। शुक इति सौरः सूर्याराधकः, सप्तकः सप्तानामादित्यादीनां समूहात्मकः गणः मासि मासि विषये नाना वहति नानाविधं कर्म करोति। इति शृण्वते श्रवणं कुर्वते विष्णुराताय परीक्षिते, भगवान् शुकः यत् यं गणं आह। तथा ह्येवमुक्तं पञ्चमे। 'तथान्ये ऋषयो गन्धर्वा अप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त चतुर्दश मासि मासि भगवन्तं सूर्यमात्मानं पृथङ्नामानः पृथक्-कर्मभिर्द्वन्द्वश उपासते' इति ॥ २७ ॥ तेषामिति। सूर्यात्मनः गणान्तर्गतसूर्यशरीरकस्य, हरेः व्यूहं सूर्यशरीरकहर्युपासकं तं गणमित्यर्थः। अधीश्वरैः तत्तन्मासाधिकृतसूर्यैः, नियुक्तानां तेषां सप्तसंख्यसौरगणानां नामानि कर्माणि च श्रद्दधानानां नोऽस्माकं ब्रूहि ॥ २८ ॥ तत्र तावद्व्यूहान्निरूपयितुमादौ सूर्यस्य तत्त्वमाह। अनाद्यविद्ययेति। सर्वदेहिनां आत्मनः अन्तरात्मनः विष्णोः नियाम्ययेति शेषः। अनाद्यविद्यया आदिरहितया ज्ञानविरोधिन्या प्रकृत्येत्यर्थः। निर्मितः अयं लोकतन्त्रः लोकयात्राप्रवर्त्तकः सूर्यात्मकस्तन्त्र इत्यर्थः। लोकेषु परिवर्त्तते परिभ्रमति। अनाद्यविद्यया निर्मित इत्यनेन सूर्यबिम्बस्य प्रकृतिपरिणामविशेषात्मकत्व-मुच्यते ॥ २९ ॥ तथाभूतस्यापि तस्य भगवदात्मकत्वं वदन् लोकतन्त्रतामुपपादयति। एक एवेति। यः लोकानां आदिकृत् सृष्टिकर्त्ता एकः एव। अद्वितीयः स्वतुल्यवस्त्वन्तररहित इत्यर्थः। आत्मा सर्वान्तरात्मा हरिः सः हि स एवेत्यर्थः। सूर्यः सूर्यशरीर-कत्वेनावस्थितो हरिरेवेति भावः। स च सर्वासां वेदक्रियाणां मूलं मूलभूतः कालावच्छेदकतयाऽस्य वैदिकक्रियामूलत्वमवगन्तव्यम्। ऋषिभिः पराशरादिभिः बहुधा द्वादशधा उदित उक्तश्च वर्त्तते ॥ ३० ॥ तत्र दृष्टान्तमाह। काल इति। हे ब्रह्मन्, यथा एकः एव हरिः, कालः, देशः, क्रिया, कर्त्ता, करणं, कार्यं, आगमः, द्रव्यं, फलं इति नवधा उक्तः। तथा तद्वत् कालादिशरीरकत्वेन यथैको हरिर्नवधोक्तस्तथा सूर्योऽप्येक एव द्वादशधोदितोऽस्तीत्यर्थः। तत्र कालो वसन्तादिः, देशः 'समे यजेत' इत्यादिनोक्तः, क्रिया यागादिरूपा, करणं साधनं, कार्यं स्थायिकार्यमपूर्वाख्यं, आगमः प्रमाणभूतो वेदः, द्रव्यं चरुपुरोडाशादिः, फलं स्वर्गादिः ॥ ३१ ॥ विवक्षितमर्थं तावत् संग्रहेणाह मध्वादिष्विति। मध्वादिषु चैत्रादिषु द्वादशसु द्वादशसंख्याकेषु मासेषु, कालरूपधृत् कालावच्छेदक-रूपधरः भगवान् सूर्यः, लोकतन्त्राय लोकयात्रानिर्वाहं विधातुं, पृथक् द्वादशभिः गणैः सह चरति। एकैकस्मिन् मासे एकैको गणः, प्रतिगणं गणितस्तु सप्त सप्तेत्यर्थः ॥ ३२ ॥

## हिन्दी अनुवाद

सच्चिदानन्दस्वरूप श्रीकृष्ण ! आप अर्जुनके सखा हैं। आपने यदुवंशशिरोमणिके रूपमें अवतार ग्रहण करके पृथ्वीके द्रोही भूपालोंको भस्म कर दिया है। आपका पराक्रम सदा एकरस रहता है। व्रजकी गोपबालाएं और आपके नारदादि प्रेमी निरन्तर आपके पवित्र यशका गान करते रहते हैं। गोविन्द आपके नाम, गुण और लीलादि का श्रवण करनेसे ही जीवका मङ्गल हो जाता है। हम सब आपके सेवक हैं। आप कृपा करके हमारी रक्षा कीजिये ॥ २५ ॥ पुरुषोत्तम भगवान् के चिह्नभूत अङ्ग, उपाङ्ग और आयुध आदिके इस वर्णनका जो मनुष्य भगवान्में ही चित्त लगाकर पवित्र होकर प्रातःकाल पाठ करेगा, उसे सबके हृदय में रहनेवाले ब्रह्मस्वरूप परमात्माका ज्ञान हो जायगा ॥ २६ ॥ शौनकजीने कहा—सूतजी ! भगवान् श्रीशुकदेवजी ने श्रीमद्-भागवत-कथा सुनाते समय राजर्षि परीक्षित्से ( पञ्चम स्कन्ध में ) कहा था कि ऋषि, गन्धर्व, नाग, अप्सरा, यक्ष, राक्षस और देवताओंका एक सौरगण होता है और ये सातों प्रत्येक महीनेमें बदलते रहते हैं। ये बारह गण अपने स्वामी द्वादश आदित्यों के साथ रहकर क्या काम करते हैं और उनके अन्तर्गत व्यक्तियोंके नाम क्या हैं ? सूर्य के रूप में भी स्वयं भगवान् ही हैं; इसलिये उनके विभाग को हम बड़ी श्रद्धा के सपथ सुनना चाहते हैं, आप कृपा करके कहिये ॥ २७-२८ ॥ श्रीसूतजी ने कहा—समस्त प्राणियोंके आत्मा भगवान् विष्णु ही हैं। अनादि अविद्यासे अर्थात् उनके वास्तविक स्वरूप के अज्ञानसे ही समस्त लोकोंके व्यव-हार-प्रवर्तक प्राकृत सूर्यमण्डलका निर्माण हुआ है। वही लोकोंमें भ्रमण किया करता है ॥ २९ ॥ असलमें समस्त लोकोंके आत्मा एवं आदिकर्त्ता एकमात्र श्रीहरि ही अन्तर्यामीरूपसे सूर्य बने हुए हैं। वे यद्यपि एक ही हैं, तथापि ऋषियोंने उनका बहुत रूपोंमें वर्णन किया है। वे ही समस्त वैदिक क्रियाओंके मूल हैं ॥ ३० ॥ शौनकजी ! एक भगवान् ही मायाके द्वारा काल, देश, यज्ञादि क्रिया, कर्ता, स्रुवा आदि करण, यागादि कर्म, वेदमन्त्र, शाकल्य आदि द्रव्य और फलरूपसे नौ प्रकारके कहे जाते हैं ॥ ३१ ॥ कालरूपधारी भगवान् सूर्य लोगोंका व्यवहार ठीक-ठीक चलानेके लिये चैत्रादि बारह महीनोंमें अपने भिन्न-भिन्न बारह गणोंके साथ चक्कर लगाया करते हैं ॥ ३२ ॥

धाता कृतस्थली हेतिर्वासुकी रथकृन्मुने । पुलस्त्यस्तुम्बुरुरिति मधुमासं नयन्त्यमी ॥ ३३ ॥
अर्यमा पुलहोऽथौजाः प्रहेतिः पुञ्जिकस्थली । नारदः कच्छनीरश्च नयन्त्येते स्म माधवम् ॥ ३४ ॥
मित्रोऽत्रिः पौरुषेयोऽथ तक्षको मेनका हहाः । रथस्वन इति ह्येते शुक्रमासं [1]नयन्त्यमी ॥ ३५ ॥
वसिष्ठो वरुणो रम्भा सहजन्यस्तथा हुहूः । शुक्रश्चित्रस्वनश्चैव शुचिमासं नयन्त्यमी ॥ ३६ ॥
इन्द्रो विश्वावसुः श्रोता एलापत्रस्तथाङ्गिराः । प्रम्लोचा राक्षसो वर्यो नभोमासं नयन्त्यमी ॥ ३७ ॥
विवस्वानुग्रसेनश्च व्याघ्र आसारणो भृगुः । अनुम्लोचा शङ्खपालो नभस्याख्यं नयन्त्यमी ॥ ३८ ॥
पूषा धनञ्जयो वातः सुषेणः सुरुचिस्तथा । घृताची गौतमश्चेति तपोमासं नयन्त्यमी ॥ ३९ ॥
क्रतुर्वर्चा भरद्वाजः पर्जन्यः सेनजित्तथा । विश्व ऐरावतश्चैव तपस्याख्यं नयन्त्यमी ॥ ४० ॥

### कृष्णप्रिया व्याख्या

अन्वयः— मुने ( द्वादशभिः ) धाता कृतस्थली हेतिः वासुकिः रथकृत् पुलस्त्यः तुम्बुरुः इति अमी मधुमासं नयन्ति ॥३३॥ अर्यमा पुलहः अथौजाः प्रहेतिः पुञ्जिकस्थली नारदः कच्छनीरः एते माधवं नयन्ति ॥ ३४ ॥ मित्रः अत्रिः अथ पौरुषेयः तक्षकः मेनका हहाः रथस्वनः इति एते शुक्रमासं नयन्ति ॥ ३५ ॥ वसिष्ठः वरुणः रम्भा सहजन्यः तथा हुहूः शुक्रः चित्रस्वनः अमी शुचिमासं नयन्ति ॥ ३६ ॥ इन्द्रः विश्वावसुः श्रोता एलापत्रः तथा अङ्गिराः प्रम्लोचा राक्षसः वर्यः अमी नभोमासं नयन्ति ॥ ३७ ॥ विवस्वान् उग्रसेनः व्याघ्रः आसारणः भृगुः अनुम्लोचा शङ्खपालः अमी नभस्याख्यं ( मासं ) नयन्ति ॥ ३८ ॥ पूषा धनञ्जयः वातः सुषेणः तथा सुरुचिः घृताची गौतमः इति अमी तपोमासं नयन्ति ॥ ३९ ॥ क्रतुः वर्चा भरद्वाजः पर्जन्यः तथा सेनजित् विश्वः ऐरावतः च एव अमी तपस्याख्यं ( मासं ) नयन्ति ॥ ४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

तानेव गणानाह धातेति द्वादशभिः । धाता सूर्यः । कृतस्थली अप्सराः । हेती राक्षसः । वासुकिर्नागः । रथकृद्यक्षः । पुलस्त्य ऋषिः । तुंबुरुर्गन्धर्वः । मधुमासं चैत्रम् । नयंत्यनुवर्तयंति ॥ ३३ ॥ अथौजा यक्षः । प्रहेती राक्षसः । नारदो गंधर्वः । कच्छनीरो नागः । माधवं वैशाखम् ॥ ३४ ॥ मित्रः सूर्यः । पौरुषेयो राक्षसः । रथस्वनो यक्षः । शुक्रमासं ज्येष्ठम् ॥ ३५ ॥ वरुणः सूर्यः । सहजन्यो यक्षः । शुक्रो नागः । चित्रस्वनो राक्षसः । शुचिमासमाषाढम् ॥ ३६ ॥ इंद्रः सूर्यः । विश्वावसुर्गंधर्वः । श्रोता यक्षः एलापत्रो नागः । वर्यो राक्षस इति स्वयमेव व्याख्यातम् । नभोमासं श्रावणम् ॥ ३७ ॥ विवस्वान्सूर्यः । उग्रसेनो गंधर्वः । व्याघ्रो राक्षसः । आसारणो यक्षः । शंखपालो नागः । नभस्याख्यं भाद्रपदम् ॥ ३८ ॥ धनंजयो नागः । वातो राक्षसः । सुषेणो गंधर्वः । सुरुचिर्यक्षः । तपोमासं माघम् । मासक्रमातिलंघ कौर्मोक्तादित्यनुक्रमानुसारेण । वैष्णवे तु मासक्रमेणोक्तिः । क्वचिन्नामव्यत्ययस्तु कल्पभेदेनेति ज्ञेयम् ॥ ३९ ॥ क्रतुर्यक्षः । वर्चा राक्षसः । पर्जन्यः । सूर्यः । सेनजिदप्सराः । विश्वो गंधर्वः । ऐरावतो नागः । तपस्याख्यं फाल्गुनम् ॥ ४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'स्याच्चैत्रे चैत्रिको मधुः' इत्यमरः ॥ ३३ ॥ 'वैशाखे माधवो राधः' इत्यमरः ॥ ३४ ॥ 'ज्येष्ठे शुक्रः' इत्यमरः ॥ ३५ ॥ 'शुचिरप्ययम् । आषाढे' इत्यमरः ॥ ३६ ॥ 'श्रावणे तु स्यान्नभाः' इत्यमरः ॥ ३६ ॥ 'स्युर्नभस्ये प्रौष्ठपदभाद्रभाद्रपदाः' ॥ ३८ ॥ 'तपा माघे; इत्यमरः ॥ ३९ ॥ 'स्यात्तपस्यः फाल्गुनिकः' इत्यमरः ॥ ४० ॥

### अन्वितार्थप्रकाशिका

तानेव गणानाह—धातेति । द्वादशभिः धाता सूर्यः कृतस्थली अप्सराः हेतिः राक्षसः वासुकिर्नागः रथकृत् यक्षः पुलस्त्यः ऋषिः तुम्बुरुर्गन्धर्वः इत्येवं सप्तामी मधुमासं चैत्रं नयन्ति । स्वस्वकर्मभिः सूर्यं गमयन्तीत्यर्थः ॥ ३३ ॥ अर्यमेति । अर्यमा सूर्यः पुलहः ऋषिः अथौजाः यक्षः प्रहेतिः राक्षसः पुञ्जिकस्थली अप्सराः नारदो गन्धर्वः कच्छनीरो नागः एते माधवं वैशाखं मासं

१. यन्ति ते ।

नयन्ति ॥ ३४ ॥ मित्र इति। मित्रः सूर्यः अत्रिः ऋषिः पौरुषेयो राक्षसः तक्षको नागः मेनका अप्सराः हाहाः गन्धर्वः रथस्वनो यक्षः अमी शुक्रमासं ज्येष्ठमासं नयन्ति ॥ ३५ ॥ वसिष्ठ इति। वसिष्ठः ऋषिः वरुणः सूर्यः रम्भा अप्सराः सहजन्यो यक्षः हुहूगन्धर्वः शुक्रो नागः चित्रस्वनो राक्षसः अमी शुचिमासमाषाढमासं नयन्ति ॥ ३६ ॥ इन्द्र इति। इन्द्रः सूर्यः विश्वावसुर्गन्धर्वः श्रोता यक्षः एलापत्रो नाग अङ्गिरा ऋषिः प्रम्लोचा अप्सराः वर्यो राक्षसः अमी नभोमासं श्रावणं नयन्ति ॥ ३७ ॥ विवस्वानिति। विवस्वान् सूर्यः उग्रसेनो गन्धर्वः व्याघ्रो राक्षसः आसारणो यक्षः भृगुः ऋषिः अनुम्लोचा अप्सराः शङ्खपालो नागः अमी नभस्याख्यं भाद्रपदं नयन्ति ॥ ३८ ॥ पूषेति। पूषा सूर्यः धनञ्जयो नागः वातो राक्षसः सुषेणो गन्धर्वः सुरुचिर्यक्षः घृताची अप्सराः गौतमः ऋषिः अमी तपोमासं माघं नयन्ति। मासक्रमातिलङ्घनं कौर्म्योक्तादिक्रमानुसारेण। वैष्णवे तु मासक्रमेणोक्तिः। क्वचिन्ना-मव्यत्ययस्तु कल्पभेदेनेति ज्ञेयम् ॥ ३९ ॥ क्रतुरिति। क्रतुर्यक्षः वर्चा राक्षसः भरद्वाजः ऋषिः पर्जन्यः सूर्यः सेनजित् अप्सराः विश्वो गन्धर्वः ऐरावतो नागः अमी तपस्याख्यं फाल्गुनं मासं नयन्ति ॥ ४० ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

धाता आदित्यः कृतस्थली अप्सरा हेतीराक्षसः वासुकिः भुजङ्गः रथकृत् यक्षः पुलस्त्य ऋषिः तुम्बुरुः गन्धर्वः ॥ ३३ ॥ अथौजा यक्षः प्रहेती राक्षसः नारद ऋषिर्गानकृत् कच्छनीरो नागः ॥ ३४ ॥ अत्रिर्ऋषिः पौरुषेयो राक्षसः तक्षको नागः हाहा गन्धर्वः ॥३५॥ रथस्वनो यक्षः वरुण आदित्यः सहजन्यशुक्रौ यक्षराक्षसौ चित्रस्वनः गन्धर्वः ॥३६॥ इन्द्र आदित्य विवस्वावसुर्गन्धर्वः श्रोता यक्षः एलापत्रः नागः ॥ ३७ ॥ उग्रसेनव्याघ्रौ यक्षराक्षसौ ॥ ३८ ॥ पूषा सूर्यः धनञ्जयो नागः सुषेणो यक्षः सुरुचिर्गन्धर्वः वातो राक्षसः ॥ ३९ ॥ वर्चा आदित्यः पर्जन्यो गन्धर्वः सेनजिद्राक्षसः ऐरावतो नागः ॥ ४० ॥

## श्रीमद्वीरराघवव्याख्या

के पुनस्ते प्रतिगणं सप्तगणिन इत्यत्राह—धातेत्यादिना, धाता आदित्यः कृतस्थली अप्सराः हेती राक्षसः वासुकिः भुजङ्ग रथकृद्यक्षः हे मुने, शौनक! पुलस्त्य ऋषिः तुम्बुरुर्गन्धर्वः इत्येवं सप्त मधुमासं चैत्रमासं नयन्ति स्वस्वकर्मभिः सूर्यं गमयन्तीत्यर्थः। मधुमासमित्यत्यन्तंसयोगे द्वितीया एवमग्रेऽपि ज्ञेयम् ॥ ३३ ॥ अर्यमेति। अर्यमा सूर्यः पुलहः ऋषिः रथौजाः यक्षः प्रहेतिः राक्षसः पुञ्जिकस्थली अप्सराः नारदो यक्षः [ गन्धर्वः ] कच्छनीरो नागः एते माधवं वैशाखमासम् ॥ ३४ ॥ मित्र सूर्यः अत्रिः ऋषिः पौरुषेयो राक्षसः तक्षको नागः मेनका अप्सराः हाहाः गन्धर्वः रथस्वनो यक्षः शुक्रमासं ज्येष्ठमासम् ॥ ३५ ॥ वसिष्ठः ऋषिः वरुणः सूर्यः रम्भा अप्सराः सहजन्यो यक्षः हूहूर्गन्धर्वः शुक्रो नागः चित्रस्वनो राक्षसः शुचिमासम् आषाढमासम् ॥३६॥ इन्द्रः सूर्यः विश्वावसुर्गन्धर्वः श्रोता यक्षः एला [ प ] पुत्रो नागः अङ्गिरा ऋषिः प्रम्लोचा अप्सराः वर्यो राक्षसः नभोमासम् श्रावणमासम् ॥ ३७ ॥ विवस्वान् सूर्यः उग्रसेनो गन्धर्वः व्याघ्रो राक्षसः आसारणो यक्षः भृगुः ऋषिः अनुम्लोचा अप्सराः शङ्खपालो नागः नभस्याख्यं भाद्रपदं मासम् ॥ ३८ ॥ पूषा सूर्यः धनञ्जयो नागः वातो राक्षसः सुषेणो गन्धर्वः सुरुचिर्यक्षः घृताची अप्सराः गौतम ऋषिः तपोमासं माघमासं मासक्रमविलङ्घनं तु कूर्मोक्तादित्यक्रमानुसारेण। यद्वा, मासक्रमो न विवक्षितः यथा गणिनाम् अथवाऽर्थक्रमानुरोधेन पूषेत्यादिश्लोकद्वय तदनन्तरश्लोकद्वयात्परतो योज्यं त्वष्टेत्यादिश्लोकद्वयं तु तत्पूर्वश्लोकद्वयात्पूर्वं योज्यम् ॥ ३९ ॥ ऋतुवर्चा राक्षसः भरद्वाजः ऋषिः पर्जन्यः सूर्यः सेनजित् अप्सराः विश्वो गन्धर्वः ऐरावतो नागः तपस्याख्यं फाल्गुनं मासम् ॥ ४० ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इदानीं तेषां नामान्याह—धातेत्यादिना। धाता सूर्यः कृतस्थली अप्सराः हेतीराक्षसः वासुकिर्नागः रथकृत्तक्षा पुलस्त्यः ऋषिः तुम्बुरुर्गन्धर्वः अमी धात्रादयो मधुमासं नयन्ति ते उक्तक्रियाप्रवर्तकत्वेन तन्मासमतिपारयन्ति ॥ ३३ ॥ अर्यमा सूर्यः पुलहः ऋषिः अथौजाः तक्षा प्रहेतीराक्षसः पुञ्जिकस्थली अप्सराः नारदो गन्धर्वः कच्छनीरो नागः एते माधवमासाधिपति माधवनामान नयन्ति शरणं प्राप्योपासते एवमुत्तरत्राप्यनुसन्धेयम् ॥ ३४ ॥ मित्रः सूर्यः अत्रिः ऋषिः पौरुषेयो राक्षसः तक्षको नागः मेनका अप्सराः हाहा गन्धर्वः रथस्वनस्तक्षा ॥ ३५ ॥ वसिष्ठ ऋषिः वरुणः सूर्यः रम्भा अप्सराः सहजन्यो राक्षसः हूहूर्गन्धर्वः शुक्रो नागः चित्रस्वनस्तक्षा ॥ ३६ ॥ इन्द्र सूर्यः विश्वावसुर्गन्धर्वः स्रोता तक्षा एलापत्रो नागः अङ्गिरा ऋषिः प्रम्लोचा अप्सराः स्वर्यो नाम राक्षसः ॥ ३७ ॥ विवस्वानादित्यः उग्रसेनो गन्धर्वः व्याघ्रो राक्षसः आसारणस्तक्षा भृगुर्ऋषिः अनुम्लोचा अप्सराः शङ्खपालो नागः ॥ ३८ ॥ पूषा आदित्यः धनञ्जयो नागः वातो राक्षसः सुषेणस्तक्षा सुरुचिर्गन्धर्वः घृताच्यप्सराः गौतम ऋषिः ॥ ३९ ॥ ऋतुरप्सराः वर्चा गन्धर्वः भरद्वाज ऋषिः पर्जन्य आदित्यः सेनजित्तक्षा विश्वो रक्षसः ऐरावतो नागः ॥ ४० ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

सौरो गणो मासिमासीति यत् पृष्टं तत्र प्रथमश्चैत्रमासस्सप्तकमाह—धाता सूर्य्यः कृतस्थली अप्सराः हेतिः राक्षसः वासुकिर्नागः रथकृत् यक्षः पुलस्त्यः ऋषिः तुम्बरुर्गन्धर्वः ॥ ३३ ॥ अर्य्यमा सूर्यः पुलहः ऋषिः अथौजा यक्षः प्रहेती राक्षसः पुञ्जिकस्थली अप्सराः नारदो गन्धर्वः कच्छनीरो नागः माधवं वैशाखम् ॥ ३४ ॥ मित्रः सूर्य्यः अत्रिर्मुनिः पौरुषेयो राक्षसः तक्षको नागः मेनका अप्सरा हाहा गंधर्वः रथस्वनो यक्षः शुक्रमासं ज्यैष्ठम् ॥ ३५ ॥ वसिष्ठो मुनिः वरुणः सूर्य्यः रम्भा अप्सराः सहजन्यो राक्षसः हुहूर्गन्धर्वः शुक्रो नागः चित्रस्वनो यक्षः शुचिमासं आषाढम् ॥ ३६ ॥ इन्द्रः सूर्य्यः विश्वावसुर्गन्धर्वः श्रोता यक्षः एलापत्रो नागः अङ्गिरा मुनिः प्रम्लोचा अप्सराः वर्य्यो राक्षस इति स्वयमेव व्याख्यातं नभोमासं श्रावणम् ॥ ३७ ॥ विवस्वान् सूर्य्यः उग्रसेनो गन्धर्वः व्याघ्रो राक्षसः आसारणो यक्षः भृगुर्मुनिः अनुम्लोचा अप्सराः शङ्खपालो नागः नभस्याख्यं भाद्रपदम् ॥ ३८ ॥ पूषा सूर्य्यः धनञ्जयो नागः वातो राक्षसः सुषेणो गन्धर्वः सुरुचिर्यक्षः घृताची अप्सराः गौतमो मुनिः तपोमासं माघम् ॥ ३९ ॥ ऋतुर्यक्षः वर्चा राक्षसः भरद्वाजो मुनिः पर्जन्यः सूर्य्यः श्येनजित् अप्सराः विश्वो गन्धर्वः ऐरावतो नागः तपस्याख्यं फाल्गुनम् ।४०।

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तानेव गणान् तेषु मासेषु विभज्य दर्शयन् तेषां नामानि ब्रूहीत्यस्योत्तरमाह—धातेति द्वादशभिः । हे मुने ! अमी मधुमासं चैत्रमासं नयन्ति वर्तयन्ति तत्र धाता सूर्यः कृतस्थली अप्सराः हेती राक्षसः वासुकिः नागः रथकृत् यक्षः पुलस्त्य ऋषिः तुम्बुरुः गन्धर्वः ॥ ३३ ॥ एते अर्यमादयः माधवं वैशाखं नयन्ति तत्र अर्यमा सूर्यः पुलहः ऋषिः अथौजाः यक्षः प्रहेतिः राक्षसः पुञ्जिकस्थली अप्सराः नारदो गन्धर्वः कच्छनीरो नागः ॥ ३४ ॥ अमी शुक्रमासं ज्येष्ठमासं नयन्तीत्येके अत आह—मित्रः सूर्यः अत्रिः ऋषिः पौरुषेयो राक्षसः तक्षको नागः मेनका अप्सराः हाहा गन्धर्वः रथस्वनो यक्षः इत्येते ॥ ३५ ॥ अमी वसिष्ठादयः शुचिमासमाषाढं नयन्ति वसिष्ठः ऋषिः वरुणः सूर्यः रम्भा अप्सराः सहजन्यो यक्षः हूहूः गन्धर्वः शुक्रो नागः चित्रस्वनो राक्षसः ॥ ३६ ॥ अमी इन्द्रादयः नभोमासं श्रावणं नयन्ति इन्द्रः सूर्यः विश्वावसुः गन्धर्वः श्रोता यक्षः एलापत्रो नागः अङ्गिरा ऋषिः प्रम्लोचा अप्सराः वर्यो राक्षसः ॥ ३७ ॥ अमी विवस्वत्प्रभृतयः नभस्याख्यं भाद्रपदं नयन्ति विवस्वान् सूर्यः उग्रसेनो गन्धर्वः व्याघ्रो राक्षसः आसारणो यक्षः भृगुः ऋषिः अनुम्लोचाः अप्सराः शङ्खपालो नागः ॥ ३८ ॥ पूषा सूर्यः धनञ्जयो नागः वातो राक्षसः सुषेणो गन्धर्वः सुरुचिर्यक्षः घृताची अप्सराः गौतम ऋषिः तपोमासं माघमासं क्रमो वा विवक्षितः ॥ ३९ ॥ क्रतुर्यक्षः वर्चा राक्षसः भरद्वाजः ऋषि पर्जन्यः सूर्यः सेनजित् अप्सराः विश्वो गन्धर्वः ऐरावतो नागः तपस्याख्यं फाल्गुनम् ॥ ४० ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

तानेव गणानाह—धातेति द्वादशभिः । धाता सूर्यः । कृतस्थली अप्सराः । हेतिः राक्षसः । वासुकिर्नागः । रथकृत् यक्षः । पुलस्त्यः ऋषिः । तुम्बुरुर्गन्धर्वः । इत्येवं सप्तामी चैत्रं मधुमासं नयन्ति, स्वस्वकर्मभिः सूर्यं गमयन्तीत्यर्थः ॥ ३३ ॥ अर्यमासूर्यः पुलहः ऋषिः । अथौजाः यक्षः । प्रहेतिः राक्षसः । पुञ्जिकस्थली अप्सराः । नारदो गन्धर्वः । कच्छनीरो नागः । एते माधवं वैशाखं मासं नयन्ति ॥३४॥ मित्रः सर्यः । अत्रिः ऋषिः पौरुषेयो राक्षसः । तक्षको नागः । मेनका अप्सराः । हाहाः गन्धर्वः । रथस्वनो यक्षः । अमी शुक्रमासं ज्येष्ठमा संनयन्ति ॥३५॥ वसिष्ठः ऋषिः । वरुणः सूर्यः । रम्भा अप्सराः । सहजन्यो यक्षः हूहूर्गन्धर्वः । शुक्रो नागः । चित्रस्वनो राक्षसः । अमी शुचिमासमाषाढमासम् ॥ ३६ ॥ इन्द्र सूर्यः । विश्वःवसुर्गन्धर्वः । श्रोता यक्षः । एलापत्रो नागः । अङ्गिरा ऋषिः । प्रम्लोचा अप्सराः वर्यो राक्षसः । नभोमासं श्रावणम् ॥ ३७ ॥ विवस्वान् सूर्यः । उग्रसेनो गन्धर्वः । व्याघ्रो राक्षसः आवरणो यक्षः । भृगुः ऋषिः । अनुम्लोचा अप्सराः । शङ्खपालो नागः । अमी नभस्याख्यं भाद्रपदम् ॥ ३८ ॥ पूषा सूर्यः । धनञ्जयो नागः वातो राक्षसः । सुषेणो गन्धर्वः । सुरुचिर्यक्षः । घृताची अप्सराः । गौतमः ऋषिः तपोमासं माधम् । मासक्रमातिलङ्घनं कौर्म्योक्तादिक्रमानुसारेण वैष्णवे तु मासक्रमेणोक्तिः, क्वचिन्नामव्यत्ययस्तु कल्पभेदेनेति ज्ञेयम् ॥ ३९ ॥ क्रतुर्यक्षः । वर्चा राक्षसः । भरद्वाजः ऋषिः । पर्जन्यः । सूर्यः । सेनजित् अप्सराः । विश्वो गन्धर्वः । ऐरावतो नागः । तपस्याख्यं फाल्गुनम् ॥ ४० ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

के पुनस्ते प्रतिगणं सप्तसप्तगणिताः इत्यत्राह धातेत्यादिना ॥ धातेति ॥ हे मुने शौनक, धाता धातृसंज्ञः सूर्यः, कृतस्थली अप्सराः, हेतिः राक्षसः, वासुकिर्नागः, रथकृत् यक्षः, पुलस्त्यः ऋषिः, तुम्बुरुः गन्धर्वः, इत्येवं अमी सप्त, मधुमासं चैत्रमासं नयन्ति । ते उक्तक्रियाप्रवर्त्तकत्वेन तन्मासमतिपारयन्ति । एवमग्रेऽपि ज्ञेयम् ॥ ३३ ॥ अर्यमेति ॥ अर्यमा सूर्यः, पुलहः ऋषिः

अथौजाः यक्षः, प्रहेतिः राक्षसः, पुञ्जिकस्थली अप्सराः, नारदः गन्धर्वः, कच्छनीरः नागश्च, एते माधवं वैशाखमासं नयन्ति स्म ॥ ३४ ॥ मित्र इति ॥ अथ मित्रः सूर्यः, अत्रिः, ऋषिः, पौरुषेयो राक्षसः, तक्षको नागः, मेनका अप्सराः, हहाः हाहानामा गन्धर्वः, रथस्वनो यक्षः, इत्येवं अमी सप्त एते शुक्रमासं ज्येष्ठमासं नयन्ति हि ॥ ३५ ॥ वसिष्ठ इति ॥ वसिष्ठः ऋषिः वरुणः सूर्यः, रम्भा अप्सराः, सहजन्यो यक्षः, तथा हुहूः गन्धर्वः, शुक्रः नागः, चित्रस्वनः राक्षसः, अमी शुचिमासमाषाढमासं च नयन्ति एव ॥ ३६ ॥ इन्द्र इति ॥ तथा इन्द्रः सूर्यः, विश्वावसुर्गन्धर्वः. श्रोता यक्षः, एलापत्रो नागः, अङ्गिराः ऋषिः, प्रम्लोचा अप्सराः, वर्यो राक्षसः, अमी नभोमासं, श्रावणमासं, नयन्ति ॥ ३७ ॥ विवस्वानिति । विवस्वान् सूर्यः, उग्रसेनो गन्धर्वः, व्याघ्रः राक्षसः, आसारणो यक्षः, भृगुः ऋषिः, अनुम्लोचा अप्सराः, शङ्खपालो नागश्च, अमी नभस्याख्यं भाद्रपदमासं नयन्ति ॥ ३८ ॥ पूषेति ॥ पूषा सूर्यः, धनंजयो नागः, वातो राक्षसः, सुषेणो गन्धर्वः, तथा सुरुचिर्यक्षः, घृताची अप्सराः, गौतमः ऋषिश्च । इत्येवं अमी तपोमासं माघमासं नयन्ति । मासक्रमविलङ्घनं कूर्मोक्तादिक्रमानुसरणतः । यद्वा, उक्तविवक्षाधीनत्वतः अथवार्थक्रमानुरोधेन पूषेत्यादि-श्लोकद्वयं तदनन्तरश्लोकद्वयात्परता योज्यम् । त्वष्टेत्यादिश्लोकद्वयं तु तत्पूर्वश्लोकद्वयात्पूर्वं योज्यं वैष्णवे क्रमोक्तेः ॥ ३९ ॥ क्रतुरिति ॥ क्रतुर्यक्षः, वर्चा राक्षसः, भरद्वाजः ऋषिः, पर्जन्यः सूर्यः, सेनजिदप्सराः, तथा विश्वो गन्धर्वः, ऐरावतो नागश्च अमी एव तपस्याख्यं फाल्गुनमासं नयन्ति ॥ ४० ॥

## हिन्दी अनुवाद

शौनकजी ! धाता नामक सूर्य, कृतस्थली अप्सरा, हेति राक्षस, वासुकि सर्प, रथकृत् यक्ष, पुलस्त्य ऋषि और तुम्बुरु गन्धर्व—ये चैत्र मास में अपना-अपना कार्य सम्पन्न करते हैं ॥ ३३ ॥ अर्यमा सूर्य, पुलह ऋषि, अथौजा यक्ष, प्रहेति राक्षस, पुञ्जिकस्थली अप्सरा, नारद गन्धर्व और कच्छनीर सर्प—ये वैशाख मास के कार्यनिर्वाहक हैं ॥ ३४ ॥ मित्र सूर्य, अत्रि ऋषि, पौरुषेय राक्षस, तक्षक सर्प मेनका अप्सरा, हाहा गन्धर्व और रथस्वन यक्ष—ये ज्येष्ठ मास के कार्यनिर्वाहक हैं ॥ ३५ ॥ आषाढ़ में वरुण नामक सूर्य के साथ वसिष्ठ ऋषि, रम्भा अप्सरा, सहजन्य यक्ष, हूहू गन्धर्व, शुक्र नाग और चित्रस्वन राक्षस अपने-अपने कार्य का निर्वाह करते हैं ॥ ३६ ॥ श्रावण मास इन्द्र नामक सूर्य का कार्यकाल है । उसके साथ विश्वावसु गन्धर्व, श्रोता यक्ष, एलापत्र नाग, अङ्गिरा ऋषि, प्रम्लोचा अप्सरा एवं वर्या नामक राक्षस अपने कार्य का सम्पादन करते हैं ॥ भाद्रपद के सूर्य का नाम है विवस्वान् । उनके साथ उग्रसेन गन्धर्व, व्याघ्र राक्षस, आसारण यक्ष, भृगु ऋषि, अनुम्लोचा अप्सरा शङ्खपाल नाग रहते हैं ॥ ३८ ॥ शौनकजी ! माघ मास में पूषा नाम के सूर्य रहते हैं । उनके साथ धनञ्जय नाग, वात राक्षस, सुषेण गन्धर्व, सुरुचि, यक्ष घृताची अप्सरा और गौतम ऋषि रहते हैं ॥ ३९ ॥ फाल्गुन मास का कार्यकाल पर्जन्य नामक सूर्य का है । उनके साथ क्रतु यक्ष वर्चा राक्षस, भरद्वाज ऋषि, सेनजित् अप्सरा विश्व गन्धर्व और ऐरावत सर्प रहते हैं ॥ ४० ॥

अथांशुः कश्यपस्तार्क्ष्य ऋतसेनस्तथोर्वशी । विद्युच्छत्रुर्महाशङ्खः सहोमासं नयन्त्यमी ॥ ४१ ॥
भगः स्फूर्जोऽरिष्टनेमिरूर्ण आयुश्च पञ्चमः । कर्कोटकः पूर्वचित्तिः पुष्यमासं नयन्त्यमी ॥ ४२ ॥
त्वष्टा ऋचीकतनयः कम्बलश्च तिलोत्तमा । ब्रह्मापेतोऽथ शतजिद् धृतराष्ट्र इषम्भराः ॥ ४३ ॥
विष्णुरश्वतरो रम्भा सूर्यवर्चाश्च सत्यजित् । विश्वामित्रो मखापेत ऊर्जमासं नयन्त्यमी ॥ ४४ ॥
एता भगवतो विष्णोरादित्यस्य विभूतयः । स्मरतां सन्ध्ययोर्नॄणां हरन्त्यंहो दिने दिने ॥ ४५ ॥
द्वादशस्वपि मासेषु देवोऽसौ षड्भिरस्य वै । चरन् समन्तात्तनुते परत्रेह च सन्मतिम् ॥ ४६ ॥
सामर्ग्यजुर्भिस्तल्लिङ्गैरृषयः संस्तुवन्त्यमुम् । गन्धर्वास्तं प्रगायन्ति नृत्यन्त्यप्सरसोऽग्रतः ॥ ४७ ॥
उन्नह्यन्ति रथं नागा ग्रामण्यो रथयोजकाः । चोदयन्ति रथं पृष्ठे नैर्ऋता बलशालिनः ॥ ४८ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—अथ अंशुः कश्यपः तार्क्ष्यः ऋतसेनः तथा उर्वशी विद्युच्छत्रुः महाशङ्खः अमी सहोमासं नयन्ति॥४१॥भगः स्फूर्जः अरिष्टनेमिः ऊर्णः पञ्चमः आयुः कर्कोटकः पूर्वचित्तिः अमी पुष्यमासं नयन्ति ॥ ४२ ॥ त्वष्टा ऋचीकतनयाः कम्वलः तिलोत्तमा

१. रिचीं० । २. ब्रह्मापोतो ।

ब्रह्मापेतः शतजित् धृतराष्ट्रः इषम्भराः ॥ ४३ ॥ विष्णुः अश्वतरः रम्भा सूर्यवर्चाः सत्यजित् विश्वामित्रः मखापेतः अमी ऊर्जमासं नयन्ति ॥ ४४ ॥ भगवतः आदित्यस्य विष्णोः एताः विभूतयः दिने दिने संध्ययोः स्मरतां नृणाम् अंहः हरन्ति ॥४५॥ असौ देवः द्वादशसु अपि मासेसु षड्भिः समन्तात् चरन् अस्य इह परत्र च सन्मतिं तनुते ॥ ४६ ॥ ऋषयः सामर्ग्यजुर्भिः तल्लिङ्गैः अमुं स्तुवन्ति गन्धर्वाः तं प्रगायन्ति अप्सरसः अग्रतः नृत्यन्ति ॥ ४७ ॥ नागाः रथम् उन्नह्यन्ति ग्रामण्यः रथयोजकाः बलशालिनः नैर्ऋताः पृष्ठे रथं चोदयन्ति ॥ ४८ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अंशुः सूर्यः । अंश इति वा पाठः । तार्क्ष्यो यक्षः । ऋतसेनो गंधर्वः । विद्युच्छत्रू राक्षसः । महाशंखो नागः । सहोमासं मार्गशीर्षम् ॥ ४१ ॥ भगः सूर्यः । स्फूर्जो राक्षसः । अरिष्टनेमिर्गंधर्वः । ऊर्णो यक्षः । आयुर्ऋषिः कर्कोटको नागः ॥४२॥ त्वष्टा सूर्यः । ऋचीकतनयो जमदग्निः । कंबलो नागः । ब्रह्मापेतो राक्षसः । शतजिद्यक्षः । धृतराष्ट्रो गंधर्वः । इषंभरा आश्विनपालकाः ॥ ४३ ॥ विष्णुरादित्यः । अश्वतरो नागः । सूर्यवर्चा गंधर्वः । सत्यजिद्यक्षः । मखापेतो राक्षस ऊर्जमासं कार्तिकमासम् । एते चादित्यादयः कौर्मे विभज्योक्ताः 'धाताऽर्यमा च मित्रश्च वरुणश्चेंद्र एव च । विवस्वानथ पूषा च पर्जन्याश्चांशुरेव च । भगस्त्वष्टा च विष्णुश्च आदित्या द्वादश स्मृताः । पुलस्त्यः पुलहश्चात्रिर्वसिष्ठोऽथांगिरा भृगुः । गौतमोऽथ भरद्वाजः कश्यपः क्रतुरेव च । जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः । रथकूर्चोऽरिष्टनेमिर्ग्रामणीश्च रथस्वनः रथचित्रस्वनः श्रोता अरुणः सेनजित्तथा । तार्क्ष्यश्चारिष्टनेमिश्च ऋतजित्सत्यजित्तथा । एते यक्षाः । अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा वर्यो व्याघ्रस्तथायश्च वायुर्विद्युद्दिवाकरः । ब्रह्मापेतश्च विप्रेंद्रा यज्ञापेतश्च राक्षसाः । वासुकिः कच्छनीरश्च तक्षकः सर्पपुंगवः । एलापत्रः शंखपालस्तथैरावतसंज्ञितः । धनंजयो महापद्मस्तथा कर्कोटको द्विजाः । कंबलोऽश्वतरश्चैव वहंत्येनं यथाक्रमम् । तुंबुरुर्नारदो हाहा हूहूर्विश्वावसुस्तथा । उग्रसेनो वसुरुचिर्विश्वावसुरथापरः । चित्रसेनस्तथोर्णायुर्धृतराष्ट्रो द्विजोत्तमाः । सूर्यवर्चा द्वादशेति गंधर्वा गायतां वराः । कृतस्थल्यप्सरोवर्या तथाऽन्या पुंजिकस्थली । मेनका सहजन्या च प्रम्लोचा च द्विजोत्तमाः । अनुम्लोचा घृताची च विश्वाची चोर्वशी तथा । अन्या च पूर्वचित्तिः स्यादन्या चैव तिलोत्तमा । रंभा चेति द्विजश्रेष्ठास्तथैवाप्सरसः स्मृताः" । इति ॥ ४४–४५ ॥ एतेषां पृथक्कर्माणि निरूपयति द्वादशस्वपीति त्रिभिः । असौ देवः सूर्यः षड्भिर्गंधर्वादिभिरस्य जनस्य समंताच्चरन् शुभां मतिं तनुते । गायत्र्यर्थोऽनेन सूचितः ॥ ४६ ॥ तल्लिंगैः सूर्यप्रकाशकैः ॥ ४७ ॥ उन्नह्यंति दृढं बध्नंति । ग्रामण्यो यक्षाः । नैर्ऋता राक्षसाः ॥ ४८ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

'मार्गशीर्षे सहा मार्गः' इत्यमरः ॥ ४१ ॥ पुष्यमासं पुष्यनक्षत्रोपलक्षितपूर्णिमायुतमासं, पौषमित्यर्थः ॥४२॥ 'स्यादाश्विन इषोऽप्याश्वयुजोऽपि' इत्यमरः ॥ ४३ ॥ 'बाहुलोर्जौ कार्त्तिकिकः' इत्यमरः । इह मासव्युत्क्रमो हि कौर्मोक्तसूर्यर्षियज्ञादिक्रमापेक्षयैव ज्ञेयः ॥ ४४ ॥ आदित्यस्यादित्यरूपस्य विष्णोः । अंह पापम् ॥ ४५ ॥ समंतात्सप्तसु द्वीपेषु । इह सन्मतितननं तु सूर्योदये चौरजारादयोऽपि स्वकर्म त्यजंति साधव इव तिष्ठंतीति प्रसिद्धमेव । परत्र परलोकनिमित्तं सन्मतितननमपि सूर्यादेव, सूर्योदय एव श्रौतस्मार्तपारलौकिककर्मप्रवृत्तेः प्रायो दर्शनात् । इह परत्रेति सप्तम्यौ निमित्तेर्थे एवात्र ज्ञेये । तदुक्तम्—"यस्योदयेनेह जगत्प्रबुध्यते प्रवर्तते चाखिलकर्मसिद्धये" इति भविष्योत्तरे परत्रेह च सन्मतितननोक्त्या धियः प्रेरकतारूपो गायत्र्यर्थोऽत्र ध्वनितस्तथा च गायत्र्या समाम्रिरसूचीति ज्ञेयम् ॥ ४६–४७ ॥ "ग्रामणीः प्रधानेऽधिपतौ यक्षनापितयोरपि" इति कोशात् । 'नैर्ऋतो यातुरक्षसी' इत्यमरः ॥ ४८ ॥

## अन्वितार्थप्रकाशिका

अंशुरिति । अंशुः सूर्यः । अथांशुः इति वा पाठः । कश्यपः ऋषिः तार्क्ष्यो यक्षः ऋतसेनो गन्धर्वः उर्वशी अप्सराः महाशङ्खो नागः एते सहोमासं मार्गशीर्षं नयन्ति ॥ ४१ ॥ भग इति । भगः सूर्यः स्फूर्जो राक्षसः अरिष्टनेमिर्गन्धर्वः ऊर्णो यक्षः आयुर्ऋषिः कर्कोटको नागः पूर्वचित्तिः अप्सराः अमी पुष्यमासं पौषं नयन्ति ॥ ४२ ॥ त्वष्टेति । त्वष्टा सूर्यः ऋचीकतनयो जमदग्निः ऋषिः कम्बलो नागः तिलोत्तमा अप्सराः ब्रह्मापेतो राक्षसः शतजित् यक्षः धृतराष्ट्रो गन्धर्वः एते इषम्भराः आश्विनमासपालकाः ॥ ४३ ॥ विष्णुरिति विष्णुरादित्यः अश्वतरो नागः रम्भा अप्सरा सूर्यवर्चाः गन्धर्वः सत्यजित् यक्षः विश्वामित्रः ऋषिः मखापेतो राक्षसः अमी ऊर्जमासं कार्त्तिकं नयन्ति । एते चादित्यादयः कौर्मे विभज्योक्ताः । 'धाताऽर्यमा च मित्रश्च वरुणश्चेन्द्र एव च । विवस्वानथ पूषा च । पर्जन्यश्चांशुरेव च भगस्त्वष्टा च विष्णुश्च आदित्या द्वादश स्मृताः' इत्यादिना ॥ ४४ ॥ एता इति । स्फुटम् ॥ ४५ ॥ द्वादशस्वपीति । असौ देवः सूर्यः द्वादशस्वपि मासेषु षड्भिर्गन्धर्वादिभिः सह समन्ताच्चरन् अस्य

जनस्य इह लोके परत्र च लोके उभयलोकविषयां शुभां मतिं तनुते। अनेन गायत्र्यर्थः सूचितः ॥ ४६ ॥ सामेति ॥ तल्लिङ्गैः सूर्यप्रकाशकैः सामादिभिऋर्षयोऽमुं सूर्यं संस्तुवन्ति। स्फुटमन्यत् ॥ ४७ ॥ उन्नह्यन्तीति। नागाः रथम् उन्नह्यन्ति दृढं बध्नन्ति। ग्रामण्यो यक्षाः रथयोजका भवन्ति। नैर्ऋताः राक्षसाः। स्फुटमन्यत् ॥ ४८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

तार्क्ष्यो यक्षः कृतसेनो गन्धर्वः ॥ ४१ ॥ स्फूर्जो राक्षसः अरिष्टनेमिः यक्षः ऊर्णो गन्धर्वः पूर्वचित्तिः देवस्त्री ॥ ४२ ॥ त्वष्टा आदित्यः कम्बलाश्वो नागः ब्रह्मापेतो राक्षसः शतजित् यक्षः धृतराष्ट्रो गन्धर्वः इषम्भराः इषमासनिर्वाहकाः ॥ ४३ ॥ विष्णुरादित्यः अश्वतरो नागः सत्यजित् यक्षः मखापेतो राक्षसः ॥ ४४-५० ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये एकादशोऽध्यायः ॥ ११ ॥

### श्रीमद्वीरराघवव्याख्या

अंशुमान् सूर्यः कश्यप ऋषिः तार्क्ष्यो यक्षः ऋतुसेनो गन्धर्वः ऊर्वशी अप्सराः विद्युच्छत्रुः राक्षसः महाशङ्खो नागः सहोमासं मार्गशीर्षम् नयन्ति ॥ ४१ ॥ भगः सूर्यः स्फूर्जो राक्षसः अरिष्टनेमिः गन्धर्वः ऊर्णो यक्षः आयुः ऋषिः कर्कोटको नागः पूर्वचित्तिः अप्सराः पुष्यमासं पौषमासं नयन्ति ॥ ४२ ॥ त्वष्टा सूर्यः ऋचीकतनयः जमदग्निः ऋषिः कम्बलाश्वो नागः तिलोत्तमा अप्सराः ब्रह्मापेतो राक्षसः ऋतजिद्यक्षः धृतराष्ट्रो गन्धर्वः इषम्भराः एते आश्विनमासनिर्वाहकाः ॥ ४३ ॥ विष्णुरादित्यः अश्वतरो नागः रम्भाः अप्सराः सूर्यवर्चा गन्धर्वः सत्यजित् यक्षः विश्वामित्रः ऋषिः मखापेतो राक्षसः ऊर्जमासं कार्तिकमासं नयन्ति ॥४४॥ अथ व्यूहसमूह [ निरूपण ] मुपसंहरन् तत्स्मरणफलमाह— एता इति। हे विप्र! आदित्यस्वरूपिणः भगवत एताः समाख्याताः विभूतयः साः सन्ध्ययोः स्मरतां नृणामंहः पापं हरन्ति ॥ ४५ ॥ अथैषां पृथक्कर्माण्याह त्रिभिः—द्वादशस्वपीति। असावादित्यरूपो देवः द्वादशस्वपि मासेषु एभिरुक्तैः षड्भिः प्रतिगणमादित्येन विना षड्भवन्तीति षड्भिरित्युक्तम्। तेन सह सप्त भवन्तीति तदभिप्रायेण "नानावहति सप्तकः इत्युक्तं पुरस्तात्। यद्वा, बालखिल्यगणेन सह सप्तत्वमिति तेन विनाऽत्र षड्भिरितित्युक्तं प्रतिगणमादित्यकीर्त्तनं तु नामभेदविवक्षया प्रोधान्यविवक्षया वा विप्रहान्तरेण स्वान्तरात्मभूतभगवदुपासकत्वविवक्षया वेति विभावनीयं समन्तात्परितश्चरन् अस्य जनस्य इह लोके परत्र च लोके सद्गतिं शुभां गतिं तनुते सन्मतिमिति पाठे इहामुत्र श्रेयोविषयां मतिं तनुत इत्यर्थः ॥ ४६ ॥ सामभिः ऋग्भिः यजुर्भिश्च तल्लिङ्गैः सूर्यप्रकाशकैरमुं सूर्यमृषयः स्तुवन्ति ॥ ४७ ॥ नागाः रथमुन्नह्यन्ति दृढं बध्नन्ति ग्रामण्यो यक्षाः नैर्ऋताः राक्षसाः पृष्ठं पश्चाद्रथं चोदयन्ति गमयन्ति प्रेरयन्ति ॥ ४८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

अंशुरादित्यः कश्यप ऋषिः तार्क्ष्यस्तक्षा धृतसेनो गन्धर्वः उर्वशी अप्सराः विद्युच्छत्रुः राक्षसः महाशङ्खो नागः ॥ ४१ ॥ भगः आदित्यः स्फूर्जो राक्षसः अरिष्टनेमिर्ऋषिः ऊर्णो गन्धर्वः आयुस्तक्षा कर्कोटको नागः पूर्वचित्तिरप्सराः ॥ ४२ ॥ त्वष्टाः आदित्यः ऋचीकतनयो राक्षसः कम्बलाख्यो नागः तिलोत्तमाऽप्सराः ब्रह्मरात ऋषिः शतजित्तक्षा धृतराष्ट्रो गन्धर्वः इषं बिभ्रतीति इषम्भराः इषमासप्रणेतार इत्यर्थः ॥ ४३ ॥ विष्णुरादित्यः अश्वतरो नागः रम्भाऽप्सराः सूर्यवर्चो गन्धर्वः अश्वो राक्षसः सत्यकस्तक्षा विश्वामित्र ऋषिः ॥ ४४ ॥ उपसंहरन्नेव तत्कथनप्रयोजनमाह—एता इति। आदित्यान्तर्यामिणो हरेः "ध्येयः सदा सवितृमण्डलमध्यवर्त्ती" इति वचनमत्र प्रमाणम् ॥ ४५ ॥ एतदभिप्रेत्य पुनरपि लोकद्वयोपभोग्यफलमाह—द्वादशस्विति। द्वादशसु मासेषु षड्भिर्गणैर्धात्रादनृते षट्सङ्ख्यामुपगतैः सह समन्ताच्चरन् देवोऽस्य सेवकस्येह परत्र च सन्मतिं निर्दुःखस्वानन्दानुभवलक्षणां तनुते यथायोग्यं विस्तृत्य ददातीत्यर्थः ॥ ४६ ॥ इदानीं तेषां कर्माण्याह—सामेति। सामर्ग्यजुर्भिस्तल्लिङ्गैस्तल्लक्षणैस्तत्तत्त्वगमकैर्वाक्यैर्वा उन्नह्यन्ति सम्यङ्नियोजयन्ति ग्रामण्यस्तक्षाणः नैर्ऋता राक्षसाः ॥ ४७-४८ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अंशुः सूर्य्यः अंश इति च पाठः कश्यपो मुनिः तार्क्ष्यो यक्षः ऋतसेनो गन्धर्वः उर्वशी अप्सराः विद्युच्छत्रू राक्षसः महाशङ्खो नागः सहोमासं मार्गशीर्षम् ॥ ४१ ॥ भगः सूर्य्यः स्फूर्जो राक्षसः अरिष्टनेमिर्गन्धर्वः ऊर्णा यक्षः आयुर्मुनिः कर्कोटको नागः पूर्वचित्तिरप्सराः पुष्यं पौषम् ॥ ४२ ॥ त्वष्टा सूर्य्यः ऋचीकतनयो जमदग्निर्मुनिः कम्बलाश्वो नागः तिलोत्तमा अप्सराः ब्रह्मापेतो राक्षसः शतजित् यक्षः धृतराष्ट्रो गन्धर्वः इषम्भरा एते आश्विनपालकाः ॥ ४३ ॥ विष्णुः सूर्य्यः अश्वतरो नागः रम्भा अप्सराः सूर्य्यवर्चा गन्धर्वः सत्यजित् यक्षः मखापेतो राक्षसः ऊर्ज्जमासं कार्त्तिकम् ॥ ४४-४५ ॥ असौ देवः सूर्य्यः षड्भिर्गन्धर्वादिभिः स्वविभूतिभिः सह ॥ ४६ ॥ एतेषां पृथक्कर्माणि निरूपयति—सामेति। तल्लिङ्गैः सूर्य्यप्रकाशकैः ॥ ४७ ॥ उन्नह्यन्ति दृढं बध्नन्ति ग्रामण्यो यक्षा रथं योजयन्ति चोदयन्ति बलेन नोदनैश्चालयन्ति नैर्ऋताः राक्षसाः ॥ ४७-४८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अंशः सूर्यः कश्यप ऋषिः तार्क्ष्यो यक्षः ऋतसेनो गन्धर्वः उर्वशी अप्सराः विद्युच्छत्रुः राक्षसः महाशङ्खो नागः सहोमासं मार्गशीर्षम् ॥ ४१ ॥ भगः सूर्यः स्फूर्जो राक्षसः अरिष्टनेमिः गन्धर्वः ऊर्णो यक्षः आयुः ऋषिः कर्कोटको नागः पूर्वचित्तिरप्सराः पुष्यमासं पौषमासम् ॥ ४२ ॥ त्वष्टा सूर्यः ऋचीकतनयो जमदग्निः ऋषिः कम्बलाश्वो नागः तिलोत्तमा अप्सराः ब्रह्मापेतो राक्षसः शतजित् यक्षः धृतराष्ट्रो गन्धर्वः इषम्भराः आश्विनपालकाः ॥ ४३ ॥ विष्णुः सूर्यः अश्वतरो नागः रम्भा अप्सराः सूर्यवर्चाः गन्धर्वः सत्यजित् यक्षः विश्वामित्रः ऋषिः मखापेतो राक्षसः ऊर्जमासं कार्त्तिकमासम् ॥ ४४ ॥ सूर्यव्यूहस्मरणफलं दर्शयति—एता इति । विष्णोः आदित्यस्य आदित्याख्यस्य सूयोन्तरात्मन इति फलितोऽर्थः ॥ ४५ ॥ कर्माणि ब्रूहीत्यस्योत्तरमाह—द्वादशस्विति त्रिभिः । असौ विष्णुः षड्भिः ऋष्यादिभिः सह द्वादशसु मासेषु पृथक् पृथक् धात्रादिसूर्यात्मना चरन् अस्य जनस्य इह परत्र च विषये सन्मतिं तनुते ॥ ४६ ॥ अमु सूर्यरूपं विष्णुम् ॥ ४७ ॥ नागा वासुक्यादयः रथमुन्नह्यन्ति दृढं बध्नन्ति ग्रामण्यो यक्षाः नैर्ऋता राक्षसाः ॥ ४८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अंशुः सूर्यः । अंश इति वा पाठः । कश्यपः ऋषिः । तार्क्ष्यो यक्षः । ऋतसेनो गन्धर्वः । उर्वशी अप्सराः । विद्युच्छत्रुः राक्षसः । महाशङ्खो नागः । सहोमासं मार्गशीर्षम् ॥ ४१ ॥ भगः सूर्यः । स्फूर्जो राक्षसः । अरिष्टनेमिर्गन्धर्वः । ऊर्णो यक्षः । आयुर्ऋषिः । कर्कोटको नागः । पूर्वचित्तिः अप्सरा ॥ ४२ ॥ त्वष्टा सूर्यः । ऋचीकतनयो जमदग्निः ऋषिः । कम्बलो नागः । तिलोत्तमा अप्सराः । ब्रह्मापेतो राक्षसः । शतजित् यक्षः । धृतराष्ट्रो गन्धर्वः । एते इषम्भराः आश्विनपालकाः ॥४३॥ विष्णुरादित्यः । अश्वतरो नागः । रम्भा अप्सराः । सूर्यवर्चाः गन्धर्वः । सत्यजित् यक्षः । विश्वामित्रः ऋषिः । मखापेतो राक्षसः । ऊर्जमासं कार्त्तिकम् ॥ ४४ ॥ एते चादित्यादयः कौर्मे विभक्तोक्ताः—'धाताऽर्यमा च मित्रश्च वरुणश्चेन्द्र एव च । विवस्वानथ पूषा च पर्जन्यश्चांशुरेव च । भगस्त्वष्टा च विष्णुश्च आदित्या द्वादश स्मृताः । पुलस्त्यः पुलहश्चात्रिर्वसिष्ठोऽथाङ्गिरा भृगुः । गौतमोऽथ भरद्वाजः कश्यपः क्रतुरेव च । जमदग्निः कौशिकश्च मुनयो ब्रह्मवादिनः । रथकृच्च रथौजाश्च ग्रामणीश्च रथस्वनः । रथचित्रस्वनः श्रोता अरुणः सेनजित्तथा । तार्क्ष्यश्चारिष्टनेमिश्च ऋतजित्सत्यजित्तथा । एते यक्षाः । अथ हेतिः प्रहेतिश्च पौरुषेयो वधस्तथा । वर्यो व्याघ्रस्तथा यश्च वायुर्विद्युद्दिवाकरः । ब्रह्मापेतश्च विप्रेन्द्रा यज्ञोपेतश्च राक्षसाः । वासुकिः कच्छनीरश्च तक्षकः सर्पपुङ्गवः । एलापत्रः शङ्खपालस्तथैरावतसञ्ज्ञितः । धनञ्जयो महापद्मस्तथा कर्कोटको द्विजाः । कम्बलोऽश्वतरश्चैव वहन्त्येवं यथाक्रमम् । तुम्बुरुर्नारदो हाहा हूहूर्विश्वावसुस्तथा । उग्रसेनो वसुरुचिर्विश्वावसुरथापरः । चित्रसेनस्तथोर्णायुर्धृतराष्ट्रो द्विजोत्तमाः सूर्यवर्चा द्वादशेति गन्धर्वा गायतां वराः । कृतस्थल्यप्सरो वर्या तथान्यापुञ्जिकस्थली । मेनका सहजन्या च प्रम्लोचा च द्विजोत्तमाः । अनुम्लोचा घृताची च विश्वाची चोर्वशी तथा । अन्या च पूर्वचित्तिः स्यादन्या चैव तिलोत्तमा । रम्भा चेति द्विजश्रेष्ठास्तथैवाप्सरसः स्मृताः' इति । अथ व्यूहनिरूपणमुपसंहरन् तत्स्मरणफलमाह—एता इति ॥ ४५ ॥ एतेषां पृथक् कर्माणि निरूपयति—द्वादशस्वपीति त्रिभिः । असौ देवः सूर्यः द्वादशस्वपि मासेषु षड्भिर्गन्धर्वादिभिः सह समन्ताच्चरन् अस्य जनस्य इह लोके परत्र च लोके उभयलोकविषयां शुभां मतिं तनुते । अनेन गायत्र्यर्थः सूचितः ॥ ४६ ॥ तल्लिङ्गैः सूर्यप्रकाशकैः सामादिभिर्ऋषयोऽमुं सूर्यं संस्तुवन्ति ॥ ४७ ॥ उन्नह्यन्ति दृढं बध्नन्ति ग्रामण्यो यक्षाः रथयोजका भवन्ति । नैर्ऋताः राक्षसाः ॥ ४८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

अथेति । अथ अंशुः अंशुमान् सूर्यः, कश्यपः ऋषिः, तार्क्ष्यः यक्षः, ऋतसेनो गन्धर्वः, तथा उर्वशी अप्सराः, विद्युच्छत्रुः राक्षसः महाशङ्खः नागः, अमी सहोमासं' नयन्ति ॥ ४१ ॥ भग इति । भगः सूर्यः, स्फूर्जो राक्षसः, अरिष्टनेमिः गन्धर्वः, ऊर्णः, यक्षः पञ्चमः, आयुश्च ऋषिः कर्कोटको नागः, पूर्वचित्तिः अप्सराः, अमी पुष्यमासं पौषमासं नयन्ति ॥ ४२ ॥ त्वष्टेति । त्वष्टा सूर्यः, ऋचीकतनयो जमदग्निः ऋषिः, कम्बलाश्वो नागः, तिलोत्तमा अप्सराः, ब्रह्मापेतो राक्षसः, अथ शतजित् यक्षः, धृतराष्ट्रो गन्धर्वः, इषंभराः एते अश्विनमासनिर्वाहका इत्यर्थः ॥ ४३ ॥ विष्णुरिति । विष्णुः सूर्यः, अश्वतरो नागः, रम्भा अप्सराः, सूर्यवर्चा गन्धर्वः, सत्यजित् यक्षश्च, विश्वामित्रः ऋषि, मखापेतो राक्षसः, अमी ऊर्जमासं कार्त्तिकमासं नयन्ति ॥ ४४ ॥ अथ व्यूहनिरूपणमुपसंहरंस्तत्स्मरणफलमाह । एता इति । हे विप्र, आदित्यस्य आदित्यस्वरूपिणः भगवतः विष्णोः, एताः विभूतयः समाख्याताः, ताः दिने-दिने संध्ययोः स्मरतां नृणां अंहः पापं हरन्ति ॥ ४५ ॥ अथैषां पृथक् कर्माण्याह त्रिभिः । द्वादशस्वपीति । असावादित्यरूपः देवः । द्वादशसु अपि मासेषु षड्भिर्गन्धर्वादिभिः समन्तात् चरन्, अस्य जनस्य इहास्मिन् लोके, परत्र परलोके च, सन्मतिं शुभां बुद्धिं तनुते विस्तारयति वै । अत्र षड्भिरित्युक्तिरादित्यस्य पृथग्गणनादादित्येन सह सप्तको गणः ॥ ४६ ॥

सामेति। तल्लिङ्गैः सूर्यप्रभावप्रकाशकैः सामग्यजुर्भिः सामभिः, ऋग्भिः, यजुर्भिश्च अमुं सूर्यं ऋषयः संस्तुवन्ति, गन्धर्वाः तं प्रगायन्ति, अप्सरसः अग्रतः नृत्यन्ति ॥ ४७ ॥ उन्नह्यन्तीति। नागाः रथं सूर्यस्य रथं उन्नह्यन्ति दृढं बध्नन्ति, ग्रामण्यः यक्षाः रथयोजकाः बलशालिनः, नैर्ऋता राक्षसाः, पृष्ठे रथं नोदयन्ति प्रेरयन्ति ॥ ४८ ॥

### हिन्दी अनुवाद

मार्गशीर्ष मास में सूर्य का नाम होता है अंशु। उनके साथ कश्यप ऋषि, तार्क्ष्य यक्ष, ऋतसेन गन्धर्व, उर्वशी अप्सरा, विद्युच्छत्रु राक्षस और महाशङ्ख नाग रहते हैं ॥ ४१ ॥ पौष मास में भग नामक सूर्य के साथ स्फूर्ज राक्षस, अरिष्टनेमि गन्धर्व, ऊर्ण यक्ष, आयु ऋषि, पूर्वचित्ति अप्सरा और कर्कोटक नाग रहते हैं ॥ ४२ ॥ आश्विन मास में त्वष्टा सूर्य, जमदग्नि ऋषि, कम्बल नाग, तिलोत्तमा अप्सरा, ब्रह्मापेत राक्षस, शतजित् यक्ष और धृतराष्ट्र गन्धर्व का कार्य काल है ॥ ४३ ॥ तथा कार्तिक में विष्णु नामक सूर्य के साथ अश्वतर नाग, रम्भा अप्सरा, सूर्यवर्चा, गन्धर्व, सत्यजित् यक्ष, विश्वामित्र ऋषि और मखापेत राक्षस अपना-अपना कार्य सम्पन्न करते हैं ॥ ४४ ॥ शौनकजी ! वे सब सूर्यरूप भगवान् की विभूतियाँ हैं। जो लोग इनका प्रतिदिन प्रातःकाल और सायंकाल स्मरण करते हैं, उनके सारे पाप नष्ट हो जाते हैं ॥ ४५ ॥ ये सूर्यदेव अपने छः गणों के साथ बारहों महीने सर्वत्र विचरते रहते हैं और इस लोक तथा परलोक में विवेकबुद्धि का विस्तार करते हैं ॥ ४६ ॥ सूर्य भगवान् के गणों में ऋषि लोग तो सर्य सम्बन्धी ऋग्वेद, यजुर्वेद और सामवेद के मन्त्रों द्वारा उनकी स्तुति करते हैं और गन्धर्व उनके सुयश का गान करते रहते हैं। अप्सराएँ आग-आगे नृत्य करती चलती हैं ॥ ४७ ॥ नागगण रस्सी की तरह उनके रथको कसे रहते हैं। यक्षगण रथ का साज सजाते हैं और बलवान् राक्षस उसे पीछे से ढकेलते हैं ॥ ४८ ॥

वालखिल्याः सहस्राणि षष्टिर्ब्रह्मर्षयोऽमलाः। पुरतोऽभिमुखं यान्ति स्तुवन्ति स्तुतिभिर्विभुम् ॥ ४९ ॥

एवं ह्यनादिनिधनो भगवान् हरिरीश्वरः। कल्पे कल्पे स्वमात्मानं व्यूह्य लोकानवत्यजः ॥ ५० ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे आदित्यव्यूहविवरणं नामैकादशोऽध्यायः ॥ ११ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—अमलाः षष्टिः सहस्राणि वालखिल्याः ब्रह्मर्षयः विभुं पुरतः अभिमुखं यान्ति स्तुतिभिः स्तुवन्ति ॥ ४९ ॥ एवम् अनादिनिधनः अजः भगवान् ईश्वरः हरिः कल्पे कल्पे स्वम् आत्मानं व्यूह्य लोकान् अवति ॥ ५० ॥

इति श्रीमद्भागवते द्वादशस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

किंच वालखिल्या इति। एवं प्रतिमासं त एव स्तुवंति। विभु सूर्यम् ॥ ४९ ॥ व्यूह्य विभज्य ॥ ५० ॥

इति श्रीमद्भागवते म० द्वादशस्कंधे श्रीटीकायामेकादशोऽध्यायः ॥ ११ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्तावकेषु पुनराधिक्यमाह—किंचेति। स्तुतिभिः स्तुतिप्रकाशकैः 'उदुत्यं जातवेदसम्' इत्यादिमंत्रैः। विशेषेण भाति भापयति वेति विभुस्तम् ॥ ४९ ॥ कल्पेकल्पे प्रतिकल्पं हरिरेव स्वमात्मानमादित्यरूपेण द्वादशधा विभज्य लोकानवति दुःखजालाद्रक्षतीत्यर्थः ॥ ५० ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे एकादशोऽध्यायः ॥ १० ॥

### अन्वितार्थप्रकाशिका

वालखिल्या इति। पादत्रयं स्फुटम्। प्रतिमासं त एव विभुं सूर्यं स्तुवन्ति ॥ ४९ ॥ एवमिति। अनादिनिधनः आद्यन्तशून्यः अत एवाजो भगवान् ईश्वरो हरिः कल्पे कल्पे एवमात्मानं व्यूह्य द्वादशगणरूपेण विभज्य लोकानवति ॥ ५० ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम्। एकादशे द्वादशस्य व्यधाद्गङ्गासहायकः।

इति श्रीमद्भागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायामेकादशोऽध्यायः ॥ ११ ॥

### श्रीमद्वीरराघवव्याख्या

बालखिल्या इति । पुरतोऽभिमुखं सूर्यमावृत्य स्थित्वा तेन सह यान्ति गच्छन्ति सूर्यं स्तुवन्ति स्तुतिं कुर्वन्ति चेत्यर्थः ।।४९।। उपसंहरति—एवमिति । अनादिनिधन आद्यन्तरहितः नित्यो यो भगवानित्थं प्रतिकल्पं स्वमात्मानं प्रकृतिपुरुषशरीरकं स्वमात्मानं व्यूह्यैकादशगणरूपेण विभज्य लोकान्नयति स्वे स्वे कर्मणि प्रवर्त्तयति ।। ५० ।।

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायाम् एकादशोऽध्यायः ॥ ११ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

एवं गणनमन्तरेणान्येपि सन्तीत्याह—बालखिल्या इति ।।४९।। अध्यायार्थमुपसंहरति—एवमिति । तपति आवर्त्तयति ।।५०।।

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्याम् एकादशोऽध्यायः ।। ११ ।।

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

व्यूह्य विभज्य ।। ५० ।।

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम् । एकादशो द्वादशेऽत्र सङ्गतः सङ्गतः सताम् ।। ११ ।।

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

विभुं सूर्यरूपं विष्णुम् ।। ४९ ।। उपसंहरति—एवमिति । स्वमात्मानं चिदचिच्छक्तिमन्तं विभज्य चिच्छक्तिः क्षेत्रज्ञो धात्रादिशरीराभिमानी अचिच्छक्तिः क्षेत्रं धात्रादिशरीरं स्वयं तयोर्नियन्ता एवम् व्यूह्य विभज्य भगवान् श्रीविष्णुर्लोकानवति ।।४९।। धात्रादिगतक्षेत्रज्ञानाम् "स एष आदित्ये हिरण्मयः पुरुषो दृश्यते" इत्यादिश्रुत्युक्तसाक्षाद्धिरण्मयपुरुषस्तुतत्वात् कृतपुण्यपुञ्जत्वं सर्वपूज्यत्वादिकमस्त्येव ।। ५० ।।

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे एकादशाध्यायार्थप्रकाशः ।। ११ ।।

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

बालखिल्या इति प्रतिमासं त एव विभुं तुर्यं स्तुवन्ति ।। ४९ ।। उपसंहरति अनादिनिधनः आद्यन्तशून्यः अतएवाजो भगवान् प्रतिकल्पमेवमात्मानं व्यूह्य द्वादशगणरूपेण विभज्य लोकानवति ।। ५० ।।

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना । श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ।। १ ।।
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये । श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ।। २ ।।
रचिता द्वादशे तत्र सर्वाश्रयनिरूपणे । एकादशो गतो विष्णोरङ्गादिविनिरूपकः ।। ३ ।।

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

बालखिल्या इति । षष्टिः सहस्राणि अमलाः बालखिल्याः ब्रह्मर्षयः । सूर्यस्य पुरतः अभिमुखाः सन्तः यान्ति, विभुं सूर्यं स्तुतिभिः स्तुवन्ति च ।। ४९ ।। उपसंहरति एवमिति । एवं अनादिनिधनः आद्यन्तरहितः ईश्वरः हरिः अजः भगवान् कल्पे कल्पे प्रतिकल्पं स्वं स्वकीयं आत्मानं व्यूह्य, द्वादशगणबलपोषकत्वेन विभज्य, लोकान् अवति, नयत्यज इति पाठे, नयति स्वे स्वे कर्मणि प्रवर्त्तयति ।। ५० ।।

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचिताया-
मन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे एकादशोऽध्यायः ।। ११ ।।

### हिन्दी अनुवाद

इनके सिवा वालखिल्य नाम के साठ हजार निर्मलस्वभाव ब्रह्मर्षि सूर्य की ओर मुँह करके उनके आगे-आगे स्तुति पाठ करते चलते हैं ।। ४९ ।। इस प्रकार अनादि, अनन्त, अजन्मा भगवान् श्रीहरि ही कल्प-कल्प में अपने स्वरूप का विभाग कर के लोकों का पालन-पोषण करते रहते हैं ।। ५० ।।

इति श्रीमद्भागवते म० द्वादशस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

# अथ द्वादशोऽध्यायः

## सूत उवाच

नमो धर्माय महते नमः कृष्णाय वेधसे । ब्राह्मणेभ्यो नमस्कृत्य धर्मान् वक्ष्ये सनातनान् ॥ १ ॥
एतद् व कथितं विप्रा विष्णोश्चरितमद्भुतम् । भवद्भिर्यदहं पृष्टो नराणां पुरुषोचितम् ॥ २ ॥
अत्र संङ्कीर्तितः साक्षात् सर्वपापहरो हरिः । नारायणो हृषीकेशो भगवान् सात्वतां पतिः ॥ ३ ॥
अत्र ब्रह्म परं गुह्यं जगतः प्रभवाप्ययम् । ज्ञानं च तदुपाख्यानं प्रोक्तं विज्ञानसंयुतम् ॥ ४ ॥
भक्तियोगः[3] समाख्यातो वैराग्यं च तदाश्रयम् । पारीक्षितमुपाख्यानं [4]नारदाख्यानमेव च ॥ ५ ॥
प्रायोपवेशो राजर्षेर्विप्रशापात् परीक्षितः । शुकस्य [5]ब्रह्मर्षभस्य संवादश्च परीक्षितः ॥ ६ ॥
योगधारणयोत्क्रान्तिः संवादो नारदाजयोः । अवतारानुगीतं च सर्गः प्राधानिकोऽग्रतः ॥ ७ ॥
विदुरोद्धवसंवादः क्षत्तृमैत्रेययोस्ततः । पुराणसंहिताप्रश्नो महापुरुषसंस्थितिः ॥ ८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—सुतः उवाच—महते धर्माय नमः वेधसे कृष्णाय नमः ब्राह्मणेभ्यः नमस्कृत्य सनातनान् धर्मान् वक्ष्ये ॥ १ ॥ विप्राः यत् अहं भवद्भिः पृष्टः एतत् नराणां पुरुषोचितम् अद्भुतं विष्णोः चरितं वः कथितम् ॥ २ ॥ अत्र सात्वतां पतिः भगवान् हृषीकेशः साक्षात् नारायणः सर्वपापहरः हरिः सङ्कीर्तितः ॥ ३ ॥ अत्र प्रभवाप्ययं गुह्यं परं ब्रह्म विज्ञानसंयुतं ज्ञानं तदुपाख्यानं च प्रोक्तम् ॥४॥ भक्तियोगः समाख्यातः तदाश्रयं वैराग्यं पारीक्षितम् उपाख्यानं नारदाख्यानम् एव च ( समाख्यातानीति शेषः ) ॥ ५ ॥ विप्रशापात् राजर्षेः परीक्षितः प्रायोपवेशः ब्रह्मर्षेः शुकस्य एव च परीक्षितः संवादः ॥ ६ ॥ योगधारणया उत्क्रान्तिः नारदाजयोः संवादः अवतारानुगीतम् अग्रतः प्राधानिकः सर्गः ॥ ७ ॥ विदुरोद्धवसंवादः ततः क्षत्तृमैत्रेययोः ( संवादः ) पुराणसंहिताप्रश्नः महापुरुषसंस्थितिः ॥ ८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः । प्रथमस्कंधमारभ्य प्राधान्येन समासतः ॥ १ ॥

तदेवमस्मिन्पुराणे विस्तरेणोक्तानर्थान्संक्षेपतो वर्णयिष्यन्धर्मादीन्प्रणमति । नम इति । महते हरिभक्तिलक्षणाय । ब्राह्मणेभ्यो ब्राह्मणान् । सनातनान् अनादीन् । धर्मानित्युपलक्षणं पुराणोक्तार्थानाम् ॥ १ ॥ पुरुषत्वे उचितं श्रवणादियोग्यम् ॥ २ ॥ एतत्प्रपंचयति । अत्रेति । भगवानैश्वर्यादिषड्गुणः साक्षात्संकीर्तित इति देवताकांडार्थः ॥ ३ ॥ ब्रह्मकांडार्थमाह । अत्र ब्रह्मेति । गुह्यं निर्गुणम् । प्रभवाप्ययं प्रभवत्यस्मादिति प्रभवम्, अप्येत्यस्मिन्नित्यप्ययं तच्च तच्च । अनेनाश्रयशब्दार्थो दर्शितः । विज्ञानसंयुतमपरोक्षज्ञानपर्यंतं ज्ञानम् । तदुपाख्यानं तज्ज्ञानमुपाख्यायते प्रकाश्यते येन तज्ज्ञानसाधनमित्यर्थः ॥ ४ ॥ कर्मकांडार्थमाह । भक्तियोगश्च साध्यसाधनरूपः । तदाश्रयं भक्तियोगेन निष्पादितम् । एवं सामान्यतो निरूप्येदानीं द्वादस्कन्धप्रकरणार्थानत्नुक्रामति । पारीक्षितमुपाख्यानं परीक्षिज्जन्मादि तत्प्रस्तावाय नारदाख्यानं च ॥ ५ ॥ ब्रह्मर्षभस्य ब्राह्मणोत्तमस्य इति प्रथमस्कंधार्थः ॥ ६ ॥ उत्क्रांतिरर्चिरादिगतिः । प्राधानिकः प्रधानकार्यविराड्रूपः सर्गः । अग्रत आदितो महदादिक्रमेणेत्यर्थः । इति द्वितीयार्थः ॥ ७ ॥ महापुरुषस्य संस्थितिः प्रलये तूष्णीमवस्थानम् ॥ ८ ॥

---

१. प्राचीन प्रति में 'सूत उवाच' यह अंश 'नमो धर्माय''''''सनातनान्' इस श्लोक के बाद है । २. सङ्कीर्त्यते । ३. गश्च व्याख्यातो ४. धर्मसंस्थानमेव । ५. ब्रह्मवर्यस्य । ६. सर्वा प्राधानिकी गतिः ।

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अनुक्रमो गणना। समासतः संक्षेपतः, संक्षेपकथनेऽपि प्राधान्येन मुख्यार्थस्यैव कथनं नतु सर्वत इत्यर्थः (१) धर्मस्यैव हरिप्रियत्वेन संसारतारकत्वादादौ नमति—नम इति। हरिप्रियत्वं धर्मस्य 'यदायदा हि धर्मस्य' इति श्रीगीतावाक्यादवसीयते। धर्मांतरव्यावृत्तये—महत इति। महत्त्वमपि हरिभक्तिलक्षणधर्मस्य दुक्त्यैवावसीयते। तथाहि—"सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इति। ब्राह्मणेभ्य इति द्वितीयार्थे चतुर्थी। सनातनाञ्छ्रीमद्व्यासकथनादपि प्राक्तनान्नतु व्यासप्रणीतांस्तथा च वेदवत्सनातनत्वमस्य पुराणस्य श्रीसूतेन ध्वनितम्। वेधसेऽवतारादिसर्वविधात्रे। स्वदैन्यं ज्ञापयन्नमति—ब्राह्मणेभ्यो व्यासादिभ्यस्तत्प्रकाशकेभ्यः। सनातनम् 'कालेन प्रलये नष्टा वाणीयम्' इत्यादिप्रमाणेन प्रसिद्धान् धर्मान् भागवतान्वक्ष्ये तत्तत्प्रसंगानुक्रमेण तानेव सूचयिष्यामि 'पतितः स्खलितः' इत्यादिना च साक्षाद्वक्ष्यामीत्यर्थः। श्रवणकीर्तनादिविषयत्वे सति तच्चरितान्येव परमसनातनधर्मा भवन्तीति भावः। यद्वा—भगवतो भक्तियोगस्य तच्चरितानाञ्च निर्गुणत्वात्सनातनत्वमेव, सगुणस्यैव वस्तुनः सनातनत्वाभावादित्यर्थः॥ १॥ यद्भवद्भिर्नराणां संबंधि "पुंसामेकांततः श्रेयस्तन्नश्शंसितुमर्हसि" इत्यहं पृष्टस्तदेतद्वो विष्णोरद्भूतचरितं मया कथितमिति संबंधः। हे विप्रा इति—विगतः प्रापूरयिता स्वीयबोधेन येषां ते विप्राः सर्वज्ञा इति। सर्वज्ञानामग्रे मया यथाश्रुतमेवोक्तमिति भावः। तत्र भगवच्चरितश्रवणमेव मुख्यमित्यभिप्रेत्योपसंहरन्ननुक्रमितुमुपक्रमते—नराणां मध्ये ये पुरुषास्तेषामेवोचितं न तु तद्विमुखानां पशूनामिति तेषां गालिप्रदानम्। तदुक्तम्—"श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः। न यत्कर्णपथोपेतो जातु नाम गदाग्रजः।" इति। यद्वा—नराणां पुरुषे भगवति यदुचितम्॥ २॥ एतत्पुरुषस्य श्रवणादियोग्यमेतदित्यर्थः। अत्र श्रीभागवते। साक्षाद्धरिः श्रीकृष्णः "एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्" इत्युक्तेः। सर्वपापहर इत्यादिविशेषणानां तत्रैव सामंजस्यात्। अत्र द्वादशस्कंधेषु हरिर्भगवदाद्याख्ययानंताविर्भावः परमेश्वरस्तावन्मुख्यत्वेन कीर्त्यते। तत्रापि गुणरूपलीलात्वेन मुख्यत्वेन कीर्त्यते। तस्य च प्राधान्येन भेदद्वयं दर्शितमित्याह—नारायणः सर्वजीवाश्रयः। हृषीकेशस्तदीयसर्वेन्द्रियप्रवर्तकश्च परमात्मेत्यर्थ इत्येको भेदः। द्वितीयमाह—भगवानिति। स एव कः—सात्वतामुद्धवादीनां पतिः स्वयं भगवानित्यर्थः॥ ३॥ सगुणमुक्त्वा निर्गुणमाह—ब्रह्मेति। इत्यर्थो इति—श्रवणादिसाधनमंतरेण ज्ञानानुत्पत्तेस्तदप्युक्तमिति भावः। तदीयनिर्विशेषप्रकाशरूपं यद्ब्रह्म तदपि प्रोक्तं वागाद्यग्राह्यत्वाद्गुह्यम्। तर्हि कथं स्वयं प्रोक्तं तत्राह—जगत उत्पत्तिलयौ यतस्तदित्येवंरीत्योक्तं न तु साक्षादित्यर्थः॥ ४॥ तत्प्रस्तावाय परीक्षिज्जन्मादिप्रसंगाय प्रथमस्कंधत उपक्रमते—पारीक्षितमिति। इहानुक्रमणिकाध्याये। यत्प्रसिद्धमपि किंचित्किंचिदुल्लंघ्यते तन्नानिष्टमिति। अनुक्रमणिका हि नोक्तसमस्तार्थव्यापिनी भवेत् यत्प्रथमत एव जन्मगुह्याध्यायकथातिप्रसिद्धाप्युल्लंघिता। तथा द्रौणिदंडभीष्मनिर्याणादिकथाचित्रकेतुत्रिपुरवधांवरीषादिकथाघासुरब्रह्ममोहादिकथा च बहुश उल्लंघ्य क्वचित्क्रमेणात्युक्तेति॥ ५॥ विप्रशापाच्छृंगिशापात्। ब्रह्मसु ब्राह्मणेषु ऋषिषु उत्तमो ब्रह्मर्षिस्तस्य "वेदास्ये बृहति विप्रे ब्रह्म वेदे परात्मनि। तपोयज्ञप्रधानेषु" इति कोशात्। "ऋषिः श्रेष्ठे च सर्वज्ञे ब्राह्मणे च मनौ तथा" इति॥ ६॥ अर्चिरादिगतिः "तेऽर्चिरभिसंभवंति" इति श्रुत्युक्तगतिः॥ ७–८॥

## अन्वितार्थप्रकाशिका

द्वादशे श्रीभागवतोक्तार्थानां सूचनं क्रमात्। श्रवणादिप्रशंसा च श्लोकास्तत्रोनसप्ततिः (६९)॥
उवाचदशकं (१०) साङ्घ्रिषट्सप्ततिरनुष्टुभः (७६)॥ १२॥

नम इति। महते भगवद्भक्तिलक्षणाय धर्माय नमः। वेधसे जगद्विधात्रे कृष्णाय नमः। ब्राह्मणेभ्यो ब्राह्मणान् नमस्कृत्य सनातनान् धर्मान् श्रीमद्भागवते प्रोक्तान् विषयान् वक्ष्ये सूचये एतदिति। हे विप्राः! यत् प्रति अहं भवद्भिः पृष्टस्तत् नराणां जीवानां पुरुषत्वे उचितं श्रवणादियोग्यमद्भुतं मनोहरमेतद्विष्णोश्चरितात्मकं पुराणं वो युष्मान् प्रति मया कथितम्॥ २॥ अत्रेति। अत्र भागवते साक्षात् हरिः वर्णितः। विशेषणानि स्पष्टानि। इत्युपासनाकाण्डार्थः॥ ३॥ अत्रेति। प्रभवत्यस्मादिति प्रभवम् अप्येत्यस्मिन्नित्यप्ययं तच्च तच्च प्रभवाप्ययं गुह्यं वेदतात्पर्यविषयं परं ब्रह्म प्रोक्तम्। अनेनैवाश्रयशब्दार्थोऽपि दर्शितः। विज्ञानसंयुतमपरोक्षज्ञानपर्यन्तं ज्ञानं तदुपाख्यानं तत् ज्ञानमुपाख्यायते प्रकाश्यते एतत् ज्ञानसाधनं च प्रोक्तम्। इति ज्ञानकाण्डार्थः॥ ४॥ भक्तियोग इति। भक्तियोगश्च साध्यसाधनरूपः समाख्यातः। तदाश्रयं भक्तियोगनिष्पादितं वैराग्यं च समाख्यातम्। इति कर्मकाण्डार्थः। एवं सामान्यतो निरूप्येदानीं द्वादशस्कन्धप्रकरणार्थाननुक्रामति। पारीक्षितमिति। अत्रानुक्रमणिकाऽध्याये तत् प्रसिद्धमपि किंचिदुपाख्यानमुल्लङ्घितं नात्रानिष्टमाशङ्कनीयम्। अनुक्रमणिका हि नोक्तसमस्तार्थव्याख्यात्मिका भवेत्। यत्प्रथमत एव जन्मगुह्याध्यायकथाऽतिप्रसिद्धाऽप्युल्लङ्घिता। पारीक्षितमुपाख्यानं परीक्षिज्जन्मादि तत्प्रस्तावाय नारदाख्यानं चाख्यातम्॥५॥ प्रायेति। पूर्वार्द्धं स्फुटम्। ब्रह्मर्षेः ब्राह्मणोत्तमस्य शुकस्य परीक्षितश्च संवाद आख्यात इति सर्वत्र संबन्धः॥ ६॥ द्वितीयस्कस्कन्धार्थमाह—योगेति। उत्क्रान्तिः अर्चिरादिगतिः अग्रतः सृष्टेः पूर्वं प्राधानिकः प्रधानकार्यं—महदादिविराड्रूपः सर्गः। स्फुटं शेषम्॥ ७॥ तृतीय स्कन्धार्थमाह—विदुरेति। महापुरुषस्य संस्थितिः प्रलये तूष्णीमवस्थानम्॥ ८॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

॥ १–४ ॥ अथ नारायणस्य निखिलवेदान्तवेद्यजगत्कारणपरब्रह्मत्वज्ञानाय भक्तिरालाभो नारायणप्रबन्धमहावाक्यार्थ उक्तः अवान्तरवाक्यार्थं विशेषानाह—पारीक्षितमिति ॥ ५–८ ॥

### श्रीमद्वीरराघवव्याख्या

तदेवं कार्त्स्न्येन शान्तां बुभुत्सामालक्ष्य सुखग्रहणायादितः प्रबन्धार्थान् सङ्ग्रहेणानुक्रमिष्यन् तावदस्य प्रबन्धस्य महावाक्यस्यार्थो नारायण एव वेदान्तवेद्यो जगत्कारणभूतः ब्रह्मशब्दाभिधेय इति प्रवक्तुं स्वगुरुदैवतानमस्कारपूर्वकं प्रतिजानीते—नम इति कृष्णशब्देनात्र भगवान्नारायणो बादरायणो वा विवक्षितः तत्राद्ये धर्माय सिद्धरूपधर्माय कृष्णाय द्वितीये धर्मप्रवर्तकाय कृष्णाय भगवद्भक्तिलक्षणधर्माय चेति वा वेधसे ब्रह्मणे चतुर्मुखाय ब्राह्मणेभ्यो नारदबादरायणश्रीशुकादिभ्यः शाश्वताऽनविच्छिन्नोपदेशपरम्पराप्राप्तान् धर्मानेतत्प्रबन्धप्रतिपाद्यान् भागवतान् धर्मान् वक्ष्यामि सङ्ग्रहेणेति शेषः ॥ १ ॥ महावाक्यार्थमाह—एतदिति। एतत्कथितं परमाद्भुतं पुराणं विष्णोश्चरितं चरित्रत्वप्रतिपादकं तद्विशिनष्टि—यत्प्रत्यहं भवद्भिः पृष्टः यच्च नराणां जीवानां पुरुषोचितं पुरुषत्वे मनुष्यत्वे सति उचितं श्रवणादियोग्यम् ॥ २ ॥ विष्णोश्चरित्रत्वमेवोपपादयति—अत्रेति। अत्र पुराणे श्रवणमात्रेण सर्वाणि पापानि हरतीति तथा हरिराश्रितबन्धहरः इन्द्रियाधीशः भगवान्षाड्गुण्यपरिपूर्णः भक्तपालकः श्रीनारायणः कीर्त्यते ॥ ३ ॥ तमेव विशिनष्टि—यदिति। गुह्यं वेदान्तरहस्यं जगतः प्रभवाप्ययं प्रभवत्यस्मादिति प्रभवम् अप्येत्यस्मिन्नित्यप्ययं तत्र तत्र तत्सृष्टिसंहारकारणमित्यर्थः। अथवा अवान्तरवाक्यार्थानतुक्रमिष्यंस्तावत्प्रथमस्कन्धार्थाननुक्रमते—द्वयेन ज्ञानमिति। अत्रेत्यनुषज्यते साधूपाख्यानं साधूनां भवतामुपाख्यानं प्रश्नात्मकमुपाख्यान विज्ञानसंयुतं ज्ञानं च प्रोक्तं तत्र ज्ञानं प्रकृतिपुरुषविवेचनात्मकं विज्ञानं परमात्मस्वरूपगुणविचारात्मकम् ॥ ४ ॥ तदाश्रयं भक्तियोगाङ्गं वैराग्यं च समाख्यातम् पारीक्षितं परीक्षिज्जन्मादिः तावत्तत्प्रस्तावाय नारदस्याख्यानं च ॥ ५ ॥ राजर्षेः परीक्षितो विप्रशापात्प्रायोपवेशश्च व्याख्यातशब्दस्यानुषक्तस्य यथायोग्यलिङ्गेन विपरिणतस्य प्रथमान्तैः सम्बन्धः अथ द्वितीयस्कन्धार्थाननुक्रामति सार्द्धेन शुकस्येति। ब्रह्मर्षभस्य ब्राह्मणोत्तमस्य शुकस्य परीक्षिता सह संवाद इति कृत्स्नस्कन्धार्थः ॥ ६ ॥ तदवान्तरार्थानाह—योगधारणयेति। उत्क्रान्तिरर्चिरादिना गतिः नारदाजयोर्नारदचतुर्मुखयोः सम्वादः तत्राप्यवताराणामनुगीतमनुवर्णनम् अनुचरितम् इति पाठे अवतारास्तदनुचरितञ्च अग्रतः व्यष्टिसृष्टेः पूर्वं प्राधानिकः प्राकृतः सर्गः महदादितत्त्व—सर्गः ॥ ७ ॥ अथ तार्तीयार्थाननुक्रामति—षड्भिः। विदुरोद्धवसंवाद इत्यादि तृतीयतुरीयस्कन्धद्वयस्वरूपप्रदर्शनं पुराणात्मिका या संहिता तस्याः प्रश्नः तदर्थप्रश्नः महापुरुषस्य भगवतः संस्थितिः सम्यक् प्रलयेऽवस्थानम् ॥ ८ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

उपसंहारमुखेनानुसन्धातुं द्वादशस्कन्धात्मकं भागवतार्थं संक्षिप्य कथयत्यस्मिन्नध्याये—एतद्व इत्यादिना। एतद्विष्णाश्चरितं तद्वक्तव्यत्वे हेतुमाह—भवद्भिरिति। प्रश्नेति विस्मितं सूचयति—नराणामिति। नराणां मध्ये सतां पुरुषाणां मध्ये श्रोतुमुचितं अनेनाधिकारसामर्थ्यं सूचितम् ॥ १–२ ॥ श्रोतव्यार्थे मुख्यहेतुमाह—अत्रेति। अत्र श्रीभागवते कस्मात् मुख्यत्वमत्राह—सर्वेति। वृत्रादिसर्वपापहन्तृत्वमिन्द्रस्याप्यस्तीत्यत उक्तं नारायण इति नायं साङ्केतिकनारायण इत्याह—हृषीकेश इति हृषीकाणामीशो जीवोऽपि स्यादत आह–भगवानिति ऐश्वर्यादिगुणसमुद्रो हि भगवान् एवंविधो नान्य इत्याह, सात्वतां पतिरिति ॥ ३ ॥ सगुणमेवोक्तं निर्गुणमत्तं नेत्याह—यत्तदिति। जगतः प्रभवाप्ययकृद्यत्परं गुह्यम् ब्रह्म तत्प्रोक्तं तद्विषयज्ञानं सताम् उपाख्यानम् येन तत् ॥ ४ ॥ सा भक्तिराश्रयो यस्य तत्तदाश्रयम् अत्रेत्येतत्प्रतिवाक्यमनुसन्धातव्यम् ॥५–६॥ योगधारणया अखण्डस्मरणलक्षणया नारदाजयोर्नारदब्रह्मणोः अवताराणामनुगीतं कथनं प्राधानिकः प्रकृतिसर्गः सिसृक्षुत्वविशेषः ॥ ७–८ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कृष्णाय तदाख्ययातिप्रसिद्धाय स्वयं भगवते वेधसे अवतारादिसर्वविधात्रे तत्र स्वदैन्येन विनयः ब्राह्मणेभ्यो नमस्कृत्येति सनातनान् "कालेन नष्टा प्रलये वाणीयम्" इत्यादिप्रमाणेन प्रसिद्धान् धर्मान् भागवतान् वक्ष्य इति तत्तत्प्रसङ्गानुक्रमेण तानेव सूचयिष्यामि "पतितःस्खलितः" इत्यादिना च साक्षाद्वक्ष्यामीत्यर्थः ॥ १ ॥ तत्रैव भगवच्चरितश्रवणमेव मुख्यमित्यभिप्रायेण तेनैव महाप्रसङ्गमुपसंहरन्ताननुक्रमितुमुपक्रमते—एतदिति। नराणां मध्ये ये पुरुषास्तेषामेवोचितं नतु ये तेषां मध्ये पशवस्तेषामित्यर्थ इति तद्बहिर्मुखेभ्यो गालिप्रदानं यथोक्तम् "श्वविट्वराहोष्ट्रखरैः" इत्यादि यद्वा नराणां जीवानां पुरुषे श्रीभगवति यदुचितम् ॥ २ ॥ अत्र श्रीभागवते हरिर्भगवदाद्याख्ययानन्ताविर्भावः परमेश्वरस्तावन्मुख्यत्वेन कीर्त्यते तत्रापि गुणरूपलीलाभिः साक्षादेव कीर्त्यते

तस्य च प्राधान्येन भेदद्वयं दर्शितमित्याह—नारायणः सर्वजीवाश्रयः हृषीकेशस्तदीय सर्वेन्द्रियप्रवर्त्तकश्च परमात्मेत्यर्थः। इत्येको भेदः। द्वितीयमाह—भगवानिति। स च सात्वतां पतिः स्वयं भगवान् श्रीयादवेन्द्ररूपत्वेन कीर्त्यत इत्यर्थः॥ ३॥ अत्र ब्रह्मेति सार्द्धकम्। अत्र भगवत्तत्त्वकीर्त्तन एव तदीयनिर्विशेषप्रकाशरूपम् यद् ब्रह्म यदेव जगज्जन्मादिना सामान्यतो लक्षितं तदपि प्रोक्तम्॥४॥ तदर्थमेव ज्ञानविज्ञानभक्तियोगाः यथोत्तरोत्कर्षसोपानवत् क्रमेण समाख्यातास्तदाश्रयं तदुपयोगिवैराग्यं चेति पद्यद्वयेन वेदतात्पर्यरूपो ब्रह्मकाण्डार्थो दर्शितः तदेवं सार्वत्रिकं प्रतिपाद्यमुक्त्वा क्रमोक्तमाह—पारीक्षितमिति॥ ५-२६॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

प्रथमादित आरभ्योपाख्यानविततेः पुनः। अनुक्रमः प्रसिद्धायाः द्वादशे क्रियते स्फुटम्॥

महते भक्तिलक्षणाय कृष्णाय तत्प्राप्त्याय वेधसे सर्वकारणाय ब्राह्मणेभ्यः व्यासादिभ्यस्तत्प्रकाशकेभ्यः द्वितीयार्थे चतुर्थी धर्मान् भगवच्चरित्राणि श्रवणकीर्तनादिविषयत्वे सति भगवच्चरितान्येव परमधर्मा भवन्तीति भावः। सनातनान् नित्यान् भगवतो भक्तियोगस्य च तच्चरितानां च निर्गुणत्वादिति भावः॥ १॥ नराणां मध्ये ये पुरुषास्तेषामुचितं नतु नराणां मध्ये ये पशवस्तेषामिति यदुक्तम् 'श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः' इति॥ २॥ यः सर्वपापहर्तृत्वेन हरिशब्देनोच्यते यश्च नारस्य जीवसमूहस्य आश्रयत्वेन नारायणशब्देनाप्युच्यते यश्च सर्वेन्द्रियाणां प्रवर्त्तकत्वेन हृषीकेशशब्देनोच्यते स एव भगवानत्र द्वादशस्वपि स्कन्धेषु कीर्त्यते स हि क इत्यत आह—सात्वतामुद्धवादीनां पतिः॥ ३॥ तदीयनिर्विशेषप्रकाशरूपं यद्ब्रह्म तदपि प्रोक्तं वागादीन्द्रिय ग्राह्यत्वाभावाद्ब्रह्म तर्हि कथं प्रोक्तं तत्राह—जगतः प्रभवः उत्पत्तिरप्ययो लयश्च यतस्तदित्येतत्प्रकारेणैव प्रोक्तं नतु साक्षात् प्रोक्तमिति भावः। तत्प्राप्तिसाधनं ज्ञानं च तदुपाख्यायते प्रकाश्यते येन तज्ज्ञानसाधनं च विज्ञानमपरोक्षानुभवस्तत् सहितं च॥ ४॥ भक्तियोगः साधनरूपः साध्यरूपश्च सम्यगुपक्रमोपसंहाराभ्यामेवाख्यातः तदाश्रयं तदुत्थम् अथ प्रथमस्कन्धत एव प्राकरणिकानर्थाननुक्रामति—पारीक्षितमिति। अत्रानुक्रमणिकाध्याये यत्प्रसिद्धमपि किञ्चित् किञ्चिदुपाख्यानमुल्लङ्घितं नात्रानिष्टमाशङ्कनीयमनुक्रमणिका हि नोक्तसमस्तार्थव्यापिनी भवेत् यत्प्रथमत एव जन्म गुह्याध्यायकथा अतिप्रसिद्धाप्युल्लङ्घिता एवं द्रोणिदण्डभीष्मनिर्याणादिकथा चित्रकेतुत्रिपुरवधादिकथा अम्बरीषादिकथा अघासुरवधब्रह्ममोहनादिकथा बहुश एवोल्लङ्घिता क्वचित् व्युत्क्रमेणाप्युक्ता इति॥ ५—७॥ महापुरुषे पद्मनामे संस्थितिः प्रलये ब्रह्माणस्तदुदरे शयनम्॥ ८—९॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

द्वादशेऽध्याये श्रीमद्भागवतार्थं श्रीकृष्णं तत्प्रापकान्धर्मानन्यानवान्तरार्थांश्च सङ्क्षेपतो वर्णयिष्यन् धर्मादीन् प्रणमति, नम इति। महते श्रीकृष्णप्रापकाय धर्माय नमः वेधसे सर्वकारणाय धर्मफलभूताय कृष्णाय नमः धर्मप्रवर्तकेभ्यः ब्राह्मणेभ्यः श्रीसनकनारदव्यासशुकादिभ्यो नमस्कृत्य सनातनान् गुरुपरम्पराप्राप्तान् धर्मान् कर्मज्ञानभक्त्यादीन् वक्ष्ये श्रीमद्भागवतोक्तार्थसङ्ग्रहेणेति भावः॥ १॥ यद्यदर्थं भवद्भिरहं कस्मिन् युगे प्रवृत्तेयमित्यादिना पृष्टः तदेतदद्भुतं पुरुषोचितं पुरुषाणामुचितं श्रोतुं योग्यं विष्णोश्चरितं प्रतिपाद्यप्रतिपादकयोरभेदविवक्षया श्रीमद्भागवतं महापुराणं वो युष्माकं तथा नराणामन्येषां च हिताय कथितम्॥ २॥ अत्र श्रीमद्भागवते हरिनारायणादिपदाभिधेयः साक्षाद्भगवान् श्रीकृष्णः सम्यक्कीर्तितः॥ ३॥ धर्मानाह—अत्रेतिसार्द्धेन। अत्र श्रीमद्भागवते गुह्यं विज्ञानसंयुतं ज्ञानं च प्रोक्तम् कथम्भूतं ब्रह्मपरं परब्रह्मस्वरूपरूपगुणविभूत्यादिविषयम् कथम्भूतं जगतः संसारिणः प्रकृष्टस्य भवस्य प्रकाश्यते येन तज्ज्ञानसाधनं कर्म च प्रोक्तम्॥ ४॥ भक्तियोगः सम्यगाख्यातः तदाश्रयं भक्तियोगोपकारकं वैराग्यं चाख्यातम् अथ प्रथमस्कन्धतः श्रीमद्भागवतोक्तान् बहूनर्थांश्चाह—पारीक्षितमुपाख्यानमित्यादिना। अत्र केषाञ्चिदर्थानामनुक्तिः केषाञ्चित् व्युत्क्रमोक्ति तत्तत्स्कन्धे प्रसिद्धत्वात्॥ ५-६-७-८॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

द्वादशे तु पुराणोक्तसर्वार्थानुक्रमः कृतः। प्रथमस्कन्धमारभ्य प्राधान्येन समासतः॥ १॥

तदेवमस्मिन् पुराणोक्तानर्थान्सङ्क्षेपतो वर्णयिष्यन्नादौ धर्मादीन् प्रणमति—नम इति। महते भगवद्भक्तिलक्षणाय धर्माय नमः। वेधसे जगद्विधात्रे कृष्णाय नमः। ब्राह्मणेभ्यो ब्राह्मणान् नमस्कृत्य सनातनान्धर्मान् वक्ष्ये उपलक्षणमिदं सर्वेषां पुराणार्थानाम्॥ १॥ एवं प्रतिज्ञाय तद्वर्णयति—हे विप्राः यत् प्रत्यहं भवद्भिः पृष्टस्तत् नराणां जीवानां पुरुषत्वे उचितं श्रवणादियोग्यमद्भुतं मनोहरमेतद्विष्णोश्चरितात्मकं पुराणं वो युष्मान्प्रति मया कथितमित्यन्वयः॥ २॥ कथितमेव प्रपञ्चयति—अत्रेति। अत्र श्रीभागवते सर्वेषां श्रवणकीर्त्तनादिपराणां पापानि हरतीति तथाभूतो हरिः साक्षात् सम्यक् कीर्त्तितः इत्यनेनोपासनाकाण्डार्थो दर्शितः। सर्वपापहरत्वे हेतुं सूचयन् विशिनष्टि—नारायणः सर्वकारणभूतः। हृषीकेशः सर्वेन्द्रियनियन्ता। भगवान

ऐश्वर्यादिषड्गुणपूर्णः । सात्वतां पतिः भक्तानां पालकः ॥३॥ ज्ञानकाण्डार्थमाह—अत्रेति । प्रभवत्यस्मादिति प्रभवं अप्येत्यस्मिन्निल्यप्ययं तच्च तच्च प्रभवाप्ययं गुह्यं वेदतात्पर्यविषयं परं ब्रह्म प्रोक्तम् । अनेनैवाश्रयशब्दार्थोऽपि दर्शितः । विज्ञानसंयुतमपरोक्षज्ञानपर्यन्तं ज्ञानं तदुपाख्यानं तत् ज्ञानमुपाख्यायते प्रकाश्यते येन तत् ज्ञानसाधनं च प्रोक्तम् ॥ ४ ॥ कर्मकाण्डार्थमाह—भक्तियोग इति । निष्कामकर्मात्मकसाधनसहितो भक्तियोगः समाख्यातः । तदाश्रयं भक्तियोगनिष्पादितं वैराग्यं च । एवं सामान्यतो निरूप्येदानीं द्वादशस्कन्धप्रकरणार्थानुक्रामति—पारीक्षितमुपाख्यानं परीक्षिज्जन्मादि । तत्प्रस्तावाय नारदाख्यानं चाख्यातम् ॥ ५ ॥ ब्रह्मर्षेर्ब्राह्मणोत्तमस्य परीक्षितश्च संवाद आख्यात इति सर्वत्र सम्बन्धः इति प्रथमस्कन्धार्थो दर्शितः ॥ ६ ॥ उत्क्रान्तिः अर्चिरादिगतिः । अग्रतः सृष्टेः पूर्वं प्राधानिकः प्रधानकार्यमहदादिविराड्रूपः सर्गः ॥ ७ ॥ इति द्वितीयस्कन्धार्थो दर्शितः । महापुरुषस्य संस्थितिः । प्रलये तूष्णीमवस्थानम् ॥ ८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

पुराणप्रोक्तसर्वार्थानुक्रमो द्वादशे कृतः । स्कन्धं प्रथमारभ्य प्राधान्याच्च समासतः ॥ १ ॥

तदेवं कार्त्स्न्येनैतच्छ्रोतुं बुभुत्सामालक्ष्य सुखग्रहणायादितः प्रबन्धार्थान् संग्रहेणानुक्रमिष्यमाणस्तान् स्वगुरुदेवतानमस्कारपूर्वकं प्रतिजानीते । नम इति । महते हरिभक्तिलक्षणाय धर्माय सिद्धान्तधर्मरूपाय, वेधसे सकलजगत्स्रष्ट्रे कृष्णाय नमः । कृष्णशब्देनात्र भगवान्नारायण एव विवक्षितः । ब्राह्मणेभ्यश्च नमस्कृत्य नारदबादरायणशुकादीन्नत्वेत्यर्थः । सनातनान् शाश्वतान्, अविच्छिन्नोपदेशपरंपराप्राप्तान् इति यावत् । धर्मानेतत्प्रबन्धप्रतिपाद्यान् भागवतान् धर्मानित्यर्थः । वक्ष्ये वक्ष्यामि । संग्रहेणेति शेषः ॥१॥ महावाक्यार्थमाह । एतदिति । सम्प्रति अहं भवद्भिः पृष्टः, यच्च नराणां जीवानां पुरुषोचितं मनुष्यत्वेऽप्युचितं, श्रवणादियोग्यं विष्णोः चरितं विष्णुचरितप्रकाशकं, अत एव अद्भुतं परमाश्चर्यजनकं एतत्पुराणं, हे विप्राः, वो युष्मभ्यं कथितम् । विष्णोश्चरितमेवोपपादयति । अत्रेति । अत्र पुराणे सर्वाणि पापानि हरति श्रवणमात्रेण निवर्त्तयतीति तथाभूतः, साक्षात् प्रत्यक्षः हरिराश्रितबन्धहरः, हृषीकेश इन्द्रियाधीशः भगवान् षाड्गुण्यपूर्णः, सात्वतां पतिः स्वभक्तिमतां पालकः, नारायणः संकीर्त्तितः अथावान्तरवाक्यार्थानुक्रमिष्यमाणस्तावत् प्रथमस्कन्धार्थानुक्रमते द्वयेन । ज्ञानमिति । अत्रेत्यनुषज्यते । साधूपाख्यानं साधूनां भगवतामुपाख्यानं प्रश्नविधानात्मकमुपाख्यानं विज्ञानसंयुतं ज्ञानं च प्रोक्तम् । तत्र ज्ञानं प्रकृतिपुरुषविवेचनात्मकं, विज्ञानं परमात्मस्वरूपगुणविचारात्मकं, भक्तियोगः समाख्यातः, तदाश्रयं भक्तियोगाङ्गभूतमित्यर्थः । वैराग्यं च समाख्यातम् ॥ ४ ॥ पारीक्षितमिति । पारीक्षितं उपाख्यानं परीक्षितजन्मादीत्यर्थः । तावत्तत्प्रस्तावायेति शेषः । नारदाख्यानं च समाख्यातं एव । राजर्षेः परीक्षितः विप्रशापात् प्रायोपवेशश्च । अनुक्तस्यापि समाख्यातशब्दस्य यथायोग्यं लिङ्गेन विपरिणतस्य प्रथमान्तैः संबन्धः कार्यः ॥ ५ ॥ एवं प्रथमस्कन्धार्थं द्वाभ्यामुक्त्वाऽथ द्वितीयस्कन्धार्थानतुक्रमते सार्द्धेन । शुकस्येति । ब्रह्मर्षेर्ब्राह्मणोत्तमस्य शुकस्य परीक्षितश्च संवादश्च संवादोऽपीत्यर्थः । संकीर्त्तितः । एव । इति कृत्स्नस्कन्धार्थः । अथ तदवान्तरार्थानाह । योगधारणया उत्क्रान्तिरर्चिरादिना मार्गेण गतिः, नारदाजयोः देवर्षिब्रह्मणोः संवादः, तत्रापि अवतारानुगीतं अवतारानुवर्णनं च, अवतारानुचरितमिति पाठे, अवतारास्तदनुचरितं चेत्यर्थः । अग्रतः व्यष्टिसृष्टेः पूर्ववर्त्ती, प्राधानिकः प्राकृतः सर्गः, महदादितत्त्वसर्गश्च कथितः ॥ ६ ॥ एवं सार्द्धेन द्वितीयस्कन्धार्थमुक्त्वाऽथ तृतीयस्कन्धार्थानतुक्रमते षड्भिः । विदुरेति । तत्रादौ विदुरोद्धवसंवादः, अनेन तृतीयतुरीयस्कन्धस्वरूपप्रदर्शनं, ततः क्षत्तृमैत्रेययोः संवाद इति शेषः । ततः पुराणसंहिताप्रश्नः पुराणात्मिका या संहिता तस्याः प्रश्नः, तदर्थकः प्रश्नः, इत्यर्थः । महापुरुषसंस्थितिः महापुरुषस्य भगवतः संस्थितिः प्रलये सम्यगवस्थानम् ॥ ७ ॥ तत इति । ततः प्राकृतिकः प्रकृतिगुणक्षोभात्मकः सर्गः, ततः ये वैकृतिकाः सप्त सर्गाः ते च महदहंकारभूतपञ्चकात्मका ये सप्तसर्गास्ते च समाख्याता इत्यर्थः । ततो ब्रह्माण्डसंभूतिः यतो यत्र ब्रह्माण्डे वैराजः पुरुषः जातः ॥ ८ ॥

### हिन्दी अनुवाद

## श्रीमद्भागवतकी संक्षिप्त विषय-सूची

**श्रीसूतजी कहते हैं**—भगवद्भक्तिरूप महान् धर्म को नमस्कार है । विश्वविधाता भगवान् श्रीकृष्ण को नमस्कार है । अब मैं ब्राह्मणों को नमस्कार कर के श्रीमद्भागवतोक्त सनातनधर्मों का संक्षिप्त विवरण सुनाता हूँ ॥ १ ॥ शौनकादि ऋषियो ! आपलोगों ने मुझसे जो प्रश्न किया था, उसके अनुसार मैंने भगवान् विष्णु का यह अद्भुत चरित्र सुनाया । यह सभी मनुष्यों के श्रवण करने योग्य है ॥ २ ॥ इस श्रीमद्भागवत पुराण में सर्वपापापहारी स्वयं भगवान् श्रीहरि का ही संकीर्तन हुआ है । वे ही सबके हृदय में विराजमान, सबकी इन्द्रियों के स्वामी और प्रेमी भक्तों के जीवनधन हैं ॥ ३ ॥ इस श्रीमद्भागवतपुराण में

परम रहस्यमय—अत्यन्त गोपनीय ब्रह्मतत्त्व का वर्णन हुआ है। उस ब्रह्म में ही इस जगत् की उत्पत्ति, स्थिति और प्रलय की प्रतीति होती है। इस पुराण में उसी परमतत्त्व का अनुभवात्मक ज्ञान और उसकी प्राप्ति के साधनों का स्पष्ट निर्देश है॥ ४॥ शौनक जी! इस महापुराण के प्रथम स्कन्ध में भक्तियोग का भली-भाँति निरूपण हुआ है और साथ ही भक्तियोग से उत्पन्न एवं उसको स्थिर रखनेवाले वैराग्य का भी वर्णन किया गया है। परीक्षित् की कथा और व्यास-नारद संवाद के प्रसङ्ग से नारद चरित्र भी कहा है॥ ५॥ राजर्षि परीक्षित् ब्राह्मण का शाप हो जानेपर किस प्रकार गङ्गातट पर अनशन-व्रत लेकर बैठ गये और ऋषिप्रवर श्रीशुकदेवजी के साथ किस प्रकार उनका संवाद प्रारम्भ हुआ, यह कथा भी प्रथम स्कन्ध में ही है॥ ६॥ योगधारणा के द्वारा शरीरत्याग की विधि, ब्रह्मा और नारद का संवाद, अवतारों की संक्षिप्त चर्चा तथा महत्तत्त्व आदि के क्रम से प्राकृतिक सृष्टि की उत्पत्ति आदि विषयों का वर्णन द्वितीय स्कन्ध में हुआ है॥ ७॥ तीसरे स्कन्ध में पहले-पहल विदुरजी और उद्धवजी के और तदनन्तर विदुर तथा मैत्रेयजी के समागम और संवाद का प्रसङ्ग है। इसके पश्चात् पुराणसंहिता के विषय में प्रश्न है और फिर प्रलयकाल में परमात्मा किस प्रकार स्थित रहते हैं, इसका निरूपण है॥ ८॥

ततः प्राकृतिकः सर्गः सप्त वैकृतिकाश्च ये। ततो ब्रह्माण्डसम्भूतिर्वैराजः पुरुषो यतः॥ ९॥
कालस्य स्थूलसूक्ष्मस्य गतिः पद्मसमुद्भवः। भुव [1]उद्धरणंचाब्धेर्हिरण्याक्षवधो यथा॥ १०॥
ऊर्ध्वतिर्यगवाक्सर्गो रुद्रसर्गस्तथैव च। अर्धनारीनरस्याथ यतः स्वायम्भुवो मनुः॥ ११॥
शतरूपा च या स्त्रीणामाद्या प्रकृतिरुत्तमा। सन्तानो[2] धर्मपत्नीनां कर्दमस्य प्रजापतेः॥ १२॥
अवतारो भगवतः कपिलस्य महात्मनः। देवहूत्याश्च संवादः कपिलेन च धीमता॥ १३॥
नवब्रह्मसमुत्पत्तिर्दक्षयज्ञविनाशनम्। ध्रुवस्य चरितं पश्चात्पृथोः प्राचीनबर्हिषः॥ १४॥
नारदस्य च संवादस्ततः प्रैयव्रतं द्विजाः। नाभेस्ततोऽनुचरितमृषभस्य भरतस्य च॥ १५॥
द्वीपवर्षसमुद्राणां गिरिनद्युपवर्णनम्। ज्योतिश्चक्रस्य संस्थानं पातालनरकस्थितिः॥ १६॥

### कृष्णप्रिया व्याख्या

अन्वयः— ततः प्राकृतिकः सर्गः वैकृतिकाः च ये सप्त ततः ब्रह्माण्डसम्भूतिः यतः वैराजः पुरुषः॥ ९॥ स्थूलसूक्ष्मस्य कालस्य गतिः पद्मसमुद्भवः भुवः उद्धरणे यथा अम्भोधेः हिरण्याक्षवधः॥ १०॥ ऊर्ध्वतिर्यगवाक्सर्गः तथा एव च रुद्रसर्गः अथ अर्धनारीनरस्य यतः स्वायम्भुवः मनुः॥ ११॥ स्त्रीणाम् आद्या उत्तमा या शतरूपा प्रकृतिः प्रजापतेः कर्दमस्य धर्मपत्नीनां सन्तानः॥ १२॥ भगवतः महात्मनः कपिलस्य अवतारः धीमता कपिलेन देवहूत्याः च सम्वादः॥ १३॥ नवब्रह्मसमुत्पत्तिः दक्षयज्ञविनाशनं ध्रुवस्य चरितं पश्चात् प्राचीनबर्हिषः पृथोः च ( चरितम् )॥ १४॥ नारदस्य संवादः ततः द्विजाः प्रैयव्रतं (चरितम्) नाभेः ततः ऋषभस्य ( ततः ) भरतस्य च अनुचरितम्॥ १५॥ ( ततः ) द्वीपवर्षसमुद्राणां गिरिनद्युपवर्णनं ज्योतिश्चक्रस्य संस्थानं ( ततः ) पातालनरकास्थतिः॥ १६॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

प्राकृतिकः प्रकृतिभवो गुणक्षोभरूपः। वैकृतिका महदादयश्चकाराद्विकाराश्च ये तेषां सर्गः॥ ९॥ गतिः स्वरूपम्। उद्धरणे उद्धारणे॥ १०॥ अर्धाभ्यां नारी च नरश्च तस्य सर्गः॥ ११॥ संतानो धर्मपत्नीनामिति नवब्रह्मसमुत्पत्तिरित्यस्यानंतरं द्रष्टव्यम्॥ १२–१३॥ इति तृतीयार्थः। चतुर्थस्कन्धार्थमाह। नवब्रह्मणां मरीच्यादीनां समुत्पत्तिः संतानः॥१४॥ पंचमस्कंधार्थमाह ततः प्रैयव्रतं प्रियव्रतस्य चरितम्॥ १५॥ द्वीपाद्युपवर्णनं प्रथमं संक्षेपतस्ततो द्वीपादीनां ये गिरयो नद्यश्च तेषामुपवर्णनम्। पातालानां नरकाणां च संस्थितिः। अनेनैव नरकनिवर्तकमजामिलोपाख्यानं गृहीतं ततः पराचीनम्॥ १६॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

यतो यत्र ब्रह्मांडे वैराजो विराडंतर्यामी पुरुषोऽस्तीति॥ ९॥ उद्धारणे निमित्ते यथा हिरण्याक्षवधः कृतस्तथोक्त इत्यर्थः॥ १०॥ ऊर्ध्वसर्गो देवसर्गः, तिर्यक्सर्गः पश्वादिसर्गः, अवाक्सर्गोऽधःसर्गोऽसुरादिलक्षणः। यद्वा—ऊर्ध्वसर्गं ऊर्ध्वसंचार-

१. णेऽम्भोधे। २. नं।

सर्गः वृक्षादिसर्गः। तिर्यक्सर्गोऽष्टाविंशतिधा। अर्वाक्सर्गः नृसर्गः "अर्वाक्स्रोतास्तु नवमः क्षत्तरेकविधो नृणाम्" इत्युक्तेः। नारीनरयोः समाहारद्वंद्वे तस्य तृतीयाद्विवचनांतार्द्धशब्देन पुनस्समासः। तथाहि–अर्द्धाभ्यां नारीनरं यस्य तस्य ब्रह्मणः सकाशादथ सर्गोऽभूत्। यतो यत्र सर्गे स्वायंभुवो मनुः शतरूपा चाभूत्॥ ११॥ या स्त्रीणामाद्या प्रकृतिर्मूलकारणं, तत एव स्त्रीसर्गप्रवृत्तेः। धर्मपत्नीनां कीर्त्यादीनाम्, कर्दमस्य च यथा संतानस्तथा वर्णितः॥१२–१४॥ हे द्विज इति–द्विजत्वात्कथितमपि पुनः स्मारयामीति भावः॥ १५॥ अनेन नरकस्थितिवर्णनप्रसंगेन॥ १६॥

## अन्वितार्थप्रकाशिका

तत इति। प्राकृतिकः प्रकृतभवो गुणक्षोभरूपः वैकृतिकाः सप्तमहदहङ्कारभूतपञ्चकात्मकाः चकाराद्विकाराश्च ये॥ ९॥ कालस्येति। गतिः स्वरूपम्। अम्भोधेः सकाशात् भुव उद्धरणे तन्निमित्तम्॥ १०॥ ऊर्ध्वेति सार्द्धम्। तिर्यगर्वाक्सर्गः देवतिर्यङ्मनुष्यादिसर्गः अर्द्धाभ्यां नारी च नरश्च तस्य यतो याभ्यां स्वायंभुवो मनुः या च नारीणामाद्या उत्तमा प्रकृतिः शतरूपा च जाता॥ ११॥ सन्तान इति। सन्तानो धर्मपत्नीनामिति नव ब्रह्मसमुत्पत्तिरित्यनन्तरं द्रष्टव्यम्॥ १२–१३॥ चतुर्थस्कन्धार्थमाह–नवेति सार्द्धम्। नवब्रह्मभ्यः मरीच्यादिभ्यः सन्तानसमुत्पत्तिः प्राचीनबर्हिषो नारदस्य च संवादः। पञ्चमस्कन्धार्थमाह। तत इति। प्रैयव्रतं प्रियव्रतस्य चरितम्॥ १४–१५॥ तत इति। द्वीपाद्युपवर्णनं पातालनरकादीनां च स्थितिः। अनेनैव नरकनीवर्त्तकमजामिलोपाख्यानं गृहीतम्॥ १६॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

अत्र ब्रह्मा वैराजः पुरुषो देवादिशरीरम्॥ ९–४१॥

## श्रीमद्वीरराघवव्याख्या

प्राकृतिकः प्रकृतिगुणक्षोभात्मकः ततो वैकृतिकाः सप्त महदहङ्कारभूतपञ्चकात्मका व्याख्याता इत्यर्थः। ततस्तेभ्यो वैकृतिभ्यो ब्रह्माण्डस्योत्पत्तिः तद्विशिनष्टि यतो यत्र ब्रह्माण्डे ब्रह्मा वैराजः पुरुषः चतुर्मुखाज्जात इत्यर्थः। स्थूलसूक्ष्मस्य परमाण्वादिवत्सरान्तसूक्ष्मस्थूलरूपेणावस्थितस्य कालस्य गतिः सर्वेषां सत्वानां व्यष्टिभूतानामुत्पत्तिः अम्भोधेर्भुव उद्धरणा उद्धरणम्॥ ९–१०॥ ऊर्ध्वतिर्यगधस्सर्गः देवतिर्यगधोलोकसर्गः अर्द्धाभ्यां नारी नरश्च तयोः समाहारः तत्तस्य सर्गः तद्विशिनष्टि—यतः यत्र नारीनरे स्वायम्भुवो मनुः॥ ११॥ तस्य या पत्नी शतरूपा स्त्रीणामाद्या प्रकृतिराकृतिरत एवोत्तमा तस्य नारीनरस्य सर्ग इति सम्बन्धः ततः कर्दमस्य धर्मपत्नीनामिति बहुवचनं पूज्याभिप्रायकं धर्मपत्न्या देवहूत्याः सन्तानः कलाऽनसूयादिनवकन्यकारूपसन्तानः तथा कपिलाख्यस्य भगवतोऽवतारः कपिलेन साकं देवहूत्याः संवादश्चोक्त इत्यर्थः॥ १२–१३॥ अथ चतुर्थार्थानुक्रामति—नवब्रह्मसमुत्पत्तिरित्यादिना नारदस्य च संवाद इत्यन्तेन। पञ्चमार्थानुक्रमते प्रैयव्रत इत्यादिना पातालनरकस्थितिरित्यन्तेन। द्विजा इति सम्बोधनं प्रैयव्रतः प्रियव्रतवृत्तान्तः आर्षभस्य भरतस्य चानुचरितमिति सम्बन्धः॥ १४–१५॥ द्वीपादीनामुपवर्णनम्॥ १६॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

प्राकृतिकः प्रकृतिविकृतः ते सप्त महदहङ्कारपञ्चभूतानीति वैकृतिकाः इन्द्रियविषयाः यतो यत्र ब्रह्माण्डे॥ ९॥ पद्मसमुद्भवो नाभेरित्ति शेष अम्भोधेर्भुव उद्धरणा उद्धारः॥ १०॥ ऊर्ध्वतिर्यगधःसर्गः देवतिर्यगसुरसृष्टिः अर्धनारीनरस्य ब्रह्मणः सकाशात्स्वायम्भुवो मनुर्यथोत्पन्नस्तथा॥ ११॥ या स्त्रीणां मध्ये आद्या प्रकृतिः स्त्री सा शतरूपा च यथोत्पन्ना तथा॥ १२–१३॥ नवब्रह्मसमुत्पत्तिः नवप्रजापतीनां मरीच्यादीनां सकाशात्सृष्टिः तेषामुत्पत्तिर्वा॥ १४–१६॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

भुव उद्धरणमम्भोधेः सकाशात् मकारलोपश्छान्दसः॥ १०॥ अर्द्धाभ्यां नारी च नरश्च तस्य॥ ११–१३॥ नवब्रह्मभ्यः मरीच्यादिभ्यः समुत्पत्तिः॥ १४–२०॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

प्राकृतिकः प्रकृतिगुणक्षोभरूपः वैकृतिका महदादयः चकाराद्विकाराश्च ये तेषां सर्गः॥ ९–१३॥ नवभ्यो ब्रह्मभ्यः ब्राह्मणेभ्यो मरीच्यादिभ्यः समुत्पत्तिस्तत्तदपत्यसृष्टिः॥ १४॥ प्रैयव्रतं प्रियव्रतचरितम्॥ १५–२०॥

## गोस्वामिश्रीगिरधरलालकृता बालप्रबोधिनी

प्राकृतिकः प्रकृतिभवो गुणक्षोभरूपः। वैकृतिकाः सप्त महदहङ्कारभूतपञ्चकात्मकाः। चकाराद्विकाराश्च ये॥ ९॥ गतिः स्वरूपं अम्भोधेः सकाशात् भुव उद्धरणे निमित्तम्॥ १०॥ ऊर्ध्वतिर्यगर्वाक्सर्गः देवतिर्यङ्मनुष्यादिसर्गः। अर्द्धाभ्यां नारी च

नरश्च। तदाह—यतो याभ्याम्॥ ११॥ सन्तानो धर्मपत्नीनामिति नव ब्रह्मसमुत्पत्तिरित्यस्यानन्तरं द्रष्टव्यम्॥ १२–१३॥ चतुर्थस्कन्धार्थमाह—नव ब्रह्मणां मरीच्यादीनां समुत्पत्तिः सन्तानः॥ १४॥ पञ्चमस्कन्धार्थमाह—ततः प्रैयव्रतं प्रियव्रतस्य चरितम्॥ १५॥ द्वीपाद्युपवर्णनम्। पातालनरकादीनां च स्थितिः। अनेनैव नरकनिवर्त्तकमजामिलोपाख्यानं गृहीतम्॥ १६॥

**भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी**

कालस्येति। स्थूलसूक्ष्मस्य परमाण्वादिवत्सरान्तसूक्ष्मस्थूलरूपेणावस्थितस्येत्यर्थः। कालस्य गतिः, पद्मसमुद्भव इति पाठे, सत्त्वानां सर्वेषां व्यष्टिभूतानां समुद्भव उत्पत्तिः अम्भोधेः प्रलयाब्धेः भुवः उद्धरणे उद्धारणविधाने, तथा हिरण्याक्षस्य वधः कृतः स संप्रकीर्त्तितः॥ ९॥ ऊर्ध्वेति। ऊर्ध्वतिर्यगधः सर्गः देवतिर्यगधोलोकसर्गः, ऊर्ध्वतिर्यगवाक्सर्ग इत्यपि पाठस्तत्रा्प्यर्थस्तु स एव। तथैव रुद्रसर्गश्चापि, अथ अर्द्धाभ्यां नारी च नरश्च तयोः समाहारस्तस्य सर्गः, यतोऽर्द्धनारीनरसर्गात् स्वायंभुवः मनुः॥१०॥ शतरूपेति। तस्य शतरूपा या स्त्री पत्नी सा च स्त्रीणां आद्या प्रकृतिराकृतिः, अत एव उत्तमा। तस्य नारीनरस्य सर्ग इति संबन्धः। ततः धर्मपत्नीनां, बहुवचनं पूज्याभिप्रायकम्। धर्मपत्न्या देवहूत्या इत्यर्थः। प्रजापतेः कर्दमस्य च संतानः कपिलानसूयादि-रूपः॥ ११॥ अवतार इति। महात्मनः कपिलस्य भगवतः अवतारश्च, धीमता कपिलेन देवहूत्याः संवादश्च संप्रकीर्त्तितः॥ १२॥ एवं तृतीयस्कन्धार्थमुक्त्वाऽथ चतुर्थार्थाननुक्रमते। नवेति। नवब्रह्मणां मरीच्यादिनवप्रजापतीनां सकाशात्, समुत्पत्तिः सृष्टिः, दक्षयज्ञविनाशनं ध्रुवस्य चरितं, पश्चात् पृथोर्नृपस्य प्राचीनबर्हिषश्च चरितं प्रोक्तम्॥ १३॥ नारदस्येति। नारदस्य च संवादः, प्राचीनबर्हिषा सहेति शेषः। एवं चतुर्थस्कन्धार्थमुक्त्वाऽथ पञ्चमस्कन्धार्थानुक्रमते। हे द्विजाः, ततः प्रैयव्रतं प्रियव्रतवृत्तान्तं, ततः नाभेः अनुचरितं, ऋषभस्य भरतस्य च अनुचरितं समाख्यातम्॥ १४॥ तत इति। ततः द्वीपाश्च समुद्राश्चाद्रयश्च वर्षाणि च नद्यश्च तासामुपवर्णनं, ज्योतिश्चक्रस्य संस्थानं, पातालनरकस्थितिः पातालनरकादीनां च स्थितिः॥ १५॥ एवं पञ्चमस्कन्धार्थ-मुक्त्वाऽथ षष्ठस्कन्धार्थाननुक्रमते सार्द्धेन। दक्षजन्मेति। प्रचेतोभ्यः, दक्षजन्म तत्पुत्रीणां दक्षसुतानां संततिश्च, यतस्तत्संततेः देवाश्च असुराश्च नराश्च तिर्यञ्चश्च मृगाश्च खगाश्च ते आदयो येषां ते बभूवुः। ते समाख्याताः॥ १६॥

**हिन्दी अनुवाद**

गुणों के क्षोभ से प्राकृतिक सृष्टि और महत्तत्त्व आदि सात प्रकृति-विकृतियों के द्वारा कार्य-सृष्टिका वर्णन है। इसके बाद ब्रह्माण्डकी उत्पत्ति और उसमें विराट् पुरुष की स्थिति का स्वरूप समझाया गया है॥ ९॥ तदनन्तर स्थूल और सूक्ष्म काल का स्वरूप, लोक पद्म की उत्पत्ति प्रलय-समुद्र से पृथ्वी का उद्धार करते समय वराह भगवान् के द्वारा हिरण्याक्ष का वध; देवता, पशु, पक्षी और मनुष्यों की सृष्टि एवं रुद्रों की उत्पत्ति का प्रसङ्ग है। इसके पश्चात् उस अर्द्धनारी-नर के स्वरूप का विवेचन है, जिससे स्वायम्भुव मनु और स्त्रियों की अत्यन्त उत्तम आद्या प्रकृति शतरूपा का जन्म हुआ था। कर्दम प्रजापति का चरित्र, उनसे मुनिपत्नियों का जन्म, महात्मा भगवान् कपिल का अवतार और फिर कपिलदेव तथा उनकी माता देवहूति के संवाद का प्रसङ्ग आता है॥ १०–१३॥ चौथे स्कन्ध में मरीचि आदि नौ प्रजापतियों की उत्पत्ति, दक्षयज्ञ का विध्वंस, राजर्षि ध्रुव एवं पृथु का चरित्र तथा प्राचीनबर्हि और नारदजी के संवाद का वर्णन है। पाँचवें स्कन्ध में प्रियव्रत का उपाख्यान; नाभि, ऋषभ और भरत के चरित्र; द्वीप, वर्ष, समुद्र, पर्वत और नदियों का वर्णन; ज्योतिश्चक्र के विस्तार एवं पाताल तथा नरकों की स्थिति का विरूपण हुआ है॥ १४–१६॥

दक्षजन्म प्रचेतोभ्यस्तत्पुत्रीणां च सन्ततिः। यतो देवासुरनरास्तिर्यङ्नगखगादयः॥ १७॥
त्वाष्ट्रस्य जन्म निधनं पुत्रयोश्च दितेर्द्विजाः। दैत्येश्वरस्य चरितं प्रह्लादस्य महात्मनः॥ १८॥
मन्वन्तरानुचरितं गजेन्द्रस्य विमोक्षणम्। मन्वन्तरावताराश्च विष्णोर्हयशिरादयः॥ १९॥
कौर्मं [१]मात्स्यं नारसिंहं वामनं च जगत्पतेः। क्षीरोदमथनं तद्वदमृतार्थे दिवौकसाम्॥ २०॥
देवासुरमहायुद्धं राजवंशानुकीर्तनम्। इक्ष्वाकुजन्म तद्वंशः सुद्युम्नस्य महात्मनः॥ २१॥
इलोपाख्यानमत्रोक्तं तारोपाख्यानमेव च। सूर्यवंशानुकथनं शशादाद्या [३]नृपा[२]यतः॥ २२॥
सौकन्यं चाथ शर्यातेः ककुत्स्थस्य च धीमतः। खट्वाङ्गस्य च मान्धातुः सौभरेः सगरस्य च॥ २३॥
रामस्य कोसलेन्द्रस्य चरितं किल्बिषापहम्। निमेरङ्गपरित्यागो जनकानां च सम्भवः॥ २४॥

१. कथनं। २. धान्वन्तरं मात्स्यं। ३. नृगादयः।

**कृष्णप्रिया व्याख्या**

अन्वयः—प्रचेतोभ्यः दक्षजन्म तत्पुत्रीणां च सन्ततिः यतः देवासुरनराः तिर्यङ्नगखगादयः ॥ १७ ॥ त्वाष्ट्रस्य जन्म द्विजाः दितेः पुत्रयोः निधनं च दैत्येश्वरस्य महात्मनः प्रह्लादस्य चरितम् ॥ १८ ॥ मन्वन्तरानुकथनं गजेन्द्रस्य विमोक्षणं मन्वन्तरावतारः विष्णोः हयशिरादयः च ॥ १९ ॥ कौर्मं धान्वन्तरं मात्स्यं वामनं तद्वत् दिवौकसां अमृतार्थे जगत्पतेः क्षीरोदमथनम् ॥२०॥ देवासुरमहायुद्धं राजवंशानुकीर्तनम् इक्ष्वाकुजन्म महात्मनः सुद्युम्नस्य तद्वंशः ॥ २१ ॥ अत्र इलोपाख्यानम् उक्तं तारोपाख्यानम् एव च सूर्यवंशानुकथनं शशादाद्याः ( वर्णिताः ) ॥ २२ ॥ अथ धीमतः ककुत्स्थस्य शर्यातेः सौकन्यं खट्वाङ्गस्य मान्धातुः च सौभरेः सगरस्य (आख्यानम्) ॥ २३ ॥ कोसलेन्द्रस्य रामस्य किल्बिषापहं चरितं निमेः अङ्गपरित्यागः जनकानां च सम्भवः ॥२४॥

**श्रीधरस्वामिविरचिता भावार्थदीपिका**

षष्ठार्थमाह। दक्षजन्मेति ॥ १७ ॥ सप्तमार्थमाह पुत्रयोश्चेति ॥ १८ ॥ अष्टमार्थमाह। मन्वंतरानुकथनमिति। क्वचित्कस्यचिदनुक्तिर्व्युत्क्रमोक्तिश्च भक्तिरसाकुलत्वेनेति द्रष्टव्यम् ॥ १९-२० ॥ नवमार्थमाह राजवंशेति ॥ २१-२४ ॥

**श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः**

तत्पुत्रीणां दक्षपुत्रीणाम्। यतो यत्र संतत्यां देवादयो जाताः ॥ १७ ॥ त्वाष्ट्रस्य वृत्रस्य। दितेः पुत्रयोः। संम्बुद्धिस्तु पूर्ववत् ॥ १८ ॥ आदिनाऽजितादिग्रहः। अत्राऽवतारक्रमो न विवक्षितो वर्णितचरितकथने तात्पर्यात्। अत एव स्वामिचरणैरप्युक्तम्—क्वचित्कस्यचिदनुक्तिरित्यादि। भक्तिरसमग्नत्वाच्छ्रीसूतस्य यथाक्रमकथनविस्मृतिरभूदिति भावः ॥ १९ ॥ दिवौकसाममृतार्थेऽमृतनिमित्तं तद्वत्कथितमित्यर्थः ॥ २० ॥ सुद्युम्नस्य वंशश्च कीर्तितः। अत्र तदिति पदं भिन्नं ज्ञेयं षष्ठ्यर्थे, वंश इत्युभयत्रान्वेति। मह उत्सवस्तं करोतीति महकरस्तादृश आत्मा देहो यस्य स महात्मा, तस्मिन्पूर्वं पुत्रीरूपेण जाते मनोर्महो न जातः, पुनर्गुरुकृपया तस्याः पुरुषत्वे सत्यतीवोत्सवोऽभूदित्यत उक्तं —महात्मन इति। अत्र मध्यमपदलोपी समासो ज्ञेयः ॥ २१ ॥ अत्रैव सुद्युम्नप्रकृते। 'सर्वं वाक्यं सावधारणम्' इति न्यायेनैवकारोऽत्र बोध्यः। आदिना यैः कव्यादिभी राज्यं न गृहीतं तेऽपि कथिता इति 'कविः कनीयान्विषयेषु निःस्पृहो विसृज्य राज्यम्' इत्युक्तेः ॥ २२ ॥ सुकन्याया इदं सौकन्यं, चरितमिति शेषः ॥ २३ ॥ कोशलाऽयोध्या देशो वा कोशलः ॥ २४ ॥

**अन्वितार्थप्रकाशिका**

षष्ठस्कन्धार्थमाह—दक्षजन्मेति ॥ १७ ॥ सप्तमस्कन्धार्थमाह-पुत्रयोश्चेति ॥ १८ ॥ अष्टमस्कन्धार्थमाह-मन्वन्तरानुचरितमिति। क्वचित्कस्यचिदनुक्तिर्व्युत्क्रमोक्तिश्च भक्तिरसानुकूलत्वेनेति द्रष्टव्यम् ॥१९-२०॥ नवमस्कंधार्थमाह—राजवंशेति ॥२१-२४॥

**श्रीमद्वीरराघवव्याख्या**

षष्ठार्थाननुक्रामति—सार्द्धेन, दक्षजन्मेति। तत्पुत्रीणां दक्षपुत्रीणां तां विशिनष्टि—यतो याभ्यो दक्षपुत्रीभ्यो देवादयो बभूवुरित्यर्थः ॥ १७ ॥ त्वाष्ट्रस्य वृत्रासुरस्य जन्म निधनं मरणं च। अथ सप्तमार्थाननुक्रामति—[पुत्रयोश्चेति] दैत्येश्वरस्येत्यर्द्धेन। हिरण्यकशिपोः प्रह्लादस्य चरितम् ॥ १८ ॥ अष्टमार्थानाह—मन्वन्तरेत्यादिना देवासुरं महायुद्धमित्यन्तेन। विष्णोः हयग्रीवादयः मन्वन्तरेष्ववताराः ॥ १९ ॥ तथा जगत्पतेः कौर्मादीनि रूपाणि दिवौकसां देवादीनाममृतार्थे क्षीरोदमन्थनम् ॥ २० ॥ नवमार्थाननुक्रमते—राजवंशानुकीर्त्तनमित्यादिना वृद्धिश्च गोकुले इत्यन्तेन। अत्र क्वचित्कस्यचिदनुक्तिः व्युत्क्रमोक्तिश्च प्रसिद्धिकृतादनादरादिति ज्ञेयम् तद्वंशे इक्ष्वाकुवंशे ॥ २१-२२ ॥ सौकन्यं सुकन्याचरितम् ॥ २३-२७ ॥

**श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली**

यतः सन्ततेर्देवासुरनरादयः आसन् ॥ १७-१८ ॥ मन्वन्तरानुचरितं मन्वन्तरराजानुचरितम् ॥ १९-२१ ॥ तारोपाख्यानं ताराया देव्या उपाख्यानम् ॥ २२ ॥ सुकन्यायाश्चरितं ककुत्स्थस्य चरितम् ॥ २३-२४ ॥

**श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी**

सुद्युम्नस्येत्यत्र उपाख्यानमिति शेषः ॥ २१-२७ ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

सुद्युम्नस्योपाख्यानमिति शेषः ॥ २१-२७ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

षष्ठस्कन्धार्थमाह—दक्षजन्मेति ॥ १७ ॥ सप्तमस्कन्धार्थमाह—पुरा ययोश्चेति ॥ १८ ॥ अष्टमस्कन्धार्थमाह—मन्वन्तरानुचरितमिति । क्वचित्कस्यचिदनुक्तिर्व्युत्क्रमोक्तिश्च भक्तिरसानुकूलत्वेनेति द्रष्टव्यम् ॥ १९—२० ॥ नवमस्कन्धार्थमाह—राजवंशेति॥ २१–२४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

त्वाष्ट्रस्येति । त्वाष्ट्रस्य वृत्रासुरस्य जन्म, निधनं मरणं च एवं षष्ठस्कन्धार्थमुक्त्वाऽथ सप्तमस्कन्धार्थाननुक्रमते । हे द्विजाः, दितेः पुत्रयोः जन्म निधनं च ततः दैत्येश्वरस्य महात्मनः प्रह्लादस्य चरितं समाख्यातं एतदग्रवर्त्तिन्याः पञ्चाध्याय्याः अर्थस्य यत्र तत्रोक्तप्रायत्वादनुक्तिः ॥१७॥ एवं सप्तमस्कन्धार्थमुक्त्वाऽथाष्टमस्कन्धार्थाननुक्रमते । मन्वन्तरेति । मन्वन्तरानुचरितं, गजेन्द्रस्य विमोक्षणं, हयशिरादयो हयग्रीवादयः विष्णोः संबन्धिनः मन्वन्तरावताराश्च, समाख्याताः॥१८॥ कौर्ममिति। तथा जगत्पतेः भगवतः, कौर्मं कूर्मसंबन्धि, मात्स्यं मत्स्यसंबन्धि, नारसिंह नृसिंहसंबन्धि वामनं च, वामन सम्बन्धि रूपमुक्तमिति शेषः । तत्र नारसिंह सप्तमे ज्ञेयम् । तद्वत् । द्विवौकसां अमृताथ क्षीरोदमथनं च समाख्यातम् ॥१९॥ देवेति । देवासुरं देवासुरसंबन्धि महायुद्धं च समाख्यातम् । एवमष्टमस्कन्धार्थानुक्त्वाऽथ नवमस्कन्धार्थाननुक्रमते । राजवंशानुकीर्त्तनं तद्वंशे इक्ष्वाकुजन्म, महात्मनः सुद्युम्नस्य जन्म च समाख्यातम् । अत्र क्वचित् कस्यचिदर्थस्याऽनुक्तिर्व्युत्क्रमोक्तिश्च प्रसिद्धीकृतादनादरादिति ज्ञेयम् ॥ २० ॥ इलेति । अत्र नवमे वंशे वा इलोपाख्यानं तारोपाख्यानं च उक्तं एव, सूर्यवंशानुकथनं शशादाद्याः नृपादयः समाख्याताः ॥ २१ ॥ सौकन्यमिति । सौकन्यं आख्यानं, अथ शर्यातेः, धीमतः ककुत्स्थस्य च खट्वाङ्गस्य, मांधातुश्च सौभरेः सगरस्य च ॥ २२ ॥ रामस्येति । कोशलेन्द्रस्य रामस्य, किल्विषापहं चरितं समाख्यातं, निमेः अङ्गपरित्यागः जनकानां संभवश्च उक्तः ॥ २३ ॥ रामस्येति । भार्गवेन्द्रस्य रामस्य संबन्धि, भुवः निःक्षत्रकरणं सोमवंशस्य ऐलस्य आदिभूतस्येतिशेषः । ययातेः नहुषस्य च दौष्यन्तेः भरतस्यापि शंतनोः तत्सुतस्य भीष्मस्य च अपि चरितं समाख्यातम् ॥ २४ ॥

## हिन्दी अनुवाद

शौनकादि ऋषियो ! छठे स्कन्ध में ये विषय आये हैं—प्रचेताओं से दक्ष की उत्पत्ति; दक्ष-पुत्रियों की सन्तान देवता, असुर, मनुष्य, पशु, पर्वत और पक्षियों का जन्म कर्म; वृत्रासुर की उत्पत्ति और उसकी परम गति। (अब सातवें स्कन्ध के विषय बतलाये जाते हैं—)इस स्कन्ध में मुख्यतः दैत्यराज हिरण्यकशिपु और हिरण्याक्ष के जन्मकर्म एवं दैत्यशिरोमणि महात्मा प्रह्लाद के उत्कृष्ट चरित्र का निरूपण है ॥ १७–१८ ॥ आठवें स्कन्ध में मन्वन्तरों की कथा, गजेन्द्रमोक्ष, विभिन्न मन्वन्तरों में होने वाले जगदीश्वर भगवान् विष्णु के अवतार—कूर्म, मत्स्य, वामन, धन्वन्तरि, हयग्रीव आदि; अमृत-प्राप्ति के लिये देवताओं और दैत्यों का समुद्र-मन्थन और देवासुर संग्राम आदि विषयों का वर्णन है। नवें स्कन्ध में मुख्यतः राजवंशों का वर्णन है। इक्ष्वाकुके जन्म-कर्म, वंश-विस्तार, महात्मा सुद्युम्न, इला एवं तारा के उपाख्यान—इन सबका वर्णन किया गया है। सूर्यवंश का वृत्तान्त, शशाद और नृग आदि राजाओं का वर्णन, सुकन्या चरित्र; शर्याति, खट्वाङ्ग, मान्धाता, सौभरि, सगर, बुद्धिमान् ककुत्स्थ और कोसलेन्द्र भगवान् राम के सर्वपापहारी चरित्र का वर्णन भी इसी स्कन्ध में है। तदनन्तर निमिका देह-त्याग और जनकों की उत्पत्ति का वर्णन है ॥ १९–२४ ॥

रामस्य भार्गवेन्द्रस्य निःक्षत्र[1]करणं भुवः । ऐलस्य सोमवंशस्य ययातेर्नहुषस्य च ॥ २५ ॥
दौष्यन्तेर्भरतस्यापि शन्तनोस्तत्सुतस्य च । ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशोऽनुकीर्तितः ॥ २६ ॥
यत्रावतीर्णो भगवान्कृष्णाख्यो जगदीश्वरः । वसुदेवगृहे जन्म ततो [2]वृद्धिश्च गोकुले ॥ २७ ॥
तस्य कर्माण्यपाराणि कीर्तितान्यसुरद्विषः । पूतनासुपयःपानं शकटोच्चाटनं शिशोः ॥ २८ ॥
तृणावर्तस्य निष्पेषस्तथैव बकवत्सयोः । धेनुकस्य सहभ्रातुः प्रलम्बस्य च संक्षयः ॥ २९ ॥
गोपानां च परित्राणं दावाग्नेः परिसर्पतः । दमनं कालियस्याहेर्महाहेर्नन्दमो[3]क्षणम् ॥ ३० ॥
व्रतचर्या तु कन्यानां यत्र तुष्टोऽच्युतो व्रतैः । प्रसादो यज्ञपत्नीभ्यो विप्राणां चानुतापनम् ॥ ३१ ॥
गोवर्धनोद्धारणं च शक्रस्य सुरभेरथ । यज्ञाभिषेकं कृष्णस्य स्त्रीभिः क्रीडा च रात्रिषु ॥ ३२ ॥

---

१. त्रीकर० । २. तस्य । ३. मोक्षणम् ।

### कृष्णप्रिया व्याख्या

अन्वयः—भार्गवेन्द्रस्य रामस्य भुवः निःक्षत्रकरणं सोमवंशस्य ऐलस्य ययातेः नहुषस्य च (वर्णनम्) ॥ २५ ॥ दौष्यन्तेः भरतस्य शंतनोः तत्सुतस्य च ययातेः ज्येष्ठपुत्रस्य यदोः वंशः अनुकीर्तितः ॥ २६ ॥ यत्र जगदीश्वरः कृष्णाख्यः भगवान् अवतीर्णः वसुदेवगृहे जन्म ततः गोकुले वृद्धिः च ॥ २७ ॥ असुरद्विषः तस्य अपाराणि कर्माणि कीर्तितानि पूतनासुपयःपानं शिशोः शकटोच्चाटनं तृणावर्तस्य निष्पेषः तथा एव बकवत्सयोः धेनुकस्य सहभ्रातुः प्रलम्बस्य च संक्षयः ॥ २८–२९ ॥ परिसर्पतः दावाग्नेः गोपानां परित्राणं अहेः कालियस्य दमनं महाहेः नन्दमोक्षणम् ॥ ३० ॥ कन्यानां व्रतचर्या यत्र अच्युतः व्रतैः तुष्टः यज्ञपत्नीभ्यः प्रसादः विप्राणां च अनुतापनम् ॥ ३१ ॥ गोवर्धनोद्धारणम् अथ शक्रस्य सुरभेः यज्ञाभिषेकं कृष्णस्य स्त्रीभिः रात्रिषु क्रीडा ॥३२॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

सोमवंशादिभूतस्यैलस्य चरितम् ॥ २५ ॥ तत्सुतस्य भीष्मस्य ॥ २६–२७ ॥ दशमार्थमाह । तस्य कर्माणीति । पूतनाया असुसहितस्य स्तन्यपयसः पानम् ॥ २८ ॥ सहभ्रातुः ससखस्य ॥२९–३१॥ यज्ञाभिषेकं यज्ञः अभिषेकश्च तयोर्द्वन्द्वैक्यम् ॥३२–३६॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

भार्गवं भृगुवंशमिंदयति समर्द्धयतीति भार्गवेन्द्रस्तस्य सकाशाद्भुवो निःक्षत्रकरणं यथाऽऽसीत्तथा वर्णितम् ॥ २५–२६ ॥ यत्र यदुवंशे । ततो जन्मानंतरम् ॥ २७ ॥ तस्य कृष्णाख्यस्य । शिशोः शिशुरूपात् । शकटस्योच्चाटनं भेदनम् 'चट–भेदने' ॥ २८ ॥ नष्पेषश्चूर्णनम्, हननमिति यावत् । तथैव निष्पेषः ॥ २९ ॥ परिसर्पतः सर्वतः प्रवृत्तस्य ॥ ३० ॥ यत्र व्रतचर्यायाम् । यज्ञगानां पत्न्यो यज्ञपत्न्यः ॥ ३१ ॥ शक्रेण कृता पूजा, सुरभ्या कृतोऽभिषेक इति विवेकः ॥ ३२ ॥

### अन्वितार्थप्रकाशिका

सोमवंशादिभूतस्यैलस्य चरितम् । तत्सुतस्य भीष्मस्य जन्म ॥ २५–२७ ॥ दशमस्कन्धार्थमाह—तस्य कर्माणीति । कर्माण्येव प्रपञ्चेन दर्शयति । पूतनाया असुसहितस्य स्तन्यपयसः पानम् ॥ २८ ॥ निष्पेषो वधः सहभ्रातुः सखिसहितस्य ॥ २९ ॥ परिसर्पतः सर्वतः आगच्छतः ॥ ३०–३१ ॥ शक्रसुरभिभ्यां कृष्णस्य यज्ञः पूजा अभिषेकश्च तयोर्द्वन्द्वैक्यम् ॥ ३२–३६ ॥

### श्रीमद्वीरराघवव्याख्या

अथ दशमार्थाननुक्रामति—तस्य कर्माणीत्यादिना । विप्रशापापदेशेनेत्यतः प्राक्तनेन ग्रन्थेन ॥ २८ ॥ निष्पेषो वधः अघासुरस्यासुसंहारः प्राणापहारः कस्य चतुर्मुखस्य स्वमायाप्रदर्शनं सहभ्रातुः सबलस्य धेनुकस्य प्रलम्बस्य च सङ्क्षयः वधः परिसर्पतः दवाग्नेः सकाशाद्गोपानां परित्राणम् दमनमनुशिक्षणमहो इत्याश्चर्य्ये नन्दस्य वरुणस्य मोक्षणं सकाशादिति शेषः । कन्यानां गोपकन्यानां व्रतचर्या तां विशिनष्टि यतो यस्यां व्रजैरच्युतस्तुष्टः यज्ञपत्नीभ्य इति चतुर्थ्यन्तं प्रसादोऽनुग्रहः शक्रस्येत्यस्य परिभवायेति शेषः यज्ञाभिषेकः यज्ञः पूजा अभिषेकश्च तयोर्द्वन्द्वैक्यम् ॥ ३९–३३ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

सोमवंशोद्भवस्यैलस्येलापुत्रस्य चरितम् ॥ २५–३० ॥ यत्र व्रतचर्यायाम् ॥ ३१ ॥ यज्ञः पूजा अभिषेकः तयोर्द्वन्द्वैक्यम् ॥ ३२–३९ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

तस्य वृद्धिश्च गोकुल इति चकाराज्जन्म चेत्यर्थः । अन्यथा वृद्धिस्त्वित्येवोक्तं स्यात् अस्य स्थापनं "नन्दस्त्वात्मज उत्पन्न" इत्यादौ कृष्णसन्दर्भे कृतमेव ॥ २७–३० ॥ विप्रानुतापनं सूक्ष्ममपि अत्रावधापनाय स्मारितं शक्रकर्तृकं सुरभिकर्तृकं च यज्ञाभिषेकम् ॥ ३१–३५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

पूतनाया असुसहितस्य स्तन्यपयसः पानम् शिशोः शिशुना निष्पेषः संमर्दः सहभ्रातुर्ज्ञातिसहितस्य ॥ २८–३१ ॥ शक्रस्य शक्रेण सुरभेः सुरभ्या यज्ञः पूजनमभिषेकश्च तत् ॥ ३२–३५ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पूतनायाः असुपयःपानं प्राणसहितस्य पयसः पानम् ॥२८॥ निष्पेषः शिलायामिति शेषः सहभ्रातुः ससखस्य ॥२९–३१॥ यज्ञः पूजा अभिषेकश्च तयोः द्वन्द्वैक्यम् ॥ ३२–३६ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

सोमवंशादिभूतस्यैलस्य चरितम् ॥ २५–२६ ॥ तत्सुतस्य भीष्मस्य ॥ २७ ॥ दशमस्कन्धार्थमाह– तस्य कर्माणीति। कर्माण्येव प्रपञ्चेन दर्शयति—पूतनाया असुसहितस्य स्तन्यपयसः पानम् ॥ २८ ॥ निष्पेषो वधः। सहभ्रातुः ससखस्य ॥ २९ ॥ परिसर्पतः सर्वतः आगच्छतः ॥ ३०–३१ ॥ शक्रसुरभिभ्यां कृष्णस्य यज्ञः पूजा अभिषेकश्च तयोर्द्वन्द्वैक्यम् ॥ ३२–३७ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

ययातेरिति। ययातेः ज्येष्ठपुत्रस्य यदोः वंशः अनुकीर्त्तितः। यत्र यदुवंशे जगदीश्वरः कृष्णाख्यः भगवान् अवतीर्णः।२५। एवं नवमस्कन्धार्थानुक्त्वाऽथ दशमस्कन्धार्थाननुक्रमते। वसुदेवगृहे इति। असुरद्विषः तस्य तु अपाराणि कर्माणि कीर्त्तितानि। तत्रादौ वसुदेवगृहे जन्म, ततः गोकुले वृद्धिश्च ॥ २६ ॥ पूतनेति। पूतनाया असुः प्राण एव पयस्तस्य पानं, शिशोः सतोऽपि शकटोत्पाटनं, तृणावर्त्तस्य निष्पेषः वधः, तथैव बको बकासुरश्च वत्सो वत्सासुरश्च तयोरपि वधः समाख्यातः ॥ २७ ॥ अघेति। अघासुरस्यासुसंहारः, कस्य ब्रह्मणः मायाप्रदर्शनं, सहभ्रातुः भ्रात्रा बलभद्रेण सहितस्य कृष्णस्य, कर्त्रर्थे संबन्धसामान्ये षष्ठी। भ्रात्रा सह कृष्णेन कृत इत्यर्थः। धेनुकस्य प्रलम्बस्य च संक्षयो वधः, यद्वा। सहभ्रातुः धेनुकस्येति योजना ॥ २८ ॥ गोपानामिति। कालियस्य अहेः दमनं, परिसर्पतः परितः प्रसर्पणं कुर्वतः दावाग्नेः सकाशात् गोपानां च परित्राणं, महाहेरजगरात् नन्दमोक्षणं उक्तम् ॥ २९ ॥ व्रतचर्येति। यत्र यस्यां व्रतचर्यायां व्रतैः अच्युतः तुष्टः, तथाविधा कन्यानां गोपसुतानां व्रतचर्या यज्ञपत्नीभ्यः यज्ञकर्तृब्राह्मणाङ्गनाभ्यः, प्रसादोऽनुग्रहविधानं, विप्राणां अनुतापनं च ॥ ३० ॥ गोवर्द्धनेति। गोवर्द्धनस्योद्धारणं, सुरभेः अथ शक्रस्य कृष्णस्य यज्ञाभिषेकं, यज्ञः पूजा अभिषेकश्च तयोर्द्वन्द्वैक्यं इन्द्रकृता पूजा सुरभिकृतोऽभिषेकश्चेत्यर्थः। कृष्णस्य रात्रिषु स्त्रीभिः सह क्रीडा च ॥ ३१ ॥ शङ्खचूडस्येति। दुर्बुद्धेः शङ्खचूडस्य अरिष्टस्यारिष्टासुरस्य केशिनश्च वधः, अक्रूरागमनं पश्चात् रामकृष्णयोः प्रस्थानं, मथुरां प्रतीति शेषः ॥ ३२ ॥

## हिन्दी अनुवाद

भृगुवंशशिरोमणि परशुरामजी का क्षत्रिय-संहार, चन्द्रवंशी नरपति पुरूरवा, ययाति, नहुष, दुष्यन्तनन्दन भरत, शन्तनु और उनके पुत्र भीष्म आदि की संक्षिप्त कथाएँ भी नवम स्कन्ध में ही हैं। सबके अन्त में, ययाति के बड़े लड़के यदु का वंशविस्तार कहा गया है ॥ २५–२६ ॥ शौनकादि ऋषियो! इसी यदुवंश में जगत्पति भगवान् श्रीकृष्ण ने अवतार ग्रहण किया था। उन्होंने अनेक असुरों का संहार किया। उनको लीलाएँ इतनी हैं कि कोई पार नहीं पा सकता। फिर भी दशम स्कन्ध में उनका कुछ कीर्तन किया गया है। वसुदेवकी पत्नी देवकी के गर्भ से उनका जन्म हुआ। गोकुल में नन्दबाबा के घर जाकर बढ़े। पूतना के प्राणों को दूध के साथ पी लिया। बचपन में ही छकड़े को उलट दिया ॥ २७–२८ ॥ तृणावर्त, बकासुर एवं वत्सासुर को पीस डाला। सपरिवार धेनुकासुर और प्रलम्बासुर को मार डाला ॥२९॥ दावानल से घिरे गोपों की रक्षा की कालिय नाग का दमन किया। अजगर से नन्दबाबा को छुड़ाया ॥ ३० ॥ इसके बाद गोपियों ने भगवान् को पति रूप से प्राप्त करने के लिये व्रत किया और भगवान् श्रीकृष्ण ने प्रसन्न होकर उन्हें अभिमत वर दिया। भगवान् ने यज्ञपत्नियों पर कृपा की। उनके पतियों—ब्राह्मणों को बड़ा पश्चात्ताप हुआ ॥ ३१ ॥ गोवर्द्धनधारण की लीला करने पर इन्द्र और कामधेनु ने आकर भगवान् का यज्ञाभिषेक किया। शरद् ऋतु की रात्रियों में व्रजसुन्दरियों के साथ रासक्रीडा की ॥ ३२ ॥

शङ्खचूडस्य दुर्बुद्धेर्वधोऽरिष्टस्य केशिनः। अक्रूरागमनं पश्चात् प्रस्थानं[1] रामकृष्णयोः ॥ ३३ ॥
व्रजस्त्रीणां विलापश्च मथुरालोकनं ततः। गजमुष्टिकचाणूरकंसादीनां च यो वधः ॥ ३४ ॥
मृतस्यानयनं सूनोः पुनः सान्दीपनेर्गुरोः।
मथुरायां निवसता यदुचक्रस्य यत्प्रियम्। कृतमुद्धवरामाभ्यां युतेन हरिणा द्विजाः ॥ ३५ ॥
जरासन्धसमानीतसैन्यस्य बहुशो वधः। घातनं यवनेन्द्रस्य कुशस्थल्या निवेशनम् ॥ ३६ ॥
आदानं पारिजातस्य सुधर्मायाः सुरालयात्। रुक्मिण्या हरणं युद्धे प्रमथ्य द्विषतो हरेः ॥ ३७ ॥
हरस्य जृम्भणं युद्धे बाणस्य भुजकृन्तनम्। प्राग्ज्योतिषपतिं हत्वा कन्यानां हरणं च यत् ॥ ३८ ॥
चैद्यपौण्ड्रकशाल्वानां दन्तवक्त्रस्य दुर्मतेः। शम्बरो द्विविदः पीठो मुरः पञ्चजनादयः ॥ ३९ ॥
माहात्म्यं च वधस्तेषां वाराणस्याश्च दाहनम्। भारावतरणं भूमेर्निमित्तीकृत्य पाण्डवान् ॥ ४० ॥

---

१. प्रस्थितं।

### कृष्णप्रिया व्याख्या

अन्वयः—दुर्बुद्धेः शङ्खचूडस्य अरिष्टस्य केशिनः च वधः पश्चात् अक्रूरागमनं रामकृष्णयोः प्रस्थानम् ॥३३॥ व्रजस्त्रीणां विलापः ततः मथुरालोकनं गजमुष्टिकचाणूरकंसादीनां च यः वधः ॥ ३४ ॥ सांदीपनेः गुरोः मृतस्य सूनोः पुनः आनयनं द्विजाः मथुरायां निवसता उद्धवरामाभ्यां युतेन हरिणा यत् यदुचक्रस्य प्रियं कृतम् ॥ ३५ ॥ जरासंघसमानीतसैन्यस्य बहुशः वधः यवनेन्द्रस्य घातनं कुशस्थल्याः निवेशनम् ॥ ३६ ॥ सुधर्मायाः सुरालयात् पारिजातस्य आदानं युद्धे द्विषतः प्रमथ्य हरेः रुक्मिण्याः हरणम् ॥ ३७ ॥ हरस्य जृम्भणं युद्धे बाणस्य भुजकृन्तनं प्राग्ज्योतिषपतिं हत्वा कन्यानां यत् हरणम् ॥ ३८ ॥ चैद्यपौण्ड्रकशाल्वानां दुर्मतेः दन्तवक्त्रस्य शम्बरः द्विविदः पीठः मुरः पञ्चजनादयः तेषां वधः माहात्म्यं वाराणस्याः च दाहनं पाण्डवान् निमित्तीकृत्य भूमेः भारावतरणम् ॥ ३९–४० ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

द्विषतः शत्रून्प्रमथ्य ॥ ३७–३८ ॥ ये च शंबरादयस्तेषां माहात्म्यं प्रभावो वधश्च ॥ ३९–४० ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

स्त्रीहरणप्रवृत्तेर्दुर्बुद्धित्वम् । अरिष्टो वृषासुरः ॥ ३३ ॥ आदिना कंसभ्रात्रादिग्रहः ॥ ३४ ॥ आनयनं, संयमिन्या इति शेषः ॥ ३५ ॥ हे द्विजा इति संबुद्धिबहुत्वमादरार्थम् । कुशस्थल्या द्वारकाया निवेशनं रचना ॥ ३६ ॥ सुरालयादिंद्रलोकात् । सुधर्मा देवसभा 'स्यात्सुधर्मा देवसभा' इत्यमरः ॥ ३७ ॥ प्राग्ज्योतिषपतिर्नरकासुरः ॥ ३८ ॥ पीठो हि नरकासुरचमूपतिः । 'पीठं पुरस्कृत्य चमूपतिं मृधे भौमप्रयुक्ता निरगम्' इत्युक्तेः आदिना तत्पुत्रादयः ॥ ३९–४० ॥

### अन्वितार्थप्रकाशिका

द्विषतः शत्रून् प्रमथ्य ॥ ३८ ॥ प्राग्ज्योतिषपतिं भौमासुरम् ॥ ३९ ॥ ये च शम्बरादयस्तेषां माहात्म्यं पराक्रमः वधश्चेत्यन्वयः ॥ ४० ॥

### श्रीमद्वीरराघवव्याख्या

गजः कुवलयापीडाख्यः सान्दीपनेर्गुरोः पुत्रस्य मृतस्य पुनरानयनं यमस्य साक्षादिति शेषः । मथुरायामिति हे द्विजाः उद्धवरामाभ्यां युतेन हरिणा मथुरायां निवसता यदूनां समूहस्य यत्प्रियं कृतं तच्च यवनेन्द्रस्य कालयवनस्य कुशस्थल्यां द्वारकायाम् ॥ ३४–३६ ॥ सुधर्मायाश्चादानमिति संबन्धः द्विषतश्शत्रून्प्रमथ्य हरेर्हरिणा रुक्मिण्या हरणम् ॥ ३७ ॥ प्राग्ज्योतिषपतिं भौमम् ॥ ३८ ॥ ये शम्बरादयः तेषां माहात्म्यं वधश्चेति संबन्धः ॥ ३९ ॥ निमित्तीकृत्य द्वारीकृत्य ॥ ४० ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

दाहनं दहनम् ॥ ४०–४१ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

उद्धवरामाभ्यामित्युद्धवस्यापि तादृशत्वं दर्शितम् ॥ ३६–३८ ॥ चैद्यादीनां माहात्म्यं वधश्च ये च शम्बरादयस्तेषां चेत्यन्वयः ॥ ३९–४५ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

माहात्म्यं चैद्यादीनां पराक्रमः ॥ ३६–४१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

द्विषतः रुक्मिप्रभृतीन् ॥ ३७–३९ ॥ माहात्म्यम् आसुरः प्रभावः ॥ ४०–४१ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

द्विषतः शत्रून्प्रमथ्य ॥ ३८ ॥ प्राग्ज्योतिषपतिं भौमासुरम् ॥ ३९ ॥ ये च शम्बरादयस्तेषां माहात्म्यं पराक्रमः वधश्चेत्यन्वयः ॥ ४० ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

व्रजेति । ततः व्रजस्त्रीणां विलापः, मथुरालोकनं सगोपयोः रामकृष्णयोः मथुरासमीक्षणं च, ततः गजः कुवलयापीडः मुष्टिकश्च चाणूरश्च कंसश्च ते आदयो येषां तेषां, यः वधः ॥ ३३ ॥ मृतस्येति । सांदीपनेः गुरोः मृतस्य सूनोः पुनः

आनयनं, यमसकाशादिति शेषः। हे द्विजाः, मथुरायां निवसता उद्धवरामाभ्यां युतेन हरिणा, यदुचक्रस्य यत् प्रियं कृतं तदपि मयाख्यातम् ॥ ३४ ॥ एवं दशमपूर्वार्द्धमनुक्रम्योत्तरार्द्धमनुक्रमते। जरासंधेति। जरासंधसमानीतसैन्यस्य बहुशः सप्तदशवारान् वधः, यवनेन्द्रस्य कालयवनस्य घातनं मुचुकुन्दद्वारा विनाशविधान, कुशस्थल्या द्वारकायाः निवेशनं, उज्जानकृतां गतायास्तस्याः पुनः समीचीनताविधापनमित्यर्थः ॥ ३५ ॥ आदानमिति। द्विषतः शत्रून् युद्धे प्रमथ्य हरेः रुक्मिण्याहरणं, सुरालयाद् देवेन्द्रभवनात् सुधर्मायाः पारिजातस्य च आदानं आनयनम् ॥ ३६ ॥ हरस्येति। युद्धे हरस्य जृम्भणं जृम्भणास्त्रेण पराभवविधानं बाणासुरस्य भुजकृन्तनं प्राग्ज्योतिषपतिं प्राग्ज्योतिषपुरपतिं भौमासुरं हत्वा, यत् कन्यानां हरणं तत् ॥ ३७ ॥ चैद्येति। चैद्यश्च पौण्ड्रकश्च शाल्वश्च तेषां, दुर्मतेः दन्तवक्त्रस्य वध इति शेषः। शबरः, द्विविधः, पीठः मुरः पञ्चजन आदिर्येषां ते तेषामित्युत्तरेणान्वयः ॥३८॥ माहात्म्यमिति। तेषां शंबरादीनां माहात्म्यं बधश्च, वाराणस्याः दाहनं च, पाण्डवान् निमित्तीकृत्य भूमेः भारावतरणं, तच्च समाख्यातम् ॥ ३९ ॥ एवं दशमस्कन्धोत्तरार्द्धार्थमनुक्रम्याथैकादशस्कन्धार्थाननुक्रामति विप्रशापेनेति द्वाभ्याम्। विप्रेति। विप्रशापापदेशेन स्वकुलस्य संहारः। चोऽप्यर्थे। उद्धवस्य वासुदेवस्य च अद्भुतः संवादश्चापि ॥ ४० ॥

## हिन्दी अनुवाद

दुष्ट शङ्खचूड़, अरिष्ट और केशी के वध की लीला हुई। तदनन्तर अक्रूर जी मथुरा से वृन्दावन आये और उनके साथ भगवान् श्रीकृष्ण तथा बलरामजी ने मथुरा के लिये प्रस्थान किया ॥ ३३ ॥ उस प्रसंगपर व्रज-सुन्दरियों ने जो विलाप किया था, उसका वर्णन है। राम और श्याम ने मथुरा में जाकर वहाँ की सजावट देखी और कुवलयापीड़ हाथी, मुष्टिक, चाणूर एवं कंस आदि का संहार किया ॥३४॥ सान्दीपनि गुरु के यहाँ विद्याध्ययन करके उनके मृत पुत्र को लौटा लाये। शौनकादि ऋषियो ! जिस समय भगवान् श्रीकृष्ण मथुरा में निवास कर रहे थे, उस समय उन्होंने उद्धव और बलरामजी के साथ यदुवंशियों का सब प्रकार से प्रिय और हित किया ॥ ३५ ॥ जरासंन्ध कई बार बड़ी-बड़ी सेनाएँ लेकर आया और भगवान् ने उनका उद्धार करके पृथ्वी का भार हल्का किया। कालयवन को मुचुकुन्द से भस्म करा दिया। द्वारकापुरी बसाकर रातों-रात सबको वहाँ पहुँचा दिया ॥ ३६ ॥ स्वर्ग से कल्पवृक्ष एवं सुधर्मा सभा ले आये। भगवान् ने दल-के-दल शत्रुओं को युद्ध में पराजित करके रुक्मिणी का हरण किया ॥ ३७ ॥ बाणासुर के साथ युद्ध के प्रसङ्ग में महादेवजी पर ऐसा बाण छोड़ा कि वे जँभाई लेने लगे और इधर बाणासुर की भुजाएँ काट डालीं। प्राग्ज्योतिषपुर के स्वामी भौमासुर को मारकर सोलह हजार कन्याएँ ग्रहण कीं ॥ ३८ ॥ शिशुपाल, पौण्ड्रक, शाल्व, दुष्ट दन्तवक्त्र, शम्बरासुर, द्विविद, पीठ, मुर, पञ्चजन आदि दैत्यों के बल-पौरुष का वर्णन करके यह बात बतलायी गयी कि भगवान् ने उन्हें कैसे-कैसे मारा! भगवान् के चक्रने काशी को जला दिया और फिर उन्होंने भारतीय युद्ध में पाण्डवों को निमित्त बनाकर पृथ्वी का बहुत बड़ा भार उतार दिया ॥ ३९–४० ॥

विप्रशापापदेशेन संहारः स्वकुलस्य च। उद्धवस्य च संवादो वासुदेवस्य चाद्भुतः ॥ ४१ ॥
यत्रात्मविद्या ह्यखिला प्रोक्ता धर्मविनिर्णयः। ततो मर्त्यपरित्याग आत्मयोगानुभावतः ॥ ४२ ॥
युगलक्षणवृत्तिश्च कलौ नृणामुपप्लवः। चतुर्विधश्च प्रलय उत्पत्तिस्त्रिविधा तथा ॥ ४३ ॥
देहत्यागश्च राजर्षेर्विष्णुरातस्य धीमतः।
शाखाप्रणयनमृषेर्मार्कण्डेयस्य सत्कथा। महापुरुषविन्यासः सूर्यस्य जगदात्मनः ॥ ४४ ॥
इति चोक्तं द्विजश्रेष्ठा यत्पृष्टोऽहमिहास्मि वः। लीलावतारकर्माणि कीर्तितानीह सर्वतः[3] ॥ ४५ ॥
पतितः स्खलितो वार्तः[4] क्षुत्त्वा वा विवशो ब्रुवन्। [5]हरये नम इत्युच्चैर्मुच्यते सर्वपातकात् ॥ ४६ ॥

सङ्कीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं हि पुंसाम्।
प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ॥ ४७ ॥
मृषा गिरस्ता ह्यसतीरसत्कथा न कथ्यते यद् भगवानधोक्षजः।
तदेव सत्यं तदुहैव मङ्गलं तदेव पुण्यं भगवद्गुणोदयम् ॥ ४८ ॥

---

१. कर्मं०। २. दत्तस्य। ३. सर्वशः। ४. तश्चार्तः। ५. हरयेऽस्तु नमश्चोच्चै०।

### कृष्णप्रिया व्याख्या

अन्वयः—विप्रशापापदेशेन स्वकुलस्य च संहारः उद्धवस्य वासुदेवस्य च अद्भुतः संवादः ॥ ४१ ॥ यत्र हि अखिला आत्मविद्या प्रोक्ता धर्मविनिर्णयः ततः आत्मयोगानुभावतः मर्त्यपरित्यागः ॥ ४२ ॥ युगलक्षणवृत्तिः कलौ नृणाम् उपप्लवः चतुर्विधः प्रलयः तथा त्रिविधा उत्पत्तिः ॥४३॥ धीमतः राजर्षेः विष्णुरातस्य देहत्यागः शाखाप्रणयनं मार्कण्डेयस्य ऋषेः सत्कथा जगदात्मनः सूर्यस्य महापुरुषविन्यासः ॥४४॥ द्विजश्रेष्ठाः इति इह अहं यत् पृष्टः वः च उक्तम् इह सर्वशः लीलावतारकर्माणि कीर्तितानि ॥४५॥ पतितः स्खलितः क्षुत्त्वा वा विवशः उच्चैः हरये नमः इति ब्रुवन् सर्वपातकात् मुच्यते ॥४६॥ भगवान् अनन्तः श्रुतानुभावः संकीर्त्यमानः ( सन् ) पुंसा चित्तं प्रविश्य अशेषं व्यसनम् यथा अर्कः तमः अतिवातः अभ्रम् इव विधुनोति हि ॥ ४७ ॥ यत् भगवान् अधोक्षजः न कथ्यते असत्कथाः ताः गिरः मृषा असतीः हि भगवद्गुणोदयं तत् एव सत्यं तत् एव मङ्गलं तत् एव पुण्यम् ॥ ४८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

एकादशार्थमाह । विप्रशापेति ॥४१॥ धर्मविनिर्णयो वर्णाश्रमधर्मविनिश्चयः । मर्त्यपरित्यागो मनुष्यत्वस्यांतर्धानम्॥४२॥ द्वादशार्थमाह । युगेति । युगलक्षणं तदनुरूपा वृत्तिश्चेत्यर्थः । त्रिविधा प्राकृतिकी नैमित्तिकी नित्या चेति ॥ ४३ ॥ ऋषेर्व्यासस्य । सूर्यस्य च विन्यास इत्यर्थः ॥ ४४ ॥ इति चोक्तमिति चकारादन्यदपि वो युष्माभिरिह यत्पृष्टोऽस्मि तदुक्तमिति । किमेवं नानार्थकथनेन तत्राह । लीलेति । सर्वशः तत्तदर्थकीर्तनद्वारेणेत्यर्थः ॥ ४५ ॥ तत्कीर्तनेनापि किमित्यपेक्षायां तत्फलमाह द्वाभ्याम् । पतितः कूपादिषु । स्खलितः सोपानादिषु । आर्तो दुःखितः । क्षुत्वा क्षुतं कृत्वा विवशोऽपि ॥ ४६ ॥ संकीर्त्यमानो यद्वा श्रुतोऽनुभावो यस्य स पुंसां चित्तं प्रविश्य निःशेषं दुःखं विधुनोति । हीति सतामनुभवं प्रमाणयति । अर्को गिरिगुहादिध्वांतं न धुनोतीत्यपरितोषाद्दृष्टांतांतरमाह । अतिवातोऽभ्रमिवेति ॥४७॥ हरिसंकीर्तनमेव महाफलं तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपंचयति मृषा गिर इति चतुर्भिः । मृषागिरो मिथ्यावाचः । असतीरसत्यः । असतां कथा यासु ताः यद्यासु उत्तमश्लोकस्य यशोऽनुगीयत इति यत्तदेव सत्यं तदेव हि मंगलम्। उह इति हर्षे । भगवद्गुणानामभ्युदयो यस्मात्तत् ॥ ४८ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अपदेशो व्याजः ॥ ४१ ॥ यत्र भगवदुद्धवसंवादे ॥ ४२ ॥ इत्यर्थ इति—यस्मिन् यस्मिन्युगे या या वृत्तिः साऽप्युक्तेति भावः । उपप्लवो नाशः, धर्मादेरिति शेषः । प्राकृतिकी प्रकृतिमधिकृत्य प्रवृत्ता महदादिप्रादुर्भावेण सृष्टिलक्षणा । नैमित्तिकी निमित्तं शुभाशुभं कर्म, तदधिकृत्य प्रवृत्तादेरमानुषादिलक्षणा । नित्या हि प्रतिक्षणं शरीरनाशोत्पत्तिस्वीकारेणातीवसूक्ष्मा बाल्यनाशयौवनोत्पत्त्यनुमेयेति ध्येयं सुधीभिः ॥ ४३ ॥ धीमतः श्रीशुकप्रसादावाप्तज्ञानस्य । इत्यर्थ इति—समासांतर्गतमपि विन्यासपदमत्र "विप्र कीर्णजटाच्छन्नं रौरवेणाजिनेन च" इतिवत्संबध्यते इति भावः ॥ ४४ ॥ अत्राक्षिपति--किमेवमिति । इत्यर्थ इति—तेषां तेषां लीलादीनामर्थप्रयोजनं तत्कीर्तनद्वारेणेति भावः । द्विजश्रेष्ठत्वादेतत्सर्वं भवद्भ्यो मयोदीरितमिति संबुद्धयभिप्रायः ॥ ४५ ॥ सर्वाणि पातकानि यस्मिंस्तत्सर्वपातकं कर्मजालं तस्मात् ॥ ४६ ॥ व्यसनं दुःखम् ॥ ४७ ॥ अस्य शास्त्रस्य कृष्णकीर्तन एव तात्पर्यात्तदन्यकीर्तनमविगीतमपि न कुर्यात्, तत्कीर्तनं यत्पशुभिर्विगीतत्वेनोक्त तदपि कुर्यादित्याह—मृषेति । ताः सत्या अपि गिरो मिथ्या एव, प्रिया अपि गिरोऽसतीरसत्याः कटूक्तय एव, तथा सतां विदुषामपि कथा असत्कथा एव । कुतः—यद्यतो भगवान्न कथ्यत इति । अतः स सत्यवादी अपि मिथ्यावादी, प्रियंवदोऽपि कटुवादी, सत्कथकोऽप्यसत्कथक उच्यत इति भावः । स्वकल्पितत्वादसत्यमपि भगवद्यशश्चेत्तदेव सत्यं संसृतिध्वंसकत्वात्, अमंगलमपि तदेव मंगलं नान्यत्, भगवतः परदाररमणादिकमधर्मैरपुण्यत्वेनोक्तमपि तदेव पुण्यं, यतो भगवतो गुणस्यैव न तु दोषस्योदयो यस्मात्तत् ॥ ४८ ॥

### अन्वितार्थप्रकाशिका

एकादशस्कन्धार्थमाह—विप्रशापेति ॥४१॥ धर्मविनिर्णयः वर्णाश्रमधर्मनिश्चयः मर्त्यपरित्यागः मनुष्यत्वस्यान्तर्द्धानम् ॥ द्वादशस्कन्धार्थमाह—युगेति । युगलक्षणं तदनुरूपा वृत्तिश्चेत्यर्थः । उपप्लवः उपद्रवः ॥ ४२ ॥ त्रिविधा प्राकृतिकी नैमित्तिकी नित्या चेति ॥ ४३ ॥ ऋषेर्व्यासस्य विन्यासः अङ्गादिकल्पना सूर्यस्य व्यूह इति शेषः ॥ ४४ ॥ इतीति । हे द्विजश्रेष्ठाः! इति चोक्तमिति चकारादन्यदपि वः युष्माभिरिह यदहं पृष्टोऽस्मि तदुक्तमिति इह सर्वतः तत्तदर्थकीर्त्तनद्वारेण भगवतो लीलावतारकर्माणि कीर्त्तितानि ॥ ४५ ॥ पतित इति । पतितः कूपादिषु स्खलितः सोपानादिषु आर्त्तः रोगादिपीडितः क्षुत्त्वा क्षुतं कृत्वा एवं कथंचिद्विवशोऽपि यः कांश्चदपि हरये नम इत्युच्चैः ब्रुवन् सर्वपातकात् मुच्यते ॥ ४६ ॥ संकीर्त्यमान इति । भगवाननन्तः

संकीर्त्यमानः। यद्वा। श्रुतोऽनुभावो यस्य सः पुंसां कीर्त्तयतां शृण्वतां च चित्तं प्रविश्य निःशेषं व्यसनं दुरितहेतुकं दुःखं विधुनोति नाशयति। अर्को यथा तमोऽन्धकारं धुनोति। अर्को गुहागतं तमो न धुनोति इत्याशङ्क्याह। अतिवातो यथाऽभ्रं धुनोति तथेति॥४७॥ मृषेति। यत् यासु भगवान् अधोक्षजो न कथ्यते असतां विषयासक्तानामेव कथा यासु ता हि गिरः वाचः मृषा निष्फलाः असतीः असत्यश्च नरकहेतुत्वात्। पूर्वसवर्णदीर्घ आर्षः। भगवद्गुणानामुदयः प्रकाशो यस्मात् तदेव वचः सत्यं सफलं यतः तदेव मङ्गलं शुभकरम्। तदेव च पुण्यं पुण्यावहम्। यद्वा। यासु भगवान्न कथ्यते ताः सत्या अपि गिरो मृषा एव। प्रिया अपि असदुक्तय एव। तथा सतां विदुषामपि कथा असत्कथा एव अतस्तद्वक्ता सत्यवादी प्रियंवदोऽपि कटुभाषी सत्कथकोऽप्यसत्कथक उच्यते। भगवद्यशस्तु स्वकल्पितमसत्यमपि तदेव सत्यम्। गृहाश्रमविध्वंसकत्वादमङ्गलमपि तदेव मङ्गलम्। भगवतः परदारहरणादिकमधर्मैरपुण्यत्वेन कथितमपि तदेव पुण्यं यतस्तद्भगवतो गुणस्यैव न तु दोषस्य उदयो यस्मात्॥ ४८॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

मर्त्त्यशरीरत्यागः॥ ४२–४३॥ महापुरुषविन्यासः देवसंस्थानं सूर्यस्य जगदात्मन इति विन्यास इत्यनुषङ्गः॥ ४४॥ वैभवं प्रपञ्चमित्यर्थः॥ ४५॥ पुराणकथाश्रवणफलं वक्तुं भगवत्कीर्त्तनश्रवणानुभावमाह, परितः सर्वतः पतितः स्खलितः वचन इत्यध्याहार्यम्॥ ४६–४७॥ भगवद्गुणानामुदयः प्रकारो यस्मिन् तद्भगवद्गुणोदयं नवं नवं इति वचन इति प्रथमाशाय इति द्वितीयाम्॥ ४८–४९॥

### श्रीमद्वीरराघवव्याख्या

एकादशार्थाननुक्रमते—विप्रशापेति द्वाभ्याम्। अपदेशो व्याजस्तेन॥ ४१॥ संवादं विशिनष्टि—यत्रेति। धर्मचिनिर्णयः वर्णाश्रमधर्मनिर्णयः मर्त्यपरित्यागः मर्त्यलोकपरित्यागः भूमिपरित्याग इति पाठान्तरम्॥ ४२॥ द्वादशार्थाननुक्रमते—युगेति। (सार्द्धद्वयेन) युगलक्षणानि तेषु वृत्तयश्च उपप्लवः कलिदोषैरुपद्रवः चतुर्विधः प्राकृतिको नैमित्तिकः आत्यन्तिको नित्यश्चेति चतुर्विधः प्रलयः त्रिविधा प्राकृतिकी नित्या नैमित्तिकी चेति त्रिविधा उत्पत्तिः॥ ४३॥ विष्णुदत्तस्य परीक्षितः महापुरुषविन्यासः अङ्गोपाङ्गादिविन्यास जगदात्मनः लोकयात्राप्रवर्तनेन नियामकस्य सूर्यस्य गणविभागः इत्यर्थः। इति चोक्तमिति चकारादन्यदपि हे द्विजश्रेष्ठाः! वो युष्माभिः यत्प्रत्यहं पृष्टोऽस्मि तदुक्तम् इतीत्थम् इह पुराणे सर्वशः कार्त्स्न्येन हरेर्लीलारूपाणि अवतारकर्माणि एव कीर्तितानि॥ ४४–४५॥ एतत्पुराणकथनश्रवणफलं वक्तुं भगवत्कीर्तनश्रवणानुभावमाह—पतित इति। क्षुत्त्वा क्षुत्कृत्य श्रुत्वेति वा पाठः तदा हरये नम इति श्रुत्वेत्यर्थः हरये नम इत्युच्चैर्वदन्निति सम्बन्धः॥ ४६॥ किञ्च सङ्कीर्त्यमान इति। श्रुतोऽनुभावो यस्य तथाभूतो वा हरिः पुंसां सङ्कीर्तयतां शृण्वताञ्चान्तः चित्त प्रविश्याशेषं व्यसनं दुःखं तद्धेतुदुरितं वा धुनोति यथाऽर्कः सूर्यस्तमो धुनोति यथावाऽतिवातः चण्डवायुरभ्रं धुनोति तद्वत्॥ ४७॥ किञ्च भगवत्सङ्कीर्तनमेव महाफलं तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपञ्चयति चतुर्भिः—मृषागिरः इति। यद्यत्र भगवानधोक्षजो न कथ्यते न प्रतिपाद्यते ता मृषा गिरः मिथ्यावाचः प्रत्युतासतीरसत्यः दोषावहाः यद्भगवद्गुणानामुदयः प्रकाशो यस्मिंस्तदेव वाचः सत्यं मङ्गलावहं पुण्यावहं च अत्यादरात्प्रतिपदं तच्छब्दप्रयोगः॥ ४८॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यत्रोद्धववासुदेवसंवादे आत्मविद्याः परमात्मविद्याः अखिला अनुवर्त्तितत्वेनोक्ताः वर्णाश्रमविनिर्णयश्चोक्तः॥ ४२॥ युगलक्षणं तदनुरूपा वृत्तिश्च उपप्लवो नाशः राजसादिभेदेनोत्पत्तिस्त्रिविधा प्राकृतिकी नैमित्तिकी नित्या वा॥ ४३॥ विष्णुदत्तस्य परीक्षितः महापुरुषविन्यासः महापुरुषस्याङ्गोपाङ्गादिस्थितिविशेषः सूर्यस्य स्थितिश्च इति समाप्तिपर्यन्तं सर्वमुक्तम्॥ ४४–४५॥ क्षुत्त्वा क्षुतं कृत्वा॥ ४६॥ अतिशयितो वातः अभ्र सनीरं नीरदमिव॥४७॥ अधोक्षजो भगवान् याभिर्गीर्भिर्न कीर्त्यन्ते ता गिरोऽसत्कथाः मृषा निष्फलाः असतीरसत्योऽमङ्गलाः यद्वचो भगवद्गुणोदयं तदेव सत्यं यथोक्तफलम्॥ ४८॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

पतित इति कैमुत्यार्थमुक्तिः॥ ४६–४९॥

### श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

मर्त्त्यस्य मर्त्यलोकस्य परित्यागः आत्मनो योगमायाप्रभावत इति लोकैर्दुर्वितर्कता ध्वनिता॥ ४२॥ युगलक्षणे तदनुरूपा वृत्तिश्च उपप्लवो धर्मविप्लवः त्रिविधा प्राकृती नैमित्तिकी नित्या च॥ ४३–४५॥ एतावत्कथाकीर्त्तनस्य फलं ब्रूहीति चेत्तत्र कैमुत्येनाह, पतित उच्चप्रदेशादधः प्राप्तः स्खलितः समानप्रदेशेऽप्ययथा पतित उच्चप्रदेशादधः प्राप्तः स्खलितः समानप्रदेशेऽप्ययथा पादविन्यासात्प्राप्तव्यथः क्षुत्त्वा क्षुतं कृत्वा उच्चैरतिघोरपापादपि॥ ४६॥ चित्तं प्रविश्य व्यसनं धुनोति अर्कस्तम इव सच गुहागतं

तमो न धुनोतीत्यपरितोषादाह—अतिवातोऽभ्रमिव ॥ ४७ ॥ अस्य शास्त्रस्य कृष्णकीर्त्तन एव तात्पर्यात्तदन्यकीर्त्तनमविगीतमपि न कुर्यात् तत्कीर्त्तनं यत्साधुभिर्विगीतत्वेनोक्तं तदपि कुर्य्यादित्याह—मृषेति । ताः सत्या अपि गिरो मिथ्या एव प्रिया अपि गिरोऽसती-रसत्यः कटुकाय एव तथा सतां विदुषामपि कथा असत्कथा एव कुतः यत् यतो भगवान्न कथ्यते इति अतः स सत्यवाद्यपि मिथ्यावादी प्रियंवदोऽपि कटुभाषी सत्कथकोप्यसत्कथक उच्यते । इति भावः । स्वकल्पितत्वादसत्यपि भगवद्वचश्चेत् तदेव सत्यं महाश्रम-विध्वंसकत्वादमङ्गलमपि तदेव मङ्गलं नान्यत् भगवतः परदारहरणादिकमपुण्यत्वेनाधर्मरुक्तमपि तदेव पुण्यं यतो भगवतो गुणस्यैव नतु दोषस्योदयो यस्मात्तत् ॥ ४८ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

मर्त्यस्य अनित्यलोकस्य परित्यागः ॥ ४२ ॥ युगलक्षणानि तेषु युगलक्षणानुरूपा वृत्तिश्च कलौ नृणाम् उपप्लवः बुद्धि-व्यामोहः त्रिविधा प्राकृतिकी नैमित्तिकी नित्या चेति ॥ ४३–४५ ॥ ब्रुवन्नित्युपलक्षणं शृण्वन्नित्यस्यापि ॥ ४६ ॥ श्रुतोऽनुभावो यस्य सः सङ्कीर्त्यमानः श्रुतानुभावमात्रो वेत्यर्थः । एतदप्युपलक्षणम् "स्मृतो वा ध्यातो वा" इत्यादेः ॥ ४७ ॥ मृषागिरः निरर्थिकाः वाचः असतीः असत्यः असतां कथा यासु ताः यत् यासु भगवान् न कथ्यते सत्यं सफलम् भगवद्गुणानामुदयो यस्मात्तत् ॥ ४८ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

एकादशस्कन्धार्थमाह—विप्रशापेति ॥ ४१ ॥ धर्मविनिर्णयः वर्णाश्रमनिश्चयः ॥ ४२ ॥ मर्त्यपरित्यागः मनुष्य-त्वस्यान्तर्द्धानम् । द्वादशस्कन्धार्थमाह—युगेति । युगलक्षणं तदनुरूपा वृत्तिश्चेत्यर्थः । उपप्लवः उपद्रवः ॥ ४३ ॥ त्रिविधा प्राकृतिकी नैमित्तिकी नित्या चेति ॥ ४४ ॥ ऋषेर्व्यासस्य । विन्यासः अङ्गादिकल्पना । सूर्यस्य व्यूह इति शेषः ॥ ४५ ॥ हे द्विजश्रेष्ठाः । इति चोक्तमिति चकारादन्यदपि वः युष्माभिरिह यदहं पृष्टोऽस्मि तदुक्तमिति । एतच्छ्रवणकीर्त्तनयोर्योग्यतामाह—लीलेति भगवत इति शेषः । सर्वतः । तत्तदर्थकीर्तनद्वारेणेत्यर्थः ॥ ४६ ॥ एतत्कीर्त्तनादिफलमाह—पतितः कूपादिषु स्खलितः सोपानादिषु आर्त्तः रोगादिपीडितः । क्षुत्त्वा क्षुतं कृत्वा । एवं कथञ्चिद्विवशोऽपि यः कश्चिदपि हरये नम इत्युच्चैर्ब्रुवन् सर्वपातकात् मुच्यत इत्यन्वयः ॥ ४७ ॥ भगवाननन्तः सङ्कीर्त्यमानः यद्वा श्रुतोऽनुभावो यस्य सः पुंसां कीर्त्तयतां शृण्वतां च चित्तं प्रविश्य निःशेषं व्यसनं दुरितहेतुकं दुःखं विधुनोति नाशयति हीति सतामनुभवं प्रमाणयति । तत्र दृष्टान्तद्वयमाह—अर्को यथा तमोऽन्धकारं धुनोति तथेति । अतिवातो यथाऽभ्रं धुनोति तथेति च ॥ ४८ ॥

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

यत्रेति । यत्र संवादे अखिलाः आत्मविद्या प्रोक्ताः हि । धर्मविनिर्णयः वर्णाश्रमधर्मस्य विशेषतो निर्णयः प्रोक्तः । ततः आत्मयोगानुभावतः हरेः मर्त्यपरित्यागः प्रोक्तः ॥ ४१ ॥ एवमेकादशार्थमनुक्रम्य द्वादशार्थमनुक्रमते सार्द्धद्वयेन । युगेति । युगलक्षणवृत्तिः युगलक्षणं तदनुरूपा वृत्तिश्चेत्यर्थः । कलौ नृणां उपप्लवः कलिदोषैरुपद्रवश्च, चतुर्विधः प्रलयश्च, प्राकृतिकनैमित्तिक-आत्यन्तिकनित्यरूपेण चतुष्प्रकारः प्रलय इत्यर्थः । तथा त्रिविधा प्राकृतिकी नित्या नैमित्तिकी चेति त्रिप्रकारा उत्पत्तिः ॥ ४२ ॥ देहेति । धीमतः राजर्षेः विष्णुदत्तस्य परीक्षितः देहत्यागश्च, ऋषेर्व्यासस्य शाखाप्रणयनं, मार्कण्डेयस्य सत्कथा, महापुरुषविन्यासः महापुरुषस्याङ्गोपाङ्गादिविन्यासः, जगदात्मनः सूर्यस्य च विन्यासः जगदात्मनो जगद्यात्राप्रवर्त्तनेन नियामकस्य सूर्यस्य गणविभाग इत्यर्थः । प्रोक्तः ॥ ४३ ॥ इतीति । चकारादन्यदपि । हे द्विजश्रेष्ठाः, वो युष्माभिः यत्प्रति अहं पृष्टः अस्मि । तत् इति उक्तम् । इह सर्वशः सर्वाणि हरेः लीलावतारकर्माणि कीर्त्तितानि । उक्तार्थव्याजेन कथितानीत्यर्थः ॥ ४४ ॥ एतत्पुराण-कथनश्रवणफलं वक्तुं भगवत्कीर्त्तनश्रवणानुभावं तावदाह । पतित इति । पतितः उच्चप्रदेशादेः कूपादिषु, स्खलितः लोष्टोपघातादेः सोपानादिषु च, आर्त्तः आमयादिना दुःखितः वा चार्थे । क्षुत्त्वा क्षुतं कृत्वा विवशः जनः उच्चैरुच्चशब्देन हरये श्रीहरिकृष्णभगवते नमः इति ब्रुवन्, सर्वपातकात् सर्वतो भयादिति वा पाठः । मुच्यते ॥ ४५ ॥ संकीर्त्यमान इति । अनंतोऽपारगुणचरित्रमहिमः भगवान् साक्षात्परमेश्वरः, संकीर्त्यमानः श्रुतोऽनुभावो यस्य तथाभूतो वा सन् पुंसां संकीर्त्तयतां, शृण्वतां च जनानां चित्तं प्रविश्य, अर्कः सूर्यः तमः यथा, अतिवातः अभ्रं मेघं इव, अशेषं व्यसनं दुःखं तद्धेतुं वा, विधुनोति नाशयति ॥ ४६ ॥ किंच भगवतः संकीर्त्तनमेव महाफलं तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपञ्चयति चतुर्भिः । मृषा गिर इति । यत् यत्र भगवान् अधोक्षजः न कथ्यते न प्रतिपाद्यते ताः मृषा गिरः मिथ्या वाचः । प्रत्युत ता असतीरसत्य असती कथा यासु ताः, अतो दोषावहा इति शेषः । यद्भगवद्गुणानामुदयः प्रकाशो यस्मिंस्तथाविधं वचः तदेव वचः सत्यं तदेव । उ इति संबोधने, ह इति हर्षे । मङ्गलं मङ्गलावहं, तदेव पुण्यं पुण्यावहं हि ॥ ४७ ॥ तदेवेति । तदेव रम्यं रमणीयं रुचिरं रुचिजनकं, अत एव नवं नवं तदेव शश्वत् सदा मनसः महोत्सवं महानन्दकरं, नृणां शोकार्णवशोषणम् किं तत्तत्राह । यद्यत्र उत्तमश्लोकस्य भगवतः यशः अनुगीयतेऽनुवर्ण्यते, भगवद्गुणोदयमित्युक्तत्वेऽपि आदरात् पुनः कथनम् ॥ ४८ ॥

## हिन्दी अनुवाद

शौनकादि ऋषियों ! ग्यारहवें स्कन्ध में इस बात का वर्णन हुआ है कि भगवान् ने ब्राह्मणों के शाप के बहाने किस प्रकार यदुवंश का संहार किया। इस स्कन्ध में भगवान् श्रीकृष्ण और उद्धव का संवाद बड़ा ही अद्भुत है ॥ ४१ ॥ उसमें सम्पूर्ण आत्मज्ञान और धर्म-निर्णय का निरूपण हुआ है और अन्त में यह बात बतायी गयी है कि भगवान् श्रीकृष्णने अपने आत्मयोग के प्रभाव से किस प्रकार मर्त्यलोक का परित्याग किया ॥ ४२ ॥ बारहवें स्कन्ध में विभिन्न युगों के लक्षण और उनमें रहनेवाले लोगों के व्यवहार का वर्णन किया गया है तथा यह भी बतलाया गया है कि कलियुग में मनुष्यों की गति विपरीत होती है। चार प्रकार के प्रलय और तीन प्रकार की उत्पत्ति का वर्णन इसी स्कन्ध में है ॥ ४३ ॥ इसके बाद परम ज्ञानी राजर्षि परीक्षित् के शरीरत्याग की बात कही गयी है। तदनन्तर वेदों के शाखा-विभाजन का प्रसङ्ग आया है। मार्कण्डेयजी की सुन्दर कथा, भगवान् के अङ्ग-उपाङ्गों का स्वरूपकथन और सबके अन्त में विश्वात्मा भगवान् सूर्य के गणों का वर्णन है ॥ ४४ ॥ शौनकादि ऋषियो ! आप लोगों ने इस सत्सङ्ग के अवसर पर मुझसे जो कुछ पूछा था, उसका वर्णन मैंने कर दिया। इसमें सन्देह नहीं कि इस अवसर पर मैंने हर तरह से भगवान की लीला और उनके अवतार-चरित्रों का ही कीर्तन किया है ॥ ४५ ॥ जो मनुष्य गिरते-पड़ते, फिसलते, दुःख भोगते अथवा छींकते समय विवशता से भी ऊँचे स्वर से बोल उठता है—'हरये नमः', वह सब पापों से मुक्त हो जाता है ॥ ४६ ॥ यदि देश, काल एवं वस्तु से अपरिच्छिन्न भगवान् श्रीकृष्ण के नाम, लीला, गुण आदि का सङ्कीर्तन किया जाय अथवा उनके प्रभाव, महिमा आदि का श्रवण किया जाय तो वे स्वयं ही हृदय में आ विराजते हैं और श्रवण तथा कीर्तन करने वाले पुरुष के सारे दुःख मिटा देते हैं—ठीक वैसे ही, जैसे सूर्य अन्धकार को और आँधी बादलों को तितर-बितर कर देती है ॥ ४७ ॥ जिस वाणी के द्वारा घट-घटवासी अविनाशी भगवान् के नाम, लीला, गुण आदि का उच्चारण नहीं होता, वह वाणी भावपूर्ण होने पर भी निरर्थक है—सारहीन है, सुन्दर होने पर भी असुन्दर है और उत्तमोत्तम विषयों का प्रतिपादन करनेवाली होने पर भी असत्कथा है। जो वाणी और वचन भगवान् के गुणों से परिपूर्ण रहते हैं, वे ही परम पावन हैं, वे ही मङ्गलमय हैं और वे ही परम सत्य हैं ॥ ४८ ॥

तदेव रम्यं रुचिरं नवं नवं तदेव शश्वन्मनसो महोत्सवम्।
तदेव शोकार्णवशोषणं नृणां यदुत्तमश्लोकयशोऽनुगीयते ॥ ४९ ॥
न यद्[1] वचश्चित्रपदं हरेर्यशो जगत्पवित्रं प्रगृणीत कर्हिचित्।
तद्ध्वाङ्क्षतीर्थं न तु हंससेवितं यत्राच्युतस्तत्र हि साधवोऽमलाः ॥ ५० ॥
तद्[2] वाग्विसर्गो जनताघविप्लवो यस्मिन्प्रतिश्लोकमबद्धवत्यपि।
नामान्यनन्तस्य यशोऽङ्कितानि यच्छृण्वन्ति गायन्ति गृणन्ति साधवः ॥ ५१ ॥
नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्।
कुतः पुनः शश्वदभद्रमीश्वरे न ह्यर्पितं कर्म यदप्यनुत्तमम् ॥ ५२ ॥
यशःश्रियामेव परिश्रमः परो वर्णाश्रमाचारतपःश्रुतादिषु।
अविस्मृतिः श्रीधरपादपद्मयोर्गुणानुवादश्रवणादिभिर्हरेः ॥ ५३ ॥
अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि शमं तनोति च।
सत्त्वस्य शुद्धिं परमात्म[4]भक्तिं ज्ञानं च विज्ञानविरागयुक्तम् ॥ ५४ ॥
यूयं द्विजाग्र्या बत भूरिभागा यच्छश्वदात्मन्यखिलात्मभूतम्।
नारायणं देवम[5]देवमीशमजस्रभावा भजताविवेश्य ॥ ५५ ॥
अहं च संस्मारित आत्मतत्त्वं श्रुतं पुरा मे परमर्षिवक्त्रात्।
प्रायोपवेशे नृपतेः परीक्षितः सदस्यृषीणां महतां च शृण्वताम् ॥ ५६ ॥

---

१, तद्। २. स। ३. सं०। ४. परमात्म। ५. मनन्यमी०।

## कृष्णप्रिया व्याख्या

अन्वयः—यत् उत्तमश्लोकयशः अनुगीयते यत् एव रम्यं रुचिरं नवं नवं तत् एव शश्वत् मनसः महोत्सवं तत् एव नृणां शोकार्णवशोषणम् ॥ ४९ ॥ चित्रपदं ( यत् वचः ) जगत्पवित्रं हरेः यशः कर्हिचित् न प्रगृणीत तत् वचः ध्वांक्षतीर्थं न तु हंससेवितं यत्र अच्युतः तत्र हि अमलाः साधवः ॥ ५० ॥ सः वाग्विसर्गः जनताघसम्प्लवः यस्मिन् अवद्धवति अपि प्रतिश्लोकम् अनन्तस्य यशोऽङ्कितानि नामानि यत् साधवः शृण्वन्ति गायन्ति गृणन्ति ॥५१॥ नैष्कर्म्यम् निरञ्जनम् अपि अच्युतभाववर्जितं ज्ञानम् अलं न शोभते शश्वत् अभद्रम् अनुत्तमं कर्म ईश्वरे न अर्पितं कुतः पुनः ( शोभेत ) ॥ ५२ ॥ वर्णाश्रमाचारतपःश्रुतादिषु परः परिश्रमः यशः श्रियाम् एव ( हेतुः ) हरेः गुणानुवादश्रवणादिभिः श्रीधरपादपद्मयोः अविस्मृतिः ॥ ५३ ॥ कृष्णपदारविन्दयोः अविस्मृतिः अभद्राणि क्षिणोति शमं तनोति सत्त्वशुद्धिं परमात्मभक्तिं विज्ञानविरागयुक्तं ज्ञानं ( तनोति ) ॥ ५४ ॥ द्विजाग्र्याः अजस्रभावाः यूयं यच्छश्वद्दात्मनि नारायणम् अखिलात्मभूतं देवम् अदेवम् ईशम् ( चित्ते ) आविवेश्य भजत ( अतः ) बत भूरिभागाः ॥ ५५ ॥ पुरा परीक्षितः नृपतेः प्रायोपवेशे महतां शृण्वताम् ऋषीणां सदसि परमर्षिवक्त्रात् मे श्रुतम् आत्मतत्त्वम् ( भवत्प्रश्नेन ) अहं संस्मारितः ॥ ५६ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

नवं नवं यथा भवति तथा रुचिरं रुचिप्रदम्। महानुत्सवो यस्मात् ॥ ४९ ॥ चित्राणि पदानि यस्मिन्। तदपि जगत्पवित्र-यतीति तथा तद्धरेर्यशो न प्रगृणीत न वर्णयेत्तद्वचो ध्वांक्षतीर्थं काकतुल्यनराणां रतिस्थानं न तु हंसैर्ज्ञानिभिः सेवितम्। तत्र हेतुः यत्रेति ॥ ५० ॥ स वाग्विसर्गः स एव वाचः प्रयोगो जनताघसंप्लवो जनसमूहाघनाशकः। यद्यस्मात्तान्येवान्यैः कीर्त्यमानानि शृण्वंति श्रोतरि सति गायंति नोचेत्स्वयमेव गृणंति ॥ ५१ ॥ इदानीं ज्ञानकर्मादरादपि भगवत्कीर्तनादिष्वेवादरः कर्तव्य इत्याह त्रिभिः। नैष्कर्म्यं ब्रह्म तत्प्रकाशकं यज्ज्ञानं यतो निरंजनमुपाधिनिवर्तकं तदप्यच्युतभक्तिवर्जितं चेन्न शोभते नापरोक्षपर्यंतं भवतीत्यर्थः। ईश्वरे न चेदर्पितं तर्हि यदनुत्तमं सर्वोत्तममपि कर्म तदपि पुनः कुतः शोभते यतः शश्वत्साधनकाले फलकाले चाभद्रं दुःखात्मकम् ॥ ५२ ॥ किंच। वर्णाश्रमाचारादिषु यः परो महान् परिश्रमः स यशोयुक्तायां श्रियामेव। कीर्तिः संपत्तिश्च केवल परः पुरुषार्थ इत्यर्थः। गुणानुवादादिभिस्तु श्रीधरपादपद्मयोरविस्मृतिर्भवति ॥ ५३ ॥ ततः किमत आह अविस्मृतिरिति। क्षिणोति नाशयति ॥ ५४ ॥ अथेदानीं श्रोतॄनात्मानं चाभिनंदन्नाह यूयमिति द्वाभ्याम् हे द्विजाग्र्याः। यद्यस्मादात्मन्यंतःकरणे श्रीनारायण-माविवेश्य शश्वद्भजत। संभावनायां लोट्। अतो भूरिभागाः बहुपुण्याः। कथंभूतम्। अखिलात्मभूतं सर्वांतर्यामिणम्। अत एव देवं सर्वोपास्यम्। अदेवं न देवोऽन्यो यस्य तम्। कुतः। ईशम्। यद्वा। यस्माद्यूयं भूरिभागाः तपआदिसंपन्नाः ततो नारायणं भजतेति विधिः ॥ ५५ ॥ मे मया श्रुतम् ॥ ५६ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

अरम्यमपि प्रसेनमार्गानुगमनभल्लुकबिलप्रवेशादि, रम्यमेव। रुचिरमिति—भक्तानामरोचकमपि श्रीजानकीत्यागादि रुचिरमेवेति। पुरातनमपि भगवच्चरितं नवंनवमेव। मारीचानुगमनोत्तरं श्रीजानकीहरणं रावणकृतं मनसो महोत्सवनाशकमपि महोत्सवकरमेव। पतिपुत्रादिवैराग्योत्पादकत्वेन शोकार्णवमपि तच्छोकार्णवतारकमेव ॥ ४९ ॥ तत्र हंसाऽसेवने। पद्यानीमानि व्याख्यातचराण्येव। न यद्वच इत्यादि पद्यत्रयं भक्तेरुत्कर्षोऽख्यापनार्थमेव महापुराणस्यास्य प्रथमेऽपि शेषेऽपि स्थापितम्। यथा महामंत्रः कश्चिदाद्यंतवर्तिना बीजद्वयेन त्रयेण च पुटितः स्यात् ॥ ५०–५१ ॥ इत्यर्थ इति—'श्रेयःसृतिं भक्तिमुदस्य' इत्याद्युक्तेरयं भावः ॥ ५२ ॥ ननु वर्णाश्रमाचारादिना निःश्रेयसं स्यादेव "वर्णाश्रमाचारयुतो गृहस्थोपि विमुच्यते" इति स्मृतेरतोऽच्युतभावेन किमित्यत आह—किञ्चेति। इत्यर्थ इति—कीर्तिसंपत्त्योः सत्योरपि हरिस्मृतिं विनाऽऽत्यंतिकश्रेयो न सिद्ध्यतीति भावः। सापि कथं स्यात्तत्राह—हरेर्गुणानुवादेति। आदिना स्मरणादिग्रहः। वर्णाऽऽश्रमधर्मादिषु यः परमो महान्परिश्रमः स यशोयुक्तायां श्रियामेव पर्याप्तः प्रायो भवेन्न भगवद्भक्तिसाधकः, हरेर्गुणानुवादश्रवणादिभिस्तु यः परिश्रमः स तु न विस्मृतिः श्रीधरपादपद्मयोर्य-स्मात्तादृश इत्यर्थः ॥५३॥ ततः कृष्णपदारविंदास्मृतेः। सत्त्वस्यांतःकरणस्य "सत्त्वं द्रव्ये गुणे जीवे धैर्यांतःकरणे तथा" इति निरुक्तिः। ज्ञानमनुभवः। ज्ञानं परोक्षम् ॥ ५४ ॥ हरिभजनमेव द्विजाग्र्यापादकमित्यभिप्रेत्याह—द्विजाग्र्या इति। अत एव सर्वांतर्यामित्वादेव। अदेवत्वे हेतुः—ईशमिति। विध्यर्थेऽपि लोटो विधानादाह—यद्वेति। 'अवश्यभावाः' इति पाठे तु न वश्यस्ततो निवर्तयितुमशक्यो भाव आत्मा बुद्धिरिति यावत्, येषां त इत्यर्थः ॥ ५५ ॥ आत्मनस्तत्त्वं स्वरूपम् ॥ ५६ ॥

## अन्वितार्थप्रकाशिका

तदेवेति । यत यस्मिन् उत्तमश्लोकयशोऽनुगीयते तदेव नवं नवं यथा भवति तथा रम्यमित्यादि । यथा अरम्यमपि प्रसेनमार्गानुगमनभल्लूकबिलप्रवेशादिकं रम्यमेव भक्तानामरोचकमपि जानकीत्यागादिकं रुचिरमेव । पुरातनमपि भगवच्चरितं नवं नवमेव । रावणकृतसीताहरणादिकं मनसो दुःखकरमपि महोत्सवकरमेव । पतिपुत्रादिवैराग्योत्पादकत्वेन शोकार्णवशोषणमेव ॥ ४९ ॥ न यद्वच इति श्लोकत्रयम् । भक्तेः सर्वोत्कर्षख्यापनाय महापुराणस्यास्य प्रथमेऽपि शेषेऽपि स्थापितम् । यथा महामन्त्रस्याद्यन्तयोः संपुटबीजत्रयम् । नेति । चित्राणि पदानि यस्मिंस्तथाभूतमपि यद्वचो जगत्पवित्रत्वहेतुं हरेर्यशो न प्रगृणीत न वर्णयेत् । तद्ध्वाङ्क्षतीर्थं काकतुल्यानां कामिनां रतिस्थानं न तु हंसैः विवेकिभिः सेवितं यतः यत्राच्युतस्तत्रैवामलाः साधवः ॥ ५० ॥ स इति । स एव वाग्विसर्गो वाचःप्रयोगो जनसमूहाघनाशकः यस्मिन् अबद्धवत्यपि अप्रभ्रंशशब्दयुक्तेऽपि प्रतिश्लोकमनन्तस्य यशोऽङ्कितानि नामानि भवन्ति । यत् यस्मात् साधवस्तमेव शृण्वन्ति श्रोतरि कीर्त्तयन्ति स्वयं च गायन्ति ॥ ५१ ॥ नैष्कर्म्यं कर्मासाध्यं ब्रह्म तत्प्रकाशकं निरञ्जनं सर्वोपाधिनिवर्तकं यत् ज्ञानं तदप्यच्युतभक्तिवर्जितं चेत् तर्हि अलं न शोभते अपरोक्षपर्यन्तं न भवति । यत् शश्वत् साधनकाले फलकाले च अभद्रं दुःखप्रदमनुत्तमं सर्वोत्तमतयाऽभिमतमपि कर्म ईश्वरे चेन्नैवार्पितं तदा पुनः कुतः शोभेतेत्यन्वयः ॥ ५२ ॥ यश इति । यो वर्णाश्रमाचारतपःश्रुतादिषु परो महान् परिश्रमः स यशोयुक्तायां श्रियामेव पर्याप्तः कीर्त्तिसंपदावेव तस्य फलम् इति भावः । यद्वा । षष्ठीयम् । यशःश्रियामेव हेतुः न तु भगवत्प्राप्तेः । यद्वा । यशःश्रियामेव हेतुर्यो वर्णाश्रमाचारादिषु अभ्यासः स परो महान् परिश्रम एवेति यशःश्रियोः क्षयिष्णुत्वेन परपुरुषार्थत्वाभावात् हरेर्गुणानुवादादिभिस्तु यः परिश्रमः स तु श्रीधरस्य तस्य पादपद्मयोरविस्मृतिः न विस्मृतिर्यस्मात् तादृशो भवति ॥५३॥ अविस्मृतिरिति । कृष्णपदारविन्दयोरविस्मृतिः अभद्राणि पापानि क्षिणोति नाशयति । शमं शान्तिं सत्त्वस्यान्तःकरणस्य शुद्धिमित्यादीनि तनोति च ॥ ५४ ॥ यूयमिति । हे द्विजाग्र्याः ! अजस्रभावा निरन्तरभक्तिमन्तो यूयं यत् यस्मात् आत्मनि स्वान्तःकरणे श्रीनारायणमखिलात्मभूतं सर्वान्तर्यामिणमत एव देवं सर्वोपास्यम् अत एव अदेवं न देवोऽन्यो भजनीयो यस्य तमीशमाविवेश्य चित्ते प्रवेश्य शश्वत् भजत । संभावनायां लोट् । अतो भूरिभागाः बहुपुण्याः । यद्वा । यूयं यतो भूरिभागाः तपआदिसंपन्नाः ततो नारायणं भजतेति विधिः ॥ ५५ ॥ अहं चेति । पुरा परीक्षितो नृपतेः प्रायोपवेशकाले महताम् ऋषीणां शृण्वतां सतां सदसि परमर्षेः शुकस्य वक्त्रान्मे मया श्रुतम् आत्मतत्त्वप्रकाशकं पुराणं भवत्प्रश्नेनाहं स्मारितः । अतः कृतार्थोऽस्मीत्याशयः ॥ ५६ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

चित्रपदमपि भगवत्कीर्त्तनवर्जितं वचो न शोभते किं तद्ध्वाङ्क्षतीर्थं न वर्णानां यतो नैष्कर्म्यसेव्यं हंसशब्दो निर्मलपुरुषपरः वाग्विसर्गः वाचामुच्चारणं जनताघविप्लवः विप्लवहेतुः ॥ ५०–५१ ॥ नैष्कर्म्यं ज्ञाननिष्ठा तदपि भगवद्भक्तिरहितं चेत् निरञ्जनतया न शोभते किन्तु ज्ञानानां मलरूपं निष्कृष्टं श्रीभगवति ईश्वरेऽनर्पितं कर्म न शोभते इति किं पुनर्न्यायसिद्धम् ॥ ५२ ॥ वर्णाश्रमाचारादिषु परिश्रमो यत्कीर्त्तनादेः प्रकृष्टस्यार्थस्याऽतिशुद्धिः रजस्तमोराहित्यं ज्ञानं प्रकारिज्ञानं प्रकारज्ञानं तदेवम् अत्र पाठान्तरव्याख्या च यस्याराधनीयो देवो नास्ति तमवश्यभावा विषयान्तरेषु अवश्यमनसः आत्मन्यधिनिवेश्येत्यन्वयः ॥ ५३–५७ ॥

## श्रीमद्वीरराघवव्याख्या

रमणीयं नवं नवं रुचिरं रुचिजनकं तदेव शश्वत् सदा मनसो महोत्सवं महानन्दकरं शोकार्णवस्य शोषणं किं तत् यद्यत्र उत्तमश्लोकस्य भगवतो यशोऽनुवर्ण्यते भगवद्गुणादयमित्युक्तत्वेप्यादरात्पुनरुक्तम् ॥ ४९ ॥ एतदेव भङ्ग्यन्तरेणाह द्वाभ्याम्—नेति । यद्वचः चित्राणि पदानि यस्मिंस्तथाभूतमपि जगत्पवित्रं हरेर्यशः कीर्त्तिं न वक्ति न प्रतिपादयति तद्वचः ध्वाङ्क्षतीर्थं काकतुल्यानां कामिनां रतिस्थानं नतु हंससदृशैर्ज्ञानिभिः सेवितं तत्र हेतुः यत्र प्रबन्धैः अच्युतः प्रतिपाद्य इति शेषः तत्रैव ह्यमलाः निर्मलान्तःकरणाः साधवः रमन्त इति शेषः ॥ ५० ॥ तद्वाग्विसर्गः स एव वाचः प्रयोगः जनतायाः जनसमूहस्य अघविप्लवः पापविनाशककोसौ यस्मिन् वाग्विसर्गे प्रतिश्लोकमबद्धवत्यप्यवद्धप्रयुक्तेप्यनन्तस्य भगवतो यशस अङ्कितानि यशःप्रकाशकानि नामानि वर्त्तन्ते यत एवमतः साधवः तद्वाग्विसर्गम् । शृण्वन्ति वक्तृसान्निध्ये श्रोतृसान्निध्ये सति कथयन्ति तदुभयविरहे केवलं गायन्तीत्यर्थः ॥ ५१ ॥ विशुद्धज्ञानयोगनिष्ठापि भगवद्गुणादिश्रवणादिविधुरा न शोभते किम्पुनः कर्मयोगनिष्ठेत्याह—नैष्कर्म्यमिति । निर्गतं कर्म यस्मात्तन्निष्कर्म तदेव नैष्कर्म्यम् सकलकर्मबन्धविध्वंसकमित्यर्थः तन्निरञ्जनं प्रकृतिसम्बन्धध्वंसकमत एव निर्मलं ज्ञानमप्यच्युतभाववर्जितमच्युतगुणानुश्रवणाद्यभिसन्धिविधुरं चेदलं नितरां न शोभते ततः प्रच्युतिसम्भावनयेति भावः । यतो ज्ञानमेवालं न शोभते कुतः पुनः कर्म शोभेत कथम्भूतम् ईश्वरे नचार्पितं नार्पितमत एव शश्वत्सदा अभद्रमनुष्ठानदशायां च पतनशङ्कया दुःखावहं किम्बहुना यदप्यनुत्तमं सर्वोत्तममपि कर्म कुतः पुनः शोभेत अहैतुकमिति पाठे अनभिसंहितफलमपीत्यर्थः ॥ ५२ ॥ किञ्च यशःश्रियामिति

ययुशोक्ता या श्रीः सम्पत्तस्यां निमित्तभूतायां तदर्थमित्यर्थः। यो वर्णाश्रमधर्मः तपोऽध्ययनादिषु निष्ठाविशेष इति शेषः। स परो महान् परिश्रमः परिश्रमफलक एव यशःश्रियोः क्षयिष्णुत्वेन पुरुषार्थाभासत्वादिति भावः। तर्हि तस्य किं फलमित्यत्राह—गुणानुवादश्रवणादरादिभिः श्रीधरपादपद्मयोरविस्मृतिः यदि वर्णाश्रमाचारादिषु निष्ठा तर्हि तथा भगवद्गुणानुवादादिभिर्भवितव्यं ततस्तत्पादपद्मयोरविस्मृत्या एवं चेत्तन्निष्ठा सफलेत्यर्थः ॥ ५३ ॥ किमविस्मृत्येत्यत आह—अविस्मृतिरिति। अभद्राणि दुःस्वप्ननिमित्तानि दुरितानि धुनोति शमं शान्तिं रागाद्यकलुषितां च तनोति सत्वस्य शुद्धिं रजस्तमोभ्यामनविमृतिं सत्त्वगुणाभिवृद्धिम् इति यावत्। तत् ततः परमां भक्तिं प्रेमलक्षणाम् ज्ञानम् यथावस्थितभगवत्स्वरूपज्ञानम् विज्ञानेन प्रकारज्ञानेन विरागेण तदितरविषयान्तरवैमुख्येन च युक्तं तनोतीत्यनुषङ्गः ॥ ५४ ॥ यतो भगवद्गुणानुवादादिर्महाफलस्ततो यूयमहं च कृतार्थौ बभूविमेत्याह द्वाभ्याम्—यूयमिति। हे द्विजाग्र्याः! यूयम् भूरिभागाः महाभाग्यवन्तः कुतः यद्यतः अबाह्यभाजः न बाह्यानि विषयान्तराणि भजन्तीति अबाह्यभाजः बाह्यविषयचिन्तारहिता इत्यर्थः। नारायणमात्मनि हृदये अभिनिवेश्य तद्गुणश्रवणादि द्वारा मनसि स्थिरं कृत्वा अभजत लङ् मध्यमैकवचनं कथम्भूतमखिलानाम् अन्तरात्मभूतं देवम् स्वतेजसा दीप्यमानम् अदेवं यस्याराधनीयो देवो नास्ति इति तमत एव ईश सर्वनियन्तारम् ॥ ५५ ॥ यूयं महोपकर्त्तार इत्यभिप्रेत्याह—अहमिति। युष्माभिः सस्मारितम् आत्मतत्त्वमात्मतत्त्वप्रकाशकं पुराणं यस्य सोऽहं च कृतार्थ इति भावः स्मृतेरनुभूतविषयज्ञानात्मकत्वात् क्वेदम् श्रुतं त्वयेत्यत्राह—श्रुतमिति। मे मया महर्षिवक्त्राच्छ्रीशुकमुखान्महताम् ऋषीणां च शृण्वतां सतां परीक्षितः प्रायोपवेशे सभायाम् मया श्रुतमिति सम्बन्धः ॥ ५६ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पुनरपि स्तौति—तदेवेति। तदेव पुण्यं पुण्यकरं रुचिरं सुन्दरं महानुत्सवो येन तत्तथा ॥ ४९ ॥ न यद्वच इत्यादिश्लोकत्रयं व्याख्यातार्थम् ॥ ५०–५२ ॥ ननु, वर्णाश्रमाचारादिना निःश्रेयसं स्याद्वर्णाश्रमाचारयुतो गृहस्थोऽपि विमुच्यत इत्यतोऽच्युतभावेन किं तत्राह—यश इति। यद्यच्युतभाववर्जि स्तर्हि वर्णाश्रमाचारतपःश्रुतादिषु परः परिश्रमः यशःश्रियामेवार्थे न त्वात्यन्तिकसिद्ध्यै भवति। ननु, अच्युतभावः केन स्यादत्राह—अविस्मृतिरिति। गुणानुवादश्रवणादिभिरुद्भूताच्युतभक्तेः पुंसः श्रीधरपादपद्मयोरविस्मृतिः निरन्तराभ्यासलक्षणं स्मरणं भवति ॥ ५३ ॥ सा कर्तुः किङ्करोति फलमित्याह—अविस्मृतिरिति। सत्त्वस्यान्तःकरणस्य ॥ ५४ ॥ यूयमेवाबाह्यभावा अनन्यभक्ताः अदेवं देवेभ्योऽन्यं नारायणं देवमात्मनि मनस्यधिवेश्य भजतेति यद्यस्मात्तस्माद्भूरिभागा अति भाग्यवन्तः ॥ ५५ ॥ अहञ्च भूरिभाग इति ध्वनयति—अहञ्चेति, भवद्भिरहञ्चात्मतत्त्वं संस्मारितः ममापीदमात्मतत्त्वमाम्नायतः, प्राप्तमित्याह—श्रुतमिति। प्रसङ्गोऽप्यनुकूल इत्याह—प्रायेति ॥ ५६–५७ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

न यदिति। यत्राच्युतो गीयत इति शेषः ॥ ५० ॥ स वाग्विसर्ग इति प्रथमे व्याख्यातमेव उत्तमगायके सति शृण्वन्ति स्वस्य तु तादृशत्वे सति गायन्ति तदुभयाभावे शृण्वन्ति गीर्मात्रेणाभ्यसन्ति चेत्यर्थः ॥ ५७ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

अरम्यमपि प्रसेनमार्गानुगमनभल्लूकबिलप्रवेशादिकं यत् तत् रम्यमेव रुचिरमिति भक्तानामरोचकमपि श्रीजानकीत्यागादिकं रुचिरमेव पुरातनमपि भगवच्चरित्रं नवं नवमेव मारीचानुगमनानन्तरम् रावणकृतसीताहरणादिकं मनसो महोत्सवनाशकमपि महोत्सवकरमेव पतिपुत्रादिवैराग्योत्पादकत्वेन शोकार्णवकरमपि तत् शोकार्णवशोषणमेव ॥ ४९ ॥ न यद्वच इति श्लोकत्रयम् भक्तेरेव सर्वोत्कर्षे ख्यापकं महापुराणस्यास्य प्रथमेऽपि शेषेऽपि स्थापितं यथा महामन्त्रः कश्चिदाद्यन्तवर्त्तिना बीजत्रयेण पुटितस्स्यादिति ॥ ५०–५१ ॥ अनुत्तमं श्रेष्ठं निष्कामकर्म ॥ ५२ ॥ किञ्च, वर्णाश्रमादिषु यः परो महान् परिश्रमः स यशोयुक्तायाम् श्रियामेव पर्याप्तः प्रायो भवेत् यशःसम्पत्तिसाधक एव न तु भगवत्प्राप्तिसाधक इत्यर्थः। हरेर्गुणानुवादश्रवणादिभिस्तु यः परिश्रमः स तु श्रीधरपादपद्मयोरविस्मृतिर्न भवति विस्मृतिर्यस्मात् सः ॥ ५३ ॥ ततः किमत आह—अविस्मृतिरिति। शुभं बुद्धेर्भगवन्निष्ठातां "शमो मन्निष्ठता बुद्धेः" इति भगवदुक्तेः ॥ ५४ ॥ तदेवं न विद्यते देवो यस्य यस्मादिति वा भजतेति सम्भावनायां लोट् ॥ ५५–६१ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

तत् वचः एव रम्यत्वादिगुणवत् यत् यस्मिन् वचसि ॥ ४९ ॥ जगत्पवित्रयतीतितत्तथाध्वाङ्क्षतीर्थंनराकारकाकसेवितम् ॥ ५० ॥ वाग्विसर्गः स एव वाचकः प्रयोगः ॥ ५१ ॥ निर्गतानि कर्माणि यस्मात्तन्निष्कर्म तदेव नैष्कर्म्यं केवलक्षेत्रज्ञविषयकं ज्ञानम् निरञ्जनं सर्ववासनाशून्यम् तदप्यच्युतभावेन "देहेन्द्रियमनोबुद्धिप्राणादिभ्यो विलक्षणः" ज्ञानस्वरूपः ज्ञातृत्वादिधर्मकः क्षेत्रज्ञोऽच्युतात्मकः अतोच्युतः उपाश्रयणीय इत्येवम्भूतेन वर्जितं चेन्न शोभते यदनुत्तमं नास्त्युत्तमं यस्मात्तदनुत्तमं

निष्कामं कर्मापीश्वरेऽनर्पितं चेत्तदपि न शोभत यथा तदा शश्वदभद्रं काम्यं कर्म कुतः शोभते न कुतोऽपीत्यर्थः ॥ ५२ ॥ किञ्च, वर्णाश्रमाचारादिषु परः भगवत्सम्बन्धवर्जितो यः पारश्रमः यशोयुक्तायाः श्रियाः सपद्येव चरितार्थो भवति दुःखोदर्कफलो भवतीत्यर्थः । हरेर्गुणानुवादादिभिस्तु श्रीधरपादपद्मयोरविस्मृतिः स्यात् ॥ ५३ ॥ अविस्मृतिफलमाह—अविस्मृतिरिति । शमं श्रीकृष्णप्राप्तिसुखम् ॥ ५४ ॥ देवं सर्वद्योतकमदेवमनन्यद्योत्यम् यतः भजत अतो भूरिभागाः ॥ ५५ ॥ आत्मा सर्वात्मा भगवान् तत्त्वमुपादेयो यस्मिन् तत्पुराणं मे मया परमर्षेः श्रीशुकस्य वक्त्रात् अधुना तु भवद्भिरहं संस्मारितः स्मृतात्मतत्त्वः कृतः ॥ ५६ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

भगवत्कीर्तनमेव महाफलं तद्व्यतिरिक्तं सर्वं मिथ्यालापमात्रमिति प्रपञ्चयति—मृषा गिर इति चतुर्भिः । यत् यासु भगवान् अधोक्षजो न कथ्यते । असतां विषयासक्तानामेव कथा यासु ता हि गिरः वाचः मृषा निष्फलाः असतीः असत्यश्च नरकहेतुत्वात् । भगवद्गुणानामुदयः प्रकाशो यस्मात् तदेव वचः सत्यं सफलम् । यतः तदेव मङ्गलं शुभकरम् । यतस्तदेव पुण्यावहम् । नात्र सन्देह इत्याह—उहेति ॥ ४९ ॥ यत् यस्मिन् उत्तमश्लोकस्य यशोऽनुगीयते तदेव रम्यम् । नवं नवं यथा भवति तथा ॥ ५० ॥ चित्राणि पदानि यस्मिंस्तथाभूतमपि यद्वचो जगत्पवित्रहेतुं हरेर्यशो न प्रगृणीत न वर्णयेत् तद्ध्वाङ्क्षतीर्थं काकतुल्यानां रतिस्थानं तु हंसैर्विवेकिभिः सेवितं यतः यत्रेति ॥ ५१ ॥ स एव वाग्विसर्गो वाचः प्रयोगो जनताघसम्प्लवः जनसमूहाघनाशकः । यस्मिन् अबद्धवत्यपि अपभ्रंशशब्दयुक्तेऽपि प्रतिश्लोकमनन्तस्य यशोऽङ्कितानि नामानि भवन्ति । यत् यस्मात् साधवस्तमेव शृण्वन्ति श्रोतरि कीर्त्तयन्ति स्वयं च गायन्ति ॥ ५२ ॥ इदानीं ज्ञानकर्मादरादपि भगवत्कीर्त्तनादिभक्त्याऽऽदर एव कर्त्तव्य इत्याह नैष्कर्म्यमिति । नैष्कर्म्यं कर्मासाध्यं ब्रह्म तत्प्रकाशकं यज्ज्ञानम् । तदुत्कर्षमाह—निरञ्जनं सर्वोपाधिनिवर्त्तकं तदप्यच्युतभक्तिवर्जितं चेत् तर्हि अलं न शोभते अपरोक्षपर्यन्तं न भवति । यत् शश्वत् साधनकाले फलकाले च अभद्रं दुःखप्रदमनुत्तमं सर्वोत्तमतयाऽभिमतमपि कर्म ईश्वरे चेन्नैवार्पितं तदा पुनः कुतः शोभत इत्यन्वयः ॥ ५३ ॥ किञ्च यशोयुक्तायां श्रियां निमित्तभूतायां यो वर्णाश्रमाचारादिषु निष्ठाविशेष इति शेषः । स परो महान् परिश्रम एव केवलं यशःश्रियोः क्षयिष्णुत्वेन परमपुरुषार्थत्वाभावात् । हरेर्गुणानुवादादिभिस्तु श्रीधरस्य तस्य पादपद्मयोरविस्मृतिः निरन्तरा स्मृतिर्भवति ॥ ५४ ॥ तत्स्मृतिफलापेक्षायामाह—अविस्मृतिरिति । अभद्राणि पापानि क्षिणोति नाशयति शमं शान्तिं शान्त्यादीनि तनोति च ॥ ५५ ॥ अथेदानीं श्रोतॄन् तानभिनन्दति—यूयमिति । हे द्विजाग्र्याः अजस्रभावा निरन्तरभक्तिमन्तो यूयं यत् यस्मात् आत्मनि स्वान्तःकरणे श्रीनारायणमखिलात्मभूतं सर्वान्तर्यामिणमतएव देवं सर्वोपास्यम् । अतएव अदेवं न देवोऽन्यो भजनीयो यस्य तमीशमावेश्य शश्वत् भजत । सम्भावनायां लोट् । अतो भूरिभागाः बहुपुण्याः । जन्मान्तरसहस्रेषु योगध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते । अन्यथा तदसम्भवात् ॥ ५६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एतदेव भङ्ग्यन्तरेणाह द्वाभ्याम् । नेति । यत् वचः चित्राणि पदानि यस्मिंस्तथाभूतं सदपि, जगत्पवित्रं हरेः यशः कीर्त्तिं कर्हिचित् न प्रगृणीत, न वक्ति नैव प्रतिपादयति इति यावत्, तद्वचः ध्वाङ्क्षतीर्थं काकतुल्यानां कामिनां रतिस्थानं, न तु हंससेवितं हंससदृशैर्ज्ञानिभिः सेवितं नैव, तत्र हेतुमाह । यत्र प्रबन्धे अच्युतः प्रतिपाद्य इति शेषः । तत्रैव अमलाः निर्मलान्तःकरणाः साधवः, रमते इति शेषः । हि ॥ ४९ ॥ स वागिति । यः जनताया जनसमूहस्य अघविप्लवः पापविनाशकः, सः एव वाग्विसर्गः वाचः प्रयोगः, कथंभूतोऽसौ । यस्मिन् वाग्विसर्गे प्रतिश्लोकं अबद्धतायुक्ते सत्यपि, अनन्तस्य भगवतः यशोङ्कितानि यशसः प्रकाशकानि नामानि वर्त्तन्ते । तथाभूतः यत् यतोऽयमेवंविधोऽतः साधवः तं वाग्विसर्गमिति शेषः । शृण्वन्ति वक्तृसांनिध्ये समाकर्णयन्ति, गृणन्ति श्रोतृसांनिध्ये सति तेषां पुरः कथयन्ति, तदुभयराहित्ये गायन्ति सहजतया तद्गानमेव कुर्वन्तीत्यर्थः ॥ ५० ॥ विशुद्धज्ञाननिष्ठा अपि भगवद्गुणादिश्रवणादिविरहिता न शोभते तर्हि किं पुनः कर्मनिष्ठा इत्याह । नैष्कर्म्यमिति । निर्गतं कर्म यस्मात्तन्निष्कर्म तदेव नैष्कर्म्यं सकलकर्मबन्धविध्वंसकमित्यर्थः । निरञ्जनं प्रकृतिसंबन्धध्वंसकं, नास्ति लो मलो यस्मिंस्तत् अलं, निर्मलमित्यर्थः । सत्यभामायाः भामाशब्देनोपादानादिवन्नामैकदेशोपादानेन नाममात्रग्रहणस्याप्यौचित्यात् । ज्ञानं अपि अच्युतभाववर्जितं भगवद्गुणानुश्रवणाद्यभिसंधिविधुरं चेत्, न शोभते । अलमित्यस्य निर्मलतारूपार्थाकरणे अलं नितरां न शोभते इत्यर्थः । ततः प्रच्युतिसंभावनयेति भावः । यत् यदेवंभूतं ज्ञानमप्यलं न शोभते, तदा ईश्वरे न चार्पितं विनियोगकाले ईश्वराय नार्पणीकृतं अत एव शश्वत् सदा अभद्रमनुष्ठानदशायां फलदशायां च पतनशङ्कया दुःखावहं, अकारणं निर्हेतुकमपि, अनुत्तममित्यपि पाठः । कर्म, कुतः पुनः शोभते हि । न शोभत एवेत्यर्थः ॥ ५१ ॥ यशःश्रियामिति । किं च यशोयुक्ता या श्रीः संपत्तस्यां निमित्त-

भूतायां, तदर्थमित्यर्थः। यः वर्णाश्रमाचारतपःश्रुतादिषु वर्णाश्रमधर्मतपोऽध्ययनादिषु, निष्ठाविशेष इति शेषः। सः परो महान् परिश्रमः एव। यशःश्रियोः क्षयिष्णुत्वेन पुरुषार्थाभासत्वादिति भावः। तर्हि तस्य परमार्थं किं फलं तत्राह हरेः गुणानुवादश्रवणादिभिः, श्रीधरपादपद्मयोः अविस्मृतिः, यदि वर्णाश्रमाचारादिषु निष्ठावत्त्वं तर्हि तथैव भगवद्गुणानुवादादिष्वपि निष्ठावद्भिर्भवितव्यम्। ततस्तत्पादपद्मयोः स्मृतिमद्भिरपि भवितव्यम्। एवं चेत्तदा तन्निष्ठा सफला नान्यथेति भावः॥ ५२॥ ननु किं तु तदविस्मृत्या इत्यत आह। अविस्मृतिरिति। कृष्णपदारविन्दयोः अविस्मृतिः, अभद्राणि दुःखनिमित्तानि दुरितानि क्षिणोति नाशयति। शमं शान्तिं च रागाद्याकलुषतामित्यर्थः। तनोति। सत्त्वस्यान्तःकरणस्य शुद्धिं रजस्तोभ्यामनभिभूतिं सत्त्वगुणाभिवृद्धिमिति यावत्, तनोति। परमात्मभक्तिं प्रेमलक्षणां भगवद्भक्तिं, विज्ञानं प्रकाशज्ञानं च विरागस्तदितरविषयान्तरवैमुख्यं च ताभ्यां युक्तं, ज्ञानं यथावस्थितभगवत्स्वरूपज्ञानं च तनोति॥ ५३॥ यतो भगवद्गुणानुवादिकं महाफलप्रदं ततस्तत्कर्त्तारो यूयमहं च कृतार्था बभूविमेत्याह द्वाभ्याम्। यूयमिति। हे द्विजाग्र्याः, बतेति हर्षे। यूयं भूरिभागाः महाभाग्यवन्तः। कुतः। यद्यतः, न बाह्यानि विषयान्तराणि भजन्तीत्यबाह्यभाजः बाह्यविषयचिंतारहिता इत्यर्थः। अजस्रभावा इति पाठे, अजस्रं निरन्तरं भावो भगवति प्रेम येषां तथाभूताः सन्तः, नास्ति आराधनीयो देवो यस्येत्यदेवस्तं, अखिलात्मभूतं सर्वान्तरात्मानं, ईशं नारायणं देवं, आत्मनि स्वहृदये, आनिवेश्य तद्गुणश्रवणादिद्वारा मनसि स्थिरं कृत्वा, शश्वत् भजत इति विधिः॥५४॥ यूयं तु मम महोपकर्त्तार इत्याह। अहं चेति। नृपतेः परीक्षितः प्रायोपवेशे, जातायामिति शेषः। सदसि महतां ऋषीणां शृण्वतां सतां, मे मया, परमर्षिवक्त्रात् श्रीशुकमुखात्, आत्मनः तत्त्वं जीवेश्वरस्वरूपकथनं यस्मिंस्तत्, पुरा एतत् पुराणं श्रुतं, तच्च अहं संस्मारितः च भवत्कृतप्रश्नतत्प्रत्युत्तरदानादिना तत्स्मारणं कारित एव। अतोऽहमपि कृतार्थ इति भावः। स्मृतेरनुभूतविषयज्ञानात्मकत्वात्॥ ५५॥ एतत्पुराणकीर्त्तनादिफलं प्रपञ्चयत्यष्टभिः। एतदिति कथनीयान्युरूणि अपरिमितानि कर्माणि चेष्टितानि यस्य तस्य, वासुदेवस्य माहात्म्यं माहात्म्यप्रकाशकं, अत एव सर्वाशुभविनाशनं कीर्त्तयतां श्रुतवतां च सर्वामङ्गलविघातकं, एतत् पुराणं, हे विप्राः, वो युष्मभ्यं कथितम्॥ ५६॥

## हिन्दी अनुवाद

जिस वचन के द्वारा भगवान् के परम पवित्र यश का गान होता है, वही परम रमणीय, रुचिकर एवं प्रतिक्षण नया नया जान पड़ता है! उससे अनन्त कालतक मन को परमानन्द की अनुभूति होती रहती है। मनुष्यों का सारा शोक, चाहे वह समुद्र के समान लंबा और गहरा क्यों न हो, उस वचन के प्रभाव से सदा के लिये सूख जाता है॥ ४९॥ जिस वाणी से—चाहे वह रस, भाव, अलङ्कार आदि से युक्त ही क्यों न हो — जगत् को पवित्र करने वाले भगवान् श्रीकृष्ण के यश का कभी गान नहीं होता, वह तो कौओं के लिये उच्छिष्ट फेंकने के स्थान के समान अत्यन्त अपवित्र है। मानससरोवरनिवासी हंस अथवा ब्रह्मधाम में विहार करनेवाले भगवच्चरणारविन्दाश्रित परमहंस भक्त उसका कभी सेवन नहीं करते। निर्मल हृदयवाले साधुजन तो वहीं निवास करते हैं, जहाँ भगवान् रहते हैं॥ ५०॥ इसके विपरीत जिसमें सुन्दर रचना भी नहीं है और जो व्याकरण आदि की दृष्टि से दूषित शब्दों से युक्त भी है, परन्तु जिसके प्रत्येक श्लोक में भगवान् के सुयशसूचक नाम जडे हुए हैं, वह वाणी लोगों के सारे पापों का नाश कर देती है, क्योंकि सत्पुरुष ऐसी ही वाणी का श्रवण, गान और कीर्तन किया करते हैं॥ ५१॥ वह निर्मल ज्ञान भी, जो मोक्ष की प्राप्ति का साक्षात् साधन है, यदि भगवान् की भक्ति से रहित हो तो उसकी उतनी शोभा नहीं होती। फिर जो कर्म भगवान् को अर्पण नहीं किया गया है—वह चाहे कितना हीऊँचा क्यों न हो—सर्वदा अमङ्गलरूप, दुःख देने वाला ही है; वह तो शोभन—वरणीय हो ही कैसे सकता है?॥ ५२॥ वर्णाश्रम के अनुकूल आचरण, तपस्या और अध्ययन आदि के लिये जो बहुत बड़ा परिश्रम किया जाता है उसका फल है—केवल यश अथवा लक्ष्मी की प्राप्ति। परन्तु भगवान् के गुण, लीला, नाम आदि का श्रवण, कीर्तन आदि तो उनके श्रीचरण कमलोंकी अविचल स्मृति प्रदान करता है॥ ५३॥ भगवान् श्रीकृष्ण के चरणकमलों की अविचल स्मृति सारे पाप-ताप अमङ्गलों को नष्ट कर देती और परम शान्ति का विस्तार करती है। उसी के द्वारा अन्तःकरण शुद्ध हो जाता है, भगवान् की भक्ति प्राप्त होती है एवं पर वैराग्य से युक्त भगवान् के स्वरूप का ज्ञान तथा अनुभव प्राप्त होता है॥ ५४॥ शौनकादि ऋषियो! आपलोग बड़े भाग्यवान् हैं। धन्य हैं! क्योंकि आपलोग बड़े प्रेम से निरन्तर अपने हृदय में सर्वान्तर्यामी, सर्वात्मा, सर्वशक्तिमान आदि देव सबके आराध्य देव एवं स्वयं दूसरे आराध्यदेव से रहित नारायण भगवान् को स्थापित करके भजन करते रहते हैं॥ ५५॥ जिस समय राजर्षि परीक्षित् अनशन करके बड़े-बड़े ऋषियों की भरी सभा में सबके सामने श्रीशुकदेवजी महाराज से श्रीमद्भागवत की कथा सुन रहे थे उस समय वहीं बैठकर मैने भी उन्हीं परमर्षि के मुख से इस आत्मतत्त्व का श्रवण किया था। आपलोगों ने उसका स्मरण करा कर मुझपर बड़ा अनुग्रह किया। मैं इसके लिये आपलोगों का बड़ा ऋणी हूँ॥ ५६॥

एतद्वः कथितं विप्राः कथनीयोरुकर्मणः। माहात्म्यं वासुदेवस्य सर्वाशुभविनाशनम् ॥ ५७ ॥
य एतच्छ्रावयेन्नित्यं यामक्षणमनन्यधीः। श्रद्धावान् योऽनुशृणुयात् पुनात्यात्मानमेव सः ॥ ५८ ॥
द्वादश्यामेकादश्यां वा शृण्वन्नायुष्यवान् भवेत्। पठत्यनश्नन् प्रयतस्ततो भवत्यपातकी ॥ ५९ ॥
पुष्करे मथुरायां च द्वारवत्यां यतात्मवान्। उपोष्य संहितामेतां पठित्वा मुच्यते भयात् ॥ ६० ॥
देवता मुनयः सिद्धाः पितरो मनवो नृपाः। यच्छन्ति कामान् गृणतः शृण्वतो यस्य कीर्तनात् ॥ ६१ ॥
ऋचो यजूंषि सामानि द्विजोऽधीत्यानुविन्दते। मधुकुल्या घृतकुल्याः पय कुल्याश्च तत्फलम् ॥ ६२ ॥
पुराणसंहितामेतामधीत्य प्रयतो द्विजः। प्रोक्तं भगवता यत्तु तत्पदं परमं व्रजेत् ॥ ६३ ॥
विप्रोऽधीत्याप्नुयात् प्रज्ञां राजन्योदधिमेखलाम्। वैश्यो निधिपतित्वं च शूद्रः शुद्ध्येत पातकात् ॥ ६४ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—विप्राः कथनीयोरुकर्मणः वासुदेवस्य सर्वाशुभविनाशनम् एतत् माहात्म्यं वः कथितम् ॥ ५७ ॥ नित्यं यामं क्षणं यः एवम् अनन्यधीः श्रद्धावान् श्रावयेत् यः अनुशृणुयात् सः आत्मानम् एव पुनाति ॥ ५८ ॥ द्वादश्याम् एकादश्यां वा शृण्वन् आयुष्यवान् भवेत् ततः प्रयतः अनश्नन् पठति ( सः ) अपातकी भवति ॥ ५९ ॥ पुष्करे मथुरायां द्वारवत्यां च यतात्मवान् उपोष्य एतां संहितां पठित्वा भयात् मुच्यते ॥ ६० ॥ देवताः मुनयः सिद्धाः पितरः मनवः नृपाः यस्य कीर्तनात् गृणतः शृण्वतः ( पुंसः ) कामान् यच्छन्ति ॥ ६१ ॥ द्विजः ऋचः यजूंषि सामानि अधीत्य मधुकुल्याः घृतकुल्याः पयःकुल्याः च अनुविन्दते तत् फलं एतां पुराणसंहिताम् अधीत्य प्रयतः द्विजः ( विन्दते तथा स द्विजः ) भगवता प्रोक्तं यत् परमं पदं तत् व्रजेत् ॥ ६२–६३ ॥ विप्रः ( एतां संहितां ) अधीत्य प्रज्ञां राजन्यः उदधिमेखलां वैश्यः निधिपतित्वम् आप्नुयात् शूद्रः पातकात् शुद्ध्येत ॥ ६४ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

एतत्पुराणकीर्तनादिफलं प्रपंचयितुमाह एतदित्यष्टभिः ॥ ५७ ॥ यामक्षणं यामं क्षणं चेत्यर्थः। आत्मानमेव साक्षात्पुनाति न तु स्नानादिव देहमात्रम् ॥ ५८–६१ ॥ ऋगाद्यधीत्य द्विजो मधुकुल्यादि यदनुविंदते तत्फलमेतां पठित्वा अनुविंदत इति ॥ ६२ ॥ किंच प्रोक्तमिति ॥ ६३ ॥ राजन्य उदधिमेखलां पृथ्वीम्। संधिरार्षः ॥ ६४ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

हे विप्रा इति—यूयं तु विप्रा मत्तोऽप्यधिकतरं जानीथेति भावः। सर्वेषामशुभानां दुष्कर्मफलानां विनाशनं येन तत्तथा "न वासुदेवभक्तानामशुभं विद्यते क्वचित्" इत्युक्तेः ॥ ५७ ॥ एतच्छ्रीमद्भागवतरूपं वासुदेवमाहात्म्यम्। यामश्च क्षणश्चानयोः समाहारो यामक्षणम्। "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। बह्ववकाशे याममात्रं शृणुयादल्पावकाशे तु क्षणमात्रं च शृणुयात्। एतेनास्यावश्यश्रोतव्यता ध्वनियाऽन्यथा कालद्वयविधानानुपपत्तेः। अत एवांबरीषं प्रति श्रीगौतमेनोक्तम्—"अंबरीष शुकप्रोक्तं नित्यं भागवतं शृणु। पठस्व स्वमुखेनापि यदीच्छसि भवक्षयम्।" इति। अनन्यधीः स्थिरचित्तः। आत्मपावनं जीवभाव-परित्यागपूर्वकं ब्रह्मभावेन स्थितिः, अज्ञानमलनिवृत्त्यै तत्संगच्छत एवेति ॥ ५८ ॥ सर्वदा श्रवणाऽनवकाशे तु द्वादश्यामवश्यं शृणुयात्, व्रतवैगुण्यापनुत्तये त्वेकादश्यामप्यवश्यं शृणुयादेवेति वा शब्द एवार्थे। आयुर्वर्द्धतेऽनेनेत्यायुष्यो धर्मः 'धर्मेण वर्द्धते चायुः' इत्युक्तेस्तद्वान्भवति सर्वधर्मफलभाग्भवतीति भावः। अकालमृत्युहीनो वा भवेदित्यर्थः। ग्रहाद्यरिष्टजन्यायुर्नाशो न भवतीति भावः। प्रयतः पूतः उपवासं कुर्वन्यः पठति स ततः सोपवासपाठात् अपातकी महापातकोपपातकादिभ्यो हीनो भवतीत्यर्थः। महापातकान्याह मनुः—"ब्रह्महत्या सुरापानं स्तेयं गुर्वंगनागमः। महांति पातकान्याहुः संयोगं चैव तैः सह।" उपपातकानि तु याज्ञवल्क्यः—"गोवधो व्रात्यता स्तेयमृणानां चानपक्रिया। अनाहिताग्नितापण्यविक्रयः परिवेदनम् ॥ ( १ ) ॥ भृतादध्ययनादानं भृतकाध्यापनं तथा। पारदार्यं पारिवित्त्यं वार्द्धुष्यं लवणक्रिया ॥ ( २ ) ॥ स्त्रीशूद्रविट्क्षत्रवधो निंदितार्थोपजीवनम्। नास्तिक्यं व्रतलोपश्च सुतानां चैव विक्रयः ॥ ( ३ ) ॥ धान्यकुप्यपशुस्तेयमयाज्यानाञ्च याजनम्। पितृमातृसुतत्यागस्तडागारामविक्रयः ॥(४)॥ कन्यासंदूषणं चैव परिविंदकयाजनम्। कन्याप्रदानं तस्यैव कौटिल्यं व्रतलोपनम् ॥ ( ५ ) ॥ आत्मनोऽर्थे क्रियारंभो मद्यप-

१ एवं श्राव। २ तां सर्वा।

स्त्रीनिषेवणम्। स्वाध्यायाग्निसुतत्यागो बांधवत्याग एव च ॥ ( ६ ) ॥ इंधनार्थं द्रुमच्छेदः स्त्रीहिंसौषधिजीवनम्। हिंस्रयंत्रविधानं च व्यसनान्यात्मविक्रयः ॥ ( ७ ) ॥ शूद्रप्रेष्यं हीनसख्यं हीनयोनिनिषेवणम्। तथैवानाश्रमे वासः परान्नपरिपुष्टता ॥ ( ८ ) ॥ असच्छास्त्राधिगमनमाकरेष्वधिकारिता। भार्याया विक्रयश्चैषामेकैकमुपपातकम् ॥( ९ )॥" इति। अर्थैषामर्थः – गोवधो गोपिंडव्यापादनम्, कालेऽनुपनीतत्वं व्रात्यता, ब्राह्मणसुवर्णतत्समव्यतिरिक्तपरद्रव्यापहरणं स्तेयम्, गृहीतस्य सुवर्णादेरप्रदानमृणानामपाकरणं, तथा देवर्षिपितृसंबध्यृणस्यापाकरणञ्च, सत्यधिकारेऽनाहिताग्नित्वम्, तथाऽपण्यस्य लवणादेर्विक्रयः, सहोदरस्य ज्येष्ठस्य तिष्ठतः कनीयसो भ्रातुर्दाराग्निसंयोगः परिवेदनम् ॥( १ )॥ पणपूर्वमध्यापकादध्ययनग्रहणम्, पणपूर्वाध्यापनम्, परदारसेवनम्, पारिव्रात्त्यं कनीयसि कृतविवाहे ज्येष्ठस्य विवाहराहित्यम्, वार्धुष्यं प्रतिषिद्धवृद्ध्युपजीवनम्, लवणस्योत्पादनमूषरादितः ॥( २ ) ॥ स्त्र्यादि स्पष्टम्, निंदितार्थोपजीवनमराजस्थापितार्थोपजीवनम्, नास्ति परलोक इत्याद्यभिनिवेशो नास्तिक्यम्, व्रतलोपो ब्रह्मचारिणः स्त्रीप्रसंगः, सुतानामपत्यानां विक्रयः ॥ ( ३ ) ॥ धान्यं व्रीह्यादि, कुप्यमसारं त्रपुसीसादि, पशवो गवादयस्तेषामपहरणम्, 'गोवधो व्रात्यता स्तेयम्' इत्यनेनैव सिद्धे पुनर्धान्यादिग्रहणं प्रायश्चित्तविशेषार्थमेवमेव बांधवत्यागग्रहणेनैव सिद्धे पुनः पित्रादित्यागो विज्ञेयः, अयाज्यानां जातिकर्मदुष्टानां शूद्रव्रात्यादीनां याजनम्, पितृमातृसुतानामपतितानां परित्यागो गृहान्निष्कासनम्, तडागादिविक्रयः ॥ ( ४ ) ॥ कन्यादूषणमंगुल्यादिना योनिविदारणं न तु भोगः, तस्य 'सखिभार्याकुमारीषु' इति गुरुतल्पसमत्वोक्तेः। परिविंदकस्य परिवेत्तुर्याजनम्, तस्यैव कन्याप्रदानं च, कौटिल्यं गुरोरन्यत्र, गुरुविषयस्य तु कौटिल्यस्य सुरापानसमत्वोक्तेः। पुनर्व्रतलोपग्रहणं शिष्टाप्रसिद्धेष्वपि श्रीहरिचरणेक्षणं विना तांबूलं न भक्षयामीत्येवंरूपेषु व्रतेषु प्राप्त्यर्थम् ॥ ( ५ ) ॥ क्रियारंभः पाकारंभः "अघं स केवलं भुंक्ते यः पचत्यात्मकारणात्" इति तस्यैव प्रतिषिद्धत्वात्क्रियामात्रविषये त्वतिप्रसंगः स्यात्। मद्यपाया जायाया भोगः, स्वाध्यायत्यागो वेदाभ्यासादिराहित्यम्, अग्नीनां श्रौतस्मार्तानां त्यागः, सुतत्यागस्तत्संस्काराकरणम्, बांधवानां पितृव्यमातुलादीनां त्यागः सति विभवेऽपरिरक्षणम् ॥ ( ६ ) ॥ पाकादिदृष्टप्रयोजनसिद्ध्यर्थमार्द्रद्रुमच्छेदो न त्वाहवनीयादिरक्षणार्थमपि, स्त्रिया, हिंसया, औषधेन च जीवनम्। तत्र स्त्रीजीवनम्—भार्यां पण्यभावेन पुरुषांतरभोगार्थं प्रयोज्य तल्लब्धोपजीवनं, स्त्रीधनेनोपजीवनं वा, हिंसया प्राणिवधेन जीवनम्, औषधजीवनं वशीकरणादिना, हिंस्रयंत्रस्य तिलेक्ष्वादिपीडनादिरूपस्य प्रवर्तनम्, व्यसनानि मृगयादीनि, आत्मविक्रयो द्रव्यग्रहणेन परदास्यकरणम् ॥ ( ७ ) ॥ शूद्रस्य प्रेष्यं सेवनम्, हीनजातिषु मैत्रीकरणम्, अनूढसवर्णदारस्य केवलं हीनवर्णदारोपसेवनम्, साधारणस्त्रीसंभोगश्च, अगृहीताश्रमत्वं सत्यधिकारे, परपाकरतित्वम् ॥ ( ८ ) ॥ चार्वाकादिग्रंथावगमः, आकरेषु सुवर्णाद्युत्पत्तिस्थानेषु राजाज्ञयाऽधिकारित्वम्, भार्याया विक्रयः चान्मन्वाद्युक्ताभिचारमतिपूर्वलशुनादिभक्षणादेर्ग्रहणम् ॥ ( ९ ) ॥ मातृगमनदुहितृगमनस्नुषागमनान्यतिपातकानि, स्वसृसखीसगोत्रोत्तमवर्णारजस्वलाशरणागताप्रव्रजितानिक्षिप्तानां गमनमनुपातकानि, अनुपातकानामेव विष्णुना पातकसंज्ञोक्ता "महापापं चातिपापं तथा पातकमेव च। प्रासंगिकं चोपपापमित्येषां पञ्चको गणः।" इति कृतं प्रसक्तानुप्रसक्त्या ॥ ५९ ॥ यतः संयतश्चासावात्मा बुद्धिर्यतात्मा सोऽस्यास्तीति यतात्मवान्। उपोष्य स्थित्वा उपवासार्थकत्वं तु निरन्नस्य यतात्मत्वाऽसंभवात्पाठस्यापि दुष्करत्वेति प्रतीयते। भयात्संसारात् ॥६०॥ अत्र ये देवादयः कीर्तितास्तेऽपि कीर्तनात् यत्र यद्भागवतं गृणतः शृण्वतश्च नृन्कामान्यच्छन्ति ददति यत्रेति द्वितीयार्थे त्रल् ॥ ६१ ॥ गृह्यसूत्रोक्तं फलमाह—ऋच इति। तथाहि—"यदृचोऽधीते पयसः कुल्या अस्य पितॄन्स्वधा उपक्षरंति यद्यजूंषि घृतस्य कुल्या यत्सामानि मध्वः कुल्या योऽथर्वांगिरसः सोमस्य कुल्या यद्ब्राह्मणानि कल्पान् गाथा नाराशंसीरितिहासपुराणानीत्यमृतस्य कुल्याः" इति ॥६२॥ जीवनमुक्तिफलकत्वमस्याह—किञ्चेति। "मनसा वचसा दृष्ट्या गृह्यतेऽन्यैरपींद्रियैः। अहमेव न मत्तोऽन्यदिति बुद्ध्यध्वमंजसा।" इतिरीत्या यत्सर्वात्मकत्वरूपं भगवतः पदं स्वरूपं भगवतैवर्षिभ्यः प्रोक्तमर्थादद्वैतनिष्ठारूपं तद्व्रजेद्भजेदित्यर्थः ॥६३॥ प्रज्ञां प्रकृष्टज्ञानं सर्वपुराणेतिहासाध्ययनाध्यापनसामर्थ्यलक्षणं प्राप्नुयात्। उदधिर्मेखलेव परितो व्याप्तो यस्याः सोदधिमेखला भूमेर्नामेदम्। "समुद्रमेखले देवि पर्वतस्तनमंडले" इति मंत्रात्, तथा च भूमिं प्राप्नुयान्न तु समुद्रांतर्गतां सर्वामिति नरेन्द्रादिपदवद्यत्किंचिन्नराणां पत्यावपि यथा नरेंद्रपदं प्रयुज्यते, तथा यत्किंचिद्भूपतिरप्युदधिमेखलापतिरुच्यत इति। अत्र संधिरार्षः। यद्वा—अदधिः आप अधिकोथाऽधिका यस्मिन्नित्यदधिः। अत्रार्षत्वाद्वर्णविकारो मयूरादिवत्। अवस्थांतरप्राप्तिविकारस्तस्मात्तस्य दः। एवं निधिपतिरपि ज्ञेयः। 'निधिः पद्मादिनवके वस्त्वधिस्थापनेषु च' इति धरणिः। धनपतिः स्यादित्यर्थः। शूद्रः शृण्वन्नेव तस्य पाठानधिकारात्। तदुक्तं पुराणाधिकारप्रस्तावे भविष्ये—"अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च। श्रोतव्यमेव शूद्राणां नाध्येतव्यं कदाचन। श्रौतं स्मार्तं च वैधर्मं प्रोक्तमस्मिन्नृगोत्तम। तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यं कदाचन।" इति ॥ ६४ ॥

## अन्वितार्थप्रकाशिका

एतदिति। हे विप्राः! कथनीयानि उरूणि कर्माणि यस्य तस्य ॥ ५७ ॥ य इति ॥ यामं क्षणं वा योऽनन्यधीः श्रावयेत् शृणुयाद्वा। आत्मानं पुनात्येव मुच्यत एवेत्यर्थः ॥ ५८ ॥ द्वादश्यामिति ॥ ५९ ॥ पुष्कर इति। यतात्मवान् एकाग्रमनाः भयात्

संसारभयात् ॥ ६० ॥ देवता इति ॥ देवादयो ये प्रकीर्तिताः ते । यत्रेति षष्ठ्यर्थे सप्तमी । यस्य भागवतस्य कीर्त्तनात् गृणतः शृण्वतश्च पुंसः कामान् यच्छन्ति ॥ ६१ ॥ ऋच इति ॥ ऋचो यजूंषि सामानि अधीत्य द्विजो मधुकुल्यादि यत्फलमनुविन्दते तत्फलमेतां संहितां पठित्वाऽनुविन्दते ॥ ६२ ॥ पुराणेति ॥ किञ्च एतां पुराणसंहितामधीत्य यद्भगवतः परमं पदं शास्त्रेषु प्रोक्तं तद् व्रजेत् ॥६३॥ विप्र इति ॥ राजन्य उदधिमेखलां पृथ्वीम् । सन्धिरार्षः ॥ ६४ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

कालदेशविशेषयोगात् फलविशेषानाह—श्रद्धावानिति ॥ ५८—६० ॥ फलप्रदानाह—देवता इति ॥ ६१ ॥ फलातिशयमाह-ऋच इति ॥ ६२–६३ ॥ अधिकारानुरूपफलविशेषमाह—विप्र इति । उदधिमेखलां भूमिम् ॥ ६४ ॥

### श्रीमद्वीरराघवव्याख्या

एतत्पुराणकीर्त्तनादिफलं प्रपञ्चयति—अष्टभिः, एतदिति । कथनीयानि ऊरूण्यपरिमितानि कर्माणि चेष्टितानि यस्य तस्य विष्णोः वासुदेवस्य माहात्म्यप्रकाशकं वो युष्मभ्यं कथितमेतत्पुराणं सर्वाशुभविनाशकं कीर्त्यतां सर्वामङ्गलविघातकम् ॥ ५७ ॥ श्रवणफलमाह—य एवमिति । यामं क्षणं चेत्यर्थः स । आत्मानं पुनात्येव ॥ ५८ ॥ कालविशेषयोगात्फलविशेषानाह—द्वादश्यामिति । यः पातक्यपि प्रयतः समाहितचित्तः अनन्यः प्रयोजनान्तररहितः सन् पठति स पूतो भवति अनश्नन्निति पाठान्तरम् ॥ ५९ ॥ पुष्कर इति यतात्मवान्समाहितमनाः ॥ ६० ॥ सर्वफलसाधनत्वं वदन् फलदानाह—देवतादयः इति । येऽत्र पुराणेऽनुकीर्त्तिताः ते देवादयः गृणतः कथयतः शृण्वतो वा पुरुषस्य कामानिष्टार्थान्यच्छन्ति देवताद्यन्तर्यामी भगवान् यच्छतीति भावः ॥ ६१ ॥ फलातिशयमाह—ऋच इति । वेदत्रयमधीत्य यत्फलं प्राप्नुयान्मधुकुल्यादिभ्यो यत्फलं मध्वादिप्रवाहयुक्तान्नदानाद्यत्फलमित्यर्थः तत्फलं प्राप्नुयात् ॥ ६२ ॥ किञ्चैताम् पुराणसंहितामधीत्य यद्भगवतः विष्णोः परमं पदं प्रोक्तं प्रतिपादितं तद्व्रजेत्प्राप्नुयात् ॥ ६३ ॥ अधिकारानुरूपान् फलविशेषानाह—विप्र इति । राजन्यः अम्बुधिमेखलां पृथ्वीं शूद्रः श्रुत्वा पातकान्मुच्यत इत्यर्थः ॥ ६४ ॥

### श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

यामं क्षणं च नान्यानन्तरितार्थो द्वितीया आत्मानम् मनः ॥५८॥ कालविशेषमाह—द्वादश्यामिति ॥५९॥ देशविशेषमाह—पुष्कर इति । पुष्करे वाराहक्षेत्रे भयात् संसारभयात् ॥ ६० ॥ अत्र ये देवादयः कीर्त्तितास्तेपि संहितापाठादिकर्त्रेऽभीष्टानि ददतीत्याह, देवता इति ॥ ६१ ॥ किञ्च, ऋगादीन्यधीत्य यत्फलं स्यात्तदेतत्संहितामधीत्य स्यादित्याह—ऋच इति । मधुकुल्या मधुमद्यः मधुनद्यादिकथनं सुखविशेषार्थम् ॥ ६२ ॥ न केवलमैहिकं फलं किन्तु मुक्तिरपीति कथयति, पुराणेति यद्विष्णोः परमं पदं तद्व्रजेत् ॥ ६३ ॥ अम्बुधिमेखलां भूमिम् ॥ ६४ ॥

### श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एवमिति—आत्मानमेव पुनातीति किं वक्तव्यं काका सर्वमेव पुनातीत्यर्थः ॥ ५८ ॥ द्वादश्यामेकादश्यां वेति यदा यस्यां व्रतं प्राप्यते तदा तस्यामेवेत्यर्थः ॥ ५९–६३ ॥ विप्रोधीत्येत्यादिकं तत्तत्कामाग्रहपराणां प्रवर्त्तनार्थमापातफलम् ॥ ६४ ॥

### श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

ऋगाद्यधीत्य द्विजो मधुकुल्यादि यदनुविन्दते तत्फलमेतां पठित्वा अनुविन्दते इति ॥ ६२–६३ ॥ राजन्य उदधिमेखलां सन्धिरार्षः ॥ ६४ ॥

### श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

माहात्म्यं माहात्म्यप्रकाशकं महापुराणं वाच्यवाचकयोरभेदात् ॥ ५७–६१ ॥ मधुकुल्यादि यदनुविदन्ते तत्फलं प्रयतः सावधानः एतामधीत्यानुविन्दते यत्पूर्वत्र बहुशः प्रोक्तं भगवतः पदं तच्च व्रजेदिति द्वयोरन्वयः ॥ ६२–६३ ॥ राजन्योदधिमेखलां भुवं सन्धिरार्षः ॥ ६४ ॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

प्रश्नेन भवद्भिर्महानुपकारः कृत इत्याह—अहं चेति । आत्मतत्त्वमात्मतत्त्वप्रकाशकं पुराणं भ त्प्रश्ने नाहं स्मारितः । अतः कृतार्थोऽस्मीत्याशयः । स्मृतेरनुभूतविषयकज्ञानात्मकत्वात् । पूर्वं त्वया क्वेदं श्रुतमित्यपेक्षायामाह—श्रुतमिति । परीक्षितः सदसि

परमर्षेः शुकस्य वक्त्रात् श्रुतम् ॥ ५७ ॥ एतत्पुराणश्रवणकीर्त्तनादिफलं प्रपञ्चयति—एतदित्यष्टभिः ॥ ५८ ॥ यामं क्षणं वा योऽनन्यधीः श्रावयेत् शृणुयाद्वा स आत्मानं पुनात्येव मुच्यत एवेत्यर्थः ॥ ५९ ॥ कालविशेषयोगात्फलविशेषमाह—द्वादश्यामिति ॥ देशविशेषयोगादपि फलविशेषमाह—पुष्कर इति । यतात्मवान् एकाग्रमनाः भयात् संसारभयात् ॥ ६१ ॥ देवादयो येऽत्र कीर्तितास्ते कामान् प्रयच्छन्ति ॥ ६२ ॥ ऋगाद्यधीत्य द्विजो मधुकुल्यादि यत्फलमनुविन्दते तत्फलमेतां पठित्वाऽनुविन्दते ॥ ६३ ॥ किञ्च एतामधीत्य परमं पदं व्रजेत् ॥ ६४ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

य एवमिति । एवमेवंभूतमहिममेतत्पुराणं, नित्यं यः अनन्यधीः सन्, यामक्षणं यामं क्षणं वेत्यर्थः । श्रावयेत्, यः श्रद्धावान् सन्, अनुशृणुयात्, सः आत्मानं एव साक्षात् पुनाति । न तु स्नानादिवद्देहमात्रम् ॥ ५७ ॥ कालविशेषयोगात् फलविशेषमाह । द्वादश्यामिति । द्वादश्यां एकादश्यां वा शृण्वन्, आयुष्यवान् भवेत् । अनश्नन् भोजनात् पूर्वमित्यर्थः । प्रयतः सन् पठति ततः सः अपातकी भवति ॥ ५८ ॥ पुष्कर इति । यतात्मवान् समाहितचित्तः सन्, पुमान् पुष्करे, मथुरायां, द्वारवत्यां च, वा उपोष्य एतां संहितां पठित्वा, भयात् मुच्यते ॥ ५९ ॥ सर्वफलसाधनत्वं वदन् फलदानाह । देवता इति । यत्र पुराणे देवताः, मुनयः, सिद्धाः, ऋषयः, पितरः, नृपाश्च, ये कीर्त्तिताः ते, गृणतः शृण्वतश्च सर्वान् कामान् यच्छन्ति । देवताद्यन्तर्यामी भगवान् यच्छतीति भावः ॥ ६० ॥ फलातिशयमाह । ऋच इति । ऋचः, यजूंषि, सामानि च अधीत्य, द्विजः यत् फलं अनुविन्दते, मधुकुल्या मधुनद्याः, घृतकुल्या घृतनद्याः, पयःकुल्या दुग्धनद्याश्च यत् फलं, मधुकुल्यादिदानस्य यत्फलमित्यर्थः । अनुविन्दते, तत्फलमेतत्पारायणं कृत्वा विन्दते इति शेषः ॥ ६१ ॥ पुराणेति । हे द्विजाः, प्रयतः सन् एतां पुराणसंहितां अधीत्य तु, यत् भगवतः परमं पदं प्रोक्तं, तत् व्रजेत् प्राप्नुयात् ॥ ६२ ॥ अधिकारानुरूपान् फलविशेषानाह । विप्र इति । विप्रो द्विजः अधीत्य, एतत् पुराणमिति शेषः । प्रज्ञां बुद्धिं, आप्नुयात्, राजन्यः क्षत्रियः, उदधिमेखलां पृथ्वीमित्यर्थः । संधिरार्षः । प्राप्नुयात्, वैश्यः निधिपतित्वं च प्राप्नुयात्, शूद्रः श्रुत्वा पातकात् मुच्येत ॥ ६३ ॥ एतत्प्रबन्धस्योक्तविधप्रभावातिशयकारणं प्रबन्धान्तरवैलक्षण्यं चाह । कलीति । कलिमलानां संहतिं कालयति विनाशयतीति तथोक्तः, अखिलेशः हरिः, इतरत्र राजसादिप्रबन्धान्तरेषु, अभीक्ष्ण पुनः पुनः, न गीयते हि । इह तु पुनः अत्र तु वारंवारमित्यर्थः । अशेषमूर्तिः पूर्णषाड्गुण्यः भगवान्, कथाप्रसङ्गैः, अनुपदं प्रतिपदं, परिपठितः सम्यक्प्रतिपादितः ॥ ६४ ॥

## हिन्दी अनुवाद

शौनकादि ऋषियो ! भगवान् वासुदेव की एक-एक लीला सर्वदा श्रवण-कीर्तन करने योग्य है । मैंने इस प्रसङ्ग में उन्हीं की महिमा का वर्णन किया है, जो सारे अशुभ संस्कारों को धो बहाती है ॥ ५७ ॥ जो मनुष्य एकाग्रचित्त से एक पहर अथवा एक क्षण ही प्रतिदिन इसका कीर्तन करता है और जो श्रद्धा के साथ इसका श्रवण करता है, वह अवश्य ही शरीरसहित अपने अन्तःकरण को पवित्र बना लेता है ॥ ५८ ॥ जो पुरुष द्वादशी अथवा एकादशी के दिन इसका श्रवण करता है, वह दीर्घायु हो जाता है और जो संयमपूर्वक निराहार रहकर पाठ करता है, उसके पहले के पाप तो नष्ट हो ही जाते हैं, पाप की प्रवृत्ति भी नष्ट हो जाती है ॥ ५९ ॥ जो मनुष्य इन्द्रियों और अन्तःकरण को अपने वश में करके उपवास पूर्वक पुष्कर, मथुरा अथवा द्वारका में इस पुराणसंहिता का पाठ करता है, वह सारे भयों से मुक्त हो जाता है ॥ ६० ॥ जो मनुष्य इसका श्रवण या उच्चारण करता है, उसके कीर्तन से देवता, मुनि, सिद्ध, पितर, मनु और नरपति सन्तुष्ट होते हैं और उसकी अभिलाषाएँ पूर्ण करते हैं ॥६१॥ ऋग्वेद, यजुर्वेद और सामवेद के पाठ से ब्राह्मण को मधुकुल्या, घृतकुल्या और पयःकुल्या (मधु, घी एवं दूध की नदियाँ अर्थात् सब प्रकार की सुख समृद्धि) की प्राप्ति होती है । वही फल श्रीमद्भागवत के पाठ से भी मिलता है ॥ ६२ ॥ जो द्विज संयमपूर्वक इस पुराणसंहिता का अध्ययन करता है, उसे उसी परमपद की प्राप्ति होती है, जिसका वर्णन स्वयं भगवान् ने किया है ॥ ६३ ॥ इसके अध्ययन से ब्राह्मण को ऋतम्भरा प्रज्ञा ( तत्त्वज्ञान को प्राप्त कराने वाली बुद्धि ) की प्राप्ति होती है और क्षत्रिय को समुद्रपर्यन्त भूमण्डल का राज्य प्राप्त होता है । वैश्य कुबेर का पद प्राप्त करता है और शूद्र सारे पापों से छुटकारा पा जाता है ॥ ६४ ॥

कलिमलसंहतिकालनोऽखिलेशो हरिरितरत्र न गीयते ह्यभीक्ष्णम् ।
इह तु पुनर्भगवानशेषमूर्तिः परिपठितोऽनुपदं कथाप्रसङ्गैः ॥ ६५ ॥
तमहमजमनन्तमात्मतत्त्वं जगदुदयस्थितिसंयमात्मशक्तिम् ।
द्युपतिभिरजशक्रशङ्कराद्यैर्दुरवसितस्तवमच्युतं नतोऽस्मि ॥ ६६ ॥
उपचितनवशक्तिभिः स्व आत्मन्युपरचितस्थिरजङ्गमालयाय ।
भगवत उपलब्धिमात्रधाम्ने सुरऋषभाय नमः सनातनाय ॥ ६७ ॥
स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसारस्तदीयम् ।
व्यतनुत कृपया यस्तत्त्वदीपं पुराणं तमखिलवृजिनघ्नं व्याससूनुं नतोऽस्मि ॥ ६८ ॥

इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायां द्वादशस्कन्धे द्वादशस्कन्धार्थनिरूपणं नाम द्वादशोऽध्यायः ॥ १२ ॥

## कृष्णप्रिया व्याख्या

अन्वयः—कलिमलसंहतिकालनः अखिलेशः हरिः इतरत्र अभीक्ष्णं न गीयते इह तु पुनः अशेषमूर्तिः भगवान् कथाप्रसङ्गैः अनुपदं परिपठितः ॥ ६५ ॥ अजम् अनन्तम् आत्मतत्त्वं जगदुदयस्थितिसंयमात्मशक्तिं द्युपतिभिः अजशक्रशङ्कराद्यैः दुरवसितस्तवम् अच्युतम् अहं नतः अस्मि ॥ ६६ ॥ उपचितनवशक्तिभिः स्वे आत्मनि उपरचितस्थिरजङ्गमालयाय उपलब्धिमात्रधाम्ने सुरऋषभाय भगवते सनातनाय नमः ॥ ६७ ॥ स्वसुखनिभृतचेताः तद्व्युदस्तान्यभावः अपि अजितरुचिरलीलाकृष्टसारः यः कृपया तदीयम् अखिलवृजिनघ्नं तत्त्वदीपं पुराणं व्यतनुत तं व्याससूनुं नतः अस्मि ॥ ६८ ॥

इति श्रीमद्भागवते महापुराणे द्वादशे द्वादशोऽध्यायः ॥ १२ ॥

## श्रीधरस्वामिविरचिता भावार्थदीपिका

अस्य पुराणस्यैवं प्रभावातिरेके कारणमाह । कलिमलानां संहतिं समूहं कालयति विनाशयतीति तथा इतरत्र शास्त्रांतरे ।६५। शास्त्रप्रतिपादितं भगवंतं नमस्करोति तमिति द्वाभ्याम् । जगदुदयस्थितिसंयमात्मनो रजआदयः शक्तयो यस्य तम् । द्युपतिभिर्देवैरपि दुरवसितः अज्ञातः स्तवः स्तोत्रं यस्य तम् ॥ ६६ ॥ उपचिताभिः उद्रिक्ताभिर्नवशक्तिभिः प्रकृतिपुरुषमहदहंकारतन्मात्ररूपाभिः स्व आत्मन्येवोपरचितं स्थिरं जंगमं च आलयो यस्य तस्मै भगवते ॥ ६७ ॥ श्रीगुरुं नमस्करोति । स्वसुखेनैव निभृतं पूर्णं चेतो यस्य तेनैव व्युदस्तोऽन्यस्मिन् भावो यस्य तथाभूतोऽपि अजितस्य रुचिराभिर्लीलाभिः आकृष्टः सारः स्वसुखगतं स्थैर्यं यस्य सः । तत्त्वदीपं परमार्थप्रकाशकं श्रीभागवतं यो व्यतनुत तं नतोऽस्मीति ॥ ६८ ॥

इति श्रीमद्भागवते द्वादशस्कंधे टीकायां द्वादशोऽध्यायः ॥ १२ ॥

## श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

एवं प्रभावातिरेके पूर्वोक्तरीत्या प्रभावाधिक्ये । इह श्रीभागवते । अशेषमूर्तिरनंतमूर्तिः । अनुपदं प्रतिश्लोकम् । पदानि संत्यत्रेति पदः । अजत्र मत्वर्थीयः । पुष्पद्यम् । पदं पदमनुपदं वीप्सार्थकानुपदयोगे द्वितीया । तत्तत्कथाप्रसंगैर्भगवानेवात्र कीर्तित इति । अत्र कर्म ब्रह्मादिप्रतिपादकशास्त्रेऽखिलेशो विराडंतर्यामी तत्पालको विष्णुर्वापि न गीयते, क्वचिद्गीयते वा तत्र त्वभीक्ष्णं नैव गीयते । तुरवधारणे । इह भागवते भगवानेवाभीक्ष्णं गीयते नारायणादयो येऽत्र वर्णितास्तेऽप्यशेषा एव मूर्तयोऽवतारा यस्य स तथाभूत एव गीयते न त्वितरत्रैव तद्विवेकेनेत्यर्थः । अत एव तत्तत्कथाप्रसंगैरपि भगवानेव पठितो व्यक्तमेवोक्त इत्यर्थः ॥ ६५ ॥ आदिनाऽनंतादिग्रहः । सर्वज्ञैरपि देवैरज्ञातगुणगणत्वाद् दुर्ज्ञेयं तं नतोऽस्मीति । तमजं नतोऽस्मि, किं ब्रह्माणं नमसि ? न, अनन्तम् । किं प्रधानं? आत्मतत्त्वं चेतनस्वरूपम् । किं शुद्धजीवं? न, जगदुदयादय आत्मशक्तितो यस्य तम् । किं दुर्गापतिं शंभुम् ? "विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम्" इति मार्कंडेयोक्तेः 'शिवार्द्धांगहरा दुर्गा' इति पुराणांतराच्च, न, द्युपतिभिरजाद्यैरप्यज्ञातस्तुतिकमच्युत श्रीकृष्णम्, "को वेत्ति भूमन्भगवन्परात्मन्योगेश्वरोक्तीर्भवतस्त्रिलोक्याम्" इति ब्रह्मोक्तेः । 'नाहं वेदापरेऽपि च' इत्युक्तेः, "यतो

१. न्युपनमितस्थिर० ।

"यतो वाचो निवर्तंते अप्राप्य मनसा सह" इति श्रुतेश्च ॥६६॥ स्वे स्वीये । आत्मनि स्वरूपे । उपरचितमाविर्भावितं यत्स्थिरं स्थावरं जंगमं च तदेवालयो निवासस्थानं यस्य तस्मै स्वप्रकाशितजगति जीवरूपेणांतर्यामिरूपेण च स्थिताय । उपलब्धिमात्रधाम्ने सर्वज्ञानस्वरूपाय ज्ञानमात्राधिष्ठानाय वा । सुरऋषभाय सर्वदेवोत्तमाय श्रीकृष्णाय । सनातनाय सर्वावस्थासु विद्यमानाय । एतच्च श्रीकृष्ण एव संपद्यते । "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" इति, "मया ततमिदं सर्वं जगत्स्थावरजंगमम्" इति च तदुक्तेः । यद्वा—उपलब्धिमात्रं परं ब्रह्म तस्य धाम्ने स्थानाय 'ज्ञानमात्रं परं ब्रह्म' इत्युक्तेः, 'ब्रह्मणो हि प्रतिष्ठाहम्' इति श्रीमुखोक्तेः, 'सनातनस्त्वं पुरुषो मतो मे' इत्यर्जुनोक्तेश्च सनातनत्वमपि तत्रैव संगच्छते 'देवानामच्युतो यथा' इत्यग्रे वक्ष्यमाणत्वात्तत्सर्वदेवश्रेष्ठोऽपि स एवेति ॥ ६७ ॥ स्वसुखेन परमानन्दावाप्त्या । तेनैव स्वसुखपूर्णचेतस्त्वेनैव । अन्यस्मिन्परमानंदस्वरूपादितरत्र, भावः स्नेहो यस्य । तथाभूतोपि परमानंदतृप्तोपि । अजितस्य श्रीकृष्णस्य । रुचिराभिर्मनोहराभिर्वाल्यादिचरितैराकृष्ट आकर्षणविषयीकृतः । "तदिति ब्रह्मणो नाम" इति श्रुतेस्तद्ब्रह्म तस्य भावस्तत्त्वं श्रीकृष्णः "अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् । यन्मित्रं परमानंदं पूर्णं ब्रह्म सनातनम् ।" इति ब्रह्मोक्तेस्तस्य प्रकाशकम् । अखिलानि वृजिनानि पापानि हंति दर्शनस्मरणादिनेत्यखिलवृजिनघ्नः 'कलुषं वृजिनैनोघम्' इत्यमरः । ब्रह्मरूपत्वात्तस्य सर्वाघनिवर्तकत्वम् । 'शुकाय ब्रह्मरूपिणे' इत्यग्रिमाध्यायोक्तेः स्वेष्टदेवं शास्त्रप्रतिपाद्यं नत्वा स्वगुरुं प्रणमति—स्वसुखेन ब्रह्मानंदेन निभृतं परिपूर्णं चेतो यस्य तम् । तेन तथात्वेन व्युदस्तो दूरीभूतोऽन्यस्मिन्भावो मनोव्यापारो यस्य तम् । तथाभूतोऽप्यजितस्य श्रीकृष्णस्य रुचिरलीलया कर्त्र्याऽतिबलवत्याकृष्टस्तस्माद्ब्रह्मानंदात्सकाशात्स्वस्मिन्नानतिः सारो रसानुभवसामर्थ्यं यस्य सः, ब्रह्मरसास्वादादपि लीलारसास्वादे माधुर्याधिक्यमनुभूय तत्रैव यः प्राप्तनिष्ठोऽभूदिति भावः । तेन लीलारसोऽयं तस्य न समाधिभंजकः प्रत्यूहस्तथात्वे तेन तत्रैव पुनः समाध्यर्थमेवायतिष्यत न तु तथाकृतं प्रत्युत कृपयान्येभ्योऽपि लीलारसास्वाददित्सया तत्त्वदीपं लीलारसतत्त्वप्रकाशकं व्यतनुत । अत एवोक्तम्—"हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः" इति, 'परिनिष्ठितोऽपि नैर्गुण्ये' इत्यादि पुराणं श्रीभागवतं व्यतनुत विस्तरपूर्वं व्याख्यातवान् ॥ ६८ ॥

इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कंधे द्वादशोऽध्यायः ॥ १२ ॥

## अन्वितार्थप्रकाशिका

कलीति । कलिमलानां संहतिं समूहं कालयति विनाशयतीति तथाभूतो हरिः इतरत्र शास्त्रान्तरे अभीक्ष्णं न गीयते । इह तु अशेषमूर्तिर्भगवान् अनुपदं कथाप्रसङ्गैः परिपठितः । केचित्तु हरिर्यथेहानुपदं परिपठितस्तथा इतरत्र न गीयत इत्यन्वयमाहुः । पुष्पिताग्रात्रयम् ॥ ६५ ॥ तमिति । अजमनन्तम् आत्मतत्त्वं जगदुदयस्थितिसंयमेषु हेतवः आत्मनः स्वस्य शक्तयो रजआदयो यस्य तम् अजशक्रशङ्कराद्यैः द्युपतिभिर्देवैरपि दुरवसितः अज्ञातः स्तवः स्तोत्रं यस्य तमहमच्युतं नतोऽस्मि ॥ ६५ ॥ उपचितेति । उपचिताभिः उद्रिक्ताभिर्नवशक्तिभिः प्रकृतिपुरुषमहदहंकारतन्मात्ररूपाभिः स्व आत्मन्येवोपरचितं स्थिरं जङ्गमं चालयो यस्य तस्मै उपलब्धिमात्रधाम्ने ज्ञानैकस्वरूपाय सुराणामृषभाय श्रेष्ठाय सनातनाय भगवते नमः ॥ ६७ ॥ स्वगुरुं श्रीशुकं नमस्करोति—स्वसुखेति । स्वसुखेन स्वरूपानन्देनैव निभृतं पूर्णं चेतो यस्य सः तैनैवानन्देन व्युदस्तोऽन्यस्मिन्भावो यस्य तथाभूतोऽपि अजितस्य रुचिराभिर्लीलाभिः आकृष्टः सारः स्वसुखगतं स्थैर्यं यस्य सः यो जनेषु कृपया तदीयं भगवच्चरितप्रधानमत एवाखिलानां वृजिनघ्नं दुःखनिरासकं तत्त्वदीपं परमार्थप्रकाशं श्रीभागवतं पुराणं व्यतनुत । तं व्याससूनुं श्रीशुकमहं नतोऽस्मि । मालिनी छन्दः ॥६८॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । द्वादशे गङ्गासहायो द्वादशस्य व्यधादिमाम् ।

इति श्रीमदभागवते द्वादशस्कन्धेऽन्वितार्थप्रकाशिकायां द्वादशोऽध्यायः ॥ १२ ॥

## श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

ग्रन्थान्तरवैलक्षण्यमाह—कलिमलेति । इतरत्र राजसादिपुराणेषु ॥ ६५ ॥ जगदुदयस्थितिसंयमात्मशक्तिं संयमहेतुभूतात्मशक्तिं नव शक्तय इत्युक्ताः ॥६६॥ उपलब्धिमात्रधाम्ने अज्ञानप्रसङ्गरहितज्ञानात्मकहेतुस्वरूपाय ॥६७॥ स्वसुखमात्मानुसन्धानसुखं तेनानुकूलचेताः तेन व्युदस्तान्यभावः श्रीभगवद्व्यतिरिक्तसङ्गः अपि शब्दः समुच्चये । यद्वा, सुलभसमाधितया साक्षात्कृतस्वरूपोपि भगवल्लीलाभिराकृष्टचित्त इत्यर्थः । तत्त्वदीपम् तत्त्वप्रकाशकम् ॥ ६८ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीसुदर्शनसूरिकृतशुकपक्षीये द्वादशोऽध्यायः ॥ १२ ॥

## श्रीमद्वीरराघवव्याख्या

एतत्प्रबन्धस्योक्तविधप्रभावातिशयकारणं प्रबन्धान्तरवैलक्षण्यमाह—कलीति । कलिमलानां संहतिं कालयति विनाशयतीति तथा सोऽखिलानाम् ईश्वरो हरिरितरत्र राजसादिप्रबन्धान्तरेषु अभीक्ष्णं पुनःपुनः न गीयते अत्र तु तत्तत्कथाप्रसङ्गैरनुपदं पठित

प्रतिपादितः ॥ ६५ ॥ एतत्प्रबन्धप्रतिपादितं भगवन्तं नमस्करोति द्वाभ्याम्—तमिति । जगदुदयस्थितिलया जगदुदयादिहेतवः आत्मनः रज आदयः शक्तयो यस्य ते देवैरप्यनवसितः स्तवः स्तोत्रं यस्य तं नतोऽस्मि ॥ ६६ ॥ किञ्च, उपचिताभिः ऋद्धियुक्ताभिः कालप्रकृतिमहदहङ्कारपञ्चभूतात्मिका नवशक्तयस्ताभिरात्मन्येवोपरचिताः स्थिराः स्थावरा जङ्गमाश्च आलयो यस्य तस्मै उपलब्धिमात्रधाम्ने जाड्यप्रसङ्गरहितज्ञानात्मकतेजःस्वरूपाय सुरऋषभाय देवश्रेष्ठाय सनातनाय भगवते नम इति ॥ ६७ ॥ अत्र क्वचिदध्यायसमाप्तिः क्वचिन्नेति द्रष्टव्यम् । ग्रन्थान्ते स्वगुरुनमस्कारात्मकं मङ्गलमाचरति—स्वसुखेति । स्वसुखं स्वान्तरान्तरात्मानुसन्धानसुखं तेन निभृतं पूर्णं चेतो यस्य सः तेन स्वसुखेन व्युदस्तान्यभावः निरस्तभगवद् व्यतिरिक्तसङ्गः अपिशब्दः समुच्चये यद्वा सुलभतरसमाधितया साक्षात्कृतान्तरात्मस्वरूपोऽपि भगवल्लीलाभिराकृष्टचित्त इत्यर्थः । तदीयमजितस्वरूपरूपगुणविभूतिप्रकाशकं तत्त्वानां चिदचिद्गतानाम् अनारोपिताकाराणां दीपमिव प्रकाशकमत एवाखिलपापघ्नम् इदं पुराणं यः कृपया व्यतनुत प्रकाशितवान् तं व्याससूनुं श्रीशुकं नतोऽस्मि ॥ ६८ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्वीरराघवाचार्यकृतभागवतचन्द्रचन्द्रिकायां द्वादशोऽध्यायः ॥ १२ ॥

[ अत्राध्यायो न समाप्यते ]

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

इतरपुराणेभ्योऽस्य माहात्म्याधिक्यात्फलाधिक्यं माहात्म्याधिक्यं च प्रतिपदं प्रत्यक्षरं च श्रीनारायणस्य गुणरागप्रतिपादकत्वेनेत्याह—कलिमलेति । कलिमलं संसारं च कालयति नाशयतीति कलिमलसंसृतिकालनः इतरत्र पुराणेषु इह पुराणे अशेषमूर्त्तिः कथाप्रसङ्गैः ॥ ६५ ॥ गुरुनमस्कारानन्तरं तदुपदिष्टस्वरूपं श्रीनारायणं नमति, तमिति । यो भागवतस्याद्यपद्यमारभ्य प्रतिपादितस्ते नतोस्मीत्यन्वयः । जगदुदयादिषु आत्मशक्तिं स्वरूपशक्तिम् आत्मतन्त्रं स्वतन्त्रम् अजं सर्वज्ञं देहवत् एव ज्ञानोत्पत्तेः अस्य तदभावात् स्वज्ञानेनैव सर्वं जानातीति देशतः कालतो गुणतश्चानन्तं द्युपतिभिर्ज्ञोनपतिभिरजशङ्कराद्यैः दुरवसितस्तवम् अनिश्चितस्तुतिम् अच्युतं मायानिमित्तच्युतिरहितम् ॥ ६६ ॥ उपचितनवशक्तिभिः मूलप्रकृतिमहदहङ्कारमनःपञ्चभूताख्यनवशक्तिभिः आत्मनि स्वाधारतया उपरचितयोः स्थिरजङ्गमयोः येन स तथा तस्मै उपलब्धिमात्रधाम्ने केवलज्ञानस्वरूपाय सुरऋषभाय देवोत्तमाय सनातनाय शब्दमात्रैकविषयाय नमः अनेन श्लोकद्वयेन जन्माद्यस्य यत इत्यादेरर्थो दर्शित इति ॥ ६७ ॥ सूतो ग्रन्थावसानेऽपि गुरुनमस्कारं करोति, स्वसुखेति । स्वातन्त्र्यात् स्वः परमात्मा तन्निष्ठं सुखं स्वसुखं तेन निभृतं पूर्णं चेतो यस्य स तथा स्वरूपसुखश्च निभृतज्ञानश्च स्वसुखनिभृतचेताः चेतो ज्ञानमिति वा तेन सुखेन व्युदस्तान्यभावः निरस्तान्यविषयबुद्धिः तेन विज्ञानेन निरस्तान्यज्ञान इति वा अपि कृतकृत्योऽपि अजितस्य हरेरुचिरया लीलया आकृष्टसारः विवशीकृतचित्तस्थैर्यः तस्य हरेः सम्बन्धि अत एव तत्त्वदीपकं पुराणं व्यतनुत व्याख्यया विस्तृतवान् तं व्याससूनुं शुकं नतोस्मि ॥ ६८ ॥

सत्यं ज्ञानमनन्तमच्युतमजं निर्दुःखसौख्योदधिम्—
निर्दोषामितवेदवेदितमहं वन्दे मुकुन्दं सदा ।

यद्भक्त्या कमलाब्जजेरगिरिशानन्तादिदेवाः पदम्
सायुज्यं प्रसरन्त्यनेकविधया सत्यो विरत्या च तम् ।

व्याख्या भागवतस्य कृष्णरचिता त्वत्प्रीतिकामात्मना
प्रीतश्चेत्प्रददासि तत्प्रतिनिधिं तत्त्रीन्वरिष्ये वरान् ।

प्राङ्निष्किञ्चनतां तव प्रतिभवं पादारविन्दात्मना
संसक्तिं सुखतीर्थशास्त्रविजराहारस्य पारं तया ।

पदरत्नावलीकण्ठे राजतां हि सुरद्विषः । वनमालेव मालेव मौक्तिकी कृष्णवल्लभा ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमद्विजयध्वजतीर्थकृतपदरत्नावल्यां द्वादशोऽध्यायः ॥ १२ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

कलिमल इति । कालनो नाशनः इतरत्र कर्मब्रह्मादिकप्रतिपादकशास्त्रान्तरे अखिलेशो विराडन्तर्यामी नारायणोपि तत्पालको विष्णुर्वाऽपि न गीयते क्वचिद्गीयते वा तत्रत्वमभीक्ष्णं नैव गीयते तुशब्दोऽवधारणे साक्षाच्छ्रीभगवान् पुनरिह श्रीभागवत एवाभीक्ष्णं गीयते नारायणादयो वा यत्र वर्णितास्तेप्यशेषा एव मूर्त्तयोऽवतारा यस्य सः तथाभूत एव गीयते न त्वितरत्रैव तदविवेके-

नेत्यर्थः। अत एव तत्तत्कथाप्रसङ्गैरप्यनुपदं पदमपदमपि लक्षीकृत्य भगवानेव परि सर्वतोभावेन पठितो व्यक्तमेवोक्त इति ॥६५-६७ नमस्कुर्वन्नेव वक्तृहृदयनिष्ठापर्य्यालोचनया समस्तग्रन्थतात्पर्य्यं निर्धारयति—स्वसुखेति। अत्राखिलवृजिनं तादृशभावस्य प्रतिकूलमुदासीनं च सर्वं ज्ञेयम् अजितशब्देनात्र श्रीकृष्ण एवेति प्रथमे श्रीबादरायणसमाधौ व्यक्तीकृतोऽस्ति॥ ६८॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे द्वादशोऽध्यायः ॥ ११ ॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

कालनः विनाशकः अनुपदं प्रतिप्रकरणमेव ॥ ६५ ॥ शास्त्रप्रतिपादितं देवं प्रणमति—तम् अजं नतोस्मि किं ब्रह्माणं नमसि न अनन्तं किं प्रधानं न आत्मतत्त्वं चेतनस्वरूपं किं शुद्धं जीवं न जगदुदयादय आत्मशक्तितो यस्य तं किं दुर्गापतिं शंभुं न धुपतिभिर्देवैरजाद्यैरपि दुरवसितस्तवम् अज्ञातस्तुतिकम् अच्युतम् श्रीकृष्णम् ॥ ६६ ॥ तमेव स्वान्तर्य्यामित्वेन प्रणमति—नवशक्तिभिः प्रकृतिपुरुषमहदहङ्कारतन्मात्ररूपाभिः ॥ ६७ ॥ स्वेष्टदेवं प्रणम्य श्रीगुरुं प्रणमति—स्वसुखेन ब्रह्मानन्देन निभृतं परिपूर्णं चेतो यस्य सः तेन तथात्वेनैव व्युदस्तो दूरीभूतो अन्यत्र भावो मनोव्यापारो यस्य तथाभूतोप्यजितस्य कृष्णस्य रुचिरलीलया कर्त्र्या अतिबलवत्या आकृष्टः तस्माद्ब्रह्मानन्दात् सकाशादपि स्वस्मिन्नानीतः सारा रसानुभावसामर्थ्यम् यस्य सः ब्रह्मरसास्वादादपि लीलारसास्वादे माधुर्य्याधिक्यमनुभूय तत्रैव यः प्राप्तनिष्ठोभूदिति भावः। तेन लीलारसोयं तस्य न समाधिभञ्जकः प्रत्युत इति व्याख्येयं तथा त्वे सति तेन पुनरपि तादृशसमाध्यर्थमेवायतिष्यत नतु तथा कृतं प्रत्युत कृपयाऽन्येभ्योपि तादृशलीलारसास्वाद-दित्सया तत्त्वदीपम् लीलारसतत्त्वप्रकाशकं व्यतनुत अत एवोक्तम् "हरेर्गुणाक्षिप्तमतिर्भगवान् बादरायणिः" इति 'परिनिष्ठितोपि नैर्गुण्ये' इत्यादि च ॥ ६८ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। द्वादशो द्वादशोऽध्यायः सङ्गतः सङ्गतः सताम् ॥ १२ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

अनुपदं प्रतिप्रकरणम् ॥ ६५ ॥ उक्तमाहात्म्यस्य महापुराणस्य विषयं भगवन्तं नमस्करोति, तमिति द्वाभ्याम्। जगदुद-याद्यात्मानस्तद्धेतवः प्रकृत्याद्याः शक्तयो यस्य स तम् ॥ ६६ ॥ उपचिताभिः समृद्धाभिः प्रकृतिपुरुषमहदहङ्कारतन्मात्ररूपाभिः नवशक्तिभिः स्वे अस्मन्येव उपचिताः स्थिताः स्थिरजङ्गमाः आलयो यस्य तस्मै श्रीधरपादपद्मयोरित्यनेन विग्रहः गणाः "हिरण्मयः पुरुषः" इत्यादिश्रुतिप्रसिद्धाः सूचिताः। स्वरूपगुणान् "अस्थूलः" इत्यादिश्रुतिप्रसिद्धान् सूचयितुं विशिनष्टि-उपलब्धिमात्रधाम्ने इति। उपलब्धिमात्रं स्थूलत्वादिप्राकृतदोषविवर्जितं धाम स्वरूपं यस्य तस्मै ॥ ६७ ॥ हरिं प्रणम्य गुरुं प्रणमति, स्वसुखेति। स्वसुखेन निभृतं परिपूर्णं चेतो यस्य सः तेनैव व्युदस्तो दूरीभूतोऽन्यस्मिन् ऐहिकामुष्मिककपदार्थे भावो यस्य तथाभूतोपि अजितस्य श्रीकृष्णस्य रुचिराभिः लीलाभिस्तत्स्वरूपगुणाद्यतिशयाज्ञाभिः आकृष्टः स्वसुखादपहृत्याकृष्य परमस्वरूपगुणाद्यनुभवानन्दे स्थापितः सारः-स्थैर्यं यस्य सः अत एव अन्येभ्योपि तादृशानन्दादीत्सया तदीयं श्रीकृष्णरुचिरलीलाप्रतिपादकं पुराणं तत्त्वदीपं श्रीकृष्णस्वरूप गुणादियाथात्म्यप्रकाशकं कृपया यो व्यतनुत तं नतोस्मि ॥ ६८ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धीये श्रीमच्छुकदेवकृतसिद्धान्तप्रदीपे द्वादशाऽध्यायार्थप्रकाशः ॥ १२ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अधिकारविशेषात्फलविशेषमाह—विप्र इति। राजन्य उदधिमेखलां पृथ्वीम्। सन्धिरार्षः ॥ ६५ ॥ अस्य पुराणस्यैवं प्रभावातिरेके कारणमाह—कलिमलानां संहतिं समूहं कालयति विनाशतीति तथाभूतो हरिर्यथेहानुपदं परिपठितस्तथा इतरत्र शास्त्रान्तरे न गीयते ॥ ६६ ॥ शास्त्रप्रतिपादितं भगवन्तं नमस्करोति—तमिति द्वाभ्याम्। जगदुदयस्थितिसंयमेषु हेतवः आत्मनः स्वस्य शक्तयो रज आदयो यस्य तम्। अजाद्यैर्धुपतिभिर्देवैरपि दुरवसितः अज्ञातः स्तवः स्तोत्रं यस्य तमहं नतोऽस्मि ॥ ६७ ॥ उपचिताभिः उद्रिक्ताभिर्नव शक्तिभिः प्रकृतिपुरुषमहदहङ्कारतन्मात्ररूपाभिः स्व आत्मन्येवोपरचितं स्थिरं जङ्गमं चालयो यस्य तस्मै। उपलब्धिमात्रधाम्ने ज्ञानैकस्वरूपाय भगवते नमः ॥ ६८ ॥ श्रीगुरुं नमस्करोति—स्वसुखेन स्वरूपानन्देनैव निभृतं पूर्णं चेतो यस्य सः। तेनैवानन्देन व्युदस्तोऽन्यस्मिन्भावो यस्य तथाभूतोऽपि अजितस्य रुचिराभिर्लीलाभिः आकृष्टः सारः स्वसुखगतं स्थैर्यं यस्य सः। यो जनकृपया तदीयं भगवच्चरितप्रधानमतएवाखिलानां वृजिनघ्नं दुःखनिरासकं तत्त्वदीपं परमार्थप्रकाशकं श्रीभागवतं पुराणं व्यतनुत तं व्याससूनुमहं नतोऽस्मि ॥ ६९ ॥

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा ॥ १ ॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी ॥ २ ॥
रचिता द्वादशे तत्र सर्वाश्रयनिरूपणे। द्वादशोऽपि गतो वृत्तिमनुक्रमनिरूपकः ॥ ३ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एतत्प्रबन्धप्रतिपादितं भगवन्तं नमस्करोति द्वाभ्याम् । तमिति । जगदुदयस्थितिसंयमाः आत्मनः स्वभावा यासां तास्तथाभूताः शक्तयो रजआद्या यस्य तं, द्युपतिभिर्देवैः, अजो ब्रह्मा च शक्र इन्द्रश्च शंकरो रुद्रश्च ते आद्या येषां तैः, दुरवसितोऽज्ञातः स्तवः स्तोत्रं यस्य तं, आत्मतत्त्वं, अनन्तं, अजं, अच्युतं, तं भगवन्तं, अहं नतः अस्मि ॥ ६५ ॥ उपचितेति । किं च उपचिता वृद्धियुक्ताः नव कालप्रकृतिमहदहंकारपञ्चभूतात्मिका नवसंख्याका याः शक्तयस्ताभिः, स्वे स्वकीये आत्मन्येव उपरचितं यत् स्थिरजङ्गमं तस्यालयः स्थानभूतस्तस्मै, उपलब्धिमात्रधाम्ने जाड्यप्रसङ्गरहितज्ञानात्मकतेजःस्वरूपाय, सुरऋषभाय, सनातनाय, भगवते नमः ॥ ६६ ॥ स्वगुरुं नमस्करोति । स्वसुखेति । स्वसुखेनात्मानन्देनैव निभृतं पूर्णं चेतो यस्य सः तेनैव व्युदस्तो निवृत्तोऽन्यस्मिन् भावोऽभिप्रायो यस्य सः, तथाभूतोऽपि यः अजितस्य भगवतः रुचिराभिर्लीलाभिः आकृष्टः सारः स्वसुखगतं स्थैर्यं यस्य सः, एवंभूतः सन्नव यः कृपयाऽस्मदादिषु परमकृपया हेतुना, तदीयं भगवच्चरितप्रधानभूतं तत्त्वदीपं परमार्थप्रकाशकं, पुराणं व्यतनुत विस्तारितवान्, तं अखिलवृजिनघ्नं समग्रजनदुःखहन्तारं, व्याससूनुं श्रीशुकं, नतः अस्मि ॥ ६७ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

## हिन्दी अनुवाद

भगवान् ही सबके स्वामी हैं और संमूह के समूह कलिमलों को ध्वंस करने वाले हैं। यों तो उनका वर्णन करने के लिये बहुत-से पुराण हैं, परन्तु उनमें सर्वत्र और निरन्तर भगवान् का वर्णन नहीं मिलता। श्री मद्भागवत महापुराण में तो प्रत्येक कथा-प्रसङ्ग में पद-पद पर सर्व स्वरूप भगवान् का ही वर्णन हुआ है ॥ ६५ ॥ वे जन्म-मृत्यु आदि विकारों से रहित, देश-कालादिकृत परिच्छेदों से मुक्त एवं स्वयं आत्मतत्त्व ही हैं। जगत् की उत्पत्ति-स्थिति प्रलय करने वाली शक्तियाँ भी उनकी स्वरूपभूत ही हैं, भिन्न नहीं। ब्रह्मा, शङ्कर, इन्द्र आदि लोकपाल भी उनकी स्तुति करना लेशमात्र भी नहीं जानते। उन्हीं एकरस सच्चिदानन्दस्वरूप परमात्मा को मैं नमस्कार करता हूँ ॥ ६६ ॥ जिन्होंने अपने स्वरूप में ही प्रकृति आदि नौ शक्तियों का सङ्कल्प करके इस चराचर जगत् की सृष्टि की है और जो इसके अधिष्ठान रूप से स्थित हैं तथा जिनका परमपद केवल अनुभूति स्वरूप है, उन्हीं देवताओं के आराध्यदेव सनातन भगवान् के चरणों में मैं नमस्कार करता हूँ ॥ ६७ ॥ श्रीशुकदेवजी महाराज अपने आत्मानन्द में ही निमग्न थे इस अखण्ड अद्वैत स्थिति से उनकी भेददृष्टि सर्वथा निवृत्त हो चुकी थी। फिर भी मुरलीमनोहर श्यामसुन्दर की मधुमयी, मङ्गलमयी, मनोहारिणी लीलाओं ने उनकी वृत्तियों को अपनी ओर आकर्षित कर लिया और उन्होंने जगत् के प्राणियों पर कृपा करके भगवत्तत्त्व को प्रकाशित करने वाले इस महापुराण का विस्तार किया। मैं उन्हीं सर्वपापहारी व्यासनन्दन भगवान् श्रीशुकदेवजी के चरणों में नमस्कार करता हूँ ॥ ६८ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥

# अथ त्रयोदशोऽध्यायः

## सूत उवाच

यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः स्तुन्वन्ति दिव्यैः स्तवैर्वेदैः साङ्गपदक्रमोपनिषदैर्गायन्ति यं सामगाः ।
ध्यानावस्थिततद्गतेन मनसा पश्यन्ति यं योगिनो यस्यान्तं न विदुः सुरासुरगणा देवाय तस्मै नमः ॥ १ ॥
पृष्ठे भ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनान्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः ।
यत्संस्कारकलानुवर्तनवशाद् वेलानिलेनाम्भसां यातायातमतन्द्रितं जलनिधेर्नाद्यापि विश्राम्यति ॥ २ ॥
पुराणसंख्यासम्भूतिमस्य वाच्यप्रयोजने । दानं दानस्य माहात्म्यं पाठादेश्च निबोधत ॥ ३ ॥
ब्राह्मं दशसहस्राणि पाद्मं पञ्चोनषष्टि च । श्रीवैष्णवं त्रयोविंशच्चतुर्विंशति शैवकम् ॥ ४ ॥
दशाष्टौ श्रीभागवतं नारदं पञ्चविंशतिः । मार्कण्डं नव वाह्नं च दशपञ्च चतुःशतम् ॥ ५ ॥
चतुर्दश भविष्यं स्यात्तथा पञ्चशतानि च । दशाष्टौ ब्रह्मवैवर्तं लिङ्गमेकादशैव तु ॥ ६ ॥
चतुर्विंशति वाराहमेकाशीतिसहस्रकम् । स्कान्दं शतं तथा चैकं वामनं दश कीर्तितम् ॥ ७ ॥
कौर्मं सप्तदशाख्यातं मात्स्यं तत्तु चतुर्दश । एकोनविंशत्सौपर्णं ब्रह्माण्डं द्वादशैव तु ॥ ८ ॥

### कृष्णप्रिया व्याख्या

अन्वयः—यं ब्रह्मा वरुणेन्द्ररुद्रमरुतः दिव्यैः स्तवैः स्तुन्वन्ति यं सामगाः साङ्गपदक्रमोपनिषदैः वेदैः गायन्ति यं योगिनः ध्यानावस्थिततद्गतेन मनसा पश्यन्ति सुरासुरगणाः ! यस्य अन्तं न विदुः तस्मै देवाय नमः ॥ १ ॥ पृष्ठे भ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनात् निद्रालोः कमठाकृतेः भगवतः श्वासानिलाः वः पान्तु वेलानिलेन यत्संस्कारकलानुवर्तनवशात् जलनिधेः अम्भसाम् अतन्द्रितं यातायातम् अद्यापि न विश्राम्यति ॥ २ ॥ पुराणसंख्यासम्भूतिम् अस्य वाच्यप्रयोजने दानं दानस्य पाठादेः माहात्म्यं च निबोधत ॥ ३ ब्राह्मं दशसहस्राणि पाद्मं पञ्चोनषष्टि च श्रीवैष्णवं त्रयोविंशत् शैवकं चतुर्विंशति श्रीभागवतं दशाष्टौ नारदं पञ्चविंशतिः मार्कण्डं नव वाह्नं दशपञ्च चतुःशतं भविष्यं चतुर्दश तथा पञ्चशतानि स्यात् ब्रह्मवैवर्तं दशाष्टौ लिङ्गम् एकादश एव तु चतुर्विंशति वाराहम् एकाशीतिसहस्रकं स्कान्दं शतं तथा एकं वामनं दश कीर्तितं कौर्मं सप्तदशाख्यातं तत् मात्स्यं तु चतुर्दश सौपर्णम् एकोनविंशत् ब्रह्माण्डं तु द्वादश एव ॥ ४–८ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

त्रयोदशे पुराणानां संख्यामाह यथाक्रमम् । दानं दानस्य माहात्म्यं श्रीमद्भागवतस्य च ॥ १ ॥

सर्वपुराणसंख्यादीनुपवर्णयिष्यंस्तत्प्रतिपाद्यं देवं प्रणमति । यमिति । स्तवैर्वेदैश्च स्तुन्वंति स्तुवंति । उपनिषच्छब्दस्याकारांतत्वं छंदोऽनुरोधेन । ध्यानेनावस्थितं निश्चलं तद्गतं यन्मनस्तेन यस्यांतं न विदुः सुरासुरगणाः ॥ १ ॥ क्षीरोदमथनादौ दुग्धे यत्वमेव प्रदर्शयितुं कूर्मावतारमनुस्मारयन्नाशिषः प्रार्थयते । पृष्ठे भ्राम्यत् अमंदो मंदरगिरिः गरिष्ठो मंदराचलस्तस्य ग्रावाणस्तेषामग्राणि तैः कंडूयनात्तेन सुखेन निद्रालोः निद्राशीलस्य येषां श्वासानिलानां संस्कारास्तेषां कलाश्च लेशाः तदनुवर्तनवशाज्जलनिधेरंभसां यातायातं न विश्राम्यति । ननु समुद्रक्षोभादेव तत् न संस्कारवशात्तत्राह । वेलाक्षोभस्तस्य निभेन मिषेण ॥ २ ॥ पुराणसंख्यास्तासां

१. प्राचीन प्रति में 'यं ब्रह्मा ········ विश्राम्यति' ये श्लोक ( नं० १ और २ ) यहाँ नहीं पढे गये हैं। वर्तमान प्रति में जो उन्नीसवाँ श्लोक है, उसके बाद ( अर्थात् ········ धीमहि' ॥ १ ॥ के बाद ) उक्त दोनों श्लोकों का उल्लेख है । २. भे

संभूतिं समाहारं चास्य तु श्रीभागवतस्य वाचम् विषयाः प्रयोजनं च दानं च तस्य पाठादेश्च माहात्म्यं निबोधत ॥ ३ ॥ त्रयोविंश-त्रयोविंशतिसहस्राणि । चतुर्विंशति चतुर्विंशतिः । शैवकं शिवपुराणम् ॥ ४ ॥ वाह्नं तु अग्निपुराणं तु दशपंचसहस्राणि चत्वारि शतानि ॥ ५–६ ॥ स्कांदं शताधिकैकाशीतिसहस्रम् ॥ ७ ॥ सौपर्णं गरुडपुराणमेकोनविंशदेकोनविंशतिः ॥ ८ ॥

### श्रीबंशीधरकृतो भावार्थदीपिकाप्रकाशः

यथाक्रमं सप्तमाध्यायोक्तपुराणगणनाक्रममनतिक्रम्य । तत्र हि—'ब्राह्मं पाद्मं वैष्णवं हि' इत्यादिना पुराणाष्टादशक-मुक्तमिति (१) । तत्प्रतिपाद्यमष्टादशपुराणप्रतिपाद्यम् । दिव्यैरलौकिकैः । अंगादिपाठचतुष्केण अंगपाठपदपाठक्रमपाठोपनिषत्पाठै-र्गायंति । अंगादिपाठज्ञानञ्च वेदाध्ययनसाध्यमिति यद्वा—अंतिमेऽध्याये पुनरपि मंगलं नत्यात्मकमाचरति । उपनिगच्छब्दोऽदंत आर्षः, तेनैतत्पुराणपाठेन भगवतस्तस्य स्तुतिसंकीर्तनमेव मम यथाकथंचिदभूत्र तु सम्यगवगम इति भावः ॥ १ ॥ सुरासुरगणदुर्ज्ञे-याऽनंतता भगवता कूर्मावतार एव दर्शिताऽतस्तत्स्मरणपूर्वकं श्रीभागवतं समापयञ्श्रीभागवतस्यापि दुर्ज्ञेयार्थतां ध्वनयति । श्वासानिलाः प्राणवायवः वो युष्मानध्येत्रध्यापकवक्तृश्रोतॄन् पांतु बलौजआदिदानेन रक्षन्तु । श्रीभगवत एव श्वसनतः सर्वेषां बलाद्युत्पत्तिश्रवणात् । तदुक्तमेकादशे—"यस्येंद्रियैस्तनुभृतामुभयेन्द्रियाणि ज्ञानं स्वतः श्वसनतो बलमोज ईहा" इत्यादीति । अत्राक्षिपति—नन्विति । किञ्च—समुद्रमथनं भगवतैव कूर्मरूपेण कृतं देवानां तु तत्र नाममात्रेणैव निमित्तता तथेदमप्यपारवेद-महासमुद्रमथनं मन्नाम्ना श्रीभगवतैव कृतमित्यर्थव्यञ्जकं व्यासोक्तमनुवदति—पृष्ठ इति । येनैव समुद्रो मथितस्तेनैव भगवता मोहिनीरूपेणासुरान्वंचयित्वा तदुत्थममृतं स्वभक्तेभ्यो देवेभ्यो दत्तं, तथैव वेदसमुद्रमथनोत्थमिदं भक्त्यनृतं श्रीभागवतरूपेणा-भक्तानसुरान्वञ्चयित्वा युष्मभ्यं ददाविति भक्तान्प्रत्याशीर्वादः ॥ २ ॥ यथाखंडमण्डलपतेस्तत्र मंडलेशा एतावंत इति गण्यते तथैव महापुराणचक्रवर्तिनः श्रीभागवतस्य संन्निधौ पुराणान्यवश्यं गणयामीत्यतः पुराणानां संख्यायास्संभूतिं सम्भवम् ॥ ३ ॥ ब्राह्मं ब्रह्मपुराणम् । दशसहस्राणि अयुतश्लोकपरिमितमित्यर्थः । पाद्मं पद्मपुराणम् । पञ्चभिरूना षष्टिः श्लोकसहस्राणां यत्र तत्तथा । उत्तरपदलोपी समासः । एवमग्रेऽपि ज्ञेयम् । त्रिभिरधिका विंशतिस्त्रयोविंशतिः, छांदसत्वाद्विंशते विंशादादेशः ॥ ४ ॥ दशसह-स्राण्यष्टौ सहस्राणि च यत्र श्लोकास्तच्छ्रीभागवतमित्यर्थः । मार्कण्डं मार्कण्डेयम्, पृषोदरादिः । वह्नेरिदं वाह्नम्, चतुःशत-मित्युक्तेर्देशपंचसहस्राणीति लभ्यते, चतुर्णां शतानां समाहारश्चतु शतम् । यद्वा—दशभिः सहिताः पञ्च,यत्र तत्तथा । पुनश्चत्वारि शतानि यत्र तत्तथा । एवमग्रेपि ॥ ५–७ ॥ तत्तु पुराणं तु ॥ ८ ॥

### अन्वितार्थप्रकाशिका

त्रयोदशे पुराणानां श्लोकादिगणनोच्यते । भागवतप्रशंसा च तत्र श्लोकास्त्रिबाहवः ( २३ ) ॥
उवाचेत्येक ( १ ) मर्द्धाढ्यष्टाविंशतिरनुष्टुभः ( २८ ) ॥ १३ ॥

यमिति दिव्यैः स्तवैर्यं ब्रह्मा स्तौति तथा वरुणेन्द्ररुद्रमरुतोऽपि स्तुवन्ति । स्तुरार्षः । तन्वन्ति इति केऽपि विरलाः पठन्ति । तत्र विस्तरेण वर्णयन्ति इत्यर्थः । अङ्गानि पदानि क्रमाः उपनिषदश्च तेषां द्वन्द्वैक्यम् 'द्वन्द्वाच्चुदष' इति टच् । ततः सहशब्देन समासः । तथा च अङ्गादिसहितैर्वेदैः यं सामगा गायन्ति ध्यानेनावस्थितं निश्चलं तद्गतं यन्मनस्तेन यं योगिनः पश्यन्ति सुरासुरगणा यस्यान्तं तत्त्वं न विदुः । तस्मै देवाय नमः । शार्दूलविक्रीडितद्वयम् ॥ १ ॥ पृष्ठे इति । पृष्ठे भ्राम्यन् यः अमन्दो गरिष्ठः मन्दरगिरि-स्तस्य ये ग्रावाणस्तेषामग्राणि तैः कण्डूयनात् तत्सुखेन निद्रालोः निद्राशीलस्य कमठाकृतेः कूर्ममूर्तेर्भगवतः श्वासानिला वो युष्मान् पान्तु । वेला समुद्रजलक्षोभः तस्य निभेन मिषेण येषां श्वासानिलानां संस्कारास्तेषां कलालेशास्तदनुवर्तनवशात् जलनिधेरम्भसां यातायातमद्यापि न विश्राम्यति ॥ २ ॥ पुराणेति । पुराणसंख्यास्तासां संभूतिं समाहारं च । अस्य श्रीभागवतस्य वाक्यं विषयः प्रयोजनं च दानं च दानस्य पाठादेश्च माहात्म्यं च निबोधत शृणुत ॥ ३ ॥ ब्राह्ममिति । त्रयोविंशत् त्रयोविंशतिः । आर्षः । एवमग्रेऽपि चतुर्विंशतिसहस्राणि क्लैब्यमार्षम् । एवमग्रेऽपि शैवकं शिवपुराणम् ॥ ४ ॥ दशेति । वाह्नमग्निपुराणं दशपञ्चसहस्राणि चत्वारि शतानि च ॥ ५ ॥ चतुर्दशेति । भविष्यं पुराणं चतुर्दश सहस्राणि पंच शतानि च ॥ ६ ॥ चतुरिति । स्कान्दं शताधिकैकाशीतिसहस्रम् ॥ ७ ॥ कौर्ममिति । सौपर्णं गरुडपुराणम् एकोनविंशतिः सहस्राणि ॥ ८ ॥

### श्रीसुदर्शनसूरिकृतशुकपक्षीयम्

( अस्मिन्नध्याये टीका नास्ति )

### श्रीमद्वीरराघवव्याख्या

कियदेतत्प्रबन्धग्रन्थसङ्ख्यापरिमाणमिति पुनर्बुभुत्सामालक्ष्य तद्वक्तुं तत्प्रसङ्गात्तावत्पुराणान्तराणि तत्परिमाणं च वक्तुं तावत्तत्प्रतिपाद्यं देवं प्रणमति—यमिति । यं ब्रह्मादयस्स्तवैर्वेदैः स्तुन्वन्ति कथम्भूतैरङ्गादिभिः सहितैः उपनिषच्छब्दस्याकारान्तत्वम्

छन्दोनुरोधात् ध्यानेनावस्थितं निश्चलं च तेन तद्गतेन मनसा यं योगिनः पश्यन्ति साक्षात्कुर्वन्ति सुरासुरगणा यस्यान्तं प्रभावेयत्तां न विदुरमृतमथनादौ इति शेषः ॥ १ ॥ दुर्विज्ञेयत्वमेव प्रदर्शयितुं कूर्मावतारमनुस्मरन्नाशिषं प्रार्थयति—पृष्ठेति। पृष्ठे भ्रमन्नमन्दो गरिष्ठः मन्दरगिरिस्तस्य ग्रावाणस्तेषामग्राणि तैः कण्डूयनात्तेन सुखेन निद्रालोर्निद्राशीलस्य भगवतः कमठाकृतेः कूर्मरूपस्य हरेः श्वासानिलाः श्वासवायवः पान्तु, तान् विशिनष्टि—येषां श्वासानिलानां संस्कारः तेषां लेशः तदनुवर्त्तनवशाज्जलधेरम्भसां यातायातं गमनागमनम् अतन्द्रितम् यथा तथा अद्यापि न विश्राम्यति ननु समुद्रक्षोभादेव तन्न संस्कारवशात्तत्राह—वेलाच्छलेनेति। वेला-क्षोभस्तस्य छलेन मिषेण ॥ २ ॥ किञ्च पुराणेति। पुराणानां सङ्ख्यास्तासां सम्भूतिं समाहारं चास्य श्रीभागवतस्य वाच्यं विषय-स्तत्प्रयोजनञ्च दानं पुस्तकदानं दानस्य पाठादेश्च माहात्म्यं निबोधत शृणुत इत्यर्थः ॥ ३ ॥ ब्राह्ममिति। त्रयोविंशत् त्रयोविंशतिः शैवं चतुर्विंशतिस्सहस्राणि ॥ ४ ॥ बाह्ममाग्नेयं पुराणे पञ्चोदशसहस्राणि चत्वारि शतानि च ॥ ५ ॥ ( भविष्यं पुराणं चतुर्दश-सहस्राणि पञ्चशतानि चात पञ्चसहस्राणि ) ब्रह्मवैवर्त्तं दशसहस्राण्यष्टौ शतानि चेति उक्ता एकादशैव एकादशसहस्राण्येव ॥ ६ ॥ स्कान्दं तु शताधिकैकाशीतिसहस्रम् ॥ ७ ॥ सौपर्णं गारुडं पुराणम् एकानविंशदेकोनविंशतिसहस्राणि भारतरामायणेत्वितिहासव-त्तयोरियत्ता नोक्ता ॥ ८ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

स्तवैर्वेदैश्च स्तुन्वन्ति स्तुवन्ति उपनिषच्छब्दस्याकारान्तत्वं ध्यानेनावस्थितं निश्चलं तद्गतं यन्मनस्तेन यस्यान्तं न विदुः सुरासुरगणाः ॥ १ ॥ पृष्ठे भ्राम्यत् अमन्दो गरिष्ठो मन्दरगिरिस्तस्य ग्रावाणस्तेषामग्राणि तैः कण्डूयनात्तेन सुखेन निद्रालोः निद्रा-शीलस्य येषां श्वासानिलानां संस्कारास्तेषां फलाञ्च लेशास्तदनुवर्तनवशात् जलनिधेरम्भसां यातायातं न विश्राम्यति। ननु, समुद्र-क्षोभादेव तन्न संस्कारवशात्तत्राह वेलाक्षोभस्तस्य निभेन मिषेण ॥ २ ॥ पुराणसङ्ख्यास्तासां सम्भूतिं समाहारं वा अस्य श्रीभाग-वतस्य वाच्यं विषयः प्रयोजनं दानं च तस्य पाठादेश्च माहात्म्यं निबोधत ॥ ३ ॥ त्रयोविंशत् त्रयोविंशतिः चतुर्विंशतिसहस्राणि शैवकं शिवपुराणम् ॥ ४ ॥ मार्कण्डेयं नव वाह्नन्विति वा पाठः अग्निपुराणं दशपञ्चसहस्राणि चत्वारिशतानि ॥ ५–६ ॥ स्कान्दं शताधिकैकाशीतिसहस्रम् ॥ ७ ॥ सौपर्णं गरुडपुराणम् एकोनविंशत् एकोनविंशतिः ॥ ८ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

१—८

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

त्रयोदशे पुनर्नत्या मङ्गलाचरणं प्रभोः। आद्यन्तयोः पुराणस्य सङ्ख्या दानादि चोच्यते ॥

अन्तिमेऽत्राध्याये पुनरपि भगवन्तं प्रणमन् मङ्गलमाचरति, यमिति। स्तुन्वन्ति स्तुवन्ति उपनिषच्छब्दस्याकारान्तत्वमार्षं तेनैतत्पुराणपाठेन भगवतस्तस्य स्तुतिं सङ्कीर्त्तनध्यानमेव मम यथा कथञ्चिदभूत्तु सम्यगपगम इति भावः ॥ १ ॥ किञ्च, यथा समुद्रमथनं भगवतैव कूर्मादिस्वरूपेण कृते दिवौकसां तु तत्र नाममात्रेणैव निमित्तता तथैवेदमपारवेदमहासमुद्रमथनं यन्नाम्ना भगवतैव कृतमित्यर्थव्यञ्जकं श्रीव्यासोक्तमनुवदति, पृष्ठेति। पृष्ठे भ्राम्यन्नमन्दो महागुरुर्मन्दरगिरिस्तस्य ग्रावाणस्तेषामग्राणि तैः कण्डूयनात् निद्रालोः कण्डूयनोत्थसुखेन निद्राशीलस्य श्वासानिलाः पान्तु वः इति येनैव समुद्रो मथितस्तेनैव भगवता मोहिनी-रूपेण असुरान् वञ्चयित्वा युष्मभ्यं ददाविति भक्तान् प्रत्याशीर्वादः। येषां श्वासानिलानां संस्कारास्तेषां कललेशास्तदनुवर्त्तनवशात् जलनिधरम्भसाम् यातायातं न विश्राम्यति। ननु, तत्समुद्रक्षोभादेव न तत्संस्कारवशात्तत्राह वेलाक्षोभस्तस्य निभेन मिषेण ॥ २ ॥ यथा पृथ्वीपतेरग्रतस्तत्र मण्डलेश्वरा एतावन्त इति गण्यन्ते तथैव महापुराणचक्रवर्त्तिनः श्रीभागवतस्य सन्निधौ पुराणान्यवश्य-गण्यानीत्यतः पुराणानां सङ्ख्यायाः सम्भूतिं सम्भवं तथा अस्य श्रीभागवतस्य वाच्यं च प्रयोजनं चेति ॥ ३ ॥ त्रयोविंशत् त्रयोविंशतिः शैवकं शिवपुराणम् ॥ ४ ॥ वाह्नं वह्निपुराणं दशपञ्चसहस्राणि चत्वारि शतानि च ॥ ५–६ ॥ स्कान्दं शताधि-कैकाशीतिसहस्रम् ॥ ७–८ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

त्रयोदशे सर्वशास्त्रसाररूपश्रीमद्भागवतश्रैष्ठ्यं वर्णयिष्यन् तद्विषयभूतभगवन्नतिपूर्वकं पुराणसङ्ख्यासम्भूतिं दर्शयति—यमिति सार्द्धैरष्टभिः। स्तुन्वन्ति स्तुवन्ति उपनिषच्छब्दस्याकारान्तत्वं छान्दसं स्तुतिगानध्यानविषयत्वेऽपीयत्तानवच्छिन्नत्वं दर्शयति, अन्त न विदुरिति ॥ १ ॥ भगवतः इयत्तानवच्छिन्नतां कैमुतिकन्यायेन दृढयितुं तदवताराणां कूर्मोपलक्षितानां दुर्ज्ञेयत्वं दर्शयन् समुद्रमथनलीलया अमृतोत्पादनवत्सकलशास्त्रमथनेन श्रीमद्भागवतोत्पत्तिं च द्योतयति, पृष्ठे भ्राम्यत् अमन्दोऽतिवेगवान्

गरिष्ठश्च यो मन्दरस्तस्य ग्रावाग्रैः कण्डूयनात् सुखोत्पादकसङ्घर्षणात् हेतोर्निद्रालोः निद्राशीलस्य श्वासानिलाः वः पान्तु यत् येषां श्वासानिलानां संस्कारकलानुवर्त्तनवशात् जलनिधेरम्भसामतन्द्रितं निरन्तरं यातायातमद्यापि न विश्राम्यति नन्वम्भसां गमनागमनं समुद्रक्षोभाद्भवतीत्यत आह, वेलानिभेनेति। वेलाक्षोभस्तस्य निभेन मिषेण अनेन वाय्वग्निजलादिष्वचेतनपदार्थेषु यत्रयत्र क्रिया सा भगवत्कर्तृकैवातः स्वभाववादो नाङ्गीकार्य इति द्योत्यते ॥ २ ॥ पुराणानां पृथक् पृथक् याः सङ्ख्यास्तासां सम्भूतिं समाहारम् अस्य श्रीमद्भागवतस्य वाच्यप्रयोजने विषयफले दानं तन्माहात्म्यं पाठादेर्माहात्म्यम् आदिशब्देन श्रवणादेर्ग्रहणम् ॥ ३ ॥ त्रयोविंशत् त्रयोविंशतिः ॥ ४ ॥ वाह्नमाग्नेयं दशपञ्च सहस्राणि चत्वारि शतानि च ॥ ५–८ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

त्रयोदशे पुराणानां सङ्ख्याः प्रोक्ता यथाक्रमम् । श्रीमद्भागवतस्यापि दानादेः फलमुच्यते ॥ १ ॥

सर्वपुराणसङ्ख्यादीनुपवर्णयिष्यंस्तत्प्रतिपाद्यं देवं प्रणमति—यं ब्रह्मादयो दिव्यैः स्तुवैः स्तुन्वन्ति स्तुवन्ति। उपनिषच्छब्दस्याकारान्तत्वं छन्दोऽनुरोधेन। अङ्गादिसहितैर्वेदैर्यं सामगा गायन्ति। ध्यानेनावस्थितं निश्चलं तद्गतं यन्मनस्तेन यं योगिनः पश्यन्ति सुरासुरगणा यस्यान्तं तत्त्वं न विदुः तस्मै देवाय नमः ॥१॥ क्षीरोदमथनादौ तस्य दुर्ज्ञेयत्वं प्रसिद्धमिति कूर्मावतारमनुस्मारयन्नाशिषं प्रार्थयते— पृष्ठे इति। पृष्ठे भ्रामयन् यः अमन्दो गरिष्ठः मन्दरगिरिस्तस्य ये ग्रावाणस्तेषामग्राणि तैः कण्डूयनात् तत्सुखेन निद्रालोः निद्राशीलस्य कमठाकृतेः कूर्ममूर्त्तेर्भगवतः श्वासानिला वो युष्मान् पान्तु। पालनसामर्थ्यं सूचयन् प्रावल्यमाह—यदिति। येषां श्वासानिलानां संस्कारास्तेषां कलालेशास्तदनुवर्तनवशात् जलनिधेरम्भसां यातायातमद्यापि न विश्राम्यति। ननु समुद्रक्षोभादेव तत् न तत्संस्कारवशात्तत्राह—वेलाक्षोभस्तस्य निभेन मिषेणेति ॥ २ ॥ पुराणसङ्ख्यास्तासां सम्भूतिं समाहारं च। अस्य श्रीभागवतस्य वाच्यं विषयः प्रयोजनं च दानं च दानस्य पाठादेश्च माहात्म्यं निबोध ॥ ३ ॥ त्रयोविंशत् त्रयोविंशति। चतुर्विंशतिसहस्राणि शैवकं शिवपुराणम् ॥ ४ ॥ वाह्नमग्निपुराणम् । दशपञ्चसहस्राणि चत्वारि शतानि च ॥ ५ ॥ भविष्यं पुराणं चतुर्दशसहस्राणि पञ्चशतानि च ॥ ६ ॥ स्कान्दं शताधिकैकाशीतिसहस्रम् ॥ ७ ॥ सौपर्णं गरुडपुराणम् एकोनविंशन् एकोनविंशतिसहस्राणि ॥ ८ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

संख्यामाह पुराणानामस्य वाच्यप्रयोजने । वर्णयिष्यंश्च दानादेः फलमस्य त्रयोदशे ॥ १ ॥

कियदेतत्प्रबन्धग्रन्थसंख्यापरिमाणमिति बुभुत्सामालक्ष्य तद्वक्तुं तत्प्रसङ्गात्तावत् पुराणान्तरं तत्परिमाणं च वक्तु तावदेतत्प्रतिपाद्यं देवं प्रणमति। यमिति। यं ब्रह्मा वरुणश्च इन्द्रश्च रुद्रश्च मरुतश्च ते, दिव्यैः स्तवैः, अङ्गानि च पदानि च क्रमश्च उपनिषदश्च तैः सहितास्तैः, वेदैश्च स्तुन्वन्ति स्तुवन्ति। उपनिषच्छब्दस्याकारान्तत्वं छन्दोऽनुरोधात्। यं सामगाश्च गायन्ति, ध्यानेनाऽवस्थितं निश्चलं च तत्तद्गतं च तेन मनसा योगिनः यं पश्यन्ति साक्षात् कुर्वन्ति, सुराश्चासुराश्च तेषां गणाः, यस्य अन्तं प्रभावेयत्तां न विदुः, अमृतमथनादावितिशेषः। तस्मै देवाय नमः ॥ १ ॥ दुर्ज्ञेयत्वमेव प्रदर्शयितुं कूर्मावतारमनुस्मरन्नाशिषं प्रार्थयति। पृष्ठ इति। पृष्ठे भ्राम्यन्नमन्दो गरिष्ठो यो मन्दरगिरिस्तस्य ये ग्रावाणस्तेषामग्राणि तैर्यत् कण्डूयनं तस्मात्, तज्जन्यसुखत इत्यर्थः। निद्रालोः निद्राशीलस्य, कमठाकृतेः कूर्मरूपस्य, भगवतो हरेः, श्वासानिलाः श्वासवायवः, वो युष्मान् पान्तु। तान् विशिनष्टि। येषां श्वासानिलानां संस्कारास्तेषां कला लेशास्तेषामनुवर्त्तनं तस्य वशस्तस्मात्, जलनिधेः अम्भसां यातायातं गमनागमनं वेलाच्छलेन वेला क्षोभस्तस्य छलं मिषं तेन, अद्यापि अतन्द्रितं यथा तथा, न विश्राम्यति ॥ २ ॥ किंच। पुराणेति। पुराणानां संख्यास्तासां संभूतिः समाहारस्तं, अस्य श्रीभागवतस्य, वाच्यं विषयस्तत्प्रयोजनं च, ते च दानमेतत्पुस्तकदानं च, दानस्य पाठादेश्च माहात्म्यं निबोधत शृणुतेत्यर्थः ॥ ३ ॥ ब्राह्ममिति। ब्राह्मं ब्रह्मपुराणं, दशसहस्राणि दशसहस्रश्लोकसंख्यावदित्यर्थः। पाद्मं च पञ्चोनषष्टि पञ्चपञ्चाशत्सहस्रश्लोकसंख्यमित्यर्थः। श्रीवैष्णवं पाराशरीयपुराणतो भेदद्योतनाय श्रीशब्दप्रयोगः। त्रयोविंशत त्रयोविंशतिसहस्रश्लोकसंख्यमित्यर्थः। शैवकं शिवपुराणं एतन्नामकोपपुराणतो भेदबोधनाय ताद्धितः कप्रत्ययो बोध्यः। चतुर्विशति चतुर्विंशतिसहस्रश्लोकसंख्योपेतमित्यर्थः ॥ ४ ॥ दशेति। श्रीभागवतं एतन्नामकोपपुराणतो भेदद्योतनाय श्रीशब्दप्रयोगः। दशाष्टौ अष्टादशसहस्रश्लोकसंख्यमित्यर्थः। नारदं पञ्चविंशति, पञ्चविंशतिसहस्रश्लोकसंख्यमित्यर्थः। मार्कण्डं मार्कण्डेयं नव नवसहस्रश्लोकसंख्य, वाह्नमग्निपुराणं, दशपञ्च पञ्चदशसहस्राणि तदुपरि चतुःशतं च, चतुःशताधिकपञ्चदशसहस्रश्लोकसंख्यमित्यर्थः ॥ ५ ॥ चतुर्दशेति। भविष्यं भविष्यत्पुराणं, चतुर्दश तथा पञ्चशतानि च, पञ्चशताधिकचतुर्दशसहस्रश्लोकसंख्यमित्यर्थः। स्यात्। ब्रह्मवैवर्त्त दशाष्टौ अष्टादशसहस्रश्लोकसंख्यं, लिङ्गं लिङ्गपुराणं तु एकादश एकादशसहस्रश्लोकसंख्यमेव निर्विभक्तिकत्वं यत्र तत्र छान्दसम् ॥ ६ ॥ चतुर्विंशतीति। वाराहं चतुर्विंशतिसहस्रश्लोकसंख्यं, स्कान्दं स्कन्दपुराणं, एकाशीतिसहस्रकं तथा च एकं शतं एकशताधिकैकाशीतिसहस्रश्लोकसंख्यमित्यर्थः। वामनं दश कीर्त्तितं, दशसहस्रश्लोकसंख्यं वामनपुराणमित्यर्थः ॥ ७ ॥ कौर्ममिति।

कौर्मं कूर्मपुराणं, सप्तदशसहस्रश्लोकसंख्यमित्यर्थः। आख्यातं कथितमस्ति। यत् मात्स्यं पुराणं, तत्तु चतुर्दश चतुर्दशसहस्रश्लोकसंख्यं, सौपर्णं गरुडपुराणं, एकोनविंशत् एकोनविंशत्सहस्रश्लोकसंख्यमित्यर्थः। ब्रह्माण्डं ब्रह्माण्डपुराणं तु, द्वादश एव द्वादशसहस्रश्लोकसंख्याकमित्यर्थः॥ ८॥

### हिन्दी अनुवाद

### विभिन्न पुराणों की श्लोक-संख्या और श्रीमद्भागवत की महिमा

श्रीसूतजी कहते हैं—ब्रह्मा, वरुण, इन्द्र, रुद्र और मरुद्गण दिव्य स्तुतियों के द्वारा जिनके गुण-गान में संलग्न रहते हैं; साम-सङ्गीत के मर्मज्ञ ऋषि-मुनि अङ्ग, पद, क्रम एवं उपनिषदों के सहित वेदोंद्वारा जिनका गान करते रहते हैं; योगीलोग ध्यान के द्वारा निश्चल एवं तल्लीन मन से जिनका भावमय दर्शन प्राप्त करते रहते हैं; किन्तु यह सब करते रहने पर भी देवता, दैत्य, मनुष्य—कोई भी जिनके वास्तविक स्वरूप को पूर्णतया न जान सका उन स्वयं प्रकाश परमात्माको नमस्कार है॥ १॥ जिस समय भगवान् ने कच्छपरूप धारण किया था और उनकी पीठ पर बड़ा भारी मन्दराचल मथान की तरह घूम रहा था, उस समय मन्दराचल की चट्टानों के नोक से खुजलाने के कारण भगवान् को तनिक सुख मिला। वे सो गये और श्वास की गति तनिक बढ़ गयी। उस समय उस श्वासवायु से जो समुद्र के जल को धक्का लगा था, उसका, संस्कार आज भी उसमें शेष है। आज भी समुद्र उसी श्वासवायु के थपेड़ों के फलस्वरूप ज्वार-भाटों के रूप में दिन-रात चढ़ता उतरता रहता है, उसे अबतक विश्राम न मिला। भगवान् की वही परमप्रभावशाली श्वासवायु आपलोगों की रक्षा करे॥ २॥ शौनकजी! अब पुराणों की अलग-अलग श्लोक संख्या, उनका जोड़. श्रीमद्भागवत का प्रतिपाद्य विषय और उसका प्रयोजन भी सुनिये। इसके दान की पद्धति तथा दान और पाठ आदि की महिमा भी आपलोग श्रवण कीजिये॥ ३॥ ब्रह्मपुराण में दस हजार श्लोक, पद्मपुराण में पचपन हजार, श्रीविष्णुपुराण में तेईस हजार और शिवपुराण की श्लोकसंख्या चौबीस हजार है॥४॥ श्रीमद्भागवत में अठारह हजार, नारदपुराण में पचीस हजार, मार्कण्डेयपुराण में नौ हजार तथा अग्निपुराण में पंद्रह हजार, चार सौ श्लोक हैं॥ ५॥ भविष्यपुराण की श्लोक संख्या चौदह हजार, पाँच सौ है और ब्रह्मवैवर्तपुराण की अठारह हजार और लिङ्गपुराण में ग्यारह हजार श्लोक हैं॥ ६॥ वराहपुराण में चौबीस हजार, स्कन्दपुराण की श्लोक-संख्या इक्यासी हजार, एक सौ है और वामनपुराण की दस हजार॥ ७॥ कूर्मपुराण सत्रह हजार श्लोकों का और मत्स्यपुराण चौदह हजार श्लोकों का है। गरुड़पुराण में उन्नीस हजार हैं और ब्रह्माण्डपुराण में बारह हजार॥ ८॥

**एवं पुराणसन्दोहश्चतुर्लक्ष उदाहृतः। तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते॥ ९॥**
**इदं भगवता पूर्वं ब्रह्मणे नाभिपङ्कजे। स्थिताय भवभीताय कारुण्यात् सम्प्रकाशितम्॥ १०॥**
**आदिमध्यावसानेषु वैराग्याख्यानसंयुतम्। हरिलीलाकथाव्रातामृतानन्दितसत्सुरम्॥ ११॥**
**सर्ववेदान्तसारं यद् ब्रह्मात्मैकत्वलक्षणम्। वस्त्वद्वितीयं तन्निष्ठं कैवल्यैकप्रयोजनम्॥ १२॥**
**प्रौष्ठपद्यां पौर्णमास्यां हेमसिंहसमन्वितम्। ददाति यो भागवतं स याति परमां गतिम्॥ १३॥**
**राजन्ते तावदन्यानि पुराणानि सतां गणे। यावन्न दृश्यते साक्षाच्छ्रीमद्भागवतं परम्॥ १४॥**
**सर्ववेदान्तसारं हि श्रीभागवतमिष्यते। तद्रसामृततृप्तस्य नान्यत्र स्याद्रतिः क्वचित्॥ १५॥**
**निम्नगानां यथा गङ्गा देवानामच्युतो यथा। वैष्णवानां यथा शम्भुः पुराणानामिदं तथा॥ १६॥**

### कृष्णप्रिया व्याख्या

अन्वयः—एवं पुराणसंदोहः चतुर्लक्षः उदाहृतः तत्र अष्टादशसाहस्रं भागवतम् इष्यते॥ ९॥ इदं पूर्वं भवभीताय नाभिपङ्कजे स्थिताय ब्रह्मणे भगवता कारुण्यात् सम्प्रकाशितम्॥ १०॥ आदिमध्यावसानेषु वैराग्याख्यानसंयुतं हरिलीलाकथाव्रातामृतानन्दितसत्सुरं सर्ववेदान्तसारं ब्रह्मात्मैकत्वलक्षणं यत् अद्वितीयं वस्तु तन्निष्ठं कैवल्यैकप्रयोजनम्॥ ११-१२॥ प्रौष्ठपद्यां पौर्णमास्यां यः हेमसिंहसमन्वितं भागवतं ददाति सः परमां गतिं याति॥ १३॥ राजन् सतां गणे तावत् अन्यानि पुराणानि यावत्

साक्षात् परं श्रीमद्भागवतं न दृश्यते ॥ १४ ॥ सर्ववेदान्तसारं श्रीभागवतम् इष्यते तद्रसामृततृप्तस्य ( जनस्य ) अन्यत्र क्वचित् रतिः न स्यात् ॥ १५ ॥ यथा निम्नगानां गङ्गा यथा देवानाम् अच्युतः यथा वैष्णवानां शम्भुः तथा इदं पुराणानाम् ॥ १६ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

महाभारतं त्वितिहासः । रामायणं च ऋषिप्रोक्तं काव्यम् । अतः पुराणानां संदोहः समूहश्चतुर्लक्षसंख्याक एव । इदानीमस्य वाच्यप्रयोजनादीन् दर्शयितुमाह तत्रेत्यादिना ॥ ९–१० ॥ हरिलीलाकथानां व्रातः समूहः स एवामृतं तेनानंदिताः संतः सुराश्च येन तत् ॥ ११ ॥ तन्निष्ठं तद्विषयम् ॥ १२ ॥ प्रौष्ठपद्यां भाद्रपद्याम् । हेमसिंहसमन्वितं सुवर्णसिंहासनारूढम् ॥ १३–१४ ॥ तद्रस एवामृतं तेन तृप्तस्य निर्वृतस्य ॥ १५–१६ ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

महाभारतादीनां पुराणत्वशंकां निरस्यति स्वामी—महाभारतं त्विति । ऋषिप्रोक्तं वाल्मीकिप्रोक्तम् । अतो महाभारत-रामायणयोः पुराणत्वाभावात् । तत्राऽष्टादशसु पुराणेषु । तत्रेति—अथैवाऽवतारत्वादवतारमध्ये कृष्णं गणयित्वा पुनः "एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम्" इति कृष्णस्य पृथग्गणना, तथैव पुराणत्वात्पुराणमध्ये श्रीभागवतं गणयित्वा 'तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते' इति पुनर्गणना पुराणचक्रवर्तित्वव्यञ्जिका । यथा च तत्र पदं सर्वोत्कर्षव्यञ्जकं, तथा त्रापि श्रीमदिति पदमिति प्रक्रान्तं सम्पूर्णमेव ॥ ९ ॥ तदेव व्यनक्ति—कारुण्यात्कृपापारवश्यात् । भगवता श्रीकृष्णेन । गर्भोदशायिने नाभिपंकजे स्थिताय ब्रह्मणे ॥ १० ॥ यत् सर्वेषां वेदान्तानामुपनिषदां सारं ब्रह्मात्मनोर्ब्रह्मजीवयोरेकत्वलक्षणमभेदरूपमद्वितीयं वस्तु तदेव निष्ठाविषयो वाच्यं यस्य तत्तन्निष्ठं ब्रह्मैकज्ञानमस्य विषय इत्यर्थः । कैवल्यं स्वरूपावाप्तिरेवैकं मुख्यं प्रयोजनं यस्य तत्तथा प्रसंगादस्य सम्बन्धस्तु वाच्यवाचकभावरूपो ज्ञेयः । अधिकारी त्वेतज्जिज्ञासुरेवेत्येतदनुबन्धचतुष्टयम्—'धर्मः प्रोज्झितकैतवः' इत्यत्रोक्तमप्यत्र स्मृति-लाभाय ध्वनितमिति । वाच्यं प्रयोजनञ्चाह—हरेर्लीलाकथानां व्रातः समूह एवाऽमृतं तेनानंदिताः सन्तो भक्ता एव सुरा येन तदिति लीलाकथाव्रातशब्देन भक्तिरूपं वाच्य व्यञ्जितं तदेवामृतमिति प्रेमरूपं प्रयोजनं च प्रेम्णोव भक्तेरमृतवदास्वाद्यत्वप्रसिद्धेः, तेन सतामानन्द इति प्रेम्णोऽनुभावः । तत्र कथायाममृतत्वारोपेण तत्सम्प्रदानानां सतां सुरत्वारोपेण च तत्सम्प्रदातुः शास्त्रस्यास्य मोहिनीत्वारोपो लभ्यते, मोहिन्यैव सुरेभ्योऽमृतदानत्वप्रसिद्धेः । ततश्च सुरान्स्वभक्तान्स्वं विदुषः प्रति भ्रूविभंगेनैवान्यजनाज्ञातं यथा ब्रूते स्म मदनुभावस्यास्य युष्मदानुकूल्यमेव कर्तव्यं प्रयोजनं चासुरान्वंचयित्वा युष्मभ्यममृतदानम् । यथा चासुरान्स्वतत्त्वम-विदुषः प्रति अपि भ्रूचालनेनैतत्स्पष्टमेव ब्रूते स्म तदाविर्भावस्य युष्माकं विजयप्रापणमेव कर्तव्यं, प्रयोजनं च युष्मभ्यममृतदानमितीदं गौणमेव । मुख्यप्रयोजनं तु यद्युष्मान्नित्यमानन्दचमत्कारं प्रापयामि युष्मद्गृहस्थित्यैवातोऽतिदीनानेतान्देवान्प्रथमं किञ्चित्परि-वेषयामीति तथैवेदं भागवतशास्त्रमपि स्वतत्त्वज्ञान्स्वभक्तान् 'हरिलीला' इत्यर्धपद्येन स्ववाच्यम् 'परोक्षवादा ऋषयः परोक्षं मम च प्रियम्' इति भगवदुक्तेर्व्यञ्जनावृत्त्यैव सर्वलोकालक्षितमुक्त्वा स्वतत्त्वमविदुषः शास्त्रज्ञमानिनः प्रकटमेव स्ववाच्यप्रयोजने अन्ये एवाह—सर्ववेदान्तानां सारं यद्ब्रह्मणा सहात्मैक्यमद्वितीयं वस्तु तस्मिन्वाचकत्वेन निष्ठा यस्य तत् । कैवल्यमेकं मुख्यं प्रयोजनं यस्य तत् । केचित्पुनरेवं व्याचक्षते—शास्त्रेऽस्मिन्द्वयोरेव भक्तिज्ञानयोरुक्तत्वाद्भक्तिप्रेमणी वाच्यप्रयोजने उक्त्वा ज्ञानकैवल्ये अपि वाच्यप्रयोजने आह—सर्वेति । अपरे त्वेवमाहुः—शास्त्रेऽस्मिन्प्रक्रमे एव 'धर्मः प्रोज्झितकैतवोऽत्र परमः' इत्यनेन परमधर्मस्य भक्तेरेव वाच्यत्वावगमात् 'ईश्वरः । सद्यो हृद्यवरुध्यतेऽत्र कृतिभिः' इत्यनेन प्रेम्ण एव प्रयोजनत्वावगमाच्च । तथा सर्वस्कन्धेषु ज्ञानात्तत्साध्यमुक्तेश्च सकाशाद्भक्तेरेव प्राधान्यदर्शनात् 'प्राधान्येन व्यपदेशा भवन्ति' इति न्यायाद्भक्तिप्रेम्णोरेव वाच्यत्वप्रयोजनत्वे व्यज्येते, तस्मान्मोहिनीसाधर्म्यप्रापकप्रकटार्थमेतत्पद्यमाभ्यन्तरेणाप्यर्थान्तरेण योजनीयम् । तद्यथा—ब्रह्मात्मैक्यलक्षणं यद्वस्तु तन्निष्ठं ततोऽपि निःसृत्य विष्ठतीति तन्निष्ठं ज्ञानकर्माद्यभिलाषरहिता केवला अनन्यभक्तास्तेषां भावः कैवल्यं तदेव प्रयोजनं यस्य तदिति ॥ ११–१२ ॥ नामैकदेशोच्चारणन्यायेन सिंहपदं सिंहासनं वक्तीत्याह—सुवर्णसिंहासनेति । दानपात्रं तु 'जन्माद्यस्य' इति व्याख्याशतकं प्रोक्तमपि प्रसंगात्पुनरत्रोच्यते—'सुवृत्ताय गृहस्थाय कृष्णभक्ताय सन्ततम् । सर्वशास्त्रविदेऽध्यापने निरताय च विप्राय देयमेतत्तु श्रीमद्भागवतं मुने । यस्य पाठादिनिरतो विरक्तोऽपि यदा द्विजः । तस्मा अपि देयमेतन्न बद्ध्वा स्थापिने कःचित् ।' इति संहितोक्तेः । प्रौष्ठपद्यां भाद्रसम्बन्धिन्याम् । तस्मिन्नेव दिने श्रीमुनीन्द्रेणैतत्पुराणं समाप्तीकृतमिति पाद्मोत्तरखण्ड-माहात्म्ये दृष्टम् । हेमसिंहेति—सर्वशास्त्रमहाराजस्यास्य पुराणसूर्यस्य साम्राज्यार्थं सिंहासनौचित्यात् । सर्वग्रहराजस्य सूर्यस्याऽपि सिंहराशिगस्य सिंहासनारूढता दृष्टैव । परमां परमस्य भगवतः सन्निधिरूपाम् । ज्ञानेन वैयासकिशब्दितेन भेजे खगेन्द्रध्वजपाद-मूलम्' इत्युक्तेः ॥ १३ ॥ श्रूयत इत्यत्र 'दृश्यते' इति पाठश्चक्रवर्त्यादिसम्मतोऽस्ति । अस्य सर्वशास्त्रराजत्वमेवाह—राजन्त इति । अन्यानि पुराणानि तावच्छास्त्रराजत्ववन्ति, यावन्नेति भागवतं तु सम्राडेवातः शास्त्रमहाराजत्वमत्रैवेति भावः । यद्वा—अस्य

पुराणसूर्यत्वमाह–राजन्ते दीप्यन्ते रात्रौ नक्षत्राणि वेति भावः यावद्राज्यन्ते, यावन्नेति सति सूर्ये न दृश्येते इति भावः ॥ १४ ॥ तद्रसः श्रीभागवतरसः 'पिबत भागवतं रसमालयम्' इत्युक्तेः । स च श्रीकृष्णलीलामाधुर्यादिलक्षण एव अमृतं पीयूषम् ॥ १५ ॥ निम्नं गच्छन्तीति निम्नगाः नद्यस्तासां गङ्गा भागीरथी, अग्रिमश्लोके 'यथा-काशी ह्युत्तमा' इत्युक्तेरच्युतादिपदैरपि तल्लिङ्गव्यत्यासेनोत्तमपदं योज्यम् । न उत्तम उत्कृष्टो यस्मात्तस्या वेति यथोचितं समसनीयम् । किञ्च—सर्ववैष्णवशिरोमणेः श्रीशिवस्य त्रिपुण्ड्रभस्मरुद्राक्षधृतिदर्शनादेतत्कालिकैस्तत्कथं न धार्यत इति न शङ्कनीयम् 'न देवचरितं चरेत्' इति स्मृतेः । यच्चैतद्धारणे वैष्णवैः, तुलस्यादिधारणे शैवैश्च निन्दोच्यते, तत्परमार्थोऽज्ञानविजृम्भितैव । यानि तु तत्तन्निन्दावाक्यान्युदाह्रियन्ते. तानि निर्मूलान्येवेति । न हि रुद्राक्षादिधृत्या वैष्णवत्वं नश्यति किन्तु वर्द्धत एव, तथैव तुलस्यादिधृत्या शैवत्वं न नश्यति किन्तु वर्द्धत एव, तथापि 'महाजनो येन गतः स पन्था' इति इति न्यायमाश्रित्य वर्तितव्यमिति तत्त्वम् । इदं श्रीभागवतम् ॥ १६ ॥

## अन्वितार्थप्रकाशिका

एवमिति । भारतं त्वितिहासः रामायणं च वाल्मीकिना प्रोक्तं काव्यमतस्तयोः सङ्ख्या नोक्ता । अतः पुराणानां संदोहः समूहश्चतुर्लक्षसङ्ख्याक एव ॥ ९ ॥ इदमिति । भगवता प्रोक्तमिति भागवतनामनिरुक्तिः । भवभीतायेति संसारनिवृत्तिः फलं कारुण्यादिति दुर्लभत्वम् ॥ १० ॥ आदीति । हरिलीलाकथानां व्रातः समूहः स एवामृतं तेनानन्दिताः सुराश्च येन सन्त एव सुरा इति वा तत् ॥ ११ ॥ सर्वेति । यत् अद्वितीयं वस्तु तन्निष्ठं तद्विषयं शेषाणि विशेषणानि ॥ १२ ॥ प्रौष्ठेति । प्रौष्ठपद्यां भाद्रपद्यां हेमसिंहसमन्वितं स्वर्णसिंहासनारूढम् । प्रौष्ठपद्यामेवेवं श्रीशुकेन समापितमिति पाद्मोत्तरखण्डगतमाहात्म्ये दृष्टम् । हेमसिंहसमन्वितमिति सर्वशास्त्रमहाराजस्य पुराणसूर्यस्यास्य सिंहासनौचित्यात् । अस्योपमानस्य ग्रहराजस्यापि तदानीं सिंहराशिगतत्वेन सिंहासनारूढत्वैव ॥ १३ ॥ राजन्ते ॥ १४ ॥ सर्वेति । हि यस्मात्सर्ववेदान्तसारं श्रीमद्भागवतं तस्मात् तद्रस एवामृतं तेन तृप्तस्य निर्वृतस्यान्यत्र शास्त्रान्तरे क्वचिदपि रतिर्न स्यात् ॥ १५ ॥ निम्नगानामिति । निम्नगानां नदीनां मध्ये ॥ १६ ॥

## श्रीमद्वीरराघवव्याख्या

एवमिति । अतः पुराणानां सन्दोहः समूहश्चतुर्लक्षसंख्याक एव इदानीमस्य वाच्यादीन् दर्शयितुमाह तत्रेत्यादिना ॥ ९ ॥ इदमिति भगवता श्रीनारायणेन सम्प्रदर्शितं चतुःश्लोकरूपेणेति शेषः ॥१०॥ यद्यप्यत्रादिमध्यावसानेषु पृथगाख्यानैर्नानाविधैराख्यानैः संयुतं तथापि सर्वत्र हरिलीलाकथानां व्रातः समूह एवाऽमृतं तेनाऽऽनन्दिताः सन्तश्च सुराश्च येन तत् ॥ ११ ॥ अनेन वाच्यं प्रधानं सूचितं—तत्स्पष्टमेवाह–सर्वेति । सर्ववेदान्तेषु यत् सारभूतं ब्रह्म आत्मा च तयोर्भावः ब्रह्मात्मत्वं स्वरूपतो गुणतश्च निरतिशयबृहत्त्वमन्तःप्रविश्य प्रशासनेन भर्तृत्वं च तदेवैकं लक्षणम् असाधारणधर्मो यस्य तत् । यद्वा, ब्रह्मात्मैकत्वलक्षणमिति ब्रह्मात्मशब्दवाच्यम् यदेकं वस्तु तस्य भावस्तत्त्वं तल्लक्षणम् यस्य तदद्वितीयं स्वतुल्यवस्त्वन्तररहितं वस्तुप्रतिपाद्यो विषय इत्यर्थः । तन्निष्ठं तादृशवस्त्वधानं कैवल्ये प्रकृतिसम्बन्धराहित्यं मुक्तिरिति यावत् दैतवं प्रयोजनं दानपाठादिप्रयोजनं यस्य ॥ १२ ॥ (शेषं श्रीधरीयव्याख्यायामेव द्रष्टव्यम्) ॥ १३–२३ ॥

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पुराणानां सन्दोहः समूहः चतुर्लक्षकसङ्ख्याक एव ॥ ९–१० ॥ हरिलीलाकथानां व्रातः स एवाऽमृतं तेनाऽऽनन्दिताः सन्तः सुराश्च येन तत् तन्निष्ठं तद्विषयम् ॥ ११ ॥ प्रौष्ठपद्यां हेमसिंहसमन्वितं स्वर्णसिंहासनाऽऽरूढम् ॥ १२–१३ ॥ तद्रसं एवामृतं तेन तृप्तस्य ॥ १४–१५–१६ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

एवमिति । तैः मत्स्यपुराणेषु विशेषः—

> अष्टादश पुराणानि कृत्वा सत्यवतीसुतः । भारताख्यानमखिलं चक्रे तदुपबृंहितम् ॥
> लक्षणैकेन तत्प्रोक्तं वेदार्थपरिबृंहितम् । वाल्मीकिनापि यत्प्रोक्तं रामोपाख्यानमुत्तमम् ॥
> ब्रह्मणाऽभिहितं तच्च शतकोटिप्रविस्तरात् । आहृत्य नारदेनैव वाल्मीकाय पुनः पुनः ॥
> वाल्मीकिना च लोकेषु धर्मकामार्थसाधनम् । एवं सपादाः पञ्चैते लक्षास्ते परिकीर्त्तिताः ॥

इति ॥ ९ ॥ इदमिति त्रिकम् । गर्भोदकशायिनो नाभिपङ्कजे स्थिताय ब्रह्मणे भगवता श्रीकृष्णेन प्रकाशितं सन्त आत्मारामा एव सुराः 'इत्थं सतां ब्रह्मसुखानुभूत्या' इत्यत्र सच्छब्दात् सर्वेति ब्रह्मात्मनोर्यदेकत्वं तदेव लक्षणं यस्य तदद्वितीये सर्व-

वेदान्तसारं वस्तु तन्निष्ठमित्यन्वयः। अयमर्थः 'सत्यं ज्ञानमनन्तं ब्रह्म' इति यस्य स्वरूपमुक्तं 'येनाश्रुतं श्रुतम्भवति' इति 'यद्विज्ञानेन सर्वविज्ञानं प्रतिज्ञाय यस्मिन्ननन्ता नित्यसिद्धा एव नानाधर्मा अभ्युपगताः 'सदेव सौम्येदमग्र आसीत्' इत्यादिना निखिलजगदेककारणता 'स ऐक्षत बहुस्याम्' इत्यनेन सत्यसङ्कल्पता च प्रतिपादिता तेन ब्रह्मणा स्वरूपशक्तिभ्यां बृहत्तमेन अथ कस्मादुच्यते ब्रह्म बृंहति बृंहयति चेति श्रुतिभिः 'बृहत्त्वाद्बृंहणत्वाच्च यद्ब्रह्मपरमं विदुः' इति विष्णुपुराणादिभिश्च प्रतिप्रादितेन सार्द्धम् 'अनेन जीवेनात्मना' इत्यादितदीयवचनरूपायां श्रुताविदन्तानिर्देशेन ततो भिन्नत्वेप्यात्मना निर्देशेन तदात्मांशविशेषत्वेन लब्धस्य 'ममैवांशो जीवलोके जीवभूतः सनातन' इत्यादिप्रतिपादितस्य 'अंशो नानाव्यपदेशात्' (१।२।४२) इतिन्यायसिद्धस्य जीवात्मनो यदेकत्वं तत्त्वमसीत्यादौ ज्ञाता तदंशभूता चिद्रूपत्वेन समानाकारता तदेव लक्षणमापाततो ज्ञाने साधकतमं यस्य तथाभूतम्—

'वदन्ति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्। ब्रह्मेति परमात्मेति भगवानिति शब्द्यते'॥

इति त्रिधाऽऽविर्भूतं यत् सर्ववेदान्तसारमद्वितीयं वस्तु तन्निष्ठमिदं पुराणं तथा कैवल्यैकप्रयोजनं केवलः शुद्धः सच प्रोज्झितकैतवो यो भक्तः स एव धर्मः प्रोज्झितकैतवोऽत्र परम इत्युक्तत्वात् तस्य भावः कैवल्यं मोक्षादिकामरहिता भक्तिः 'कैवल्यसम्मतपथस्त्वथ भक्तियोगः' इत्यत्र कैवल्यमित्येव सम्मतः पन्था भक्तियोग इति तैर्व्याख्यातत्वात् अत्र पन्था इति भगवत्प्राप्त्युपाय इत्यर्थः सा भक्तिः प्रेमलक्षणैव तस्यैव तत्र मुख्यत्वात् तस्मात्कैवल्यं भगवत्प्रेमैव पुरुषार्थत्वे प्रतिपाद्यं यस्य तत् सालोक्यसार्ष्टिसारूप्येत्यादिवचनवृन्देभ्य इति॥ १०–१२॥ तद्दानस्यापि तादृगेव फलमाह–प्रौष्ठपद्यामिति। परमां परमस्य भगवतः सन्निधिरूपां 'ज्ञानेन वैयासकिशब्दितेन' इत्यादेः इति॥ १३॥ राजन्त इति। स्वर्णसिंहासनारूढत्वे हेतुतया राजत्वमेव दर्शितम्॥ १४॥ तदेव व्यनक्ति–सर्वेति। तद्रसः श्रीभगवद्भक्तिरसः 'पिबत भागवतं रसमालयम्' इत्युक्तेः 'नात्यन्तिकं विगणयन्त्यपि' इत्यादेश्च अत एवाह, निम्नगानामिति॥ १५–१६॥

## श्रीमद्विश्वनाथचक्रवर्त्तिकृता सारार्थदर्शिनी

तत्राष्टादशेति यथैवावतारत्वादवतारमध्ये कृष्णं गणयित्वा पुनः "एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम्" इति कृष्णस्य पृथगगणना तथैव पुराणत्वात् पुराणमध्ये श्रीभागवतं गणयित्वा "तत्राष्टादशसाहस्रं श्रीभागवतमिष्यते" इति पुनर्गणना पुराणचक्रवर्त्तित्वव्यञ्जिका यथा च तत्र स्वयम् पदम् सर्वोत्कर्षव्यञ्जकं तथैवात्रापि श्रीमदिति पदम् इदं प्रक्रान्तं सम्पूर्णमेव॥९–१०॥ वाच्यप्रयोजने चाह हरेर्लीलाकथानां व्रातः समूह एव अमृतं तेन आनन्दिताः सन्तो भक्ता एव सुरा येन तदिति लीलाकथाव्रातशब्देन भक्तिरूपं वाच्यं व्यञ्जितम्। स एव अमृतमिति प्रेमरूपं प्रयोजनं च प्रेम्णैव भक्तरमृतवदास्वाद्यत्वसिद्धे तेन सहृतामानन्द इति प्रेम्णोऽनुभावः अत्र कथाया अमृतत्वारोपेण तत् सम्प्रदानानां सताम् सुरत्वारोपेण च तत् सम्प्रदातुः शास्त्रस्यास्य मोहिनीत्वारोपो लभ्यते मोहिन्यैव सुरेभ्योऽमृतदानप्रसिद्धेः ततश्च सुरान् स्वभक्तान् स्वं विदुषः प्रतिभूरिङ्गणेनैव अन्यजनालक्षितं यथा ब्रूते स्म मदाविर्भावस्यास्य युष्मदानुकूल्यमेव कर्त्तव्यं प्रयोजनं चासुरान् वञ्चयित्वा युष्मभ्यमेवामृतप्रदानां यथा चासुरान् स्वतत्त्वमविदुषः प्रत्यपि भ्रूचालनेनैवं स्पष्टमेव ब्रूते स्म मदाविर्भावस्य युष्माकं विजयप्रापणमेव कर्त्तव्यम् प्रयोजनं च युष्मभ्यममृतप्रदानमितीदं गौणमेव, मुख्यं प्रयोजनं त्वेतदेव यदानन्दचमत्कारं युष्मान् नित्यं प्रापयामि युष्मद्गृहस्थितैवेति तत् प्रथममेतानतिदीनान् निकृष्टान् देवान् किञ्चित् परिवेषयामीति तथैवेदं श्रीभागवतं शास्त्रमपि स्वतत्त्वज्ञान् स्वभक्तान् हरिलीलेत्यर्द्धपद्येन स्ववाच्यं स्वप्रयोजनं च "परोक्षवादा ऋषयः परोक्षं च मम प्रियम्" इति भगवदुक्तेर्व्यञ्जनयैव वृत्या सर्वलोकालक्षितमुक्त्वा स्वतत्त्वमविदुषः शास्त्रज्ञमानिनः प्रकटमेव स्ववाच्यप्रयोजनं अन्ये एवाह सर्ववेदान्तानां सारं यत् ब्रह्मणा सह आत्मैक्यमद्वितीयं वस्तु तन्निष्ठं तस्मिन् वाचकत्वेन निष्ठा यस्य तत् कैवल्यमेकं मुख्यं प्रयोजनं यस्य तत् केचित् पुनरेवं व्याचक्षते शास्त्रेऽस्मिन् भक्तिज्ञानयोर्द्वयोरपि मार्गयोरुक्तत्वात् भक्तिप्रेमणी वाच्यप्रयोजने उक्त्वा ज्ञानकैवल्ये अपि वाच्यप्रयोजने आह—सर्ववेदान्तेति। कैवल्यमप्येकं प्रयोजनं यस्य तत् अपरे त्वेवमाहुः शास्त्रेस्मिन्नुपक्रम एव "धर्मः प्रोज्झितकैतवोऽत्र परमः" इत्यनेन परमधर्मस्य भक्तेरेव वाच्यत्वावगमात् ईश्वरः "सद्यो हृद्यवरुद्ध्यतेऽत्र कृतिभिः" इत्यनेन प्रेम्ण एव प्रयोजनत्वावगमाच्च तथा सर्वेष्वपि स्कन्धेषु ज्ञानात्तत्साध्यान् [ मुक्तेरपि ] मोक्षादपि सकाशात् भक्तेरेव प्राधान्यदर्शनात् प्राधान्येन व्यपदेशा भवन्तीति न्यायात् भक्तिप्रेम्णोरेवाभिधेयत्वप्रयोजनत्वे व्यज्येते तस्मान्मोहिनीसाधर्म्यप्रापकप्रकटार्थमेतत् पद्यमाभ्यन्तरेण योजनीयं तद्यथा ब्रह्मात्मैकत्वलक्षणं यद्वस्तु तत्तन्निष्ठं ततोपि निःसृत्य तिष्ठतीति तत्तथा ज्ञानकर्मस्वर्गाद्यभिलाष [ युक्त ] सहिताः केवला अनन्यभक्तास्तेषां भावः कैवल्यं तदेव प्रयोजनम् यस्य तदिति॥ ११–१२॥ प्रौष्ठपद्यां भाद्रसबन्धिन्यामिति तद्दिन एव श्रीमन्मुनीन्द्रेण शास्त्रमेतत्समाप्तीकृतमिति पाद्मोत्तरखण्डगतभागवतमाहात्म्ये दृष्टं हेमसिंहसमन्वितमिति सर्वशास्त्रमहाराजस्य पुराणसूर्यस्यास्य साम्राज्यार्थं सिंहासनौचित्यात् सर्वग्रहराजस्यै तदुपमानस्य सूर्यस्यापि तदानीं सिंहराशिगतत्वेन सिंहासनाधिरूढता दृष्टैव अस्य सर्वशास्त्रमहाराजत्वमेवाह—राजन्त इति।

अन्यानि पुराणान्यपि प्रायस्तावत् शास्त्रराजानि यावन्नेति श्रीभागवतं तु सम्राडेवातः शास्त्रमहाराजमिति भावः। यद्वा, अस्य पुराणसूर्यत्वमाह—राजन्ते दीप्यन्ते रात्रौ नक्षत्राणीवेति भावः। यावद्राजन्ते यावन्नेति सति सूर्यो न दृश्यते ॥ १३–१४ ॥ सर्ववेदान्तेभ्योऽपि सारं श्रेष्ठं गङ्गेति सर्वपापनाशनत्वेन अच्युत इति सर्वोत्कर्षेण शम्भुरिति सर्वभगवद्धर्मोपदेष्टृत्वेनोपमा ॥ १५–१७ ॥

## श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः

पुराणानां सन्दोहः समूहः श्रीमद्भागवतस्य सर्वपुराणेभ्यो भगवत्कृतत्वादिना श्रैष्ठ्यं वक्तुमाह—तत्रेति। अष्टादशसाहस्रमुक्त सङ्ख्यापूरकच्छन्दोमानेन ज्ञेयम् ॥ ९ ॥ अत्रेदमवधेयम् उपास्यरूपं तदुपासकरूपं कृपाफलं भक्तिरसः विरोधिरूपञ्चेति श्रीमद्भागवतस्यार्थपञ्चकं विषयः "धर्मः प्रोज्झितकैतवः" इत्यत्रोपपादितः तत्र 'यद्विज्ञानेन सर्वं विज्ञातं भवति' इति श्रुतेर्मुख्यो विषयो भगवानिति तत्र चोपास्यं भगवन्तं विषयतयोपासकमधिकारितया विरोधिपदार्थं मुक्तिप्रतिबन्धकतया भक्तिरसं ससाधनं मोक्षोपायतयेति पदार्थचतुष्कं पञ्चमं कृपाफललक्षणं विषयविशेषमेव प्रयोजनत्वेनाह—इदमिति त्रिभिः। भवभीताय मोक्षविरोधिसंसारभययुक्ताय ब्रह्मणे सर्वाधिकारिमुख्याय भगवतैवेदं श्रीमद्भागवतं प्रोक्तम् ॥ १० ॥ वैराग्यमुपलक्षणं ज्ञानादिसाधनानां ज्ञानवैराग्यादिभिः साधनैराख्यायते प्रकाश्यते इति वैराग्याख्यानं भक्तिरहस्यं तत्संयुतम् हरेर्मुख्यविषयकथानां व्रातः समूहः स एवामृतं तेनानन्दिताः सन्तः साधवः सुराश्च अधिकारिणो येन तम् ॥११॥ कथम्भूतं सर्ववेदान्तसारम् यद्वा, सर्ववेदान्तानां सारं मुख्यं प्रतिपाद्यम् अद्वितीयं निःसमानातिशयं ब्रह्मपरमात्मनारायणवासुदेवादिपदाभिधेयं "वेदैश्च सर्वैरहमेव वेद्यः" इति स्वमुखगीतं यद्वस्तु तन्निष्ठम् ब्रह्म जगत्कारणं सर्वज्ञं सर्वशक्ति 'सत्यं ज्ञानमनन्तम्' वस्तुपदेनोक्तं तत्पदवाच्यम् आत्मागुणपरिमाणकोऽल्पज्ञस्त्वं पदार्थः तयोः अंश्यंशयोः स्वभावतः एव गुणगुणिवत्कार्यकारणवच्च भिन्नस्वरूपयोः स्वभावतः एकत्वं लक्ष्यते ज्ञायते यत्र तत् ब्रह्मजीवयोः द्वैताद्वैतसम्बन्धप्रतिपादकमिदं पुराणमित्यर्थः। अनेन पुराणेन केवलभेदवादिना तार्किकादयः केवलाभेदवादिनश्च साङ्ख्यादयः निराकृता वेदाविरुद्धत्वादिति भावः। कैवल्यं केवलस्यं कार्यकारणप्रकृतिसम्बन्धरहितस्य निरञ्जनस्य भावः भगवत्साम्यलक्षणः कैवल्यं तदेकप्रयोजनमिदमित्यर्थः ॥१२॥ एवं कर्तृतः विषयप्रयोजनाभ्यां चास्य श्रैष्ठ्यं दर्शितम् इदानीं दानमाहात्म्यादिकथनेनाऽस्य श्रैष्ठ्यमाह—प्रौष्ठपद्यामित्यादिना, प्रौष्ठपद्यां भाद्रपद्याम्। हेमसिंहसमन्वितं स्वर्णसिंहासनारूढम् ॥ १३–१७ ॥

## गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

भारतं त्वितिहासः। रामायणं च वाल्मीकिना प्रोक्तं काव्यमतस्तयोः सङ्ख्या नोक्ता। अथ पुराणानां सन्दोहः समूहश्चतुर्लक्षसङ्ख्याक एव भागवतस्य प्रयोजनादीनि दर्शयन्नाह—तत्रेति ॥ ९ ॥ भगवता प्रोक्तमिति भागवतनामनिरुक्तिः, भवभीतायेति संसारनिवृत्तिः फलं, कारुण्यादिति दुर्लभत्वम् ॥ १० ॥ हरिलीलाकथानां व्रातः समूहः स एवामृतं तेनानन्दिताः सन्तः सुराश्च येन तत् ॥ ११ ॥ तन्निष्ठं तद्विषयम् ॥ १२ ॥ प्रौष्ठपद्यां भाद्रपद्याम्। हेमसिंहसमन्वितं स्वर्णसिंहासनारूढम् ॥ १३–१४ ॥ हि यस्मात् सर्ववेदान्तसारं श्रीमद्भागवतं तस्मात् तद्रस एवामृतं तेन तृप्तस्य निर्वृतस्यान्यत्र शास्त्रान्तरे क्वचिदपि रतिर्न स्यात् ॥ १५ ॥ निम्नगानां नदीनां मध्ये। अच्युतः स्वयं च गुणतः स्वरूपतश्च च्युतिरहितः भगवान् यथा ॥ १६ ॥

## भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

एवमिति। एवममुना प्रकारेण, पुराणसंदोहः पुराणानां समूहः, चतुर्लक्षः चतुर्लक्षसंख्याक एव उदाहृतः। इदानीमस्य वाच्यादीन् दर्शयितुमाह। तत्रेत्यादिना। तत्र श्रीभागवतं अष्टादशसहस्रं अष्टादशसहस्रश्लोकसंख्यमित्यर्थः। इष्यते ॥९॥ इदमिति। इदं श्रीभागवतं, भगवता पूर्वं नाभिपङ्कजे स्थिताय भवभीताय ब्रह्मणे विधये, कारुण्याद्धेतोः संप्रदर्शितं, चतुःश्लोकरूपेणेति शेषः ॥ १० ॥ आदीति। यद्यपि आदिमध्यावसानेषु पृथगाख्यानैर्नानाविधाख्यानैः संयुतं अस्ति, तथापि सर्वत्र हरिलीलाकथानां व्रातः समूहः स एवामृतं तेनानन्दिताः सन्तः साधवः सुरा देवाश्च येन तत्, तथाभूतमस्तीत्यर्थः ॥ ११ ॥ अनेन वाच्यप्रधानत्वं सूचितं, तत् स्पष्टमेवाह। सर्वेति। सर्ववेदान्तेषु सारं सारभूतं, ब्रह्म च आत्मा च तयोर्भावो ब्रह्मात्मत्वं, स्वरूपतो गुणतश्च निरतिशयबृहत्त्वमन्तः प्रविश्य प्रशासनेन भर्तृत्वं तदेवैकं लक्षणमसाधारणधर्मो यस्य तत्। यद्वा ब्रह्मात्मत्वं निजात्मनो ब्रह्मरूपेण विभावनं तेन एकं मुख्यतया कर्त्तव्यं भगवद्भजनं तल्लक्षयतीति ब्रह्मात्मैकत्वलक्षणं, निजात्मानं ब्रह्मरूपं विभाव्य, तेन भगवद्भक्तिः कर्त्तव्येति भगवद्भक्त्याचरणरीतेर्बोधकमित्यर्थः। अद्वितीयं स्वरूपस्वभावगुणैश्वर्यविभूत्यादिभिः स्वसमानेतरेश्वरनिषेधगमकं, वस्तु वसत्येकरूपेण सर्वदेति तथाविधं यद्वस्तु अस्ति, तन्निष्ठं सर्वदैवैकरूपभगवत्स्वरूपप्रतिपादनविषयमित्यर्थः। कैवल्यं प्रकृतिसंबन्धेन जीवानां राहित्यं मुक्तिप्राप्तिरिति यावत्। तदेवैकं प्रयोजनं यस्य तत्, एवंविधमेतत्पुराणं भवतीति भावः ॥ १२ ॥ अस्य दानफलमाह। प्रौष्ठपद्यामिति। प्रौष्ठपद्यां भाद्रपद्यां पौर्णमास्यां, हेम्नः सुवर्णस्य यः सिंहस्तेन समन्वितं स्वर्णसिंहासनारूढं भागवतं, यः ददाति सः

परमां गतिं याति ॥ १३ ॥ अस्य माहात्म्यमाह । राजन्त इति । तावत् सतां गणे अन्यानि पुराणानि राजन्ते । यावत् परं श्रेष्ठं श्रीमद्भागवतं साक्षात् न श्रूयते, क्वचित्तु दृश्यते इत्यपि पाठः ॥१४॥ तत्र हेतुमाह । सर्वेति । हि यस्मात् सर्ववेदान्तानां सारं साररूपं श्रीभागवतं इष्यते, तद्रसामृततृप्तस्य भागवतगतरससुधापानतृप्तिभाजः पुंसः, क्वचित् कदाचित्, अन्यत्र रतिः प्रीतिः न स्यात् ॥ १५ ॥ निम्नगानामिति । निम्नगानां नदीनां मध्ये, यथा गङ्गा, देवानां मध्ये यथा शंभुः शिवः, तथा पुराणानां मध्ये, इदं भागवतं श्रेष्ठमस्तीति शेषः ॥ १६ ॥

## हिन्दी अनुवाद

इस प्रकार सब पुराणों की श्लोक संख्या कुल मिलाकर चारलाख होती है। उनमें श्रीमद्भागवत जैसा कि पहले कहा जा चुका है अठारह हजार श्लोकों का है ॥ ९ ॥ शौनकजी ! पहले-पहल भगवान् विष्णु ने अपने नाभि कमल पर स्थित एवं संसार से भयभीत ब्रह्मा पर परम करुणा करके इस पुराण को प्रकाशित किया था ॥ १० ॥ इसके आदि, मध्य और अन्त में वैराग्य उत्पन्न करने वाली बहुत-सी कथाएँ हैं। इस महापुराण में जो भगवान् श्रीहरि की लीला-कथाएँ हैं, वे तो अमृतस्वरूप हैं ही; उनके सेवन से सत्पुरुष और देवताओं को बड़ा ही आनन्द मिलता है ॥ ११ ॥ आप लोग जानते हैं कि समस्त उपनिषदों का सार है ब्रह्म और आत्मा का एकत्वरूप अद्वितीय सद्वस्तु। वही श्रीमद्भागवत का प्रतिपाद्य विषय है। इसके निर्माण का प्रयोजन है एकमात्र कैवल्य-मोक्ष ॥ १२ ॥ जो पुरुष भाद्रपद मास की पूर्णिमा के दिन श्रीमद्भागवत को सोने के सिंहासन पर रखकर उसका दान करता है, उसे परमगति प्राप्त होती है ॥ १३ ॥ संतों की सभा में तभी तक दूसरे पुराणों की शोभा होती है, जब तक सर्वश्रेष्ठ स्वयं श्रीमद्भागवत महापुराण के दर्शन नहीं होते ॥ १४ ॥ यह श्रीमद्भागवत समस्त उपनिषदों का सार है। जो इस रस-सुधा का पान करके छक चुका है, वह किसी और पुराण-शास्त्र में रम नहीं सकता ॥१५॥ जैसे नदियों में गङ्गा, देवताओं में विष्णु और वैष्णवों में श्रीशङ्करजी सर्वश्रेष्ठ हैं, वैसे ही पुराणों में श्रीमद्भागवत है ॥ १६ ॥

क्षेत्राणां चैव सर्वेषां यथा काशी ह्यनुत्तमा । तथा पुराणव्रातानां श्रीमद्भागवतं द्विजाः ॥ १७ ॥

श्रीमद्भागवतं पुराणममलं यद्वैष्णवानां प्रियं यस्मिन् पारमहंस्यमेकममलं ज्ञानं परं गीयते ।
तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यमाविष्कृतं तच्छृण्वन् विपठन् विचारणपरो भक्त्या विमुच्येन्नरः ॥ १८ ॥

कस्मै येन विभासितोऽयमतुलो ज्ञानप्रदीपः पुरा तद्रूपेण च नारदाय मुनये कृष्णाय तद्रूपिणा ।
योगीन्द्राय तदात्मनाऽथ भगवद्राताय कारुण्यतस्तच्छुद्धं विमलं विशोकममृतं सत्यं परं धीमहि ॥ १९ ॥

नमस्तस्मै भगवते वासुदेवाय साक्षिणे । य इदं कृपया कस्मै व्याचचक्षे मुमुक्षवे ॥ २० ॥

योगीन्द्राय नमस्तस्मै शुकाय ब्रह्मरूपिणे । संसारसर्पदष्टं यो विष्णुरातममूमुचत् ॥ २१ ॥

भ[1]वे भवे यथा भक्तिः पादयोस्तव जायते । तथा कुरुष्व देवेश नाथस्त्वं नो यतः प्रभो ॥ २२ ॥

नामसङ्कीर्तनं यस्य सर्वपापप्रणाशनम् । प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥ २३ ॥

इति श्रीमद्भागवते महापुराणे वैयासिक्यामष्टादशसाहस्र्यां पारमहंस्यां संहितायां द्वादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

इति द्वादशः स्कन्धः समाप्तः

सम्पूर्णोऽयं ग्रन्थः

त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये । तेन त्वदङ्घ्रिकमले रतिं मे यच्छ शाश्वतीम् ॥

१. प्राचीन प्रति में 'भवे भवे.........हरिं परम् ॥' ये दो ( बाईसवाँ और तेईसवाँ ) श्लोक नहीं हैं।

### कृष्णप्रिया व्याख्या

अन्वयः—सर्वेषां क्षेत्राणां यथा काशी हि अनुत्तमा द्विजाः तथा पुराणव्रातानां श्रीमद्भागवतम् ॥ १७ ॥ श्रीमद्भागवतम् अमल पुराणं यत् वैष्णवानां प्रियं यस्मिन् पारमहंस्यम् एकम् अमलं परं ज्ञानं गीयते यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यम् आविष्कृतं तत् भक्त्या शृण्वन् विपठन् विचारणपरः नरः मुच्यते ॥ १८ ॥ अयम् अतुलः ज्ञानप्रदीपः पुरा येन कस्मै ( ब्रह्मणे ) विभासितः तद्रूपेण मुनये नारदाय तद्रूपिणा कृष्णाय ( व्यासाय ) ( तद्रूपिणा ) योगीन्द्राय ( शुकाय ) अथ तदात्मना भगवद्राताय कारुण्यतः ( परीक्षिताय विभासितः ) तत् शुद्धं विमलं विशोकम् अमृतं सत्यं परं धीमहि ॥ १९ ॥ साक्षिणे तस्मै भगवते वासुदेवाय नमः य इदं कृपया मुमुक्षवे कस्मै (ब्रह्मणे) व्याचचक्षे ॥२०॥ ब्रह्मरूपिणे योगीन्द्राय तस्मै शुकाय नमः यः संसारसर्पदष्टं विष्णुरातम् अमूमुचत् ॥२१॥ देवेश प्रभो भवे भवे तव पादयोः यथा भक्तिः जायते तथा कुरुष्व यतः त्वं नः नाथः (असि) ॥२२॥ यस्य नामसङ्कीर्तनं सर्वपापप्रणाशनं प्रणामः दुःखशमनः तं परं हरिं नमामि ॥ २३ ॥

इति श्रीमद्भागवते द्वादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

### श्रीधरस्वामिविरचिता भावार्थदीपिका

पारमहंस्यं परमहंसैः प्राप्यम् । नैष्कर्म्यं सर्वकर्मोपरमः । भक्त्या तच्छ्रवणादिपरो विमुच्येत ॥ १८ ॥ श्रीभागवतसंप्रदायप्रवर्तकरूपेण भगवद्ध्यानलक्षणं मंगलमाचरति । कस्मै ब्रह्मणे । अतुलोऽसमः । अयं श्रीभागवतरूपः । पुरा कल्पादौ तद्रूपेण ब्रह्मरूपेण नारदाय । ( तद्रूपिणा नारदरूपिणा । कृष्णाय व्यासाय । तद्रूपिणा ) योगींद्राय शुकाय । तदात्मना शुकरूपेण । तत्परं सत्यं श्रीनारायणाख्यं तत्त्वं धीमहि । इति गायत्र्यैव यथापक्रममुपसंहरन्गायत्र्याख्यब्रह्मविद्येयमिति दर्शयति ॥ १९ ॥ तमेव देवतारूपेण गुरुरूपेण च प्रणमति । न इति द्वाभ्याम् । व्याचचक्षे व्याख्यातवान् ॥ २०–२३ ॥

भावार्थदीपिकामेतां भगवद्भक्तवत्सलाम् । परमानंदपादाब्जभृंगश्रीः श्रीधरोऽकरोत् ॥ १ ॥
स्वबालचपलालापैः स्वलीलापरिनर्तितैः । प्रीयतां परमानंदनृहरि सद्गुरुः स्वयम् ॥ २ ॥
श्रीपरानंदसप्रीत्यै गुह्यं भागवतं मया । तन्मतेनेदमाख्यातं न तु मन्मतिवैभवात् ॥ ३ ॥
क्वेदं नानानिगूढार्थं श्रीमद्भागवतं क नु । मंदबुद्धिरहं कृष्णप्रेम किंकिं न कारयेत् ॥ ४ ॥

इति श्रीमद्भागवतभावार्थदीपिकायां श्रीधरस्वामिविरचितायां द्वादशस्कंधे त्रयोदशोऽध्यायः ॥ १३ ॥

## संपूर्णोऽयं ग्रन्थः ॥ श्रीमद्वेंकटेशार्पणमस्तु ॥

### श्रीवंशीधरकृतो भावार्थदीपिकाप्रकाशः

काश्या महत्त्वं हि शतपथब्राह्मणे वर्णितम् । तथाहि—"अविमुक्तं ह वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमत्र हि जन्तोः प्राणेषु क्रममाणेषु रुद्रस्तारकं चष्टे येनासावमृती भूत्वा मोक्षी भवति" इति श्रुतेः । यद्वा—कं सर्वपुरीविलक्षण मोक्षसुखं यत्र सा काशी मथुरा । यदुक्तं वाराहे—"काश्यादयो यद्यपि सन्ति पुर्यस्तासां तु मध्ये मथुरैव धन्या । या जन्ममौञ्जीव्रतमृत्युदाहैर्नृणां चतुर्धा विदधाति मुक्तिम् ।" इति । यद्वा—कं ब्रह्माश्नुते सर्वदा तिष्ठत्येति काशी "पुण्यं मधुवनं यत्र सान्निध्यं नित्यदा हरेः" इति नारदोक्तेः, "मथुरा भगवान्यत्र नित्यं सन्निहितो हरिः" इति श्रीदशमोक्तेश्च । "मथुरेति त्रिवर्णीयं त्रयीतोऽपि गरीयसी । त्रयी तु धावति ब्रह्म तदेनामनुधावति" । इत्यभियुक्तोक्तेश्च । 'कं ब्रह्मणि सुखेऽम्बुनि' इति विश्वः । क्षेत्राणां पुण्यक्षेत्राणाम् । "क्षीयन्ते यत्र पापानि त्रायते यन्महाभयात् । तत्क्षेत्रमुच्यते प्राज्ञैः" इति स्कान्दोक्तेः ॥ १७ ॥ अमलं सर्वशुद्धिकरम् । अमलं शुद्धाद्वैतविषयम् । विपठन् विशेषेण पठन् । विचारणपरः सातत्येनैतच्चिन्तनपरः सर्वोत्कर्षमेवाह —भागवत पुराणमेव श्रीमन् शोभायुक्तम् । न भवन्ति मलास्त्रिगुणोत्था यस्मात्तत् । यद्यतो वैष्णवानां प्रियं भक्त्युत्कर्षप्रतिपादकत्वादिति भक्त्युत्थज्ञानप्राप्तिलोभिभिर्ज्ञानिसिद्धैरप्येतदाश्रयणीयमेवेत्याह—यस्मिन्निति । परमहंसेभ्यो हितं पारमहंस्यम् । परं भक्त्युत्थत्वाच्छ्रेष्ठम् । ज्ञानसाधकैरप्येतत्सेव्यमित्याह—यत्रेति । नैष्कर्म्यं सर्वकर्मोपरमम् ॥ १८ ॥ ग्रन्थादौ ग्रन्थमध्ये ग्रन्थान्ते मङ्गलमाचरणीयमिति शिष्टाचारात् "मंगलादीनि मंगलमध्यानि मंगलान्तानि च शास्त्राणि प्रथन्ते" इत्यादि भाष्याच्च शास्त्रसमाप्तौ तदाचरतीत्याह—श्रीभागवतसम्प्रदायेत्यादि । कस्मै—असर्वनाम्नोपि सर्वनामकार्यमार्षत्वात् । येन परब्रह्मणा । ज्ञानं परोक्षापरोक्षरूपं प्रकर्षेण दीपयतीति तथा । अयं श्रीमद्भागवतलक्षणा । कृष्णाय व्यासाय । अथेति—तदात्मनेत्यस्य द्वियोजनायोक्तम् । शुद्धं सर्वोपाधिविनिर्मुक्तम् । विमलमज्ञानतत्कार्यनिवर्तकम् । "तरति शोकमात्मवित्" इति श्रुतेः । शोकोपलक्षितसंसारः, विगतः शोको येन तद्विशोकं संसारतरणसाधनम् । अमृतं मृतिनिवर्तकम् । विमलविशोकामृतपदानां तात्पर्येण एकार्थत्वेपि पुनरुक्तिः सर्वथा संसारभयनाशकमित्यर्थेति

ज्ञेयम्। सत्यं त्रैकालिकाबाध्यम्। ज्ञानान्तरेण विषयासत्यप्रतीतिर्बाधस्तदयोग्यमत एव परं सर्वतः परं सर्वावधीभूतम्। 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः' इति श्रुतेः। धीमहीति साक्षाद्गायत्रीपदयोगेन गायत्र्येवेति पूर्वम् 'वस्त्वद्वितीयं तन्निष्ठम्' इति सामान्यतस्तात्पर्यं दर्शयित्वा 'जन्माद्यस्य' इत्याद्युपक्रमपोषकं श्रीभगवत्येव तस्य पर्यवसानं दर्शयन्नुपसंहरति—कस्मादिति। महावैकुण्ठं दर्शयता येन भगवता ब्रह्मणे विभासितं प्रकाशितम्, न तु विरचितमिदं भागवतम्। पुरा पूर्वपरार्द्धादौ। तदात्मनेत्य-स्योत्तरोत्तरेणाप्यन्वयः। तत्र तदात्मना श्रीशुकरूपेणेति न केवलं चतुःश्लोक्येव तेन प्रकाशिता, अपि तु तत्रतत्राविष्टेनाखण्डमेवेदं पुराणमिति द्योतितम्! श्रीसङ्कर्षणसम्प्रदायप्रवृत्तिस्तु श्रीद्वैपायनकर्तृकप्रकाशान्तर्गतत्वात् पृथग्नोक्ता। तत्परं सत्यं भगवदाख्यं तत्त्वं धीमहि 'यत्तत्पदमनुत्तमम्' इति सहस्रनामसु तच्छब्दस्य तन्नामत्वेन गणितत्वात्। परशब्देन श्रीभगवानेवोच्यते 'आद्योऽवतारः पुरुषः परस्य' इति द्वितीयोक्तेः। ब्रह्मादीनां बुद्धिवृत्तिप्रवर्तकत्वेनाभिधानात्। गायत्र्यर्थोपलक्षितेन धीमहीति गायत्रीपदेनोपसंहाराद्गायत्र्याख्यब्रह्मविद्यैवेयं श्रीभागवतपुराणम्॥ १९॥ कस्मै ब्रह्मणे। इदं भागवतम्। मुमुक्षवे सृष्टिप्रति-बन्धकाज्ञानं त्यक्तुकामाय। शास्त्रसमाप्तौ स्वाभीष्टदेवं प्रणमति-वासुदेवनन्दनाय। साक्षिण इति—अहं तस्य भक्तोऽभक्तो वा, शिष्टो दुष्टो वा, तदभिप्रेतं व्याख्यातुं वेद्मि न वेद्मि वेति स एव साक्षात्पश्यति तत्कृपैव मे शरणमिति भावः। अहं तावत्को वराको ब्रह्मापि तत्कृपां विना श्रीभागवतार्थं न वेत्तीत्याह—य इदमिति। मुमुक्षवे कृपया व्याचचक्षे उपदिदेशेत्येतदुपदेशात्पूर्वमेव तस्य मुमुक्षाऽऽ-सीत्तदुपदेशानन्तरं तु प्रेम्णैवाऽकांक्षा. मोक्षे तूपेक्षैवाजानिष्ठेति भावः॥ २०॥ ब्रह्म श्रीभागवतम् 'पुराणं ब्रह्मसंमितम्' इत्युक्तेः, रूपयति परीक्षिते वर्णयतीति ब्रह्मरूपी तस्मै। अमूमुचत् मोचयामास (२१) इतोऽग्रे 'भवे भवे' इत्यादिपद्यद्वयं प्रक्षिप्तम्। भगवद्भक्तानां वत्सला प्रिया ताम् (१)। स्वबालस्य मम चपलालापैर्बाल्यमतिप्रयुक्तैः शब्दैः स्वेनैव लीलया परिनर्तितैर्मन्मु-खात्पठितैः (२) तदेवाह—तन्मतेन श्रीपरानन्दनृसिंहमतेन। तत्प्रसादावाप्तज्ञानेनेत्यर्थः। श्रीशुकदेवं प्रणमति—योगीन्द्राय भक्तिज्ञानकर्माष्टांगात्मकयोगचतुष्कविदां महामुख्याय। ब्रह्मरूपिणे परब्रह्मस्वरूपाय। संसारसपर्दष्टं विष्णुरातमिति—यथार्जुनोद्धव-मोहं गीतैकादशोपदेशेन भगवान्निवर्तयामास, तथैव परीक्षित्संसारं शुक इति प्राकृतलोकप्रतीत्यैवोक्तिः। वस्तुतस्तु त्रयाणामेव भगवन्नित्यपार्षदत्वान्न संसारशङ्कागन्धोऽपि किन्तु जीवहितमाहणचातुर्युधुरंधराणां महतां कमप्येकं महाप्रसिद्धं जनमवलम्ब्यैव हितोपदेशसन्ततिरिति नीतिर्दिष्टाऽत एवेह—विष्णुरातमिति प्रयुक्तम्। युधिष्ठिराय कृपया रातं दत्तं स्वयं गृहीतो वा यस्तस्य संसारः कः खलु मन्दबुद्धिराशङ्केतेति भावः। किञ्च—सर्पविषहरा मंत्रा यथा लोकेऽर्थज्ञानमपि नापेक्षन्ते, तथैवार्थं जानातु न जानातु वा श्रीभागवतीयाः शब्दा एव संसारविषं निर्मूलयन्तीत्याचार्याभिप्रायो द्रष्टव्योऽत्रेति॥ २१–१३॥

इति श्रीखडपत्तनवास्तव्यपण्डितवंशीधरशर्मविरचिते श्रीमद्भागवतभावार्थदीपिकाप्रकाशे द्वादशस्कन्धे त्रयोदशोऽध्यायः॥ १३॥

## अथाऽस्य श्रवणमाहात्म्यम्।

विष्णुरुवाच।

द्वादशस्कन्धश्रवणपुण्यसंख्या न विद्यते। यतोऽयमात्मा मे ब्रह्मञ्जगद्भर्तुर्जगद्गुरोः॥ १॥
इहेतिहासं वक्ष्यामि भृगुक्षेत्रे नृपोऽभवत्। सूर्यरश्मिरिति ख्यातः सूर्यतुल्यपराक्रमः॥ २॥
यज्ञानां च शतं तेन कृतं दत्तं गवां शतम्। विप्रकन्यासहस्राणां विवाहास्तेन कारिताः॥ ३॥
नित्यं शृणोति स कथां व्यासं कृत्वा द्विजोत्तमम्। देवदत्त इति ख्यातं शान्तं दक्षः प्रतापवान्॥ ४॥
ब्रह्मोवाच। व्यासस्य लक्षणं ब्रूहि कथं श्राव्या कथा प्रभो॥ ५॥
हरिरुवाच। रागद्वेषविनिर्मुक्तः शास्त्रज्ञो विष्णुपूजकः। अंगैरविकलो धीरो ब्राह्मणः सत्यभाषणः॥ ६॥
गृहस्थोऽध्यापनरत ऊर्ध्वपुंड्रधरस्तथा। व्यासः प्रोक्तः श्रोतृजनाह्लादकृत्प्रियदर्शनः॥ ७॥
तन्मुखेन श्रुता गाथा सर्वसिद्धिप्रदा भवेत्। अवैष्णवमुखाद्गाथा न श्रोतव्या कदाचन॥ ८॥
शुकशास्त्रं विशेषेण न श्रोतव्यमवैष्णवात्।
ब्राह्मणा वैष्णवा मुख्या यतो विष्णुमुखोद्भवाः। विप्रैः कृता वैष्णवास्तु त्रयो वर्णा भवंति हि॥ ९॥
विप्रोऽत्र वैष्णवो ग्राह्यो यश्च विष्णोरुपासकः। वैदिकेन विधानेन दयालुः समदर्शनः॥ १०॥
भेदं न कुरुते यस्तु दुर्गाविष्णुशिवादिषु। ब्रह्मत्वेनैव जानाति वैष्णवः स परो मतः॥ ११॥
विप्रेतरमुखाच्छास्त्रं श्रुतं हि नरकप्रदम्।
राष्ट्रे यस्य तु शृण्वंति गाथां विप्रेतरेरिताम्। तस्य राज्ञो भवेद्धानिरतः संशृणुयाद्द्विजात्॥ १२॥
ये शूद्रमुखतः शास्त्रं शृण्वंति हि नराधमाः। तेषां कर्णे त्रपु सिक्त्वा वक्तुर्जिह्वां प्रकर्तयेत्॥ १३॥

पराशराद्या मुनय इत्थमेव वदंति हि।
यावद्विप्रमुखे शास्त्रं शास्त्रत्वं तावदेव हि। विप्रेतरगतं शास्त्रमशास्त्रत्वं प्रपद्यते ॥ १४ ॥
यथा पतिरता साध्वी स्वैरिणी स्यात्ततोऽन्यथा। तथा विप्रकृता गाथा तदन्या स्यात्प्रहेलिका ॥ १५ ॥
वक्तारं तोषयेन्नित्यं वस्त्रान्नाभरणादिभिः। दुर्वाक्यं न वदेत्क्वापि व्यासं विष्णुस्वरूपिणम् ॥ १६ ॥
ये तु व्यासासनं मोहादाक्रामंति द्विजेतराः। पच्यंते ते महामूढा नि.ये बहुवत्सरम् ॥ १७ ॥
व्यासासनोपवेशाच्च शालग्रामशिलार्चनात्। कपिलाक्षीरपानाच्च ब्राह्मणीगमनात्तथा ॥ १८ ॥
वेदाक्षरोच्चारणाच्च शूद्रश्चांडालतां व्रजेत्। विप्रस्यैवाधिकारोस्ति व्यासासनसमाक्रमे ॥ १९ ॥
वक्त्रा समं न चैवोच्चं श्रोतॄणामिष्टमासनम्। समासनात्पुण्यहानिरुच्चाच्च निरयं व्रजेत् ॥ २० ॥
श्रोतव्यं मौनमाश्रित्य नरैर्नियतमानसैः। वाग्वादकरणाद्गाथा नीरसा जायते स्फुटम् ॥ २१ ॥
गाथारसविघातेन पशुत्वं लभते पुमान्। पौरणिक्यां कथायां च न कार्याः कथता सह ॥ २२ ॥
पूर्वपक्षाश्च सिद्धांताः परस्परजिगीषया। नाम्ना शुकोदरो विप्रस्तेन जातो विहंगमः ॥ २३ ॥
वामदेवस्य शिष्योऽपि पूर्वकल्पे वसुंधरे। इत्येवं कथितं ब्रह्मन्वाराहे हरिणा मया ॥ २४ ॥
कथायां सम्प्रवृत्तायामितिहासपुराणयोः। योऽन्यः किञ्चिदपि ब्रूते विना वक्तारमत्र हि ॥ २५ ॥
स वाग्वाद इति प्रोक्तः कथारसविघातकः। वाग्वादाश्स्यात्कथाभंगो ब्रह्महत्यासमो हि सः ॥ २६ ॥
पृच्छेत्कथान्ते सन्देहं न कथायां कदाचन। श्रोता जनः कथाभङ्गभयान्मौनं समाश्रयेत् ॥ २७ ॥
पाद्मे पुराणे संप्रोक्तं शङ्करेण स्वयं द्विजाः। श्रीमते रामचन्द्राय परब्रह्मस्वरूपिणे ॥ २८ ॥
वाग्देवता भवेत्क्रुद्धा कथाया भंगमात्रतः।
तेन जन्मान्तरे मूकः पुनर्मूढस्त्रिजन्मसु। वायसो वा भवेदन्यो वक्तुर्वक्ता ततो वदेत् ॥ २९ ॥
पुराणानां पूजकस्तु हेमान्नवसनादिभिः। वैष्णवं पदमाप्नोति कर्तव्यो नात्र संशयः ॥ ३० ॥
श्रोतुर्दानमनंत्याय वक्तुर्नैव प्रतिग्रहः। श्लोकैकश्रवणे यस्य स्वकोटिनं निष्क्रिया ॥ ३१ ॥
सर्वस्व तस्य यो वक्ता प्रतिग्राही कथं हि सः। गृह्णीतेऽनुपकर्ता यो ज्ञेयः स च प्रतिग्रही ॥ ३२ ॥
विधातरित्थं प्रोवाच यथा प्रोक्तं मया तव। देवदत्तः सूर्यरश्मिं ब्राह्मणानां विशेषताम् ॥ ३३ ॥
स सूर्यरश्मिनृपतिः श्रुत्वा प्रोवाच तं द्विजम्। असदुक्तं त्वया गर्वाच्छ्रैष्ठ्यं हि द्विजन्मनाम् ॥ ३४ ॥
त्वत्तोपि शोभनां गाथां करिष्यामि न संशयः। त्वमुत्तिष्ठासनादस्मादित्थं व्यासं तिरोऽकरोत् ॥ ३५ ॥
आशीर्दत्वा च राजानं गतो गेहं द्विजोत्तमः। न च राज्ञा समाहूतो न च विप्रः स्वयं गतः ॥ ३६ ॥
मासद्वयांते राज्ञा हि कृतो वक्ताऽपरो विधे। व्यासावज्ञानदोषेण स राजा नरकं गतः ॥ ३७ ॥
तद्भुक्त्वा वर्षनियुतं तदंते स मृगोऽभवत्। जातिस्मरः पूर्वपुण्यैः स्वजातौ न मिलत्यसौ ॥ ३८ ॥
नित्यं स्नात्वा तीर्थजले भानुं नत्वा पुनःपुनः। तपोधनाश्रमं प्राप्य निःश्वसंश्च स्थितोऽभवत् ॥ ३९ ॥
प्रातः स्नातुं मुनिवरो विश्वेश्वर इति श्रुतः। एकदा गतवांस्तीरे नद्यास्तत्र समागतः ॥ ४० ॥
तदैव मृग आगत्य स्नात्वा सूर्यं ननाम सः। तदद्भुतमृषिर्दृष्ट्वा प्रोवाच हरिणं तदा ॥ ४१ ॥
को भवान्मृगरूपेण श्रुत्वा जातिस्मरो मृगः। प्रोवाच नरवाचा तु त्यजन्नश्रुगणं मुहुः ॥ ४२ ॥
मृग उवाच। भृगुक्षेत्राधिपोऽभूवं नाम्नाहं सूर्यरश्मिकः। धर्मात्मा मुनिशार्दूल कुर्वे व्यासद्विजं तिरः ॥ ४३ ॥
तदंहसः प्रभावेण नरकान्गतवानहम्। तदन्ते मृगयोनौ च प्राप्तोऽहं शृणु मे वचः ॥ ४४ ॥
इति श्रुत्वा मुनिवरः प्रोक्तवान्मृगसत्तमम्। अन्येषां पापसंघानां निष्कृतिर्विहिता बुधैः ॥ ४५ ॥
न च व्यासतिरस्कर्तुर्निष्कृतिर्विद्यते भुवि। परन्त्वेक उपायोऽस्ति शृणु मृगकुलसत्तम ॥ ४६ ॥
द्वादशस्कंधश्रवणं कुरु भागवतस्य हि। तेन स्यात्तव मानुष्यमिति सत्यं ब्रवीम्यहम् ॥ ४७ ॥
इति श्रुत्वा मृगस्तस्य पादयोः पतितस्तदा। विश्वेश्वरो मुनिस्तस्य शिरसि प्रददौ करम् ॥ ४८ ॥
द्वादशश्रवणाच्चैव मुनिहस्तस्य संगमात्। क्रोशंतो दग्धपक्षाश्च तेदृहाग्निःसृतास्तदा ॥ ४९ ॥
काका मह्यां तत्र पेतुः स निष्पापोऽभवत्तदा। आगामिजन्मनि भवान्वैश्यतामाप्स्यति ध्रुवम् ॥ ५० ॥
धनी भागवतं दत्वा विप्राय प्राप्स्यसे परम्। इति प्रोवाच स मुनिर्देहांते सोऽभवत्तथा ॥ ५१ ॥
अथ दानप्रकारं ते वक्ष्ये ब्रह्मन्यथाविधि। लिखित्वा लेखयित्वा वा दद्याद्विप्राय पुस्तकम् ॥ ५२ ॥
द्वादशस्कंधसंयुक्तं श्रीमद्भागवतस्य च। रौप्यपट्टकसंयुक्तं कौशेयाच्छादितं शुभम् ॥ ५३ ॥

हेमसिंहासने स्थाप्य चतुर्विंशतिकर्षके ।
विष्णुभक्ताय दातव्यं पुत्रपौत्रयुताय वै । वस्त्रालंकारसहितं शास्त्रज्ञाय द्विजाय च ॥ ५४ ॥
अश्वमेधायुतोत्पन्नं पुण्यं तेन समं नहि । यदेकश्लोकदानेन श्रीमद्भागवतस्य हि ॥ ५५ ॥
नित्यं गोदानलक्षैश्च यत्फलं प्राप्यते नरैः । तदेकश्लोकदानेन दुर्लभं नहि पद्मज ॥ ५६ ॥
सर्वं भागवतं येन दत्तं लोके महात्मना । तस्य पुण्यस्य या संख्या तां वक्तुं कोऽपि न क्षमः ॥ ५७ ॥
इति ज्ञात्वा नरैर्देयं श्रीमद्भागवतं कलौ । सर्वयागविहीनेऽस्मिन्यागोऽयं सुलभः खलु ॥ ५८ ॥
शेषवृत्तं शृणु विधे स्थिरो भूत्वाऽद्भुतं पुनः । वैश्यदेहं मृगो लब्ध्वा जातिस्मरणमागतः ॥ ५९ ॥
विप्रं श्रीरंगशर्माणं व्यासं कृत्वा महादरात् ।
श्रुत्वा भागवतं तस्माद्दत्तवान्पुस्तकं विधे । तस्मा एव तदा वैश्यस्ततो मत्साम्यमाप सः ॥ ६० ॥
ब्रह्मोवाच ।
इत्थं श्रुतं मया विष्णोः श्रीमद्भागवते फलम् । त्वत्प्रीत्या कथितं तुभ्यं वत्सैतद्दुर्लभं भुवि ॥ ६१ ॥
श्रीमद्भागवते शास्त्रे श्रीकृष्णे परमात्मनि । अंतरं ये प्रपश्यंति ते नरा ब्रह्मघातिनः ॥ ६२ ॥

इति श्रीमत्पाद्ममहापुराणीयं श्रीमद्भागवतद्वादशस्कन्धमाहात्म्यं सम्पूर्णम् ॥

## अथ टीकाकृद्वंशवर्णनम् ।

भुवनपालनतत्परमानसाद्रिविराज्ञलपस्य दिशि स्थितम् । हरविलोचनयोजनभूमिके रघुसुतस्य नृपस्य सरोवरम् ॥ १ ॥
निखिलपापहरं प्लवनादिना तदुपकंठगतं शुभपत्तनम् । खरडनामकमस्ति जनैर्युतं श्रुतिविधानपरायणमानसैः ॥ २ ॥
तस्मिन्पुरे विप्रगणाग्रगण्य उवास विप्रो बलरामशर्मा । तदात्मजो भूधरनामधेयः स्वाचारनिष्ठोऽखिलशास्त्रवेत्ता ॥ ३ ॥
गौरीशपादांबुजदत्तचेता गौरीप्रसादस्तु ततो बभूव । तत्सूनुरौदार्यगुणेन युक्तो जातः सुकर्मा सुखदेवशर्मा ॥ ४ ॥
तदंगजो नियमविद्गजराजशर्मा यो ह्यन्ववायशुभदीपक आविरासीद् ।
धर्मात्मकं मधुरिपोरनुगं स निक्कारामं ह्यवाप तनयं विनयोपपन्नम् ॥ ५ ॥
तस्माद्वंशीधरो जातो गोत्रे कौशिकसंज्ञके । गौडवंशे नंदसूनुपादध्यानपरायणः ॥ ६ ॥
तेनायं प्रथितः कृष्णकृपया ग्रंथसादरः । श्रीधरस्वामिभावार्थदीपिकायाः प्रकाशकः ॥ ७ ॥
व्याख्यापुष्पमयी माला श्रीवंशीधरशर्मणा । समर्पिता कृष्णकंठे प्रत्योपादेहि ते मया ॥ ८ ॥
श्रीकृष्णनाथ परिपूरय चिंतितं श्रीराधापते न कठिनं तव किंचिदस्ति ।
त्वद्ध्याननिष्ठमनसो मम यातु कालो वृन्दावनेश व्रजमंडलगस्य नित्यम् ॥ ९ ॥
श्रीवृन्दावनचंद्रस्य वृषार्कतनयापतेः । प्रीत्यर्थं च कृतं ग्रंथं शृणोतु श्रीहरिः स्वयम् ॥ १० ॥
वृषभानुसुतानाथ मामाहूय कृतिं मम । वृंदावने शृणु विभो हृदयेश निजाप्रिय ॥ ११ ॥
यदत्र सौष्ठवं ग्रन्थे तद्गुरोरेव मे नहि । यदत्रासौष्ठवं किंचित्तन्ममैव गुरोर्नहि ॥ १२ ॥
सर्वाणि प्राक्तनान्येव पदवाक्याक्षराणि वै । कर्तृत्वं मेऽस्ति ग्रंथेऽस्मिंस्तेषां योजनमात्रतः ॥ १३ ॥
प्रमाणीभूतवाक्यानि पूर्वाचार्यकृतान्यपि । निजग्रंथप्रकाशेन पूर्वाचार्या मतिप्रदाः ॥ १४ ॥
संति मे गुरवः सर्वे गुरवः पितरो मताः । पित्रर्जितत्वे पुत्रस्य यथा स्वत्वं तथैव मे ॥ १५ ॥
तेषां कृतौ स्वकर्तृत्वाभिमानो विदुषां वराः । अन्यथा पितुरर्थेषु पुत्रस्यापि न तद्भवेत् ॥ १६ ॥
श्रीकृष्णकृपया चेयं प्रसृतास्त्वखिलेषु च । विज्ञेषु ते हि चात्रत्यन्यूनतां पूरयंतु वै ॥ १७ ॥
मय्यल्पज्ञे कृपां कृत्वा निजसौष्ठवभावतः । भवन्त्वेवर्जुतरवज्ञे पण्डिताः सुदयोदयाः ॥ १८ ॥

इति श्रीमन्महाराजनाभानरेशहीरासिंहमालवेन्द्रबहादुराश्रितश्रीखरडनगरवास्तव्यकौशिकगोत्रोद्भूतगौडवंशीधरशर्मसंदृब्ध-श्रीमद्भागवतश्रीधरस्वामिविरचितभावार्थदीपिकाप्रकाशः समाप्तः ॥

शराम्नायाङ्कशीतांशुमिते संवत्सरोर्ज्जके । सिते विष्णुतिथौ पूर्णो वृन्दारकगुरोर्दिने ॥ १ ॥
मंगलं भगवान्विष्णुर्मंगलं गरुडध्वजः । मंगलं पुंडरीकाक्षो मंगलायतनो हरिः ॥ २ ॥

**प्रीयतामनेन श्रीकृष्णः ॥ समाप्तश्चायं ग्रन्थः ॥**

## अन्वितार्थप्रकाशिका

क्षेत्राणामिति ॥ अनुत्तमा सर्वोत्तमा ॥ १७ ॥ श्रीमदिति ॥ यत् श्रीमद्भागवतं पुराणम् अमलं यद्वैष्णवानां प्रियं यस्मिंश्च पारमहंस्यं परमहंसेभ्यो हितम् । यदन्तात्स्वार्थेऽण् । एकमद्वितीयमलं प्राकृतदोषसंबन्धरहितं ज्ञानमित्युपलक्षणं सच्चिदानन्दात्मकं परब्रह्म गीयते । यत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्यम् आविष्कृतं प्रकाशितं तत् भक्त्या शृण्वन् विपठन् विचारणपरश्च नरः संसाराद्विमुच्यते । तङ्भाव आर्षः । शार्दूलविक्रीडितद्वयम् ॥ १८ ॥ ग्रन्थसमाप्तौ भगवद्ध्यानलक्षणं मङ्गलमाचरति—कस्मै इति ॥ अयं श्रीभागवतरूपः अतुलो निरुपमः ज्ञानप्रदीपः पुरा कल्पादौ येन कस्मै ब्रह्मणे विभासितः प्रकाशितः । कस्मै इत्यत्र सर्वनामत्वमार्षम् । तद्रूपेण ब्रह्मरूपेण येन नारदाय विभासितः तद्रूपिणा नारदरूपिणा च येन कृष्णाय व्यासाय विभासितः तद्रूपिणा व्यासरूपिणा येन योगीन्द्राय शुकाय विभासितः । अथान्तरं तदात्मना शुकरूपेण च येन भगवद्रताय परीक्षिते विभासितस्तत्तं शुद्धं प्राकृतमलरहितमत एव विशोकममृतं जन्ममरणादिविकाररहितमत एव सत्यं परमार्थभूतं परं परमेश्वरं धीमहीति गायत्र्यैव यथोपक्रममुपसंहरन् गायत्र्याख्यब्रह्मविद्येयमिति दर्शयति ॥ १९ ॥ शास्त्रसमाप्तौ स्वेष्टदेवं प्रणमति—नम इति । इदं पुराणं कस्मै ब्रह्मणे व्याचचक्षे व्याख्यातवान् ॥ २० ॥ योगीन्द्रायेति । तस्मै ब्रह्मरूपिणे परब्रह्मनिरूपकाय च योगिनां समाहितचित्तानां विषोपायविदां च इन्द्राय तस्मै शुकाय नमः । यः संसार एव सर्पस्तेन दष्टं विष्णुरातम् अमूमुचत् संसारबन्धात् सर्पविषाच्च मोचयामास । अत्र श्रीशुकस्य विषवैद्यत्वं व्यङ्ग्यम् । तच्च संसारस्य सर्पत्वरूपवाच्यसिद्धेरङ्गमिति मङ्गलानि सन्तु सर्वजगताम् ॥ २१ ॥ दृङ्मार्गमेष्यति विभुः स्वयमित्यमन्दानन्दाशया न गणिता विपदो दुरन्ताः । पीयूषसागरतरङ्गनिभैरपाङ्गैः श्रीनन्दनन्दन दयोदय नन्दयास्मान् ॥ १ ॥

इति श्रीकृष्णसेवार्थमन्वितार्थप्रकाशिकाम् । त्रयोदशे द्वादशस्य व्यधाद्गङ्गासहायकः ।

इति श्रीमद्भागवते महापुराणे पं० गङ्गासहायकृतान्वितार्थप्रकाशिकायां टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥

इत्यर्जयन् किमपि याचनतः परेभ्यष्टीकोपदां तव मुदे समपीपदं याम् ।
तामर्पये पृथुकमुष्टिमिवातिदीनः कारुण्यमन्दिर मुकुन्द दृशं दिशास्याम् ॥ १ ॥

निर्मूलयन्नपि बलादचिरेण कामान् यः प्रीणयत्यतितरां भजतां मनांसि ।
यो रात्यलौकिकमचिन्तिमर्थमग्र्यं कल्पद्रुमो जयति भागवताभिधोऽसौ ॥ २ ॥

श्री पाण्डुवंशभवतोमरगोत्र इन्द्रप्रस्थेश्वरोऽभवदिलाभृदनङ्गपालः ।
तद्वंशमौक्तिकमहीपमुकुन्दसिंहस्थःनं पुरी जयति संप्रति पाटणाख्या ॥ ३ ॥

एतां स्वपूर्वंवसतिं मम तातपादाः ख्यातां व्यधुर्जगति रामधनाभिधानाः ।
सौशील्यभूषितगुणौघवशीकृतत्वान्नासूयति स्म खलु कोऽपि खलोऽपि येभ्यः ॥ ४ ॥
ज्येष्ठः सुतो जडतमोऽप्यहमाशिषा तैराज्ञापितोऽजनिषि भागवतेऽनुरक्तः ।
अध्यापितश्च शनकैर्विपुलश्रमेण प्रापं सतां परमनुग्रहभाजनत्वम् ॥ ५ ॥
येषां पदाम्बुदरजःप्रणतेन मूर्ध्ना धृत्वैव बोधलवमहं मादृशोऽपि ।
वात्सल्यविस्मृतमदीयमहागसस्तान् वन्दे पतन्मुहुरधिक्षिति तातपादान् ॥ ६ ॥
याऽग्रसरत्वमयते स्म दयावतीनां सीमां च याऽऽत्वति परां स्म पतिव्रतानाम् ।
मद्वाक्य एव परलोकमुपेयुषीं तां लक्ष्म्याह्वयां स्वजननीं प्रणमामि भक्त्या ॥ ७ ॥
स्वर्भाजि मातरि शिशू तनयौ सपत्न्या याऽपीपलत्स्वतनयाधिकभावमावाम् ।
तमाश्रयं सरकताकरुणाक्षमाणां गङ्गां द्वितीयजननीमतिभक्ति वन्दे ॥ ८ ॥
श्रीकृष्णदत्तविदुषो बुधवन्द्यमेकारामाभिधान् हरिनारायणपण्डितांश्च ।
गोविन्दरामनिजसूनुयुतांश्च गोपीनाथान्मुहुर्विविधशास्त्रगुरून्नमामि ॥ ९ ॥
येऽमूमयोग्यरचनामपि वीक्ष्य टीकां दोषानुपेक्ष्य दयया प्रशशंसुरेव ।
काश्याद्यनेकनगरस्थितिशालिनस्तान् सौजन्यपूर्णहृदयान् विबुधान्नमामि ॥ १० ॥
यश्चेतराम इति मे सहजः कनिष्ठो रामप्रताप इति यः प्रथमः सुतो मे ।
यौ विष्णुदत्तहरिवल्लभकौ कनिष्ठौ तेऽमी भवन्तु सुखिनश्चिरजीविनश्च ॥ ११ ॥
गोविन्द इत्यथ जगत्पदपूर्वनाथो गोपालकस्तदनुजोऽपि च कृष्णदत्तः ।
एते मदीयसहजस्य सुता विनीता नित्यं भवन्तु सुखिनश्चिरजीविनश्च ॥ १२ ॥

आजीवनाय परदेशनिवासभाजो यैर्यैरकारिषत केऽपि ममोपकाराः ।
भूमीभुजस्तुहिनपर्वतदेशपाला नित्यं भवन्तु बहुसम्पदलंकृतास्ते ॥ १३ ॥

श्रीपूर्णदेवनृपतिः कुनिहारनाथः श्रीकृष्णसिंहनृपतिस्तनयस्तदीयः ।
देवैः सुरद्रुसुममैः परिपूजितौ तौ स्वर्गे सदाऽनुभवतां विपुलं विहारम् ॥ १४ ॥
श्रीकृष्णसिंहतनयो विनयोर्जितश्रीः शिष्यो ममावति महीमिह तेगसिंहः ।
सज्जीवनाय शुचिदिष्टलसद्विकासः पायोदवत्सरसतां जगतां विधत्ते ॥ १५ ॥
श्रीमान् कलानिधिरभूज्जयसिंहवर्मा योऽचूचुरत्स्वकलया जगतां मनांसि ।
किन्नाम चित्रमिह यत्स्वसमानशीलं तं नीतवान् स्वसदनं नवनीतचीरः ॥ १६ ॥
ज्येष्ठो विभाति जयसिंहविभोस्तनूजः श्रीध्यानसिंह इति बाघलमण्डलेशः ।
सोऽयं कलत्रसहजात्मजभृत्ययुक्तः पायाच्चिरं वसुमतीं परमेशभक्तः ॥ १७ ॥
संसारचन्दनृप आसमधाणनाथस्तस्यात्मजोऽवति जरामिह विष्णुचन्दः ।
आनन्दतुन्दिलमना जगतां प्रियोऽस्तु कीर्तिं बिभर्तु च सदा मम शिष्य एषः ॥ १८ ॥
श्रीकर्मचन्द इति जुब्बलमण्डलस्य नाथः सुतोऽभवदमुष्य तु पद्मचन्दः ।
यस्याम्बरीषनृपतेरिव सर्वसम्पज्जज्ञे मुकुन्दपदपङ्कजपूजनाय ॥ १९ ॥
वैकुण्ठगोऽस्तु कहलूरपतिश्च हीराचन्दस्तथैव महलोगपतिर्दिलीपः ।
गोवर्द्धनोऽतिथिहितः किल धामिनाथो मज्जीश्वरो नरपती रणभद्रसिंहः ॥ २० ॥
आजीवनाय वसतो हिमशैलदेशे भूपेष्वमीषु विगतं तरुणं वयो द्राक् ।
कार्यान्तरेण निजदेशमुपागतस्य प्राप्ताः श्रुतिं मम गणेशपुरी यतीन्द्राः ॥ २१ ॥
आनन्दमग्नमनसोऽखिलशास्त्रविज्ञान् नित्यं निबद्धहृदयांश्च परोपकारे ।
सम्पूजितान्नृपतिभिर्विपुलादरेण वीतस्पृहान् विचरतो भुवि तानपश्यम् ॥ २२ ॥
ते मां विलोक्य रहितं मदकैतवाद्यैः क्रेतुं चकांक्षुरुपकारपणैरनल्पैः ।
लोकोत्तरप्रचुरपुस्तकदर्शनैर्मे चित्तं प्रलोभ्य च मया सह बुन्दिमापन् ॥ २३ ॥
तस्यां महाकविरशोभत सूर्यमल्लो यस्यास्य ऊषुरखिलाश्चिदशादिभूपाः ।
यो वंशभास्करसमाख्यमहाप्रबन्धं श्रीरामसिंहनृपतेरकरोन्निदेशात् ॥ २४ ॥
श्रीमान् कविः स च गणेशपुरीनिदेशान्मां बुन्द्यधीश्वरपुरः प्रशशंस सम्यक् ।
श्रीरामसिंह इति विश्रुत एष भूपो मां पूर्णकाममकरोन्निजदर्शनेन ॥ २५ ॥
चौहाणवंशभवहड्डकुलाम्बुधीन्दोर्लोकोत्तरैर्निजगुणैर्वशिताखिलस्य ।
शास्त्रास्त्रशस्त्रकुशलस्य विशुद्धबुद्धेः श्रीरामसिंहनृपतेर्यशसः क्व सीमा ॥ २६ ॥
ब्रह्मैव वाङ्मनसगोचरतामतीतं सर्वत्र भातमवदातमतर्कगम्यम् ।
इत्यादिशास्त्रवचनानि परःशतानि श्रीरामसिंहयश एव वदन्ति नान्यत् ॥ २७ ॥
श्रीविश्वनाथकविना रचिते गभीरे श्रीशत्रुशल्यचरिते विपुले सुकाव्ये ।
तस्याज्ञया विवृतिमारचयं सुबोधां व्याख्यं तथोपनिषदोऽनु च केन मुख्याः ॥ २८ ॥
एवं च पञ्चसु गतासु शरत्सु भूपः प्रीत्या स मह्यमदान्निकटेऽधिकारम् ।
यातासु पञ्चसु समासु पुनः प्रसन्नो मामप्यरोपयदमात्यपदे स्वदेशे ॥ २९ ॥
भूयो नृपार्हवसनैः सह मह्यमभ्युत्थानादरं करुणया दिशति स्म भूपः ।
आसन्नवार्द्धकतयाऽऽश्रमभाग्दशाब्दान् भुक्त्वाऽहमत्यजममात्यपदं विरक्तः ॥ ३० ॥
मह्यं शजस्थितिसमस्थिरतां नृपो मे ग्रामान्वितां वसुमतीं विपुलां प्रदाय ।
राज्ये निधाय तनयं रघुवीरसिंहं शोके विमज्ज्य जनतां हरिलोकमापत् ॥ ३१ ॥
शासन्महीं नयपथै रघुवीरसिंहो मां पूर्वतोऽप्यधिकमाद्रियते दयालुः ।
अष्टासु राजसचिवेषु पदं प्रदाय प्रीत्या सुवर्णकटकं चरणेऽदिशन्मे ॥ ३२ ॥
कुत्रापि शास्त्रविषये मम नास्ति दाक्ष्यं बाल्यात्तथापि रचनाव्यसनं महन्मे ।
दर्पावधूतधिषणोऽहह हैमकोशव्याख्याद्यनेककलनाभिरनैषमायुः ॥ ३३ ॥

एवं प्रयाति रचनाव्यसनेन काले श्रान्तः स्वयं स्वमवदं हृदि सानुतापे ।
किं मूढ विस्मरसि भागवतं तदस्मिन् संयोजयान्वयवतीं सरलां च टीकाम् ॥ ३४ ॥
एवं विचिन्त्य जडधीर्निपन्नपोऽहं श्रीश्रीधरोक्तिमिह मुख्यतयाऽवलम्ब्य ।
टीकां क्रमेण विरचय्य हरेः पदाब्जे भक्त्या समर्प्य च सुखेन जरां नयामि ॥ ३५ ॥
द्वीष्वङ्क १९५२ भूप्रमितविक्रमवत्सरस्य माघेऽभवद्धवलपक्ष उपक्रमोऽस्याः ।
पञ्चे १९५५ षुगोधरणिवत्सरकृष्णजन्माष्टम्यां मुकुन्दकृपया परिपूर्त्तिरासीत् ॥ ३६ ॥
व्याख्याऽपि भागवतमन्वयवर्त्मनेदं वक्ष्ये पुनः स्फुटतदाशयबोधनाय ।
नानामतानि विषयांश्च समासतोऽग्रे पर्यङ्कनाम्नि विवृतेरवशेषभागे ॥ ३७ ॥
टीकामकारयदमूं परमेश्वरो यः कारुण्यभूर्मम जडस्य मनः प्रविश्य ।
पर्यङ्कपूरणकृतेऽपि विभुः स एव चित्ते प्रकाशयतु भागवतस्य तत्त्वम् ॥ ३८ ॥

इति श्रीमन्महाराजाधिराजमहारावराजेत्यादिपदवीविराजमानबुन्दीश्वरश्रीरामसिंहप्रसादभाजा सम्प्रति तत्सूनुश्रीमन्महाराजाधिराजमहारावराजेत्याद्दिपदवीविराजमानबुन्दीश्वरश्रीरघुवीरसिंहाश्रितेन पाण्डववंशावान्तरतोमरकुलतिलकदिल्लीश्वरमहाराजाधिराजश्रीमदनङ्गपालवंशमुक्तामणिमहाराजाधिराजश्रीमुकुन्दसिंहभूमीश्वरपालितपाटणाख्यपुरीवास्तव्यानां विद्वद्वरश्रीरामधनशर्मणां ज्येष्ठसुनुना तच्चरणसेवनलब्धविद्यालवेन विदुषां किङ्करेण गङ्गासहायेन विरचिता अन्वितार्थप्रकाशिका श्रीमद्भागवतव्याख्या समाप्ता श्रीहरेश्चरणयोरुपहारीकृता चेति मङ्गलम् ॥ गोण्डामण्डलान्तर्वर्तिशिसईग्रामनिवासिना पंडितरामदत्तसूनुपाण्डेय रामतेजशास्त्रिणा सम्पादितोऽयं ग्रन्थः समाप्तः । सुकृतेनानेन भगवान् भवो भगवती भवानी च प्रीयेतामिति शम्

समाप्तोऽयं ग्रन्थः

श्रीमद्वीरराघवव्याख्या

योऽसौ तुरङ्गवदनो हृदि सन्निविष्टः
सङ्कोच्य बुद्धिमसकृत्कृपया स्वया मे ।
प्रालीलिखत्करतलेन्द्रियदैवतेन्द्रः
मूर्त्तिस्तमेनमनघं मनवै परेशम् ॥
योसौ पिशङ्गपरिधिर्वनमाल्युदारः
मन्दस्मिताकलितवीक्षणवीक्षितेन ।
सञ्चोदितेन च मया परिदृष्टमूर्त्तिः
स्वप्ने तमेति शरणं वसुदेवसूनुम् ॥
क्वेदं गभीरनिगमान्तरहस्यसारं
काहं सुमन्दमतिरत्र परं निदानम् ।
वीक्षा यदीयकरुणाकलिता तमेव
श्रीशैलदेशिकवरं शरणं गतोऽस्मि ॥
चिकीर्षाऽमोघा सा निरवधिकृपालोककलिताः
यया यस्यास्यान्तं विवृतिरचनायाः समगमम् ।
स एष श्रीशैलो गुरुरखिलविद्याजलनिधिः
मम स्यातां स्वान्तश्चरणकमलं सम्प्रकटयन् ॥

इति श्रीवत्सान्वयपयःपारावारराकासुधाकरस्य श्रीशैलगुरोस्तनयेन तच्चरणपरिचर्य्याप्रसन्नतत्सूक्तिसमधिगतश्रीमद्भागवतार्थहृदयेन श्रीवैष्णवदासेन श्रीवीरराघवविदुषा विलिखितायां श्रीमद्भागवतचन्द्रचन्द्रिकायां व्याख्यायां द्वादशस्कन्धे त्रयोदशोऽध्यायः॥

( श्रीमद्वीरराघवीयरीत्या द्वादशोध्यायः ॥ १२ ॥ )

समाप्तोऽयं द्वादशस्कन्धः ॥ १२ ॥

श्रीमते रामानुजाय नमः ।

## श्रीमद्विजयध्वजतीर्थकृता पदरत्नावली

पारमहंस्यं परमहंसैः प्राप्यम् ॥ १७–१८ ॥

इति श्रीमन्महेन्द्रतीर्थपूज्यपादशिष्यविजयध्वजतीर्थभट्टारकस्य कृतौ श्रीमद्भागवतटीकायां पदरत्नावल्यां द्वादशकन्धे सूतोक्तौ त्रयोदशोध्यायः ॥ १३ ॥

## समाप्तोऽयं द्वादशस्कन्धः ॥ १२ ॥

## श्रीमज्जीवगोस्वामिकृतः क्रमसन्दर्भः

किञ्च श्रीभागवतमिति वैष्णवानां प्रियमित्यनेनैव तथा विवक्षितं तत्रानुषङ्गिकं गुणमाह—यस्मिन्निति। विमुच्येत सर्वभक्त्यन्तरायेभ्योऽपि निस्तरेत् ॥ १७–१८ ॥ पूर्वं वस्त्वद्वितीयं तन्निष्ठमिति सामान्यतस्तात्पर्य्यं दर्शयित्वा जन्माद्यस्येत्याद्युपक्रमपोषकं श्रीभगवत्येव तस्य पर्य्यवसानं दर्शयन्नुपसंहरति—कस्मा इति। कस्मै ब्रह्मणे महावैकुण्ठं दर्शयता श्रीभगवता येन विभासितः प्रकाशितः ननु तदा विरचितः अयं श्रीमद्भगवद्रूपः पुरा पूर्वपरार्द्धादौ तदात्मनेत्यस्योत्तरेणान्वयः तत्र तदात्मना श्रीशुकरूपेणेति गम्यं तद्रूपेणेत्यादिभिस्त्रिभिः पदैर्न केवलं चतुःश्लोक्येव तेन प्रकाशिता अपि तु तत्र तत्राविष्टेनाखण्डमेवेदं पुराणमिति द्योतितम्। श्रीसङ्कर्षणसम्प्रदायप्रवृत्तिस्तु श्रीकृष्णद्वैपायनकर्तृकप्रकाशनान्तर्गतमेवेति पृथगोक्ता तत्परं सत्यं भगवदाख्यं तत्त्वं धीमहि "यत्तत्परमनुत्तमम्" इति सहस्रनामस्तोत्रे तच्छब्दस्य तन्नामत्वेन गणितत्वात् परशब्देन च श्रीभगवानेवोच्यते 'आद्योवतारः पुरुषः परस्य' इति द्वितीयात् ब्रह्मादीनां बुद्धिवृत्तिप्रेरकत्वेनाभिधानात् गायत्र्यर्थोपलक्षितेन धीमहीति गायत्रीपदेनोपसंहारः ॥ १९ ॥ तदेवं श्रीभागवततात्पर्य्यत्वेनोपसंहृत्य तं सर्वगुरुं श्रीभगवन्तमेव प्रणमति—नम इति। मुमुक्षवे तद्भक्तिवना सर्गमन्यं त्यक्तुमिच्छवे ॥ २० ॥ तत्रापि स्वोपदेष्टृरूपं प्रणमति, योगीन्द्राय तदात्मनेत्युक्तेः तदेवं तस्य मम हि मानं स्मृत्वा कारुण्यं स्मरति, संसारेति। संसरत्यस्मिन्निति संसारः प्रपञ्चः स एव श्रीकृष्णान्तर्द्धाने सोढुमशक्यत्वात् सर्पः सर्वव्यापिविषधरः तेन दष्टं दंशेनेवात्यर्थं तद्विरहदुःखेन पीडितं विष्णुरातं श्रीपरीक्षितं योऽमूमुचत् तां पीडां त्यक्तुमुत्कण्ठां प्रेरयामास अतस्तक्षकमात्राद्यद्दुःख यच्च तस्मान्मोचनं तत्तदुभाभ्यामपि नादृतमिति भावः। तादृशप्रेम्णि च हेतुर्विष्णुरातमित्येव तेन विष्णुना यो रातः स भक्तेभ्यः प्रसादीकृतः स परमतदीय एवेति ॥ २१–२३ ॥

इति श्रीमद्भागवते महापुराणे द्वादशस्कन्धे श्रीमज्जीवगोस्वामिकृतक्रमसन्दर्भे त्रयोदशोऽध्यायः ॥ १३ ॥

नामचिन्तामणिः कृष्णचैतन्यरसविग्रहः। पूर्णः शुद्धो नित्यमुक्तोऽभिन्नत्वान्नामनामिनोः ॥

अत एव—

सुवर्णवर्णो हेमाङ्गो वराङ्गश्चन्दनाङ्गदी। संन्यासकृत् समः शान्तो निष्ठाशान्तिपरायणः ॥
एवं सहस्रनामोक्तः च कृणतप्र्यसाञ्जितः। मां पायादपराधेभ्यः स्वप्रेमांशेन तुष्यतु ॥
स्वामिपादैः न यद्व्यक्तं यद्व्यक्तं चास्फुटं क्वचित्। तत्र तत्रैव विज्ञेयः सन्दर्भः क्रमसञ्ज्ञकः ॥

इति कलियुगपावनस्वमजनविभजनप्रयोजनावतारश्रीश्रीभगवत्कृष्णचैतन्यदेवचरणानुचरविश्ववैष्णवराजसभासभाजनश्रीमच्छ्रीरूपसनातनानुशासनभारतीगर्भे श्रीभागवतसन्दर्भे क्रमसन्दर्भो नाम सप्तमः सन्दर्भः ॥ श्रीवृषभानुनन्दिनी जयताम् ॥

॥ समाप्तश्चायं श्रीभागवतक्रमसन्दर्भः ॥

॥ श्रीकृष्णचन्द्रो जयति ॥

## समाप्तोऽयं द्वादशस्कन्धः ॥ १२ ॥

## श्रीमद्विश्वनाथचक्रवर्तिकृता सारार्थदर्शिनी

सर्वोत्कर्षमेवोपपादयति—भागवतं पुराणमेव श्रीमत् सर्वशोभायुक्तं न भवन्ति मलाः त्रिगुणोत्था यस्मात्तत् यत् यतो वैष्णवानां प्रियं भक्त्युत्कर्षप्रतिपादकत्वादिति भावः। भक्त्युत्थज्ञानप्राप्तिलोभिभिर्ज्ञानसिद्धैरात्मारामैरप्येतदाश्रयणीयमेवेत्याह—यस्मिन्निति। परमहंसेभ्यो हितं पारमहंस्यं स्वार्थे अण् पारमहंस्यं परं भक्त्युत्थत्वात् श्रेष्ठं ज्ञानसाधकैरप्येतदवश्यसेव्यमित्याह, यत्रेति। नैष्कर्म्यं सर्वकर्मोपरमः ॥ १८ ॥ श्रीभागवतसम्प्रदायप्रवर्तकरूपस्य भगवतो ध्यानलक्षणं मङ्गलमाचरति—कस्मै ब्रह्मणे सर्वनामत्वमार्षम् अयं द्वादशस्कन्धात्मक एव ग्रन्थः पुरा कल्पादौ तद्रूपेण नारदाय तद्रूपिणा कृष्णाय व्यासाय व्यासरूपेण

योगीन्द्राय शुकाय तदात्मना शुकरूपेण भगवद्राताय विष्णुराताय तत्परं सत्यं श्रीनारायणस्वरूपं धीमहीति गायत्र्यैव यथोपक्रान्तवांस्तथैवोपसंहरन् गायत्र्याख्यब्रह्मविद्येयमिति दर्शयति ॥ १९ ॥ शास्त्रसमाप्तौ स्वाभीष्टदेवं प्रणमति—नम इति। वासुदेवाय वसुदेवनन्दनाय साक्षिणे इति अहं तस्य भक्तो भक्तिरहितो वा शिष्टो दुष्टो वा तदभिप्रेतमर्थं ख्यातुं वेद्मि वा न वेद्मि वा स एव साक्षात् पश्यति तत्कृपैव मे शरणमिति भावः। अहं तावत्को वराको ब्रह्मापि तत्कृपां विना श्रीभागवतार्थं न वेत्तीत्याह-य इदमिति। मुमुक्षवे कृपया व्याचचक्षे उपदिदेशेत्येतदुपदेशात् पूर्वमेव तस्य मुमुक्षा आसीत् एतदुपदेशानन्तरं तु प्रेमण्येवाकाङ्क्षा तूपेक्षैवाजानिष्टेतिभावः ॥ २० ॥ श्रीगुरुदेवं प्रणमति—योगीन्द्राय भक्तियोगज्ञानयोगकर्मयोगाष्टाङ्गयोगविदां महामुख्याय ब्रह्मरूपिणे परब्रह्मस्वरूपाय, संसार सर्पदष्टं विष्णुरातमिति यथार्जुनस्य मोहं गीताशास्त्रेण यथोद्धवस्य मोहमेकादशेन भगवान्निवर्त्तयामास तथैव परीक्षितः संसारं श्रीशुक इति प्राकृतलोकप्रतीत्यैवोक्तिर्वस्तुतस्तु त्रयाणामेव नित्यपार्षदत्वान्न संसारशङ्कागन्धोपि किन्तु जीवहितग्रहणचातुर्य्यधुरन्धराणां महाकृपालूनां महतां कमप्येकं महासिद्धजनमवलम्ब्यैव हितोपदेशसन्ततिरिति नीतिर्दृष्टा अत एवात्र विष्णुरातमिति प्रयुक्तम् विष्णुना कृपया युधिष्ठिराय रातः दत्तः स्वयं गृहीतो वा यस्तस्य संसारं कः खलु मन्दबुद्धिराशङ्केतेति भावः। किञ्च, सर्पविषहरा मन्त्रा यथा लोके अर्थज्ञानमपि नापेक्षन्ते तथैवार्थं जानातु न जानातु वा श्रीभागवतीयाः शब्दा एव संसारविषं निर्मूलयन्तीत्याचार्य्याभिप्रायो द्रष्टव्यः ॥ २१–२३ ॥

इति सारार्थदर्शिन्यां हर्षिण्यां भक्तचेतसाम्। त्रयोदशो द्वादशस्य सङ्गतः सङ्गतः सताम् ॥ १३ ॥

ॐ तत्सत् ॥

नमोऽस्तु गुरवे तस्मै श्रीकृष्णाय नमो नमः। कृपार्णवाय श्रीलोकनाथाय प्रभवे नमः ॥
कृष्णचैतन्यगौराङ्ग! साङ्गोपाङ्गसपार्षद!। निरुपाधिकृपासिन्धो! प्रेम्णा मां परिपूरय ॥
जय वृन्दावनक्रीडारसिकद्वय! मां नय। स्वप्रियालिगणं गीतमवैतत् करुणं भव ॥
अत्यज्ञोपि त्वयैवाहं स्वव्याख्यायां प्रवर्त्तितः। हे कृष्ण! श्रीभागवत! प्रसीद त्वं तदेतया ॥
मन्दधीरपि गोपाल! स्वीकृत्य परिपालय। पिबन्नासां पयः प्रीत्या स्वभक्तानपि पायय ॥
ऋत्वक्षिषड्भूमिमिते शाके राधाकृष्णसरस्तटे। शुक्लषष्ठ्यां सिते माघे टीकेयं पूर्णतामगात् ॥

टीकेयं वैश्वनाथी भवतु भगवतो भक्तलोकस्य रस्या
षट्शास्त्रागम्यधाम्नो मधुरिमलहरीखेलनैकान्तवृत्तेः ॥
यत्तस्यारोचकत्वे कृतिरतिकृतिनः सर्वसाद्गुण्यगण्या
दीव्यत्पाण्डित्यनृत्याप्यनुपदविधुरा स्याज्जनीदुर्भगेव ॥

आरम्भे परिणामे च विवर्त्ते ऽपि न हि क्षतिः। श्रीमद्भागवते भक्तेः पुरुषार्थशिरोमणेः ॥
व्याख्याऽस्य भक्त्या गम्या सा श्रीगुरोः कृपयेक्ष्यते। तस्मान्नमो नमस्तस्मै गुरवे गुरवे नमः ॥
हे भक्ताः! द्वारि वश्चञ्चद्वालधीरौत्ययं जनः। नाथाविशिष्टः श्ववातः प्रसादं लभतां मनाक् ॥

श्रीगोवर्द्धनाय हरिदासवर्याय नमः।
श्रीराधाकुण्डाय श्रीकृष्णकुण्डाय नमो नमः
समाप्ता चेयं सारार्थदर्शिनी टीका ॥

शुकशास्त्रं च परिसमाप्तम्।
श्रीराधायै नमो नमः ॥

**श्रीमच्छुकदेवकृतः सिद्धान्तप्रदीपः**

परमहंसैः हेयोपादेयविवेकिभिर्ग्राह्यम्। नैष्कर्म्यं मुक्तिविरोधिकर्मराहित्यम् ॥१८॥ श्रीमद्भागवतसम्प्रदायप्रवर्त्तकभगवद्ध्यानलक्षणं मङ्गलमाचरति—कस्मै काय चतुर्मुखाय अतुलः अनुपमः अयम् श्रीमद्भागवतरूपः ज्ञानप्रदीपः पुरा कल्पादौ येन विभासितः तद्रूपेण चतुर्मुखरूपेण नारदाय तद्रूपिणा कृष्णाय पाराशर्याय तद्रूपिणा योगीन्द्राय शुकाय तदात्मना भगवद्राताय परीक्षिते तत्परं पूर्णं सत्यं जगत्कारणं नित्यं परमात्मस्वरूपं धीमहि ध्यायेम उपक्रमे उपसंहार च धीमहीति गायत्रीपदोपन्यासः अस्य शास्त्रस्य गायत्र्यर्थप्रकाशकत्वं सूचयति ॥ १९–२० ॥ गुरुं प्रणमति—योगीन्द्रायेति। व्याचचक्षे व्याख्यातवान् ॥ २१–२३ ॥

भिन्नाभिन्नं जगद्यस्मात्पृथिव्या औषधादिवत्। तं राधामाधवं वन्दे कल्याणगुणसागरम्॥
सर्वेश्वरमहं वन्दे श्रीगुरुं तत्पदाश्रयम्। पूर्वाचार्यान् सुविख्यातान् श्रुतिस्मृत्यर्थभास्करान्॥
हंससनकदेवर्षिनिम्बार्कप्रमुखान् प्रभून्। नैष्ठिकान् वेदसिद्धान्तसम्प्रदायप्रवर्तकान्॥
समालोक्य मुहुस्तेषां कृतीः सम्यङ्मनोरमाः। श्रीभागवतसिद्धान्तप्रदीपोयं कृतो मया॥

इति श्रीसनकसम्प्रदायप्रवर्त्तकाचार्यश्रीभगवन्निम्बार्कचरणचिन्तकशुकसुधीप्रणीते श्रीमद्भागवतसिद्धान्तप्रदीपे द्वादशस्कन्धीये त्रयोदशाध्यायार्थप्रकाशः॥ १३॥

## समाप्तोयं द्वादशस्कन्धः॥ १२॥

### गोस्वामिश्रीगिरिधरलालकृता बालप्रबोधिनी

अनुत्तमा सर्वोत्तमा। हीति सन्देहवारणाय। हे द्विजा इति सम्बोधनेन भवतामप्यत्र सम्मत्तिरस्तीति सूचयति॥ १७॥ यत् श्रीमद्भागवतपुराणं भक्त्या तच्छ्रवणादिपरो नरः संसाराद्विमुच्यते। तत्र हेतुमाह—अमलं मोक्षप्रतिबन्धकदोषनिवर्त्तकमित्यर्थः। तत्र हेतुमाह—यत्र ज्ञानादिसहितं नैष्कर्म्यं सर्वकर्मोपरमः आविष्कृतं प्रकाशितम्। यस्मिंश्च पारमहंस्यं परमहंसैर्विवेकिभिः प्राप्यं एकमद्वितीयममलं प्राकृतदोषसम्बन्धरहितं ज्ञानमित्युपलक्षणं सच्चिदानन्दात्मकं परं ब्रह्म गीयते। अत एव वैष्णवानां प्रियमिति।१८। श्रीभागवतसम्प्रदायप्रवर्त्तकरूपेण भगवद्ध्यानलक्षणं मङ्गलमाचरति। अयं श्रीभागवतरूपः अतुलः निरुपमः ज्ञानप्रदीपः पुरा कल्यादौ येन कस्मै ब्रह्मणे विभासितः। कस्मै इत्यत्र सर्वनामत्वमार्षम्। तद्रूपेण ब्रह्मरूपेण येन नारदाय विभासितः। तद्रूपिणा नारदरूपिणा च येन कृष्णाय व्यासाय विभासितः। तद्रूपिणा व्यासरूपिणा योगीन्द्राय शुकाय विभासितः। तदात्मना शुकरूपेण च येनाथानन्तरं भगवद्राताय परीक्षिते विभासितः प्रकाशितस्तत्तम्। तत्र हेतुः—शुद्धम् प्राकृतमलरहितमतएव विशोकममृतं जन्ममरणादिविकाररहितमत एव सत्यं परमार्थभूतं परं परमेश्वरं धीमहीति गायत्र्यैव यथोपक्रममुपसंहरन् गायत्र्याख्यब्रह्मविद्येयमिति दर्शयति॥ १९॥ तमेव देवतारूपेण गुरुरूपेण च प्रणमति—नम इति चतुर्भिः। इदं पुराणं कस्मै व्याचचक्षे व्याख्यातवान्।२०-२१।

इति श्रीवल्लभाचार्यवंश्यगोपालसूनुना। श्रीमन्मुकुन्दरायाणां पादसेवाधिकारिणा॥ १॥
श्रीमद्गिरिधराख्येन भजनानन्दसिद्धये। श्रीमद्भागवतस्येयं टीका बालप्रबोधिनी॥ २॥
रचिता द्वादशे तत्र सर्वाश्रयनिरूपणे। त्रयोदशो गतो वृत्तिं ग्रन्थसङ्ख्यानिरूपकः॥ ३॥
यत्कृपालवलेशेन टीकेयं निर्मिता मया। समर्पिता पदाम्भोजे तस्यैव भक्तिभावतः॥ ४॥
भक्तैः समर्पितं तुच्छं करोति भूरि यः सदा। प्रसन्नोऽस्तु स दासस्य मुकुन्दो दीनवत्सलः॥ ५॥

श्रीकृष्णार्पणमस्तु

### भगवत्प्रसादाचार्यविरचिता भक्तमनोरञ्जनी

क्षेत्राणामिति। सर्वेषां क्षेत्राणां मध्ये यथा काशी अनुत्तमा सर्वोत्तमा, तथा पुराणव्रातानां पुराणसमुदायानां मध्ये, हे द्विजाः, श्रीमद्भागवतं अनुत्तमम्॥ १७॥ श्रीमदिति। किं च यत् वैष्णवानां प्रियं, यस्मिन् पारमहंस्यं परमहंसैः प्राप्यं, एकमद्वितीयं, अमलमविद्यानाशकं, परं आत्मपरमात्मसंबन्धित्वात् सर्वोत्तमं ज्ञानं गीयते, यत्र च ज्ञानविरागभक्तिसहितं नैष्कर्म्यं, सकलकर्मसंबन्धविध्वंसकत्वमित्यर्थः। आविष्कृतं भवति। तत् अमलं मलनिवर्त्तकं श्रीमद्भागवतं पुराणं, भक्त्या शृण्वन् भक्त्या समाकर्णयन् सन्, विपठन् विशेषेण पाठविषयतां नयन् विचारणपरः नरः विमुच्येत् संसृतेरिति शेषः॥ १८॥ श्रीमद्भागवतसंप्रदायप्रवर्त्तकत्वोक्तिद्वारा भगवद्ध्यानलक्षणं मङ्गलमाचरति। कस्मै येनेति। येन श्रीनारायणेन, पुरा पूर्वं, कस्मै ब्रह्मणे, कल्पादावेकार्णवोद्भूतपद्मस्थाय विधये इत्यर्थः। अतुलोऽनुपमः अयं श्रीमद्भागवतरूपः ज्ञानप्रदीपः ज्ञानस्य प्रकाशकः प्रकृष्टो दीपः, दीपादेव दीपान्तरसद्भावान्न सूर्यत्वेनोक्तिः। विभासितः प्रकाशितः, तद्रूपेण ब्रह्महृदाविर्भूततया ब्रह्मरूपेणेत्यर्थः। ब्रह्मात्मकेन हरिणेति भावः। मुनये नारदाय, विभासितः, तद्रूपिणा नारदरूपेण हरिणा, कृष्णाय व्यासाय प्रकाशितः, तदात्मना व्यासरूपेण नारायणेन च, योगीन्द्राय श्रीशुकाय विभासितः, अथ तदात्मना श्रीशुकरूपेण हरिणा, कारुण्यतः भगवद्राताय परीक्षिते, विभासितः, तत्तथाभूतं श्रीमद्भागवतप्रतिपाद्यं शुद्धं गुणत्रयातीतमित्यर्थः। विमलमविद्यानिवर्त्तकं विशोकं शोकनिवर्त्तकं, अमृतं मोक्षरूपं, परं कार्यकारणात् परं, सत्यं सत्यवस्तुरूपं परमात्मस्वरूपमिति शेषः। धीमहि ध्यायेम। अनेन गायत्र्या परिसमाप्तिर्दर्शिता॥ १९॥ यथोपक्रमं गायत्र्यैवेदमुपसंहरन् गायत्र्याख्यब्रह्मविद्येयमिति संदर्शयंस्तमेव परमात्मानं प्रणमति। नम इति। साक्षिणे वासुदेवाय तस्मै भगवते, नमः। यो वासुदेवो भगवान्, कृपया इदं श्रीमद्भागवतं, मुमुक्षवे सृष्टिक्रिययाऽविलेपमिच्छते, कस्मै ब्रह्मणे व्याचचक्षे कथितवान्॥ २०॥

योगीन्द्रायेति । ब्रह्मरूपिणे योगीन्द्राय तस्मै शुकाय नमः । यः शुकः संसारसर्पदष्टं विष्णुरातं परीक्षितं, अमूमुचत् । संसृतिबन्धनादिति शेषः ॥ २१ ॥ भवे भवे इति । हे प्रभो, हे योगेश, यतः त्वं मे मम नाथः, अतः भवे भवे तव पादयोः भक्तिः सेवा, यथा जायते तथा कुरुष्व ॥ २२ ॥ नामेति । यस्य नामसंकीर्त्तनं सर्वपापप्रशनं, यस्य प्रणामः दुःखशमनः, तं हरिं श्रीहरिकृष्णभगवद्रूपं, परं परमात्मानं नमामि ॥ २३ ॥

यत्कृपावशतः पूर्णा जायते भक्तरञ्जनी । टीका भागवतस्यैव तं हरिं प्रणमाम्यहम् ॥ १ ॥
सहजानन्दभगवत्प्रीत्यै भागवतं मया । व्याख्यातं मन्मतेनेदं मदिष्टसत्प्रसत्तये ॥ २ ॥
मदिष्टदेववाक्यानि संप्रदायप्रबन्धकान् । गोपालानन्दसद्वाद्यं बुद्धा व्याख्या कृता मया ॥ ३ ॥
औद्धवीयसदाचार्या नित्यानन्दादयो बुधाः । काकलीकमिदं श्रुत्वा प्रीयन्तां मे महाशयाः ॥ ४ ॥
स्वप्नं गतस्य मम हृत्कमले निविश्य स्वयं स्वामी मम पिता च महामुनीन्द्राः ।
टीकां विधातुमनुदन् सरलां समे मामेषा ततोऽस्ति विहिता न मयात्मकीर्त्त्यै ॥ ५ ॥
स्वातीजलं जलनिधौ च यथाशु शुक्तिर्धत्ते वचो मम मुखान्निसृतं तथैव ।
संधार्य मन्निकटवास्यलिखद्धि भोलानाथस्तु भट्टकविदीनबुधस्य शिष्यः ॥ ६ ॥

इति श्रीधर्मधुरंधरश्रीधर्मात्मजप्रत्यक्षपुरुषोत्तमश्रीसहजानन्दस्वामिसुतश्रीरघुवीराचार्यसूनुभगवत्प्रसादाचार्यविरचितायामन्वयार्थावबोधिन्यां भक्तमनोरञ्जन्याख्यायां श्रीमद्भागवतटीकायां द्वादशस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

## हिन्दी अनुवाद

शौनकादि ऋषियों ! जैसे सम्पूर्ण क्षेत्रों में काशी सर्वश्रेष्ठ है, वैसे ही पुराणों में श्रीमद्भागवत का स्थान सबसे ऊँचा ।१७। यह श्रीमद्भागवतपुराण सर्वथा निर्दोष है । भगवान् के प्यारे भक्त वैष्णव इससे बड़ा प्रेम करते हैं । इस पुराण में जीवन्मुक्त परमहंसों के सर्वश्रेष्ठ, अद्वितीय एवं माया के लेश से रहित ज्ञान का गान किया गया है । इस ग्रन्थ की सबसे बड़ी विलक्षणता यह है कि इसका नैष्कर्म्य अर्थात् कर्मों की आत्यन्तिक निवृत्ति भी ज्ञान-वैराग्य एवं भक्ति से युक्त है । जो इसका श्रवण, पठन और मनन करने लगता है, उसे भगवान् की भक्ति प्राप्त हो जाती है और वह मुक्त हो जाता है ॥ १८ ॥ यह श्रीमद्भागवत भगवत्तत्त्वज्ञान का एक श्रेष्ठ प्रकाशक है । इसकी तुलना में और कोई भी पुराण नहीं है । इसे पहले पहल स्वयं भगवान् नारायण ने ब्रह्माजी के लिये प्रकट किया था । फिर उन्होंने ही ब्रह्माजी के रूप से देवर्षि नारद को उपदेश किया और नारदजी के रूप में भगवान् श्रीकृष्णद्वैपायन व्यासको । तदनन्तर उन्होंने ही व्यास रूप से योगीन्द्र श्रीशुकदेव जी को और श्रीशुकदेवजी के रूप से अत्यन्त करुणावश राजर्षि परीक्षित् को उपदेश किया । वे भगवान् परम शुद्ध एवं मायामल से रहित हैं । शोक और मृत्यु उनके पासतक नहीं फटक सकते । हम सब उन्हीं परम सत्यस्वरूप परमेश्वर का ध्यान करते हैं ॥ १९ ॥ हम उन सर्वसाक्षी भगवान् वासुदेव को नमस्कार करते हैं, जिन्होंने कृपा करके मोक्षाभिलाषी ब्रह्माजी को इस श्रीमद्भागवत महापुराण का उपदेश किया ॥ २० ॥ साथ ही हम उन योगिराज ब्रह्मस्वरूप श्रीशुकदेवजी के भी नमस्कार करते हैं, जिन्होंने श्रीमद्भागवत महापुराण सुनकर संसार सर्प के डसे हुए राजर्षि परीक्षित् को मुक्त किया ॥ २१ ॥ देवताओं के आराध्यदेव सर्वेश्वर ! आप ही हमारे एकमात्र स्वामी एवं सर्वस्व हैं । अब आप ऐसी कृपा कीजिये कि बार-बार जन्म ग्रहण करते रहने पर भी आप के चरण कमलों में हमारी अविचल भक्ति बनी रहे ॥ २२ ॥ जिन भगवान् के नामों का सङ्कीर्तन सारे पापों को सर्वथा नष्ट कर देता है और जिन भगवान् के चरणों में आत्मसमर्पण, उनके चरणों में प्रणति सर्वदा के लिये सब प्रकार के दुःखों को शान्त कर देती है, उन्हीं परमतत्त्वस्वरूप श्रीहरि को मैं नमस्कार करता हूँ ॥ २३ ॥

**बारहवाँ स्कन्ध समाप्त**

**सम्पूर्ण ग्रन्थ समाप्त**

त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये ।
तेन त्वदङ्घ्रिकमले रतिं मे यच्छ शाश्वतम् ॥

[ अकारादि क्रमेण ]

# श्रीमद्भागवतद्वादशस्कन्धीयश्लोकानुक्रमणिका


| क्रमाङ्कः | श्लोकः | अध्यायः | श्लोकाङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|
| | अ—४४ | | | |
| १ | अङ्गोपाङ्गायुधा कल्पै- | ११ | २३ | २७८ |
| २ | अणुप्रायास्वोषधीषु | २ | १५ | २८ |
| ३ | अतिवादांस्तितिक्षेत | ६ | ३४ | १५० |
| ४ | अथ तेषां भविष्यन्ति | २ | २१ | ३१ |
| ५ | अथ तं बालकं वीक्ष्य | ९ | ३२ | २४० |
| ६ | अथर्ववित् सुमन्तुश्च | ७ | १ | १७९ |
| ७ | अथ ह भगवंस्तव | ६ | ७२ | १६७ |
| ८ | अथाप्यम्बुजपत्राक्ष | ९ | ६ | २२८ |
| ९ | अथापि सम्वदिष्यामो | १० | ७ | २४६ |
| १० | अथांशुः कश्यपस्तार्क्ष्य | ११ | ४१ | २९५ |
| ११ | अथेममर्थं पृच्छामो | ११ | १ | २६९ |
| १२ | अथोमा तमृषिं वीक्ष्य | १० | ४ | २४६ |
| १३ | अध्यापयत् संहितां स्वां | ६ | ५६ | १६० |
| १४ | अधीयन्त व्यासशिष्यात् | ७ | ६ | १७९ |
| १५ | अन्तर्बहिश्चाद्भिरतिद्युभिः | ९ | १३ | २३४ |
| १६ | अन्ये च बहवो दैत्या | ३ | १२ | ५१ |
| १७ | अन्वीयमानो गन्धर्वै- | ८ | २२ | २०५ |
| १८ | अनपायिनी भगवती | ११ | २० | २७८ |
| १९ | अनाढ्यतैवासाधुत्वे | २ | ५ | २४ |
| २० | अनाद्यन्तवतानेन | ४ | ३७ | १०६ |
| २१ | अनाद्यविद्यया विष्णोः | ११ | २९ | २८५ |
| २२ | अनावृष्ट्या विनश्यन्ति | २ | १० | २८ |
| २३ | अनिष्टकर्मा हालेयः | १ | २५ | १४ |
| २४ | अनुजानीहि मां ब्रह्मन् | ६ | ६ | १३० |
| २५ | अनुवर्णितमेतत् ते | १० | ४० | २६५ |
| २६ | अपश्यंस्तक्षकं तत्र | ६ | १८ | १३८ |
| २७ | अपां रसमथो तेजस- | ४ | १५ | ७९ |
| २८ | अयुतायुतवर्षाणां | ९ | १९ | २३६ |
| २९ | अर्यमा पुलहोऽथौजाः | ११ | ३४ | २९२ |
| ३० | अव्याकृतगुणक्षोभान् | ७ | ११ | १८३ |
| ३१ | अव्याकृतमनन्ताख्य- | ११ | २३ | २७३ |
| ३२ | अवतारो भगवतः | १२ | १३ | ३०६ |
| ३३ | अव्रता वटवोऽशौचा | ३ | ३३ | ६३ |
| ३४ | अविस्मृतिः कृष्णपदारविन्दयोः | १२ | ५४ | ३१८ |
| ३५ | अश्वमाशुगमारुह्य | २ | १९ | ३१ |
| ३६ | असंस्कृता क्रियाहीनाः | १ | ४२ | २० |
| ३७ | अस्मिन्नप्यन्तरे ब्रह्मन् | ६ | ४८ | १५५ |
| ३८ | अहो ईश्वरलीलेयं | १० | २८ | २५८ |
| ३९ | अहं च संस्मारित आत्मतत्त्वं | १२ | ५६ | ३१८ |
| ४० | अहं ब्रह्म परं धाम | ५ | ११ | १२२ |
| ४१ | अत्र ब्रह्म परं गुह्यं | १२ | ४ | ३०१ |
| ४२ | अत्र संकीर्तितः साक्षात् | १२ | ३ | ३०१ |
| ४३ | अत्रानुवर्ण्यतेऽभीक्ष्णं | ५ | १ | १११ |
| ४४ | अज्ञानं च निरस्तं मे | ६ | ७ | १३० |
| | आ—८ | | | |
| ४५ | आच्छिन्नदारद्रविणा | २ | ९ | २८ |
| ४६ | आत्मन्यपि शिवं प्राप्तं | १० | ११ | २५० |
| ४७ | आतपत्रं तु वैकुण्ठं | ११ | १९ | २७८ |
| ४८ | आदानं पारिजातस्य | १२ | ३७ | ३१२ |
| ४९ | आदिमध्यावसानेषु | १३ | ११ | ३३७ |
| ५० | आरभ्य भवतो जन्म | २ | २६ | ३५ |
| ५१ | आह चात्मानुभावेन | १० | १६ | २५० |
| ५२ | आहुश्चिरायुषमृषिं | ८ | २ | १९८ |
| | इ—१८ | | | |
| ५३ | इत्थं कलौ गतप्राये | २ | १६ | २८ |
| ५४ | इत्थं बृहद्व्रतधरस- | ८ | १३ | २०२ |
| ५५ | इत्यर्चितोऽभिष्टुतश्च | १० | ३५ | २६३ |
| ५६ | इत्युक्तस्तमनुज्ञाप्य | ६ | ८ | १३० |
| ५७ | इत्युक्तः स तथेत्याह | ६ | २८ | १४० |
| ५८ | इत्युक्तो गुरुरप्याह | ६ | ६३ | १६४ |

| क्रमाङ्कः | श्लोकः | अध्यायः | श्लोकाङ्कः | पृष्ठाङ्कः |
|---|---|---|---|---|
| ५९ | इत्युक्त्वा तमुपेयाय | १० | ८ | २४६ |
| ६० | इत्येष मानवो वंशो | २ | ३५ | ४० |
| ६१ | इतस्ततो भ्रमद्दृष्टे- | ८ | २७ | २०८ |
| ६२ | इति चन्द्रललामस्य | १० | २६ | २५८ |
| ६३ | इति प्रोक्तं द्विजश्रेष्ठा | १२ | ४५ | ३१४ |
| ६४ | इति ब्रह्मोदिताक्षेपैः | ६ | २२ | १३८ |
| ६५ | इतीडितोऽर्चितः कामम् | ९ | ७ | २२८ |
| ६६ | इतीन्द्रानुचरैर्ब्रह्मन् | ८ | ३० | २०८ |
| ६७ | इदं भगवता पूर्वं | १३ | १० | ३३७ |
| ६८ | इन्द्रियाणि शरानाहुः | ११ | १६ | २७३ |
| ६९ | इन्द्रो विश्वावसुः श्रोता | ११ | ३७ | २८२ |
| ७० | इलोपाख्यानमत्रोक्तं | १२ | २२ | ३०८ |
| | **उ—५** | | | |
| ७१ | उत्थाय प्राञ्जलिः प्रह्व | ८ | ३७ | २११ |
| ७२ | उद्यच्चन्द्रनिशावक्त्रः | ८ | २१ | २०५ |
| ७३ | उदीच्याः सामगाः शिष्या | ६ | ७८ | १७६ |
| ७४ | उन्नह्यन्ति रथं नागा | ११ | ४८ | २८५ |
| ७५ | उपचितनवशक्तिभिः स्व | १२ | ६७ | ३२८ |
| | **ऊ—१** | | | |
| ७६ | ऊर्ध्वतिर्यगवाक्सर्गो | १२ | ११ | ३०६ |
| | **ऋ—२** | | | |
| ७७ | ऋगथर्वयजुःसाम्नां | ६ | ५० | १६० |
| ७८ | ऋचो यजूंषि सामानि | १२ | ६२ | ३२४ |
| | **ए— ८** | | | |
| ७९ | एक एव हि लोकानां | ११ | ३० | २८५ |
| ८० | एक एवार्णवे भ्राम्यन् | ८ | ४ | १९८ |
| ८१ | एककाला इमे भूपाः | १ | ३५ | १७ |
| ८२ | एतत् केचिदविद्वांसो | १० | ४१ | २६५ |
| ८३ | एतत् पुरन्दरो ज्ञात्वा | ८ | १५ | २०२ |
| ८४ | एतत्ते कथितं तात | ५ | १३ | १२६ |
| ८५ | एतद्वै पौरुषं रूपं | ११ | ६ | २६९ |
| ८६ | एतद्वः कथितं विप्राः | १२ | ५७ | ३२४ |
| ८७ | एतद्वः कथितं विप्राः | १२ | २ | ३०१ |
| ८८ | एतन्निशम्य मुनिनाऽभिहितं | ६ | १ | १३० |
| ८९ | एषा भगवतो विष्णोः | ११ | ४५ | २८५ |
| ९० | एतां वक्ष्यत्यसौ सूतः | ४ | ४३ | १०९ |
| ९१ | एताः कुरुश्रेष्ठ जगद्विधातु- | ४ | ३९ | १०६ |
| ९२ | एते मोक्ष्यन्ति पृथिवीं | १ | ३१ | १४ |
| ९३ | एतेषां नामलिङ्गानां | २ | ३६ | ४० |
| ९४ | एते त्रिंशन् नृपतय- | १ | २८ | १४ |
| ९५ | एवमात्मानमात्मस्थ | ५ | ९ | १२२ |
| ९६ | एवं क्रमेण जेष्यामः | ३ | ४ | ४७ |
| ९७ | एवं तपस्स्वाध्यायपरो | ८ | ११ | २०२ |
| ९८ | एवं पुराणसंदोह- | १३ | ९ | ३३७ |
| ९९ | एवं लक्षणलक्ष्याणि | ७ | २२ | १९३ |
| १०० | एवं वरान् स मुनये | १० | ३८ | २६५ |
| १०१ | एवं स्तुतः स भगवा | १० | १८ | २५३ |
| १०२ | एवं स्तुतः स भगवान् | ६ | ७३ | १७४ |
| १०३ | एवं ह्यनादिनिधनो | ११ | ५० | २९९ |
| १०४ | एवं नैमित्तिकः प्रोक्तः | ४ | ४ | ७५ |
| १०५ | एष नः संशयो भूयान् | ८ | ५ | १९८ |
| १०६ | एष प्राकृतिको राजन् | ४ | ६ | ७५ |
| | **ओ—२** | | | |
| १०७ | ओजःसहोबलयुतं | ११ | १४ | २७३ |
| १०८ | ॐनमो भगवते आदित्याया- | ६ | ६७ | १६७ |
| | **क—३४** | | | |
| १०९ | कथा इमास्ते कथिता | ३ | १४ | ५१ |
| ११० | कथं सेयमखण्डा भूः | २ | ४२ | ४४ |
| १११ | कलिमलसंहृतिकालनोऽखिलेशो | १२ | ६५ | ३२८ |
| ११२ | कलेर्दोषनिधे राजन् | ३ | ५१ | ७१ |
| ११३ | कलौ काकिणिकेऽप्यर्थे | ३ | ४१ | ६७ |
| ११४ | कलौ तु धर्महेतूनां | ३ | २४ | ५६ |
| ११५ | कलौ न राजञ्जगतां परं गुरुं | ३ | ४३ | ६७ |
| ११६ | कश्यपोऽहं च सावर्णी | ७ | ७ | १७९ |
| ११७ | कस्मै येन विभासितो | १३ | १९ | ३४२ |
| ११८ | काण्वायना इमे भूमिं | १ | २१ | ११ |
| ११९ | काम एष नरेन्द्राणां | ३ | २ | ४७ |
| १२० | कामो महर्षे सर्वोऽयं | १० | ३६ | २६३ |
| १२१ | कालस्ते परमाण्वादि- | ४ | १ | ७५ |
| १२२ | कालस्य स्थूलसूक्ष्मस्य | १२ | १० | ३०६ |
| १२३ | कालस्रोतोजवेनाशु | ४ | ३६ | १०२ |
| १२४ | कालो देशः क्रिया कर्ता | ११ | ३१ | २८५ |
| १२५ | किं वर्णये तव विभो यदुदी- | ८ | ४० | २११ |
| १२६ | कुमुदः शुनको ब्रह्मन् | ७ | ३ | १७९ |
| १२७ | कृते यद् ध्यायतो विष्णुं | ३ | ५२ | ७१ |
| १२८ | कृते प्रवर्तते धर्म- | ३ | १८ | ५६ |
| १२९ | कुतो हिरण्यनाभस्य | ६ | ८० | १७६ |
| १३० | कृतं त्रेता द्वापरं च | २ | ३९ | ४० |
| १३१ | कृमिविड्भस्मसंज्ञान्ते | २ | ४१ | ४४ |

| क्रमाङ्कः श्लोकः | अध्यायः | श्लोकाङ्कः | पृष्ठाङ्कः |
|---|---|---|---|
| १३२ कृष्णनामाथ तद्भ्राता | १ | २३ | ११ |
| १३३ कृष्णाजिनं साक्षसूत्रं | ८ | ६ | २०२ |
| १३४ केनोपायेन भगवन् | ३ | १६ | ५१ |
| १३५ कौर्मं धान्वन्तरं मात्स्यं | १२ | २० | ३०८ |
| १३६ कौर्मं सप्तदशाख्यातं | १३ | ८ | ३३३ |
| १३७ कौस्तुभव्यपदेशेन | ११ | १० | २७३ |
| १३८ कं वृणे नु परं भूमन् | १० | ३३ | २६३ |
| १३९ क्रतुर्वर्चा भरद्वाज | ११ | ४० | २९२ |
| १४० क्रीडन्त्याः पुञ्जिकस्थल्याः | ८ | २६ | २०८ |
| १४१ क्वचिच्छ्लोकं क्वचिन्मोहं | ९ | १८ | २३६ |
| १४२ क्वचिद् गतो महावर्ते | ९ | १७ | २३६ |
| ख—१ | | | |
| १४२ खं रोदसी भगणानद्रिसागरान् | ९ | २८ | २४० |
| ग—४ | | | |
| १४४ गन्धर्वाप्सरसः कामं | ८ | १६ | २०२ |
| १४५ गृहीत्वाजादयो यस्य | ९ | ५ | २२८ |
| १४६ गोपानां च परित्राणं | १२ | ३७ | ३१० |
| १४७ गोवर्धनोद्धारणं च | १२ | ३२ | ३१० |
| घ—२ | | | |
| १४८ घटे भिन्ने यथाऽऽकाश | ५ | ५ | ११८ |
| १४९ घनो महार्कप्रभवो विदीर्यते | ४ | ३३ | १०२ |
| च—९ | | | |
| १५० चकोरो बहवो यत्र | १ | २६ | १४ |
| १५१ चतुर्दशं भविष्यं स्यात् | १३ | ६ | ३३३ |
| १५२ चतुर्धा व्यस्य बोध्याय | ६ | ५५ | १६० |
| १५३ चतुर्युगसहस्रं च | ४ | २ | ७५ |
| १५४ चतुर्विंशतिवाराह | १३ | ७ | ३३३ |
| १५५ चराचरगुरोर्विष्णो- | २ | १७ | ३१ |
| १५६ चार्वङ्गुलिभ्यां पाणिभ्यां | ९ | २५ | २४० |
| १५७ चैद्यपौण्ड्रकशाल्वानां | १२ | ३६ | ३१२ |
| १५८ चोदितो विप्रवाक्येन | ५ | १० | १२२ |
| ज—६ | | | |
| १५९ जनमेजयः स्वपितरं | ६ | १६ | १३५ |
| १६० जरासंधसमानीत- | १२ | ३६ | ३१३ |
| १६१ जातूकर्ण्यश्च तच्छिष्यः | ६ | ५८ | १६४ |
| १६२ जितं ते देवदेवेश | ९ | ४ | २२८ |
| १६३ जीवितं मरणं जन्तो | ६ | २५ | १४० |
| १६४ जैमिनेः सामगस्यासीत् | ६ | ७५ | १७४ |

| क्रमाङ्कः श्लोकः | अध्यायः | श्लोकाङ्कः | पृष्ठाङ्कः |
|---|---|---|---|
| त—६९ | | | |
| १६५ त्वष्टा ऋचीकतनयः | ११ | ४३ | १९५ |
| १६६ त्वाष्ट्रस्य जन्मनिधनं | १२ | १८ | ३०८ |
| १६७ त्वं तु राजन् मरिष्येति | ५ | २ | १११ |
| १६८ त इत्थमपकुर्वन्तो | ८ | २९ | २०८ |
| १६९ त एतदधिगच्छन्ति | ६ | ३३ | १५० |
| १७० तच्छ्रुत्वाऽजुहुवुर्विप्राः | ६ | २१ | १३८ |
| १७१ ततश्चानुदिनं धर्मः | २ | १ | २४ |
| १७२ ततो भागवतस्तस्माद् | १ | १८ | ११ |
| १७३ ततोऽभूत् त्रिवृदोङ्कारो | ६ | ३९ | १५० |
| १७४ ततो व्यद्रक्ष्यन्त चतुःसमुद्राः | ९ | १२ | २३२ |
| १७५ ततो ऽष्टौ यवना भाव्या | १ | ३० | १४ |
| १७६ ततो ऽक्षरसाम्नायम् | ६ | ४३ | १५५ |
| १७७ ततः कण्वानियं भूमि | १ | १९ | ११ |
| १७८ ततः प्राकृतिकः सर्गः | १२ | ९ | ३०६ |
| १७९ तद्दर्शनाद् वीतपरिश्रमो मुदा | ९ | २६ | २४० |
| १८० तद्वै भजामृतधियस्तव | ८ | ४४ | २१६ |
| १८१ तदन्ते प्रलयस्तावान् | ४ | ३ | ७५ |
| १८२ तदा क्रियातपोनिष्ठा | ३ | २१ | ५६ |
| १८३ तदा भूमेर्गन्धगुणं | ४ | १४ | ७९ |
| १८४ तदाश्रमपदं पुण्यं | ८ | १८ | २०५ |
| १८५ तदेव रम्यं रुचिरं नवं नवं | १२ | ४९ | ३१८ |
| १८६ तन्नाथास्ते जनपदा | १ | ४३ | २० |
| १८७ तन्नो वर्णय भद्रं ते | ११ | ३ | २६९ |
| १८८ तपः सत्यदयादाने | ३ | २२ | ५६ |
| १८९ तमन्वथ बटो ब्रह्मन् | ९ | ३४ | २४३ |
| १९० तमहमजमनन्तमात्मतत्त्वं | १२ | ६६ | ३२८ |
| १९१ तमेव चिन्तयन्नर्थं | ९ | ८ | २२८ |
| १९२ तमेवं निभृतात्मानं | १० | ३ | २४६ |
| १९३ तयोरागमनं साक्षात् | १० | ९ | २५० |
| १९४ तयोरासनमादाय | ८ | ३८ | २११ |
| १९५ तस्मात्त्वेह भगवन्नथ | ८ | ४६ | २२१ |
| १९६ तस्मात् सर्वात्मना राजन् | ३ | ४९ | ७१ |
| १९७ तस्मात् सत्रमिदं राजन् | ६ | २७ | १४० |
| १९८ तस्मिन् पृथिव्याः ककुदि प्ररूढं | ९ | ३१ | २४० |
| १९९ तस्मिँल्लुब्धा दुराचारा | ३ | २५ | ५९ |
| २०० तस्मै नमो भगवते | १० | ३२ | २५८ |
| २०१ तस्मै नमो भगवते पुरुषाय | ८ | ४७ | २२१ |
| २०२ तस्मै सपर्यां व्यदधात् | १० | १५ | २५० |
| २०३ तस्य कर्माण्यपाराणि | १२ | २८ | ३१० |

